THE

KASHI SANSKRIT SERIES

10

****

# JĀTAKAPĀRIJĀTA

OF

ŚRĪ DAIVAJÑA VAIDYANĀTHA

*Edited with*

*'SUDHĀŚĀLINĪ' Sanskrit Commentary*

by

Jyotiṣāchārya, Kāvyatīrtha etc.

Pt. KAPILEŚVARA CHAUDHARY

*with*

*'VIMALĀ' Hindi Commentary*

by

Daivajña Bhūśaṇa

Pt. MĀTṚPRASĀDA PĀṆḌEYA


CHAUKHAMBHA SANSKRIT SANSTHAN

*Publishers and Distributors of Oriental Cultural Literature*

**Post Box No. 1139**

K. 37/116, Gopal Mandir Lane (Near Golghar Maidagin)

VARANASI-221 001 ( INDIA )

# निवेदनम्

नाविदितन्तत्रभवतामाधुनिक-ज्यौतिषशास्त्रसम्बन्धिनामयं जातकपारिजातोऽद्यत्वे सकलप्रान्तीयराजकीयपरीक्षापटले आचार्यपरीक्षायामेवाङ्गीकृत इति । परञ्च "टीका गुरूणां गुरुः" इति वचनं यथार्थयतामन्तेवसतां निष्ठीकेऽस्मिन् ग्रन्थेऽभिप्रेत सिद्धिर्न केवलं दीर्घकालेनोतातीवपरिश्रमेणापीति प्रत्यब्दं वाराणसेयराजकीयसंस्कृत-महाविद्यालयपरीक्षापरीक्ष्यैर्विहारसंस्कृतसमितिपरीक्षापरीक्ष्यैश्च मुहुर्मुहुर्निवेदितो वाराणसेय-चौखम्बासंस्कृतपुस्तकालयाध्यक्ष-महोदयो मामेतद्-( जातकपारिजात ) ग्रन्थसरलटीकासम्पादनार्थमभ्यर्थयदिति तथा वाराणसेयराजकीयसंस्कृतमहाविद्यालयीयपरीक्षाध्यक्षमहानुभावानुमत्या चान्तेवसतां सौकर्यबुद्ध्या यथामति वस्तुस्थितिव्यञ्जयित्रीं संक्षिप्तां टीकां सुखावगमनसंस्कृतगिराऽपूपुरम् । अथ च तेनैवोक्त-पुस्तकालयाध्यक्षेण दैवज्ञभूषणपण्डितश्रीमातृप्रसादशास्त्रिलिखिताया हिन्दीटीकायाः संस्कृत्यै सबहुमानमभ्यर्थितोऽहं हिन्दीभाषामपि प्रायः प्रतिशब्दं संस्कृत्य स्वनिर्मित-भाषास्थले सु० शा० कार ( सुधाशालिनीकारः ) इति सङ्केतं विनिर्दिश्य च पुस्तक-मिदं यावदुपयोगि-व्याख्योदाहरणोपपत्तिगणितचक्रकोष्ठविषयादिसूचीपरिशिष्टविषय-रत्नैर्विभूष्य **श्रेष्ठिवर-गोलोकवासी-बाबूहरिदासगुप्तात्मज-श्रीजयकृष्णदास-महोदयाय** प्रकाशनार्थमप्रयच्छम् ।

दुरवगाहेऽस्मिन् महोदधावीषद्बलेन बालेन मया यत्साफल्यमवाप्त तत्तत्रभवतां महनीयचरणानामनुकम्पयैवातस्तत्रभवन्तो मनीषिणः स्वजनसम्पादितस्यैतद्ग्रन्थस्य प्रचुरतरप्रचारेण सम्पादकस्य प्रकाशकस्य चोत्साहं वर्द्धयन्तुतराम् ? । आशासे चात्म-जनोत्कर्षाभिलाषिणो महनीयचरणा मनीषिणः जनमतिभ्रमोद्भवान् यन्त्रोद्भवान् नेत्र-भ्रमोद्भवांश्च दोषानतिशयेन प्रेम्णा संस्कृत्य सूचनया मां समुत्साहयिष्यन्तीति । यतः—

**गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।**
**हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ।।** इति ।

अपरञ्च श्रीमतां पुरतो निवेदनमिदं यत्—एतद्ग्रन्थान्ते निवेशनार्थं कैश्चित्पर-मोपयोगविषयैः सङ्कुले परिशिष्टे प्रकाशकाय प्रदत्तेऽपि साम्प्रतिकसार्वभौममहासंग्राम-प्रकोपाद् फलकानां ( कागजानां ) दौर्लभ्यात् तत्प्रकाशनेऽसमर्थेन प्रकाशकेन, मया सम्पादकेन च ग्रन्थान्तर्लिखितस्थले ( परिशिष्टे द्रष्टव्यमित्यत्र ) क्षमादानमभ्यर्थ्यते ।

[illegible]महोत्सवः ।
वि० सं० २००२ ।

विनीतो निवेदयिता
**सम्पादकः**

॥ श्रीः ॥

# भूमिका

स जयति तेजोराशिस्त्रयीमयो जगत्तस्थुषामात्मा ॥

भानुः सकलं ज्योतिर्विभासयन्नात्मसद्भासा ॥ १ ॥

सुविदितमेवैतत् तत्रभवतां निखलनिगमागमविधूतचेतसां विपश्चितां यदिह जगति अनिमतां सर्वतः श्रेयोमार्गप्रदर्शको वेद एव । नात्र कश्चिदपि विषयोऽनुपलभ्यो याथातथ्येनान्वेषयतां सताम् । इयमेव शासनपद्धतिर्जगन्नियन्तुः सवितुरीश्वरस्यैतदर्थमेव सर्वतः प्रथमं मीनावतारोऽप्यङ्गीकृतो भगवतेति तज्ज्ञानप्रवर्त्तकानि तत्षडङ्गभूतानि शिक्षा-कल्प-शब्द-ज्यौतिष-निरुक्त-छन्दःशास्त्राणि प्रचकासन्ते । तथा च भास्कराचार्यः—

शब्दशास्त्रं मुखं ज्यौतिषं चक्षुषी श्रोत्रमुक्तं निरुक्तं च कल्पः करौ ।

या तु शिक्षाऽस्य वेदस्य सा नासिका पादपद्मद्वयं छन्द आद्यैर्बुधैः ॥

तेषु षडङ्गेषु तावज्ज्योतिःशास्त्रं दिग्देशकालव्यञ्जकत्वेन यज्ञ-तपो-दान-व्रतोपवासादीनामादिबीजमिति सकलशास्त्रापेक्षयाऽस्याध्ययनाध्यापनमतीवावश्यकम् । यतो हि सर्वेषामेव वेदवेदाङ्गोपनिषद्दर्शनपुराणेतिहासादीनामयमेवैकः सिद्धान्तो यत्—"सर्वैरेव नरजातैर्यज्ञतपोदानव्रतादिनियमैरीश्वर उपासनीय इति", परञ्च काले कृतमेव यत्किञ्चिदपि कर्म साफल्यमकाले कृतमपि कर्म वैफल्यं परिणमतीति तावत् कालात्मकस्यास्य शास्त्रस्य प्रतिपदं प्रयोजनं भवत्येव । एष किल सामान्यो नियमो यद्यः कोऽपि स्वविषयस्यैव बाहुल्येन पोषणं कुरुते। परञ्च निष्पक्षपातधियाऽपीदमेव सिद्धं यन्नैतद्विना लोकानां लौकिकं वैदिकं च किमपि कर्म साफल्यमुपयातीत्युक्तमपि नारदेन—

वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम् ।

विनैतदखिलं कर्म श्रौतं स्मार्तं न सिद्ध्यति ॥ इति ॥

अथ 'न जातु ज्योतिर्ज्योतिरन्तरा द्रष्टुं ज्ञातुं च शक्यत' इति तेजोमयो भगवानव्ययो मुक्तिमार्गो रविरीश्वरः ( 'सूर्य आत्मा जगतस्तस्थुषश्चे'ति श्रुतेः, 'वर्त्मापुनर्जन्मनाम्' इति वराहवचनाच्च ) तदंशका ज्योतिष्मन्तो ग्रहा वै देवाश्च ('ग्रहास्ते देवतांशकाः' इति मह्नोक्तेः) चक्षूरूपज्योतिश्शास्त्रं विना न केनापि शास्त्रेण ज्ञातुं शक्यन्त इति कथने न भवति काचिदपि बाध्यतेति ।

'दैवाधीनं जगत् सर्वम्' इति तथा 'ग्रहास्ते देवतांशकाः' इति वचनात् सकलं जगद् ग्रहाधीनमेव । वस्तुतो रविकिरणसंयोगवशादेव सकलं जगज्जातं (चरमचरञ्च) जीवनं स्वैर्यं च वहतीति प्रत्यहं त्रिकालं······पश्येम शरदःशतम्, जीवेम शरदः शतम्, शृणुयाम शरदः शतम्, प्रब्रवाम शरदः शतम्, अदीनाः स्याम शरदः शतं भूयश्च शरदः शता'दित्यादि-वाक्यै रविरुपास्यते लोकैः । तेषां गगन-गगनेचर-भू-भूधर-त्रिदश-दानव-मानवानां स्थितिमिति-गतिज्ञानं ज्यौतिषशास्त्रमन्तरा न केवलं दुर्घटमुतासम्भवमपीति । यथा नहि नेत्रं विना कश्चिदपि क्वापि निरापदं स्वीयमभिलषितं पदं गन्तुं पारयेत्तथा ज्यौतिषशास्त्रं ( नेत्रं ) विना जगतः श्रेयोमार्गः कथमपि न सम्भवतीति ।

इदमिदं शास्त्रं नान्यशास्त्रवत्सन्देहास्पदमप्रत्यक्षञ्च, उत समन्तात्युक्तिमत् प्रत्यक्षञ्च। नान्यत् किमपि शास्त्रं ज्योतिःशास्त्रवत्—इदमेव तत्, इदानीमेव तत्, अत्रैव तत्, एतावदेव तत्, इत्थमेव तदित्यादि प्रकटयितुं पारयेदित्युक्तमपि तथा—

अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम्।
प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ॥ इति॥

अथेदं शास्त्रं हि—

सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः॥
लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।
शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्त्तकाः॥

इति कश्यपवचनादष्टादशपुराणानुकल्पमष्टादशर्षिप्रवरप्रवर्तितमत आर्षं तेन, तथा—

दिव्यं चक्षुर्ग्रहर्क्षाणां दर्शितं ज्ञानमुत्तमम्।
विज्ञायार्कादिलोकेषु स्थानं प्राप्नोति शाश्वतम्॥

इति सूर्यसिद्धान्तवचनात्। एवम्—

ज्योतिश्चक्रं तु लोकस्य सर्वस्योक्तं शुभाशुभम्।
ज्योतिर्ज्ञानं तु यो वेद स याति परमां गतिम्॥

इति गर्गवचनात्। अपि च—

न सांवत्सरपाठी च नरके परिपच्यते।
ब्रह्मलोकप्रतिष्ठां च लभते दैवचिन्तकः॥

इति वराहमिहिरवचनाच्च न केवलमस्य शास्त्रस्य प्रयोजनातिशयादेवाध्ययनाध्यापनावश्यकताऽपि तु परमार्थबुद्धयाऽपि। एवं च सकलात्मनो जगन्नियन्तुः सवितुः स्थितिमितिगतिनिर्णायकत्वादिदं शास्त्रं दर्शनशास्त्रमपीति कथनेऽपि न काचिदत्र विशेषोक्तिः।

इदं शास्त्रं हि कल्पतरुरिव यावत्सेवितम् (अधीतं) तावत्फलत्येवेत्यस्मिञ्छास्त्रे महीयांसोऽस्माकं गुरवः। नान्यस्मिञ्छास्त्रेऽल्पमेधसां किमन्यात्मप्रयोजनं कर्तुं पारयेत्। कल्पतरुरूपेऽस्मिञ्छास्त्रे शाखात्रयरूपं संहिता–तन्त्र–होरेति स्कन्धत्रयं कल्पतरुकल्पविनिर्मितत्वमनुभूयते। तथा चाह वराहः—

ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं
तत्कार्त्स्न्योपनयस्य नाम मुनिभिः संकीर्त्यते संहिता।
स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ
होरान्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः॥

तत्र च संहितास्कन्धे—ग्रहचारजातविविधप्रकृतिलक्षणफलादेशसमन्वयाः। तन्त्रस्कन्धे—सृष्टिक्रम–सिद्धान्त–करण–मध्यमस्पष्ट–ग्रहणपातादि–गणितग्रन्थाः। होरास्कन्धे—विविध–जातक–ताजक–प्रश्न–मुहूर्तप्रभृतिग्रन्था विराजन्तेतराम्।

ज्यौतिषकल्पद्रुमः—




तेषु संहिताग्रन्थेषु केवलं तावदेकस्यैव वराहमिहिरकृतस्य बृहत्संहिताभिधस्येदानीन्तने लोके उपलब्धिः प्रचारश्च । अन्याः संहिता लुप्तप्रायाः प्रायोऽसह्यापराधेन नियन्त्रिताः सेरते।

तन्त्रस्कन्धे–सूर्यसिद्धान्त–सिद्धान्तशिरोमणि–सिद्धान्ततत्त्वविवेकेतिसिद्धान्तग्रन्थत्रयस्य, ग्रहलाघवाभिधैकस्य करणग्रन्थस्य, लीलावती–बीजगणितेतिगणितग्रन्थद्वयस्य, सर-कचापीयत्रिकोणगणितस्य चाध्यये प्रचारो वर्त्तते । होरास्कन्धेऽपि–द्वित्रा एव मूलग्रन्थाः प्रचलितास्तदितरास्त्विदानीन्तनाः सङ्कलिताः समविषयका एव भिन्नभिन्ननाम्ना बहवो ग्रन्था-श्चानेके दरीदृश्यन्ते । स्कन्धत्रयेऽपि प्राचीनार्षग्रन्था हतभाग्येऽस्मिन् भारते समागते मुग-लसाम्राज्ये ( तेषां वैधर्म्यधर्मत्वेन ) नियन्त्रिता बहुशः लुप्ता बभूवुः । दैवात् तदानीं तेषां कुटिलकटाक्षैर्वञ्चिता ये केचन ग्रन्था हतभाग्यानामस्माकं नयनपथमुपयान्ति । ते च यवना अस्माकमार्षग्रन्थानां यथावसरं सारं सङ्कलय्य स्वभाषाबद्धान् कांश्चन ग्रन्थांश्चक्रुः । तदानीं तच्छुश्रूषया वराहमिहिरोऽपि स्वजातके राशीनां संज्ञा यवनभाषयैव कृतवान्, हन्त ! ताश्च संज्ञा यथा—

क्रिय–ताबुरि–जितुम–कुलीर–लेय–पाथोन–जूक–कौर्प्याख्याः ।
तौक्षिक–आकोकेरो–हृद्रोगश्चान्त्यभं चेत्थम् ॥ इति ।

एवं नीलकण्ठाचार्येण स्व-ताजिकनीलकण्ठीनामके ग्रन्थे सर्वाः संज्ञा यवनभाषयैवो-पुष्पत । अपरेऽपि केचन ग्रन्था ईदृशा वर्तन्ते । ततः परं ( मुगलसाम्राज्यावसानस्य ) यूरो-पदेशीयगुरुण्डानां प्रचलितेऽस्मिन् साम्राज्ये ये केचिद्गुर्वरिता अस्माकमार्षग्रन्था भारतीयानां

म्लेच्छमान्यैरनादृताः सर्वैः शनैः दूरपदेशमगच्छन्निति भारतेऽर्वाचीनर्षिविनिर्मिताः पौरुषा एव ग्रन्था दृष्टिपथमारोहन्ति । ते च पौरुषा ग्रन्थाः पञ्चदशशताब्द्याभ्यन्तरकालीना एव । यत आर्यभटः ( ३९७ शकाब्दकालीनः ) प्रथमाचार्यः । पौरुषेष्वपि ग्रन्थेषु परिगणिताः केचिदेव ग्रन्था संस्कृतसमितौ परीक्षाक्रमाधिकारिजनैरवगाहितास्तत्र कथं कथमपि स्थैर्यं वहन्तीति केवलमर्थार्जनलिप्सया प्रमाण-पत्रलोलुपा इदानीन्तनाः संस्कृताध्येतारः परीक्षा-क्रमनिबद्धान् त्रिचतुरो ग्रन्थानधीत्योत्तीर्णपरीक्षा आत्मनः कृतकृत्यान्मन्यन्त इति कथं न ते पुण्यतमाः प्राचीना अर्वाचीनाश्च ग्रन्था लुप्तप्राया भवेयुः ?।

अथ 'ज्योतिःशास्त्रफलं पुराणगणकैरादेश इत्युच्यते' इति भास्करवचनात्, 'यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः पक्तिम् । व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव,' इति वराहवचनाच्चैतच्छास्त्रस्य फलादेशकरणमेव मुख्यं प्रयोजनम् । परञ्च फलादेशस्य लग्न-ग्रहाश्रितत्वाल्लग्न-ग्रहादिसाधनार्थमादौ सिद्धान्तादिगणितज्ञानमावश्यकं, तदन्तरा तज्ज्ञानस्यासम्भवत्वान्महर्षिभिः सिद्धान्त-करण-गणित-प्रपञ्चः पल्लवितः । किन्तु आधुनिकाः सिद्धान्त-करण-गणितज्ञा अध्यापकाः शिष्याश्च तत्सूक्ष्मस्थूलविवादमन्तरा न जातु तदुपयोगमार्गे सङ्कुचितामपि दृष्टिमभिप्रयच्छन्ति । न केचनापि प्रायः स्वाधीतसूक्ष्मसिद्धान्तगणितेन पञ्चाङ्गे जातके च वास्तवग्रहानयनं कृत्वा वेधादिना दृक्प्रतीतिं कुर्वन्ति । किं तर्हि केवलं स्थूलसूक्ष्मविचारव्याजेन वृथाविवादाद्भूयसः कियद्वर्षयापनेन फलम् ? यदि परमस्थूलविधिनैव पञ्चाङ्गीयग्रहादीनामानयनसरणीमेव शरणमुररीकुर्वन्तीति ?। वस्तुतः परमसूक्ष्मसिद्धान्तगणितेनानीतैः दृग्गणितैक्यतामुपगतैर्ग्रहैरेव यत्किमपि फलं तथ्यतामुपयाति । तथा च भास्करः—

> यात्राविवाहोत्सवजातकादौ खेटैः स्फुटैरेव फलस्फुटत्वम् ।
> स्यात्प्रोच्यते तेन नभश्चराणां स्फुटक्रिया दृग्गणितैक्यकृद्या ॥ इति ।

अहो ! इयमेव सा भारतभूमिः, इयमेव सा ज्यौतिषविद्या, यत्रैतद्विद्योपासकास्त्रिकालज्ञा भवन्तिस्म, दैवज्ञा वस्तुतो दैवज्ञा भवन्तिस्म । सर्व एव ज्योतिर्विदः स्वगृहे स्वयमेव ग्रहाणां वेधोपकरणीभूतविविधयन्त्रादीनां निर्माणं कुर्वन्तिस्म । परञ्चाद्यत्वे दैवज्ञ-सम्राड्-दैवज्ञशिरोमणि-ज्योतिर्भूषण-ज्यौतिषरत्नेत्यादि यथेच्छोपाधिधारिणो दैवज्ञमानिनो न प्रायः प्रच्छकानामेकस्यापि प्रश्नस्य याथातथ्येन सन्तोषजनकमुत्तरं दातुं पारयन्तीति कथं न ते तेषां पुरतो हास्यतामुपगच्छेयुः ।

यद्येवं भारतभूमिः समयप्रभावात् सहधर्मिजनप्रकोपाच्च तादृक्पण्डितप्रकाण्डैर्नितरां शून्येव [illegible], तथापि यथापूर्वमद्यापि केचन मनीषिणो विद्यन्त एव । परञ्च तेषु प्रायः 'न देयं यस्य कस्यचित्' इति सूक्ष्ममन्त्रोपासकाः, तत्समदन्तरा केचिदिमां विद्यामभि[illegible] [illegible] स्वं [illegible] अपि [illegible] [illegible] कथमस्माकं, देशस्य, विद्याया[illegible] सम्भाव्यते ?। अस्माकं [illegible] सिद्धान्तो [illegible] जना न [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] भवामः ।

यनाध्यापनं तदनुमतं ग्रहादिवेधोपकरणीभूतयन्त्रादीनां निर्माणं तदुपयोगश्च प्रतिविद्यालयं, प्रतिच्छात्रं, ग्रस्यध्यापकश्चावश्यकतया प्रतीयते। किमेतज्जगज्जनोपकृतिकार्ये शिक्षाधिकारिजनैरध्यापकैरध्येतृभिश्च सङ्कुचिताऽपि दृष्टिर्दास्यते?।

अथ प्रकृतमनुसरामः—होरास्कन्धे पौरुषग्रन्थेषु सर्वप्रथमं(१) बृहज्जातकस्याविर्भावः। अयञ्च ग्रन्थः प्राचीनार्षहोराग्रन्थसारभूतस्तत्सम्मतश्चाधुनिकसकलपौरुषग्रन्थानां मूलभूतो गण्यते। अस्य ग्रन्थरत्नस्याविर्भावकस्तत्रभवान् वराहमिहिरस्तथाहि तदुक्तम्—

आदित्यदासतनयस्तदवाप्तबोधः काम्पिल्यके सवितृलब्धवरप्रसादः।
आवन्तिको मुनिमतान्यवलोक्य धीमान् होरां वराहमिहिरो रुचिरां चकार॥

इतः प्रभृतिराचार्यशब्देन वराहमिहिराचार्य (Vide Adh. 3, 51-80) होराशब्देनैतस्यैव होरा (बृहज्जातकम्) उपयुज्यते। यथाऽस्मिन्नपि ग्रन्थे—आचार्यहोरायाम्, होरायाम् इत्युपयुक्तं दृश्यते। तथा चैतस्यैव ग्रन्थस्य सारभूतं लघुजातकाख्यं तत्कृतमेवातीव मनोहरं जातकविदामुपकृत्यै विराजते। तस्यायमादिमः श्लोकः—

होराशास्त्रं वृत्तं मया निबद्धं निरीक्ष्य शास्त्राणि।
यत्तस्याप्यार्याभिः सारमहं सम्प्रवक्ष्यामि॥ इति।

इतः परं कियन्तो जातकविषयकग्रन्थाः कियन्तो ग्रन्थेभ्यः प्राकरणिकवाक्यानि सङ्कलय्य तत्तदाविर्भावकैराविष्कृताः। यथा च श्रीपतिपद्धतिः (By shripati) सारावली (By Kalyan Varma), सर्वार्थचिन्तामणिः (By Venktesha) जातकादेशः (By Gunakar), होरारत्नम्, (By Balabhadra) मानसागरी, जातकाभरणम्—जातकतत्त्वम्, जातकपारिजातः, (By Vaidya Natha) फलदीपिका (By Mantreshwar) इत्यादयोऽनेके ग्रन्था विविधविषयभूषिताः समुपलभ्यन्ते। तेषु तावदयं जातकसम्बन्धिकयावद्विषयोपयुक्तो जातकपारिजातः यतो नामानुरूपगुणोऽतोऽध्यापकैरध्येतृभिश्चाधुना प्रायआद्रियते। एतद्ग्रन्थादौ—

भारद्वाजकुलोद्भवस्य विदुषः श्रीवेङ्कटाद्रेरिह
ज्योतिश्शास्त्रविशारदस्य तनयः श्रीवैद्यनाथः सुधीः।
होरासारसुधारसज्ञविबुधश्रेणीमनःप्रीतये
राशिस्थाननिरूपणादि सकलं वक्ष्ये यथानुक्रमम्॥

इत्युक्तवचनेनायं ग्रन्थो भारद्वाजगोत्रोत्पन्न—श्रीवेङ्कटाद्रिदैवज्ञसुतश्रीवैद्यनाथदैवज्ञनिर्मितः। अस्मिन् ग्रन्थे ग्रन्थकर्तुः समयस्यानिर्देशत्वादस्य निर्माणकालो वास्तवः क इति तारतम्याधीनः। अयं किल ग्रन्थकर्ता वेङ्कटाद्रिपुत्रः, वेङ्कटाद्रिरपि ज्योतिर्विदिति 'श्रीवेङ्कटाद्रेरिह ज्योतिःशास्त्रविशारदस्ये'ति वैद्यनाथोक्तेन स्फुटम्। अतोऽनुमीयते यत् सर्वार्थचिन्तामणिकार एवायं वेङ्कटः। जातकपारिजाते बहुत्र सर्वार्थचिन्तामणिमूलश्लोकानां निवेशदर्शनादयमेव वेङ्कटो वैद्यनाथस्य पितेति तर्कः सङ्गच्छते। परञ्च सर्वार्थचिन्तामणावपि तत्समयस्यादर्शनात् वास्तवोऽस्य समयो न स्फुटः। परञ्च—ज्योतिःशास्त्रमहार्णवादुद्धृतश्मौहूर्ततत्वं बहु—व्याप्यल्पं गुरुवैद्यनाथचरणद्वन्द्वेरतः केशवः' इति ग्रहलाघवकरणकर्तृगणेशदैवज्ञपितृ-(केशव) कृतमुहूर्ततत्वोक्तवचनादयं वैद्यनाथो गणेशपितुः (केशवस्य) गुरुरिति सिद्ध्यति। तत्र गणेशकृतग्रहलाघवरचनाकालो 'इषवीन्द्रोम्मितशकः' इत्युक्तेन १४४२ शकाब्दः। तदानीं केशवस्य वयो यदि ७० वर्षाणि कल्प्यन्ते तदा केशवस्य जन्मकालः १३७२ शकाब्दः स्यात्। तदानीं वैद्यनाथस्यापि वयः २५ वर्षाणीति कल्पने न काचिदनुपपत्तिरिति तदा वैद्यनाथस्य ग्रन्थरचनाकालः १३४७ शकाब्दासन्नः सम्भाव्यते(२)।

---

(१) वराहादपि पूर्वं सत्याचार्यो जीवशर्मा च बृहज्जातके सत्याचार्यजीवशर्म-मतप्रदर्शनात्, परञ्च सत्याचार्यजीवशर्मादिकृतेरनुपलब्धत्वाद्वाराह एव गृह्यते लोकैरिति।

(२) गणकतरङ्गिण्यां म० म० सुधाकरद्विवेदिभिः गणेशात्प्राचीनयोर्वेङ्कट-वैद्यनाथयोरुल्लेखो नाकारीति किं कारणं तत्र जाने।

अथायं वैद्यनाथः—

'नत्वा गर्गपराशरादिरचितं सङ्गृह्य होराफलं
कुर्वे जातकपारिजातमखिलज्योतिर्विदां प्रीतये' ।

तथा—'सङ्गृह्य सारावलिमुख्यतन्त्रं करोम्यहं जातकपारिजातम्' ।

इति वचनेन इमं जातकपारिजातं प्राचीनार्षग्रन्थानां सारभागं सङ्गृह्यापि च सारावली-बृहज्जातकप्रभृतिका ये पौरुषजातकग्रन्थास्तेषां सारभूतवाक्यानि सङ्कलय्य रचयामासेति स्फुटम् । वस्तुतस्त्वस्मिन् ग्रन्थे बृहज्जातकस्य मूलभूता एव कियन्तः श्लोका दृश्यन्ते ( Vide वियोनिजन्माद्यध्यायः, अरिष्टाध्यायः, निर्याणविधिः, दशाप्रकरणम् , आयुर्दायप्रकरणम् ) केचन सारावल्याः सर्वार्थचिन्तामणेश्च मूलश्लोका एवं केषाञ्चन ग्रन्थानां सङ्गृहीताः श्लोकाः किञ्चित्पाठभेदेन यथास्थितेन चाचार्येण निवेशितास्तेषां ग्रन्थानां यथावसरं यथोपलब्धं च नाम प्रयत्नेन वियोजितं मयेति । तथा च ये केचन ग्रन्थान्तरश्लोका एतद्ग्रन्थश्लोकार्थपोषकास्तेऽपि यथोपलब्धास्तत्तच्छ्लोकव्याख्याने मया प्रमाणत्वेन संरचिताः । तानि किल परम्परोपलब्धवचनमूलग्रन्थनामानि विनिर्दिश्यन्ते—गार्गजातकम् , यवनजातकम् , पाराशरहोरा, जातकाभरणम् , माण्डव्यजातकम् , जातकादेशः, जातकरत्नम् , होरारत्नम् , फलदीपिका, बृहज्जातकम् , सारावली, सर्वार्थचिन्तामणिः, मुहूर्तचिन्तामणिः, लघुजातकम् , सिद्धान्तशिरोमणिः, सूर्यसिद्धान्तः, केशवीया जातकपद्धतिः, जैमिनीयसूत्रम्, मुहूर्तमार्त्तण्डः, प्रश्नमार्गः, होरासारः, श्रीपतिपद्धतिः, कालप्रकाशिका इत्यादयोऽनेके ग्रन्था अत्रोद्धृताः ।

अस्मिन् ग्रन्थे १ राशिशीलः, २ ग्रहनामस्वरूपगुणभेदः, ३ वियोनिजन्मादिः ४ अरिष्टः, ५ आयुर्दायः, ६ जातकभङ्गः, ७ राजयोगः, ८ द्विग्रहादियोगः, ९ मान्द्यब्दादिफलम् , १० अष्टकवर्गः, ११ प्रथमद्वितीयभावफलम् , १२ तृतीय-चतुर्थभावफलम् , १३ पञ्चम-षष्ठभावफलम् , १४ सप्तमाष्टमनवमभावफलम् , १५ कर्म-लाभ-व्ययभावफलम् , १६ स्त्रीजातकम् , १७ कालचक्रदशा, १८ दशान्तर्दशा इत्येतेऽष्टादशाध्याया निर्धारिताः । तथाहि तदुक्तम्-ग्रन्थोपसंहारे—

शाखाभिरष्टादशसङ्ख्यकाभिरध्यायरूपाभिरतिप्रकाशः ।
ज्योतिर्मयः सर्वफलप्रधानः सङ्कीर्तितो जातकपारिजातः ॥
उक्तं राशिगुणात्वयं ग्रहगतिस्थानस्वभावाकृतिः
आधानादि समस्तजीवजननं बालार्धनिष्टाकरः ।
आयुर्जातकभङ्गयोगजविधिः श्रीराजयोगादिजं
द्विव्यादिग्रहयोगजः शुभकरो मान्द्यब्दजं च क्रमात् ॥
व्यष्टकवर्गबिन्दुगणितं होराधनस्थानजं,
दुश्चिक्यावनिभावजं सुतरिपुस्थानप्रयुक्तं फलम् ।
कन्दर्पाष्टमधर्मराशिजनितं, व्यापारलाभान्त्यजं
नारीजातककालचक्रमुदितं चान्द्रं दशान्तर्दशा ॥
श्रीविश्वाधिकवेङ्कटाद्रितनयः श्रीवैद्यनाथः सुधीः
आदित्यादिसमस्तखेटकृपया विद्वज्जनप्रीतये ।
होरासिन्धुसमुद्धृतामृतमयीमष्टादशाध्यायिनीं
चक्रे जातकपारिजातसरणिं शीतांशुकरलोकिनीम् ॥ इति ।

अत्र 'शीतांशुकरलोकिनीम्' इत्यनेन शीतांशुकरलोकमितीयं जातकपारिजातसरणिः कृता वैद्यनाथेन । अत्र 'क-ट-प-य-वर्गभवैरिह' इति संख्यासङ्केतेन शीतांशुक = १४२६ । तेनास्मिन् वर्षे १४२६ शकेऽभवितव्यम् । परञ्च वर्तमाने समुपलब्धेषु पुस्तकेषु अध्याय-

क्रमनिविष्टश्लोकैक्यम् = ६१+८७+८०+१०७+१२४+१०२+१८१+११८+१२८+७३+९७+१२९+८२+१०३+८४+५४+१११+१७७=१९१८ एतावदुपलभ्यते। अत एव मूलग्रन्थे १५५ श्लोका अधिकाः प्रक्षिप्ता इति वक्तुं युज्यते। अथवा 'गीतोत्सुकश्लोकिनीम्' इत्येतद्वाक्यस्य-'गीतोत्सुकानां = एतद्ग्रन्थाध्ययनप्रवृत्तानां श्लोकिनीं = यशोदायिनी' मेवं व्याख्यानं कुर्यादिति।

अपि चास्मिन् ग्रन्थे बृहज्जातक—सारावली—सर्वार्थचिन्तामणिप्रभृतिग्रन्थापेक्षया ग्रहाणां कक्षाक्रमः, प्रवेशभेदाः, दोषापहारिता, पीडाप्रकाराः, केचिदरिष्टयोगाः, केचनायुर्भेदाः, छिद्रग्रहाः, निर्याणसमयाः, मरणान्तरपरिणामाः, दारिद्र्यादियोगभेदाः, राजयोगभेदाः, विशिष्टयोगभेदाः, ग्रहयोगभेदाः, मान्द्यब्दादिफलानि, गण्डकालः, वेलाफलम्, अष्टकवर्गे त्रिकोणैकाधिपत्यशोधनम् तत्फलानि च, अष्टवर्गप्रस्तारः, भावफलेषु कियन्तो विशेषाः, वरवधूजातकसंयोगः, कालचक्रदशाप्रपञ्चः, तत्फलानि च, कालचक्रगतिप्रकाराः, कालचक्रदशाप्रस्तारकवचनानि, अन्तर्दशाभेदाः, निर्याणदशा, कुलिकदशा, शूलदशा, अन्तर्दशाफलानि, इत्येते विषयाः प्रायो विशेषेण निर्द्धारिता दृश्यन्ते। नराणां सकला एव विषया ग्रहाधान—द्वादशभावैर्विचार्यन्त इत्यस्मिन् ग्रन्थे द्वादशभावानां योगानाञ्च विचारो बहुभिरेवप्रकारैः ग्रहाणां तात्कालिकस्थिति-( Planetary Position ) वशात् कृतो ग्रन्थकर्त्रेति महदपि पुस्तकं लोकानां परमोपयोगि जातम्।

एकमपीदं पुस्तकमधीयानो जातकीयसकलविषयमर्मज्ञो भवितुमर्हतीत्यत्र न स्यादल्पीयस्यपि वाच्यता। यत आधुनिकसकलजातकमूलभूतस्य बृहज्जातकस्यास्मिन् ग्रन्थे प्रायः सन्निवेशो दृश्यते। अनयैव धियाऽयं ग्रन्थः प्रचलितपरीक्षापटले सर्वत्राप्याचार्यपरीक्षाश्रेण्यामात्मस्थानं लभते। परीक्षोपयोगित्वेनायं ग्रन्थः प्रायः सर्वैरेवान्तेवासिभिर्विद्वद्भिश्च सबहुमानमाद्रियते। परन्त्वाधुना टीकाग्रन्थपरायणाः कियन्त एव प्रायो मूलग्रन्थाध्ययनाध्यापने मान्द्यमुपगताः क्लिश्यन्ते तरामिति ग्रन्थमिमं निष्टीकं, तत्राध्ययनाध्यापने काठिन्यञ्चावलोकयद्भिः परमकृपालुभिर्वाराणसेयराजकीयमहाविद्यालयपरीक्षाध्यक्षमहानुभावैराज्ञप्तो वाराणसेयचौखम्बासंस्कृतपुस्तकालयाध्यक्षश्रेष्ठिवरश्रीजयकृष्णदास-हरिदासगुप्तमहोदयैः मुहुरभ्यर्थितश्चाहमेतद्ग्रन्थटीकाकरणे प्रवृत्तोऽभवम्। तदस्मिन् पुण्यात्मके जगदुपकृतिकार्ये जगदीशानुकम्पया परमाल्पधियाऽपि मया त्वरितमेव निर्बाधं साफल्यमवाप्तमिति गुरुपदानुकम्पैव बीजम्। दुरवगाहेऽप्यस्मिन् ग्रन्थे पूर्वोक्तकियद्ग्रन्थवचनप्रदर्शयता मयाऽध्येतॄणां सौकर्यधिया यावदुपयोगिन्याक्योदाहरणोपपत्तिगणितकोष्ठकचक्राकृतीनां निवेशो विशेषस्थले तदुल्लेखश्च ( Notes ) कृत इति विदुषां पुरतो व्यक्तः स्यादेव।

अथ महान्तोऽपि धीरा यत्र भग्नोद्यमा भवन्ति, दुरन्तरे तत्र ग्रन्थमहार्णवे परमाल्पस्वमतिना वा बालवद्बलात् साफल्यमिच्छता मया विदुषां पुरतो यद् दार्ढ्यमाविष्कृतं तत्र भवतां गुरुचरणानामाशीर्बलमेवातो 'बालादपि सुभाषित'मिति-नीतिमनुपाकर्णयद्भिस्तत्रभवद्भिर्नीरक्षीरविवेकधीभिः 'गुणान् स्वकीयानगुणान् मदीयान्' विविच्य निर्दिश्य च पुनरप्ययमहं भवद्भ्यः प्रोत्साह्य इति मिलितकरयुगः तत्रभवतः प्रार्थयते—

श्रीजानकी-विवाहोत्सवः, वि० सं० १९९१

श्रीमतामाश्रवः—
श्रीकपिलेश्वरशास्त्री।




श्री १०८ साम्बशिवचरणकमलाभ्यां नमः ।



हे साम्बशिव! भवदमलपदपङ्कजरसिकजनरञ्जिता ।
फलिता च सुखमनुकम्पया भवदीययैव सुधा-लता ॥
अनपायिनी भूसुरदनिशमुपकारिणी बुधसङ्गता ।
तव पादपङ्कजयोरियं 'कपिलेश्वरेण' समर्पिता ॥ १ ॥

# विषयसूची

॥ श्री मङ्गलमूर्त्तये नमः ॥

# जातकपारिजातः

## सुधाशालिनी–विमला–टीकाभ्यां पल्लवितः

### अथ राशिशीलाध्यायः ।

श्रीकान्ताजशिवस्वरूपममरज्योतिर्गणस्वामिनं
मायातीतमशेषजीवजगतामीशं दिनेशं रविम् ॥
नत्वा गर्गपराशरादिरचितं सङ्गृह्य होराफलं
वक्ष्ये जातकपारिजातमखिलज्योतिर्विदां प्रीतये ॥ १ ॥

* सुधाशालिनी *

श्रीकान्तं कमनीयकञ्जनयनं हृन्मन्दिरे संस्थितं,
देवीं दैन्यविनाशिनीं विनमतामाराधयन् सर्वदाम् ।
ग्रन्थे जातकपारिजात इह ये मुह्यन्ति तेषां कृते
काश्यां 'श्रीकपिलेश्वरो' वितनुते टीकां "सुधाशालिनीम्" ॥

अथायमाचार्यो भारद्वाजकुलोद्भवः श्रीवैद्यनाथ इति नाम्ना प्रसिद्धो ज्यौतिषविषये जातकपारिजात–नामकं ग्रन्थं चिकीर्षुः 'देवाधीनं जगत्सर्वमि'त्यतो जगति सर्वस्मिञ्छुभकार्ये देवार्चनं कार्यमिति सत्सम्प्रदायमनुपालयन् विधेयविषयस्य च कुशलेन परिसमाप्तिमिच्छन् स्वविषयाधिष्ठातृदेवस्य श्रीसूर्यस्य नमस्कारात्मकं मङ्गलं कर्त्तव्यवस्तुनिदर्शनं च करोति श्रीति—

श्रीकान्ताजशिवस्वरूपं = श्रियो लक्ष्म्याः कान्तो विष्णुः, अजो ब्रह्मा, शिवश्चेति त्रिदेवस्वरूपं "त्रिमूर्तिस्तु दिवाकर" इत्युक्तेः । अमरज्योतिर्गणस्वामिनं = अमरा देवा ज्योतींषि ग्रहनक्षत्रादयस्तेषां गणानामखिलानां स्वामिनं प्रकाशकत्वेनाधिपतिम् । अत्रेदमुक्तं भवति—सूर्य एवाखिलानि ज्योतींषि प्रकाशयति । तथोक्तं कमलाकरेण—

"तेजसां गोलकः सूर्यो ग्रहर्क्षाण्यम्बुगोलकाः ।
प्रभावन्तो हि दृश्यन्ते सूर्यरश्मिप्रदीपिताः" ॥

मायातीतं = सत्स्वरूपमित्यर्थः । अशेषजीवजगतामीशं = सकलचराचरजीवानां नायकमात्मत्वेनाधिपतिं "सूर्य आत्मा जगतस्तस्थुषश्चे"ति श्रुतेः । दिनेशं = दिनाधिपतिं, यतो रवेरुदयादेव दिनप्रवृत्तिरिति । "दिनं दिनेशस्य यतोऽत्र दर्शने" इति भास्करोक्तेः । रविं = श्रीसूर्य्यं, नत्वा=नमस्कृत्य, गर्गपराशरादिरचितं = गर्ग–पराशरप्रमुखर्षिप्रणीतं, होराफलं = जातकशास्त्रं, सङ्गृह्य = सङ्कलय्य, अखिलज्योतिर्विदां=सकलज्योतिश्शास्त्रवेत्तॄणां, प्रीतये = प्रमोदाय "मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः" इत्यमरः । जातकपारिजातं = जातकेषु ( जातकशास्त्रेषु ) पारिजातं ( सुरतरुं ) "पञ्चैते देवतरवो मन्दारः पारिजातकः" इत्यमरः । अमुं ग्रन्थं वक्ष्येऽहमिति शेषः । प्रकृतग्रन्थादौ श्रीपदोपादानं सर्वेषां श्रेयःसूचकमित्यलं पल्लवितेन ॥ १ ॥

* विमला *

लक्ष्मीकान्तमजं गिरीन्द्रतनयानाथं दिनेशं गुरुं,
वाग्देवीं गिरिजासुतं पवनजं श्रीरामचन्द्रप्रियम् ।
तातं छत्रधरं प्रणम्य सततं चानन्दिकां मातरं,
वक्ष्ये जातकपारिजातविमलां टीकां सतामुन्मुदे ॥

विष्णु ब्रह्मा और शङ्करजीके स्वरूप देवता और ज्योतिर्गणोंके अधिपति मायासे भिन्न तथा सम्पूर्ण जगतके जीवोंके प्रभु श्रीसूर्यनारायणको नमस्कार कर गर्गपराशर आदिसे रचित होराफलका संग्रह करके सब ज्योतिषियोंकी प्रसन्नताके लिये मैं जातकपारिजात को बनाता हूं ॥ १ ॥

इदानीमात्मपरिचयपूर्वककर्त्तव्यतामाह—

भारद्वाजकुलोद्भवस्य विदुषः श्रीव्यङ्कटाद्रेरिह ।
ज्योतिःशास्त्रविशारदस्य तनयः श्रीवैद्यनाथः सुधीः ॥
होरासारसुधारसज्ञविबुधश्रेणीमनःप्रीतये ।
राशिस्थाननिरूपणादि सकलं वक्ष्ये यथाऽनुक्रमम् ॥ २ ॥

भारद्वाजकुलोद्भवस्य = भारद्वाजगोत्रजन्मनः, ज्योतिश्शास्त्रविशारदस्य = ज्यौतिषशास्त्रे दक्षस्य, विदुषः = पण्डितस्य, श्रीव्यङ्कटाद्रेः = श्रीव्यङ्कटाद्रिनाम्नस्तनयस्तनूजन्मा श्रीवैद्यनाथ इति नामा, सुधीः = विद्वान् कर्त्ताऽहं, होरासारसुधारसज्ञविबुधश्रेणीमनःप्रीतये=होराशास्त्राणां सारमेव सुधारसममृतं जानन्ति ये विबुधा विद्वाँसस्तेषां श्रेणीनामखिलानां मनसो मुदे, राशिस्थाननिरूपणादि = राशीनां मेषप्रभृतिद्वादशानां स्थाननिरूपणमादिर्यस्मिंस्तत्सकलं = यावदशेषं विषयं, यथाऽनुक्रममनुक्रममनतिक्रम्य ( क्रमपूर्वकमित्यर्थः ) वक्ष्ये इति ॥ २ ॥

श्रीभारद्वाजऋषिके कुलमें उत्पन्न ज्योतिःशास्त्रके विशारद श्रीवेङ्कटाद्रि पण्डितका पुत्र मैं वैद्यनाथ होराशास्त्रके रसको जाननेवाले विद्वानोंके मनके प्रसन्नतार्थ राशिस्थान निरूपण आदि सब विषयोंको कहता हूं ॥ २ ॥

पुनरपि स्वाभीष्टदेवताप्रणिपातपूर्वकं विधेयविषयमाह—

प्रणम्य वन्दारुजनाभिवन्द्यपदारविन्दं रघुनायकस्य ।
सङ्गृह्य सारावलिमुख्यतन्त्रं करोम्यहं जातकपारिजातम् ॥ ३ ॥

अहं = श्रीवैद्यनाथः, रघुनायकस्य = रघुकुलाधिपतेर्भगवतो रामचन्द्रस्य, वन्दारुजनाभिवन्द्यपदारविन्दं = वन्दारुजनैरभिवादकैः "वन्दारुरभिवादके" इत्यमरः । अभिवन्द्यं सर्वथा वन्दनीयं पदारविन्दं चरणकमलं प्रणम्य, सारावलिमुख्यतन्त्रं सङ्गृह्य = कल्याणीकृतां सारावलीमेव मुख्यतन्त्रमागमत्वेन स्वीकृत्य जातकपारिजातमिमं ग्रन्थं करोमि विरचयामीति । ननु "गर्गपराशरादिरचितं सङ्गृह्य होराफल" मित्युक्तमिदानीं 'सङ्गृह्य सारावलिमुख्यतन्त्र' मित्युच्यते किमिति ? सत्यं, सारावल्यामपि प्राक्तनर्षीणामभिमतविषया एव [illegible] ॥ ३ ॥

देवताओंसे वन्दित रघुनाथजी के चरण कमलोंको प्रणाम करके सारावली मुख्यतन्त्र को संग्रह करके मैं जातकपारिजातको बनाता हूं ॥ ३ ॥

अथ राशीनां संज्ञाविशेषाः ।

मेषाजवस्तक्रियतुम्बुराद्या वृषोक्षगोताबुरगोकुलानि ।
द्वन्द्वं नृयुग्मं जुतुमं यमं च युग्मं तृतीयं मिथुनं वदन्ति ॥ ४ ॥

कुलीरकर्काटककर्क्कटाख्याः कण्ठीरवः सिंहमृगेन्द्रलेयाः ।
पाथोनकन्यारमणीतरुण्यस्तौली वणिक्जूकतुलाघटाश्च ॥ ५ ॥
अल्यष्टमं वृश्चिककौर्पिकीटाः धन्वी धनुश्चापशरासनानि ।
मृगो मृगास्यो मकरश्च नक्रः कुम्भो घटस्तोयधराभिधानः ॥ ६ ॥
मीनान्त्यमत्स्यपृथुरोमझषा वदन्ति दस्रादिकर्क्षनवपादयुताः क्रियाद्याः ।
चक्रस्थिता दिविचरा दिननाथसंख्याः क्षेत्रर्क्षराशिभवनानि भसंज्ञितानि ॥ ७ ॥

इदानीं राशीनां नामान्तराण्युच्यन्ते—

मेषः, अजः, विश्वः, क्रियः, तुम्बुरः, आद्यश्चैते मेषराशेः पर्यायाः सन्ति ।
वृषः, उक्षः, गौः, ताबुरुः, गोकुलमित्येता वृषराशेः सञ्ज्ञाः ।
मिथुनं = मिथुनराशिं द्वन्द्वं, नृयुग्मं, जुतुमं, यमं, युगं, तृतीयं च विज्ञा वदन्ति ।
कुलीरः, कर्काटकः, कर्क्कट इत्येताः कर्कराशेराख्याः = सञ्ज्ञाः ।
कण्ठीरवः, सिंहः, मृगेन्द्रः, लेय इत्येते सिंहराशेः पर्यायाः ।
पाथोनः, कन्या, रमणी, तरुणीत्येते कन्याराशेः पर्यायाः ।
तौली, वणिक्, जूकः, तुला, घटश्चैते तुलाराशेः पर्यायाः ।
अलिः, अष्टमं, वृश्चिकः, कौर्पिः, कीटश्चैते वृश्चिकराशेः पर्यायाः ।
धन्वी, धनुः, चापं, शरासनमित्येते धनूराशेः पर्यायाः ।
मृगः, मृगास्यः, मकरः, नक्रश्चैते मकरराशेः पर्यायाः ।
कुम्भः, घटः, तोयधरश्चैते कुम्भराशेः पर्यायाः ।

मीनः, अन्त्यः, मत्स्यः, पृथुरोमः, झषश्चैता मीनराशेः सञ्ज्ञा विबुधा वदन्ति । अथ नक्षत्रसङ्गता राशयो बुधैः कथं ज्ञायन्ते ? इत्यत आह—दस्रादिकर्क्षनवपादयुताः = अश्विन्यादिनक्षत्राणां नवभिर्नवभिः पादैर्युताः सङ्गताः ( अत्रेदमवधेयं-प्रतिनक्षत्रं चत्वारः पादास्तथा = नवभिः पादैरेको राशिरिति । दस्रादिसप्तविंशतिनक्षत्राणामष्टोत्तरशतसंख्यकाः पादास्तैर्द्वादशराशयोऽतो नवभिः पादैरेको राशिरिति युक्तम् ) क्रियाद्याः=मेषाद्याः, दिननाथ-सङ्ख्या दिननाथः सूर्यस्तत्सङ्ख्या द्वादशमिता इत्यर्थः "द्वादशात्मा दिवाकर" इत्युक्तेः । दिविचराः=आकाशचारिणो राशयश्चक्रस्थिताश्चक्राकारे ( वृत्ताकारे ) वर्त्तमाना भसञ्ज्ञितानि= भमिति सञ्ज्ञा येषां तानि ( 'भम्' इति राशेः पर्यायः ) क्षेत्रर्क्षराशिभवनानि = क्षेत्रम्, ऋक्षं, राशिः, भवनमित्येतानि नामान्तराणि भजन्ते । अत्र राशिरेव क्षेत्रमृक्षं भं भवनमित्यादि-नामान्तरैर्गृह्यते ।

तथोक्तं वराहेण बृहज्जातके—
"राशिक्षेत्रगृहर्क्षभानि भवनञ्चैकार्थसम्प्रत्ययाः इति" ॥ ७ ॥

मेष, अज, विश्व, क्रिय, तुंबुर, और आद्य मेषके नाम हैं । वृष, उक्ष, गो, ताबुरु और गोकुल, वृषके नाम हैं । द्वन्द्व, नृयुग्म, यम, युग और तृतीय, मिथुनको कहते हैं ॥ ५ ॥

कुलीर, कर्काटक और कर्कट, कर्कको कहते हैं । कंठीरव, सिंह, मृगेन्द्र और लेय सिंह को कहते हैं । पाथोन, कन्या, रमणी और तरुणी, कन्याको कहते हैं । तौली, वणिक्, जूक, तुला और घट, तुलाको कहते हैं ॥ ६ ॥

अलि, अष्टम, वृश्चिक, कौर्पि और कीट, वृश्चिकके नाम हैं । धन्वी, धनु, चाप और शरासन, धनुके नाम हैं । मृग, मृगास्य, मकर और नक्र, मकरके नाम हैं । कुम्भ, घट और तोयधर, कुम्भको कहते हैं ॥ ६ ॥

## स्पष्टार्थं राशिचक्रम् ।



मीन, अन्त्य, मत्स्य, पृथुरोम और झष, मीनको कहते हैं। चार चार चरणोंके एक एक नक्षत्र होते हैं। अश्विनी आदि नक्षत्रोंके नव २ चरणों से सहित मेषादि बारह राशि चक्र (वृत्त) में रहते हुए आकाशमें घूमा करते हैं और ये ही १२ राशि क्षेत्र, ऋक्ष, राशि, भवन और भ इत्यादि नामसे कहे जाते हैं ॥ ७ ॥

अथ मेषादयो राशयः कालनरस्यावयवा इत्याह—

**कालात्मकस्य च शिरोमुखदेशवक्षोहृत्कुक्षिभागकटिबस्तिरहस्यदेशाः ।**
**ऊरू च जानुयुगलं परतस्तु जङ्घे पादद्वयं क्रियमुखावयवाः क्रमेण ॥ ८ ॥**

कालात्मकस्य=काल एवात्मा यस्यासौ कालात्मा स एव कालात्मकस्तस्य ( कालपुरुषस्येत्यर्थः ) क्रियमुखावयवाः = क्रियमुखा मेषादयोऽवयवा अङ्गानि क्रमेण सन्ति । के तेऽवयवा इति ? शिरोमुखदेशवक्षोहृत्कुक्षिभागकटिबस्तिरहस्यदेशाः, ऊरु च जानुयुगलं परतस्तु जङ्घे पादद्वयमिति । मेषः शिरः, वृषो मुखदेशः, मिथुनं (१)वक्षः, कर्को हृत् = हृदयं, सिंहः कुक्षिभागः = उदरं, कन्या कटिः, तुला बस्तिर्नाभिलिङ्गयोर्मध्यदेशः, वृश्चिको रहस्यदेशः = लिङ्गं, धनुरूरू द्वौ, मकरो जानुयुगलं, कुम्भो जङ्घे द्वे, मीनः पादद्वयं = चरणयुगलमिति । एतत्प्रयोजनञ्च-जन्मादौ शुभग्रहाक्रान्तराश्यङ्गे पुष्टिः, पापाक्रान्तराश्यङ्गदेशे वैकल्यञ्च वाच्यमिति । तथोक्तं स्वल्पजातके—

"कालनरस्यावयवान् पुरुषाणां चिन्तयेत्प्रसवकाले ।
सदसद्ग्रहसंयोगात् पुष्टाः सोपद्रवास्ते च" इति ॥ ८ ॥

---

( १ ) स्वल्पजातके मिथुनं बाहू , इत्युक्तं "शीर्षमुखबाहुहृदयोदराणि · · · · · ·"




इस राशि चक्रका न्यास काल पुरुषके शरीरमें इस प्रकार से विद्यमान है मेष सिर, वृष मुख, मिथुन स्तनमध्य, कर्क हृदय, सिंह उदर ( पेट ), कन्या कमर, तुला नाभिके नीचे ( पेड़ू ), वृश्चिक लिंग, धनु ऊरु, मकर दोनों घुटने, कुंभ दोनों जांघें और मीन दोनों पैर हैं। राशि चक्रके अङ्ग विभागका तात्पर्य यह है कि जन्म अथवा प्रश्न वा गोचरमें जो राशि पापाक्रान्त हो उस राशिवाले अङ्गमें तिल वा चोट या मासा आदिका चिह्न होगा। जो राशि शुभ ग्रहसे युक्त हो वह अङ्ग पुष्ट होगा यह विशेष रूपसे स्मरणीय है ॥ ८ ॥

अथ मीनादीनां स्वरूपवर्णनम्।

व्यत्यस्तोभयपुच्छमस्तकयुतौ मीनौ सकुम्भो नर-
स्तौली चापधरस्तुरङ्गजघनो नक्रो मृगास्यो भवेत् ॥
वीणाढ्यं सगदं नृयुग्ममबला नौस्था ससस्यानला
शेषाः स्वस्वगुणाभिधानसदृशाः सर्वे स्वदेशाश्रयाः ॥ ९ ॥

मीनौ = द्वौ मत्स्यौ, व्यत्यस्तोभयपुच्छमस्तकयुतौ = अन्योन्यं मुखपुच्छसम्मिलितौ यथा भवतस्तद्रूपं मीनराशेर्ज्ञेयम्। सकुम्भो नरः = स्कन्धावधृतरिक्तकलशो नरो

यथा तथा कुम्भराशिरीयः । तौली=तुलावान् पुरुष इव तुलाराशिः । चापधरस्तुरङ्गजघनोऽध-(१)स्तादश्वजघनश्चतुष्पादुपरि(२)श्चाद्धस्तगृहीतचाप इव धनूराशिः । नक्रः = मकरराशि-र्मृगास्यः = मृगमुखः । वीणाढयं सगदं नृयुग्ममिति । नृयुग्मं = स्त्रीपुमांसौ । वीणाढयं सगदं = स्त्री सवीणा पुमान्सगदो यथा तथा मिथुनराशिः । अबलेति । अबला = कन्या, नौस्था ससस्यानला = सस्यं चानलं च ताभ्यां सह वर्त्तमाना नौकास्था कन्येव । शेषाः सर्वे = मेष–वृष–कर्क–सिंह–वृश्चिकाः, स्वस्वगुणाभिधानसदृशाः = गुणनामसमानरूपाः, स्वदेशाश्रयाः = येषां ये देशास्तदाश्रया वर्त्तन्ते । यथा मेषो मेषसमानरूपो वनेचरश्च । वृषो वृषाकारः । कर्कसमः कर्को जलचारी । सिंहः केसरी आरण्यः । वृश्चिको वृश्चिकः ( बिच्छू ) श्वभ्रचरश्चेति । प्रयोजनश्च–हृतनष्टादिषु द्रव्यादिपरिज्ञानम् । उक्तश्च "राशिभ्यः कालदिग्देशाः" इति ॥ ९ ॥

राशियों के स्वरूप का वर्णन–मीन राशि दो मछलियों में एकके मुखपर दूसरे की पूछ लगाकर गोल बनी हुई है । कुम्भ–कन्धेपर कलश लिये हुए पुरुषके सदृश है । तुला-तराजू हाथ में लिये हुए पुरुषके तुल्य है । धनु धनुष हाथमें लिये हुए कमरके ऊपर मनुष्य नीचे जानुनी जङ्घा आदि घोड़ेके समान है । मकर–मृगके सदृश मुख वाला है । मिथुन–स्त्री और पुरुष का जोड़ा, स्त्रीके हाथमें वीणा और पुरुषके हाथमें गदा धारण किये हुए समान है । कन्या–नौकापर बैठी हुई हाथमें धानको और अग्नि को लिये हुए है । शेष ( मेष, वृष, कर्क, सिंह, वृश्चिक ) राशियोंके स्वरूप नाम के तुल्य हैं । जैसे मेष मेंढ़ाके समान, वृष बैल के समान, कर्क केंकड़ा के समान, सिंह शेरके समान और वृश्चिक बिच्छूके सदृश है ॥ ९ ॥

## अथ मेषादीनां स्थानवर्णनम् ।

मेषस्य धातुकररत्नधरातलं स्यात् उक्ष्णस्तु सानुकृषिगोकुलकाननानि ।
द्यूतक्रियारतिविहारमही युगस्य वापीतटाकपुलिनानि कुलीरराशेः ॥ १० ॥
कण्ठीरवस्य घनशैलगुहावनानि षष्ठस्य शाद्वलवधूरतिशिल्पभूमिः ।
सर्वार्थसारपुरपण्यमही तुलायाः कीटस्य चाश्मविषकीटबिलप्रदेशाः ॥ ११ ॥
चापस्य वाजिरथवारणवासभूमिः, एणाननस्य सरिदम्बुवनप्रदेशाः ।
कुम्भस्य तोयघटभाण्डगृहस्थलानि मीनाधिवाससरिदम्बुधितोयराशिः ॥ १२ ॥

अथ राशीनां निवासस्थानानि कथ्यन्ते । धातुकररत्नधरातलं = धातुकरं च ( यत्र धातवो भवन्ति ) रत्नधरातलञ्च ( यत्र रत्नानि जायन्ते ) तन्मेषस्य = मेषराशेर्निवासस्थानं स्यात् । कृषिगोकुलकाननानि = कृषिः कृषिस्थानं, गोकुलं गोष्ठं, काननानि वनानि तानि उक्ष्णो वृषस्य स्थानानि । द्यूतक्रियारतिविहारमही = द्यूतस्य ग्लहस्य ( जूआ ) क्रिया द्यूतक्रिया, रतिः स्त्रीपुंसोः रहस्यक्रीडा, विहारो विहरणं तेषां मही=भूमिः, युगस्य=मिथुनराशेर्निवासस्थानम् । वापीतटाकपुलिनानि = वाप्यो दीर्घिकास्तटाका जलाशयास्तेषां पुलिनानि तत्प्रदेशाः, कुलीरराशेः=कर्कस्य स्थानानि । घनशैलगुहावनानि = घना निबिडाश्च ते शैलाश्च तेषां गुहाः कन्दराश्च, वनानि च तानि कण्ठीरवस्य = सिंहस्य स्थानानि । शाद्वलवधूरतिशिल्पभूमिः=शाद्वलः, शादाः शष्पाण्यस्मिन्देश इति शाद्वलः शष्पश्यामलभूमिः, वधूः स्त्री, रतिः स्त्रीपुंसोः क्रीडा, शिल्पं रचनादि तेषां भूमिः, षष्ठस्य=कन्याराशेः स्थानम् । सर्वार्थसारपुरपण्यमही = सर्वे च तेऽर्थाश्च तेषां सारो विद्यतेऽस्मिन्पुरे तत्सर्वार्थसारपुरं ( नगरं ) तस्मि-

(१) उत्तरार्द्धम् । (२) पूर्वार्द्धम् ।

ण्यं तस्य मही तुलायास्तुलाराशेः स्थानम् । अश्मविषकीटबिलप्रदेशाः=अश्मा पाषाणो विषं गरलं कीटाः कृमयस्तेषां बिलप्रदेशा गर्त्तानि, कीटस्य = वृश्चिकराशेः स्थानानि । वाजि-रथवारणवासभूमिः=वाजिनोऽश्वाः, रथाः स्यन्दनानि, वारणा हस्तिनस्तेषां वासभूमिश्चापस्य= धनूराशेः स्थानम् । सरिदम्बुवनप्रदेशाः = सरितां नदीनामम्बूनि जलानि, वनप्रदेशा आर-ण्यानि तानि, एणाननस्य=मकरस्य निवासस्थानानि । अत्र मकरस्य पूर्वदलं ( १५ अंशाः ) वनेषु, तथाऽपरं दलं जलेषु तिष्ठतीदमवधेयम् । तोयघटभाण्डगृहस्थलानि=तोयं जलं, घटः कलशः, भाण्डानि पात्राणि, गृहाण्यायतनानि तेषां स्थलानि भूमयः कुम्भस्य निवासस्था-नानि । मीनाधिवाससरिदम्बुधितोयराशिः=मीनानां मत्स्यानामधिवासो ह्रदादिः, सरितो नद्यः, अम्बुधयो महार्णवास्तेषां तोयानां राशिर्जलसमूहो मीनस्य निवासस्थानमिति । प्रयोजनञ्च, प्रसवादिदेशपरिज्ञानं हृतनष्टादौ द्रव्यादिस्थितिपरिज्ञानञ्चेति ॥ १०-१२ ॥

मेष राशि का निवास स्थान धातुकर और रत्नभूमि है। वृषका पर्वतकी चोटी, कृषिभूमि, गोशाला और जङ्गल वासस्थान है। मिथुनका जूआ, रति और विहारभूमि रहनेकी जगह है। कर्कका बावली पोखरा आदिका किनारा निवासस्थान है॥ १० ॥

सिंहका सघन पहाड़, गुफा और वन स्थान है। कन्याका स्थान तृणोंसे हरी-भूमि, वधूका स्त्री-पुरुषोंकी क्रीड़ाभूमि और शिल्पभूमि है। तुलाका सम्पूर्णधन सारके निरूपण भूमिमें, और बाजारमें और वृश्चिकका पत्थल, जहर तथा कृमियोंके बिलमें निवास है ॥११॥

धनुका घोड़ा, रथ और हाथीके निवास स्थानमें, मकरका नदियोंके जलमें तथा वनमें ( मकरका पूर्वार्धं वनमें और अपरार्द्ध जलमें ), कुम्भका घड़ा और जलपात्र रखने की भूमिमें वास है, और मीनका मछलियोंके रहनेकी जगह ( ह्रदोंमें ), नदी समुद्र और जल की राशि में है ॥ १२ ॥

## अथ मेषादीनां स्वरूपविशेषाविवर्णनम् ।

ह्रस्वा गोऽजघटाः समा मृगनृयुक्चापान्त्यकर्काटकाः
दीर्घा वृश्चिककन्यकाहरितुला मेषादिपुंयोषितौ ॥
प्रागादिक्रियगोनृयुक्कटकभान्येतानि कोणान्विता-
न्याहुः क्रूरशुभौ चरस्थिरतरद्वन्द्वानि तानि क्रमात् ॥ १३ ॥
वीर्योपेता निशि वृषनृयुक्कर्किचापाजनक्राः
हित्वा युग्मं भवनमपरे पृष्टपूर्वोदयाश्च ॥
शेषाः शीर्षोदयदिनबलाः श्रेष्ठता राशयस्ते
मीनाकारद्वयमुभयतः काललग्नं समेति ॥ १४ ॥

गोऽजघटाः = वृष-मेष-कुम्भाः, ह्रस्वाः = लघुकायाः सन्ति । मृगनृयुक्चापान्त्य-कर्काटकाः = मकर-मिथुन-धनु-मीन-कर्काः, समाः = समकायाः नातिदीर्घा नातिह्रस्वा-श्चेति । वृश्चिककन्यकाहरितुलाः, दीर्घाः = बृहत्कायाः सन्ति । मेषादिपुंयोषितौ = मेषादयो राशयः क्रमेण पुंयोषितौ = पुरुषवनिते, यथा मेषो पुमान्, वृषः स्त्री, मिथुनं पुमान, कर्कः स्त्री । एवं मेष-मिथुन-सिंह-तुला-धनुः-कुम्भा नरराशयः । वृष-कर्क-कन्या-वृश्चिक-मकर-मीनाः स्त्री राशयो ज्ञेयाः । प्रयोजनं च-नरराशिषु जातास्तेजस्विनः, स्त्रीराशिषु जाता मृदवो भवन्तीति । अथ राशीनां दिग्व्यवस्थामाह-प्रागादीति । प्रागादिक्रियगोनृयुक्कटकभानि =

प्राक् पूर्वा दिगादिर्येषां तानि प्रागादीनि, प्रागादीनि च क्रियगोनृयुक्कटकभानि प्रागादिक्रियगोनृयुक्कटकभान्येतानि कोणान्वितान्याहुः । अत्रेदमुक्तं भवति स्वस्वकोणेन=नवमेन पञ्चमेन च सहितानि, क्रिय-( मेषः ) गो-( वृषः ) नृयुक्-( मिथुनं ) कटक-( कर्कः ) भान्येतानि पूर्वादिषु ज्ञेयानीत्याहुः । यथा पूर्वस्यां दिशि मेष-सिंह-धनूंषि । दक्षिणस्यां वृष-कन्या-मकराः । पश्चिमायां मिथुन-तुला-कुम्भाः । उदीच्यां कर्क-वृश्चिक-मीना इति । प्रयोजनं च हृतनष्टादौ द्रव्यस्य चौरादेश्च दिग्विज्ञानम् । अपि च "यातव्यदिङ्मुखगतस्य सुखेन सिद्धिर्व्यर्थश्रमो भवति दिक्प्रतिलोमलग्ने" इति । अथ राशीनां शुभाशुभत्वमाह— क्रूरशुभाविति । मेषः क्रूरो वृषः शुभः, मिथुनं क्रूरः कर्कः शुभः । एवं मेषादिविषमाः क्रूरास्तथा वृषादिसमाः शुभा ज्ञेयाः । प्रयोजनं च—"उग्रे क्रूराः पुरुषाः सौम्याः सौम्येषु भवनेषु" इति । अथच तानि = मेषादीनि भानि क्रमात् = क्रमशः चरस्थिरतरद्वन्द्वानि ज्ञेयानि । यथा मेषः चरः, वृषः स्थिरः, मिथुनं द्वन्द्वमित्येवं मेष-कर्क-तुला-मकराश्चराः । वृष-सिंह-वृश्चिक-कुम्भाः स्थिराः । मिथुन-कन्या-धनुर्मीना द्विस्वभावा इति । प्रयोजनं, हृतनष्टादौ द्रव्यादेश्चौरादेश्च ज्ञानमपि च जन्मनि चरे चरधियः, स्थिरे स्थिरधियः, द्वन्द्वे मिश्रस्वभावाः पुरुषा भवन्तीति ॥

अथ राशीनामुदयव्यवस्थां बलसमयं च निर्दिशति—वीर्योपेता इति । वृषनृयुक्कर्किचापाजनक्राः=वृष-मिथुन-कर्क-धनुर्मेष-मकराः निशि=रात्रौ वीर्योपेताः=बलिनो भवन्ति । युग्मं मवर्ज=मिथुनराशिं, हित्वा=त्यक्त्वा एत एव पृष्ठपूर्वोदयाश्च=पृष्ठोदया भवन्तीति । मिथुनं शीर्षेणैवोदेति। शेषाः=पूर्वोक्तेभ्योऽवशिष्टाः=सिंह-कन्या-तुला-वृश्चिक-कुम्भाः, शीर्षोदयदिनबलाः = शीर्षोदया दिवा बलिनश्च भवन्ति । अत्रैतत् दिनरात्रिबलाबलकथनं सञ्ज्ञामात्रमेव । यतोऽग्रे वक्ष्यति विशेषतो बलाबलत्वमेतस्मिन्नेवाध्याये षोडशादिश्लोकत्रये । श्रेष्ठताराशयस्ते । स्वस्वोक्तसमये ते राशयः श्रेष्ठताः = श्रेष्ठाः सन्तीत्यर्थः । मीनाकारद्वयं = मत्स्यरूपद्वयं, उभयतोऽन्योन्यं, काललग्नं = काले = एककालावच्छेदेन लग्नं मुखपुच्छसंलग्नमित्यर्थः, समेति उदयं गच्छतीति । तथोक्तं बृहज्जातकेऽपि—

"गोजाश्विकर्किमिथुनाः समृगा निशाख्याः पृष्ठोदया विमिथुनाः कथितास्त एव ।
शीर्षोदया दिनबलाश्च भवन्ति शेषा लग्नं समेत्युभयतः पृथुरोमयुग्मम्" इति ॥ १३-१४ ॥

मेष, वृष, और कुम्भ, ह्रस्व हैं । मकर, मिथुन, धनु, मीन, और कर्क, सम हैं । वृश्चिक, कन्या, सिंह, और तुला दीर्घ हैं । मेषादि द्वादश राशि क्रमसे पुरुष और स्त्री संज्ञक हैं । मे. मि. सिं. तु. ध. कु. ये नर-राशि हैं । एवं वृ. क. कं. वृ. म. मी. ये स्त्री-राशि हैं । मेष, वृष, मिथुन, कर्क, अपने २ पञ्चम और नवमसे सहित पूर्वादि दिशाके राशि हैं । जैसे मे. सिं. ध. पूर्व की । वृष, कन्या, मकर, दक्षिणकी । मिथुन, तुला, कुम्भ पश्चिमकी । और कर्क, वृश्चिक, मीन उत्तर दिशाकी राशि हैं । मे. मि. सिं. तु. ध. कुं. ये क्रूर हैं । एवं वृ. क. कं. वृ. म. मी. ये शुभ हैं । मेषादि राशियोंकी क्रूर और सौम्य संज्ञा है । मेषादि द्वादश राशि क्रम से चर स्थिर द्विस्वभाव संज्ञक हैं । जैसे—१।४।७।१० ये चर हैं । २।५।८।११ ये स्थिर हैं और ३।६।९।१२ ये द्विस्वभाव हैं ॥ १३ ॥

वृष, मिथुन, कर्क, धनु, मेष और मकर ये राशियां रात्रिमें बली हैं । मिथुनको छोड़ कर ये ही पृष्ठोदय हैं । शेष ( सिंह-कन्या. तुला. वृश्चिक. कुम्भ ) राशि दिनमें बली हैं । ये ही और मिथुन शीर्षोदय हैं । मीन दो मछलियों के मुख पूंछ मिल कर उभयोदय है । जो पीठ से उदय होते हैं वे पृष्ठोदय जो शिर से उदय होते हैं वे शीर्षोदय हैं ॥ १४ ॥

मेषादिराशीनां ह्रस्वादिस्त्रीपुरुषसंज्ञा-दिशा-क्रूरसौम्य-संज्ञा-चरादिसंज्ञाबोधकचक्रम्—

| राशि | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ह्रस्व सम दीर्घ | ह्र. | ह्र. | सम | सम | दी. | दी. | दी. | दी. | सम | सम | ह्र. | सम |
| स्त्रीपुरुष | पु. | स्त्री | पु. | स्त्री | पु. | स्त्री | पु. | स्त्री. | पु. | स्त्री | पु. | स्त्री |
| दिशा | पू. | द. | प. | उ. | पू. | द. | प. | उ. | पू. | द. | प. | उ. |
| क्रूर सौम्य | क्रूर | सौ. | क्रूर | सौ. | क्रूर | सौ. | क्रूर | सौ | क्रूर | सौ. | क्रूर | सौ. |
| चरादि संज्ञा | चर | स्थिर | द्विस्व. | च. | स्थि. | द्वि. | च. | स्थि | द्वि. | च. | स्थि | द्वि. |

| राशि | मे. | वृ. | मि. | क. | सि. | क. | तु. | वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| पृष्ठोदय शीर्षोदय | पृ-ष्ठो-दय | पृ-ष्ठो-दय | शीर्षो-दय | पृष्ठो-दय | शीर्षो-दय | शीर्षो-दय | शीर्षो-दय | शीर्षो-दय | पृष्ठो-दय | पृ-ष्ठो-दय | शीर्षो-दय | उभयो-दय |
| दिनब. रात्रिब. | रा त्रि | रा त्रि | रात्रि | रात्रि | दिन | दिन | दिन | दिन | रात्रि | रा-त्रि | दिन बली | सं. |

अथ मीनादीनां सलिलादिसंज्ञाविशेषाः ।

मीनालिकर्कटमृगाः सलिलाभिधानास्तोयाश्रया घटवधूयुगगोपसंज्ञाः ॥
निस्तोयभूतलचराः क्रियचापतौलिकण्ठीरवाश्च बहवः प्रवदन्ति सन्तः ॥ १५ ॥

मीनालिकर्कटमृगाः=मीनवृश्चिककर्कमकराः, सलिलाभिधानाः=जलसञ्ज्ञकाः (जलचराः) भवन्ति । घटवधूयुगगोपसञ्ज्ञाः=कुम्भ–कन्या–मिथुन–वृषास्तोयाश्रयाः=तोयाश्रयसञ्ज्ञका न तु जलचरा भवन्ति । क्रियचापतौलिकण्ठीरवाश्च=मेष–धनु=स्तुला–सिंहाः, निस्तोय-भूतलचराः=निस्तोयं निर्जलं यद्भूतलं तस्मिं श्चरन्तीति ते निर्जलभूमिविचरा भवन्तीति बहवोऽनेके सन्तो मनीषिणः प्रवदन्ति ॥ १५ ॥

मीन, वृश्चिक, कर्क और मकर ये जलचर हैं । कुम्भ, कन्या, मिथुन और वृष जलाश्रयी हैं । मेष, धनु, तुला और सिंह जल से हीन भूतल में विचरने वाले हैं यह बहुत विद्वान् कहते हैं ॥ १५ ॥

अथ भावविशेषसम्बन्धान्मेषादीनां चतुष्पदादिसञ्ज्ञापूर्वकं बलित्वकथनम् ।

चापापरार्द्धहरिगोमकरादिमेषा मानस्थिता बलयुताश्च चतुष्पदाख्याः ।
कन्यानृयुग्मघटतौलिशरासनाद्या लग्नान्विता यदि नरा द्विपदा बलाढ्याः ॥१६॥
मृगापरार्द्धान्त्यकुलीरसंज्ञा जलाभिधाना बलिनश्चतुर्थे ।
जलाश्रयो वृश्चिकनामधेयः स सप्तमस्थानगतो बली स्यात् ॥ १७ ॥

केन्द्रं गतोऽह्नि द्विपदो बलाढ्यः चतुष्पदाः केन्द्रगता रजन्याम्।
कीटास्तु सर्वे यदि कण्टकस्थाः सन्धिद्वये वीर्ययुता भवन्ति ॥ १८ ॥

चापापरार्द्धहरिगोमकरादिमेषाः = धनुरपरार्द्ध-सिंह-वृष-मकरपूर्वार्द्ध-मेषाश्चतुष्पदाख्या-श्चतुष्पदसञ्ज्ञकास्तथा मानस्थिताः=मावे दशमे स्थितास्तदा च बलयुताः=बलिनो भवन्ति। कन्यानृयुग्मघटतौलिशरासनाद्याः=कन्या-मिथुन-कुम्भ-तुला-धनुराद्यभागा नरा नरराशयो द्विपदा द्विपदसञ्ज्ञकास्तथा अमी यदि लग्नान्विताः स्युस्तदा बलाढ्या बलिनो भवन्ति। मृगापरार्द्धान्त्यकुलीरसञ्ज्ञाः=मकरोत्तरार्द्ध-मीन-कर्काः, जलाभिधानाः=जलचरसञ्ज्ञकास्तथा चतुर्थे=चतुर्थभावे बलिनो भवन्ति। वृश्चिकनामधेयो वृश्चिकराशिर्जलाश्रयो जलाश्रयसञ्ज्ञस्तथा स सप्तमस्थानगतो बली स्यात्, सप्तमे भावे वृश्चिको बलवानित्यर्थः। तथाऽऽह वराहः—

"कण्टककेन्द्रचतुष्टयसञ्ज्ञाः सप्तमलग्नचतुर्थखभानाम्।
तेषु यथाभिहितेषु बलाढ्याः कीटनराम्बुचराः पशवश्च" इति।

अथ कालपरत्वेन राशिबलं निरूप्यते—केन्द्रमिति। द्विपदो नरराशिः केन्द्रं=लग्नच-तुर्थसप्तमदशमभावानामन्यतमं गतोऽवस्थितोऽह्नि=दिने बलाढ्यो भवति। केन्द्रवर्त्ती नरराशिर्दिने बलीत्यर्थः। चतुष्पदाः = चतुष्पदसञ्ज्ञकराशयः केन्द्रगता रजन्यां = रात्रौ बलिन इति। कीटास्तु सर्वे = सकलाः कीटा जलचराः ( अत्र कीटशब्देन न केवलं वृश्चिकस्य ग्रहणं किन्तु सर्वे जलचरा गृह्यन्ते ) यदि कण्टकस्थाः केन्द्रगताः स्युस्तदा सन्धिद्वये दिन-रात्र्योः सन्धियुगले ( सन्ध्याद्वितये ) वीर्ययुता बलिनो भवन्ति। तथोक्तं च स्वल्पजातके—"सन्ध्याद्युरात्रिबलिनः कीटा नृचतुष्पदाश्चैवम्" इति। एतद्राशिबलाबलत्वं जन्मनि प्रश्ने च सम्यग्विवेचनीयमिति ॥ १६-१८ ॥

धनुका परार्ध, सिंह, वृष, मकरका पूर्वार्द्ध और मेष ये चतुष्पद हैं और ये दशम भावमें बली होते हैं। कन्या, मिथुन, कुम्भ, तुला, धनुका पूर्वार्द्ध ये नर राशि हैं और ये लग्नमें बली होते हैं ॥ १६ ॥

मकर का परार्ध, मीन और कर्क जलचर हैं और चौथेमें बली होते हैं। वृश्चिक जलाश्रय है, वह सप्तम स्थानमें प्राप्त होनेपर बली होता है ॥ १७ ॥

द्विपद ( नर ) केन्द्रमें प्राप्त होकर दिनमें बली होते हैं। चतुष्पद, केन्द्रमें आनेपर रात्रिमें बली होते हैं। सभी कीट ( जलचर ) केन्द्रमें प्राप्त होकर दोनों सन्ध्या-( सुबह और शाम ) में बली होते हैं ॥ १८ ॥

## अथ राशीनां धातु-मूल जीवसञ्ज्ञाः।

धातुर्मूलं जीवमित्याहुरार्या मेषादीनामोजयुग्मे तथैव ॥
स्वर्णाद्धातुर्मृत्तिकान्तं तृणान्तं वृक्षान्मूलं जीवकूटः स जीवः ॥ १९ ॥

अथ राशीनां धात्वादिविशेषसञ्ज्ञां कथयति—धातुरिति। मेषादीनां द्वादश-राशीनां क्रमात् धातुः, मूलं, जीव इति सञ्ज्ञामार्या विद्वांस आहुः। यथा मेषो धातुसञ्ज्ञो वृषो मूलसञ्ज्ञो मिथुनं जीवसञ्ज्ञम्, एवं मेष-कर्क-तुला-मकरा धातुसंज्ञाः। वृष-सिंह-वृश्चिक-कुम्भा मूलसञ्ज्ञाः। मिथुन-कन्या-धनुर्मीना जीवसञ्ज्ञा भवन्ति। ओजयुग्मे तथैव। तथैव = तेनैव विधिना मेषादीनामोजयुग्मे सञ्ज्ञे भवतः। मेष ओजो वृषः समः। एवं मेष-मिथुन-सिंह-तुला-धनुः-कुम्भा ओजराशयः ( विषमाः )। वृष-कर्क-कन्या-वृश्चिक-मकर-मीनाः समराशयः। अथ यदुक्तं धातुर्मूलं जीव इति तत्र को धातुः, किं मूलं, कश्च जीव इति सन्देहे आह—स्वर्णाद्धातुरित्यादि। स्वर्णान्मृत्तिकान्तं = स्वर्णादारभ्य मृत्तिकापर्यन्तो धातुः। तृणादृक्षान्तं मूलं ज्ञेयम्। जीवकूटो जीवानां प्राणिनां

कूटो राशिः ( प्राणिमात्रम् ) "स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम्" इत्यमरः, स जीवो ज्ञेय इति । प्रयोजनं च-सूतिकागारे प्रश्ने च द्रव्यादिज्ञानम् ॥ १९ ॥

विद्वान् लोग मेषादि राशियों की धातु, मूल और जीव संज्ञा कहते हैं, ( जैसे १।४।७।१० धातु २।५।८।११ मूल और ३।६।९।१२ जीव हैं ) एवं विषम और सम संज्ञा कहे हैं। सोना से मिट्टी तक धातु । वृक्ष से तृण तक मूल । प्राणीमात्र जीव हैं ॥ १९ ॥

## अथ मेषादीनां विप्रत्वादिनिरूपणम् ।

मीनालिवृषभा विप्राश्चापाजहरयो नृपाः ।
कुम्भयुग्मतुला वैश्याः शूद्राः स्त्रीमृगकर्कटाः ॥ २० ॥

मीनालिवृषभाः=मीनवृश्चिकवृषराशयः, विप्राः = ब्राह्मणवर्णाः । चापाजहरयः = धनुर्मेषसिंहाः, नृपाः = क्षत्रियाः । कुम्भयुग्मतुला वैश्याः स्त्रीमृगकर्कटाः=कन्यामकरकर्काः शूद्राः=शूद्रवर्णा भवन्ति । प्रयोजनं च-चौरादेर्वर्णज्ञानम्, विवाहादौ च वधूवरयोर्वर्णज्ञानम् ।

Notes—अत्र प्रकृतग्रन्थे वर्णपाठे भेदः । द्रष्टव्यं रामाचार्योक्तम्—

द्विजाः झषालिकर्कटास्ततो नृपा विशोऽङ्घ्रिजाः ।
वरस्य वर्णतोऽधिका वधूर्न शस्यते बुधैः । इति ॥ २० ॥

| ब्रा. | क्ष. | वै. | शू. | वर्णाः |
|---|---|---|---|---|
| १२।४।८ | १।५।९ | २।६।१० | ३।७।११ | राशयः |
| १२।८।१२ | १।५।९ | ११।३।७ | ६।१०।४ | मतान्तरे |

मीन, वृश्चिक और वृष राशि ब्राह्मण वर्ण हैं । धनु, मेष और सिंह क्षत्रिय वर्ण हैं। कुम्भ, मिथुन और तुला वैश्य वर्ण हैं। कन्या, मकर और कर्क शूद्र वर्ण हैं ॥ २० ॥

## अथ मेषादीनां कालविशेषे अन्धत्वादिनिरूपणम् ।

सदा निशान्धाः क्रियगोमृगेशा मध्यन्दिने कर्कटयुग्मकन्याः ।
पूर्वाह्णकाले बधिरौ तुलाली धन्वी मृगाख्यश्च तथाऽपराह्णे ॥ २१ ॥
मृगाननश्चापधरश्च पङ्गू सन्धिद्वये नाशकरौ भवेताम् ।
स्यादृक्षसन्धिः कटकालिमीनभान्तं प्रगण्डान्तमिति प्रसिद्धम् ॥ २२ ॥

क्रियगोमृगेशाः ( मेष-वृष-सिंहाः ) सदा निशान्धाः = सदैव रात्र्यन्धा भवन्ति । न कस्यामपि रात्रौ तेषामन्धत्वमिरस्यतीति सदापदोपादानम् । अत्र 'महानिशान्धा' इत्यपि पाठान्तरम् । तदा महानिशायामर्द्धरात्रे ( निशीथे ) अन्धाः स्युरिति। कर्कटयुग्मकन्याः, मध्यन्दिने = दिनस्य मध्यभागेऽन्धत्वमाप्नुवन्ति । तुलाली=तुलावृश्चिकौ पूर्वाह्णकाले = दिनस्य प्रथमे त्रिभागे बधिरौ भवतः । धन्वी = धनुः, मृगाख्यश्च = मकरश्चेति द्वौ, अपराह्णे = दिनस्य तृतीये त्रिभागे तथा=बधिरौ भवतः । मृगानन श्चापधरश्च=मकरधनुषी सन्धिद्वये=सन्ध्याद्वितये, पङ्गू = पङ्गुसञ्ज्ञकौ (खञ्जौ) भवतः । नाशकराविति=तौ पङ्गू राशी नाशकरावनिष्टकरौ भवेताम् । सन्ध्याद्वये धनुर्मकरौ राशी यदि लग्ने भवेतां तदा जातकस्य प्रश्नुर्वा नाशकरौ भवत इत्यर्थः । स्यादृक्षसन्धिरिति । कर्कटालिमीनभान्तं = कर्कवृश्चिकमीनराशीनामन्तमृक्षसन्धिरिति सञ्ज्ञकम् । यत्र नक्षत्रराश्योर्युगपदवसानं तदेवर्क्षसन्धिः । यथा—कर्कस्य श्लेषान्तेऽवसानं, ज्येष्ठान्ते वृश्चिकान्तं, पौष्णान्ते मीनान्तं च भवति ।

प्रगण्डान्तमिति = ऋक्षसन्धिरेव गण्डान्तं लग्नगण्डान्तमिति प्रसिद्धमस्ति । तथोक्तञ्च रामाचार्येण "कर्काल्यण्डजमान्ततोऽर्धघटिका" इति । अथात्र रामाचार्येण मुहूर्त्तविषये "सिंहाजवृषा दिवान्धाः कन्यानृयुक्कर्कटकाः निशान्धाः दिने घटोऽन्त्यो निशि पङ्गुसञ्ज्ञः" इत्यादि यदुक्तं तत्प्रकृतग्रन्थाद्भिन्नमतोऽवगम्यते रामाचार्यपरिभाषितं मुहूर्त्तविषयकं, न जातकविषयकमिति सुधीभिर्विवेचनीयमिति ॥ २१-२२ ॥

मेष, वृष, और सिंह महानिशा-( ठीक आधी रात्रि ) में अन्धे होते हैं । कर्क, मिथुन और कन्या मध्यदिन-( दोपहर ) में अन्धे रहते हैं। तुला, वृश्चिक पूर्वाह्न काल-( सुबह ) में बधिर हैं। धनु, मकर अपराह्न में ( दोपहरके बाद ) बधिर रहते हैं। मकर, धनु सन्ध्याकालमें पङ्गु हैं। ये नाश करने वाले हैं। कर्क, वृश्चिक और मीनका अन्त ऋक्षसन्धि है, इसे गण्डान्त ( लग्नगण्डान्त ) भी कहते हैं ॥ २१-२२ ॥

## अथ मेषादीनां वर्णविशेषः ।

रक्तगौरशुककान्तिपाटलाः पाण्डुचित्ररुचिनीलकाञ्चनाः ।
पिङ्गलः शबलबभ्रुपाण्डुरास्तुम्बुरादिभवनेषु कल्पिताः ॥ २३ ॥

तुम्बुरादिभवनेषु = तुम्बुरो मेष आदिर्येषां तानि तुम्बुरादिभवनानि तेषु ( मेषादिराशिष्वित्यर्थः ) रक्त-गौर-शुककान्ति-पाटलाः, पाण्डु-चित्ररुचि-नील-काञ्चनाः-पिङ्गलः, शबल-बभ्रु-पाण्डुराः वर्णाः कल्पिताः । यथा, मेषो रक्त वर्णः । वृषो गौरः । मिथुनः शुककान्ति (कीरपक्षिनिभम्) । कर्कः पाटलः (ईषच्छ्यामलरक्तवर्णः) । सिंहः पाण्डुः=श्वेतः । कन्या चित्ररुचिर्विविधवर्णा । तुला नीलः । वृश्चिकः काञ्चनः=सुवर्णनिभः । धनुः पिङ्गलः= पीतम् । मकरः शबलः = ईषच्छ्वेतपीतः । कुम्भो बभ्रुर्नकुलनिभः । मीनः पाण्डुः शुक्लवर्णः ॥ २३ ॥

मेषका लाल, वृषका सफेद, मिथुनका हरा, कर्कका रक्तश्वेत, सिंहका श्वेत, कन्याका विविधवर्ण, तुलाका नील, वृश्चिकका स्वर्णवर्ण ( पीला ) धनुका पीला, मकरका पीतश्वेतयुक्त, कुम्भका नेवलके सदृश और मीनका उजला वर्ण है ॥ २३ ॥

## अथ मेषादीनां बलाबलफलम् ।

वस्त्राद्यं शालिमुख्यं, वनफलनिचयः, कन्दली, मुख्यधान्यम् ,
त्वक्सारं, मुद्गपूर्वं, तिलवसनमुखं, त्विक्षुलोहादिकं च ।
शस्त्राश्वं, काञ्चनाद्यं, जलजनिकुसुमं, तोयजातं समस्तम् ,
द्रव्याण्याहुः क्रियादिष्वबलबलयुतेष्वल्पताधिक्यभाञ्जि ॥ २४ ॥

श्लोकेनानेन मेषादिराशीनां द्रव्याणि कथयति । क्रियादिषु=मेषादिषु, अबलबलयुतेषु=निर्बलेषु सबलेषु चाल्पताधिक्यभाञ्जि । निर्बलेष्वल्पप्रमाणानि, सबलेष्वधिकमानानि द्रव्याणि विद्वांस आहुः । कानि तानीति ? वस्त्राद्यं शालिमुख्यं = मेषस्य वस्त्रं परिधानीयं तदाद्यं, शालिर्धान्यं तन्मुख्यमन्नजातम् । वृषस्य वनफलनिचयः=वन्यफलानीति । मिथुनस्य कन्दली = मृगविशेषः ( "कदली कन्दली चीनश्चमूरुप्रियकावपि समुरुश्चेति हरिणाः" अमरः ) । कर्कस्य मुख्यधान्यम् । सिंहस्य त्वक्सारं = त्वचि सारो यस्य तत् । कन्यायाः मुद्गपूर्वं = मुद्गाद्यम् ( भाषायां मूङ्ग ) । तुलायाः तिलवसनमुखं = तिलवस्त्राद्यम् । वृश्चिकस्य तु इक्षुलोहादिकम् । धनुषः शस्त्राश्वं = शस्त्रमायुधमश्वो घोटकश्चेति तत् । मकरस्य काञ्चनाद्यं = सुवर्णाद्यम् । कुम्भस्य जलजनिकुसुमं = जलोत्पन्नपुष्पं कमलाद्यम् । मीनस्य समस्तं तोयजातं=सकलं जलजं वस्तु इति । प्रयोजनं च-लाभादिप्रश्ने जातके च तत्तद्द्रव्यासिः ॥ २४ ॥

मेषादि बारह राशिके द्रव्य क्रमसे-१ वस्त्र और धान्य। २ वन्यफल। ३ हरिणविशेष ४ उत्तम अन्न। ५ जिसके त्वचा में बल हो। ६ मूंग आदि। ७ तिल वस्त्र आदि। ८ ईख, और लोहा आदि। ९ शस्त्र और घोड़ा। १० सुवर्णादि। ११ जलमें होने वाले फूल। १२ समस्त जलमें होने वाली चीजें हैं ॥ २४ ॥

### अथ राशिस्वामिनिरूपणम्।

धराजशुक्रज्ञशशीनसौम्यसितारजीवार्कजमन्दजीवाः।
क्रमेण मेषादिषु राशिनाथस्तदंशपाश्चेति वदन्ति सन्तः ॥ २५ ॥

धराज-शुक्र-ज्ञ-शशी-न-सौम्य-सितार-जीवार्कज-मन्द-जीवाः क्रमेण मेषादिषु राशिनाथाः भवन्ति। यथा धराजो मङ्गलो मेषस्य। शुक्रो वृषस्य। ज्ञो बुधो मिथुनस्य। शशी = चन्द्रः कर्कस्य। इनः=सूर्यः सिंहस्य। सौम्यो बुधः कन्यायाः। सितः = शुक्रस्तुलायाः। आरो मङ्गलो वृश्चिकस्य। जीवो बृहस्पतिर्धनुषः। अर्कजः=शनिः मकरस्य। मन्दः शनिः कुम्भस्य। जीवो गुरुर्मीनस्याधिपतिरिति। तदंशपाश्च=अमी राशिस्वामिनस्तदंशपास्तेषां राशीनां येंऽशाः = नवांशास्तेषामधिपश्च, राशीशा एव नवांशाधिपा अपि भवन्ति, इन सन्तो मनीषिणो वदन्ति। अत्र सूर्याचन्द्रमसावेकैकराश्यधिपावन्ये ग्रहा द्विराशिपा इत्यत्र वृद्धानां वचनम्—

"कण्ठीरवं विक्रमिणं विलोक्य स्वीयं पदं तत्र चकार सूर्यः।
मैत्र्या तदासन्नतया कुलीरे निजं बबन्धालयमेणलक्ष्मा ॥
अन्ये ग्रहा गृहयियाचिषया क्रमेण शीतांशुतीग्ममहसोः सदनं समीयुः।
प्राप्तक्रमेण ददतुर्भवनानि तौ तु ताराग्रहा द्विभवनास्तत एव जाताः" ॥ २५ ॥

मेषादि राशियोंके स्वामी कहते हैं—मेषका मंगल। वृषका शुक्र। मिथुनका बुध। कर्कका चन्द्रमा। सिंहका सूर्य। कन्याका बुध। तुलाका शुक्र। वृश्चिकका मंगल। धनु का बृहस्पति। मकरका शनि। कुम्भका शनैश्चर और मीनका बृहस्पति हैं ॥ २५ ॥

मेषादिराशीशचक्रम्।

| राशि | मे. | वृ. | मि. | क. | सि. | कं. | तु. | वृ. | ध | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स्वामी | मं. | शु. | बु. | चं. | सू. | बु. | शु. | मं. | बृ. | श. | श. | बृ. |

### अथ सूर्यादीनां त्रिकोणराश्यादिवर्णनम्।

मूलत्रिकोणा हरितावुरुक्रिया वधूधनुस्तौलिघटा दिवाकरात्।
सितासितार्काङ्गिरसां नखांशकास्त्रिकोणमादौ परतः स्वमन्दिरम् ॥ २६ ॥
वृषादिभागत्रयमुच्चमिन्दोर्मूलत्रिकोणं परतस्तु सर्वम् ॥
मेषादिगा द्वादशभागसंज्ञाः कुजस्य कोणं परतः स्वभं स्यात् ॥ २७ ॥
कन्यार्द्धमुच्चं, शशिजस्य कोणं दशांशकाः, स्वर्क्षफलं शरांशाः।
कुम्भस्त्रिकोणं, फणिनायकस्य तुङ्गं नृयुग्मं, रमणी गृहं स्यात् ॥ २८ ॥

सूर्यादीनां मूलत्रिकोणराशय उच्यन्ते। हरितावुरुक्रियावधूधनुस्तौलिघटाः, दिवाकरात्=सूर्यादेः, मूलत्रिकोणानि भवन्ति। यथा सूर्यस्य हरिः=सिंहो मूलत्रिकोणसंज्ञः। चन्द्रस्य तावुरुर्वृषः। कुजस्य क्रियः = मेषः। बुधस्य वधूः = कन्या। गुरोर्धनुः। शुक्रस्य तौली=तुला। शनैश्चरस्य घटः=कुम्भो मूलत्रिकोणसंज्ञो भवति। तथाऽऽह वराहः—

"सिंहो वृषः प्रथमषष्ठहयाङ्गतौलिकुम्भास्त्रिकोणभवनानि भवन्ति सूर्यात्" इति।

अथ सूर्यस्य सिंहः स्वगृहं तदेव मूलत्रिकोणमुक्तम्, किमित्युच्यते—सितासितार्काङ्गि-

रसां=शुक्रशनिसूर्यगुरूणामादौ=प्रथमे, नखांशकाः = विंशतिरंशास्त्रिकोणं=मूलत्रिकोणं, परतः = विंशतेरूर्ध्वं त्रिंशदंशपर्यन्तं स्वमन्दिरमिति। इदमुक्तं भवति—शुक्रशनिरविगुरूणां क्रमेण तुल-कुम्भ-सिंह-धनूराशिषु पूर्वं नखांशाः २० मूलत्रिकोणानि। ततः परं स्वस्वगृहमिति। अथ चन्द्र-कुज-बुध-राहूणां मूलत्रिकोणादि कथयति। वृषादिभागत्रयं=वृषराशौ प्रथममंशत्रयमिन्दोश्चन्द्रस्योच्चमुच्चसंज्ञकं परतः सर्वमवशिष्टं ( वृषस्य २७ भागाः ) चन्द्रस्य मूलत्रिकोणं भवति। अथ कुजस्य मेषादिगाः=मेषराशेरादिमा द्वादशभागसंज्ञाः = द्वादशांशाः, कोणं = मूलत्रिकोणं, परतोऽष्टादशप्रमाणा अंशाः तस्य स्वभं=स्वगेहं स्यादिति। अथ बुधस्य। कन्यार्द्धं = कन्याराशेरर्द्धं ( पञ्चदशभागाः ) शशिजस्य = बुधस्योच्चं ततो दशांशकाः = पञ्चदशमारभ्य पञ्चविंशतिं यावत्कोणं, ततः शरांशाः = पञ्चविंशतिमारभ्य त्रिंशद्यावत्स्वर्क्षफलं स्वराशिफलं ( स्वगेहमित्यर्थः ) च भवति। अथ राहोः। फणिनायकस्य = राहोः, कुम्भः=सकलः कुम्भराशिस्त्रिकोणं, नृयुग्मं = मिथुनं, तुङ्गम्=उच्चं, रमणी= कन्या, गृहं स्यात्। तथोक्तं प्रश्नभैरवे राहुकेतुगृहे—

"अङ्गीकृतं सौम्यगृहं सुहृत्त्वात्कन्याह्वयं तच्च विधुन्तुदेन।
तत्सप्तमं यत् शिखिना गृहीतं मीनाह्वयं चेति बुधा वदन्ति॥

स्वमुखे अपि—"स्यात्सिंहिकायास्तनस्य तुङ्गं नृयुग्मसङ्गं बुधदैवतञ्च।
पुच्छस्य केतोर्गदितं च तुङ्गं तत्कार्मुकाख्यं गुरुदैवतञ्च॥ इति॥२६–२८॥

सूर्यादि ग्रहोंके मूलत्रिकोण क्रमसे सिंह, वृष, मेष, कन्या, धनु, तुला और कुम्भ हैं। शुक्र, शनि, सूर्य और बृहस्पतिके राशियोंमें २० अंश तक मूलत्रिकोण, बाद २१ वें अंशसे ३० अंश तक उनकी वे स्वगेह राशि हैं। वृषका तीन अंश चन्द्रमाका उच्च है इसके बाद मूलत्रिकोण है। मङ्गलका मेष राशिके १२ अंश पर्यन्त मूलत्रिकोण है, बाद स्वगृह है। कन्याका आधा १५ अंश बुध का उच्च है, बाद १० अंश मूलत्रिकोण है, फिर ५ अंश स्वगृह है। राहुका मूलत्रिकोण कुम्भ है, मिथुन उच्च है और कन्या स्वगृह है॥२६–२८॥

सूर्यादिमूलत्रिकोणबोधकचक्रम्—

| ग्रह | सूर्य | चन्द्र | मंग. | बुध | बृह. | शुक्र | शनि |
|---|---|---|---|---|---|---|---|
| मूलत्रि-कोण | सिंह ५ | वृष २ | मेष १ | कन्या ६ | धनु ९ | तुला ७ | कुम्भ ११ |

**अथ सूर्यादीनामुच्चनीचराशिनिरूपणपूर्वकमत्युच्चनीचभागनिरूपणम्।**

**मेषो वृषो मकरषष्ठकुलीरमीनाः तौली च तुङ्गभवनानि तदस्तनीचाः॥**
**नित्याङ्गनाहरिमयामलुसारनीरसङ्ख्या दिवाकरमुखादतितुङ्गभागाः॥ २९॥**

अथानेन सूर्यादीनामुच्चराशय उच्यन्ते। दिवाकरमुखात् = सूर्यादेः, मेषो वृषो मकरषष्ठकुलीरमीनास्तौली च तुङ्गभवनानि भवन्ति। यथा सूर्यस्य मेषः। चन्द्रस्य वृषः। भौमस्य मकरः। बुधस्य षष्ठः = कन्या। गुरोः कुलीरः = कर्कः। शुक्रस्य मीनः। शनेस्तौली = तुला चैते तुङ्गभवनानि = उच्चराशयो भवन्ति। तदस्तनीचाः। उच्चानि यानि तेषां सप्तमभवनानि ( तुला–वृश्चिक–कर्क–मीन–मकर–कन्या–मेषाः ) सूर्यादीनां नीचसंज्ञानि। अथात्र क्रमपठितो राशिः सकल उच्चनीचसंज्ञ उत केचिदंशास्तस्येति सन्देहे आह—नित्याङ्गनाहरिमयामलुसारनीरसंख्या अतितुङ्गभागाः, इति। अत्र—

"क–ट–प–य–वर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः।
नि–ञि–च शून्यं ज्ञेयं तथा स्वरे केवले कथितम्"॥

इति सङ्केतेन नित्य = १० । अङ्गना = ३ । हरि = २८ । मया = १५ । मनु ५ । सार = २७ । नीर = २०, एताः संख्याः सूर्यादीनामुच्चराशिष्वतितुङ्गभागाः = परमोच्चांशास्तथा नीचराशिषु परमनीचभागाश्च ज्ञेयाः । तथोक्तं वराहेण—

"अज–वृष–मृगा–ङ्गना–कुलीरा–झष–वणिजौ च दिवाकरादितुङ्गाः ।

दश–शिखि–मनुयुक्–तिथी–न्द्रियांशै–स्त्रिनवक–विंशतिभिश्च तेऽस्तनीचाः" इति ।

अत्र जातकादौ यदुक्तं ग्रहाणामुच्चं नीचं च तत्फलादेशार्थमेव । न तद्बलमिति । यस्मिन् राशौ यावत्यंशे यस्य ग्रहस्य फले वैशिष्ट्यं दृष्टमृषिभिस्तस्मिन् राशौ तावानंशस्तस्य ग्रहस्योच्चत्वेन पठितस्तथैवैतत्प्रतिकूलं नीचमिति विभाव्यं निपुणैरिति । अथोच्चकथनप्रयोजनञ्चाह भगवान् गार्गिः—

"स्वोच्चगौ रविशीतांशू जनयेतां नराधिपम् । उच्चस्थौ धनिनं ख्यातं स्वत्रिकोणगतावपि" ॥

एवमेव नीचप्रयोजनम्—

"अन्धं दिगम्बरं मूर्खं परपिण्डोपजीविनम् । कुर्यातामतिनीचस्थौ पुरुषं शशिभास्करौ" इति ॥

सूर्यादिग्रहोंकी मेष, वृष, मकर, कन्या, कर्क, मीन, और तुला उच्च राशि हैं । जिसकी जो उच्च राशि है उससे ७ वीं उसकी नीच राशि है । सूर्यादिग्रहोंकी जो उच्चराशि हैं उनमें अति उच्च ( परमोच्च ) क्रमसे १०।३।२८।१५।५।२७।२० अंश तक हैं, और सातवीं राशियोंके उक्त अंशके अनुसार परम नीचांश हैं । स्पष्टताके लिये चक्र देखिये ॥ २९ ॥

अथ ग्रहाणामुच्चनीचबोधकचक्रम्—

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रहः |
|---|---|---|---|---|---|---|---|
| ०.१० | १।३ | ९।२८ | ५।१५ | ३।५ | ११।२७ | ६।२० | उच्चम् |
| ६।१० | ७।३ | ३।२८ | ११।१५ | ९।५ | ५।२६ | ०।२० | नीचम् |

## अथ दशवर्गनिरूपणं तत्स्वामिनिरूपणञ्च ।

लग्नं होरा दृकाणं स्वरनवदशकद्वादशांशाः कलांशाः
त्रिंशत्षष्ट्यंशकाख्या व्ययदुरितचयश्रीकरा मानवानाम् ॥
होरा राश्यर्धमोजे दिनकरशशिनोरिन्दुमार्त्तण्डहोरे (२)
युग्मे राशौ, दृगाणा निजतनयतपःस्थानपानां भवन्ति ॥ ३० ॥ (३)
लग्नादिसप्तमांशेशास्त्वोजे राशौ यथाक्रमम् ।
युग्मे लग्ने स्वरांशानामधिपाः सप्तमादयः ॥ ३१ ॥ (४)
चापाजसिंहराशीनां नवांशास्तुम्बुरादयः ।
वृषकन्यामृगाणां च मृगाद्या नव कीर्तिताः ॥ ३२ ॥
नृयुक्तुलाघटानां च तुलाद्याश्चांशका नव ।
कर्किवृश्चिकमीनानां कर्कटाद्या नवांशकाः ॥ ३३ ॥
चरे चाद्यंशको ज्ञेयः, स्थिरे मध्यनवांशकः ।
अन्त्यांशको द्विस्वभावे वर्गोत्तम इति स्मृतः ॥ ३४ ॥ (५)
लग्नादिदशमांशेशास्त्वोजे, युग्मे शुभादिकाः । (६)
द्वादशांशाधिपतयस्तत्तद्राशिवशानुगाः ॥ ३५ ॥ (७)
ओजे कलांशप्रमुखास्तदीशा विरञ्चिशौरीशदिवाकराश्च ॥
युग्मे विलग्ने सति भास्कराद्या विलोमतः षोडशभागनाथाः ॥ ३६ ॥ (८)

आरार्किजीवशशिनन्दनशुक्रभागास्त्वोजे समीरपवनाष्टकशैलबाणाः ।
युग्मे समीरगिरिपन्नगपञ्चबाणाः त्रिंशांशकास्सितविदार्यशनिक्षमाजाः ॥३७॥(९)
षष्ट्यंशकानामधिपास्त्वयुग्मे घोरांशकाद्यासुरदेवभागाः ॥
य इन्दुरेखादिशुभाशुभांशाः क्रमेण युग्मे तु यथाविलोमात् ॥ ३८ ॥ (१०)
घोरांशको राक्षसदेवभागौ कुबेरयक्षोगणकिन्नरांशाः ॥
भ्रष्टः कुलघ्नो गरलाग्निसंज्ञौ मायांशकः प्रेतपुरीशभागः ॥ ३९ ॥
अपांपतिर्देवगणेशभागः कलाहिभागावमृतांशचन्द्रौ ।
मृद्वंशकः कोमलपद्मभागलक्ष्मीशवागीशदिगम्बरांशाः ॥ ४० ॥
देवार्द्रभागः कलिनाशसंज्ञः क्षितीश्वराख्यः कमलाकरांशः ।
मन्दात्मजो मृत्युकरस्तु कालो दावाग्निघोराधमकण्टकांशाः ॥ ४१ ॥
सुधाऽमृतांशौ परिपूर्णचन्द्रो विषप्रदिग्धः कुलनाशभागः ।
मुख्यास्तु वंशक्षयपातकांशौ कालस्तु सौम्यो मृदुशीतलांशौ ॥ ४२ ॥
दंष्ट्राकरालेन्दुमुखाः प्रवीणः कालाग्निदण्डायुधनिर्मलाख्याः ।
शुभाकरोऽशोभनशीतलांशौ सुधापयोधिभ्रमणेन्दुरेखाः ॥ ४३ ॥

अथ ग्रहाणां दशवर्गा निरूप्यन्ते । तत्र के दश वर्गा इत्याह—लग्नमित्यादि । लग्नं होराद्दकाणं स्वरनवदशकद्वादशांशाः कलांशाः त्रिंशत्षष्ट्यंशकाख्या एते दशवर्गा मानवानां मनुष्याणां व्ययदुरितचयश्रीकरा भवन्ति । अत्रेदमवधेयं, पापवर्गा व्ययदुरितकराः शुभवर्गाश्चयश्रीकरा भवन्तीति । तत्र १ लग्नानि = ग्रहाणां स्वराशय उक्ताः ।

२ अथ होरा । होरा = राश्यर्द्धमिति । राशेरर्द्धं ( पञ्चदशांशाः १५ ) होराऽर्थादेकस्मिन् राशौ द्वे होरे भवतस्ते ओजे = विषमराशौ, दिनकरशशिनोः=पूर्वदले सूर्यस्यापरदले चन्द्रस्य । युग्मे=समे राशौ इन्दुमार्त्तण्डहोरे=प्रथमा चन्द्रस्यापरा सूर्यस्येति ।

३ अथ दृकाणाः । राशेस्त्रिभागा द्रेष्काणास्ते, निजतनयतपःस्थानपानां = प्रथमपञ्चमनवमेशानां भवन्ति । यथा मेषे प्रथमदशभागं यावन्मेषपतेर्भौमस्य । ततः परं विंशतिभागपर्यन्तं मेषात्पञ्चमस्य सिंहस्याधिपतेः सूर्यस्य । ततः परं त्रिंशत्तं यावन्मेषान्नवमस्य धनुषोऽधिपतेर्गुरोर्द्रेष्काणः । एवं सर्वत्र बोध्यमिति । अत्र यवनेश्वराचार्यः प्रत्येकग्रहस्य होरा भवन्ति तथा प्रथमद्वादशैकादशराशीशा द्रेष्काणपतयो भवन्तीति सम्मनुते । तथा तद्वाक्यम्—

आद्या तु होरा भवनस्य पत्युरेकादशक्षेत्रपतेर्द्वितीया ।
स्वद्वादशैकादशराशिपानां द्रेष्काणसंज्ञाः क्रमशस्त्रयोऽत्र" इति ॥

परं तन्नान्येषामभिमतमेवमाह वराहः—

"मार्त्तण्डेन्द्वोरयुजि समभे चन्द्रभान्वोश्च होरे,
दृक्काणाः स्युः स्वभवनसुतत्रित्रिकोणाधिपानामिति" ॥

४ अथ स्वरांशाः ( सप्तमांशाः ) राशेः सप्तमभागास्ते प्रतिराशि सप्त भवन्ति । प्रतिखण्डं चत्वारोऽशाः सप्तदश कला अष्टौ विकलाश्च भवन्ति ४°।१७′।८″ । ते कथं ज्ञायन्त इति । ओजे राशौ = मेषमिथुनादिविषमे राशौ लग्नादिसप्तमांशेशाः = राश्यादिसप्तमांशाधिपतयो यथाक्रमं = राशिक्रमेण भवन्ति । यथा मेषे प्रथमो मेषस्य, द्वितीयो वृषस्य, तृतीयो मिथुनस्य, तत्पतयश्च सप्तमांशाधिपाः । एवं सप्त तुलान्ता ज्ञेयाः । युग्मे लग्ने = समे राशौ वृष-कर्कादौ, सप्तमादयः = प्रकृतराशेः सप्तमादयः स्वरांशानां = सप्तमांशानामधिपा भवन्ति । यथा—वृषे वृषात् सप्तमादयो वृश्चिकादयोऽर्थाद्वृषे प्रथमो वृश्चिकस्य,

द्वितीयो धनुषः, एवं सप्त वृषान्ता ज्ञेयाः । स्पष्टार्थं सप्तमांशचक्रं विलोक्यम् ।

५ **अथ नवांशाः** । राशेर्नवमो भागो नवांशो नवलिप्ताधिकांशत्रयात्मकः ३°।२०' तेषां प्रतिराशि नव खण्डानि भवन्ति । तज्ज्ञानविधिमाह—चापाजसिंहराशीनां = धनुर्मेषसिंह-राशीनां नवांशास्तुम्बुरादयः=मेषादयो भवन्ति । उक्तराशित्रये प्रथमो मेषस्य, द्वितीयो वृषस्य, तृतीयो मिथुनस्यैवं धनुरन्ता नव ज्ञेयाः । तेषामधिपाश्च नवांशेशा उच्यन्ते । वृष-कन्यामृगाणां च, मृगाद्याः=मकराद्या नव नवांशाः कीर्तिताः । नृयुक्तुलाघटानां च=मिथुन-तुलाकुम्भानां, तुलाद्याश्चांशकाः = नवांशा नव ज्ञेयाः । कर्किवृश्चिकमीनानां कर्कटाद्याः = कर्काद्या नवांशका भवन्तीति नवांशचक्रं विलोक्यम् ।

**अथ वर्गोत्तमाः** । चरे = चरराशौ ( मेष-कर्क-तुला-मकरराशौ ) आद्यंशकः = प्रथम-नवांशो ३।२०' वर्गोत्तमः = वर्गोत्तमसञ्ज्ञ इति स्मृतः । स्थिरे = ( वृष-सिंह-वृश्चिक-कुम्भराशौ ) मध्यनवांशकः = पञ्चमो नवांशो ( १३°।२०' तः १६°।४०' पर्यन्तम् ) वर्गोत्तमः । द्विस्वभावे ( मिथुन-कन्या-धनु-मीने ) अन्त्यांशकः = नवमो नवमांशो ( २६°। ४०' तः ३०° पर्यन्तम् ) वर्गोत्तम इति । तथोक्तं मिहिरेण—

"वर्गोत्तमाश्चरगृहादिषु पूर्वमध्यपर्यन्ततः शुभफला नवभागसञ्ज्ञाः" इति ॥

६ **अथ दशमांशाः** । राशेर्दशमभागा अंशत्रयात्मकाः ३° । ते प्रतिराशि दश भवन्ति । ते च, ओजे=विषमराशौ लग्नादिदशमांशेशाः=राश्यादिका दशमांशपतयो भवन्ति । युग्मे= समराशौ, शुभादिकाः = प्रकृतराशेः शुभादिकाः, शुभो नवमस्तदादिका ज्ञेया इति । तथोक्तं पाराशर्याम् –

"दिगंशपा ततश्चौजे युग्मे तन्नवमाद्वदेत्" ॥

स्पष्टार्थं दशमांशचक्रं विलोक्यम् ।

७ **अथ द्वादशांशाः** । राशेर्द्वादशभागाः सार्द्धद्व्यंशात्मकाः २।३०' प्रतिराशि द्वादश भवन्ति । ते तत्तद्राशिवशानुगाः = विचारणीयराशिमारभ्य द्वादशसङ्ख्या द्वादशांशाधिपतयो भवन्ति । मेषे मेषमारभ्य मीनान्ता एवं सर्वत्र ज्ञेयाः इति । स्पष्टार्थं द्वादशांशचक्रं विलोक्यम् ।

८ **अथ षोडशांशाः** । एकस्मिन् राशौ षोडश षोडशांशा भवन्ति । प्रतिखण्डमेकोऽंशः सार्द्धद्विपञ्चाशत्कलासहितो ( १।५२'।३०" ) भवति । ओज=विषमराशौ, कलांशाः = षोड-शांशाश्चेत्तदा विरञ्चिशौरीशदिवाकराश्च = ब्रह्मविष्णुशिवसूर्यास्तदीशा भवन्ति । युग्मे विलग्ने = समराशौ विलोमतः = व्यत्यासेन, भास्कराद्याः = सूर्यशिवविष्णुब्रह्माणः षोडशभागना-थाः=षोडशांशेशा भवन्तीति । षोडशांशाः कथं गणनीया इति चेत् "चरे मेषात् स्थिरे सिंहाद् द्वितनौ धनुषः सदा । गणनीयाः षोडशांशा" इति चिन्त्यम् । स्पष्टार्थं चक्रं विलोक्यम् ।

९ **अथ त्रिंशांशाः** । प्रतिराशि पञ्च त्रिंशांशा भवन्ति । ते त्वोजे = विषमे राशौ, समीरपवनाष्टकशैलबाणाः, आरार्किजीवशशिनन्दनशुक्रभागा भवन्ति । यथा प्रथमं समी-राः = पञ्चारस्य = भौमस्य । ततः परं पवनाः=पञ्चार्केः = शनैश्चरस्य । ततः परम् अष्टकाः= अष्टौ, जीवस्य = गुरोः । ततः परं शैलाः = सप्त, शशिनन्दनस्य = बुधस्य । ततः परं बा-णाः = पञ्च, शुक्रस्य, भागाः = अंशाः ( त्रिंशांशाः ) भवन्ति । युग्मे = समराशौ, समीर-गिरिपन्नगपञ्चबाणाः = पञ्च-सप्ताष्ट-पञ्च-पञ्चभागाः, क्रमेण सितविदार्यशनिक्षमाजाः=शुक्र-बुध-गुरु-शनि-भौमानां त्रिंशांशका भवन्तीति । तथोक्तं वराहेण—

"कुजरविजगुरुज्ञशुक्रभागाः पवनसमीरणकौर्पिजूकलेयाः ।
अयुजि, युजि तु भे विपर्ययस्थाः" इति ।

१० **अथ षष्ट्यंशाः** । एकस्मिन राशौ षष्टिमिताः, प्रतिखण्डं त्रिंशत्कलाश्च भवन्ति ।

तेषां षष्ट्यंशकानामधिपास्तु अयुग्मे=विषमराशौ, घोरांशकाद्यासुरदेवभागाः इत्यादितः सुधापयोधिभ्रमणेन्दुरेखा इत्यन्तं ज्ञेयाः। युग्मे=समराशौ यथा विलोमात्=विषमे यथोक्तं तद्विलोमादिन्दुरेखादिक्रमेण घोरान्तावधिकाः षष्ट्यंशकानां देवता विज्ञेयाः। अशुभपतिकः षष्ट्यंशोऽशुभदः, शुभपतिकश्च शुभदो भवतीति ज्ञेयम्। स्पष्टार्थं षष्ट्यंशचक्रं विलोक्यमिति ॥

लग्न, होरा, द्रेष्काण, सप्तमांश, नवमांश, दशमांश, द्वादशांश, षोडशांश, त्रिंशांश, और षष्ट्यंश, ये दशवर्ग हैं। ये मनुष्योंके व्यय, दुःख एवं वृद्धि तथा सम्पत्ति करने वाले हैं, (शुभ वर्ग होने से चय श्री तथा पापवर्ग होने से व्यय दुरित कारक होता है)। राशि के आधे भाग (१५ अंश) को होरा कहते हैं। एकराशिमें दो होरायें होती हैं। विषम राशियोंमें पहले १५ अंश तक सूर्यकी बाद चन्द्रमाकी, और समराशिमें पहले १५ अंश पर्यन्त चन्द्रमा की बाद सूर्य की होरा होती है। द्रेष्काण १० अंश तक उसी राशि का बाद २० अंश पर्यन्त उस राशिसे ५ वीं राशिका फिर उस के बाद ३० अंश तक नवमीं राशिका होता है ॥ ३० ॥

विषम राशियोंमें सप्तमांशेश राश्यादिके क्रमसे होते हैं और समराशियोंमें उस राशि से ७ राशिके बादकी राशियोंके स्वामी सप्तमांशेश होते हैं। सप्तमांशका प्रत्येक भाग ४ अं० १७ क० ८ वि० से कुछ अधिकका होता है ॥ ३१ ॥

धनु, मेष, सिंह राशिका नवांश मेषसे आरम्भ होता है। वृष, कन्या, और मकर, राशि का मकर आदिसे नव राशि तक नवांश होता है। मिथुन, तुला कुम्भके तुला आदिसे ९ नवांश हैं। कर्क, वृश्चिक, मीनका कर्कसे ९ नवांशक कहे हैं। नवांशका प्रत्येक भाग ३ अंश २० कलाका होता है ॥ ३२-३३ ॥

चर-राशि (१·४·७·१०) का प्रथम नवांश, स्थिर (२·५·८·११) राशियोंका मध्य (५ वां) नवांश, द्विस्वभाव (३·६·९·१२) राशियोंका अन्त्य नवांश वर्गोत्तमांश कहा गया है ॥ ३४ ॥

विषम राशिमें दशमांशेश राशिक्रमसे और समराशिमें उस राशिके नवम आदिसे दशमांशेश होते हैं। दशमांशका एक २ भाग तीन अंशका होता है। द्वादशांशेश उस उस राशिके वशानुगामी है -अर्थात् अपनी राशिसे ही आरम्भ होता है। द्वादशांशका एक २ अंश ढाई अंशका होता है ॥ ३५ ॥

राशिके सोरहवें भागको षोडशांश कहते हैं। विषमराशिमें ब्रह्मा, विष्णु, हर और सूर्य इस क्रमसे, समराशिमें विपरीत अर्थात् सूर्य, शिव, विष्णु और ब्रह्मा ये षोडशांशके स्वामी हैं। षोडशांशका प्रत्येक खण्ड १ अंश ५२ कला और ३० विकलाका होता है। चरराशिमें मेषसे, स्थिरमें सिंहसे और द्विस्वभाव राशिमें धनुसे षोडशांश विचारणीय है। "चरे मेषात् स्थिरे सिंहाद् द्विस्वभावे तु चापभात्। गणनीयाः षोडशांशाः दैवज्ञकुलभूषणैः" ॥३६॥

विषम राशियोंमें ५ अंश तक मंगलका, फिर ५ अंश पर्यन्त शनिका, फिर ८ अंश तक बृहस्पतिका, फिर ७ अंश पर्यन्त बुधका, बाद ५ अंश तक शुक्रका त्रिंशांशक होता है। सम राशियोंमें ५ अंश तक शुक्रका, बाद ७ अंश तक बुधका, फिर ८ अंश तक गुरु का, फिर ५ अंश तक शनिका, फिर ५ अंश पर्यन्त मंगलका त्रिंशांश होता है ॥ ३७ ॥

एक राशि में ६० षष्ट्यंश होते हैं। प्रत्येक खण्ड ३० कलाओं के होते हैं। षष्ट्यंश के स्वामी विषम राशि में घोरांश आदि क्रम से इन्दुरेखा पर्यन्त ६० हैं। सम राशि में इन के विपरीत याने इन्दुरेखा आदि क्रम से घोरांशक पर्यन्त शुभ तथा अशुभ ६० हैं। वे इस भांति हैं—१ घोर, २ राक्षस, ३ देव, ४ कुबेर, ५ यक्षोगण, ६ किन्नर, ७ भ्रष्ट, ८ कुलघ्न, ९ गरल, १० अग्नि, ११ माया, १२ यम, १३ वरुण, १४ इन्द्र, १५ कला, १६ सर्प, १७ अमृत, १८ चन्द्र, १९ मृदु, २० कोमल, २१ पद्म, २२ विष्णु, २३ गुरु, २४ शिव, २५ देव, २६ आर्द्र, २७ कलिनाश, २८ क्षितीश, २९ कमलाकर, ३० मन्दात्मज, ३१ मृत्युकर, ३२ काल, ३३ दावाग्नि, ३४ घोर, ३५ अधम, ३६ कण्टक, ३७ सुधा, ३८ अमृत, ३९ पूर्णचन्द्र, ४० विषदग्ध, ४१ कुलनाश, ४२ मुख्य, ४३ वंशक्षय, ४४ उत्पातक, ४५ काल, ४६ सौम्य, ४७ मृदु, ४८ शीतल, ४९ दंष्ट्राकराल, ५० इन्दुमुख, ५१ प्रवीण, ५२ कालाग्नि, ५३ दण्डायुध,

५४ निर्मल, ५५ शुभाकर, ५६ अशोभन, ५७ शीतल, ५८ सुधासमुद्र, ५९ भ्रमण, और ६० इन्दुरेखा। यहां शुभ और अशुभ नाम के अनुकूल ही जानना चाहिये। शुभषष्ट्यंशमें ग्रह शुभ एवं अशुभ में अशुभ कारक होते हैं ॥ ३८-४३ ॥

होराचक्रमिदम्—

| राशि. | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कु. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अंश १५ | सू. | चं. | सू. | चं. | सू. | चं. | सू. | चं. | सू. | चं. | सू. | चं. |
| अंश ३० | चं. | सू. | चं. | सू. | चं. | सू. | चं. | सू. | चं. | सू. | चं. | सू. |

द्रेष्काणचक्रमिदम्—

| राशि. | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कु. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अंश. १० | मं. १ | शु. २ | बु. ३ | चं. ४ | सू. ५ | बु. ६ | शु. ७ | मं. ८ | वृ. ९ | श. १० | श. ११ | वृ. १२ |
| अंश. २० | सू. ५ | बु. ६ | शु. ७ | मं. ८ | वृ. ९ | श. १० | श. ११ | वृ. १२ | मं. १ | शु. २ | बु. ३ | चं. ४ |
| अंश. ३० | वृ. ९ | श. १० | श. ११ | वृ. १२ | मं. १ | शु. २ | बु. ३ | चं. ४ | सू. ५ | बु ६ | शु. ७ | मं. ८ |

सप्तांशचक्रमिदम्—

| राशि | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कु. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अं० क० वि० ४-१७-८ | . १ | मं. ८ | बु. ३ | श. १० | सू. ५ | वृ. १२ | शु. ७ | शु. २ | वृ. ९ | चं. ४ | श. ११ | बु. ६ |
| ८-३४-१७ | शु. २ | वृ. ९ | चं. ४ | श. ११ | बु. ६ | मं. १ | मं. ८ | बु. ३ | श. १० | सू. ५ | वृ. १२ | शु. ७ |
| १२-५१-२५ | बु. ३ | श. १० | सू. ५ | वृ. १२ | शु. ७ | शु. २ | वृ. ९ | चं. ४ | श. ११ | बु. ६ | मं. १ | मं. ८ |
| १७-८-३४ | चं. ४ | श. ११ | बु. ६ | मं. १ | मं. ८ | बु. ३ | श. १० | सू. ५ | वृ. १२ | शु. ७ | शु. २ | र. ९ |
| २१-२५-४२ | सू. ५ | वृ. १२ | शु. ७ | शु. २ | वृ. ९ | चं. ४ | श. ११ | बु. ६ | मं. १ | मं. ८ | बु. ३ | श. १० |
| २५-४२-५१ | . ६ | मं. १ | मं. ८ | बु. ३ | श. १० | सू. ५ | वृ. १२ | शु. ७ | शु. २ | वृ. ९ | चं. ४ | श. ११ |
| ३०-०-० | शु. ७ | शु. २ | वृ. ९ | चं. ४ | श. ११ | बु. ६ | मं. १ | मं. ८ | गु. [illegible] | श. १० | सु. [illegible] | वृ. १२ |

## नवांशाचक्रमिदम्—

| राशि | मे. | वृ. | मि. | क. | सि. | क. | तु. | वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अं० क० ३–२० | मं. १ | श. १० | शु. ७ | चं. ४ | मं. १ | श. १० | शु. ७ | चं. ४ | मं. १ | श. १० | शु. ७ | चं. ४ |
| ६–४० | शु. २ | श. ११ | मं. ८ | सू. ५ | शु. २ | श. ११ | मं. ८ | सू. ५ | शु. २ | श. ११ | मं. ८ | सू. ५ |
| १०–० | बु. ३ | बृ. १२ | बृ. ९ | बु. ६ | बु. ३ | बृ. १२ | बृ. ९ | बु. ६ | बु. ३ | बृ. १२ | बृ. ९ | बु. ६ |
| १३–२० | चं. ४ | मं. १ | श. १० | शु. ७ | चं. ४ | मं. १ | श. १० | शु. ७ | चं. ४ | मं. १ | श. १० | शु. ७ |
| १६–४० | सू. ५ | शु. २ | श. ११ | सं. ८ | सू. ५ | शु. २ | श. ११ | मं. ८ | सू. ५ | शु. २ | श. ११ | मं. ८ |
| २०–० | बु. ६ | बु. ३ | बृ. १२ | बृ. ९ | बु. ६ | बु. ३ | बृ. १२ | बृ. ९ | बु. ६ | बु. ३ | बृ. १२ | बृ. ६ |
| २३–२० | शु. ७ | चं. ४ | मं. १ | श. १० | शु. ७ | चं. ४ | मं. १ | श. १० | शु. ७ | चं. ४ | मं. १ | श. १० |
| २६–४० | मं. ८ | सू. ५ | शु. २ | श. ११ | मं. ८ | सू. ५ | शु. २ | श. ११ | मं. ८ | सू. ५ | शु. २ | श. ११ |
| ३०–० | बृ. ९ | बु. ६ | बु. ३ | बृ. १२ | बृ. ९ | बु. ६ | बु. ३ | बृ. १२ | बृ. ९ | बु. ६ | बु. ३ | बृ. १२ |

## दशांशाचक्रम्—

| राशि. | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कु, | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३° | १ | १० | ३ | १२ | ५ | २ | ७ | ४ | ९ | ६ | ११ | ८ |
| ६° | २ | ११ | ४ | १ | ६ | ३ | ८ | ५ | १० | ७ | १२ | ९ |
| ९° | ३ | १२ | ५ | २ | ७ | ४ | ९ | ६ | ११ | ८ | १ | १० |
| १२° | ४ | १ | ६ | ३ | ८ | ५ | १० | ७ | १२ | ९ | २ | ११ |
| १५° | ५ | २ | ७ | ४ | ९ | ६ | ११ | ८ | १ | १० | ३ | १२ |
| १८° | ६ | ३ | ८ | ५ | १० | ७ | १२ | ९ | २ | ११ | ४ | १ |
| २१° | ७ | ४ | ९ | ६ | ११ | ८ | १ | १० | ३ | १२ | ५ | २ |
| २४° | ८ | ५ | १० | ७ | १२ | ९ | २ | ११ | ४ | १ | ६ | ३ |
| २७° | ९ | ६ | ११ | ८ | १ | १० | ३ | १२ | ५ | २ | ७ | ४ |
| ३०° | १० | ७ | १२ | ९ | २ | ११ | ४ | १ | ६ | ३ | ८ | ५ |

द्वादशांशचक्रमिदम्—

| राशि | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कु. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अं० क० २-३० | मं. १ | शु. २ | बु. ३ | चं. ४ | सू. ५ | बु ६ | शु. ७ | मं. ८ | वृ. ९ | श. १० | श. ११ | वृ. १२ |
| ५-० | शु. २ | बु. ३ | चं. ४ | सू. ५ | बु. ६ | शु. ७ | मं. ८ | वृ. ९ | श. १० | श. ११ | वृ. १२ | मं. १ |
| ७-३० | बु. ३ | चं. ४ | सू. ५ | बु. ६ | शु. ७ | मं. ८ | वृ. ९ | श. १० | श. ११ | वृ. १२ | मं. १ | शु. २ |
| १०-० | चं. ४ | सू. ५ | बु. ६ | शु. ७ | मं. ८ | वृ. ९ | श. १० | श. ११ | वृ. १२ | मं. १ | शु. २ | बु. ३ |
| १२-३० | सू. ५ | बु. ६ | शु. ७ | मं. ८ | वृ. ९ | श. १० | श. ११ | वृ. १२ | मं. १ | शु. २ | बु. ३ | चं. ४ |
| १५-० | बु. ६ | शु. ७ | मं. ८ | वृ. ९ | श. १० | श. ११ | वृ. १२ | मं. १ | शु. २ | बु. ३ | चं. ४ | सू. ५ |
| १७-३० | शु. ७ | मं. ८ | वृ. ९ | श. १० | श. ११ | वृ. १२ | मं. १ | शु. २ | बु. ३ | चं. ४ | सू. ५ | बु. ६ |
| २०-० | मं. ८ | वृ. ९ | श. १० | श. ११ | वृ. १२ | मं. १ | शु. २ | बु. ३ | चं. ४ | सू. ५ | बु. ६ | शु. ७ |
| २२-३० | वृ. ९ | श. १० | श. ११ | वृ. १२ | मं. १ | शु. २ | बु. ३ | चं. ४ | सू. ५ | बु. ६ | शु. ७ | मं. ८ |
| २५-० | श. १० | श. ११ | वृ. १२ | मं. १ | शु. २ | बु. ३ | चं. ४ | सू. ५ | बु. ६ | शु. ७ | मं. ८ | वृ. ९ |
| २७-३० | श. ११ | वृ. १२ | मं. १ | शु. २ | बु. ३ | चं. ४ | सू. ५ | बु. ६ | शु. ७ | मं. ८ | वृ. ९ | श. १० |
| ३०-० | वृ. १२ | मं. १ | शु. २ | बु. ३ | चं. ४ | सू. ५ | बु. ६ | शु. ७ | मं. ८ | वृ. ९ | श. १० | श. ११ |

## षोडशांशचक्रम्—

| विषमे स्वा. | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कु. | मे. | समे स्वा. | अं. | क. | वि. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ब्रह्मा | मं. १ | र. ५ | बृ. ९ | मं १ | र. ५ | बृ. ९ | मं. १ | सू. ५ | बृ. ९ | मं. १ | सू. ५ | बृ. ९ | सूर्य. | १ | ५२ | ३० |
| विष्णु | शु. २ | बु. ६ | श. १० | शु. २ | बु. ६ | श. १० | शु. २ | बु. ६ | श. १० | शु. २ | बु. ६ | श. १० | शिव. | ३ | ४५ | ० |
| हर | बु. ३ | शु. ७ | श. ११ | बु. ३ | शु. ७ | श ११ | बु. ३ | शु. ७ | श. ११ | बु. ३ | शु. ७ | श. ११ | विष्णु | ५ | ३७ | ३० |
| सूर्य | चं. ४ | मं. ८ | बृ. १२ | चं. ४ | मं. ८ | बृ. १२ | चं. ४ | मं. ८ | बृ. १२ | चं. ४ | मं. ८ | बृ. १२ | ब्रह्मा. | ७ | ३० | ० |
| ब्र. | सू. ५ | बृ. ९ | मं. १ | सू. ५ | बृ. ९ | मं. १ | र. ५ | बृ. ९ | मं. १ | र. ५ | बृ. ९ | मं. १ | सु. | ९ | २२ | ३० |
| वि. | बु. ६ | श. १० | शु. २ | बु. ६ | श. १० | शु. २ | बु. ६ | श. १० | शु. २ | बु. ६ | श. १० | शु. २ | हर | ११ | १५ | ० |
| ह. | शु. ७ | श. ११ | बु. ३ | शु. ७ | श. ११ | बु. ३ | शु. ७ | श. ११ | बु. ३ | शु. ७ | श. ११ | बु. ३ | वि. | १३ | ७ | ३० |
| सू. | मं. ८ | बृ. १२ | चं. ४ | मं. ८ | बृ. १२ | चं. ४ | मं. ८ | बृ. १२ | चं. ४ | मं. ८ | बृ. १२ | चं. ४ | ब्र. | १५ | ० | ० |
| ब्र. | बृ. ९ | मं. १ | र. ५ | बृ. ९ | मं. १ | र. ५ | बृ. ९ | मं. १ | र. ५ | बृ. ९ | मं. १ | सू. ५ | सू. | १६ | ५२ | ३० |
| वि. | श. १० | शु. २ | बु. ६ | श. १० | शु. २ | बु. ६ | श. १० | शु. २ | बु. ६ | श. १० | शु. २ | बु. ६ | ह. | १८ | ४५ | ० |
| ह. | श. ११ | बु. ३ | शु. ७ | श. ११ | बु. ३ | शु. ७ | श. ११ | बु. ३ | शु. ७ | श. ११ | बु. ३ | शु. ७ | वि. | २० | ३७ | ३० |
| सू. | बृ. १२ | चं. ४ | मं. ८ | बृ १२ | चं. ४ | मं. ८ | बृ. १२ | चं. ४ | मं. ८ | बृ. १२ | चं. ४ | मं. ८ | ब्र. | २२ | ३० | ० |
| ब्र. | मं. १ | र. ५ | बृ. ६ | मं. १ | सू. ५ | बृ. ९ | मं. १ | र. ५ | बृ. ९ | मं. १ | सु. ५ | बृ. ९ | सू. | २४ | २२ | ३० |
| वि. | शु. २ | बु. ६ | श. १० | शु. २ | बु. ६ | श. १० | शु. २ | बु. ६ | श. १० | शु. २ | बु. ६ | श. १० | हर. | २६ | १५ | ० |
| ह. | बु. ३ | शु. ७ | श. ११ | बु. ३ | शु. ७ | श ११ | बु. ३ | शु. ७ | श. ११ | बु. ३ | शु. ७ | श. ११ | वि. | २८ | ७ | ३० |
| सू. | चं. ४ | मं. ८ | बृ. १२ | चं. ४ | मं. ८ | बृ. १२ | चं. ४ | मं. ८ | बृ. १२ | चं. ४ | मं. ८ | बृ. १२ | ब्र. | ३० | ०० | ० |

## १० षष्ठ्यंशाचक्रम् ।

| विषमे सं. | विषमे अं. । क. | शुभ वा अशुभ | अंशपतिः | समे अं. । क. | समे सं. | विषमे सं. | विषमे अं. । क. | शुभाशुभ | अंशपतिः | समे अं. । क. | समे सं. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ०।३० | अ. | घोर | ३०।० | ६० | ३१ | १५।३० | अ | मृत्यु | १५।० | ३० |
| २ | १।० | अ. | राक्षस | २९।३० | ५९ | ३२ | १६।० | अ. | काल | १४।३० | २९ |
| ३ | १।३० | शु. | देव | २९।० | ५८ | ३३ | १६।३० | अ. | दावाग्नि | १४।० | २८ |
| ४ | २।० | शु. | कुबेर | २८।३० | ५७ | ३४ | १७।० | अ | घोर | १३।३० | २७ |
| ५ | २।३० | अ. | यक्ष | २८।० | ५६ | ३५ | १७।३० | अ. | अधम | १३।० | २६ |
| ६ | ३।० | शु. | किन्नर | २७।३० | ५५ | ३६ | १८।० | अ. | कण्टक | १२।३० | २५ |
| ७ | ३।३० | अ. | भ्रष्ट | २७।० | ५४ | ३७ | १८।३० | शु | सुधा | १२।० | २४ |
| ८ | ४।० | अ. | कुलघ्न | २६।३० | ५३ | ३८ | १९।० | शु | अमृत | ११।३० | २३ |
| ९ | ४।३० | अ. | गरल | २६।० | ५२ | ३९ | १९।३० | शु. | पूर्णचन्द्र | ११।० | २२ |
| १० | ५।० | अ. | अग्नि | २५।३० | ५१ | ४० | २०।० | अ. | विषदग्ध | १०।३० | २१ |
| ११ | ५।३० | शु. | माया | २५।० | ५० | ४१ | २०।३० | अ. | कुलनाश | १०।० | २० |
| १२ | ६।० | अ. | यम | २४।३० | ४९ | ४२ | २१।० | शु. | मुख्य | ९।३० | १९ |
| १३ | ६।३० | शु. | अपांपति | २४।० | ४८ | ४३ | २१।३० | अ. | वंशक्षय | ९।० | १८ |
| १४ | ७।० | शु. | इन्द्र | २३।३० | ४७ | ४४ | २२।० | अ. | उत्पात | ८।३० | १७ |
| १५ | ७।३० | शु. | कला | २३।० | ४६ | ४५ | २२।३० | अ. | कालरूप | ८।० | १६ |
| १६ | ८।० | अ | सर्प | २२।३० | ४५ | ४६ | २३।० | शु. | सौम्य | ७।३० | १५ |
| १७ | ८।३० | शु. | अमृत | २२।० | ४४ | ४७ | २३।३० | शु | मृदु | ७।० | १४ |
| १८ | ९।० | शु. | चन्द्र | २१।३० | ४३ | ४८ | २४।० | शु | सुशीतल | ६।३० | १३ |
| १९ | ९।३० | शु. | मृदु | २१।० | ४२ | ४९ | २४।३० | अ. | दंष्ट्राकराल | ६।० | १२ |
| २० | १०।० | शु. | कोमल | २०।३० | ४१ | ५० | २५।० | शु | इन्दुमुख | ५।३० | ११ |
| २१ | १०।३० | शु | पद्म | २०।० | ४० | ५१ | २५।३० | शु | प्रवीण | ५।० | १० |
| २२ | ११।० | शु. | विष्णु | १९।३० | ३९ | ५२ | २६।० | अ. | कालाग्नि | ४।३० | ९ |
| २३ | ११।३० | शु. | वागीश | १९।० | ३८ | ५३ | २६।३० | अ. | दण्डायुध | ४।० | ८ |
| २४ | १२।० | अ. | दिगंबर | १८।३० | ३७ | ५४ | २७।० | शु. | निर्मल | ३।३० | ७ |
| २५ | १२।३० | शु. | देव | १८।० | ३६ | ५५ | २७।३० | शु | शुभ | ३।० | ६ |
| २६ | १३।० | शु. | आर्द्र | १७।३० | ३५ | ५६ | २८।० | अ. | अशुभ | २।३० | ५ |
| २७ | १३।३० | शु. | कलिनाश | १७।० | ३४ | ५७ | २८।३० | शु. | अतिशीत० | २।० | ४ |
| २८ | १४।० | शु. | क्षितीश | १६।३० | ३३ | ५८ | २९।० | शु. | सुधापयो० | १।३० | ३ |
| २९ | १४।३० | शु. | मलाकर | १६।० | ३२ | ५९ | २९।३० | अ. | भ्रमण | १।० | २ |
| ३० | १५।० | अ. | मन्दात्मज | १५।३० | ३१ | ६० | ३०।० | शु. | इन्दुरेखा | ०।३० | १ |

६ त्रिंशांशचक्रम् ।

| मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. | राशि. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मं. | शु. | मं. | शु. | मं. | शु. | मं. | शु. | मं. | शु. | मं. | शु. | स्वामी |
| ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | अंश |
| श. | बु. | श. | बु. | श. | बु. | श. | बु. | श. | बु. | श. | बु. | स्वामी |
| ५ | ७ | ५ | ७ | ५ | ७ | ५ | ७ | ५ | ७ | ५ | ७ | अंश |
| बृ. | बृ. | बृ. | बृ. | बृ. | बृ. | बृ. | बृ. | बृ. | बृ | बृ. | बृ. | स्वामी |
| ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | अंश |
| बु. | श. | बु. | श. | बु. | श. | बु. | श. | बु. | श. | बु. | श. | स्वामी |
| ७ | ५ | ७ | ५ | ७ | ५ | ७ | ५ | ७ | ५ | ७ | ५ | अंश |
| शु. | मं. | शु. | मं. | शु. | मं. | शु. | मं. | शु. | मं. | शु. | मं. | स्वामी |
| ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | अंश |

अथ दशवर्गजाताः संज्ञाविशेषाः ।

मूलत्रिकोणस्वगृहोच्चभागवर्गोत्तमानां दशवर्गजानाम् ॥
संयोगजातोत्तमनामपूर्वा वैशेषिकांशा इति ते वदन्ति ॥ ४४ ॥
उत्तमं तु त्रिवर्गैक्यं चातुर्वर्गन्तु गोपुरम् ।
वर्गपञ्चकसंयोगं सिंहासनमिहोच्यते ॥ ४५ ॥
वर्गद्वयं पारिजातं षण्णां पारावतांशकः ।
सप्तमं देवलोकः स्यादष्टमं च तथा भवेत् ॥ ४६ ॥
ऐरावतं तु नवकं फलं तेषां पृथक् पृथक् ॥ ३ ॥

अत्र दशवर्गवशाज्जाताः काश्चित् विशेषसंज्ञा उच्यन्ते । दशवर्गजानां = दशवर्गतः समुत्पन्नानां स्वस्वमूलत्रिकोणस्वगृहोच्चभागवर्गोत्तमानां ( पूर्वोक्तानां ) च संयोगजातोत्तमनामपूर्वाः = वर्गाणामैक्येनोत्पन्ना उत्तमनामपूर्वाः = उत्तमाद्या वैशेषिकांशास्ते विशेषयोगाः भवन्तीति विद्वांसो वदन्ति । अथ के ते विशिष्टसंज्ञा योगाः कथं चोत्पद्यन्ते तत्राह— उत्तममिति । त्रिवर्गैक्यं = त्रयाणां स्ववर्गाणामैक्ये ( दशवर्गेषु चेत् त्रयः स्ववर्गा भवन्ति तदा ) उत्तमं १ । चातुर्वर्गं तु गोपुरसंज्ञम् २ । वर्गपञ्चकसंयोगम् इह सिंहासनमुच्यते ३ । वर्गद्वयं पारिजातम् ४ । षण्णां वर्गाणामैक्ये पारावतांशकः ५ । सप्तमं = सप्तवर्गाणामैक्यं देवलोकः ६ । अष्टमं चाष्टवर्गैक्यमपि तथा = देवलोक एव भवेत् । नवमं=नववर्गैक्यं ऐरावतम् ७ । दशैक्यं = ( दशवर्गे स्वकीया एव यदि सर्वे वर्गाः स्युस्तदा ) वैशेषिकांशो भवति ८ । तथोक्तं ग्रन्थान्तरे—

"द्विवर्गैक्ये पारिजातयोगस्तज्जो धनी भवेत् । त्रिवर्गैक्य उत्तमः श्रीश्चतुर्वर्गैस्तु गोपुरः ॥
सिंहासनः पञ्चवर्गे योगस्तज्जो नृपो भवेत् । षड्वर्गैक्ये पारावतयोगोऽत्र शास्त्रविशारदः ॥
सप्ताष्टैक्ये देवलोकयोगस्तज्जः सुखी नृपः । नववर्गैक्य ऐरावतयोगोऽत्र सार्वभौमकः ॥
दिग्वर्गैक्ये वैशेषिको योगोऽस्मिन्बुद्धिमान्नरः । इति ॥

अत्र पराशरमतेन भेदो दृश्यते । तद्वचनञ्च—

"पारिजातं भवेद्द्वाभ्यामुत्तमं त्रिभिरुच्यते । चतुर्भिर्गोपुराख्यं स्यात्पञ्चभिः सिंहासनं तथा ॥
पारावतं भवेत्षड्भिर्देवलोकं च सप्तभिः । वसुभिर्ब्रह्मलोकाख्यं नवभिः शक्रवाहनम् ॥
दिग्भिः श्रीधामयोगः स्यादिति" ।

अथ कस्यचिन्मते "दिग्वर्गैक्ये वैशेषिकः" तथा कस्यचिन्मते "दिग्भिः श्रीधामयोगः" इति दृश्यते। परञ्च दिग्वर्गैक्यं तदैव भवितुमर्हति यदि सर्वेषां होरात्रिंशांशकाश्च भवेयुरन्यथा दिग्वर्गैक्यमाकाशपुष्पवदसम्भवमित्यतोऽवगम्यते यन्मते दिग्वर्गैक्यं सम्भावि तन्मते सर्वेषां होरात्रिंशांशकाश्चावश्यमेव सम्भाव्यन्त इति विवेचनीयं महात्मभिः। तेषां विशेषयोगानां फलं पृथक् पृथक् यथावसरं वक्ष्य इति शेषः ॥ ४४-४६½ ॥

अथ पारिजातादिदशवर्गसंज्ञाचक्रम्।

| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | वर्गैक्ये |
|---|---|---|---|---|---|---|---|---|---|
| पारिजात | उत्तम | गोपुर | सिंहासन | पारावत | देवलोक | ब्रह्मलोक | शक्रवाहन | श्रीधाम | योगः |

अपने २ मूलत्रिकोण, गृह, उच्चभाग, और वर्गोत्तमोंके योगसे एवं अपने २ दशवर्गके संयोगसे उत्पन्न उत्तम आदि वैशेषिकांश ( विशिष्टयोग ) होते हैं, यह विद्वानोंका मत है। उसमें दशवर्गमें तीन अपने वर्गके हों तो उत्तम, चार हों तो गोपुर, पांच हों तो सिंहासन, दो हों तो पारिजात, छै हों तो पारावत, सात और आठ हों तो देवलोक, नव हों तो ऐरावत योग होता है। इन विशिष्ट योगोंके फल अलग २ कहे जायेंगे ॥ ४४-४६½ ॥

अथषड्वर्गाः सप्तवर्गाश्च।

विलग्नहोराद्रेष्काणनवांशद्वादशांशकाः ॥ ४७ ॥
त्रिंशांशकश्च षड्वर्गः शुभकर्मसु शस्यते।
सप्तांशयुक्तः षड्वर्गः सप्तवर्गोऽभिधीयते ॥ ४८ ॥
जातकेषु च सर्वेषु ग्रहाणां बलकारणम् ॥ ½ ॥

अथात्र षड्वर्गं सप्तवर्गञ्चाह—विलग्नेति। विलग्न–होरा–द्रेष्काण–नवांश–द्वादशांशकाः–त्रिंशांशकश्चेति षड्वर्गः कथ्यते। असौ षड्वर्गः शुभकर्मसु शस्यते। तथोक्तं रामाचार्येण—

"............गेहं होराऽथदृक्नवमांशकसूर्यभागाः।
त्रिंशांशकश्च षडिमे कथितास्तु वर्गाः सौम्ये शुभं भवति चाशुभमेव पापैः" इति ॥

अयं षड्वर्गः सप्तांशेन युक्तस्तदा सप्तवर्गोऽभिधीयते = कथ्यते सुधीभिरिति। असौ सप्तवर्गः सर्वेषु जातकेषु ग्रहाणां बलकारणं भवति। यतो जातके बहुत्र सप्तवर्गत एव ग्रहाणां बलानि विचार्यन्ते ॥ ४७-४८½ ॥

लग्न, होरा, द्रेष्काण, नवांश, द्वादशांश और त्रिंशांश ये षड्वर्ग हैं। षड्वर्ग शुभकर्मोंमें शुभ कहे गये हैं। षड्वर्गमें सप्तमांशके मिलानेसे सप्तवर्ग होता है। यह सप्तवर्ग समस्त जातकोंमें ग्रहोंके बलका हेतु कहा गया है, याने सप्तवर्गसे ग्रहोंके बलका विचार होता है ॥ ४७-४८½ ॥

अथ भावानां नामानि।

कल्पोदयाद्यतनुजन्मविलग्नहोरा वागर्थभुक्तिनयनस्वकुटुम्बभानि ॥
दुश्चिक्यविक्रमसहोदरवीर्यधैर्यकर्णास्तृतीयभवनस्य भवन्ति संज्ञाः ॥ ४९ ॥
पातालवृद्धिहिबुकक्षितिमातृविद्यायानाम्बुगेहसुखबन्धुचतुष्टयानि।
धीदेवराजपितृनन्दनपञ्चकानि रोगांगशत्रुभयषष्ठरिपुक्षतानि ॥ ५० ॥
जामित्रकामगमनानि कलत्रसम्पद्द्यूनास्तसप्तमगृहाण्यि वदन्ति चार्याः।
रन्ध्रायुरष्टरणमृत्युविनाशनामानि धर्मो गुरुः शुभतपोनवभाग्यभानि ॥ ५१ ॥

व्यापारमेषूरणमध्यमानं ज्ञानं च राजास्पदकर्मसंज्ञाः ।
एकादशोपान्त्यभवायलाभा रिःफव्ययद्वादशकान्त्यभाति ॥ ५२ ॥

अथेदानीं लग्नादिद्वादशभावानां नामान्युच्यन्ते-कल्पेति । कल्पादीनि सप्त लग्नस्य नामानि । वागादीनि षट् धनभावस्य । दुश्चिक्यादीनि षट् तृतीयभवनस्य । पातालादीनि द्वादश चतुर्थभावस्य । धीमुखानि षट् पञ्चमभावस्य । रोगादीनि सप्त षष्ठभावस्य । जामित्रादीनि अष्टौ सप्तमभावस्य । रन्ध्रादीनि षडष्टमभावस्य । धर्मादीनि षट् नवमभावस्य । व्यापारमुखानि अष्टौ दशमभावस्य । एकादशादीनि पञ्चैकादशभावस्य । रिःफादीनि चत्वारि द्वादशभावस्य नामान्यार्या वदन्ति ॥ ४९-५२ ॥

तनु भावके-कल्प, उदय, आद्य, तनु, जन्म, विलग्न और होरा नाम हैं।
धन भावके-वाक्, अर्थ, भुक्ति, नयन, स्व और कुटुम्ब नाम हैं।
तृतीयके-दुश्चिक्य, विक्रम, सहोदर, वीर्य, धैर्य और कर्ण नाम हैं।
चतुर्थ भावके-पाताल, वृद्धि, हिबुक, क्षिति, मातृ, विद्या, यान, गेह, सुख, बन्धु और चतुष्टय नाम हैं।
पञ्चम भावके-धी, देव, राज, पितृ, नन्दन और पञ्चक नाम हैं।
छठें भावके-रोग, अङ्ग, शस्त्र, भय, षष्ठ, रिपु और क्षत नाम हैं।
सप्तमके-जामित्र, काम, गमन, कलत्र, सम्पत्, द्यून, अस्त और सप्तम नाम हैं।
अष्टमके-रन्ध्र, आयु, अष्ट, रण, मृत्यु और विनाश नाम हैं।
नवमके-धर्म, गुरु, शुभ, तप, नव और भाग्य नाम हैं।
दशम भावके-व्यापार, मेषूरण, ज्ञान, राज, आस्पद और कर्म नाम हैं।
ग्यारहवें भावके-एकादश, उपान्त्य, भव, आय और लाभ नाम हैं।
बारहवें भावके-रिःफ, व्यय, द्वादश और अन्त्य नाम हैं ॥ ४९-५२ ॥

## अथ भावानां केन्द्रादिसंज्ञाः ।

मेषूरणोदयकलत्ररसातलानि स्युः केन्द्रकण्टकचतुष्टयसंज्ञितानि ।
लग्नात्त्रिकोणभवनं नवपञ्चमं च स्यात्त्रित्रिकोणमुदयान्नवमं वदन्ति ॥ ५३ ॥
तनुसुखमदनाज्ञा राशयः केन्द्रसंज्ञाः पणफरभवनानि स्वायपुत्राष्टमानि ।
व्ययरिपुगुरुदुश्चिक्यानि चापोक्लिमानि प्रभवति चतुरस्रं मृत्युबन्धुद्वयं च ॥५४॥
दुश्चिक्यायारिमानान्युपचयभवनान्याहुराचार्यमुख्याः
शेषाः पीडर्क्षसंज्ञा नवधनजलधीकामरन्ध्रान्त्यहोराः ॥
एते भावास्तदीशेन्दुजसितगुरुभिः संयुता वीक्षिता वा
नान्यैर्युक्ता न दृष्टा यदि शुभफलदा जन्मतः पृच्छतो वा ॥ ५५ ॥

अथेदानीं भावानां केन्द्रादिविशिष्टसंज्ञा उच्यन्ते—मेषूरणेति । मेषूरणोदयकलत्ररसातलानि = दशम-लग्न-सप्तम-चतुर्थभवनानि, केन्द्र-कण्टक-चतुष्टयसंज्ञितानि भवन्ति । तथोक्तं सारावल्याम्—

"होरास्तदशजलानां चतुष्टयं कण्टकं केन्द्रम् । नामानि" इति ।

अत्र त्रिकोणम् । लग्नात् नवपञ्चमं च त्रिकोणभवनमिति । त्रिकोणशब्देन नवमपञ्चमौ गृह्येते । त्रित्रिकोणमिति । उदयाल्लग्नात् नवमं त्रित्रिकोणं स्यादिति वदन्ति विद्वांसः । तथोक्तं सारावल्याम्—

"धर्मसुतयोस्त्रिकोणं सुतस्थं धीत्रित्रिकोणमिति तपसः" इति ।

पुनः, केन्द्रम् । तनुसुखमदनाज्ञा राशयः = लग्न-चतुर्थ-सप्तम-दशमभावाः केन्द्रसंज्ञा भवन्ति । पणफरभवनानि । स्वायपुत्राष्टमानि = द्वितीयपञ्चमाष्टमैकादशभवनानि

पणफरसंज्ञकानि भवन्ति । व्ययरिपुगुरुदुश्चिक्यानि = द्वादश-षष्ठ-नवम-तृतीयभवनानि च आपोक्लिमानि भवन्ति । तथोक्तं सारावल्याम्—

"केन्द्रात्परं पणफरमापोक्लिमसंज्ञितं तयोः परतः" इति ।

मृत्युबन्धुद्वयं च = अष्टमचतुर्थभावद्वयं 'चतुरस्र' प्रभवति । तथोक्तं वराहेण—

"लग्नाच्चतुर्थनिधने चतुरस्रसंज्ञे" इति ।

उपचयम् । दुश्चिक्यायारिमानानि = तृतीयैकादशषष्ठदशमभवनान्युपचयभवनान्याचार्यमुख्याः = प्राक्तना मुनय आहुः । शेषाः=अवशिष्टाः, नवधनजलधीकामरन्ध्रान्त्यहोराः= नवम-द्वितीय-चतुर्थ-पञ्चम-सप्तमाष्टम-द्वादश प्रथमभावाः 'पीडर्क्षसंज्ञाः' भवन्ति । तथोक्तं स्वल्पजातके-"त्रिषडेकादशदशभान्युपचयभवनान्यतोऽन्यथाऽन्यानि" इति ।

अथ भावानां स्थितिवशाच्छुभाशुभफलदत्वमुच्यते । एते भावाः पूर्वोक्तास्तदीशेन्दुजसितगुरुभिः = स्वस्वामि-बुध-शुक्र-बृहस्पतिभिः संयुताः = सहिताः, वा वीक्षिताः=अवलोकिताः, अन्यैरितरैर्न युक्ता न दृष्टाश्च यदि भवन्ति तदा जन्मतः पृच्छतो वा = जातस्य, प्रष्टुर्वा शुभफलदा भवन्ति । तथोक्तं सारावल्याम्—

"आत्मीयनाथदृष्टः सहितस्तेनैव तत्प्रियैर्वाऽपि ।

शशिसुतजीवाभ्यामपि राशिर्बलवान्न चेच्छेषैः ॥" इति ॥ ५३-५५ ॥

( १।१०।७।४ ) भावोंकी केन्द्र, कण्टक और चतुष्टय संज्ञा हैं। लग्नसे ( ९।५ ) की त्रिकोण संज्ञा है । लग्नसे नवमको त्रित्रिकोण कहते हैं ॥ ५३ ॥

( १।४।७।१० ) भाव केन्द्र हैं। ( २।५।८।११ ) भाव पणफर हैं। ( १२।६।९।३ ) भाव आपोक्लिम संज्ञक हैं। अष्टम और चतुर्थ चतुरस्र हैं ॥ ५४ ॥

( ३।११।६।१० ) इन चार स्थानोंकी उपचय संज्ञा है। शेष ८ स्थान ( ९।२।४।५।७।८।१२।१ ) पीडर्क्ष संज्ञक हैं। ये भाव जन्मकुण्डली वा प्रश्नकुण्डलीमें अपने अपने स्वामियोंसे और बुध, शुक्र, बृहस्पतिसे युक्त हों वा देखे जाते हों तो और अन्यग्रहसे युत या दृष्ट न हों तो शुभफल देते हैं ॥ ५५ ॥

## अथ राशीनामुदयमानानि ।

**नखा जिना विंशतिरष्टयुक्ता रदाङ्गलोका वियदर्णवाख्याः ।**

**मेषादिमानं क्रमशो वदन्ति तुलादिषट्कस्य विलोमतस्ते ॥ ५६ ॥**

अथेदानीं लग्नानामुदयमानान्युच्यन्ते । तत्र मेषस्य नखां(२०)शाः । वृषस्य जिन(२४)भागाः । मिथुनस्याष्टाधिकविंशति-(२८)भागाः । कर्कस्य रदां-(३२)शाः । सिंहस्याङ्गलोकां-(३६)शाः । कन्यायाः वियदर्णवां-(४०)शा उदयमानानि सन्ति । एवमेतेषां वैपरीत्येन तुलादिषड्राशीनामुदयांशा ज्ञेयाः ।

अथात्र पठिता एते उदयभागाः सार्द्धसप्ताङ्गुलपलभादेशीयाः । तत्प्रत्ययार्थं गणितम्— पलभाऽङ्गुलादिः=७½ । ततश्चरदलानि ७५, ६०, २५ । एभ्यः—

"लङ्कोदया विघटिका गजभानि गोऽङ्कदस्राख्निपक्षदहनाः क्रमगोत्क्रमस्थाः ।

हीनान्विताश्चरदलैः क्रमगोत्क्रमस्थैर्मेषादितो घटत उत्क्रमतस्त्विमे स्युः ॥"

इत्यादिना सार्द्धसप्ताङ्गुलपलभादेशीयोदयमानानि—

मे. मी.=२७८$^{प}$—७५$^{प}$ = २०३$^{प}$ अत्र स्वल्पान्तरात् २००$^{प}$ गृहीताः । दशाप्ता अंशा २०°

वृ. कुं.=२९९$^{प}$—६०$^{प}$ = २३९$^{प}$ „ „ २४०$^{प}$ „ „ „ २४°

मि. म.=३२३$^{प}$—२५$^{प}$ = २९८$^{प}$ „ „ २८०$^{प}$ „ „ „ २८°

क. ध.=३२३$^{प}$+२५$^{प}$ = ३४८$^{प}$ „ „ ३२०$^{प}$ „ „ „ ३२°

सिं. वृ.=२९९$^{प}$ + ६०$^{प}$ = ३५९$^{प}$ अत्र स्वल्पान्तरात् ३६०$^{प}$ गृहीता दशाप्ता अंशा ३६°
क. तु.=२७८$^{प}$ + ७५$^{प}$ = ३५३$^{प}$ ,, ,, ४००$^{प}$ ,, ,, ,, ४०°

स्वदेशीयोदयमानार्थं स्वदेशीयपलभातश्च खण्डैश्चोक्तविधिना गणितं कार्यम् । इह ये राशीनामुदयभागाः पठितास्ते स्थिराः केवलं नष्टादिचिन्तायां द्रव्यपरिज्ञानाय पुरुषावयवज्ञानाय चेति ॥ ५६ ॥

मेषादि छ राशियोंके क्रमसे २०, २४, २८, ३२, ३६, ४० अंश मान हैं और तुलादि छ राशिके विलोमसे ये ही मान हैं ॥ ५६ ॥

## अथ राशीनां शुभाशुभभागाः ।

तनुः शरा रारिखराः किरीटिनो घना गुरुर्हेयनखा नरा नुकाः ।
शशाङ्कभागा यदि तुम्बुरादिके मुहूर्तजन्मादिषु मृत्युसूचकाः ॥ ५७ ॥
पुत्रो वटुर्दिव्यजनाधिको धनी विराटयो गोत्रवयो धिको धुनाः ।
मेषादिके पुष्करभागसंज्ञका मुहूर्तजन्मादिषु शोभनप्रदाः ॥ ५८ ॥

इदानीं राशीनामशुभभागाञ्छुभभागांश्चाह । मुहूर्तजन्मादिषु = मुहूर्तेषु जन्मसु च तुम्बुरादिके = मेषादिराशौ यदि तन्वादिकाः शशाङ्कभागाश्चन्द्रांशा भवेयुस्तदा ते मृत्युसूचका भवन्ति । यथा मेषे तनुरष्टौ ( तनुशब्देन मूर्तिर्गृह्यते, मूर्तयोऽष्टौ–'क्षिति–जल–पवन–हुताशन–यजमाना–काश–सोम–सूर्याख्याः' शिवस्येति । ) अष्टमोऽशश्चान्द्रो मेषस्याशुभकरो भवति जन्मवतामिति । वृषे शराः = पञ्चविंशः ( अत्र "कटपयवर्गभवै" रित्याद्युक्तप्रकारेणाङ्कसङ्केतो ज्ञेयः ) मिथुने रारिः=द्वाविंशः । कर्के खराः = द्वाविंशः । सिंहे किरी=एकविंशः । कन्यायां टिनः = प्रथमः । तुलायां घनाः = चतुर्थः । वृश्चिके गुरुः = त्रयोविंशः । धनुषि हेयः = अष्टादशः । मकरे नखाः=विंशः । कुम्भे नराः=विंशः । मीने नुकाः=दशमः अंशोऽशुभः । अत्रेदमवधेयं-यस्य जन्मकाले राशिपठितांशप्रमितश्चन्द्रो भवेत्तदा तावत्संख्यामिते वर्षे तस्य जातकस्य मृत्युरादेश्य इति । तथोक्तं सर्वार्थचिन्तामणौ—

"कुम्भे विंशतिभागे स्यान्मृत्युं दद्यान्निशाकरः । एकविंशतिभागैस्तु सिंहे तत्वैस्तु ग्लौः वृषे ॥
अष्टमे मेषचन्द्रस्तु त्रयोविंशतिकोऽलिगः । द्वाविंशतिः कुलीरे तु तुलायां वेदभागकः ॥
विंशतिर्मकरे चन्द्रः कन्यायां प्रथमांशकः । धन्विन्यष्टादशो भागो मीने दशमभागयुक् ॥
द्वाविंशतिर्नृयुग्मे तु चन्द्रोऽप्येवं मृतिप्रदः । ये ये निशाकरांशास्तु मृत्युभागा विवक्षिताः ॥
तावद्भिर्वत्सरैर्जातो मृत्युमेति न संशयः" ॥ इति ॥

अथ शुभांशाः । मेषादिके = मेषप्रभृतिराशौ, पुत्रादयः पुष्करभागसंज्ञाः = पुष्कराख्यांशाः, मुहूर्तजन्मादिषु शोभनप्रदा भवन्ति । तद्यथा—मेषे पुत्रः = एकविंशतितमोऽशः पुष्कराख्यः शुभो भवति । एवं–वृषे वटुः = चतुर्दशः । मिथुने दिव्यं = अष्टादशः । कर्के जनः= अष्टमः । सिंहे अधिकः = एकोनविंशः । कन्यायां धनी = नवमः । तुलायां विरा = चतुर्विंशः । वृश्चिके टयो = एकादशः । धनुषि गोत्रः = त्रयोविंशः । मकरे वयः = चतुर्दशः । कुम्भे धिकः = एकोनविंशः । मीने धुनाः = नवमोऽशः पुष्करसंज्ञो भवति । जन्मकाले पठितराशिभागतुल्यश्चन्द्रो जातस्य शुभकरो भवतीति ॥ ५७–५८ ॥

| राशयः | मे. | वृ. | मि. | क. | सिं | क. | तु. | वृ. | ध. | म. | कु. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शुभांशाः | २१ | १४ | १८ | ८ | १९ | ९ | २४ | ११ | २३ | १४ | १९ | ९ |
| अशुभांशाः | ८ | २५ | २२ | २२ | २१ | १ | ४ | २३ | १८ | २० | २० | १० |

मेषादि राशिमें क्रमसे ८।२५।२२।२२।२१।१।१४।२३।१८।२०।२० और १० वां चन्द्रमा के अंश मूहूर्त्त और जन्मकालमें मरणसूचक हैं। एवं २१।१४।१८।८।१९।९।२४।११।२३।१४।१९ और ९ वां अंश पुष्कर नामक होते हैं। ये मुहूर्त्त और जन्मकाल में शुभसूचक हैं। जिसके जन्मसमयमें चन्द्रमा मेषके ८ वें अंश पर हो उसका ८ वें वर्षमें मरण कहना चाहिये। इसी तरह हर एक राशिमें जाने। ( सु० शा० कारः ) ॥ ५७–५८ ॥

## अथ मेषादिराशीनां वासदेशाः ।

क्रमात्पाटलकर्नाटचरचोलवसुन्धराः ।
पाण्ड्यकेरलकोल्लासमलयावनिसैन्धवाः ॥ ५९ ॥
उदक्पाञ्चालयवनकोशलक्षितिसंज्ञकाः ।
मेषादिसर्वराशीनां वासदेशाः प्रकीर्तिताः ॥ ६० ॥

इदानीं राशीनां वासदेशा उच्यन्ते । मेषादिसर्वराशीनां = द्वादशानां क्रमात् पाटलादयो द्वादश वासदेशा प्रकीर्त्तिताः सद्भिरिति । मेषस्य पाटलाः । वृषस्य कर्नाटः । मिथुनस्य चरः । कर्कस्य चोलः । सिंहस्य पाण्ड्यः । कन्यायाः केरलः । तुलायाः कोल्लासः । वृश्चिकस्य मलयः । धनुषः सैन्धवः । मकरस्योदक्पाञ्चालः । कुम्भस्य यवनः । मीनस्य कोशलः । प्रयोजनम्–तद्राश्युदये जनिमतां तदुक्तदेशः श्रेयस्करो भवतीति ॥ ५९–६० ॥

पाटल, कर्नाट, चर, चोल, पांड्य, केरल, कोल्लास, मलय, सैन्धव, पांचाल, यवन, और कोशल ये क्रमसे मेषादि राशियों के देश हैं ॥ ५९–६० ॥

## अथ राशीनां प्लवत्वनिरूपणम् ।

स्वाम्याशाख्यं यत्तदापप्लवत्वं भानुक्रान्तादम्बुसंज्ञोऽभिजित्स्यात् ।
होरातन्त्रे पारिजाताभिधाने संज्ञाध्यायः कीर्तितो राशिशीलः ॥ ६१ ॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते
राशिशीलाध्यायः प्रथमः ॥ १ ॥

---

इदानीं ग्रहाणां प्लवत्वकथनपूर्वकमध्यायमुपसंहरति । स्वाम्याशाख्यं यत् = स्वामिनोऽधिपतेराशाख्यं यत् = या दिगिति, तद्राशेरापप्लवत्वं = निम्नता भवति। यथा मेषराशेरधिपो भौमस्तस्य दक्षिणा दिक्तस्यां मेषः प्लवाख्य इति । एवं सर्वत्र । अथाभिजित् । भानुक्रान्तादम्बुसंज्ञः = सूर्याक्रान्तराशेश्चतुर्थो राशिरभिजित्स्यादभिजित्संज्ञको भवति । यथा मेषे रविश्चेत्तदा कर्कोऽभिजिदिति ।

अथाध्यायोपसंहारः । होरातंत्रे = जातकशास्त्रे, पारिजाताभिधाने = 'पारिजात' इति नामके ग्रन्थे राशिशीलः = राशीनां शीलविशिष्टः संज्ञाध्यायो मया ग्रन्थकर्त्रा कीर्तितो वर्णित इति ॥ ६१ ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता । प्रथमे राशिशीलेऽस्मिन्नध्याये पूर्णतां गता ॥ १ ॥

सभी राशि अपने २ स्वामी की दिशामें प्लवित ( नीचोन्मुख ) होती हैं और सूर्य जिस राशिमें हो उससे चौथी राशि अभिजित् संज्ञक है । होराशास्त्रके पारिजात नामक ग्रन्थमें राशिशील नामक पहला संज्ञाध्याय समाप्त हुआ। (सु० शा० कारः)॥ ६१ ॥

इति श्रीवैद्यनाथविरचिते जातकपारिजाते राशिशीलाख्ये प्रथमेऽध्याये
'विमला' हिन्दी टीका समाप्ता ॥ १ ॥

# अथ ग्रहनामस्वरूपगुणभेदाध्यायः ॥ २ ॥

## तत्रादौ सूर्यादीनां कालात्मत्वादिनिरूपणम् ॥

कालस्यात्मा भास्करश्चित्तमिन्दुः सत्त्वं भौमः स्याद्वचश्चन्द्रसूनुः ।
देवाचार्यः सौख्यविज्ञानसारः कामः शुक्रो दुःखमेवार्कसूनुः ॥ १ ॥

अथेदानीं कालाङ्गे सूर्यादिग्रहाणामधिकारनिरूपणं क्रियते—कालस्येति । भास्करः=सूर्यः, कालस्य = कालपुरुषस्यात्मा भवति । इन्दुश्चन्द्रश्चित्तमन्तःकरणम् । भौमः = मङ्गलः सत्त्वं = बलम् । चन्द्रसूनुः = बुधो वचः = वचनम् । देवाचार्यः = गुरुः, सौख्यविज्ञानसारः= सुखज्ञानपरः । शुक्रः कामः = मदनम् । अर्कसूनुः = शनिर्दुःखं भवति । प्रयोजनञ्च—जन्मकाले तत्तद्ग्रहे बलिनि पुरुषस्य तत्तदधिकृदङ्गभावो बलवान् भवति, निर्बले च निर्बल इति । तथोक्तं स्वल्पजातके—

"आत्मादयो गगनगैर्बलिभिर्बलवत्तराः । दुर्बलैर्दुर्बला ज्ञेया विपरीतं शनेः स्मृतम् ॥" इति ।

काल ( समय ) रूपी पुरुषका अङ्गविभाग इस प्रकार है—सूर्य आत्मा, चन्द्रमा चित्त ( मन ), मङ्गल पराक्रम, बुध वचन, बृहस्पति सुख तथा विज्ञान का सार, शुक्र काम और शनि दुःख है । जन्मकालमें बली ग्रहका अङ्ग पुष्ट, निर्बलका निर्बल जाने ॥ १ ॥

## अथ रव्यादीनां राजत्वादिनिरूपणम् ।

दिनेशचन्द्रौ राजानौ सचिवौ जीवभार्गवौ ।
कुमारो वित् कुजो नेता प्रेष्यस्तपननन्दनः ॥ २ ॥

स्पष्टार्थः । प्रयोजनञ्च—पुरुषस्य जन्मकाले यो ग्रहो बलीयानसौ निजानुरूपं जातकं करोति । तथोक्तं सारावल्याम्—

"सबला नराणां कुर्वन्ति जन्मसमये निजमेव सत्त्वम् ।" इति ॥ २ ॥

सूर्य और चन्द्रमा राजा, बृहस्पति और शुक्र मन्त्री, बुध राजकुमार, मङ्गल नेता और शनि दूत हैं ॥ २ ॥

## अथ सूर्यादीनां नामान्तराणि ।

हेलिः सूर्यस्तपनदिनकृद्भानुपूषारुणार्काः,
सोमः शीतद्युतिरुडुपतिग्लौर्मृगाङ्केन्दुचन्द्राः ॥
आरो वक्रक्षितिजरुधिराङ्गारकक्रूरनेत्राः,
सौम्यस्तारातनयबुधविद्बोधनाश्चेन्दुपुत्रः ॥ ३ ॥
मन्त्री वाचस्पतिगुरुसुराचार्यदेवेज्यजीवाः,
शुक्रः काव्यः सितभृगुसुताच्छास्फुजिद्दानवेज्याः ।
छायासूनुस्तरणितनयः कोणशन्यार्किमन्दाः,
राहुः सर्पासुरफणितमःसैंहिकेयागवश्च ॥ ४ ॥

ध्वजः शिखी केतुरिति प्रसिद्धा वदन्ति तज्ज्ञा गुलिकश्च मान्दिः ॥ ४½ ॥

इदानीं ग्रहाणां नामान्तराण्युच्यन्ते । हेल्याद्यष्टौ नामानि सूर्यस्य । सोमादीनि सप्त नामानि चन्द्रस्य । आरादीनि षण्नामानि मङ्गलस्य । सौम्यादीनि षण्नामानि बुधस्य । मन्त्र्यादीनि षट् गुरोर्नामानि । शुक्रप्रभृति सप्त नामानि शुक्रस्य । छायासूनुमुखानि षट् शनेर्नामानि । राह्वादीनि सप्त राहोर्नामानि । ध्वजादीनि त्रीणि केतोर्नामानि । गुलिको मान्दिश्चेति द्वयं गुलिकस्य नाम तज्ज्ञाः = ज्योतिःशास्त्रविदो वदन्तीति ॥ ३–४½ ॥

सूर्यके-हेलि, सूर्य, तपन, दिनकृत् , भानु, पूषा, अरुण और अर्क नाम हैं । चन्द्रमाके-सोम, शीतद्युति, उडुपति, ग्लौ, मृगाङ्क, इन्दु और चन्द्र नाम हैं । मंगलके-आर, वक्र,

क्षितिज, रुधिर, अङ्गारक और क्रूरनेत्र नाम हैं। बुधके-सौम्य, तारातनय, बुध, विद्, बोधन और इन्दुपुत्र नाम हैं। बृहस्पतिके-मंत्री, वाचस्पति, गुरु, सुराचार्य, देवेज्य और जीव नाम हैं। शुक्रके-काव्य, सित, भृगुसुत, आच्छ, आस्फुजित् और दानवेज्य नाम हैं। शनिके-छायासूनु, तरणितनय, कोण, शनि, आर्कि और मन्द नाम हैं। राहुके-सर्प, असुर, फणि, तम, सैंहिकेय और अगु नाम हैं। केतुके-ध्वज, शिखी, केतु नाम हैं। गुलिक और मान्दि ये दो गुलिक ( शनिके अंश ) के नाम हैं। ये सभी नाम प्रसिद्ध हैं, ऐसा विद्वानोंने कहा है ॥ ३-४३॥

अथ रव्यादीनामुपग्रहाः।

उपग्रहा भानुमुखग्रहांशाः कालादयः कष्टफलप्रदाः स्युः ॥ ५ ॥
क्रमशः कालपरिधिधूमार्द्धप्रहराह्वयाः।
यमकण्टककोदण्डमान्दिपातोपकेतवः ॥ ६ ॥

इदानीमुपग्रहनामान्युच्यन्ते। के च ते उपग्रहा इति ? भानुमुखग्रहांशाः कालादयः। अत्रेदमवधेयं- प्रतिदिनं प्रतिरात्रं च सर्वेषां ग्रहाणामंशा भवन्ति। ते कालादयो नवोपग्रहा उच्यन्ते। ते च कष्टफलप्रदा भवन्ति। तेषामुपग्रहाणां नामानि-रवेः कालः। चन्द्रस्य परिधिः ( परिवेषः )। भौमस्य धूमः। बुधस्यार्द्धप्रहरा। गुरोर्यमघण्टकः। शुक्रस्य कोदण्डः। शनेर्मान्दिः ( गुलिकः )। राहोः पातः। केतोरुपकेतुरिति। एतेषामुपग्रहाणां ज्ञानार्थं बृहत्पाराशरहोरायाः पूर्वार्द्धे द्वितीयाध्यायो द्रष्टव्यः ॥ ५-६ ॥

अथ दिने कालादिज्ञानचक्रम्।

| दिन | १ खण्ड | २ खं. | ३ खं. | ४ खं. | ५ खं. | ६ खं. | ७ खं. | ८ खं. |
|---|---|---|---|---|---|---|---|---|
| रवि | काल | परिधि | धूम | अर्धयाम | यमघण्ट | कोदण्ड | गुलिक | निरीश |
| सोम | प. | धू. | अ. या. | य. घं. | कोदं. | गु. | का. | ,, |
| मंगल | धू. | अ. या. | य. घं. | कोदं. | गु. | का. | प. | ,, |
| बुध | अ. या | य. घं. | कोदं. | गु. | का. | प. | धू. | ,, |
| बृह. | य. घं. | कोदं. | गु. | का. | प. | धू. | अ. या. | ,, |
| शुक्र | कोदं. | गु. | का. | प. | धू. | अ. या. | य. घं. | ,, |
| शनि | गु. | का. | प. | धू. | अ. या. | य. घं. | कोदं. | ,, |

दिन-रात्रिचक्रद्वयज्ञानप्रकारः ( रात्रिचक्रं ३२ पृष्ठे द्रष्टव्यम् )—

दिवसानष्टधा कृत्वा वारेशाद्गणयेत्क्रमात्। अष्टमांशो निरीशः स्यात् शन्यंशो गुलिकः स्मृतः॥
रात्रिरप्यष्टधा भक्ता वारेशात्पञ्चमादितः। गणयेदष्टमः खण्डो निष्पतिः परिकीर्तितः॥
शन्यंशे गुलिकः प्रोक्तो गुर्वंशे यमघण्टकः। भौमांशे मृत्युरादिष्टो रव्यंशे कालसंज्ञकः॥
सौम्यांशेऽर्द्धप्रहरकः स्पष्टकर्मप्रदेशकः। इति।

सूर्य आदि ग्रहोंके अंश कालादि कष्ट फल देनेवाले उपग्रह हैं। काल, परिधि, धूम, अर्धप्रहर, यमघण्ट, कोदण्ड, मान्दि, पात, उपकेतु ये क्रमसे सूर्यादि उपग्रहोंके नाम हैं॥५-६॥

### रात्रौ कालादिज्ञानचक्रम्

| रात्रि | १ खं. | २ खं. | ३ खं. | ४ खं. | ५ खं. | ६ खं. | ७ खं. | ८ खं. |
|---|---|---|---|---|---|---|---|---|
| र. | य. घं. | कोदं. | गु. | का. | प. | धू. | अ. या. | निरीश |
| चं. | कोदं. | गु. | का. | प. | धू. | अ. या. | य. घं. | ,, |
| मं. | गु. | का. | प. | धू. | अ. या. | य. घं. | कोदं. | ,, |
| बु. | का. | प. | धू. | अ. या. | य. घं. | कोदं. | गु. | ,, |
| बृ. | प. | धू. | अ. या. | य. घं. | कोदं. | गु. | का. | ,, |
| शु. | धू. | अ. या. | य. घं. | कोद. | गु. | का. | प. | ,, |
| श. | अ. या. | य. घं. | कोदं. | गु. | का. | प. | धू. | ,, |

### अथ रव्यादीनां स्वरूपम् ।

भानुः श्यामललोहितद्युतितनुश्चन्द्रः सिताङ्गो युवा,
दूर्वाश्यामलकान्तिरिन्दुतनयः, संरक्तगौरः कुजः ॥
मन्त्री गौरकलेवरः, सिततनुः शुक्रोऽसिताङ्ग शनिः,
चानीलाकृतिदेहवानहिपतिः, केतुर्विचित्रद्युतिः ॥ ७ ॥

अथेदानीं सूर्यादीनां शरीरवर्णा उच्यन्ते । भानुः=सूर्यः श्यामललोहितद्युतितनुः = श्यामरक्तमिश्रितकान्तिशरीरः = जपाकुसुमवर्णः । चन्द्रः सिताङ्गः = श्वेतवर्णो यथा दुग्धम् , युवा = यौवनावस्थश्च । इन्दुतनयः = बुधः, दुर्वाश्यामलकान्तिः = दूर्वासदृशश्यामवर्णः । कुजः मङ्गलः संरक्तगौरः=रक्तगौरमिश्रवर्णो यथा प्रवालः । मन्त्री=बृहस्पतिः, गौरकलेवरः= गौरशरीरः । शुक्रः सिततनुः = श्वेतशरीरः । शनिरसिताङ्गः = कृष्णवर्णः । अहिपतिः = राहुः, आनीलाकृतिदेहवान् = अतिनीलवर्णः । केतुर्विचित्रद्युतिः = अनेकवर्णमिश्रितशरीर इति । प्रयोजनञ्च- जन्मनि जातकस्य तथा प्रश्ने प्रष्टुरभीष्टवस्तुनश्च तत्काले बलीयान् ग्रह आत्मवर्णमिव वर्णं करोति ॥ ७ ॥

सूर्य—श्याम और लाल मिश्रित वर्ण है । चन्द्रमा—सफेद रंगका युवा है । बुध—दुर्वाके सदृश हरितवर्ण है । लाल और सफेद मिला हुआ वर्ण मंगलका है । बृहस्पति गौर शरीरवाला है । शुक्रका सफेद शरीर है । शनिका कृष्ण शरीर है । नीले रङ्गकी देहवाला राहु और विचित्रवर्ण केतु है ॥ ७ ॥

### अथ ग्रहाणां शुभाशुभत्वादिनिरूपणम् ।

प्रकाशकौ शीतकरप्रभाकरौ, ताराग्रहाः पञ्च धरासुतादयः ॥
तमः स्वरूपौ शिखिसिंहिकासुतौ, शुभाः शशिज्ञामरवन्द्यभार्गवाः ॥ ८ ॥
क्षीणेन्दुमन्दरविराहुशिखिक्षमाजाः पापास्तु पापयुतचन्द्रसुतश्च पापः ॥
तेषामतीव शुभदौ गुरुदानवेज्यौ, क्रूरौ दिवाकरसुतक्षितिजौ भवेताम् ॥ ९ ॥
शुक्रादिरात्रिदशकेऽह्नि मध्यवीर्यशाली, द्वितीयदशकेऽतिशुभप्रदोऽसौ ।
चन्द्रस्तृतीयदशके बलवर्जितस्तु सौम्येक्षणादिसहितो यदि शोभनः स्यात ॥ १० ॥

इदानीं ग्रहाणां शुभाशुभादि निरूप्यते-प्रकाशकाविति। शीतकर-प्रभाकरौ = चन्द्र-सूर्यौ, प्रकाशकौ ( सकलतारकापेक्षयाऽधिकप्रभाकरावित्यर्थः ) धरासुतादयः पञ्च = मङ्गल-बुध-गुरु-शुक्र-शनयस्ताराग्रहा न स्वतस्तेजस्का इति। तथोक्तं तत्त्वविवेके-

"तेजसां गोलकः सूर्यो ग्रहर्क्षाण्यम्बुगोलकाः।
प्रभावन्तो हि दृश्यन्ते सूर्यरश्मिप्रदीपिताः॥" इति।

शिखिसिंहिकासुतौ = केतुराहू, तमःस्वरूपौ = छायास्वरूपावन्धकारमयावित्यर्थः। शशिज्ञामरवन्द्यभार्गवाः = (१) चन्द्र-(२) बुध-गुरु-शुक्राः, शुभाः = शुभग्रहाः। क्षीणेन्दुमन्दरविराहुशिखिक्ष्माजाः = कृष्णपक्षीयचन्द्र-शनि-रवि-राहु-केतु-मङ्गलाः, पापाः = पापाग्रहाः। पापयुतचन्द्रसुतश्च = पापग्रहेण केनचिद्युतो बुधोऽपि पापी भवति। तथोक्तं वराहेण-"क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः।"

अथोक्तेषु शुभेष्वशुभेषु चात्यन्तशुभाशुभत्वनिरूपणम्। तेषामुक्तग्रहाणां गुरुदानवेज्यौ= बृहस्पतिशुक्रावतीव शुभदौ स्तः। दिवाकरसुतक्षितिजौ = शनिमङ्गलौ चातीव क्रूरावशुभौ भवेतामिति। अत्र कालपरत्वेन चन्द्रस्य शुभाशुभत्वमुच्यते। शुक्लादिरात्रिदशकेऽहनि = शुक्लपक्षप्रतिपदादितो दशमीं यावच्चन्द्रो मध्यवीर्यशाली = मध्यबली भवति। द्वितीयदशके= शुक्लैकादशीमारभ्य कृष्णपक्षपञ्चमीं यावदसौ चन्द्रोऽतिशुभप्रदो बलीयान् भवति। तृतीयदशके = कृष्णपक्षपञ्चमीमारभ्यामावास्यां यावच्चन्द्रो बलवर्जितो निर्बलोऽशुभ इति। यदि सौम्येक्षणादिसहितः = अशुभोऽपि चन्द्रः शुभग्रहैर्युक्तो दृष्टश्च चेद्भवेत्तदा, शोभनः=शुभदो भवतीति ॥ ८-१० ॥

चन्द्रमा और सूर्य प्रकाश ( उजेला ) करनेवाले हैं। मंगलादि पांच ( मं०बु०बृ०शु० श० ) तारा ग्रह हैं। केतु और राहु तम-( अन्धकार ) स्वरूप हैं। चन्द्रमा, बुध, बृहस्पति और शुक्र शुभग्रह हैं। क्षीणचन्द्रमा शनि, सूर्य, राहु, केतु और मंगल पापग्रह हैं। पापग्रहसे युक्त बुध भी पापग्रह है। इनमें बृहस्पति और शुक्र विशेष शुभ हैं। शनि और मंगल क्रूर हैं।
शुक्लपक्ष की प्रतिपदासे दश दिन चन्द्रमा मध्यबली रहते हैं। फिर दश दिन पूर्ण बली, तीसरे दशकमें बलहीन रहते हैं। परन्तु यदि ५ . शुभग्रहोंसे दृष्टियुत हों तो शुभ होते हैं ॥ १० ॥

### अथ रव्यादीनामुदयप्रकारः।

रव्यारराहुमन्दाश्च पृष्ठेनोद्यन्ति सर्वदा।
शिरसा शुक्रचन्द्रज्ञा जीवस्तूभयतो व्रजेत् ॥ ११ ॥

इदानीं ग्रहाणामुदयविवरणं क्रियते। रव्याररराहुमन्दाश्च = सूर्यमङ्गलराहुशनयः, सर्वदा पृष्ठेनोद्यन्ति। ते पूर्वाभिमुखास्तिष्ठन्तीति भावः। शुक्रचन्द्रज्ञाः शिरसा। एतेषां शिर एव प्रथममुदयक्षितिजे आयाति। जीवः=बृहस्पतिस्तूभयतः = पृष्ठेन शिरसा चोदेति ॥ ११ ॥

सूर्य, मङ्गल, राहु और शनि सदा पृष्ठ से उदित होते हैं। शुक्र, चन्द्रमा और बुध शिरसे उदित होते हैं। बृहस्पति पृष्ठ और शिर दोनों प्रकार से उदित होते हैं ॥ ११ ॥

### अथ रव्यादीनामाकारविशेषाः।

दिवाकरज्ञौ विहगस्वरूपौ सरीसृपाकारयुतः शशाङ्कः।
पुरन्दराचार्यसितौ द्विपादौ चतुष्पदौ भानुसुतक्षमाजौ ॥ १२ ॥

इदानीं ग्रहाणामाकारविशेषा उच्यन्ते। दिवाकरज्ञौ = सूर्यबुधौ, विहगस्वरूपौ = पक्षिरूपिणौ। शशाङ्कश्चन्द्रः सरीसृपाकारयुतः = कीटाकृतिसहितः। पुरन्दराचार्यसितौ = गुरु-

(१) चन्द्रः शुक्लपक्षीयः। (२) बुधः पापवियुक्तः।

शुक्रौ, द्विपादौ = नररूपौ । भानुसुतक्ष्माजौ = शनिमङ्गलौ, चतुष्पदौ = पशुसदृशौ वर्त्तेते इति ॥ १२ ॥

सूर्य और बुध पक्षी के सदृश रूपवाले हैं। चन्द्रमा सरीसृप (कीट) की आकृति से युत हैं। बृहस्पति और शुक्र द्विपद हैं। शनि और मङ्गल चतुष्पद हैं ॥ १२ ॥

अथ रव्यादीनां सञ्चारदेशाः ।

जलाशयौ चन्द्रसुरारिवन्द्यौ बुधालयग्रामचरौ गुरुज्ञौ ।
कुजाहिमन्दध्वजवासरेशा भवन्ति शैलाटविसञ्चरन्तः ॥ १३ ॥

इदानीं ग्रहाणां गोचरदेशा उच्यन्ते । चन्द्रसुरारिवन्द्यौ=चन्द्रशुक्रौ, जलाशयौ=जलचरौ । गुरुज्ञौ = बृहस्पतिबुधौ, बुधालयग्रामचरौ = गुरुर्बुधानां=विदुषामालयाः = भवनानि तेषु चरति, बुधो ग्रामः = सामान्यलोकानामधिवासस्तत्र चरतीति । द्वावपि ग्राम्यौ । कुजाहिमन्दध्वजवासरेशाः=मङ्गल-राहु-शनि-केतु-सूर्याः, शैलाटविसञ्चरन्तः = शैलाः पर्वताः अटव्यो वनानि तेषु सञ्चरन्तो विहरणशीला भवन्ति । प्रयोजनञ्च-प्रसवे प्रश्ने च बलीयान् ग्रह आत्मसञ्चारदेशं कुरुते ॥ १३ ॥

चन्द्रमा और शुक्र जलचर हैं। बृहस्पति और बुध पण्डितोंके गृहमें और ग्रामचर हैं। मंगल, राहु, शनि, केतु और सूर्य पर्वतों और वनोंमें रहनेवाले हैं ॥ १३ ॥

अथ रव्यादीनां बाल्यादिवयोनिरूपणम् ।

बालो धराजः शशिजः कुमारस्त्रिंशद्गुरुः षोडशवत्सरः सितः ।
पञ्चाशदर्को विधुरब्दसप्ततिः शताब्दसङ्ख्याः शनिराहुकेतवः ॥ १४ ॥

स्पष्टम् । प्रयोजनम्-हृतनष्टादौ चौरादेर्वयोज्ञानम् ॥ १४ ॥

मंगल बाल है। बुध कुमार है। ३० वर्षका गुरु है। १६ वर्षका शुक्र है। ५० वर्षका सूर्य है। ७० वर्षका चन्द्रमा है। १०० वर्षके शनि, राहु और केतु हैं ॥ १४ ॥

अथ ग्रहाणां शाखाधिपत्यनिरूपणं धातुमूलादिसंज्ञाश्च ।

शाखाधिपा जीवसितारबोधना धातुस्वरूपद्युचरौ कुजारुणौ ।
मूलप्रधानौ तुहिनाकरार्कजौ जीवौ सितार्यौ तु विमिश्र इन्दुजः ॥ १५ ॥

इदानीं शाखाधिपनिरूपणपूर्वकं ग्रहाणां धात्वादिसंज्ञा उच्यन्ते । जीवसितारबोधनाः = बृहस्पति-शुक्र-मङ्गल-बुधाः, शाखाधिपा भवन्ति । तत्र बृहस्पतिः ऋग्वेदाधिपः, शुक्रो यजुर्वेदपतिः, मङ्गलः सामवेदाधिपः, बुधोऽथर्ववेदपतिर्भवति । तथोक्तं रामाचार्येण-

"शाखेशाः स्युर्जीवशुक्रारसौम्याः ।" इति ।

प्रयोजनम्—

"शाखेशवारतनुवीर्यमतीव शस्तम् ।" इति ।

अथ धात्वादिसंज्ञा । कुजारुणौ = मङ्गलसूर्यौ, धातुस्वरूपद्युचरौ = तौ धातुसंज्ञकौ ग्रहाविति । मूलप्रधानौ तुहिनाकरार्कजौ = चन्द्रशनी मूलमुख्यौ = तौ मूलसंज्ञाविति । सितार्यौ = शुक्रबृहस्पती, जीवौ = जीवकारकौ ग्रहाविति । इन्दुजः = बुधः, विमिश्रः=धातुमूलजीवानां सङ्कलनरूपोऽर्थाद्बुधस्य भागत्रये त्रयाणां यथाक्रमं निवेश इति । अत्र पराशरकृता संज्ञा यथा—

"राहारपङ्गुचन्द्राश्च विज्ञेया धातुखेचराः ।
मूलग्रहौ सूर्यशुक्रावपरा जीवसंज्ञकाः ॥" इति ।

तत्र धातुः (१)स्वर्णादित्याद्युक्तश्लोकाज्ज्ञेयं अत्रैकस्य विवरणम् ॥ १५ ॥

(१) प्रथमाध्यायस्य १९ श्लोकः ।

बृहस्पति, शुक्र, मङ्गल और बुध शाखाओंके स्वामी हैं। जैसे ऋग्वेदका गुरु, यजुर्वेदका शुक्र, सामवेदका मङ्गल और अथर्ववेदका बुध है। मङ्गल और सूर्य धातुस्वरूप ग्रह हैं। मूल प्रधान चन्द्र और शनि हैं। शुक्र और बृहस्पति जीव हैं। बुध मिश्रसंज्ञक है ॥ १९ ॥

अथ ग्रहाणामवस्थेयत्ता।

दीप्तः प्रमुदितः स्वस्थः शान्तः शक्तः प्रपीडितः।
दीनः खलस्तु विकलो भीतोऽवस्था दश क्रमात् ॥ १६ ॥

स्पष्टम् ॥ १६ ॥

१ दीप्त, २ मुदित, ३ स्वस्थ, ४ शान्त, ५ शक्त, ६ प्रपीडित, ७ दीन, ८ खल, ९ विकल और १० भीत ये क्रमसे ग्रहों की दश अवस्थायें होती हैं ॥ १५ ॥

अथ स्थानविशेषादवस्थाविशेषाः।

स्वोच्चत्रिकोणोपगतः प्रदीप्तः स्वस्थः स्वगेहे मुदितः सुहृद्भे।
शान्तस्तु सौम्यग्रहवर्गयातः शक्तोऽतिशुद्धः स्फुटरश्मिजालैः ॥ १७ ॥
ग्रहाभिभूतस्त्वतिपीडितः स्यादरातिराश्यंशगतोऽतिदीनः।
खलस्तु पापग्रहवर्गयोगान्नीचेऽतिभीतो विकलोऽस्तयातः ॥ १८ ॥

ग्रहाभिभूत इति। ग्रहैः = स्वेतरैरभिभूतो युद्धे पराजितोऽतिपीडितो भवति। अथ किं नाम ग्रहाणां युद्धं कथञ्च तत्र पराजितो भवतीत्युच्यते। भौमादिग्रहाणां परस्परयुक्तानां ग्रहयुद्धमिति नाम। उक्तञ्च—

"दिवसकरेणस्तमयः समागमः शीतरश्मिसहितानाम्।
कुसुतादीनां युद्धं निगद्यतेऽन्योन्ययुक्तानाम् ॥"

तत्र ग्रहयुद्धे पराजितस्य लक्षणम्—

"दक्षिणदिक्स्थः पुरुषो वेपथुरप्राप्य सन्निवृत्तोऽणुः।
अधिरूढो विकृतो निष्प्रभो विवर्णश्च यः स जितः ॥" इति।

अन्यत्सर्वं स्पष्टमेवेति ॥ १७–१८ ॥

अपनी उच्चराशिमें, त्रिकोणमें स्थित ग्रह प्रदीप्त होता है। अपने गृहमें स्थित ग्रह स्वस्थ, मित्रके गृहमें रहनेवाला मुदित, शुभग्रहके वर्गमें स्थित ग्रह शान्त, स्फुटरश्मिजालों से अत्यन्त शुद्ध ग्रह शक्त, ग्रहोंसे पराजित ( हारा हुआ ) अतिपीडित, शत्रुकी राशि और नवांशमें प्राप्त ग्रह अतिदीन, पापग्रह के वर्गयोगसे खल, नीचमें अतिभीत और अस्त ग्रह विकल होता है ॥ १७–१८ ॥

अथ ग्रहाणां वर्णविशेषाः।

वर्णास्ताम्रसितारक्तहरितापीतकर्बुराः ॥
कृष्णकान्तिरिनादीनां नष्टादौ च प्रकीर्तिताः ॥ १९ ॥

स्पष्टम्। ग्रहाणां वर्णास्तु पूर्वमस्यैवाध्यायस्य ७ मे श्लोके वर्णिताः, पुनर्वर्णनं पिष्टपेषणमेवेति ॥ १९ ॥

सूर्यादि ग्रहोंके ताम्र, सफेद, खूब लाल, हरा, पीला, चित्र और कृष्ण वर्ण हैं। ये नष्ट द्रव्यादिके ज्ञान होनेके लिये कहे गये हैं ॥ १९ ॥

अथ रव्यादीनां द्रव्याणि अधिदेवताश्च।

द्रव्याणि ताम्रमणिकाञ्चनशुक्तिरौप्यमुक्तान्ययश्च दिननाथमुखग्रहाणाम्।
वह्न्यम्बुषण्मुखहरीन्द्रशचीविरञ्चिमुख्या दिवाकरमुखादधिदेवताः स्युः ॥ २० ॥

इदानीं ग्रहाणां द्रव्याण्यधिदेवताश्चोच्यन्ते। दिननाथमुखग्रहाणां=सूर्यादीनां ग्रहाणां ताम्रमणिकाञ्चनशुक्तिरौप्यमुक्तान्ययश्चैतानि द्रव्याणि सन्ति। यथा सूर्यस्य ताम्रम्, चन्द्रस्य

मणिः, कुजस्य काञ्चनं=स्वर्णम्, बुधस्य शुक्तिः=कांस्यादिमिश्रितो धातुः, बृहस्पतेः रौप्यं=रजतम्, शुक्रस्य मुक्ता (मोती), शनैश्चरस्यायो लौहमिति । प्रयोजनम्-प्रसवे प्रश्ने च बलवद्ग्रहद्रव्यसत्ता, ग्रहशुभदशायां तत्तद्द्रव्याप्तिररिष्टकर्त्तरि ग्रहे तत्तद्द्रव्यदानञ्चेति । अथाधिदेवताः । दिवाकरमुखात् = सूर्यादितः क्रमेण-वह्न्यम्बुषण्मुखहरीन्द्रशचीविरञ्चिमुख्या अधिदेवता भवन्ति । यथा-सूर्यस्य वह्निरग्निरधिदेवता । चन्द्रस्याम्बु = जलम् । मङ्गलस्य षण्मुखः = कार्त्तिकेयः । बुधस्य हरिर्विष्णुः । गुरोरिन्द्रो देवराट् । शुक्रस्य शचीन्द्रपत्नी । शनेः विरञ्चिः=ब्रह्मेति । प्रयोजनञ्च-ग्रहप्रीतये ग्रहदेवता पूज्या, यात्रायाञ्च ग्रहदेवतां सम्पूज्य तद्दिशं यायादिति ॥ २० ॥

**सूर्यादि ग्रहोंके क्रमसे ताम्र, मणि, सुवर्ण, शुक्ति, रूपा, मोती और लोह द्रव्य हैं। सूर्यादि ग्रहोंकी क्रमसे अग्नि, जल, कार्तिकेय, विष्णु, इन्द्र, इन्द्राणी और ब्रह्मा अधिदेवता हैं।**

### अथ रव्यादीनां रत्नानि ।

माणिक्यं दिननायकस्य, विमलं मुक्ताफलं शीतगोः
माहेयस्य च विद्रुमं मरकतं सौम्यस्य गारुत्मकम् ॥
देवेज्यस्य च पुष्परागमसुराचार्यस्य वज्रं शनेः
नीलं निर्मलमन्ययोश्च गदिते गोमेदवैडूर्यके ॥ २१ ॥

स्पष्टम् । प्रयोजनञ्च-ग्रहशुभदशायां तत्तन्मणिप्राप्तिः ग्रहवैगुण्ये तत्तन्मणिधारणञ्च ॥

**सूर्यका माणिक्य, चन्द्रमाका स्वच्छ मोती, मंगलका मूंगा, बुधका गारुत्मक, बृहस्पतिका पुष्पराग, शुक्रका हीरा, शनिका निर्मल नील, राहुका गोमेदमणि, केतुका वैदूर्य रत्न है ॥**

### अथ ग्रहाणां वस्त्रादिनिरूपणम् ।

स्थूलाम्बरं नूतनचारुचेलं कृशानुतोयाहतमध्यमानि ॥
दृढांशुकं जीर्णमिनादिकानां वस्त्राणि सर्वे मुनयो वदन्ति ॥ २२ ॥
प्रागादिका भानुसितारराहुमन्देन्दुविद्देवपुरोहिताः स्युः ॥
शुक्रारचन्द्रज्ञसुरेज्यमन्दा वसन्तमुख्यर्त्वधिपा दृगाणैः ॥ २३ ॥
देवतोयतटवह्निविहाराः कोशगेहशयनोत्करदेशाः ॥
भानुपूर्वनिलयाः परिकल्प्या वेश्मकोणनिलयात्रहिकेन् ॥ २४ ॥

इदानीं ग्रहाणां वस्त्राणि, दिशः, ऋतवो ग्रामदेशाश्चोच्यन्ते ।

इनादिकानां वस्त्राणि । सूर्यस्य स्थूलाम्बरं = स्थूलसूत्ररचितमिति । चन्द्रस्य नूतनचारुचेलं = नवं मनोरमं च । मङ्गलस्य कृशानुहतं = दग्धम् । बुधस्य तोयाहतं=जलार्द्रम् । गुरोर्मध्यमं = नातिजीर्णं नातिनवम् । शुक्रस्य दृढांशुकं = चिरस्थायि । शनेर्जीर्णं = पुरातनं वस्त्रं भवतीति सर्वे प्राचना मुनयो वदन्ति । प्रयोजनम्-सूतिकावस्त्रज्ञाने प्रश्ने च बलवद्ग्रहवशाद्वस्त्रज्ञानमिति ।

**अथ दिशः ।** प्रागादिकाः=पूर्वादिक्रमतः, भानुसितारराहुमन्देन्दुविद्देवपुरोहिताः= सूर्य-शुक्र-मङ्गल-राहु-शनि-चन्द्र-बुध-गुरवः स्युः । पूर्वादिदिशां विदिशां चाष्टानामेतेऽष्टौ ग्रहा अधिपा भवन्तीत्यर्थः ।

**अथर्तवः ।** शुक्रारचन्द्रज्ञसुरेज्यमन्दा दृगाणैर्वसन्तमुख्यर्त्वधिपा भवन्ति । अत्र दृगाणपरत्वेनर्तूनां परिज्ञानं कृतमिति । यथा-लग्ने शुक्रदृक्काणे वसन्तर्तुः । लग्ने भौमदृक्काणे ग्रीष्मः । चन्द्रद्रेष्काणे वर्षा । बुधद्रेष्काणे शरत् । गुरुद्रेष्काणे हेमन्तः । शनिद्रेष्काणे शिशिरर्तुरिति । पश्चात्र लग्नगतैः शुक्रादिभिर्ग्रहैर्वसन्तादयः ऋतवो वाच्याः । लग्ने ग्रहाभावे

शुक्रादिद्रेष्काणैरेवं लग्ने ग्रहबाहुल्येऽपि द्रेष्काणेनैवर्तुनिर्देशो वाच्य इति । प्रयोजनम्–नष्टजातके ऋतुनिर्देशः ।

**अथ वासदेशाः** । देवस्थानादयो भानुपूर्वग्रहाणां निलया इति । तत्र सूर्यस्य देवस्थानम् । । चन्द्रस्य तोयतटं = जलाशयकूलम् । कुजस्य वह्निरग्निस्थानम् । बुधस्य विहारस्थानम् । गुरोः कोशगेहं = भाण्डारागारम् । शुक्रस्य शयनालयः । शनेरुत्करदेशः = ऊषरभूमिः । अहिकेतू=राहुकेतू वेश्मकोणनिलयौ । राहोर्वेश्म=गृहं, केतोः कोणः=गृहस्य कोणो निलय इत्यर्थः । प्रयोजनञ्च–प्रसवगृहज्ञानं हृतनष्टादौ द्रव्यादिस्थितिज्ञानं च बलीग्रहात्कुर्यात् ॥ इति ॥ २२ २४ ॥

**मुनियोने सूर्यका मोटा, चन्द्रमाका नया रमणीय, मंगलका जला, बुधका जलहत, गुरुका मध्यम, शुक्रका दृढ़, शनिका पुराना वस्त्र कहा है ॥ २२ ॥**

**पूर्वादि दिशाओंमें क्रमसे सूर्य, शुक्र, मंगल, राहु, शनि, चन्द्र, बुध और बृहस्पति का निवास है और ये उन दिशाओंके स्वामी हैं ।**

**शुक्र, मङ्गल, चन्द्रमा, बुध, बृहस्पति और शनि क्रमसे वसन्तादि ऋतुओंके स्वामी हैं । लग्नमें शुक्रादि ग्रहोंके द्रेष्काण होनेसे वसन्त आदि ऋतु जाननी चाहिये ॥ २३ ॥**

**सूर्यका देवालय, चन्द्रमाका जलाशय, मंगलका अग्निशाला, बुधका क्रीडाभूमि, बृहस्पतिका भंडार, शुक्रका शयनागार, शनिका ऊसरभूमि, राहु और केतु का गृह और कोण वासस्थल है ॥ २४ ॥**

### अथ प्रदेशविभाग इनादीनाम् ।

लङ्कादिकृष्णासरिदन्तमारः सितस्ततो गौतमिकान्तभूमिः ॥
विन्ध्यान्तमार्यः सुरनिम्नगान्तं बुधः शनिः स्यात्तुहिनाचलान्तः ॥ २५ ॥

इदानीं ग्रहाणां प्रदेशा उच्यन्ते । आरः = मङ्गलः, लङ्कादिकृष्णासरिदन्तं = लङ्कातः कृष्णानदीं यावज्ज्ञेयः । मङ्गलस्यैतावान्प्रदेश इति । ततः कृष्णासरितो गौतमिकान्तभूमिः गौतमीनदीं यावत्सितः = शुक्रः । ततो विन्ध्यान्तं = विन्ध्याचलं यावदार्यो गुरुः । ततः सुरनिम्नगान्तं=गङ्गावधिकं बुधः । ततस्तुहिनाचलान्तः = हिमगिरिं यावच्छनिः स्यात् । अत्र सूर्याचन्द्रमसोः प्रदेशो 'देवतोयतटे' त्याद्युक्तो ज्ञेयः । सूर्यस्य देवभूमिर्मेरुगिरिः । चन्द्रस्य तोयतटानि महार्णवा इति ॥ २५ ॥

**लङ्कासे कृष्णा नदी पर्यन्त मङ्गलका प्रदेश है। कृष्णानदी से गौतमी नदी पर्यन्त शुक्रका, गौतमीसे विन्ध्यपर्वत तक गुरुका, विन्ध्यसे गङ्गा नदी तक बुधका और गङ्गासे हिमालय पर्यन्त शनिका प्रदेश है । यहां सूर्य और चन्द्रमा का प्रदेश नहीं कहा गया । पीछे के श्लोक 'देवतोयतट' के अनुसार सूर्य का देवभूमि ( मेरु ) और चन्द्रमाका जल ( समुद्र ) प्रदेश कहना चाहिये । ( सु. शा. कारः ) ॥ २५ ॥**

### अथ ग्रहाणां जातयो गुणाश्च ।

विप्रौ जीवसितौ दिनेशरुधिरौ भूपालकौ वैश्यराड्
इन्दुः शूद्रकुलाधिपः शशिसुतो मन्दोऽवराणां पतिः ॥
आदित्यामरमन्त्रिशीतकिरणाः सत्त्वप्रधानग्रहाः
शुक्रज्ञौ सरजोगुणौ शनिधरापुत्रौ तमःस्वामिनौ ॥ २६ ॥

इदानीं ग्रहाणां विप्रादिवर्णाधिपत्यं सत्त्वादिगुणाश्चोच्यन्ते । जीवसितौ=गुरुशुक्रौ, विप्रौ= ब्राह्मणवर्णाधिपौ । दिनेशरुधिरौ = सूर्यमङ्गलौ भूपालकौ=क्षत्रियाधिपौ । इन्दुश्चन्द्रो वैश्यराट् = वैश्यवर्णाधीशः । शशिसुतो बुधः शूद्रकुलाधिपः । मन्दः = शनिरवराणामन्त्यजानां पतिर्भवति । प्रयोजनम्–ग्रहोपघाते तद्वर्णोपघातो हृतनष्टादौ च ग्रहबलाच्चौरादेर्वर्णज्ञानम् ।

अथ गुणाः । आदित्यामरमन्त्रिशीतकिरणाः = सूर्य-गुरु-चन्द्राः, सत्त्व(१)-प्रधानग्रहा भवन्ति । सूर्य-गुरु-चन्द्रेषु सत्त्वगुणोऽधिको भवति । शुक्रज्ञौ=शुक्रबुधौ सरजोगुणौ = रजोगुणयुक्ताविति । शनिधरापुत्रौ = शनिमङ्गलौ, तमःस्वामिनौ = तमोगुणाधिपती भवतः । अत्र भविष्यति कस्यचिदियमाशङ्का यदस्यैवाध्यायस्य प्रथमश्लोके 'सत्त्वं भौम' इत्युक्तमत्र शनिधरापुत्रौ तमः स्वामिनाविति किमुच्यते ? । सत्यं तदुच्यते । तत्र सत्त्वं शौर्यमिति बोद्धव्यम् । तत्तु कार्याकार्यप्रवृत्तानां समेषामेव वर्त्तते । इह सत्त्वं गुणवाचकम् । तत्तु महात्मन्येव तिष्ठति । तथोक्तं च—

"यः सात्त्विकस्तस्य दयास्थिरत्वं सत्यार्जवं ब्राह्मणदेवभक्तिः ।
रजोऽधिकः काव्यकलाक्रतुस्त्रीसंसक्तचित्तः पुरुषोऽतिशूरः ॥
तमोऽधिकः वञ्चयिता परेषां मूर्खोऽलसः क्रोधपरोऽतिनिद्रः" ॥ इति ॥ २६ ॥

बृहस्पति और शुक्र ब्राह्मण हैं । सूर्य और मङ्गल क्षत्रिय हैं । वैश्यका स्वामी चन्द्रमा है । शूद्रका बुध और अंत्यजोंका स्वामी शनि है ।

सूर्य, बृहस्पति और चन्द्रमा सत्त्वगुणी हैं । शुक्र और बुध रजोगुणी हैं । शनि और मङ्गल तमोगुणी हैं ॥ २६ ॥

**अथ ग्रहाणां नरादिसंज्ञा महाभूताधिपत्यञ्च ।**

**नराकारा भानुक्षितिजगुरवः शुक्रशशिनौ**
**वधूरूपौ षण्ढप्रकृतिपुरुषौ मन्दशशिजौ ॥**
**वियत्क्षोणीतेजपवनपयसामेव पतयः**
**सुराचार्यज्ञारद्युमणिसुतदेवारिसचिवाः ॥ २७ ॥**

इदानीं ग्रहाणां पुरुषादिनिरूपणं पञ्चमहाभूताधिपत्यनिरूपणं च क्रियते । भानुक्षितिजगुरवः = सूर्यमङ्गलबृहस्पतयः, नराकाराः=पुरुषग्रहा इति । शुक्रशशिनौ, वधूरूपौ=स्त्रीग्रहौ । मन्दशशिजौ = शनिबुधौ, षण्ढप्रकृतिपुरुषौ = नपुंसकग्रहौ भवतः । प्रयोजनम्—जन्मकाले प्रश्नकाले च बलवानात्मपक्षमेव करोति ।

अथ महाभूताधिपाः । सुराचार्य-ज्ञा-र-द्युमणिसुत-देवारिसचिवाः वियत्क्षोणीतेजःपवनपयसामेव पतयो भवन्ति । यथा-सुराचार्यः = गुरुर्वियतः = गगनस्याधिपतिः । ज्ञः = बुधः, क्षोण्याः = पृथिव्याः । आरः = मङ्गलस्तेजसः । द्युमणिसुतः = शनिः, पवनस्य = वायोः । देवानामरयो दैत्यास्तेषां सचिवो मंत्री = शुक्रः पयसः = जलस्याधिपतिरिति । सूर्याचन्द्रमसोस्तु विंशतितमे श्लोके ग्रहयम्बुन्युक्ते । प्रयोजनम्-स्वदशायां महाभूतच्छायां कुर्वन्ति ग्रहा इति ॥ २७ ॥

सूर्य मङ्गल और गुरु पुरुषग्रह हैं । शुक्र और चन्द्रमा स्त्रीग्रह हैं । शनि और बुध नपुंसक हैं । गुरु आकाशतत्त्वका स्वामी, बुध पृथ्वीका, मङ्गल तेज का, शनि वायुका और शुक्र जलतत्त्वका स्वामी है ॥ २७ ॥

**अथ ग्रहाणां कक्षाक्रमः ।**

**कक्षायां क्रमशो दिनेशतनयाज्ज्योतिर्भचक्राश्रिताः ।**
**छायासूनुगुरुक्षमाजदिनकृच्छुक्रेन्दुपुत्रेन्दवः ॥ २७½ ॥**

इदानीं ग्रहाणां गतिद्योतकं कक्षाक्रमं निरूपयति । कक्षायां = स्वस्वभ्रमणमार्गे दिनेश-

(१) सर्वेषु त्रयोऽपि गुणास्तिष्ठन्त्येव परं यस्मिन् यो गुणोऽधिको भवति स तद्गुणः कथ्यते । तेनात्र प्रधानपदोपादानमिति ।

तनयात् क्रमशः = शनैश्चरादिक्रमेण छायासूनुगुरुक्ष्माजदिनकृच्छुक्रेन्दुपुत्रेन्दवः = शनि-बृहस्पति-मङ्गल-सूर्य-शुक्र-बुध-चन्द्राः, ज्योतिर्भचक्राश्रिताः=ज्योतिषां = नक्षत्राणां, भचक्रे= राशिचक्रे, आश्रिताः = सङ्गताः भवन्ति । स्वस्वराशिचक्रे ( कक्षायां ) सर्वे ग्रहा भ्रमन्ति । तेषु सर्वोपरि शनिस्तस्याधो गुरुस्तस्याधो भौमस्ततो रविस्ततः शुक्रस्ततो बुधस्ततश्चन्द्रमा इति । तथोक्तं श्रीभास्कराचार्येण—

"भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षा" इति ।

अत्रेदमप्यवधेयम्-यः सर्वोपरिस्थस्तस्य गतिः सर्वाल्पा । यश्च सर्वाधःस्थस्तस्य सर्वाधिका गतिरिति । यतः सर्वा अपि कक्षाश्चक्रकला-( २१६००′ ) ङ्किता भवन्ति, तथा सर्वेषां ग्रहाणां योजनात्मिका गतिस्तुल्यैव—

"पादोनगोक्षधृतिभूमितयोजनानि ( ११८५८।४५ ),
खेटा व्रजन्त्यनुदिनं निजवर्त्मनीमे" इति भास्करोक्तेः ।

तेन महत्कक्षायां तावति योजनेऽल्पसङ्ख्याः कला भवन्ति, लघुकक्षायां तावत्येव योजने बह्व्यः कला भवन्ति । तेन शनेः सर्वाधिककक्षायां सर्वाल्पा गतिश्चन्द्रस्य सर्वाल्पकक्षायां सर्वाधिका गतिरिति गतिविदां स्पष्टमेवातोऽलमतिविस्तरेण । उक्तञ्च तत्रभवता भास्करेण—

"कक्षाः सर्वा अपि दिविषदां चक्रलिप्ताङ्कितास्ता
वृत्ते लघ्व्यो लघुनि, महति स्युर्महत्यश्च लिप्ताः ॥
तस्मादेते शशिजभृगुजादित्यभौमेज्यमन्दा
मन्दाक्रान्ता इव शशधराद्भान्ति यान्तः क्रमेण" ॥ इति ॥ २७½ ॥

### कक्षाप्रदर्शनम्—




अपनी २ कक्षाओंमें शनि आदि ग्रह ज्योतिश्चक्र ( नक्षत्र-राशि-मण्डल ) में लगे हुये भ्रमण करते हैं । सबसे ऊपर शनि, उसके नीचे गुरु, उसके नीचे मङ्गल, फिर

सूर्य, फिर शुक्र, फिर बुध, सबके नीचे ( पृथिवीके ऊपर ) चन्द्रमाकी कक्षा है। ( सु० शा० कार ) ॥ २७½ ॥

अथ सूर्यादीनां धातुविशेषादि।

मज्जास्नायुवसाऽस्थिशुक्ररुधिरत्वग्धातुनाथाः क्रमाद्
आरार्कीज्यदिनेशशुक्रशशभृत्तारासुताः कीर्तिताः ॥ २८ ॥

लवणकटुकषायस्वादुतिक्ताम्लमिश्राः शशिरविशनिजीवारासुरेज्यज्ञनाथाः ॥
अयनदिवसपक्षर्त्वब्दमासक्षणेशा रविकुजसितसौम्या मन्दजीवेन्दवश्च ॥ २९ ॥

इदानीं ग्रहाणां दैहिकधातवो रसाः समयाश्च निरूप्यन्ते। आरार्कीज्यदिनेशशुक्रशशभृत्तारासुताः क्रमान्मज्जादीनां नाथाः कीर्तिताः। यथा—मज्जाया आरः भौमः। स्नायुषः आर्किः = शनिः। वसायाः ईज्यः=गुरुः। अस्थ्नो दिनेशः=रविः। शुक्रस्य शुक्रः। रुधिरस्य शशभृच्चन्द्रः। त्वचस्तारासुतः = बुधो नाथोऽधिपतिः कीर्तितः। प्रयोजनम्—जन्मनि यो ग्रहो बलीयांस्तद्धातुसारो जातको भवति। व्याधिप्रश्ने च तद्धातुकोपो वाच्य इति।

अथ रसाः। शश्यादीनां लवणादयो रसाः। यथा—शशिनश्चन्द्रस्य लवणः। रवेः कटुः। शनेः कषायः। जीवस्य स्वादु = मधुरम्। आरस्य = मङ्गलस्य तिक्तम्। असुरेज्यस्य=शुक्रस्य आम्लम्। ज्ञस्य = बुधस्य मिश्राः षड्रसा इति। प्रयोजनम्—निषेककाले यो बलीयान्ग्रहस्तदुक्तरसदोहदो भवति गर्भिण्यास्तथा प्रसूतिकाले प्रसूताया भोजनज्ञानमिति।

अथ समयाः। सूर्यादीनामयनादयः। तत्र सूर्योऽयनपतिः ( अयनं मासषट्कं तद्वर्षे द्वयं सौम्यायनं याम्यायनं च मकरकर्कटाभ्यामिति )। कुजो दिवसपतिः। सितः पक्षपतिः ( पक्षः पञ्चदश दिनानि )। सौम्यः ऋतुपतिः ( ऋतुर्मासद्वयम् )। मन्दोऽब्दपतिः। जीवो मासपतिः। इन्दुः क्षणपतिः ( क्षणो घटीद्वयम् ) भवति। प्रयोजनम्—प्रश्नकाले यस्य ग्रहस्य नवांशो लग्ने भवेत्स ग्रहस्तस्मान्नवांशाद्यावत्सङ्ख्ये नवांशके स्यात्तत्सङ्ख्यकायनादिकाले ग्रहस्य शुभाशुभफलपक्तिर्वाच्या इति ॥ २८-२९ ॥

मज्जा, स्नायु, वसा ( चर्बी ), अस्थि ( हड्डी ), वीर्य, रक्त और चर्म इन धातुओंके क्रमसे मङ्गल, शनि, बृहस्पति, सूर्य, शुक्र, चन्द्रमा और बुध स्वामी कहे गये हैं ॥ २८ ॥

लवण, कटु, कषाय, मधुर, तिक्त, अम्ल और मिश्रितरस इनके स्वामी क्रमसे चन्द्र, रवि, शनि, बृहस्पति, मङ्गल, शुक्र और बुध हैं। अयन, दिन, पक्ष, ऋतु, वर्ष, मास और क्षण इनके स्वामी क्रमसे सूर्य, मङ्गल, शुक्र, बुध, शनि, बृहस्पति और चन्द्रमा हैं ( सूर्यका छः मासमें, मङ्गलका दिन भरमें, शुक्रका १५ दिनमें, बुधका दो मासमें, गुरुका एक मासमें और चन्द्रमाका क्षण भरमें, फल होता है ) प्रश्नके लग्नमें जिस ग्रहका नवांश हो वह ग्रह उस नवांशसे जितने नवांशपर हो उतने अयन आदि कालपर वह ग्रह फल देता है। ( सु० शा० कार ) ॥ २९ ॥

अथ रव्यादीनां स्थानविशेषे दृष्टयः।

पादेक्षणं भवति सोदरमानराश्योरर्धं त्रिकोणयुगलेऽखिलखेचराणाम् ॥
पादोनदृष्टिनिचयश्चतुरस्रयुग्मे सम्पूर्णदृग्बलमनङ्गगृहे वदन्ति ॥ ३० ॥

इदानीं ग्रहाणां स्थानपरत्वेन दृष्टय उच्यन्ते। अखिलखेचराणां=सर्वेषां ग्रहाणां सोदरमानराश्योः=तृतीयदशमभावयोः पादेक्षणं=चतुर्थांशदृष्टिर्भवति। सर्वे ग्रहा आत्मनस्तृतीयदशमभावौ चतुर्थांशदृष्ट्याऽवलोकयन्ति। त्रिकोणयुगले = नवमपञ्चमौ भावौ, तयोरर्धमी-

क्षणमर्धदृष्टिर्भवतीत्यर्थः । चतुरस्रयुग्मे = चतुर्थाष्टमयोः पादोनदृष्टिर्निचयस्त्रिपाददृष्टिरिति । अनङ्गगृहे=सप्तमस्थाने सम्पूर्णदृग्बलं = सम्पूर्णा दृष्टिर्भवति । सर्वेषामिति सर्वत्रान्वयः ।

अत्र दृष्टिविषये युक्तिरुच्यते—तृतीयं बन्धुस्थानं, दशमं पितृस्थानं च बन्धुपितरौ लोकाः सामान्येनावलोकयन्तीति ग्रहाणामपि तयोरल्पा दृष्टिर्भवति । ततोऽधिका दृष्टिर्लोकानामात्मजे स्वभाग्ये च भवतीति तथा ग्रहाणामपि पञ्चमे आत्मजस्थाने, नवमे भाग्यस्थाने दृष्टिर्भवति । ततोऽप्यधिका दृष्टिर्लोकानां स्वीये सुखे स्वीय आयुषि च भवति तयोश्चतुर्थाष्टमे स्थाने, तेन ग्रहाणामपि तथा भवति । ततोऽप्यधिकदृष्ट्या लोकाः स्वीयामर्धाङ्गिनीं पश्यन्ति, तत्स्थानं सप्तमं, ग्रहा अपि पूर्णदृष्ट्यावलोकयन्तीति किं चित्रम् ? ॥ ३० ॥

**सभी ग्रह अपने २ स्थानसे ३।१० को एक चरणसे, दोनों त्रिकोण ( ५।९ ) को अर्ध ( दो चरण ) से, ४।८ को तीन चरणसे देखते हैं, और ७ वेंको चारों चरणसे देखते हैं। अतः ७ में सम्पूर्ण दृग्बल इनका रहता है, ऐसा विद्वान् लोग कहते हैं ॥ ३० ॥**

## अथ रव्यादीनां दृष्टिविशेषे बलित्वम् ।

**शनिरतिबलशाली पाददृग्वीर्ययोगे सुरकुलपतिमन्त्री कोणदृष्टौ शुभः स्यात् ।**
**त्रितयचरणदृष्ट्या भूकुमारः समर्थः सकलगगनवासाः सप्तमे दृग्बलाढ्याः ॥३१॥**

इदानीं ग्रहाणां दृग्बलमुच्यते । शनिः पाददृग्वीर्ययोगेऽतिबलशाली भवति । यत्र ग्रहाणां पाददृष्टिर्भवति ( स्वस्थानात्तृतीये दशमे च ) तद्बलयोगाच्छनैश्चरो बलीयान् भवति । अर्थात्तृतीयं दशमं च शनिः पूर्णदृष्ट्या पश्यति । सुरकुलपतिमन्त्री=बृहस्पतिः कोणदृष्टौ = नवमे पञ्चमे च या दृष्टिस्तस्यां शुभः स्यात् । नवमपञ्चमयोर्गुरोः पूर्णा दृष्टिरित्यर्थः । भूकुमारः = मङ्गलस्त्रितयचरणदृष्ट्या समर्थो बलवान् भवति । चतुर्थेऽष्टमे च त्रिचरणदृष्टिर्भवति, तयोर्भौमो बली । चतुर्थेऽष्टमे च भौमस्य पूर्णदृष्टिरिति । सप्तमे भावे (स्वस्थानात्सप्तमे भावे ) सकलगगनवासाः=सर्वे ग्रहा दृग्बलाढ्या भवन्ति । सप्तमं भावं सर्वे ग्रहाः पूर्णं पश्यन्तीत्यर्थः । तथोक्तं सारावल्याम्—

"पूर्णं पश्यति रविजस्तृतीयदशमं त्रिकोणमपि जीवः ।
चतुरस्रं भूमिसुतो यूनं च सितार्कशशिबुधाः क्रमशः" इति ॥

अथात्र युक्तिरुच्यते । पराक्रमं राज्यरक्षणं च भृत्यस्य कर्मेति तथाभूतो मन्दस्तयोः स्थाने तृतीयदशमे पूर्णं पश्यति । एवं विद्याधर्मौ गुरुणा शिक्ष्येते रक्ष्येते चेति तथाभूतो गुरुर्विद्यास्थानं = पञ्चमं, धर्मस्थानं=नवमं च पूर्णं पश्यति । तथैव—सुखायुष्ययो रक्षणं नेतुः कर्मेति नेता मङ्गलो हि सुखस्थानं चतुर्थमायुःस्थानमष्टमं च पूर्णं पश्यति । जाया तु सर्वेषामर्धाङ्गिनीति सर्वे ग्रहा जायास्थानं सप्तमं पूर्णं पश्यन्तीति युक्ततमम् ॥ ३१ ॥

**एक चरण दृष्टिबलसे शनि बली होता है, अर्थात् ३ रे और १० वें भावोंमें शनिकी पूर्ण दृष्टि होती है। बृहस्पति कोणदृष्टि ( ५।९ ) में शुभ होता है, अर्थात् ५।९ भावोंको पूर्ण देखता है। मङ्गल तीन चरण दृष्टिसे बली है, याने ४ थे और ८ वें भावोंको पूर्ण देखता है। सभी ग्रह ७ वें भावमें पूर्ण दृग्बली होते हैं। यहां भावों की गिनती अपने २ स्थानसे करनी चाहिये। ( सु० शा० कार ) ॥ ३१ ॥**

## अथ ग्रहाणामूर्ध्वादिदृष्टयः ।

**अथोर्ध्वदृष्टी दिननाथभौमौ दृष्टिः कटाक्षेण कवीन्दुसून्वोः ।**
**शशाङ्कगुर्वोः समभागदृष्टिरधोऽक्षिपातस्त्वहिनाथशन्योः ॥ ३२ ॥**

इदानीं ग्रहणामुच्चादिदृग्विवरणम् । अथ दिननाथभौमौ = सूर्यमङ्गलावूर्ध्वदृष्टी भवतः । तावुपरिष्टादवलोकयतः । कवीन्दुसून्वोः शुक्रबुधयोः कटाक्षेण दृष्टिर्भवति । तौ कटाक्षेणावलोकयतः । शशाङ्कगुर्वोः = चन्द्रबृहस्पत्योः समभागदृष्टिः । तौ समं पश्यतः । अहिनाथशन्योः = राहुशनैश्चरयोरधोऽक्षिपातः, शनिराहू निम्नदृष्टी, तावधस्तादवलोकयत इति । प्रयोजनम्–जन्मनि बलीग्रहवशाज्जन्तोर्दृग्विचारः ॥ ३२ ॥

**सूर्य और मङ्गलकी ऊर्ध्व दृष्टि है। शुक्र और बुधकी कटाक्ष दृष्टि है। चन्द्रमा और बृहस्पतिकी सम दृष्टि है। राहु और शनिकी नीचे दृष्टि रहती है ॥ ३२ ॥**

**अथ ग्रहाणां स्थानबलम् ।**

स्वोच्चत्रिकोणस्वसुहृद्दृगाणराश्यंशवैशेषिकवर्गवन्तः ।
आरोहवीर्याधिकबिन्दुकास्ते खेचारिणः स्थानबलाधिकाः स्युः ॥ ३३ ॥
नीचारिपापखगयोगनिरीक्ष्यमाणास्तद्वर्गसन्धिलघुबिन्दुदुरंशकाश्च ।
आदित्यरश्मिपरिभूतपराजितास्ते दृष्ट्यादिशक्त्यसहिताश्च न शोभनाः स्युः ॥३४॥

इदानीं ग्रहाणां स्थानबलमुच्यते–स्वोच्चेत्यादि । स्वशब्दस्य सर्वत्रानुवृत्तिः । ये खेचारिणः = ग्रहाः स्वोच्चे, स्वत्रिकोणे, स्वमित्रराशौ, स्वद्रेष्काणे, स्वराशौ, स्वनवांशे, स्ववैशेषिकवर्गे (पारिजातादौ), आरोहवीर्याः = भावसमानाः, "आरोहवीर्याः प्रभवन्ति भावसमानपर्यन्तमतश्च्युताः स्युरि"त्युक्तेः । अधिकबिन्दुकाः=अष्टकवर्गे चतुरधिकशुभचिह्नकाः स्युस्ते (उक्तानामन्यतमे वर्त्तमाना इत्यर्थः) स्थानबलाधिकाः स्युस्तेषां स्थानबलं पूर्णं भवतीति ।

अथ स्थानबलहीनानाह । नीचारिपापखगयोगनिरीक्ष्यमाणाः । ये ग्रहा नीचगताः, शत्रुगृहगताः, पापयुक्ताः, पापनिरीक्षिताः, पापवर्गगताः, सन्धिगताः, लघुबिन्दुकाः (अष्टवर्गे चतुरल्पशुभबिन्दुकाः) दुरंशकाः = पापांशगताः, आदित्यरश्मिपरिभूताः = अस्तं गताः, पराजिताः = ग्रहयुद्धे परास्ता भवन्ति, दृष्ट्यादिशक्त्यसहिताश्च = दृग्बलादिहीना अपि शोभना न स्युरशुभा एव ते भवन्तीति । तथोक्तं वराहेण—

"स्वोच्चसुहृत्स्वत्रिकोणनवांशैः स्थानबलं स्वगृहोपगतैश्च" इति ॥ ३३-३४ ॥

**अपने अपने उच्च, त्रिकोण, मित्रगृह, द्रेष्काण, राशि, नवांश, परिजातादि वैशेषिकवर्ग, आरोहवीर्य (भावतुल्य) और अधिकबिन्दु (अष्टवर्गमें ४ से ज्यादे शुभ चिह्न) वाले ग्रह स्थानबली होते हैं। एवं नीच और शत्रुगृहमें रहनेवाले, पापग्रहोंसे युक्त तथा दृष्ट, पापवर्ग, सन्धि तथा लघुबिन्दु (४ से कम शुभचिह्न), पापांशवाले, सूर्यके किरणमें व्याप्त (अस्त) और दृष्टि आदि बलसे हीन ग्रह शुभ नहीं होते, अर्थात् ये अशुभ होते हैं। (सु० शा० कार) ॥ ३३–३४ ॥**

**अथ ग्रहाणां दिग्बलम् ।**

विलग्नपातालवधूनभोगा बुधामरेज्यौ भृगुसूनुचन्द्रौ ॥
मन्दो धरासूनुदिवाकरौ चेत् क्रमेण ते दिग्बलशालिनः स्युः ॥ ३५ ॥

इदानीं ग्रहाणां दिग्बलं (भावबलम्) निरूपयति । बुधामरेज्यौ = बुधगुरू । भृगुसूनुचन्द्रौ = शुक्रचन्द्रौ । मन्दः = शनिरेक एव । धरासूनुदिवाकरौ = मङ्गलसूर्यौ चेद्यदि क्रमेण विलग्न–पाताल–वधू–नभोगाः = प्रथम–चतुर्थ–सप्तम–दशमगता भवेयुस्तदा ते दिग्बल-

शालिनः स्युरिति । यथा-लग्ने बुधगुरू बलिनौ । चतुर्थे शुक्रचन्द्रौ । सप्तमे शनिः । दशमे भौमसूर्यौ बलिनौ भवतः । तथोक्तं भगवता मिहिरेण—

"दिक्षु बुधाङ्गिरसौ रविभौमौ सूर्यसुतः सितशीतकरौ च" इति ।

एतद्वैपरीत्येन तत्सप्तमे ते ग्रहा निर्बला भवन्तीत्यप्यवधेयम् ॥ ३५ ॥

लग्न, चतुर्थ, सप्तम और दशम स्थानमें क्रमसे बुध और गुरु । शुक्र और चन्द्र । शनि । मङ्गल और सूर्य दिग्बलशाली हैं । अर्थात् लग्नमें बुध और बृहस्पति । सुखमें शुक्र और चन्द्र । सप्तममें शनि । दशममें मङ्गल और सूर्य बली हैं ॥ ३५ ॥

दिग्बलचक्रम् ।




दिक्‌निर्बलचक्रम्




## अथ कालबलम् ।

निशीन्दुमन्दावनिजाः परेऽह्नि स्वकीयहोरासममासवासराः ।
सितादिपक्षद्वयगाः शुभाशुभा बुधः सदा कालजवीर्यशालिनः ॥ ३६ ॥

इदानीं ग्रहाणां कालबलमुच्यते । इन्दुमन्दावनिजाः = चन्द्रशनिमङ्गलाः, निशि=रात्रौ बलिनो भवन्ति । परे = सूर्य-गुरु-शुक्राः, अह्नि = दिने बलिनः । स्वकीयहोरासममासवासराः = स्वकीया या होरा = कालहोरा, स्वीया समा = वर्षम्, स्वीयो यो मासः, स्वीयो यो वासरः तेषु ते ग्रहा बलिनः । होरेशः स्वहोरायाम् । वर्षपतिः स्ववर्षे । मासपतिः स्वमासे । वारेशः स्ववारे बली भवतीत्यर्थः । शुभाशुभाः सितादिपक्षद्वयगाः = शुभाः शुक्लपक्षे, अशुभाः = पापाः कृष्णपक्षे कालजवीर्यशालिनो भवन्ति । बुधः सदा = सर्वस्मिन्नेव काले बली भवन्ति । तथोक्तं वराहेण बृहज्जातके—

"निशि शशिकुजसौराः सर्वदा ज्ञोऽह्नि चान्ये, बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण ।
द्ध्ययनदिवसहोरामासपैः कालवीर्यम्" इति ॥ ३६ ॥

चन्द्रमा, शनि और मङ्गल रात्रिमें, शेष ( सू० बृ० शु० ) दिनमें बली हैं । बुध सदा काल बली है । सभी ग्रह अपने २ कालहोरा, अपने २ वर्ष ( जिसमें जो वर्षेश हो ) अपने २ मास और अपने २ दिनमें बली होते हैं । शुक्लपक्षमें शुभग्रह शुभ और कृष्णपक्ष में पापग्रह शुभ हैं ॥ ३६ ॥

## अथ चेष्टाबलम् ।

जैत्रा वक्रसमागमोपगसितज्ञारामरेज्यासिताः,
दिव्याशायनगेन्दुतिग्मकिरणौ चेष्टाबलांशाधिकाः ॥ ३६½ ॥

इदानीं ग्रहाणां चेष्टाबलमुच्यते । जैत्राः = जेतारो ग्रहयुद्धे प्राप्तविजयका इत्यर्थः ।

वक्रो विलोमगतिः, समागमश्चन्द्रेण संयोगस्तयोरुपगाः = विलोमगतयश्चन्द्रयुक्ताश्च, सितज्ञारामरेज्यासिताः = शुक्र-बुध-मङ्गल-गुरु-शनयस्तथा दिव्याशायनगेन्दुतिग्मकिरणौ = दिव्यस्य ( स्वर्गस्य ) याऽऽशा ( दिक् ) सा दिव्याशा, तदयनमुत्तरायनमित्यर्थः । तस्मिन् गतौ चन्द्रसूर्यौ चैते चेष्टाबलांशाधिका भवन्ति । अत्रेदमुक्तं भवति-सूर्याचन्द्रमसौ सौम्यायने चेष्टाबलयुक्तौ भवतस्तथा भौमादयः पञ्च ग्रहा जयिनो वक्राश्चन्द्रसंयुक्ता वा भवेयुस्तदा चेष्टाबलयुक्ताः स्युरिति ॥ ३६½ ॥

शुक्र, बुध, मङ्गल, गुरु, और शनि ये ग्रह यदि युद्धमें विजयी हों, या वक्री हों, या चन्द्रमासे युक्त हों तो उनके चेष्टाबल पूर्ण होते हैं । चन्द्रमा और सूर्यके उत्तरायनमें चेष्टाबल अधिक होते हैं । ( सु० शा० कार ) ॥ ३६½ ॥

## अथ ग्रहाणां निसर्गबलम् ।

सौम्यक्षेपयुता महीसुतमुखाश्चेष्टाबलाढ्याः क्रमात्
नैसर्गस्य बलाधिकाः शनिकुजज्ञाचार्यशुक्रेन्द्विनाः ॥ ३७ ॥
क्रमेण दृक्स्थाननिसर्गचेष्टादिक्कालवीर्याणि च षड्बलानि ।
सुधाकरेष्विन्दुशरेन्दुशैलभेदानि तानि प्रवदन्ति सन्तः ॥ ३८ ॥
स्वरूपषष्ट्यंशविषष्टिकांशा मृगादिवीर्योपगषड्बलाढ्याः ।
क्रमेण तद्योगभवं ग्रहाणां बलं हि पूर्णं त्रिपदं दलं वा ॥ ३९ ॥

इदानीं ग्रहाणां निसर्गबलानि तद्भेदांश्चाह । महीसुतमुखाः = भौमादयः पञ्च ग्रहाः सौम्यक्षेपयुताः=उत्तरशरयुताश्चेष्टाबलयुक्ता भवन्ति । ग्रहाणामेकत्र योगे यो ग्रह उत्तरदिक्स्थः स चेष्टाबलयुक्त इति । तथोक्तं वराहेण—

"उदगयने रविशीतमयूखौ वक्रसमागमगाः परिशेषाः ।
विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुताः परिकल्प्याः" इति ॥

अथ नैसर्गिकम् । शनिकुजज्ञाचार्यशुक्रेन्द्विनाः=शनि-मङ्गल-बुध-गुरु-शुक्र-चन्द्र-सूर्याः क्रमान्नैसर्गस्य बलाधिका भवन्ति । सर्वतोऽल्पवीर्यः शनिः, ततोऽधिकबली भौमस्ततो बुधस्ततो गुरुस्ततः शुक्रस्ततश्चन्द्रस्ततः सूर्यो बली भवति । तथोक्तं बृहज्जातके—

"श-कु-बु-गु-शु-च-साद्या वृद्धितो वीर्यवन्तः" इति ।

अथ बलभेदाः । १ दृक् = दृष्टिबलम् । २ स्थानबलम् । ३ निसर्गबलम् । ४ चेष्टाबलम् । ५ दिग्बलम् । ६ कालवीर्यम् । इति क्रमेण प्रत्येकस्य षड्बलानि । तानि-सुधाकरेष्विन्दुशरेन्दुशैलभेदानि = एक-पञ्चै-क-पञ्चै-क-सप्त ( १।५।१।५।७ ) भेदानि भवन्तीति सन्तः प्रवदन्ति । तानि यथा—'दृग्बलमेकविधम् । स्थानबले-उच्चबलं, सप्तवर्गबलं, युग्मायुग्मबलं, केन्द्रादिबलं, द्रेष्काणबलमिति' पञ्च भेदाः । निसर्गबलमेकमेव । चेष्टाबले-वक्र-समागम-सौम्यायना-यनबलानीति चत्वारो भेदाः । दिग्बलमेकमेव । कालबले-'नतोन्नत-पक्ष-दिनरात्रित्रिभाग-वर्षेश-मासेश-दिनेश-होरेशबलानीति' सप्त भेदा भवन्ति । ( केशवीया द्रष्टव्या ) ।

अथ योगजं बलमाह । मृगादिवीर्योपगषड्बलाढ्याः = मृगादिवीर्यं = सौम्यायनबलमुपगतं = प्राप्तं यस्मिन् षड्बले तेनाढ्याः = युक्ताः स्वरूपषष्ट्यंशविषष्टिकांशाः । ग्रहाणां स्वरूपाः = पूर्णाङ्काः, षष्ट्यंशाः = स्वरूपस्य षष्टितमभागाः $\frac{१}{६०}$, विषष्टिकांशाः = स्वरूपस्य षष्ट्यधिकस्तत्रयांशाः $\frac{१}{३६०}$, तदा तद्ग्रहाणां योगभवं=योगजं बलं स्यात् । तत् क्रमेण

पूर्ण, त्रिपदं $\frac{३}{४}$ दलं $\frac{१}{२}$ वा बलं भवतीति । अत्र ग्रहाणां मृगादिबलोपेते षड्बले यस्य ग्रहस्य स्वरूपाः ( पूर्णाङ्काः ) योज्यन्ते तस्य ग्रहस्य तद्योगबलं पूर्णं भवति । तत्रैव षड्बले षष्ट्यंशाः $\frac{१}{६०}$ योज्यन्ते तदा तस्य योगजं त्रिपदं $\frac{३}{४}$ बलं जायते । एवं तत्रैव षड्बले विषष्ट्यंश $\frac{१}{३६००}$ योजनेन तस्य योगजं बलं दलं $\frac{१}{२}$ भवतीति ज्ञेयम् ॥ ३७–३९ ॥

मङ्गल, बुध, गुरु, शुक्र और शनि ये ग्रह उत्तर शर रहनेपर अधिक चेष्टाबल वाले होते हैं। नैसर्गिक बलमें क्रमसे शनि, मङ्गल, बुध, गुरु, शुक्र, चन्द्रमा और सूर्य उत्तरोत्तर बली होते हैं। जैसे शनि<मं०<बुध<बृ०<शु०<चं०<सू०। निसर्गबलमें सबसे निर्बल शनि और बली सूर्य होते हैं ॥

दृष्टि, स्थान, निसर्ग, चेष्टा, दिग् और काल ये छः प्रकार के बल षड्बल कहलाते हैं। इन के क्रमसे १, ५, १, ५, १ और ७ भेद हैं। ( संस्कृत टीका देखिये )। दृ = १। स्था = ५। नि = १। चे = ५। दि = १। का = ७, होते हैं ऐसा विद्वानोंने कहा है ॥

ग्रहोंके षड्बलमें ग्रहोंके स्वरूप ( पूर्णाङ्क ), षष्ट्यंश $\frac{१}{६०}$ और विषष्ट्यंश $\frac{१}{३६००}$ के जोड़ने पर ग्रहोंके योगजबल होते हैं। वे क्रमसे पूर्ण = १, त्रिपद् = $\frac{३}{४}$ और दल = $\frac{१}{२}$ बल होते हैं। ( सु० शा० कार ) ॥ ३७–३९ ॥

### अथ बलप्रमाणम् ।

अर्धाधिकं षट्कमिनस्य सूरेः शुक्रस्य पञ्चाधिकमर्धरूपम् ।
सप्तेन्दुपुत्रस्य बलं षडिन्दोः सौरारयोः सायकरूपसंख्या ॥ ४० ॥

पूर्वश्लोके यदुक्तं स्वरूपषष्ट्यंशेति तत्र कस्य बले कियद्रूपमित्युच्यते । इनस्य = सूर्यस्य अर्धाधिकं षट्कं = सार्धषट्कम् । सूरेः = बृहस्पतेश्च सार्धषट्कम् । शुक्रस्य पञ्चाधिकमर्धरूपम्=सार्धपञ्चकम् । इन्दुपुत्रस्य=बुधस्य सप्त । इन्दोश्चन्द्रस्य षट् । सौरारयोः = शनिमङ्गलयोः सायकरूपसंख्या=पञ्चरूपप्रमितं बलं वर्तते । षड्बले बलिनां ग्रहाणामेता बलसंख्याः पठिता इति । सर्वार्थचिन्तामणौ तथाऽऽह वेङ्कटेश्वरः—

सार्द्धानि षट् तीक्ष्णकरो बलीयान् चन्द्रस्य षट् पञ्च वसुन्धराजः ।
सप्तेन्दुसूनोरपि षड् गुरोस्तु सार्धानि पञ्चाथ सितो बलीयान् ॥
मन्दस्तु पञ्चैव च षड्बलानां संयोग एवापरथाऽन्यथा स्युः ।

अथ प्रसङ्गादपरा अपि बलसंख्या थोत्यन्ते—

रूपत्रयं बलमुशन्त्यथ पादहीनं २° । ४५′ ।
स्थानं, तु दिग्बलमथांघ्रिविहीनरूपम् ००° । ४५′ ॥
ऋत्वंशहीनबलमत्र तु चेष्टिताख्य–००° । ५०′ ।
मष्टांशहीनयुगमेव तु कालवीर्यम् १° । ५२$\frac{१}{२}$′ ॥
पूर्णा बला रविशशाङ्कसुतामरेज्या–
श्चार्द्धं ००° । ३०′ बलं त्वयनजं हि पृथग्विभागे ॥

रसांशहीनं ००° । ५०′ दिशि वीर्यमाहुः स्थाने तु पादाधिकयुग्मरूपम् २° । १५′
कालं बलं त्र्यंशविहीनयुग्म–१° । ४०′ मर्द्धं भवेच्चेष्टितवीर्यमेव ००° । ३०′ ॥
त्र्यंशोनमेकं ००° । ४०′ त्वयनं बलं स्याच्छीतांशुदेवेन्द्रसपत्नगुर्वोः ।
चेष्टाबलं त्र्यंशविहीनमेकं ००° । ४०′ साष्टांशरूपं १° । ७$\frac{१}{२}$′ समये बलं स्यात् ॥
दिश्यर्धरूपं १° । ३०′ बलमायनं च ००° । २०′ त्र्यंशं भवेत्स्थानिकमर्धयुग्मम् २° । ३०′
दिनेशपुत्रस्य वसुन्धरायाः सूनोः क्रमाद्वीर्यमुदाहरन्ति ॥ इति ॥
स्पष्टबलानयनं केशवीयेन कार्यमिति ॥ ४० ॥

सूर्यका तथा बृहस्पतिका बल ६½, शुक्रका ५½, बुधका ७, चन्द्रमाका ६, शनिका और भौमका ८ बल है। ये षड्बलके पूर्णाङ्क हैं ॥ ४० ॥

### अथ ग्रहाणां तात्कालिक-मैत्रीविचारः।

अन्योन्यतः सोदरलाभमानपातालवित्तव्ययराशिसंस्थाः ॥
तत्कालमित्राणि खगा भवन्ति तदन्ययाता यदि शत्रवस्ते ॥ ४१ ॥

इदानीं ग्रहाणां तत्काले मित्राणि शत्रवश्च निरूप्यन्ते। अन्योन्यतः=परस्परं यस्माद्ये ग्रहाः सोदरलाभमानपातालवित्तव्ययराशिसंस्थाः=तृतीयैकादश-दशम-चतुर्थ-द्वितीय-द्वादश-भावगता भवन्ति ते तत्काले तस्य मित्राणि भवन्ति। सोऽपि तेषां मित्रं भवति। यदि ते खगाः=ग्रहास्तदन्ययाताः=उक्तेभ्योऽन्यत्र (प्रथम-पञ्चम-षष्ठ-सप्तमा-ष्टम-नवमभावे) गताः स्युस्तदा तस्य शत्रवो भवन्ति। सोऽपि तेषां तथा भवति। यथा द्वि-प्रदर्शितचक्रे सूर्यस्य पूर्वोक्तक्रमेण चन्द्र-बुध-मङ्गल-शनि-गुरु-शुक्रा मित्राणि तेषां सूर्यो मित्रमपि तु सर्व एवान्योन्यं मित्राणि सन्ति। एवमेव (चं'-मं'-बु'-बृ'-शु'-श') एते सूर्यस्य शत्रवस्तेषामपि सूर्यो रिपुरिति। तथोक्तं वराहेण—

"अन्योन्यस्य धनव्ययायसहजव्यापारबन्धुस्थिता-
स्तत्काले सुहृदः स्वतुङ्गभवनेऽप्येकेऽरयस्त्वन्यथा" ॥ इति ॥ ४१ ॥

ग्रह जिस स्थानमें हो उससे तृतीय, एकादश, दशम, चतुर्थ, द्वितीय, और द्वादश राशिस्थ ग्रह तात्कालिक मित्र होते हैं, और अन्यस्थान (१।५।६।७।८।९) के शत्रु होते हैं ॥ ४१ ॥




### अथ सूर्यादीनां नैसर्गिकाः शत्रुमित्रोदासीनाः।

मित्राणि भानोः कुजचन्द्रजीवाः शत्रू सितार्की शशिजः समानः।
चन्द्रस्य मित्रे दिननायकज्ञौ समा गुरुक्ष्माजसितासिताः स्युः ॥ ४२ ॥
आरस्य मित्राणि रवीन्दुजीवाश्चान्द्री रिपुः शुक्रशनी समानौ।
सूर्यासुरेज्यौ सुहृदौ बुधस्य समाः शनीज्यावनिजास्त्वरीन्दुः ॥ ४३ ॥
सूर्यारचन्द्राः सुहृदस्तु सूरेः शत्रू सितज्ञौ रविजः समानः।
मित्रे शनिज्ञौ भृगुनन्दनस्येन्द्विनावरी जीवकुजौ समानौ ॥ ४४ ॥
मन्दस्य सूर्येन्दुकुजाश्च शत्रवः समः सुरेज्यः सुहृदौ सितेन्दुजौ ॥ ½ ॥

अत्र नैसर्गिका मित्रसमशत्रवः पठिताः। स्पष्टार्थाश्चैते श्लोकाः ॥ ४२-४४½ ॥

सूर्यके-मंगल, चन्द्रमा और बृहस्पति मित्र हैं। शुक्र और शनि शत्रु हैं। बुध सम है। चन्द्रमाके-सूर्य और बुध मित्र हैं, बृहस्पति, मंगल, शुक्र और शनि सम हैं। मंगलके-सूर्य, चंद्रमा और बृहस्पति मित्र हैं, बुध शत्रु है, शुक्र और शनि सम हैं। बुधके-सूर्य और शुक्र मित्र हैं। शनि, बृहस्पति और मंगल सम हैं। चन्द्रमा शत्रु है।

बृहस्पतिके-सूर्य, मङ्गल और चन्द्रमा मित्र हैं। शुक्र और बुध शत्रु हैं। शनि समान है।

॥ पञ्चधामैत्रीचक्रम् ॥

| नैसर्गिकाः | तात्कालिकाः | | |
|---|---|---|---|
| | मित्राणि | समाः | शत्रवः |
| मित्राणि | अतिमित्रम् | मित्रम् | समाः |
| समाः | मित्रम् | ० | शत्रुः |
| शत्रवः | समः | शत्रुः | अधिशत्रुः |

तात्कालिक मैत्री और नैसर्गिक ( स्वाभाविक ) मैत्रीसे अतिमित्र और अतिशत्रु बढ़ कर पांच प्रकारकी मैत्री होती है। तात्कालिक और नैसर्गिक दोनों जगह मित्र होनेसे वे अतिमित्र होते हैं। दोनों जगह शत्रुता होनेसे अतिशत्रु ग्रह होते हैं। एकमें मित्र दूसरे में सम होनेसे सिर्फ मित्र होते हैं। एकमें सम, और दूसरेमें शत्रु होनेसे केवल शत्रु। एवं एकमें शत्रु और दूसरेमें मित्र होनेसे सम होते हैं। जैसे-इस चक्रमें सूर्यसे तीसरे और चौथेमें, गुरु और मङ्गल सूर्यके तात्कालिक मित्र हैं, तथा नैसर्गिकमें भी मित्र हैं, इसलिये ये दोनों अतिमित्र हुवे। शुक्र १२ वें होनेसे तत्कालमें मित्र है, तथा निसर्गमें शत्रु है, इसलिये सूर्यका शुक्र सम हुआ। शनि ७ वें होनेसे तत्कालमें शत्रु तथा निसर्गमें भी शत्रु है, इसलिये सूर्यका शनि अतिशत्रु हुआ।




बुध २ रे होनेसे तत्कालमें मित्र, एवं नैसर्गिक सम है, इसलिये यह मित्र हुआ। इसी प्रकार अन्यत्र भी जानना चाहिये। ( सु० शा० कार ) ॥ ४५-४६ ॥

## अथ ग्रहाणां स्थिरत्वादिनिरूपणम्।

रविः स्थिरः शीतकरश्चरः स्यादुग्रः कुजश्चन्द्रसुतस्तु मिश्रः।
मृदुः सुरेज्यो भृगुजो लघुश्च शनिः सुतीक्ष्णः कथितो मुनीन्द्रैः ॥ ४७ ॥
क्रमाच्चरागद्विशरीरभानामुपान्त्यधर्मस्मरगास्तदीशाः।
खरेशमान्दिस्थितराशिनाथा ह्यतीव बाधाकरखेचराः स्युः ॥ ४८ ॥

इदानीं ग्रहाणां स्वभावा वर्ण्यन्ते। रविः स्थिरः = स्थिरमतिः। शीतकरश्चन्द्रश्चरश्चञ्चलधीः। कुज उग्रः = क्रूरस्वभावः स्यादिति। चन्द्रसुतः = बुधः मिश्रः = विविधस्वभावः। सुरेज्यः = गुरुर्मृदुः = शीतलमतिः। भृगुजः = शुक्रो लघुर्मन्दप्रकृतिः। शनिः सुतीक्ष्णः = सूक्ष्मस्वभावो मुनीन्द्रैः कथितः।

अथ भावानां बाधकग्रहा उच्यन्ते। चरागद्विशरीरभानां=चरस्थिरद्विस्वभावराशीनां ( पूर्वोक्तानां ) क्रमात् उपान्त्यधर्मस्मरगाः = एकादश-नवम-सप्तमस्थानगता ग्रहा वा तेषु ग्रहाभावे तदीशाः=एकादश-नवम-सप्तमस्थानानामधिपाः यदि खरेशमान्दिस्थितराशिनाथाः स्युस्तदा ते तत्तद्भावस्यातीव बाधाकरखेचराः स्युः। अत्रेदं विचिन्त्यम्। यस्य भावस्य विचारः क्रियते स यदि चरराशिस्तदा तस्मादेकादशगतो वा तदीशो ग्रहो यदि खरेशमान्दिस्थितराशिनाथः स्यात्तदा तद्भावस्य स ग्रहो बाधको भवति। यदि विचारणीयो राशिः स्थिरस्तदा तस्मान्नवमगतो वा नवमेशः, एवं यदि विचारणीयभावो द्विस्वभावस्तदा तस्मात्सप्तमगतः सप्तमेशो वा ग्रहो यदि खरेशमान्दिस्थितराशिनाथः स्यात्तदा असौ ग्रहो विचा-

रणीयभावस्यातीव बाधको भवतीति । अत्र खरो वक्ष्यमाणः 'विलग्नजन्मद्रेष्काणाद्यस्तु द्वाविंशतिः स्वरः' तदीशः, मान्दिः = गुलिको वा यत्र तिष्ठति तद्राशिपतिरिति खरेशमान्दिस्थितराशिनाथ इत्यनेनावगन्तव्यः । बाधकग्रहदशायां तत्तद्भावस्य हानिरिति वाच्यम् । अत्रान्येऽपि बाधकग्रहा उक्ताः-सर्वार्थचिन्तामणौ—

"तत्तद्भावाद्रन्ध्रपो वा खरेशो द्रेष्काणानां चापि नाथोऽर्कपुत्रः ।
मान्दीशो वा तन्नवांशाधिपो वा तेषां मध्ये यो ग्रहः क्रूरभावः ॥
तत्तद्भावेशस्याधिशत्रुग्रहो वा यो वा खेटो बिन्दुशून्यर्क्षयुक्तः ।
तत्तत्पाके मूर्त्तिभावादिकानां नाशं ब्रूयाद् दैववित्प्राश्निकश्च" इति ॥ ४७–४८ ॥

सूर्य स्थिरबुद्धि, चन्द्रमा चञ्चल, मङ्गल क्रूरमति, बुध मिश्रस्वभाव, गुरु कोमलमति, शुक्र लघुबुद्धि और शनि तीक्ष्ण प्रकृति है, ऐसा पण्डितोंने कहा है ।

चर, स्थिर और द्विस्वभाव राशिसे क्रमसे ११, ९, ७ इन स्थानोंमें रहने वाले ग्रह या उनके स्वामी यदि खरेश या गुलिकस्थित राशिका स्वामी हों तो वे उन भावोंके बाधक होते हैं । (सु० शा० कार) ॥ ४७–४८ ॥

अथ सूर्यादिभ्यः फलविशेषचिन्ता ।

सूर्यादात्मपितृप्रभावनिरुजाशक्तिश्रियश्चिन्तयेत
चेतोबुद्धिनृपप्रसादजननीसम्पत्करश्चन्द्रमाः ॥
सत्त्वं रोगगुणानुजावनिसुतज्ञातीर्धरासूनुना
विद्याबन्धुविवेकमातुलसुहृत्त्वक्कर्मकृद्बोधनः ॥ ४९ ॥
प्रज्ञानित्यशरीरपुष्टितनयज्ञानानि वागीश्वरात्
पत्नीवाहनभूषणानि मदनव्यापारसौख्यं भृगोः ॥
आयुर्जीवनमृत्युकारणविपत्सम्पत्प्रदाता शनिः
सर्पेणैव पितामहं तु शिखिना मातामहं चिन्तयेत् ॥ ५० ॥

इदानीं कस्माद्ग्रहात्किं विचारणीयमित्युच्यते । आत्मनः = स्वशरीरस्य, पितुर्जनकस्य, प्रभावः = पराक्रमस्तस्य, नैरुज्यं = आरोग्यं तस्य, आशक्तिर्वस्त्वविच्छेदस्तस्य, श्रियः = सम्पदस्तासां सूर्याद्विचारः कर्त्तव्यः । चेतः = मनः, बुद्धिः = क्षमता ( व्यावहारिकं ज्ञानमिति ) नृपाणां प्रसादः = प्रसन्नता, जननी = माता, सम्पदैश्वर्यमित्येतेषां करः = कर्त्ता चन्द्रमाः । एषां विचारश्चन्द्रतः कर्त्तव्यः । सत्वं = शौर्य्यम् , रोगः, गुणाः, अनुजाः=भ्रातरो भगिन्यश्च, अवनिः = भूः, सुताः = पुत्राः पुंत्र्यश्च, ज्ञातयो दायादा एतान्धरासूनुना = मङ्गलेन चिन्तयेत् । विद्यायाः, बन्धूनां, विवेकस्य, मातुलः = जननीसहोदरस्तस्य, सुहृदो मित्राणि तेषाम् , त्वचः, कर्म्म = कर्त्तव्यं तस्य चैतेषां कृत्कर्त्ता बोधनः = बुधो भवति । एषां विचारो बुधात् कर्त्तव्यः । प्रज्ञा = बुद्धिः, नित्यशरीरपुष्टिः = स्वास्थ्यम , तनयाः = आत्मजाः, ज्ञानान्यध्यात्मकानि तानि वागीशात् = बृहस्पतेश्चिन्तयेत । पत्नी = स्त्री, वाहनानि=गजाश्वादयः, भूषणान्यलङ्करणानि, मदनः = कामः, व्यापारः=वाणिज्यं, सौख्यञ्चैतानि भृगोः=शुक्राच्चिन्तनीयानि । आयुः, जीवनम् ( जीविका ), मृत्युकारणम् , विपत् ( दुःखम् ), सम्पत् ( सुखम् ) एतेषां प्रदाता शनिः । शनेरेषां विचारः कर्त्तव्यः । पितामहः=पितुः पिता तं सर्पेण = राहुणा चिन्तयेदर्थात्पितामहस्य विचारो राहुणा सहापेक्ष्यते । मातामहं=मातुर्जनकं शिखिना=केतुना चिन्तयेत् । केतोः सकाशान्मातामहस्य विचारो विधेय इति ।

निर्दिष्टानां भावानामुक्तग्रहाः कारकत्वेन गृह्यन्तेऽतस्तेषां शुभाशुभबलाद्भावानामपि शुभाशुभं वाच्यमिति फलितम् ॥ ४९–५० ॥

( १ ) सूर्यसे-पिता, आत्मा, प्रताप, आरोग्यता, आशक्ति और लक्ष्मी का विचार करे ।
( २ ) चन्द्रमासे-मन, बुद्धि, राजाकी प्रसन्नता, माता और धनका विचार करे ।
( ३ ) मङ्गलसे-पराक्रम, रोग, गुण, भाई, भूमि, शत्रु और जातिका विचार करे ।
( ४ ) बुधसे-विद्या, बन्धु, विवेक, मामा, मित्र और वचनका विचार करे ।
( ५ ) बृहस्पतिसे-बुद्धि, शरीरपुष्टि, पुत्र और ज्ञानका विचार करे ।
( ६ ) शुक्रसे-स्त्री, वाहन, भूषण, कामदेव, व्यापार, और सुखका विचार करे ।
( ७ ) शनिसे-आयु, जीवन, मृत्युकारण, विपत् और सम्पत्का विचार करे ।

राहुसे-पितामह ( पिताका पिता ), केतुसे-मातामह-(नाना) का विचार करे॥४९-५०॥

## अथ ग्रहाणां भावकारकत्वम् ।

द्युमणिरमरमन्त्री भूसुतः सोमसौम्यौ गुरुरिनतनयारौ भार्गवो भानुपुत्रः ॥
दिनकरदिविजेज्यौ जीवभानुज्ञमन्दाः सुरगुरुरिनसूनुः कारकाः स्युर्विलग्नात् ॥५१॥

इदानीं लग्नादिद्वादशभावानां कारकग्रहा उच्यन्ते । विलग्नाद्द्वादशभावानां क्रमशः सूर्यः । गुरुः । कुजः । चन्द्रो बुधश्च । गुरुः । शनिः कुजश्च । शुक्रः । शनिः । सूर्यो गुरुश्च । गुरुः सूर्यो बुधः शनिश्च । गुरुः । शनिः एते कारकाः स्युः । लग्नादीनां विचारस्तत्तत्कारकग्रहाद्भवति । अत्र पराशरेणैकैकभावस्यैकैको ग्रहः कारकोऽभिहितस्तथा तद्वचनम्-

"सूर्यो गुरुः कुजः सोमो गुरुर्भौमो भृगुः शनिः ।
गुरुश्चन्द्रसुतो जीवो मन्दश्च भावकारकाः" इति ॥ ५१ ॥

द्वादश भावके कारक ये हैं—सूर्य लग्नका, बृहस्पति धन-भावका, मङ्गल सहजका, चन्द्र और बुध सुखका, बृहस्पति पुत्रका, शनि और मङ्गल शत्रुका, शुक्र जायाका, शनि मृत्युका, सूर्य और बृहस्पति धर्मका, बृहस्पति-सूर्य बुध और शनि कर्मका, बृहस्पति लाभका और शनि व्ययका कारक हैं ॥ ५१ ॥

### भावानां कारकज्ञानचक्रम् ।

| भावाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| कारकाः | सू. | बृ. | मं. | चं. बु. | बृ. | श. मं. | शु. | श. | सू. बृ. | सू. बु. बृ. श. | बृ. | श. |

( १ ) पितृप्रतापारोग्याणां मनःशुद्धेः विचारणा ।
बलाशुमानतो बुद्धेः कार्या वर्यैर्दिवाकरात् ॥ १ ॥

( २ ) धवलचामरकीर्तिदयामनःसुखकलाजननीमनसामपि ।
विधुबलाबलयोर्पविमर्शतः कृतिकलानिपुणः सुखमादिशेत् ॥ २ ॥

( ३ ) पराभवाद्बाहवसाहसानि सेनाधिपत्यं प्रभुताग्रहत्वम् ।
पराक्रमत्वं करवालकुन्तप्रहारविख्यातिमहीं महीजात् ॥ ३ ॥

( ४ ) विनयबन्धुमातुलसन्ततिप्रवरकाव्यपटुत्वमलं बुधात् ।
गणितवेदविनोदकलादिकं प्रवरवाक्मनःशुचिमादिशेत् ॥ ४ ॥

( ५ ) वचनपटुत्वतुष्टमसौख्यं तन्त्रविचारनृपालविनोदम् ।
सन्ततिसौख्यमलं निजमार्गज्ञानसुतादिकं गुरुतश्च ॥ ५ ॥

( ६ ) संगीतललितलवङ्गमाल्यप्रकाशकान्तारतिगीतवाद्यम् ।
कलत्रसौन्दर्यविनोदविलासकलानि वीर्यमपि कवेः सकाशात् ॥ ६ ॥

( ७ ) क्लेशमोहनिधनानिलपीडा दुर्बलत्वपरवञ्चनशक्तिः ।
मन्दतो निधनरोगविकारो यौवनं च खलु जीवनवृत्तिः ॥ ७ ॥

अथ ग्रहाणां स्थानविशेषे शुभाशुभप्रदता ।

कामावनीनन्दनराशियाताः सितेन्दुपुत्रामरवन्द्यमानाः ।
अरिष्टदास्तेऽखिलजातकेषु सदाऽष्टमस्थः शनिरिष्टदः स्यात् ॥ ५२ ॥

इदानीं स्थानपरत्वेन केचिदरिष्टदा ग्रहा उच्यन्ते । सितेन्दुपुत्रामरवन्द्यमानाः = शुक्र-बुध-बृहस्पतयः कामावनीनन्दनराशियाताः = सप्तम-चतुर्थ-पञ्चमभावेषु स्थिता भवन्ति चेत्तदा ते अखिलजातकेषु = सकलेषु जातकेषु अरिष्टदाः कथिताः । अत्र शुक्रः सप्तमस्थो बुधश्चतुर्थस्थो बृहस्पतिः पञ्चमस्थोऽरिष्टदो भवतीति बोद्धव्यम् । शनिरष्टमस्थः सदेष्टदः स्यात् । अष्टमभावस्थितः शनिः शुभकरो भवति ।

एतद्विषये मन्त्रेश्वरः फलदीपिकायां स्वमतमुपन्यस्तवांस्तद्यथा—

धर्मे सूर्यः शीतगुर्बन्धुभावे शौर्ये भौमः पञ्चमे देवमन्त्री ।
कामे शुक्रश्चाष्टमे भानुपुत्रः कुर्यात्तस्य क्लेशमित्याहुरन्ये ॥ इति ॥

Notes—कामावनीनन्दनराशिगतानां शुक्रबुधगुरूणां भावजं फलं शुभं तथाष्टमस्थस्य शनेर्भावफलमशुभमेव भवतीत्यपि चिन्त्यम् ॥ ५२ ॥

**शुक्र, बुध और बृहस्पति क्रमसे सातवें, चौथे और पाँचवें भावमें प्राप्त हों तो प्रत्येक जातक में अरिष्टकारक होते हैं। शनि अष्टम भावमें होनेपर सर्वदा मनोरथ पूरा करता है ॥**

अथ सूर्यादीनां स्वरूपाणि ।

प्रतापशाली चतुरस्रदेहः श्यामारुणाङ्गो मधुपिङ्गलाक्षः ।
पित्तात्मकः स्वल्पकचाभिरामो दिवाकरः सत्त्वगुणप्रधानः ॥ ५३ ॥
सञ्चारशीलो मृदुवाग्विवेकी शुभेक्षणश्चारुतरस्थिराङ्गः ॥
सदैव धीमांस्तनुवृत्तकायः कफानिलात्मा च सुधाकरः स्यात् ॥ ५४ ॥
क्रूरेक्षणस्तरुणमूर्त्तिरुदारशीलः पित्तात्मकः सुचपलः कृशमध्यदेशः ।
संरक्तगौररुचिरावयवः प्रतापी कामी तमोगुणरतस्तु धराकुमारः ॥ ५५ ॥
दूर्वादलद्युतितनुः स्फुटवाक् कृशाङ्गः स्वामी रजोगुणवतामतिहास्यलोलः ।
हानिप्रियो विपुलपित्तकफानिलात्मा सद्यः प्रतापविभवः शशिजश्च विद्वान् ॥५६॥
बृहदुदरशरीरः पीतवर्णः कफात्मा सकलगुणसमेतः सर्वशास्त्राधिकारी ।
कपिलरुचिकचाक्षः सात्त्विकोऽतीव धीमान्, अलघुनृपतिचिह्नः श्रीधरो देवमन्त्री॥
असितकुटिलकेशः श्यामसौन्दर्यशाली समततरुचिराङ्गः सौम्यदृक् कामशीलः ।
अतिपवनकफात्मा राजसः श्रीनिधानः सुखबलसुगुणानामाकरश्चासुरेज्यः ॥ ५८ ॥
काठिन्यरोमावयवः कृशात्मा दूर्वासिताङ्गः कफमारुतात्मा ।
पीनद्विजश्चारुपिशङ्गदृष्टिः सौरिस्तमो बुद्धिरतोऽलसः स्यात् ॥ ५९ ॥

इदानीं ग्रहाणां स्वरूपाण्युच्यन्ते । सूर्यः—चतुरस्रदेहः=चतुष्कोणशरीरो यावद्दीर्घस्तावदेव विस्तर इति । अन्यत्स्पष्टम् ।

चन्द्रः—सञ्चारशीलः = चञ्चलः, तनुवृत्तकायः=लघुगोलाकारशरीरः । अन्यत्स्पष्टम् ।

कुजः—क्रूरेक्षणः = पापदृक्, तरुणमूर्त्तिर्युवाशरीरः । अन्यत्स्पष्टम् ।

बुधः—दूर्वादलद्युतितनुः = दूर्वादलसदृशहरितवर्णशरीरः । हानिप्रियः=हानिरेव प्रिया यस्य सः = नष्टप्रियः । अन्यत्स्पष्टम् ।

गुरुः—बृहदुदरशरीरः = बृहद्दीर्घमुदरं शरीरं च यस्य तथा : कपिलरुचिकचाक्षः = कपिला रुचिः, कपिलाः कचाः=केशाः, कपिले अक्षिणी=नेत्रे च यस्य तथा । ईषत्पिङ्गलकान्तिवेशचक्षुष्मान् । अलघुनृपतिचिह्नः = महाराजलक्षणः । अन्यत्स्पष्टम् ।

शुक्रः—समततरुचिराङ्गः = समततं = तुल्यदैर्घ्यविस्तारं, रुचिरं=मनोज्ञश्चाङ्गं यस्येति । अन्यत्स्पष्टम् ।

शनिः—काठिन्यरोमावयवः = कठिनलोमवान् कठिनावयववांश्च । पीनद्विजः = स्थूलदन्तः । अन्यत्सुगमम् ।

तमः=राहुः—बुद्धिरतः = बुद्धिशीलोऽलसः = दीर्घसूत्री चेति ।

प्रयोजनश्च—जन्मनि बलीयान् ग्रह आत्मानुरूपं जातकं करोति ॥ ५३-५९ ॥

सूर्य—प्रतापशाली, चतुरस्र, श्यामयुक्तलाल अङ्गवाला, मधुके सदृश पीले नेत्रवाला, पित्तप्रकृति, थोड़े बालसे सुन्दर और सत्त्वगुण-प्रधान है ॥ ५३ ॥

चन्द्रमा—संचारशील, मृदुवाणीवाला, विवेकी, शुभदृष्टिवाला, रमणीय स्थिर अङ्गवाला, सदा बुद्धिमान्, गोलशरीरवाला, कफ और वात प्रकृतिवाला है ॥ ५४ ॥

मङ्गल—पापदृष्टि, युवाशरीर, उदारशील, पित्त प्रकृतिवाला, चञ्चल, पतली कमर, लालसे युक्त गौर रुचिर अङ्ग, प्रलापी, कामी और तमो गुणी है ॥ ५५ ॥

बुध—दूबके सदृश हरितवर्ण शरीरवाला, स्पष्ट वक्ता, पतला शरीर, रजो गुणवाले का स्वामी, हास्यमें अत्यन्त प्रिय, हानिके प्रिय, सुन्दर शरीर, पित्त-कफ और वातप्रकृतिवाला, सद्यः प्रताप विभवशाली और विद्वान् है ॥ ५६ ॥

बृहस्पति—लम्बा पेट और शरीरवाला, पीतवर्ण, कफप्रकृतिवाला, समस्त गुणोंसे युक्त, सब शास्त्रके अधिकारी, कपिल रङ्गके बाल तथा नेत्रवाला, सात्विक, अत्यन्त बुद्धिमान्, बड़े राजचिह्नोंसे सम्पन्न, और लक्ष्मीको धारण करनेवाला है ॥ ५७ ॥

शुक्र—काले और टेढ़े बालवाला, श्यामवर्ण, सुन्दरतायुक्त, समरुचिर अङ्गवाला, शुभदृष्टि, कामी, विशेष वात-कफ प्रकृतिवाला, राजसस्वभाव, लक्ष्मीका स्थान, सुख, बलों और गुणों का समूह है ॥ ५८ ॥

कठिन रोमावलीवाला, कृशाङ्ग, दूर्वाके सदृश श्यामवर्ण, कफ और वात प्रकृतिवाला, मोटे दांत, सुन्दर पीले आँखवाला, तामस बुद्धि और आलसी है ॥ ५९ ॥

### इतरयोगे ग्रहाणां वृद्धिमत्ता ।

अर्केण मन्दः, शनिना महीसुतः, कुजेन जीवो गुरुणा निशाकरः ॥
सोमेन शुक्रोऽसुरमन्त्रिणा बुधो बुधेन चन्द्रः खलु वर्द्धते सदा ॥ ६० ॥

इदानीं ग्रहाणां द्वययोगे वृद्धिमत्तोच्यन्ते । अर्केण = सूर्येण सह मन्दः = शनिः सदा वर्द्धते । सूर्यशन्योर्योगे शनेरस्तदोषो न भवति किन्तु तदानीं शनिर्बलीयान् भवति । एवं शनिना सह महीसुतः = मङ्गलो वर्द्धते । शेषं स्पष्टमिति ॥ ६० ॥

सूर्यसे शनि, शनिसे मंगल, मङ्गलसे बृहस्पति, बृहस्पतिसे, चन्द्रमा, चन्द्रमासे शुक्र, शुक्रसे बुध, बुधसे चन्द्रमा सदा बढ़ते हैं। अर्थात् सूर्यके साथ शनिका बल बढ़ता है। शनि के साथ मङ्गलका बल बढ़ता है। एवं मङ्गलके साथ गुरुका, गुरुके द्वारा चन्द्रमाका, चन्द्रमा के द्वारा शुक्रका शुक्रके द्वारा बुधका और बुधके द्वारा चन्द्रमाका बल बढ़ता है ॥ ६० ॥

### अथ ग्रहाणां स्थानबलविशेषः ।

स्वोच्चस्वकीयभवनस्वदृगाणहोरावारांशकोदगयनेषु दिनस्य मध्ये ।
राशिप्रवेशसमये सुहृदंशकादौ मेषूरणे दिनमणिर्बलवानजस्रम् ॥ ६१ ॥

चन्द्रः कर्किणि गोपतौ निजदिनद्रेक्काणहोरांशके
राश्यन्ते शुभवीक्षणे निशि सुखे याम्यायने वीर्यवान् ॥
इन्दुः सर्वकलाधरो यदि बली सर्वत्र सन्धि विना
सर्वव्योमचरेक्षितस्तु कुरुते भूपालयोगं नृणाम् ॥ ६२ ॥

आरः स्ववारनवभागदृगाणवर्गे मीनालिकुम्भमृगतुम्बुरुयामिनीषु ।
वक्रे च याम्यदिशि राशिमुखे बलाढ्यो मीने कुलीरभवने च सुखं ददाति ॥६३॥
कन्यानृयुग्मभवने निजवारवर्गे चापे विना रविमहर्निशमिन्दुसूनुः ।
सौम्यायने च बलवानपि राशिमध्ये लग्ने सदा यदि यशोबलवृद्धिदः स्यात् ॥६४॥
मीनालिचापकटके निजवर्गवारे मध्यन्दिनोदगयने यदि राशिमध्ये ।
कुम्भे च नीचभवनेऽपि बली सुरेज्यो लग्ने सुखे च दशमे बहुवित्तदः स्यात् ॥६५॥
स्वोच्चस्ववर्गदिवसे यदि राशिमध्ये शत्रुव्ययानुजगृहे हिबुकेऽपराह्णे ।
युद्धे च शीतकरसङ्गमवक्रचारे शुक्रोऽरुणस्य पुरतो यदि शोभनः स्यात् ॥ ६६ ॥
मन्दस्तुलामकरकुम्भगृहे कलत्रे याम्यायने निजदृगाणदिने दशायाम् ।
अन्ते गृहस्य समरे यदि कृष्णपक्षे वक्रः समस्तभवनेषु बलाधिकः स्यात् ॥ ६७ ॥
मेषालिकुम्भतरुणीवृषकर्कटेषु मेषूरणे च बलवानुरगाधिपः स्यात् ॥
कन्यावसानवृषचापधरे निशायामुत्पातकेतुजनने च शिखी बली स्यात् ॥ ६८ ॥
प्रोक्तप्रकारप्रबलान्विता ये मूलं गतास्ते विबला भवन्ति ।
भावेषु योगेषु दशाफलेषु न सम्यगुक्तानि फलानि सन्ति ॥ ६९ ॥

इदानीं ग्रहाणां स्थानविशेषेण प्राबल्यमुच्यते—

सूर्यः—स्वकीयोच्चे ( र॰।१०° ), स्वराशौ ( रा॰ ५ ) स्वदृगाणे, स्वहोरायान्, स्ववारे, स्वनवांशे, उत्तरायणे मध्यन्दिने, राश्यादौ, मित्रस्य नवांशादौ, लग्नाद्दशभावे च बलवान्भवति ।

चन्द्रः—कर्कराशौ ( स्वगृहे ), वृषे ( उच्चे ), स्वदिने ( सोमे ), स्वद्रेष्काणे, स्वहोरायाम् , स्वनवांशे, राश्यन्ते (नवमनवांशे) शुभग्रहावलोकिते, रात्रौ, लग्नाच्चतुर्थे भावे, दक्षिणायने ( कर्कादिराशिषट्के ) वीर्यवान् = प्रबलो भवति । अथ यदत्र राश्यन्त इत्युक्तं तत्कर्कवृश्चिकमीनान्तं विहायैव। तदुच्यते-सन्धिं विनाः कटकालिमीनभान्तं ( अ. १ श्लोक २२ ) विना सर्वकलाधरः=पूर्णबिम्बः सर्वत्र बली भवति । अयमिन्दुश्चन्द्रो यदि सर्वव्योमचरेक्षितः = अखिलग्रहावलोकितो भवति तदा नृणां = जनिमतां भूपालयोगं कुरुते । पूर्णबलश्चन्द्रः सकलग्रहनिरीक्षमाणो राजयोगं करोतीत्यर्थः ।

आरः = मङ्गलः—स्ववारे ( भौमे ), नवमांशे, स्वदृक्काणे, स्ववर्गे, मीन-वृश्चिक-कुम्भ-मकर-मेष-राशिषु गतो रात्रिषु, वक्रे, दक्षिणदिशि, राश्यादौ च बलाढ्यो भवति । तथा लग्नाद्दशमे भावे कर्कराशौ सत्यपि तत्र वर्त्तमानो जातकस्य सुखं ददाति । दशमे नीचराशावपि शुभद इत्यर्थः । तथोक्तं-"दशमेऽङ्गारको यस्य स जातः कुलदीपकः" इति ।

इन्दुसुनुः = बुधः—कन्यामिथुनराश्योः ( स्वगृहद्वये ), निजदिने ( बुधे ), स्ववर्गे, धनूराशौ, रविं विना ( रविवारे बुधो निर्बल इत्यर्थः ) अहर्निशं = सर्वस्मिन्काले, सौम्यायने ( मकरादिराशिषट्के ) बलवान् भवति । तथा यदि लग्ने जन्मकाले प्रश्ने वा राशिमध्ये ( पञ्चमनवांशगतो भवति ) तदा सदा यशो बलवृद्धिदो भवति ।

सुरेज्यः = बृहस्पतिः—मीनवृश्चिकधनुःकर्कराशौ, स्ववर्गे, स्ववारे ( गुरुवारे ), मध्यन्दिने, उत्तरायणे, राशिमध्ये ( पञ्चमनवांशे ) कुम्भराशौ च बली भवति । तथा लग्ने, सुखे, दशमे च नीचभवनेऽपि=मकरराशौ सत्यपि बहुवित्तदः स्यात् । अर्थात् लग्ने, चतुर्थे, दशमे च नीचस्थोऽपि गुरुः शुभ एव । श्रूयते च —

"किं कुर्वन्ति ग्रहास्सर्वे यस्य केन्द्रे बृहस्पतिः" इति ।

शुक्रः—स्वोच्चे ( मीने ), स्ववर्गे, स्ववारे ( शुक्रदिने ), राशिमध्ये, लग्नात् ६।१२।१।४ भावेषु, अपराह्णे = दिनस्य तृतीयत्र्यंशे, तथा ग्रहयुद्धे, चन्द्रसंयुक्ते, वक्रगतौ च सूर्यस्याग्रतो विद्यमानो यदि भवेत्तदा शोभनः स्यात् ।

मन्दः = शनिः—तुला-( स्वोच्च- ) मकर-कुम्भ ( स्वगृह- ) राशिषु, लग्नात् सप्तमे भावे ( स्वदिशि ), याम्यायने ( कर्कादिषट्के ), स्वद्रेक्काणे, स्वदिने ( शनिवारे ) स्वदशायाम्, समरे = ग्रहयुद्धे राश्यन्ते, तथा यदि कृष्णपक्षे वक्रो भवेत्तदा समस्तभवनेषु = सकलराशिषु बलाधिकः स्यात् ।

उरगाधिपः = राहुः-मेष-वृश्चिक-कुम्भ-कन्या-वृष-कर्कराशिषु, लग्नाद्दशमे भावे च बलवान् भवति ।

शिखी = केतुः—कन्या-मीन वृष-धनूराशिषु, रात्रौ, उत्पातकेतुजनने च बली स्यात् । उत्पातकेतोर्लक्षणमुक्तं वराहेण—

"यः प्रकृतिविपर्यासः प्रायः संक्षेपतः स उत्पातः
क्षितिगगनदिव्यजातो यथोत्तरं गुरुतरो भवति" । उत्पातः ।

"पौर्णिमास्यां तु यदृक्षं तस्मात्पञ्चदशो रविः । रवेर्द्वादशगः केतुः" इति केतुः ।

अथोक्तेषु ग्रहाणां बलेषु वैशिष्ट्यमाह—ये ग्रहाः प्रोक्तप्रकारप्रबलान्विताः = कथितप्रकारबलयुक्तास्ते यदि मूलं गताः = भावानामादिगताः स्युस्तदा ते ग्रहा विबलाः = बलहीना भवन्ति । भावादौ स्थिता ग्रहा विबला भवन्ति, तत्र तत्तद्भावस्य निरंशत्वादित्यर्थः । अतस्तेषां ग्रहाणां भावेषु योगेषु दशाफलेषु चोक्तानि फलानि सम्यक् न सन्तीति वाच्यम् ॥

सूर्य—अपने उच्च राशि, द्रेष्काण, होरा, रविवार, नवांशमें, उत्तरायणमें, दोपहर दिनमें, राशिके आदिमें, मित्रके नवांशादिमें और लग्नसे १० वें भावमें हमेशा बलवान् होता है ॥ ६१ ॥

चन्द्रमा—कर्क राशिमें, वृष राशिमें, अपने दिन-द्रेष्काण-होरा-नवांशमें, राशिके अन्तमें शुभ ग्रहोंसे देखे जानेपर, रात्रिमें, चौथे भावमें, दक्षिणायनमें, बली होता है । ऋक्षसन्धिको छोड़ कर हर जगह पूर्ण-बिम्ब और बली चन्द्रमा यदि प्रत्येक ग्रहोंसे देखा जाता हो तो वह चन्द्रमा मनुष्यों का राजयोग करता है । अर्थात् इस योग में जन्म लेने वाला राजा होता है ॥ ६२ ॥

मङ्गल—अपने वारमें, नवमांसमें द्रेष्काण-वर्गमें, मीन-वृश्चिक-कुम्भ-मकर और मेष राशिकी रात्रिमें, वक्रतापर, दक्षिण दिशामें राशिके आदिमें बली है और दशम भावमें कर्क में रहने पर भी सुख देता है ॥ ६३ ॥

बुध—कन्या और मिथुन राशिमें, अपने दिनमें, अपने वर्गमें, धनु राशिमें, रविवारके अतिरिक्त दिनरात ( सर्वदा ) और उत्तरायणमें, बली होता है । यदि राशिके मध्यका होकर लग्नमें प्राप्त हो तो सदा यश और बलकी वृद्धि करता है ॥ ६४ ॥

बृहस्पति-मीन-वृश्चिक-धन और कर्क राशिमें प्राप्त होने पर, अपने वर्ग और वारमें, मध्य दिनमें, उत्तरायणमें, राशिके मध्यमें, कुम्भमें, बली होता है । नीचमें भी यदि लग्न, चतुर्थ और दशम भावमें प्राप्त हो तो बहुत धन देता है ॥ ६५ ॥

शुक्र—उच्चराशि ( मीन ), अपने वर्ग तथा वारमें, राशिके मध्यमें, षष्ठ-द्वादश-तृतीय और चतुर्थ स्थानमें अपराह्णमें, युद्धके समय, चन्द्रमाके साथ रहने पर और वक्री होनेपर यदि सूर्यके आगे रहे तो शुभ ( बली ) है ॥ ६६ ॥

शनि—तुला-मकर-और कुम्भ गृहमें, सप्तम भावमें, दक्षिणायनमें, अपने द्रेष्काण तथा अपने दिन ( शनिवार ) में, दशामें, राशिके अन्त्यमें संग्राममें, बली है और यदि कृष्णपक्ष में वक्री हो तो समस्त राशिमें बलवान् होता है ॥ ६७ ॥

राहु - मेष, वृश्चिक, कुम्भ, कन्या, वृष और कर्क राशि में, दशम स्थानमें बलवान् है । केतु-मीन-वृष तथा धनुमें, रात्रिमें, उत्पातमें, केतु-उदयमें बली है ॥ ६८ ॥

कहे हुए प्रकारसे ये प्रबल ग्रह हैं ये भावके मूलमें प्राप्त होनेपर विफल होते हैं। अतएव भावमें योगमें दशाफलमें उनके सब फल प्राप्त नहीं होते ॥ ६९ ॥

अथ ग्रहाणामधोमुखत्वादि।

अधोमुखा दिनेशस्य पूर्वषट्कस्थिता ग्रहाः।
अपरार्द्धस्थिताः भानोरूर्ध्वास्याः सुखवित्तदाः ॥ ७० ॥
भानामवस्थानगताः क्रमेण मन्दार्यभौमार्कसितज्ञचन्द्राः ॥
तेषामधःस्थानगतो बलीयान् राहुर्महीमण्डलमूर्ध्नि संस्थः ॥ ७१ ॥

इदानीं ग्रहाणामूर्ध्वाधोमुखत्वनिरूपणपूर्वकस्थितिक्रमो निरूप्यते। दिनेशस्य = सूर्यस्य पूर्वषट्कस्थिताः = प्रथमचक्रार्द्धे वर्त्तमाना ग्रहा अधोमुखा एवं भानोरपरार्द्धस्थिताः = सूर्यस्य द्वितीये चक्रार्द्धे वर्त्तमाना ग्रहा ऊर्ध्वास्याः = ऊर्ध्वमुखा भवन्तीति। अत्रेदमवधेयम्—सूर्यो यत्र भवति तस्मिन् भार्द्धेऽर्थात्सूर्यात् (१।२।३।१२।११।१०) भावेषु वर्त्तमाना ग्रहा अधोमुखाः = क्षीणद्युतयो भवन्ति। तत्र रवेः सान्निध्यवशान्न पूर्णभासो भवन्तीत्यर्थः। तथा परे षट्केऽर्थात्सूर्यात् (४।५।६।७।८।९) भावगता ग्रहा ऊर्ध्वमुखा द्युतिमन्तो भवन्ति। सूर्याद्दूरे वर्त्तमाना ग्रहाश्चमत्कृता विभासन्तेऽतस्ते (ऊर्ध्वमुखाः) सुखवित्तदा भवन्ति। अर्थादेवाधोमुखा निस्तेजस्का अशुभा इति चिन्त्यम्।

अथ ग्रहस्थितिः। भानां = राशीनां नक्षत्राणाञ्चावस्थानं = स्थितिर्यत्र तस्मिन् (राशिचक्रे इत्यर्थः) गताः = वर्त्तमानाः क्रमेणोर्ध्वाधः क्रमेण शनि-गुरु-मङ्गल-सूर्य-शुक्र बुध-चन्द्रा वर्त्तन्ते। तेषामधः स्थानगतोऽर्थाचन्द्रो बलीयान्सर्वापेक्षया बलीत्यर्थः (एतद्धि कक्षा बलं वक्तुं शक्यते)। जन्मनि स्थितिक्रमस्था बलन्त इति भावः।

राहुस्थितिनिरूपणम्। राहुः महीमण्डलस्य = भूबिम्बस्य, मूर्ध्नि = छायायां स्थितो भवति। अत्रेदमुक्तं भवति-सूर्यस्य विरुद्धदिशि भूबिम्बस्य छाया सूच्याकारा भवति स एव राहुरिति। तथोक्तं तत्रभवता भास्करेण—"राहुः कुभामण्डलगः" इति ॥ ७०-७१ ॥

सूर्यके प्रथम छः राशिमें स्थित ग्रह अधोमुख हैं और सूर्यके द्वितीय छः राशिमें रहने वाले ग्रह ऊर्ध्वमुख हैं, ये सुख, वित्त देते हैं ॥ ७० ॥

अपने २ राशिचक्र (कक्षा-) में गत क्रमसे शनि, गुरु, मङ्गल, सूर्य, शुक्र, बुध और चन्द्रमा वर्त्तमान हैं। इनमें सबसे नीचे रहनेवाला (चन्द्रमा) अधिक बली होता है (इसको कक्षाबल कहना सङ्गत होगा)। राहु पृथिवीबिम्बके शिरपर (छायामें) रहता है ॥७१॥

स्थानविशेषे स्थितिक्रमविशेषे च ग्रहाणां विफलता।

सभानुरिन्दुः शशिजश्चतुर्थे गुरुः सुते भूमिसुतः कुटुम्बे।
भृगुः सपत्ने रविजः कलत्रे विलग्नतस्ते विफला भवन्ति ॥ ७२ ॥

इदानीं कुत्र को ग्रहो विफलो भवतीति निरूप्यते। सभानुरिन्दुः=भानुना सहितः सूर्यसंयुक्तश्चन्द्रो यत्र कुत्रापि राशौ विफलो भवति। अमायां तिथौ सूर्याचन्द्रमसोर्योगस्तत्र निष्प्रभश्च चन्द्रो भवति। शशिजः=बुधः विलग्नतस्तात्कालिकलग्नतश्चतुर्थे भावे। गुरुः = बृहस्पतिः, सुते=पञ्चमे भावे। भूमिसुतः=मङ्गलः, कुटुम्बे=द्वितीयभावे। भृगुः=शुक्रः, सपत्ने=शत्रुगृहे=षष्ठे। रविजः=शनिः कलत्रे=सप्तमे भावे, विफलो भवतीति सर्वत्रानुवृत्तिः। उक्ता ग्रहा उक्तपरिस्थितौ न किमपि स्वीयं सत्त्वफलं कुर्वन्तीति भावः ॥ ७२ ॥

सूर्यके साथ चन्द्रमा, लग्नसे चौथे भावमें बुध, पांचवें भावमें बृहस्पति, दूसरेमें मङ्गल, छठेमें शुक्र और सातवेंमें शनि हों तो विफल होते हैं ॥ ७२ ॥

### अथ दोषापहरणम्।

राहुदोषम्बुधो हन्यादुभयोस्तु शनैश्चरः।
त्रयाणां भूमिजो हन्ति चतुर्णां दानवार्चितः ॥ ७३ ॥
पञ्चानां देवमन्त्री च षण्णां दोषं तु चन्द्रमाः।
सप्तदोषं रविर्हन्याद्विशेषादुत्तरायणे ॥ ७४ ॥

इदानीं दोषापहर्त्तार उच्यन्ते। राहुदोषं = राहोर्दुःस्थानादिजनितदोषं बुधो हन्यान्नाशयतीति। कस्यचिज्जन्मकाले राहुश्चेदशुभस्तत्र यदि बुधो बलीयान् भवति तदाऽसौ राहुकृतं दोषं प्रशमयेदित्यर्थः। एवमेव सर्वत्रोह्यम्। उभयोस्तु = बुधराह्वोर्दोषं तु शनैश्चरो हन्यात्। त्रयाणां = राहु-बुध-शनीनां दोषं भूमिजः=मङ्गलो हन्यात्। चतुर्णां= मङ्गल-बुध-शनि-राहूणां दोषं दानवार्चितः=शुक्रो हन्यात्। पञ्चानां=भौम-बुध=शुक्र-शनि-राहूणां दोषं देवमन्त्री=बृहस्पतिर्हन्यात्। षण्णां दोषं चन्द्रमास्तथा सप्तदोषं=सकलग्रहकृतदोषं रविर्हन्यात्। रविरपि चेदुत्तरायणे भवेत्तदा विशेषादखिलगगनेचरदोषं नाशयति। उत्तरायणे रविर्यतोऽतीव बलवानतो विशेषपदोपादानमिति ॥ ७३-७४ ॥

राहुका दोष बुध नाश करता है। इन दोनोंके दोषोंको शनैश्चर नाश करता है। इन तीनोंके दोषोंको मंगल नाश करता है। इन चारोंके दोषोंको शुक्र नाश करता है। इन पांचोंके दोषोंका नाश बृहस्पति करता है। इन छवोंके दोषोंका संहार चन्द्रमा करता है। सात दोषोंका हननसूर्य करता है। सूर्य यदि उत्तरायणमें हो तो विशेष रूपसे दोषोंका नाश करता है।

### अथ ग्रहाणां पीडाकरणप्रकारः।

सदाऽग्निरोगज्वरवृद्धिदीपनक्षयातिसारादिकरोगसङ्कुलम्।
नृपालदेवावनिदेवकिङ्करैः करोति चित्तव्यसनं दिवाकरः ॥ ७५ ॥
पाण्डुदोषजलदोषकामलापीनसादिरमणीकृतामयैः।
कालिकासुरसुवासिनीगणैराकुलं च कुरुते तु चन्द्रमाः ॥ ७६ ॥
पीनबीजकफशास्त्रपावकग्रन्थिरुग्व्रणदरिद्रजामयैः।
वीरशैवगणभैरवादिभिर्भीतिमाशु कुरुते धरासुतः ॥ ७७ ॥
गुह्योदराद्दरयसमीरकुष्ठमन्दाग्निशूलग्रहणीरुगाद्यैः।
बुधादिविष्णुप्रियदासभूतैरतीव दुःखं शशिजः करोति ॥ ७८ ॥
आचार्यदेवगुरुभूसुरशापदोषैः शोकं च गुल्मरुजमिन्द्रगुरुः करोति।
कान्ताविकारजनिमेहरुजा सुराद्यैः स्वेष्टाङ्गनाजनकृतैर्भयमासुरेज्यः ॥ ७९ ॥
दारिद्यदोषनिजकर्मपिशाचचौरैः क्लेशं करोति रविजः सह सन्धिरोगैः।
कण्डूमसूरिरिपुकृत्रिमकर्मरोगैः स्वाचारहीनलघुजातिगणैश्च केतुः ॥ ८० ॥
करोत्यपस्मारमसूरिरज्जुक्षुद्दृक्कृमिप्रेतपिशाचभूतैः।
उद्बन्धनेनारुचिकुष्ठरोगैर्विधुन्तुदश्चातिभयं नराणाम् ॥ ८१ ॥

इदानीमशुभकारकाणां ग्रहाणां पीडाप्रकारा उच्यन्ते—

दिवाकरः=सूर्यः—अग्निरोग-ज्वरवृद्धि-ज्वलन-क्षय-( यक्ष्मा ) अतिसाररोगैस्तथा नृपालाः = राजानः, देवाः = देवताः, अवनिदेवाः = ब्राह्मणाः, किङ्कराः = भृत्यास्तैः सदा चित्तव्यसनं = मनोमालिन्यं करोति ॥ ७५ ॥

चन्द्रमाः—पाण्डुरोग-जलदोष-कामलारोग-पीनसरोग-स्त्रीजनितरोगैस्तथा कालिका देवी, सुराः = देवाः, सुवासिन्यः = स्त्रियस्तासां गणैराकुलं = व्यथितं करोति ॥ ७६ ॥

धरासुतः = मङ्गलः—पीनबीज-कफ-शस्त्र-पावक-ग्रन्थिरुक्-व्रण-दारिद्योद्भूतै रोगैस्तथा वीराः = शूराः, शैवगणाः = कपालिनः, भैरवाः = भूतादयस्तैः आशु = शीघ्रमेव भीतिं = भयं कुरुते ॥ ७७ ॥

शशिजः = बुधः—गुह्यरोगेण, उदररोगेण, अदृश्य-( रहस्यदेश-) रोगेण, वायुरोगेण, कुष्टरोगेण, मन्दाग्निना, शूलरोगेण, संग्रहिणीरोगेण च तथा बुधादयः=मनीषिणः, विष्णुप्रियदासाः=वैष्णवास्तपस्विनः, भूताः=प्रेतास्तैरतीव दुःखं कारयति ॥ ७८ ॥

इन्द्रगुरुर्बृहस्पतिः—आचार्यः = गुरुः, देवः, गुरुः = श्रेष्ठजनः, भूसुराः = ब्राह्मणास्तेषां शापदोषैः = दुर्वाक्यदोषैः शोकं, तथा गुल्मरोगं च करोति ।

आसुरेज्यः = शुक्रः—स्त्रीविकृतिजनितप्रमेहरोगेण, सुराद्यैर्देवादिभिः स्वाभिलषितस्त्रीजनितैर्भयैश्च दुःखं करोति ॥ ७९ ॥

रविजः = शनिः—दारिद्र्यदोषेण, स्वकर्मदोषेण, पिशाचैश्चौरैः, सन्धिरोगैश्च सह क्लेशं करोति केतुः—कण्डूरोग-( खूजली ) मसूरि—( शीतला ) शत्रुकृत-स्वकर्मकृत-रोगैस्तथास्वाचारहीनेन=निजाचारत्यागेन लघुजातिगणैर्नीचजातिभिश्च दुःखं ददाति ॥ ८० ॥

विधुन्तुदः = राहुः—अपस्मारः = मृगीरोगः, मसूरिः = शीतला ( चेचक ), रज्जुः= बन्धनं (फाँसी), क्षुत्=सङ्क्रामकरोगः, दृक्=नेत्ररोगः, कृमिरोगश्चैतैः रोगैः, प्रेतपिशाचभूतैस्तथोद्वन्धनेन ( कारागारेण ), अरुचिरोगेण, कुष्टरोगेण च नराणां भयं करोति ॥ ८१ ॥

सूर्य-अशुभ हो तो सदा अग्निरोग, ज्वरवृद्धि, जलन, क्षय, अतिसार, आदि रोगों से एवं राजा, देव, ब्राह्मण और नौकरोंसे चित्तमें व्यसन उत्पन्न करता है ॥ ७५ ॥

चन्द्रमा-अशुभ हो तो पांडुदोष, जलदोष, कामला, पीनस, आदि रोग, स्त्रीसे उत्पन्न रोगोंसे और कालिका, असुर और स्त्रीगणसे व्याकुल करता है ॥ ७६ ॥

मंगल-अशुभ हो तो पीनबीज, कफ, शस्त्र, अग्नि, ग्रन्थिरोग, घाव, दरिद्रज रोगों से वीर, शैवगण और भैरवादिकसे शीघ्र भय देता है ॥ ७७ ॥

बुध-अशुभ हो तो गुह्य, उदर, नेत्र, वायु, कुष्ठ, मंदाग्नि, शूल, ग्रहणी रोगोंसे पीडित, विष्णुप्रियदासोंसे विशेष दुःख करता है ॥ ७८ ॥

बृहस्पति-दूषित हो तो आचार्य, देवता, गुरु और ब्राह्मणोंके शापदोषसे शोक और गुल्म रोग करता है। शुक्र-अनिष्ट हो तो स्त्रीके विकारसे प्रमेह रोग हो। असुरोंसे तथा अपनी खास स्त्रीजनका किया भय होता है ॥ ७९ ॥

शनि-अशुभ हो तो दरिद्रताके दोष, निजकर्म, पिशाच और चोरोंसे क्लेश उत्पन्न करता है। केतु-दूषित हो तो संधि रोग, खुजली, शीतला, दाद, शत्रुकृत रोगोंसे अपने आचारसे रहित होने से तथा नीच जातियोंसे क्लेश देता है ॥ ८० ॥

राहु-अनिष्ट हो तो मनुष्योंको मृगी, शीतला, फांसी, संक्रामकरोग, नेत्ररोग, कृमिरोग प्रेत, पिशाचोंसे भय होता है और कारागारसे, अरुचिसे, कुष्ठरोगसे भय करता है ॥ ८१ ॥

## अथ राशौ ग्रहफलपरिपाककालः ।

आद्यन्तमध्यभवनोपगता नभोगाश्चादित्यभूमितनयौ शनिशीतरश्मी ।
जीवासुरेन्द्रसचिवौ फलदाः क्रमेण तारासुतः सकलकालफलप्रदः स्यात् ॥८२॥

अथ ग्रहाणां राशौ फलविपाककालमाह । आदित्यः = रविः, भूमितनयः = मङ्गलस्तौ, शनिशीतरश्मी = शनिचन्द्रौ, जीवासुरेन्द्रसचिवौ=गुरुशुक्रौ चैते ग्रहाः क्रमेण आद्यन्तमध्यभवनोपगताः फलदा भवन्ति । एतदुक्तं भवति—सूर्यभौमौ राश्यादौ फलदौ, शनिचन्द्रौ

राश्यन्ते, गुरुशुक्रौ राशिमध्ये फलदौ भवतः। तथा तारासुतः = बुधः सकलकालफलप्रदः स्यात्। बुधः समस्तराशौ तद्राशिजन्यं फलं करोति। तथाचोक्तं रामाचार्येण—

"राश्यादिगौ रविकुजौ फलदौ, सितेज्यौमध्ये, सदाशशिसुतश्चरमेऽब्जमन्दौ" इति ॥

सूर्य और मंगल राशिके आदिमें, शनि और चन्द्रमा मध्यमें, बृहस्पति और शुक्र अन्तमें फल देते हैं और बुध सम्पूर्ण राशिमें फल देता है ॥ ८२ ॥

## अथ धातुजरोगे धातुनाथोपासना।

**यद्धातुकोपजनिताखिलरोगशान्त्यै तन्नाथमाशु जपतर्पणहोमदानैः।**
**सम्पूज्य रोगभयशोकविमुक्तचित्ताः सर्वे नराः सुखयशोबलशालिनः स्युः ॥८३॥**

इदानीं शान्तिरुच्यते। यस्य ग्रहस्य धातुकोपेन जनिताः = समुत्पन्ना अखिला रोगाः (पूर्वोक्ताः) तेषां शान्त्यै = रोगाणां विमुक्त्यै तन्नाथं = रोगकर्तृधातुपतिं ग्रहं जपेन, (तत्तद्ग्रहमन्त्रजपेन) तर्पणेन, होमेन, दानेन च आशु = शीघ्रं सम्पूज्य सर्वे नरा रोगभयशोकविमुक्तचित्ताः = रोगाणां भयजनितो यः शोकस्तस्माद्विमुक्तं चित्तमन्तःकरणं येषां ते तथा सन्तः सुखयशोबलशालिनः स्युः। अरिष्टदग्रहं विधिना सम्पूज्य विमुक्तरोगाः शीघ्रमेव सुखमेधन्त इत्यर्थः ॥८३॥

जिस धातुके कोपसे रोग होते हैं, उसकी शान्तिके निमित्त उसके स्वामीके प्रसन्नार्थ शिघ्र जप-तर्पण—होम—दानोंसे अच्छी तरह पूजाकर सब मनुष्य रोग, शोक, भय और चिन्तासे रहित होकर सुख, यश और बलसे युक्त होते हैं। (सु० शा० कार) ॥ ८३ ॥

## अथ ग्रहाणां बाल्याद्यवस्थानिरूपणम्।

**बालः कुमारोऽथ युवा च वृद्धो मृतश्च राशावयुजि क्रमेण।**
**त्रिंशल्लवैर्व्यत्ययतः समे स्युरेकैकशोंऽशाः पुनरेव कार्याः ॥ ८४ ॥**

इदानीं ग्रहाणां बालाद्यवस्था निरूप्यन्ते। अयुजि=विषमे राशौ क्रमेण बालः, कुमारः, युवा, वृद्धः, मृतश्चैताः पञ्चावस्था ज्ञेयाः। पुनः समे व्यत्ययतः = वैपरीत्येन मृतादिकाः पञ्चावस्था भवन्ति। अथैकस्मिन् राशावासां विभागः किमात्मक इति सन्देह आह। त्रिंशल्लवैरेकैकशोंऽशाः कार्याः। पञ्चापि खण्डानि समविभागेन त्रिंशद्भागैः सम्पद्यन्ते तदा षड्भिरंशैकं खण्डं स्यादिति। विषमराशिषु प्रथमे षडंशा बालः। ततः षडंशाः कुमारः। ततो युवा। ततो वृद्धः। ततो मृतः। समराशौ क्रमेण मृतो वृद्धो युवा कुमारो बालश्चेति पञ्चावस्था भवन्ति। तथोक्तं पराशरेण—

बालो रसांशैरसमे प्रदिष्टस्ततः कुमारो हि युवाऽथ वृद्धः।
मृतः क्रमादुत्क्रमतः समर्क्षे बालाद्यवस्थाः कथिता ग्रहाणाम् ॥

प्रयोजनमप्युक्तं तेनैव—

फलं तु किञ्चिद्वितनोति बालश्चार्द्धं कुमारो यतते न पुंसाम्।
युवा समग्रं त्वचरोऽथ वृद्धः फलं च दुष्टं मरणं मृताख्यः ॥ ८४ ॥

विषम राशिमें ग्रह क्रमसे बाल, कुमार, युवा, वृद्ध और मृत अवस्था तीस अंशोंमें होते हैं। अर्थात् ६ अंसतक बाल, ६ के बाद १२ अंश पर्यन्त कुमार, १२ के बाद १८ अंशतक युवा, १८ के बाद २४ अंसतक वृद्ध, इसके बाद मृत अवस्थामें प्राप्त होते हैं और सम राशिमें ग्रहोंकी पहले मृत, फिर वृद्ध, तब युवा, बाद कुमार, फिर बाल अवस्था छः छः अंशतक रहती है ॥ ८४ ॥

बालाद्यवस्थाचक्रम् ।

| १।३।५।७।९।११ राशिषु | १–६ | ६–१२ | १२–१८ | १८–२४ | २४-३० | अंशाः |
|---|---|---|---|---|---|---|
| अवस्थानामानि | बालः | कुमारः | युवा | वृद्धः | मरणम् | अवस्थाः |
| २।४।६।८।१०।१२ राशिषु | २४–३० | १८–२४ | १२–१८ | ६–१२ | १–६ | अंशाः |

अथ जाग्रदाद्यवस्थाः ।

उच्चांशे स्वनवांशे च जागरूकं वदन्ति हि ।
सुहृन्नवांशकं स्वप्नं सुप्तं नीचारिभांशकम् ॥ ८५ ॥

इदानीं ग्रहाणां जाग्रदाद्यवस्था उच्यन्ते । उच्चांशं स्वनवांशं च जागरूकं वदन्ति । ग्रहो यदुच्चांशे स्वकीयनवांशे च भवेत्तदा तस्य 'जाग्रत्' अवस्था भवति । सुहृन्नवांशकं = मित्रनवांशकं स्वप्नं = स्वप्नावस्थां कथयति । नीचारिभांशकं = नीचांशं शत्रुनवांशं च सुप्तं वदन्ति । नीचे शत्रुनवांशे च ग्रहो यदि स्यात्तदा सुप्तो भवतीति ॥ ८५ ॥

उच्चांशमें तथा अपने नवांशमें ग्रह जागृत् होते हैं ऐसा विद्वान लोग कहते हैं । मित्रके नवांशमें रहनेवाले ग्रह स्वप्न अवस्थाके होते हैं । नीच और शत्रुके नवांशमें ग्रह सुप्त कहलाते हैं ॥ ८५ ॥

अथ ग्रहाणां फलदानकालः ।

शीर्षोदयगतः खेटः पाकादौ फलदो भवेत् ।
पृष्ठोदयस्थः पाकान्ते सदा चोभयराशिगः ॥ ८६ ॥

इदानीं ग्रहाणां राशिपरत्वेन फलदानकाल उच्यते । शीर्षोदयराशिषु (अ.१,श्लो॰१४) गतः खेटः पाकादौ = स्वदशाया आरम्भे फलदो भवेत् । पृष्ठोदयराशिस्थो ग्रहः पाकान्ते= स्वदशाया अन्ते फलदः । तथा चोभयराशिगः=मीनगतो ग्रहः सदा=सर्वस्मिन्काले फलदो भवति । तथोक्तं बृहज्जातके—

"पृष्ठोभयकोदयर्क्षगास्त्वन्तेऽन्तः प्रथमेषु पाकदाः" इति ।

अत्रास्मिन्वचने उभयोदयगे भेदो दृश्यते । तथैवाह गार्गिरपि—

"आद्यन्तमध्यफलदः शिरःपृष्ठोभयोदये । दशाप्रवेशसमये तिष्ठन् वाच्यो दशापतिः" । इति ॥

शीर्षोदय राशिमें प्राप्त ग्रह दशाके आदिमें फल देते हैं । पृष्ठोदय राशिमें प्राप्त ग्रह दशा के अन्तमें फल देते हैं । उभयराशिवाले सदा फल देते हैं ॥ ८६ ॥

समस्तहोराफलसारसान्द्रविराजिते जातकपारिजाते ।
ग्रहक्रियारूपगुणप्रभेदः सङ्कीर्तितः खेटकृपाकटाक्षात् ॥ ८७ ॥

इति नवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते
ग्रहनामस्वरूपगुणभेदाध्यायः ॥ २ ॥

अनेनाध्यायमुपसंहरति । स्पष्टार्थः श्लोकः ॥ ८७ ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता । द्वितीये ग्रहशीलेऽस्मिन्नध्याये पूर्णतां गता ॥ २ ॥

सम्पूर्ण होराफलके सार-तत्त्वसे विराजित जातकपारिजातमें ग्रहोंकी कृपादृष्टिसे ग्रह क्रिया-रूप-गुणके भेदोंसे युत ग्रहनामस्वरूपगुण अध्यायका मैं वर्णन किया ॥ ८७ ॥

इति द्वितीयाध्याये 'विमला' हिन्दीटीका समाप्ता ॥

# अथ वियोनिजन्माध्यायः ॥ ३ ॥

अथेदानीं तृतीयाध्यायो व्याख्यायते : अस्मिन्नध्याये प्रथमं वियोनिजन्म ततो निषेको जन्मविधिश्चेति विषयाः सन्ति । तत्र किं नाम तावद्वियोनिजन्मेत्युच्यते । अखिलानां वियोनीनां मनुष्येतराणां पशुपक्षिचराचराणामुत्पत्तिरेव वियोनिजन्मवाक्येन व्यवह्रियते । तदस्मिन्नध्याये प्रथमं वियोनीनां जन्मविधिर्निरूप्यते, वराहमिहिराचार्यहोरायाम्—

क्रूरग्रहैः सुबलिभिर्विबलैश्च सौम्यैः क्लीबे चतुष्टयगतेत दवेक्षणाद्वा ।
चन्द्रोपगद्विरसभागसमानरूपं सत्त्वं वदेद्यदि भवेत्स वियोनिसंज्ञः ॥ १ ॥

क्रूरग्रहैरिति । जन्मकाले प्रश्नकाले वा क्रूरग्रहैः = सूर्य-कुज-सपापबुध-शनि-क्षीण-चन्द्रैः सुबलिभिर्बलयुक्तैः, सौम्यैः = शुभग्रहैः पापग्रहावशिष्टैर्विबलैर्निर्बलैः, क्लीबे = नपुंसकग्रहे ( शनिबुधयोरन्यतरे ) चतुष्टयगते = केन्द्रवर्त्तिनि । वा तदवेक्षणात् = पापैः सबलैः शुभैरबलैः क्लीबेनेक्षणात् लग्ने क्लीबग्रहावलोकिते इति द्वितीयो योगः, तदा चन्द्रोपगद्विरसभागसमानरूपं = चन्द्र उपगतो यस्मिन् द्विरसभागे ( द्वादशांशे ) तत्समानरूपं सत्त्वं वियोनिं वदेत् । स द्विरसभागो यदि वियोनिसंज्ञो नरातिरिक्तो भवेत्तदैवं वदेदन्यथाऽन्यथैवेति । यदि चन्द्रो मेषस्य द्वादशांशे भवेत्तदा मेषादेर्वृषे वृषमहिषादेः सिंहे सिंहव्याघ्रादेर्जन्म वाच्यमेवं सर्वत्र ज्ञेयम् । तथोक्तं सारावल्याम्—

"क्रूरैः सुबलसमेतैः सौम्यैर्विबलैर्वियोनिभागगते ।
चन्द्रे, शशनी केन्द्रे तदीक्षिते वोदये वियोनिः स्यात् ॥
आधाने जन्मनि वा प्रश्ने वा द्वादशांशके चन्द्रः ।
यस्मिन्व्यवस्थितः स्यात् लग्ने वा तत्समं सत्त्वम्" ॥ इति ॥

Notes—क्षुद्र जन्तूनां सङ्ख्या लग्नगतद्वादशांशवशाज्ज्ञेयाः इति ॥ १ ॥

इस तीसरे अध्यायमें पहले वियोनिजन्मका निरूपण करते हैं । 'वियोनि' इस शब्दसे मनुष्यसे इतर पशु, पक्षी, कीट, जलचर और पेड़ पौधे इत्यादि समझना चाहिये ।

प्रश्न अथवा जन्मके समय चन्द्रमा जिसके द्वादशांशमें वर्त्तमान हो उसी जातिके वियोनिका जन्म कहना चाहिये । जैसे चन्द्रमा चतुष्पदराशिके द्वादशांशमें हो तो चतुष्पदका, जलचरमें हो तो जलचरका । एवं सर्वत्र समझे । उसमें भी विशेष कर राशियोंके अनुरूप अर्थात् मेषके द्वादशांशमें भेंड़, बकरे इत्यादि । वृषमें बैल, भैंसे इत्यादि । इसी तरह सर्वत्र जाने । यह विचार चन्द्रगत द्वादशांश यदि वियोनिका हो तभी करना चाहिये, अन्यथा मनुष्यका जन्म कहे । उक्त हालतमें पापग्रह बली, शुभग्रह निर्बल और नपुंसक ग्रह केन्द्र में रहें तो पहला योग, एवं पापग्रह बली शुभग्रह निर्बल हों और नपुंसक ग्रह लग्न को देखता हो तो वियोनिजन्मका दूसरा योग होता है । ( सु० शा० कार ) ॥ १ ॥

पापा बलिनः स्वभागगाः पारक्ये विबलाश्च शोभनाः ।
लग्नं च वियोनिसंज्ञकं दृष्ट्वाऽत्रापि वियोनिमादिशेत् ॥ २ ॥

इदानीं वियोनिज्ञाने प्रकारान्तरमाह । बलिनः = सबलाः, पापाः = पूर्वोक्ताः पापग्रहा, स्वभागगाः = स्वनवांशे स्थिताः, शोभनाः=शुभग्रहाः, पारक्ये=परनवांशे वर्त्तमाना विबलाः= निर्बलाश्च भवेयुस्तदा वियोनिसंज्ञकं लग्नं चेष्टकालिकं दृष्ट्वाऽत्रापि योगे चन्द्रस्थितद्वादशांशसमानरूपां वियोनिमादिशेत् ॥ २ ॥

बलवान् पापग्रह अपने नवांशमें हो, शुभग्रह निर्बल हों तथा दूसरेके नवांशमें स्थित हो और लग्न वियोनि संज्ञक ( मे० वृ० क० वृ० इत्यादि) हो तो चन्द्रमाके द्वादशांशके सदृश वियोनि कहे ॥ २ ॥

क्रियः शिरो वक्त्रगलो वृषोऽन्ये पादांसकं पृष्ठमुरोऽथ पार्श्वे ।
कुक्षिस्त्वपानोऽङ्घ्रयथ मेढ्रमुष्कौ स्फिक्पुच्छमित्याह चतुष्पदाङ्गे ॥ ३ ॥

इदानीं वियोन्यङ्गे राशिस्थापनमुच्यते । तत्र वियोनिषु पशुजातीनां प्राधान्यात्तदङ्ग एव राशिन्यासः। क्रियो मेषः शिरः । वृषो वक्त्रगलः—वक्त्रं=मुखं, गलः=ग्रीवा च । अन्ये मिथुनादयः क्रमेण पादांसकादयो भवन्ति । स्पष्टार्थं चतुष्पदाकारो राश्यङ्कितो द्रष्टव्यः । प्रयोजनञ्च—शुभोपलक्षितेऽङ्गे पुष्टिः अशुभोपलक्षितेऽङ्गे च व्रणोपघातादिरिति ॥ ३ ॥




वियोनिमें चतुष्पदकी प्रधानताके कारण—

पशुके शरीरमें राशिविभाग इस प्रकार है कि–मेष शिर, वृष मुख और कण्ठ, मिथुन आगेके पैर और कन्धा, कर्क पीठ, सिंह छाती, कन्या दोनों पार्श्व, तुला पेट, वृश्चिक गुदा, धनु पीछेके दोनों पैर, मकर लिंग और अण्डकोष, कुम्भ स्फिक् ( गुदाके दोनों तरफ ) और मीन पूंछ है ॥ ३ ॥

लग्नांशकाद्ग्रहयोगेक्षणाद्वा वर्णान् वदेद्बलयुक्ताद् वियोनौ ।
दृष्ट्या समानान् प्रवदेत्तु संख्यां रेखां वदेत्स्मरसंस्थैश्च पृष्ठे ॥ ४ ॥

इदानीं वियोनिवर्णज्ञानमुच्यते । लग्ने ग्रहयोगेक्षणाद्वा लग्नांशकात् वियोनौ वर्णान् वदेत् । एतदुक्तं भवति । लग्ने यो ग्रहो व्यवस्थितस्तद्वर्णं वियोनौ वदेत् । ग्रहयोगाभावात् लग्नं येनावलोक्यते तद्ग्रहवर्णं वदेत् । अथ यदि लग्नं ग्रहयोगदृष्टिविहीनं तदा लग्ने यस्य नवांशो भवेत्तद्राशिवर्णं वदेत् । दृष्टया समानानर्थाल्लग्नं यावद्भिर्ग्रहैर्युक्तं दृष्टं वा भवति तावन्तो वर्णा वाच्यास्तेष्वपि बलयुक्तादर्थाद्यो बलीयान् तस्याधिकवर्णो वाच्यः । स्मरसंस्थैः= सप्तमस्थानगतैर्ग्रहैः पृष्ठे = वियोनिपृष्ठे तत्संख्यां=तन्मितां रेखां ( चिह्नानि ) वदेत् । तथा चोक्तं कल्याणवर्म्मणा—

"मेषादिभिरुदयस्थैरंशैर्वा ग्रहयुतैश्च दृष्टैर्वा ।
स्वं स्वं वर्णं ब्रूयाद्गात्रे चिह्नं व्रणं वाऽपि ॥
स्वग्रहांशकसंयोगाद्द्वित्र्याद्वर्णान्परांशके क्रमात् ।
सप्तमसंस्थाः कुर्युः पृष्ठे रेखां स्ववर्णसमाम्" इत्यादि ॥

Notes—इपरोक्तश्लोकाः श्लोका बृहज्जातके विलसन्ति ॥ ४ ॥

जो ग्रह लग्नमें हो उसका वर्ण २ रे अध्यायके १९ वें श्लोकके अनुसार वियोनिका वा नष्टादि वस्तुका कहे। यदि लग्नमें कोई ग्रह न हो तो जो ग्रह लग्नको देखता हो उसका वर्ण कहे। यदि लग्न किसी ग्रहसे युक्त दृष्ट न हो तो लग्नके नवांशका वर्ण कहे। यदि लग्नमें अनेक ग्रह हों तो अनेक रंग कहे, उनमें बलवान् ग्रहका रंग अधिक कहे। स्वामियुक्त राशि का यदि लग्नमें नवांश हो तो उसीका रङ्ग कहे ( पहलेका सब छोड़ दे )। सप्तम स्थानमें स्थित ग्रहके अनुसार वियोनिकी पीठपर रेखा कहे ॥ ४ ॥

देहाम्बुगौ सुखाङ्गेशौ चतुष्पाज्जननं भवेत् ॥
देहेशे सुखपे वाऽहिकेतुयुक्ते पशोर्जनिः ॥ ५ ॥

इदानीं चतुष्पदानां जन्मोच्यते। सुखाङ्गेशौ=चतुर्थेशषष्ठेशौ, देहाम्बुगौ=प्रथमचतुर्थभावगौ ( सुखेशो लग्ने षष्ठेशश्चतुर्थे इत्यर्थः ) तदा चतुष्पादाज्जननं = पशुजन्म भवेत्। एको योगः। देहेशे=लग्नेशे, वा सुखपे=चतुर्थेशे, अहिकेतुयुक्ते=राहुकेतुभ्यां क्रमेण युक्ते पशोर्जनिर्वाच्येति द्वितीयो योगः ॥ ५ ॥

यदि सुखेश और लग्नेश लग्नमें और ४-थे भावमें स्थित हों तो चतुष्पदका जन्म हो। लग्नेश वा सुखेश राहु, केतुसे युक्त हों तो पशुका जन्म जाने ॥ ५ ॥

अथ ग्रहविशेषेक्षणादिना पशुविशेषजनिः।

शुक्रेक्षिते गोजननं महिष्यार्कियुतेक्षिते ॥
राहुकेतुयुते मेषः पापाढ्येऽन्यपशोर्जनिः ॥ ६ ॥

तत्काललग्ने शुक्रेक्षिते गोजननं वाच्यमन्यत्स्पष्टमिति ॥ ६ ॥

लग्नको शुक्र देखता हो तो गौ का जन्म, शनिसे युत दृष्ट हो तो महिषीका, राहु केतुसे युत हो तो मेष-( भेंड़ बकरी ) का, पापग्रह-( सूर्य, मङ्गल, क्षीणचन्द्र, पापयुत बुध ) से युत हो तो अन्य पशुका जन्म जाने ॥ ६ ॥

अथ स्थलाम्बुजनियोगकरी ग्रहस्थितिः।

खगे दृकाणे बलसंयुतेन वा ग्रहेण युक्ते चरभांशकोदये ॥
बुधांशके वा विहगाः स्थलाम्बुजाः शनैश्चरेन्द्वीक्षणयोगसंभवाः ॥ ७ ॥
होरेन्दुसूरिरविभिर्विबलैस्तरूणां तोयस्थले तरुभुवोऽशकृतः प्रभेदः ॥
लग्नाद्ग्रहः स्थलजलर्क्षपतिस्तु यावांस्तावन्त एव तरवः स्थलतोयजाताः ॥ ८ ॥

इदानीं पक्षिजन्मज्ञानमाह—खग इति। लग्ने खगे दृकाणे = पक्षिदृकाणे = मिथुनद्वितीय-सिंहप्रथम-तुलाद्वितीय-कुम्भप्रथमद्रेष्काणानामन्यतमे ( बृहज्जातके द्रेष्काणाध्यायो द्रष्टव्यः ) सति, वा चरभांशकोदये = लग्ने चरनवांश उदयति बलसंयुतेन ग्रहेण युक्ते = तत्र बलवद्ग्रहसहिते, वा बुधांशके = कन्यामिथुनयोरन्यतरनवांशके लग्ने वर्तमाने तत्रापि बलीग्रहसंयुतेऽस्मिन् योगत्रये शनैश्चरेन्द्वीक्षणयोगसम्भवाः = शनिचन्द्रयोर्दृष्टियोगवशात्स्थलाम्बुजाः = स्थलजा जलजाश्च, विहगाः = पक्षिणो वाच्याः। योगत्रयेऽपि शनिना दृष्टे युते वा स्थलजानां, शशिना दृष्टे युते वा जलजानां पक्षिणां जन्म वाच्यमिति। तथोक्तं च सारावल्याम्—

"विहगोदितदृक्काणे ग्रहेण बलिना युतेऽथ चरभांशे।
सौम्येंऽशे वा विहगाः स्थलाम्बुजाः शनिशशीक्षणाद्योगात्" ॥ इति ॥ ७ ॥

अथ तरुजन्मज्ञानमुच्यते। होरेन्दुसूरिरविभिः = लग्नचन्द्रगुरुसूर्यैर्विबलैस्तरूणां जन्म वाच्यम्। तत्र जलजानां स्थलजानां वा जन्मेति निर्णयमाह। तोयस्थले तरुभवोऽशकृतः प्रभेदः। अंशकृतः=नवांशकनिहितः प्रभेदस्तोयस्थले=जले स्थले च, तरुभव=वृक्षोत्पत्तिरिति। जलांशके जलचरराशिनवांशोदये जलजास्तरवो वाच्याः। इतरथा स्थलजा इति।

अथ तरुसंख्यामाह—स्थलजलर्क्षपतिर्ग्रहः = स्थलराशीशो जलराशीशो वा ग्रहो लग्नाद्यावानर्थाल्लग्नाद्यावत्संख्यके राशौ भवेत्तावन्तस्तत्संख्यप्रमिताः स्थलतोयजाताः = स्थलजा-जलजा वा तरवो वाच्या इति ॥ ८ ॥

लग्नमें पक्षी द्रेष्काण ( मिथुन का २ रा, सिं० का १ म, तु० का २ रा, अथवा कुं० का १ म द्रेष्काण ) हो तो पक्षीका जन्म कहना (१)।

लग्नमें चर ( १।४।७।१० ) राशिका नवांश हो उसमें बली ग्रहयुक्त हो तो पक्षीका जन्म कहना ( २ )।

बुधका ( मिथुन वा कन्या ) नवांश लग्नमें हो उसमें बली ग्रह हो तो पक्षीका जन्म कहना ( ३ )।

इन तीनों योगों में शनिकी दृष्टि वा योगसे स्थलचर तथा चन्द्रमा की दृष्टि वा योग से जलचर पक्षीका जन्म कहना चाहिये ॥ ७ ॥

वृक्ष-जन्म जानने का प्रकार यह है कि तत्कालमें लग्न, चन्द्रमा, बृहस्पति और सूर्य निर्बल हों तो वृक्षका जन्म कहे। लग्ननवांश जल राशि हो तो जल-वृक्ष, स्थल राशि हो तो स्थल-वृक्ष कहे। स्थल या जल राशिके स्वामी लग्नसे जितने राशिपर हों उतनी संख्या वृक्षोंकी कहे। उच्च या वक्र-गतिवाले ग्रहसे त्रिगुणी और अपने वर्गोत्तम, नवांश तथा राशिमें स्थित ग्रहसे द्विगुणी संख्या कहे। ( सु० शा० कार ) ॥ ८ ॥

**अथ रव्यादीनां वृक्षविशेषजनिकारणता।**

अन्तःसारान् जनयति रविर्दुर्भगान् सूर्यसूनुः
क्षीरोपेतांस्तुहिनकिरणः कण्टकाढ्यांश्च भौमः ॥
वागीशज्ञौ सफलविफलान् पुष्पवृक्षांश्च शुक्रः
स्निग्धानिन्दुः कटुकविटपान् भूमिपुत्रस्तु भूयः ॥ ६ ॥
शुभोऽशुभर्क्षे रुचिरं कुभूमिजं करोति वृक्षं विपरीतमन्यथा ॥
परांशके यावति विच्युतः स्वकाद् भवन्ति तुल्यास्तरवस्तथाविधाः ॥ १० ॥

पूर्वं यदुक्तमंशकृतः प्रभेदस्तत्रांशकपतिवशाद्विशेषज्ञानमाह। रविः = सूर्योऽशकपतिरन्तःसारान् = अन्तर्गतो मध्ये सारो बलं येषां ( शिंशपादयः ) तान् जनयत्युत्पादयति। सूर्यसूनुः=शनिर्दुर्भगान्=कुत्सितवृक्षान् जनयति। तुहिनकिरणश्चन्द्रः क्षीरोपेतान्दुग्धयुक्तान्वटादीन्। भौमः कण्टकाढ्यान् = कण्टकयुक्तान् खदिरादीन्। वागीशज्ञौ=गुरुबुधौ सफलविफलान् जनयतः। गुरुः सफलानाम्रादीन्, बुधो विफलान्येषु न जातु फलानि रोहन्ते तान्। शुक्रः पुष्पवृक्षान् चम्पकादीन्। इन्दुश्चन्द्रो भूयः पुनरपि स्निग्धान्देवदारुप्रभृतीन्। भूमिपुत्रश्च = मङ्गलोऽपि भूयः कटुकविटपान् = कटुस्वादुयुक्तवृक्षान् जनयति। अत्र चन्द्रभौमयोरुभयजनकत्वेन 'भूयः' पदस्योपादानमिति ॥ ९ ॥

अथ शुभाशुभग्रहपरत्वेन वृक्षजन्म तत्संख्याञ्चाह। शुभः शुभग्रहः ( स्थलजलर्क्षपतिः ) अशुभर्क्षे=पापग्रहराशौ चेद्भवेत्तदा रुचिरं वृक्षं, कुभूमिजं = कुत्सितभूमिजनितं करोति। अन्यथा = शुभर्क्षे यद्यशुभोंऽशपतिः स्यात्तदा, विपरीतं- अशुभवृक्षं शुभस्थानजं करोति। अर्थादेव 'शुभे शुभर्क्षे रुचिरं सुभूमिजं क्रूरेऽशुभर्क्षे कुतरुं कुभूमिजमिति सिद्ध्यति। अथ स्थलजलर्क्षपतिर्ग्रहः स्वकात् = स्वनवांशकाद्विच्युतश्चलितो यावति = यत्संख्यके परांशके = अन्यनवांशके भवेत्तत्तुल्यास्तन्मितास्तथाविधाः ( नवांशसंख्यका नवांशपतिजातीयाश्च ) तरवो भवन्ति। तथा चाह कल्याणवर्म्मा—

"स्वांशात्परांशगामिषु यावत्संख्या भवन्ति तावन्तः।
स्थलजा वा जलजा वा तरवः प्राक्संख्यया प्रवदेत्" ॥ इति ॥ १० ॥

Notes—( ७-१० ) श्लोका बृहज्जातकस्य ।

सूर्य-लग्ननवांशका स्वामी हो तो भीतरकी पुष्ट लकड़ी ( शीशम आदि ) कहे । शनि-हो तो देखनेमें अप्रिय ( तेनुवा आदि ) कहे । चन्द्रमा-हो तो दूधवाले वा रसवाले ( ऊँख गन्ना ) आदि वृक्ष कहे । मङ्गल-हो तो कांटवाले (बेल बबूरादि) बृहस्पति-हो तो फलवाले ( आम आदिके ) वृक्ष, बुध-हो तो विना फलवाले वृक्ष कहे । शुक्र-हो तो पुष्प वाले ( चमेली चम्पा आदि ) वृक्ष कहे । फिर चन्द्रमा-चिकने देवदारु आदि और पुनः मङ्गल-कटु वृक्षको उत्पन्न करता है ॥ ९ ॥

पूर्वोक्त स्थल या जलराशिके स्वामी शुभग्रह यदि पापग्रहकी राशिमें हो तो रुचिर ( अच्छा ) वृक्ष दुष्ट भूमिमें पैदा हो । यदि पापग्रह शुभराशिमें स्थित हो तो अशोभन ( दुष्ट ) वृक्ष सुन्दर भूमिमें हो । शुभग्रह शुभराशिमें हो तो शुभ वृक्ष रुचिर भूमिमें हो और अशुभसे अशुभ वृक्ष अशुभ भूमिमें जाने । वह ग्रह अपने नवांशसे जितने नवांशपर प्राप्त हो उतने ही वृक्ष उसी २ प्रकारके कहे ॥ १० ॥

इति वियोनिजन्मप्रकरणम् ।

---

## अथ निषेकविधिः ।

कुजेन्दुहेतु प्रतिमासमार्तवं गते तु पीडर्क्षमनुष्णदीधितौ ॥
अतोऽन्यथास्थे शुभपुङ्ग्रहेक्षिते नरेण संयोगमुपैति कामिनी ॥ ११ ॥

इदानीं निषेकविधिरुच्यते । ऋतोस्तत्र प्रधानत्वात्प्रथमं ऋतुनिरूपणं ततो दम्पत्योर्योगलक्षणमाह । स्त्रीणां प्रतिमासं=मासं मासं प्रति यदार्तवं = ऋतौ जातं रजस्तत् कुजेन्दुहेतु = कुजो मङ्गलः, इन्दुश्चन्द्रस्तौ हेतुर्निमित्तं यस्य तदिति । स्त्रीणां रहस्यदेशात् प्रतिमासं यद्रजो निस्सरति तस्य कुजेन्दू कारणम् । यतश्चन्द्रो जलतत्त्वः, भौमोऽग्नितत्त्वः, तत्र जलमेव रक्तं तथाऽग्निरेव पित्तं, पित्तेनालोडितमस्रं रजोरूपेण परिणमति । तथोक्तं कल्याणवर्म्मणा-

"इन्दुर्जलं कुजोऽग्निर्जलमस्रं त्वग्निरेव पित्तं स्यात् ।
एवं रक्ते क्षुभिते पित्तेन रजः प्रवर्त्तते स्त्रीषु" ॥ इति ॥

अथ गर्भधारणयोग्यमार्त्तवं निरूप्यते । अनुष्णदीधितौ=चन्द्रे, पीडर्क्षं गते = स्त्रिया जन्मराशेरनुपचयर्क्षं = नवधनजलधीकामरन्ध्रान्त्यहोराणामन्यतमं प्राप्ते कुजेन दृष्टे गर्भग्रहणयोग्यमार्त्तवं भवति, परं बालवृद्धातुरवन्ध्याभ्योऽन्यत्र । तथोक्तञ्च—

"स्त्रीणां गतोऽनुपचयर्क्षमनुष्णरश्मिः सन्दृश्यते यदि धरातनयेन तासाम् ।
गर्भग्रहार्त्तवमुशन्ति तदा, न वन्ध्यावृद्धातुरालपवयसामपि चैतदिष्टम्" ॥ इति ॥

अथ पुरुषसंयोगसम्भवमाह । अतोऽन्यथास्थे=चन्द्रे पुरुषजन्मार्क्षादुपचयर्क्षस्थे, शुभपुङ्ग्रहेक्षिते=शुभग्रहेषु यः पुमान् ग्रहस्तेन ( गुरुणा ) ईक्षिते = दृष्टे, कामिनी=ऋतुमती स्त्री नरेण=पुरुषेण सह संयोगमुपैति । ईदृग्योग एव दम्पत्योर्योगो गर्भाधानयोग्यं मैथुनं च भवतीति । तथोक्तं च—

"पुरुषोपचयगृहस्थो गुरुणा यदि दृश्यते हिममयूखः ।
स्त्रीपुरुषसंप्रयोगं तदा वदेदन्यथा नैव" इति ।

पुरुषसंयोगविचारोऽयमृतुशुद्धौ ( चतुर्थदिने ) कार्यः ।

"ऋतुविरमे स्नातायां यद्युपचयसंस्थितः शशी भवति ।
बलिना गुरुणा दृष्टो भर्त्रा सह सङ्गमश्च तदा" इति दर्शनात् ।

वक्ष्यति च स्वयं पुरतः—

"बाह्याश्चतस्रोऽत्र निषेकयोग्या पराश्च युग्माः सुतदाः प्रशस्ताः" इति ॥ ११ ॥

स्त्रियोंकी योनिसे प्रत्येक मासमें तीन दिन तक रुधिर बहता है उसको रजोदर्शन कहते हैं। रजोदर्शनका हेतु ( कारण ) मङ्गल और चन्द्रमा है, क्योंकि मङ्गल अग्नितत्त्व और चन्द्रमा जलमय है। स्त्रीके जन्मराशिसे जिस रजोदर्शनमें उपचयस्थानमें चन्द्रमा न हो किन्तु १-२-४-५-७-८-९-१२ इन स्थानोंमें हो और गोचरमें मङ्गल पूर्ण दृष्टिसे देखता हो तो ऐसा रज गर्भको धारण करने योग्य होता है। चन्द्रमा उपचय राशिमें रहे किन्तु उसे मङ्गल न देखता हो तो ऐसे समयका रज निष्फल होता है। पुरुषके उपचय राशिमें चन्द्रमा हो उसको पूर्णदृष्टिसे बृहस्पति देखता हो उस समय स्त्री और पुरुषका यदि संयोग हो तो गर्भ अवश्य रहेगा। परन्तु यह विचार बन्ध्या स्त्री तथा बाल, वृद्ध और नपुंसकके लिये नहीं है ॥ ११ ॥

यथाऽस्तराशिर्मिथुनं समेति तथैव वाच्यो मिथुनप्रयोगः।
असद्ग्रहालोकितसंयुतेऽस्ते सरोष इष्टैः सविलासहासः॥ १२ ॥

इदानीं गर्भाधानकालं विज्ञाय मैथुनज्ञानप्रकारमाह। अस्तराशिः = आधानलग्नात् प्रश्नलग्नाद्वा सप्तमो राशिर्यथा मिथुनं समेति = सप्तमराशियोनौ यथा मिथुनं सम्पद्यते तथैव मिथुनप्रयोगो वाच्यः। तादृगेव मैथुनमस्मिन् गर्भाधाने कृतं ब्रूयात्। सप्तमो राशिर्यदि चतुष्पात्तदा चतुष्पदां मैथुनमिव। यदि जलचरस्तदा तदिवैवं सर्वत्र योनितुल्यं मिथुनं वाच्यमिति। तत्रापि कलहेन प्रेम्णा वा मिथुनमित्याह। अस्ते = निषेकलग्नात्सप्तमे राशौ असद्ग्रहैः = पापग्रहैरालोकिते दृष्टे, संयुक्ते वा सरोषो रोषेण सहितः ( कलहेन ), इष्टैः = शुभग्रहैर्दृष्टे वा युक्तेऽस्ते सविलासहासो विलासेन हासेन च सहितः ( प्रेम्णा ) मिथुनप्रयोगो वाच्यः। अतोऽन्यथा साधारण्येनेति। तथोक्तं सारावल्याम्—

"द्विपदादयो विलग्नात् सुरतं कुर्वन्ति सप्तमे यद्वत्।
तद्वत्पुरुषाणामपि गर्भाधानं समादेश्यम्॥
अस्तेऽशुभयुतदृष्टे सरोषकलहं भवेद्ग्राम्यम्।
सौम्यं सौम्यैः सुरतं वात्स्यायनसम्प्रयोगिकाख्यातम्" ॥ इति ॥ १२ ॥

प्रश्नसे अथवा आधानलग्नसे जो सप्तम राशि हो उसी राशिके समान मैथुन होना कहे। यदि सप्तममें मेष हो तो बकराके सदृश। वृष हो तो बैलके तुल्य मैथुन कहे। इसी प्रकार आगेकी राशिके भी सप्तम प्राप्त होनेपर मैथुन कहे। सप्तममें पापग्रह हों वा उस भावको पापग्रह देखते हों तो सरोष ( कलहसे युक्त ) मैथुन कहे, और सप्तममें शुभग्रह हों वा सप्तमभावको शुभग्रह देखते हों तो प्रेम और विलास पूर्वक मैथुन कहे ॥ १२ ॥

रवीन्दुशुक्रावनिजैः स्वभागैः गुरौ त्रिकोणोदयसंस्थितेऽपि वा।
भवत्यपत्यं हि विबीजिनामिमे करा हिमांशोर्विदृशामिवाफलाः॥ १३ ॥

इदानीं गर्भसम्भवयोगमाह। रवीन्दुशुक्रावनिजैः=सूर्य-चन्द्र-शुक्र-मङ्गलैः स्वभागगैः= स्वस्वनवांशस्थैः। यत्र कुत्रापि राशौ सूर्येन्दुशुक्रभौमाः स्वनवांशगताः स्युस्तदा हि=निश्चयेनापत्यं=गर्भे सन्ततिर्भवति। अयमेको योगः। वा योगान्तरमाह—गुरौ त्रिकोणोदयसंस्थितेऽपि=बृहस्पतिर्यदि लग्ने, पञ्चमे, नवमे वा भवेत्तदाऽपि भवत्यपत्यमिति। अत्र प्रथमे पूर्णयोगाभावे सूर्यशुक्रयोर्नरोपचयर्क्षगयोरेवं चन्द्रारयोर्योषिदुपचयर्क्षगयोः स्वनवांशे स्थितिरपेक्षिताऽपत्यसम्भवे। तथोक्तं स्वल्पजातके वराहेण—

"बलयुक्तौ स्वगृहांशेष्वर्कसितावुपचयर्क्षगौ पुंसाम्।
स्त्रीणां वा कुजचन्द्रौ यदा तदा गर्भसम्भवो भवति" ॥ इति ॥

गर्भयोगः




…वैफल्यमाह । इमेऽपत्यसम्भवयोगा विबीजिनां=वीर्यरहितानां ( षण्ढानां ) स्त्रीपुरुषाणामफला निष्फला भवन्ति । यथा विदृशामन्धानां हिमांशोश्चन्द्रस्य कराः=मयूखा विफला वर्त्तमाना अपि निष्फला भवन्ति तथैवेत्युपमा । रजोवीर्याभ्यामेवापत्योत्पत्तिसम्भवात् तद्विहीनानां नैष्फल्यमुचितमेवेति ॥

गर्भ है या नहीं है इसके जाननेका विधान यह है कि—प्रश्नकाल वा आधानकाल में सूर्य, चन्द्रमा, शुक्र और मंगल अपने नवांशमें हों तो निश्चय गर्भ है। यदि इस प्रकार न हों और पुरुषके उपचय ३।६।१०।११ में सूर्य और शुक्र अपने नवांशमें हों तो भी गर्भका सम्भव कहे। अथवा स्त्रीके उपचयमें अपने २ नवांशमें मंगल और चन्द्रमा हों तो भी गर्भ सम्भव कहे। वा बृहस्पति पञ्चम, नवम या लग्नमें हो तो भी गर्भसम्भव कहे। ये सब योग जिस प्रकार अंधेको चन्द्रमाके किरणोंकी शोभा विफल है उसी प्रकार नपुंसकों को निष्फल होते हैं ॥ १३ ॥

दिवाकरेन्द्वोः स्मरगौ कुजार्कजौ गदप्रदौ पुम्भलयोषितोस्तदा ।
व्ययस्वगौ मृत्युकरौ युतौ तथा तदेकदृष्ट्या मरणाय कल्पितौ ॥ १४ ॥

इदानीं सति गर्भे प्रसवपर्यन्तं दम्पत्योः शुभाशुभमाह । आधानकाले दिवाकरेन्द्वोः=सूर्याच्चन्द्राच्च क्रमेण कुजार्कजौ=मङ्गलशनी, स्मरगौ=सप्तमस्थौ, तदा पुम्भलयोषितोः=नरनार्योः गदप्रदौ=रोगप्रदौ भवतः । सूर्यात्सप्तमे भौमशनी पुरुषस्य रोगकरौ । चन्द्रात्सप्तमे शनिभौमौ स्त्रिया रोगकराविति । तथा व्ययस्वगौ । सूर्यादुभयत्र यदि कुजार्कजौ तदा पुंसो मरणायैवं चन्द्रादुभयत्र यदि कुजार्कजौ तदा स्त्रिया मरणाय भवतः । तथा च युतौ तदेकदृष्ट्या=सूर्यः कुजार्कजयोरेकेन युतोऽन्येन दृष्टः पुंसो मरणायैवं चन्द्रस्तयोरेकेन युक्तोऽपरेण दृष्टो योषितो मरणाय कल्पितः । तत्र बलीयान्स्वमासे रोगादि करोतीति सर्वत्र विज्ञेयम् ॥

यथा—अत्र ( १ ) र. म. शं.=पुरुषस्य । च. मं. शं = स्त्र्याः ।
अत्र ( २ ) र. शं. मं. तथा मं. शं. = पुरुषस्य ।
च. शं. मं. तथा श. म. = स्त्रियाः ॥ १४ ॥

रोगयोगः ( १ )




मृत्युयोगः ( २ )




आधानकालसे प्रसवकाल तकका शुभाशुभ फल—आधान अथवा प्रश्नकालमें सूर्यसे सप्तम भावमें मंगल और शनि हों तो अपने महीनेमें पुरुषको कष्ट देते हैं। चन्द्रमासे सप्तम मंगल और शनि हों तो अपने महीनेमें स्त्रीको पीड़ा देते हैं। सूर्यसे दूसरे और बारहवें

मंगल और शनि हों तो अपने महीनेमें पुरुषकी मृत्यु करते हैं । इसी प्रकार चन्द्रमासे दूसरे और बारहवें मंगल और शनि हों तो अपने महीनेमें स्त्रीकी मृत्यु करते हैं । सूर्य यदि शनि और मंगल इनमेंसे एकसे युक्त एकसे दृष्ट हो तो पुरुषकी मृत्यु, ऐसे ही चन्द्रमा शनि और मंगलमेंसे एकसे युक्त एकसे दृष्ट हो तो स्त्रीकी मृत्यु करता है ॥ १४ ॥

दिवाऽर्कशुक्रौ पितृमातृसंज्ञितौ शनैश्चरेन्दू निशि तद्विपर्ययात् ।।
पितृव्यमातृष्वसृसंज्ञितौ च तावथौजयुग्मर्क्षगतौ तयोः शुभौ ।। १५ ।।

इदानीं निषेककालवशात् पित्रादीनां शुभाशुभमाह । दिने निषेकश्चेत् तदा सूर्यः पिता, शुक्रो मातृसञ्ज्ञको भवति । रात्रौ निषेके शनिः पिता, चन्द्रो माता । दिने शनैश्चरः पितृव्यः, चन्द्रो मातृष्वसा । रात्रौ सूर्यः पितृव्यः, शुक्रो मातृष्वसेति जन्मन्यपि बोद्धव्यम् । प्रयोजनञ्चाह । तावथौजयुग्मर्क्षगतौ तयोः शुभाविति । दिने सूर्यो विषमराशिगतस्तदा पितुः शुभो रात्रौ पितृव्यस्य । दिने शुक्रः समराशिगतो मातुः शुभकृद्रात्रौ मातृष्वसुः । शनैश्चरो निशि विषमस्थस्तदा पितुः शुभकृद्दिने पितृव्यस्य । चन्द्रो रात्रौ समर्क्षगो मातुर्दिने मातृष्वसुः शुभकृद्भवति । अर्थादेवोक्तविपर्ययस्थे तयोरशुभः इति ।

Notes-अत्र ११-१५ श्लोकाः बृहज्जातकस्य वर्त्तन्ते ॥ १५ ॥

दिनके आधानमें सूर्य पिता, शुक्र माता, शनि पितृव्य ( चाचा ), चन्द्रमा मौसी ( माताकी वहिन ) और रात्रिके आधानमें शनि पिता, चन्द्रमा माता, सूर्य चाचा, शुक्र मौसी हैं । इन संज्ञाओंका प्रयोजन यह है कि, दिनके आधानमें सूर्य विषम राशि ( १-३-५-७-९-११ ) में पिताको शुभ, रात्रिके आधानमें चाचाको शुभ होता है । दिनके गर्भाधानमें शुक्र समराशि ( २-४-६-८-१०-१२ ) में हो तो माताको शुभ, रात्रिमें मौसीको शुभ होता है । शनि रात्रिके आधानमें विषम राशिमें हो तो पिताको शुभ, दिनमें चाचाको शुभ होता है । रात्रिके गर्भमें चन्द्रमा समराशिमें हो तो माताको शुभ, दिनमें मौसीको शुभ होता है । इससे अन्यथा अशुभ कहना चाहिये ॥ १५ ॥

शीतज्योतिषि योषितोऽनुपचयस्थाने कुजेनेक्षिते ।
जातं गर्भफलप्रदं खलु रजः स्यादन्यथा निष्फलम् ।।
दृष्टेऽस्मिन् गुरुणा निजोपचयगे कुर्य्यान्निषेकं पुमान् ।
अत्याज्ये च समूलभे शुभगुणे पर्वादिकालोज्झिते ।। १६ ।।

इदानीं गर्भक्षमरजोनिरूपणपूर्वकं निषेककालमाह । शीतज्योतिषि=चन्द्रे योषितोऽनुपचयस्थाने=स्त्रिया जन्मर्क्षादनुपचयस्थाने पूर्वोक्ते वर्त्तमाने कुजेनेक्षिते जातं रजः खलु=निश्चयेन गर्भफलप्रदं=गर्भधारणयोग्यं स्यात् । अन्यथोक्तादितरावस्थायां तद्रजो निष्फलं यातीति । अस्मिन्योषिदनुपचयस्थे चन्द्रे पुमान्=पुरुषो निजोपचयगे=स्वजन्मर्क्षादुपचयस्थानगते गुरुणा=बृहस्पतिना दृष्टेऽवलोकिते च निषेकं कुर्यात् । इत्थम्भूते योगे दम्पत्योर्गर्भाधानं भवतीति भावः ।

निषेकमुहूर्त्तमाह । अत्याज्ये=विहिते च समूलभे, मूलनक्षत्रेऽप्युक्तमेतद्ग्रन्थकर्त्रेति पर्वादिकालोज्झिते=पर्वादिकालरहिते शुभगुणे=सद्गुणयुक्ते समये गर्भाधानं प्रशस्तमिति । अथात्र प्रसङ्गान्निषेके त्याज्यानि लिख्यन्ते—

"गण्डान्तं त्रिविधं त्यजेन्निधनजन्मर्क्षे च मूलान्तकम् ।
दास्रं पौष्णमघोपरागदिवसान् पातं तथा वैधृतिम् ॥
पित्रोः श्राद्धदिनं दिवा च परिघाद्यर्धं स्वपत्नीगमे ।
भान्युत्पातहतानि मृत्युभवनं जन्मर्क्षतः पापभम् ॥
भद्राषष्ठीपर्वरिक्ताश्च सन्ध्याभौमार्कार्कीनाद्यरात्रीश्चतस्रः ।

एवं निषेके प्रशस्तमुहूर्तः—

'गर्भाधानं त्र्युत्तरेन्द्वर्कमैत्रब्राह्मस्वातीविष्णुवस्वम्बुपे सत् ॥

केन्द्रत्रिकोणेषु शुभैश्च पापैस्त्र्यायारिगैः पुङ्ग्रहदृष्टलग्ने ।

ओजांशगेऽब्जेऽपि च युग्मरात्रौ, चित्रादितीज्याश्विषु मध्यमं स्यात्'' ॥ इति ॥ १६ ॥

स्त्रीके जन्मराशिसे अनुपचय ( १,२,४,५,७,८,९,१२ ) राशिमें चन्द्रमा यदि मङ्गल से देखा जाता हो, ऐसे समयमें उत्पन्न रज गर्भप्रद होता है । इससे अन्यथा रज निष्फल होता है । इस गर्भयोग्य रजके समय चन्द्रमा पुरुषके उपचय ( ३।६।१०।११ ) राशिमें हो, उसे बृहस्पति देखता हो तो पुरुषको निषेक ( स्त्रीसंगम ) करना चाहिये । मूल सहित विहित नक्षत्रादिमें पर्वादिकालसे रहित शुभगुणयुक्त मुहूर्तमें गर्भाधान करना चाहिये । मु० शा० कार ॥ १६ ॥

## अथ स्त्रीणामृतुकालपरिमाणम् ।

विभावरीषोडश भामिनीनामृतूद्गमाद्या ऋतुकालमाहुः ॥

नाद्यास्त्रतस्रोऽत्र निषेकयोग्याः पराश्च युग्माः सुतदाः प्रशस्ताः ॥ १७ ॥

रजः प्रादुर्भावात्षोडशरात्रिपर्यन्तमृतुकालो भवति योषिताम् । तत्र प्रथमाश्चतस्रः रात्रयो निषेके गर्हिता भवन्ति । परा या द्वादश रात्रयः पश्चात्यास्तासु युग्माः = समाः = षडाद्याः ( ६।८।१०।१२।१४।१६ ) सुतदाः = पुत्रजन्मकारिण्यो भवन्ति । यतस्ताः प्रशस्ता इति । 'नाद्यरात्रीश्चतस्रः' तथा 'युग्मरात्रौ' इति प्रमाणात् ॥ १७ ॥

स्त्रियोंके ऋतु प्रारम्भ-कालसे १६ रात ऋतुकाल कहा गया है । उनमें पहले की ४ रात निषेक योग्य नहीं हैं । शेष १२ रातमें युग्म ( ६।८।१०।१२।१४ और १६ वीं ) रात निषेकमें प्रशस्त और पुत्र देनेवाली हैं । मु० शा० कार ॥ १७ ॥

## अथ तुर्यादिरात्रिषु निषेके सन्ताने विशेषः ।

पुत्रोऽल्पायुर्दारिका वंशकर्ता बन्ध्या पुत्रः सुन्दरीशो विरूपा ॥

श्रीमान् पापा धर्मशीलस्तथा श्रीः सर्वज्ञः स्यात्तुर्यरात्रात् क्रमेण ॥ १८ ॥

स्त्रीणामृतुकाले तुर्यरात्रात् ( चतुर्थरात्रादित्यतस्तिस्रः रात्रयः प्रथमा निषिद्धाश्चतुर्थी शुद्धा "भर्तुः स्पृश्या चतुर्थेह्नि स्नानेन स्त्री रजस्वले' ति वचनात् ) क्रमेण 'पुत्रोऽल्पायुरि-त्यादयः । चतुर्थरात्रे निषेकेऽल्पायुः पुत्रो जायते । पञ्चम्यां दारिका = कन्या । षष्ठ्यां वंश-कर्ता पुत्रः । सप्तम्यां बन्ध्या = अपुत्रा स्त्री । अष्टम्यां पुत्रः । नवम्यां सुन्दरी कन्या । दश-म्यामीशः = समर्थः पुत्रः । एकादश्यां विरूपा कन्या । द्वादश्यां श्रीमान् पुत्रः । त्रयोदश्यां पापा कन्या । चतुर्दश्यां धर्मशीलः पुत्रः । पञ्चदश्यां श्रीमती कन्या । षोडश्यामन्तिमायां सर्वज्ञः पुत्रो जायते । इत्थं निषेकव्यवस्थामवगम्य कामुकः कामिनीमुपेयादिति ॥ १८ ॥

चौथी रातके निषेकमें अल्पायु पुत्र, पांचवीं रातमें कन्या, छठीं रातमें वंशकर्त्ता पुत्र, ७ वीं रातमें बन्ध्या ( बांझ ) स्त्री, ८ वीं रातमें पुत्र, ९ वीं रातमें सुन्दरी कन्या, १० वीं रातमें प्रभावशाली पुत्र, ११ वीं रातमें कुरूपा कन्या, १२ वीं रातमें श्रीमान् ( भाग्यशाली ) पुत्र, १३ वीं में पापिनी कन्या, १४ वीं में धर्मात्मा पुत्र, १५ वीं में लक्ष्मीवती कन्या और १६ वीं रातमें सर्वज्ञ पुत्र उत्पन्न होता है । मु० शा० कार ॥ १८ ॥

## अथ सुतादियोगकरी ग्रहस्थितिः ।

अष्टमाष्टमगे सूर्ये निषेकर्क्षात्सुतोद्भवः ।

अथवाऽऽधानलग्नात्तु त्रिकोणस्थे दिनेश्वरे ॥ १९ ॥

अस्मिन्नाधानलग्ने तु शुभदृष्टियुतेऽथवा ॥

दीर्घायुर्भाग्यवान् जातः सर्वविद्यान्निमेष्यति ॥ २० ॥

ओजर्क्षे पुरुषांशकेषु बलिभिर्लग्नार्कगुर्विन्दुभिः
पुञ्जन्म प्रवदेत्समांशकगतैर्युग्मेषु तैर्योषितः ।
गुर्वर्कौ विषमे नरं शशिसितौ वक्रश्च युग्मे स्त्रियम्
द्व्यङ्गस्था बुधवीक्षणाच्च यमलौ कुर्वन्ति पक्षे स्वके ॥ २१ ॥
विहाय लग्नं विषमर्क्षसंस्थः सौरोऽपि पुंजन्मकरो विलग्नात् ॥
प्रोक्तग्रहाणामवलोक्य वीर्यं वाच्यः प्रसूतौ पुरुषोऽङ्गना वा ॥ २२ ॥

निषेकर्क्षादाधानलग्नादष्टमाष्टमगे = अष्टमादष्टमं=लग्नात्तृतीयं तस्मिन् गते सूर्ये सुतोद्भवः (१)। अथवा दिनेश्वरे = सूर्ये आधानलग्नात् त्रिकोणे = नवमपञ्चमयोरन्यतरस्थे सुतोद्भवो वाच्यः ( २ ) । अथवा अस्मिन्नाधानलग्ने शुभग्रहैरवलोकिते युक्ते वा जातो दीर्घायुर्भाग्यवान् सर्वविदश्च भवेदिति ( ३ ) । यथा चक्रेऽस्मिन् सू. = (१) योगः । सूं. वा सूं = (२) योगः । गु. च. बु. शु. = (३) योगः ।




अथ प्रश्नलग्नादाधानलग्नाज्जन्मलग्नाद्वा स्त्रीपुरुषविभागज्ञानमुच्यते । बलिभिः = सबलैर्लग्नार्कगुर्विन्दुभिरोजर्क्षे पुरुषांशकेषु च व्यवस्थितैः । एतदुक्तं भवति । तत्काले लग्नसूर्यबृहस्पतिचन्द्रमसः पूर्वोक्तैः स्वषड्बलैर्युक्ता विषमराशिविषमनवांशगताश्च भवन्ति, तदा पुंजन्म = पुरुषस्य जन्म प्रवेदत् । अथ तैरेव लग्नार्कगुर्विन्दुभिः समांशकगतैः=स्त्रीराशिनवांशस्थितैर्युग्मेषु = स्त्रीराशिषु च स्थितैर्योषितः = स्त्रिया जन्म वाच्यम् । तत्रोभयगतानां बहुल्यात्तत्जन्म । साम्ये च बलाधिक्यपक्षं वदेत् । गुर्वर्कौ = बृहस्पतिसूर्यौ विषमे राशौ नरं जनयतः । शशिशुक्रौ वक्रश्च = चन्द्रशुक्रमङ्गला युग्मे = समराशौ स्थिताः स्त्रियं जनयन्ति । द्व्यङ्गस्थाः = त एव गुरुसूर्यशशिशुक्रभौमा द्विशरीरांशस्थास्तत्र बुधवीक्षणाच्च स्वके पक्षे यमलौ = युगलं कुर्वन्ति । अत्रेदमवधेयम्–मिथुनकन्याधनुर्मीनाश्चत्वारो द्विस्वभावास्तत्र मिथुनधनुर्धरौ पुरुषौ, कन्यामीनौ स्त्रियौ, तेन यदि गुर्वर्कौ मिथुनधनुरंशगतौ बुधवी[illegible] भवतस्तदा पुरुषद्वयं वाच्यम् । एवं कन्यामीनांशगताश्चन्द्रभृगुभौमा यदि बु[illegible] तदा कन्यायुगलं कुर्वन्तीति । तत्रोभयस्थितौ स्त्रीपुंसोर्मिथुनमर्थादेकः पुमानेका कन्[illegible] युगलं ज्ञेयम् ।

पुरुषजन्म (१)




स्त्रीजन्म (२)



यमलजन्म (३)




अत्रोदाहरणम्—(१) चक्रे— र = ४।३। गु = ८।१। चं=१०।३। लग्नं = २।१। श = ६।३। पुंजन्मदाः।

(२) चक्रे-ल = १।१। र = १०।६। गु = ३।५। चं = १।२। मं = ७।३। शु= ११।१०। श = ९।१। स्त्री जन्मकराः।

(३) चक्रे-र = २।२७। गु = ११। १९। पुरुषयुगलम्। चं = १।२८। शु = ४।२१। मं = ७।१। कन्यायुगलम्।

अस्मिन् चक्रे (३) स्थापिताखिलग्रहात् मिथुनजन्मापि स्यात्। एतत् कल्पनामात्रमेवेति।

अथोक्तयोगानामभावे शनिवशात्पुंस्त्रीज्ञानमाह। सौरोऽपि शनैश्वरोऽपि = लग्नं तात्कालिकं विहाय = त्यक्त्वा विलग्नाद्विषमर्क्षसंस्थस्तृतीयप्रभृतिविषमभावानामन्यतमस्थः पुञ्जन्मकरो भवति। ३, ५, ७, ९, ११, भावानामन्यतमवर्त्तिनि शनिग्रहे पुरुषजन्म वाच्यमित्यर्थः। अत्र प्रोक्तग्रहाणामुक्तपुंस्त्रीजन्मयोगकर्त्तॄणां ग्रहाणां वीर्यं = बलमवलोक्य यदि पुरुषजन्मकारको बली तदा पुरुषः, स्त्रीकारको बली तदा अङ्गना वा प्रसूतौ वाच्या। तथोक्तं सारावल्याम्—

"लग्नं त्यक्त्वा विषमे शनैश्चरः पुत्रजन्मदो भवति।
योगे विहगस्य बलं समीक्ष्य वदेन्नरं स्त्रियं वाऽपि" ॥ इति ॥ १९-२२ ॥

गर्भाधानके लग्नसे जो अष्टम स्थान उससे जो अष्टम स्थान याने लग्नसे ३ रे भावमें सूर्यके रहने पर पुत्र उत्पन्न होता है। वा आधान लग्नसे त्रिकोण (९।५) में सूर्यके प्राप्त होने पर पुत्र होता है ॥ १९ ॥

इस आधान लग्नमें शुभग्रहकी दृष्टि हो तो जातक दीर्घायु और भाग्यवान् हो, तथा सभी विद्याका ज्ञाता हो ॥ २० ॥

आधान, जन्म अथवा प्रश्न कालमें बलवान् लग्न, सूर्य, गुरु, और चन्द्रमा विषमराशि और विषम-नवांशमें हों तो पुत्रका जन्म कहे और वे ग्रह समराशि तथा सम-नवांशमें हों तो कन्याका जन्म जाने। बलवान् बृहस्पति और सूर्य विषम राशिमें हों तो पुत्रका जन्म, एवं बलवान् चन्द्रमा, शुक्र और मङ्गल समराशिमें हों तो कन्याका जन्म जाने। बृहस्पति, सूर्य, चन्द्रमा, शुक्र और मङ्गल ये द्विस्वभाव (३·६·९·१२) राशिके नवांशमें हों और उन्हें बुध देखता हो तो यमल (दोबच्चे) का जन्म जाने। यहां द्विस्वभावके पुरुषांश (३।९) में गुरु और सूर्य हों तो दो पुत्र, एवं चन्द्र, शुक्र और मङ्गल द्विस्वभावके स्त्रीनवांश (६।१२) में हों तो दो कन्यायें, यदि दोनों योग हों तो एक पुत्र और एक कन्या कहे ॥ २१ ॥

उक्त योगोंके अभावमें लग्नको छोड़कर विषम भाव (३-५-७-९-११) में शनि स्थित होतो पुरुषका जन्म कहे, अन्यथा कन्याका जन्म जाने। यहां कहे हुये कन्या तथा पुत्र कारक ग्रहोंका बल विचार कर अधिक पक्षमें पुरुष वा कन्याका जन्म कहना चाहिये ॥२२॥

अथ क्लीबत्वकरा योगाः।

अन्योन्यं यदि पश्यतः शशिरवी यद्यार्किसौम्यावपि
वक्रो वा समगं दिनेशमसमे चन्द्रोदयौ चेत्स्थितौ ॥
युग्मौजर्क्षगतावपीन्दुशशिजौ भूम्यात्मजेनेक्षितौ
पुंभागे सितलग्नशीतकिरणाः षट् क्लीबयोगास्त्विमे ॥ २३ ॥

इदानीं नपुंसकजन्मयोगा उच्यन्ते। यदि शशिरवी = चन्द्रसूर्यौ (विषमर्क्षगौ) अन्योन्यं = चन्द्रः सूर्यं, सूर्यश्चन्द्रं च पश्यतस्तदैकः क्लीबयोगः।

यथार्किसौम्यावपि = शनिबुधौ च तथा परस्परं पश्यतस्तदा द्वितीयो योगः ।

वक्रो भौमो वा विषमगतो समगं दिनेशं = सूर्यं पश्यति तदा तृतीयो योगः ।

चेत् चन्द्रोदयौ = चन्द्रो लग्नश्च असमे = विषमराशौ भवेतामपि च भौमेनेक्षितौ तदा चतुर्थो योगः ।

युग्मौजर्क्षगतावपि = समविषमराशिस्थिताविन्दुशशिजौ = चन्द्रबुधौ भूम्यात्मजेन = मङ्गलेन ईक्षितौ दृष्टौ तदा पञ्चमो योगः ।

अथ सितलग्नशीतकिरणाः = शुक्र–तत्काललग्न–चन्द्राः पुम्भागे = पुरुषराशिनवांशके वर्त्तमानास्तदा षष्ठो योगः ।

इमे षट् क्लीबयोगाः सन्ति । जन्मकाले निषेके प्रश्ने वा अमी योगा नपुंसकजन्मदा भवन्तीति । तथोक्तं सारावल्याम्—

'अन्योन्यं रविचन्द्रौ विषमर्क्षगतौ निरीक्षेते । इन्दुजरविपुत्रौ वा दृष्टौ बलिनौ नपुंसकं कुरुतः ॥
पश्यति वक्रः समगं सूर्यं चन्द्रोदयौ च विषमर्क्षे । यद्येवं गर्भस्थः क्लीबो मुनिभिः समादिष्टः॥
ओजसमराशिसंस्थौ ज्ञेन्दू षण्ढं कुजेक्षितौ कुरुतः ।
नरभे विषमनवांशे होरेन्दुबुधाः सितार्किदृष्टा वा" ॥ इति ॥

Notes—पूर्वोक्तपुंस्त्रीजन्मयोगानामभावेऽमी योगाश्चिन्त्याः ॥ २३ ॥

६ क्लीबयोगाः




सूर्य और चन्द्रमामें परस्पर दृष्टि हो (१) या शनि और बुधमें परस्पर दृष्टि हो (२) या विषमराशिका मङ्गल, समराशिगतसूर्य इनमें परस्पर दृष्टि हो (३) या चन्द्रमा और लग्न विषम राशिके हों, उन्हें मङ्गल देखता हो (४) या चन्द्रमा सम और बुध विषम राशि के हों, उन्हें मङ्गल देखता हो (५) या शुक्र, लग्न और चन्द्रमा पुरुष ( विषम ) नवांशमें हों तो (६) ये छै प्रकारके नपुसक–योग होते हैं, अर्थात् इन योगोंमें जन्म लेनेवाले नपुंसक होते हैं । सु. शा. कार ॥ २३ ॥

अथ यमलादिजनिकरा योगाः ।

युग्मे चन्द्रसितौ तथौजभवने स्युर्ज्ञारजीवोदयाः
लग्नेन्दू नृनिरीक्षितौ च समगौ युग्मेषु वा प्राणिनः ॥
कुर्युस्ते मिथुनं गृहोदयगतान्द्व्यंगांशकान्पश्यति
स्वांशे ज्ञे त्रितयं ज्ञगांशकवशाद्युग्मं त्वमिश्रैः समम् ॥ २४ ॥

चन्द्रसितौ युग्मे राशौ तथा ज्ञारजीवोदयाः=बुधभौमगुरुलग्नानि, ओजभवने = विषमराशौ भवेयुस्तदा मिथुनं = बालकं बालिकां च कुर्युरित्येको योगः ।

लग्नेन्दू समगौ नृनिरीक्षितौ = पुरुषग्रहेण वीक्षितौ तदा चेति द्वितीयो योगः ।

प्राणिनः = बलिनस्त एव ज्ञारजीवोदया युग्मेषु वा व्यवस्थितास्तदेति तृतीयो मिथुन-जन्मयोगः ।

अथ त्रितयजन्मयोगः—ग्रहोदयगतान्द्वयङ्गांशकान् स्वांशे ज्ञे पश्यति सति। एतदुक्तं भवति—स्वनवांशे वर्त्तमानो बुधो द्विस्वभावराशिनवांशे व्यवस्थितान् ग्रहान् लग्नं च यदि पश्यति तदा गर्भे त्रितयं वाच्यम्। तत्र ज्ञगांशकवशाद्युग्मम्। बुधो यदि मिथुन- (नर) नवांशगतस्तदा नरद्वयमेका कन्या। यदि बुधो योषि-(कन्या) नवांशगतो भवेत्तदा कन्याद्वयमेको नर इति त्रितयं वक्तव्यम्। अमिश्रैः=समानांशकगतैः सममेकलिङ्गमेव त्रितयम्। अत्रेदमवधेयम्—मिथुनांशगतो बुधो मिथुनधनुरंशगतान् ग्रहोदयान् पश्यति तदा पुरुषत्रयमेवं कन्यांशकस्थो बुधो कन्यामीनांशगतान् ग्रहोदयान् पश्यति तदा कन्यात्रयं वाच्यमिति। तथा सारावल्यामाह कल्याणः—

"लग्ने समराशिगते चन्द्रे च निरीक्षिते बलयुतेन।
गगनसदा वक्तव्यं मिथुनं गर्भस्थितं नित्यम्॥
समराशौ शशिसितयोर्विषमे गुरुवक्रसौम्यलग्नेषु।
द्विशरीरे वा बलिषु प्रवदेत् स्त्रीपुरुषमत्रैव॥
मिथुनांशे कन्यैका द्वौ पुरुषौ त्रितयमेवं स्यात्॥
द्विशरीरांशकयुक्तान् ग्रहान् विलग्नं च पश्यतीन्दुसुते।
कन्यांशे द्वे कन्ये पुरुषश्च निश्चियते गर्भे॥
मिथुने धनुरंशगतान् ग्रहान् विलग्नं च पश्यतीन्दुसुतः।
मिथुनांशस्थश्च यदा पुरुषत्रितयं तदा गर्भे॥
कन्यामीनांशस्थान् विहगानुदयं च युवतिभागगतः।
पश्यति शिशिरगुतनयः कन्यात्रितयं तदा गर्भे" ॥ २४ ॥

समराशिमें चन्द्रमा और शुक्र हों तथा विषमराशिमें बुध, मङ्गल, बृहस्पति और लग्न ये हों तो मिथुन (एक पुत्र और एक कन्या) का जन्म कहे। समराशिमें लग्न और चन्द्रमा हों, उन्हें पुरुषग्रह (बु०-मं०-बृ०) मेंसे कोई देखे तो भी एक पुत्र और एक कन्याका जन्म कहे। समराशिमें बलवान् पूर्वोक्त बुध, मङ्गल, बृहस्पति और लग्न हों तो भी वही फल जाने और द्विस्वभावके नवांशमें पूर्वोक्त ग्रह और लग्न वर्त्तमान हों, उन्हें अपने (३।६) नवांशगत बुध देखता हो तो गर्भमें तीन बच्चे होते हैं। यहां बुधके स्थितिवश युग्म कहना याने बुध यदि नर (मिथुन) नवांशमें हो तो दो लड़के एक लड़की, यदि बुध स्त्री (कन्या) नवांशमें होकर द्विस्वभावांश गत ग्रहोदयोंको देखे तो २ लड़की १ लड़का कहना चाहिये। समान अंशमें याने बुध मिथुनांशमें होकर मिथुन और धनुके अंशगत ग्रहोंको देखे तो ३ पुरुष, एवं बुध कन्या नवांशमें स्थित होकर कन्या तथा मीनके नवांशगत ग्रहोंको देखे तो ३ लड़कियां कहना चाहिये। सु० शा० कार ॥ २४ ॥

### अथ त्र्यधिकजननयोगः।

धनुर्धरस्यान्त्यगते विलग्ने ग्रहैस्तदंशोपगतैर्बलिष्ठैः॥
ज्ञेनार्किणा वीर्ययुतेन दृष्टे सन्तिप्रभूता अपि कोशसंस्थाः॥ २५॥

धनूराशेरन्तिमो नवांशो लग्नगतस्तथा धनुरंशगता बलिनो ग्रहाश्चेद्भवेयुः, इत्थं भूतं लग्नमीदृग्भिर्ग्रहैस्तथा बलवता ज्ञेन=बुधेनार्किणा=शनिना चावलोकितं स्यात्तदा कोशसंस्थाः=गर्भगताः, प्रभूताः=त्र्यधिका अपि सन्तीति वाच्यम्। परन्तु मानवयोनौ पूर्णगर्भस्यास्य प्रसवासम्भवत्वात्तत्कालीननिर्बलग्रहस्य मासे तद्गर्भस्य स्खलनं भवतीति ज्ञेयम्॥

धनु राशिके अन्त्य नवांशका लग्न हो, पूर्वोक्त योग कारक ग्रह धनुके नवांशमें हों और लग्नको बलवान् बुध और शनि देखें तो गर्भमें तीनसे अधिक बच्चे जानें। परन्तु मनुष्य

योनिमें ऐसे गर्भका प्रसव होना असम्भव है, इसलिये आधानमें जो ग्रह बलहीन हो उसके महीनेमें गर्भस्राव कहना चाहिये ॥ २५ ॥

द्विशरीरांशसंयुक्तान् ग्रहान् लग्नं च पश्यति ॥
कन्यांशकगतश्चान्द्रिर्गर्भस्थं त्रितयं वदेत् ॥ २६ ॥
युग्मांशकस्तु कन्यैका द्वौ पुमांसौ च गर्भजाः ॥
युग्मांशगान्विलग्नं च गर्भस्थाः पुरुषास्त्रयः ॥ २७ ॥
कन्यायुग्मांशकोपेतांस्तथा युग्मांशगो बुधः ॥
कन्यानवांशकः सौम्यस्तिस्रो गर्भगताङ्गनाः ॥ २८ ॥

अत्र २४ श्लोकटीका विलोक्या ॥ २६–२८ ॥

कन्या राशिके नवांशमें गत बुध यदि द्विस्वभाव ( ३।६।९।१२ ) राशिके नवांशमें प्राप्त ग्रहों और लग्नको देखता हो तो गर्भमें ३ बच्चे, जिनमें २ पुत्री और १ पुत्र हों ॥ २६ ॥

यदि बुध मिथुन नवांशका होकर उन्हें देखे तो एक पुत्री और २ पुत्र गर्भमें कहे। यदि बुध मिथुनांशगत होकर मिथुनांशगत ग्रह और लग्नको देखे तो तीनों पुत्र हों ॥ २७ ॥

कन्या और मिथुननवांशगत ग्रहों तथा लग्नको मिथुनांशगत बुध देखे तो ३ पुत्र, यदि कन्यांशगत बुध देखे तो ३ लड़कियां कहनी चाहिये। ( सु० शा० कार ) ॥ २८ ॥

द्विस्वभावगतावर्कगुरू बुधनिरीक्षितौ ॥
पुंयुग्मं कुरुतस्तद्वत् शशिशुक्रमहीसुताः ॥ २९ ॥
कुर्वन्ति स्त्रीयुगं तत्र बलाबलविशेषतः ॥ २९½ ॥

अत्र २१ श्लोकव्याख्यावलोकनेन स्पष्टं स्यात् ॥ २९½ ॥

द्विस्वभाव राशिके अंशमें स्थित सूर्य और गुरु यदि बुधसे दृष्ट हों तो दो पुरुषका जन्म कारक होते हैं। एवं चन्द्र, शुक्र और मङ्गल द्विस्वभावमें हों तो दो कन्याकी उत्पत्ति करते हैं। दोनों योगोंकी प्राप्तिमें बलाबल देखकर अधिक बलवालेका फल कहना। ( २१ श्लोककी सं० टी० देखिये ॥ २९½ ॥

स्त्रीनपुंसकदश्चान्द्रिः पुंनपुंसकदोऽर्कजः ॥ ३० ॥
निषेककाले चन्द्रार्कावन्योन्यं यदि पश्यतः ॥
तथैव चन्द्रमन्दौ वा क्लीबजन्मप्रदौ तथा ॥ ३१ ॥

अनेन क्लीबजन्म निगदितं तदपि २३ श्लोकव्याख्यानान्तर्गतमेव ॥ ३०–३१ ॥

बुध कन्या नपुंसकको उत्पन्न करनेवाला होता है, शनि पुरुष नपुंसक उत्पन्न करनेवाला होता है ॥ ३० ॥

गर्भाधानके समय चन्द्रमा और सूर्य यदि परस्पर देखते हों, इसी प्रकार चंद्र और शनि भी तो नपुंसकको उत्पन्न करते हैं ॥ ३१ ॥

निषेके भ्रातृलग्नेशयोगे यमलसम्भवः ।
लग्नेशे भ्रातृपक्षस्थे स्वोच्चे वा यमलोद्भवः ॥ ३२ ॥

अत्रापि यमलयोग उच्यते। निषेके=आधानकाले, भ्रातृलग्नेशयोगे—लग्नेशसहजेशयोर्योगे यमलसंभवो वाच्यः। तथा लग्नेशे भ्रातृपक्षस्थे=तृतीयगते वा स्वोच्चगते यमलोद्भवो वाच्यः। सर्वार्थचिन्तामणावपि यमलजन्मयोगः—

"निषेकलग्नेशतृतीयनाथौ लग्नस्थितौ चेद्यमलोद्भवः स्यात्।
तृतीयनाथेन युतो निषेकलग्नेश्वरस्तत्सहजे तथैव" इति ॥ ३२ ॥

गर्भाधानके समय भ्रातृस्थानेश और लग्नेशका योग हो तो यमल ( दो ) का जन्म हो। लग्नेश भ्रातृस्थानमें हो, या उच्चस्थानमें हो तो यमल होता है ॥ ३२ ॥

षष्ठेशो देहसम्बन्धी बुधः षष्ठगतो यदि ॥
बुधक्षेत्रे च जननं यस्य स स्त्रीनपुंसकः ॥ ३३ ॥
बुधस्थानेन शनिना पुंनपुंसकता भवेत् ॥ ½ ॥

अथ पुंस्त्रीक्लीबयोगमाह । षष्ठेशो देहसम्बन्धी = लग्नसम्बन्धी ( दृष्टिसम्बन्धिको योगसम्बन्धिको वा ) भवेत्, बुधः षष्ठभावगतो भवेत् । बुधक्षेत्रे च = लग्नं बुधक्षेत्रयोः मिथुनकन्ययोरन्यतरं यदि स्यात्तदानीं यस्य जन्म भवति स स्त्रीनपुंसको भवेदर्थात्तस्य स्त्री च नपुंसकत्वमाप्नुयादिति । तत्रैव शनिना बुधस्थानेनार्थादुक्तयोगे शनिना सहितो बुधश्चेत्तदा पुंनपुंसकता पुरुष एव नपुंसकत्वमाप्नुयादित्यर्थः । अन्यदपि सर्वार्थचिन्तामणौ—

"लग्ने बुधक्षेत्रगतेऽरिनाथे लग्नेश्वरे सोमसुतर्क्षसंस्थे ।
जातस्तु सस्त्रीकनपुंसकः स्याच्छन्यारयोगात्पुरुषस्तु षण्ढः" ॥ ३३½ ॥

निषेककालमें या जन्मकालमें षष्ठेश लग्नका सम्बन्धी हो ( लग्नमें प्राप्त हो या लग्नको देखता हो ) बुध ६ ठें भावमें हो और बुधके क्षेत्र याने लग्न ( ३।६ ) में जिसका जन्म हो उसकी स्त्री नपुंसक होती है। यदि यहां बुधके साथ शनि हो तो पुरुष नपुंसक हो ॥ ३३½ ॥

निषेकलग्नेशतृतीयनाथौ लग्नस्थितौ चेद्यमलोद्भवः स्यात् ॥ ½ ॥

अयमपि यमलजन्मयोगः । लग्ने ( निषेककालिके ) लग्नेशतृतीयेशयोर्योगो यमलजन्मदो भवतीति ॥ ½ ॥

आधानलग्नका स्वामी और तृतीयेश लग्नमें स्थित हो तो यमलका जन्म हो ॥ ½ ॥

## अथ पादजातत्वप्रदौ योगौ ।

तृतीयनाथेन युते निषेके भोगीशयुक्ते यदि पादजातः ॥ ३४ ॥
* राहूदये लग्ननाथे कर्मस्थे पादपूर्वजः ॥ ½ ॥

इदानीं प्रसवे पादजातयोग उच्यते । निषेकलग्ने तृतीयेशो राहुश्च यदि भवेतां तदा जातः पादजातो ( मातृगर्भात्प्रथमं पादावेव निःसरिताविति ) भवति । तथा राहुर्लग्नगतो लग्नेशः कर्म्म-( दशम ) भावगतस्तदा पादपूर्वजः प्रथमं पादावेव जातौ जातस्येति वाच्यम् । उक्तञ्च—

"लग्नेश्वरे कर्मगते विलग्ने भोगीन्द्रयुक्ते सति पादजातः" इति सर्वार्थचिन्तामणौ ३४½ ।

निषेकलग्न तृतीयेश और राहुसे युक्त हो तो पैरसे उत्पन्न हो। राहु लग्नमें और लग्नेश कर्ममें हो तो पहले पैरसे जन्म होता है ॥ ३४½ ॥

## अथ सर्पवेष्टितदेहप्रदा योगाः ।

सराहौ रन्ध्रपे लग्ने जातः स्यात् सर्पवेष्टितः ॥ ३५ ॥
रन्ध्रेश्वरे पापयुते विलग्ने †जातो नगैर्वेष्टितदेहवान्स्यात् ।
केन्द्रे सराहौ गुलिकेन युक्ते लग्नेश्वरे वा निधनेशयुक्ते ॥ ३६ ॥
क्रूरग्रहाणां च दृगाणलग्ने जातो नगैर्वेष्टितदेहवान् स्यात् ।
लग्नत्रिभागोऽण्डजसर्पकोलास्तन्नाथयुक्तस्तु तथा त्रिभागः ।
शुभग्रहाणां च दृशा विहीने जातो नगैर्वेष्टितदेहवान् स्यात् ॥ ३७ ॥
शशांके पापलग्ने वा वृश्चिकेशत्रिभागगे ।
शुभैः स्वार्यस्थितैर्जातः सर्पस्तद्वेष्टितोऽपि वा ॥ ३८ ॥

---

* राहुर्लग्ने इति साधुः । † जातोरगैरिति पाठान्तरमसाधु ।

चतुष्पादगते भानौ शेषैर्वीर्यसमन्वितैः ।
द्वितनुस्थैश्च यमलौ भवतः कोशवेष्टितौ ॥ ३९ ॥
छागसिंहवृषे लग्ने तत्स्थे सौरेऽथवा कुजे ।
राश्यंशसदृशे गात्रे जायते नालवेष्टितः ॥ ४० ॥
लग्ने सपापे बहुपापदृष्टे राहुध्वजाभ्यां सहितेऽथवाऽत्र ।
पापग्रहाणां तु विलग्नभे वा जातो नरो नालविवेष्टिताङ्गः ॥ ४१ ॥
क्रूरान्तरे लग्नगते सराहौ लग्ने कुजे वासरनाथदृष्टे ।
लग्ने शनौ भुमिसुतेन दृष्टे जातो नरो नालविवेष्टिताङ्गः ॥ ४२ ॥

इदानीं जन्मकाले सर्पवेष्टितशरीरजन्मयोगा उच्यन्ते । गर्भे सर्पस्यासम्भवात्तदाकारनालेन वेष्टितो भवति जातक इत्यवगन्तव्यम् । लग्ने राह्वष्टमेशयोर्योगे सर्पवेष्टितो भवति(१) लग्ने पापग्रहाष्टमेशयोर्योगे सर्पवेष्टितस्य जन्म ( २ ) ।

केन्द्रे ( १।४।७।१० ) राहुः, लग्नेशो गुलिकेन वाऽष्टमेशेन युक्तः तथा लग्ने पापद्रेष्काणे सति सर्पवेष्टितस्य जन्म ( ३ ) ।

लग्नस्य त्रिभागे ( द्रेष्काणे ) अण्डजो विहङ्गः, सर्पो व्यालः, कोलो निगलः एते भवेयुरर्थादेतेषां द्रेष्काणानामन्यतमो लग्ने भवेत् ( ५ अ० ५५ श्लो० द्रष्टव्यः ) तथा त्रिभागः=द्रेष्काणस्तन्नाथेन=तत्पतिनायुक्तो भवेत् लग्ने शुभग्रहदृष्टिविहीने च सर्पवेष्टितस्य जन्म (४)।

चन्द्रः पापग्रहराशिलग्ने भवेद्वा भौमस्य द्रेष्काणे भवेत्, शुभग्रहा द्वितीयैकादशस्थानगताः स्युस्तदा सर्पवेष्टितस्य जन्म सर्पस्य वेति ( ५ ) ।

सूर्ये चतुष्पदराशिगते, शेषैश्चन्द्रादिभिर्बलिभिर्द्विस्वभावगतैश्चैकजरायुवेष्टितौ यमलौ जायेते ( ६ ) ।

मेषे, सिंहे, वृषे वा लग्नगते, तत्र शनौ वा भौमे विद्यमाने, राश्यंशसदृशे गात्रे=लग्ने यस्य राशेर्नवांशो भवेत्स राशिः पुरुषस्य ( कालात्मकस्य ) यस्मिन्नङ्गे भवति तस्मिन्नङ्गे नालवेष्टितो जायते जातक इति ( ७ ) ।

सपापे लग्ने इत्यादि स्पष्टमेव ( ८ ) ।

पापग्रहयोर्मध्ये लग्ने, तत्र राहुर्भवेत्, वा लग्ने कुजो रविणाऽवलोकितो भवेत्, वा लग्ने शनिः कुजेनावलोकितो भवेदिति योगत्रयेऽपि नालवेष्टितस्य जन्म वाच्यम् ( ९ ) ।

Notes—एषु ३८-४० श्लोका वराहस्यापरे गर्भार्थचिन्तामणेः ॥ ३५-४२ ॥

अष्टमेश राहुके साथ लग्नमें हो तो जातक सर्पसे वेष्टित उत्पन्न होता है ॥ ३५ ॥

अष्टमेश पापग्रहके सहित लग्नमें हो तो जातक सर्पसे वेष्टित उत्पन्न हो । केन्द्र राहुसे युक्त, लग्नेश गुलिकसे वा अष्टमेशसे युक्त हो, क्रूरग्रहके द्रेष्काणमें लग्न हो तो जातक नालवेष्टित जन्म ले ॥ ३६ ॥

लग्नमें अण्डज ( सिं० का १ ला ) सर्प ( कर्कका २, मीनका ३, वृश्चिकका १ द्रेष्काण ) और कोल ( सूकर=मकरका १ द्रे० ) द्रेष्काण हो तथा द्रेष्का० उसके पतिसे युक्त हो, लग्नमें शुभग्रहोंकी दृष्टि न हो तो जातक सर्पसे लिपटा हुआ जन्म लेता है ॥ ३७ ॥

चन्द्रमा पापग्रहकी राशिका हो अथवा मङ्गलके द्रेष्काणमें हो शुभग्रह २ रे और १२ वें में हों तो सर्पका अथवा सर्पसे लिपटे हुये का जन्म कहे ॥ ३८ ॥

सूर्य चतुष्पद राशिका हो, शेषग्रह बली होकर द्विस्वभावमें हों तो दो बालक नालसे बँधे हुये जाने ॥ ३९ ॥

मेष, सिंह, या वृष लग्न हो, वहां शनि वा मङ्गल स्थित हो तो लग्नके नवांशकी राशि वाले अङ्गमें नालसे लिपटा हुआ जातकको जाने ॥ ४० ॥

लग्नमें पापग्रह हो पापग्रहोंसे दृष्ट हो, वा राहु या केतुसे युक्त हो, वा पापग्रहोंकी राशिमें हो तो जातक नालसे वेष्टित उत्पन्न होता है ॥ ४१ ॥

लग्न क्रूरग्रहोंके बीचमें राहुके साथ हो, या लग्नमें मङ्गल हो उसे सूर्य देखता हो, या लग्नमें शनि हो उसे मङ्गल देखता हो तो उत्पन्न होने वाले बालकका शरीर नालसे वेष्टित होता है ॥ ४२ ॥

## अथ प्रसूतिकालज्ञापिका ग्रहस्थितिः ।

* तत्काल इन्दुसहितो द्विरसांशको यस्तत्तुल्यराशिसहिते पुरतः शशाङ्के ।
यावानुदेति दिनरात्रिसमानभागस्तावद्गते दिननिशोः प्रवदन्ति जन्म ॥४३॥
उदयति मृदुभांशे सप्तमस्थे च मन्दे ।
यदि भवति निषेकः सूतिरब्दत्रयेण ॥
शशिनि तु विधिरेष द्वादशाब्दैः प्रकुर्यात् ।
निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या ॥ ४४ ॥

इदानीं निषेकात्प्रश्नाद्वा प्रसवकालज्ञानमाह । तत्काले = निषेककाले वा प्रश्नकाले यस्य राशेर्यस्मिन्द्वादशभागे चन्द्रो भवेत्तस्माद्द्वादशांशराशेस्तत्तुल्यराशिसहिते = तावन्मिते राशौ चन्द्रेऽग्रतो विद्यमाने सति दशमे मासे प्रसवो वाच्यः ।

अत्रोदाहरणम्—माघशुक्लपञ्चम्यां कस्यचिन्निषेककाले = स्पष्टचन्द्रः = ५।२०।१५'।१०'' । तत्र कन्याराशेर्नवमो द्वादशांशो वृषस्य भवति, तेन वृषान्नवमो मकरस्तस्मिन्यदा चन्द्रो दशमे मासे कार्तिके भवेत्तदा प्रसवो वक्तव्य इति ।

अथ जन्मकालनक्षत्रानयनम् । भुक्तवृषद्वादशांशमानम् = ०।१५'।१०'' = १५' स्वल्पान्तरात् । ततः सम्पूर्णद्वादशांशप्रमाणेन १५०' अनेन चक्रकला लभ्यन्ते तदा १५' अनेन का इति= $\frac{१८००' \times १५'}{१५०'}$ = १८०' । प्रतिराशिं नव चरणास्तेनैकस्मिंश्चरणे २००' कला भवन्ति, तस्मात् १८०'÷२०० = १ स्व० अं० । अतो मकरराशेः प्रथमचरणे ( उत्तराषाढनक्षत्रस्य द्वितीयचरणे ) प्रसवो भविष्यतीति वाच्यम् ।

अथ दिनरात्रिकालज्ञानम् । यावानुदेति दिनरात्रिसमानभागः । दिनरात्रिसंज्ञकाः प्रथमाध्याये चतुर्दशश्लोके व्याख्याताः । निषेककालिको लग्नभागो दिनसंज्ञको रात्रिसंज्ञको वा यावद्गत उदेति । एतदुक्तं भवति-निषेकलग्ने दिनरात्रिसंज्ञकस्य नवांशकस्य ये गतांशा भवन्ति, तावद्गते = तद्वशाद्दिननिशोर्गते काले जन्म प्रवदन्ति विज्ञा इति ।

अत्र कल्प्यते निषेकलग्नम्—३।१०।१२'।१५''। अत्र कर्कराशेश्चतुर्थो नवांशो हि तुलाया भवति, तुला दिनसंज्ञिका तेन दिने जन्म भवेत् । तत्रेष्टकालानयनम् । अत्र चतुर्थनवांशभुक्तमानम् = १२'।१५'' । तेनानुपातो यदि निखिलमानेन ( २००' ) अनेन निषेकदिनमितिः ( २६।३० ) लभ्यते तदा-( १२'।१५'' ) नेन का इति = $\frac{२६\frac{१}{२} \times १२\frac{१}{४}'}{२००'}$ = १।४० स्वल्पान्तरात् । अतो दिने १।४० घट्यादीष्टकाले जन्म स्यादिति वाच्यम् ॥४३॥

अथ दीर्घकालप्रसवयोगमाह । मृदुभांशे उदयति = निषेकलग्ने मकरकुम्भयोरन्यतरस्य नवांशे विद्यमाने, मन्दे = शनैश्चरे सप्तमस्थे च यदि निषेकः = गर्भाधानं भवति तदा तस्य गर्भस्य वर्षत्रयानन्तरं सूतिः = प्रसवो भवति । तु पुनरेष एव विधिर्यदि शशिनि= चन्द्रे भवेत्, अर्थात् निषेकलग्ने कर्कराशेर्नवांशो भवेत् तथा लग्नात्सप्तमगश्चन्द्रो भवेत्तदा

* तत्कालमिन्दुसहितः इति पाठान्तरम् ।

निषेकानन्तरं द्वादशे वर्षे प्रसवो वाच्यः । एतद्योगद्वयमधुना मानुषयोनौ प्रायो न दृश्यते । इह = निषेकप्रकरणे निगदितं = ग्रहयोगादिवशाद्यच्छुभाशुभमुक्तं तत्सकलं, सूतिकालेऽपि = जन्मकाले, अपि-शब्दात्प्रश्नकाले च युक्त्या = विवेकपूर्वकं चिन्त्यमिति ॥ ४४ ॥

गर्भाधानके समय चन्द्रमा जिस राशिमें जिसके द्वादशांशमें हो उतनी ही संख्या वाली राशिमें द्वादशांशवाली राशिके आगे दशवें मासमें चन्द्रमाके होनेपर जन्म कहे। जैसे किसीका गर्भाधानकालिक चन्द्रमा सिंह राशिमें वृषके द्वादशांशमें है, सिंहसे वृष १० वां है, इसलिये वृषसे १० वीं कुम्भराशिमें चन्द्रमा जब १० वें मासमें होगा तो जन्म होगा। दिन तथा रात्रि-संज्ञक निषेकलग्नका नवांश जितना बीता हो उसके अनुपातसे प्राप्त दिन, रात्रिके बीतने पर जन्म कहना चाहिये । संस्कृत टीकामें उदाहरणसे स्पष्ट समझें। ( सु० शा० कार ) ॥ ४३ ॥

आधानलग्नमें यदि शनिका नवांश हो और शनि सप्तम स्थानमें बैठा हो तो तीन वर्षमें प्रसव होता है।

यदि चन्द्रमा का नवांश आधानके लग्नमें हो और चन्द्रमा सप्तम स्थानमें बैठा हो तो बारहवें वर्षमें प्रसव होगा । इस निषेकप्रकरणमें हीनाधिक अङ्ग और पित्रादिकके कष्टके योग कहे हैं, वे जन्म तथा प्रश्नमें भी युक्तिसे विचार करके कहे ॥ ४४ ॥

३ वर्षे प्रसवयोगः ।




१२ अब्दे प्रसवयोगः ।




## अथ संस्कारविहीनपुत्रजन्मज्ञापका योगाः ।

पितृकर्मेश्वरौ दुःस्थौ देहेशे बलसंयुते ।
विना सीमन्तकर्मादि जातः पुत्रो न संशयः ॥
लाभे पापे पापगृहे न सीमन्तयुतो भवेत् ॥ ४५½ ॥

ग्रन्थकर्त्रा 'पितृ' इति पञ्चमभावस्य संज्ञा कृता 'धीदेवराजपितृनन्दनपञ्चकानि' ( १ अ०, ५० श्लो० ) इति । परञ्च सर्वार्थचिन्तामणौ—

"दुःस्थानगौ कर्मशुभाधिनाथौ बली विलग्नाधिपतिस्तदानीम् ।
सीमन्तकर्मादि विनैव जातो भवेन्नरः प्राथमिकोऽपि तत्र ।
लाभे सपापे त्वथ तद्गृहे वा जातो नरः प्राथमिकोऽपि तत्र" ॥

इत्यवलोक्यते । तेन 'पितृकर्मेश्वरौ' इत्यत्र धर्मकर्मेश्वराविति बोध्यम् । तथा सति जन्मकाले नवमेशदशमेशौ दुःस्थौ = षड्ष्टव्ययगतौ । शेषं स्पष्टमेवेति ॥ ४५½ ॥

जन्मकालमें नवमेश और दशमेश दुष्ट स्थानमें हों, लग्नेश बली हो तो सीमन्त आदि कर्मके विना ही पुत्र उत्पन्न हुआ कहे । एकादश स्थानमें पापग्रह हो या एकादश पापगृह हो तो उस बालकको सीमन्त संस्कारसे हीन समझे ॥ ४५½ ॥

## अथ पितुरसन्निधौ जन्मयोगाः ।

पितुर्जातः परोक्षस्य लग्नमिन्दावपश्यति ।
विदेशस्थस्य चरभे मध्याद्भ्रष्टे दिवाकरे ॥ ४६ ॥

उदयस्थेऽथवा मन्दे कुजे वाऽस्तं समागते ।
स्थिते वाऽन्तः क्षपानाथे शशाङ्कसुतशुक्रयोः ॥ ४७ ॥

चन्द्रो लग्नं न पश्यति तदा पितुः परोक्षे जन्म वाच्यम् । सूर्ये मध्याद्शमभावाद्भ्रष्टे = रहिते सति ( एकादशे नवमे वा ) चरभे = चरराशौ विद्यमाने जन्मकाले जातकस्य पिता विदेशगतो भवति । तत्रापि चन्द्रे लग्नमपश्यतीति वक्तव्यम् । तथोक्तं ग्रन्थान्तरे—

चरराशिगते भानौ नवमाष्टमसंस्थिते ।
शिशोः पिता विदेशस्थो लग्नं चन्द्रेण नेक्षितम् ॥ इति ॥ ४६ ॥

अथवा मन्दे = शनावुदये = लग्ने विद्यमाने, अथवा कुजे अस्तं = सप्तमभावं समागते, अथवा क्षपानाथे = चन्द्रे शशाङ्कसुतशुक्रयोर्बुधशुक्रयोरन्तर्मध्यङ्गते ( चन्द्रादेको द्वितीयेऽपरो द्वादशे विद्यमानस्तदा ) पितुः परोक्षे जन्म वाच्यमिति ।

स्वल्पजातकेऽप्युक्तम्—

"चन्द्रे लग्नमपश्यति मध्ये वा सौम्यशुक्रयोश्चन्द्रे ।
जन्म परोक्षस्य पितुः यमोदये वा कुजे वास्ते" इति ॥ ४७ ॥

यदि जन्मकुण्डलीमें चन्द्रमा लग्नको न देखे तो उस बालकका पिता उस समय परोक्षमें था । सूर्य चरराशिमें तथा ८।९।११।१२ स्थानमें से किसी स्थानमें हो तो पिताको विदेशमें जाने । यदि चन्द्रमा लग्नको न देखता हो और सूर्य स्थिरराशिमें तथा ८।९।११।१२ स्थानोंमें से किसीमें हो तो पिताको उसी देशमें परोक्षमें जाने । चन्द्रमा लग्नको न देखता हो और सूर्य द्विस्वभाव राशिमें तथा ८।९।११।१२ स्थानोंमेंसे किसी स्थानमें स्थित हो तो स्वदेश परदेशके मध्य में पिताको जाने ॥ ४६ ॥

अथवा शनि लग्नमें हो तो पिताको परोक्षमें जाने, वा मङ्गल सप्तममें हो तो पिताको परोक्षमें जाने, वा बुध और शुक्रके मध्यमें चन्द्रमा ( चन्द्रमासे एक दूसरे, एक १२ वें ) हो तो पिताके परोक्षमें जन्म जाने ॥ ४७ ॥

**पितुरौरसः क्षेत्रजो वेति ज्ञापिका द्युचरस्थितिः ।**

**लग्ने वा यदि शीतांशौ शुभखेचरराशिगे ।**
**औरसोऽयं भवेज्जातो गुरुवर्गसमन्विते ॥ ४८ ॥**
**जीवो न भौमसंदृष्टः स्ववर्गे चार्कचन्द्रमाः ।**
**क्षेत्रजोऽयं भवेज्जातः ससौम्यो वा बलान्वितः ॥ ४९ ॥**
**मन्दवर्गगते चन्द्रे मन्दयुक्ते तु पञ्चमे ॥**
**भानुभार्गवसंदृष्टे पुत्रः पौनर्भवो भवेत् ॥ ५० ॥**

लग्ने वा चन्द्रे शुभग्रहाणां राशौ विद्यमाने तत्र गुरोः वर्गो (क्षेत्रादिकः) यदि भवेत्तदा जातकोऽयमौरसः = स्वस्य पितुरिति वाच्यम् । अथ गुरुर्भौमेनानवलोक्यमानः, सूर्येण सह चन्द्रमाः स्ववर्गे विद्यमानो वा बुधयुक्तो बली च भवेत् तदा जातकोऽयं क्षेत्रजः = स्वमात्रा परपुरुषेण चोत्पादितो भवतीति वाच्यम् । अथ चन्द्रे मन्दवर्गगते, तु पुनः पञ्चमे भावे शनियुक्ते विद्यमाने, उभयत्र भानुभार्गवाभ्यां सन्दृष्टे जातकः पौनर्भवः पुत्रः भवेत् । पुनर्भुवोत्पादितः पौनर्भवः । तत्र पुनर्भूरेकदा परिणीता स्त्री पुनरन्यपुरुषपरिणीतेति कथ्यते ॥४८-५०॥

जन्मकालमें लग्न वा चन्द्रमा शुभग्रहकी राशिका हो और गुरुके वर्गसे युक्त हो तो यह जातक औरस है ऐसा जाने ॥ ४८ ॥

बृहस्पति मङ्गलसे न देखा हो, बलवान् सूर्य और चन्द्रमा अपने वर्गमें हों और बुधके साथ हों तो जन्मलेनेवाला क्षेत्रज ( अपनी माता तथा पर पुरुषसे उत्पन्न ) होता है ॥४९॥

शनिके वर्गमें चन्द्रमा हो, शनिसे युक्त पञ्चममें हो सूर्य और शुक्रसे दृष्ट हो तो यह जातक पौनर्भव है सो जानना ॥ ५० ॥

अथ अनूढापत्यत्वसाधको ग्रहयोगः ।

व्यये भास्करसंदृष्टे वर्गे भास्करचन्द्रयोः ।
चन्द्रसूर्ययुते वाऽपि कानीनोऽयं भवेन्नरः ॥ ५१ ॥

इदानीं कन्यकाजात उच्यते। स्पष्टार्थः श्लोकः! कानीनः कुमारिकायामुत्पन्नः। "कानीनः कन्यकाजातः" इत्यमरोक्तेः ॥ ५१ ॥

बारहवां भाव सूर्यसे देखा जाता हो, या सूर्य और चन्द्रमाके वर्गमें क्रमसे चन्द्र और सूर्य युक्त हों तो जन्म लेनेवाला कानीन याने बिना ब्याही लड़की (कुमारी) का पुत्र होता है ॥ ५१ ॥

अथ दत्तपुत्रत्वसाधको योगः ।

चन्द्रदृष्टियुतो मान्दिर्भानुपुत्रसमन्वितः । तद्वीक्षणयुतो वाऽपि दत्तपुत्रो भवेन्नरः ॥
शन्यङ्गारकसंयुक्ते सप्तमे वाऽथ पञ्चमे । अन्यैरवीक्षिते खेटैः कृत्रिमं तु विनिर्दिशेत् ॥

इदानीं दत्तकपुत्रयोगमाह । मान्दिर्गुलिकश्चन्द्रेणावलोकितः, शनियुक्तः, शनिनावलोकितो वा भवेत्तदा जायमानो नरो दत्तपुत्रो भवेदर्थादसौ कस्यचिद्दत्तको भविष्यतीति ज्ञेयम् । अथ कृत्रिममाह । जन्मकाले शनिभौमौ सप्तमे वा पञ्चमे भावे भवेतां तत्रान्यग्रहाणां दृष्टेरभावश्चेत्तदा जातकं कृत्रिमं पुत्रं विनिर्दिशेत् । असौ जातकः कारणवशात्कस्यचित्पुत्रत्वं भजत इत्यर्थः ॥ ५२-५३ ॥

चन्द्रमा गुलिकको देखता हो, गुलिक शनिसे युक्त हो अथवा शनिसे देखा जाता हो तो जन्म लेनेवाला किसीका दत्तक पुत्र होता है ॥ ५२ ॥

शनि और मङ्गल सातवें अथवा पांचवें भावमें हों उसमें अन्य ग्रहोंकी दृष्टि यदि न हो तो जातकको कृत्रिम पुत्र कहना, याने वह किसी कारणवश (पालन, पोषण, वा लालचसे) किसीका पुत्र बन जावेगा । (सु. शा कार) ॥ ५३ ॥

अथ जारजत्वसाधका योगाः ।

परस्परक्षेत्रगतौ तु होरारसातलेशौ यदि जन्मलग्नात् ।
लग्नेश्वरो वा हिबुकेश्वरो वा ध्वजाहियुक्तो जननं परेण ॥ ५४ ॥
लग्नं शशाङ्कं सुरराजमन्त्री न वीक्षते नैकगृहस्थितौ वा ।
न जीववर्गेण युतौ तदानीं जातं वदेद्वन्यसमागमेन ॥ ५५ ॥
स्वातीद्वितीया रविवारयुक्ता ससप्तमी सोमजरेवती च ।
सद्वादशीभानुसुतश्रविष्ठा चैतेषु जातः परतो वदन्ति ॥ ५६ ॥
भद्राख्यतिथियुक्तेषु त्रिपादर्क्षान्वितेषु च ।
मन्दार्कभौमवारेषु जातमन्योद्भवं विदुः ॥ ५७ ॥
न लग्नमिन्दुं च गुरुर्निरीक्षते न वा शशाङ्कं रविणा समागतम् ।
सपापकोऽर्केण युतोऽथवा शशी परेण जातं प्रवदन्ति निश्चयात् ॥ ५८ ॥
गुरुक्षेत्रगते चन्द्रे तद्युक्ते चान्यराशिगे ।
तद्द्रेष्काणे तदंशे वा न परैर्जात इष्यते ॥ ५९ ॥

इदानीं जारजयोगानाह । जन्मनि लग्नेशश्चतुर्थेशगृहे, चतुर्थेशो लग्नेशगृहे च भवेत् (ताराग्रहाणां द्विराशिपतित्वादित्यमुक्तमित्यनुक्तमपि ज्ञेयम्) अथवा, लग्नेशहिबुकेशयोरन्यतरो यत्र कुत्रापि राहुणा केतुना वा युक्तश्चेत्तदा जातकस्य परेणान्यपुरुषेण जननं वाच्यम्, इति योगत्रयम् ॥ ५४ ॥

अथ गुरुः लग्नं चन्द्रं च न वीक्षते, वा एकराशिगतौ लग्नचन्द्रौ न वीक्षते गुरुस्तथा लग्नचन्द्रौ गुरुवर्गेण युतावपि न भवेतां तदानीं जातकं परपुरुषेणोत्पादितं ब्रूयादिति योगत्रयम् ।

रविवार-द्वितीयातिथि-स्वातीनक्षत्राणां योगे, वा बुधवार-सप्तमीतिथि-रेवतीनक्षत्राणां योगे, वा शनिवार-द्वादशीतिथि-धनिष्ठानक्षत्राणां योगे जातो बालः परजातो भवतीति विज्ञा वदन्ति । तथोक्तं च ग्रन्थान्तरे—

"स्वातीद्वितीयारविवारयोगे सौमात्मजे सप्तमिरेवतीषु ।
स्याद्द्वादशीवासवमन्दवारे जारेण जातं प्रवदन्ति बालम्"। इति योगत्रयम् ॥५५-५६॥

शनिसूर्यमङ्गलवारेषु भद्रातिथयः ( २।७।१२ ) त्रिपादर्क्षाणि ( पुनर्वसु-विशाखा-पूर्वभाद्रपदाः ) च यदि भवेयुस्तदानीं जातः परजात इति योगत्रयम् ॥ ५७ ॥

जन्मलग्नं, चन्द्रं, वा सूर्यसहितं चन्द्रं बृहस्पतिर्यदि न पश्यति, अथवा चन्द्रः केन-चित्पापग्रहेण सूर्येण च युक्तो भवति तदा जातकं परजातकं ब्रूयादिति योगत्रयम् ॥ ५८ ॥

अथात्र परजातयोगे चन्द्रो यदि गुरुराशि-( ९।१२ ) गतो वाऽन्यराशौ गुरुयुक्तो वा गुरोर्द्रेष्काणे नवांशे वा भवेत्तदा न परैरन्यैर्जात इष्यते इति परजातयोगपरिहारः ॥५९॥

परजातयोगः




परजातपरिहारः ।




जन्मलग्नसे १।४ भावोंके स्वामी परस्पर याने लग्नेश चतुर्थभावके क्षेत्रमें और चतुर्थेश लग्नेशके क्षेत्रमें हों, अथवा लग्नेश वा चतुर्थेश राहु वा केतुसे युक्त हो, तो जातकको दूसरे ( परपुरुष )से उत्पन्न हुआ जाने ॥ ५४ ॥

बृहस्पति, लग्न तथा चन्द्रमाको न देखता हो, वा लग्न तथा चन्द्रमा एक घरमें न हों, बृहस्पतिके वर्गोंमें भी न हों, तब दूसरे पुरुषके समागमसे जन्म कहे ॥ ५५ ॥

द्वितीया तिथि स्वाती नक्षत्र और रविवारसे युक्त हो, सप्तमी बुधवार रेवती नक्षत्रसे युक्त हो और द्वादशी शनिवार धनिष्ठा नक्षत्रसे युक्त हो तो इन योगोंमें उत्पन्न जातकको जारके वीर्यसे उत्पन्न जाने ॥ ५६ ॥

शनि, रवि और मंगल दिनोंमें भद्रा तिथि ( २।७।१२ ) और ३ चरणवाले (पुनर्वसु, विशाखा और पूर्वभाद्रपद ) नक्षत्रोंके योगमें जन्म लेनेवाला परजात कहा गया है ॥५७॥

जन्मलग्न और चन्द्रमाको बृहस्पति न देखता हो तो बालकको जारोत्पन्न जाने। यदि गुरुके नवांशका लग्न हो तो उसे जारपुत्र न जाने। सूर्य और चन्द्रमा एक राशिपर हों, उन्हें बृहस्पति न देखता हो तो जारपुत्र कहे। एक राशिमें सूर्य और चन्द्रमा होकर शनि वा मंगलसे युत हो तो भी जारपुत्र कहे ॥ ५८ ॥

चन्द्रमा बृहस्पतिकी राशिमें हो, अथवा बृहस्पतिके साथ किसी दूसरी राशिमें हो, अथवा चन्द्रमा बृहस्पतिके द्रेष्काण वा नवांशमें हो तो परजात योग होते हुये भी वह परजात नहीं होता। स्पष्टताके लिये संस्कृत टीका और चक्र देखिये। (मु० शा० कार) ॥ ५९ ॥

## अथ जन्मनि पितुर्बद्धत्वादि ।

क्रूर्क्षगतावशोभनौ सूर्याद्द्यूननवात्मजस्थितौ ।
बद्धस्तु पिता विदेशगः स्वे वा राशिवशात्तथा पथि ॥ ६० ॥

इदानीं पितुर्बद्धयोगमाह । अशोभनौ= द्वौ पापग्रहौ (शनिभौमौ) पापग्रहराशिगतौ सूर्यात्सप्तम-नवम-पञ्चमभावानामन्यतमगतौ च भवेतां तदा जातकस्य पिता राशिविशाद् विदेशगो वा स्वदेशेऽथवा पथि = मार्गे बद्धो (कारागारादौ) भवति । इदमुक्तं भवति। सूर्ये चरराशौ विद्यमाने विदेशे, स्थिरराशौ स्वदेशे, द्विस्वभावे च पथि=मार्गे बद्धो भवतीति ॥ ६० ॥

पथि बद्धयोगः ।




पापग्रहकी राशि ( १ । ५ । ८ । १० । ११ ) में दो पापग्रह हों और सूर्यसे सप्तम नवम या पंचम भाव में हों तो जन्मके समय बालकके पिताको बन्धनमें आने । यदि सूर्य चर· राशिमें हो तो परदेशमें पिता बँधा है । स्थिर राशिमें हो तो स्वदेशमें, द्विस्वभाव राशिमें हो तो मार्गमें बँधा है, ऐसा कहे ॥ ६० ॥

## अथ जन्मदेशाः ।

पूर्णे शशिनि स्वराशिगे सौम्ये लग्नगते शुभे सुखे ।
लग्ने जलजेऽस्तगेऽपि वा चन्द्रे पोतगता प्रसूयते ॥ ६१ ॥
आप्योदयमाप्यगः शशी सम्पूर्णः समवेक्षतेऽथवा ।
मेषूरणबन्धुलग्नगः स्यात् सूतिः सलिले न संशयः ॥ ६२ ॥
उदयोडुपयोर्व्ययस्थिते गुप्त्यां पापनिरीक्षिते यमे ।
अलिकर्कियुते विलग्नगे सौरे शीतकरेक्षितेऽवटे ॥ ६३ ॥
मन्देऽब्जगते विलग्नगे बुधसूर्येन्दुनिरीक्षिते क्रमात् ।
क्रीडाभवने सुरालये जननं* चोषरभूमिषूद्दिशेत् ॥ ६४ ॥
नृलग्नं प्रेक्ष्य कुजः श्मशाने रम्ये सितेन्दू गुरुरग्निहोत्रे ।
रविर्नरेन्द्रामरगोकुलेषु शिल्पालये ज्ञः प्रसवं करोति ॥ ६५ ॥
राश्यंशसमानगोचरे मार्गे जन्म चरे स्थिरे गृहे ।
स्वर्क्षांशगते स्वमन्दिरे बलयोगात्फलमंशकर्क्षयोः ॥ ६६ ॥

इदानीं जातकस्य जन्मप्रदेशज्ञानमुच्यते । पूर्णश्चन्द्रः कर्कटस्थः, सौम्यः=बुधो लग्नगतः, शुभः=बृहस्पतिरेव चतुर्थगतः ( शुभे शुक्रस्यापि ग्रहणे चतुर्थे भवने सूर्याज्ज्ञशुक्रौ भवतः कथमित्यापत्तिः स्यात् । यतः शुक्रबुधौ सूर्यादग्रे पृष्ठे च राशिचतुष्काभ्यन्तर एव सदा भवत एव नियमः ) स्यात्तदा अथवा जलजराशौ लग्ने तस्मात्सप्तमे भावे चन्द्रः पूर्णोऽपूर्णो वा भवेत्तदा पोते ( नौकायाम् ) प्रसवो भवतीति ज्ञेयम् ( योगद्वयम् ) ॥ ६१ ॥

जलचरराशिगतश्चन्द्रो जलचरं लग्नञ्च भवति, अथवा पूर्णचन्द्रो जलचरलग्नं पश्यति, अथवा जलचरलग्नात् चन्द्रः प्रथमे, चतुर्थे, दशमे वा भवेत्तदा सलिले = जलसन्निधौ सूति· र्निश्चयेन वाच्येति योगत्रयम् ॥ ६२ ॥

यमे = शनौ लग्नचन्द्राभ्यामेकत्र स्थिताभ्यां द्वादशे भावे वर्तमाने तस्मिन् पापग्रहेक्षा·

* 'सोस्वरभमिष च प्रसूयते' इति पाठान्तरम् ।

वलोकिते, गुप्त्यां = कारागारे प्रसवो वाच्यः। यदि लग्ने कर्को वृश्चिको वा राशिर्भवति तत्र शनौ विद्यमाने चन्द्रदृष्टे च, अवटे = कूपथे ( गर्त्ते ) प्रसवो वाच्य इति ॥ ६३ ॥

जलचरराशिलग्ने वर्त्तमानः शनिर्बुधेनावलोकितश्चेत्तदा क्रीडागृहे, सूर्येणावलोकितस्तदा देवमन्दिरे, चन्द्रेणावलोकितस्तदोषरभूमौ प्रसवो भवतीति ॥ ६४ ॥

नृलग्नगं = पुरुषराशिलग्नगतं मन्दं (शनिं) कुजः = मङ्गलः प्रेक्ष्य ( विलोक्येति सर्वत्रानुवर्तते ) श्मशानभूमौ, सितेन्दू = शुक्रचन्द्रौ रम्ये = रमणीयभूमौ, गुरुरग्निहोत्रे = हवनागारे, रविर्नरेन्द्रामरगोकुलेषु = राजगृहे देवालये गोष्ठे वा, ज्ञः = बुधः शिल्पालये = चित्रपुस्तकादिरचनागारे प्रसवं = जन्म करोति ॥ ६५ ॥

एतेषां योगानामभावे प्रसवदेशाज्ञाने योगान्तरमाह—राश्यंशसमानगोचरे मार्गे चरे स्थिरे च गृहे जन्म वाच्यम्। एतदुक्तं भवति। यदि चरो वा स्थिरो राशिर्लग्नं भवति, तथा लग्ने नवांशोऽपि चरो वा स्थिरो भवति तदा तस्य राशेर्नवांशस्य वा यो गोचरः = सञ्चारमार्गस्तस्मिन्प्रदेशे जन्म वक्तव्यम्। अथ च सर्वेषां राशीनां लग्ने स्वर्क्षांशगते = निजनवांशप्राप्तौ, स्वमन्दिरे = आत्मभवने जन्म वाच्यम्। अत्र यदुक्तं राश्यंशसमानगोचरे तत्किं लग्नराशिगोचर उत नवांशराशिगोचर इति सन्देहेन आह-'बलयोगात्फलमंशकार्क्षयोः'। लग्नराशिनवांशराश्योर्बलीयसोर्गोचरप्रदेशे जन्म वाच्यमिति ॥ ६६ ॥

पूर्ण चन्द्रमा कर्क राशिमें, बुध लग्नमें और बृहस्पति सुखभावमें हों तो जातकको नाव-पर उत्पन्न जाने। वा लग्न जलचर राशिका हो और चन्द्रमा सप्तम भावमें हो तो भी नावपर प्रसव जाने ॥ ६१ ॥

जन्मलग्नमें जलचर राशि और चन्द्रमा भी जलचर राशिका हो तो जलमें प्रसव जाने। लग्नको पूर्ण चन्द्रमा देखता हो तो भी जलमें प्रसव जाने। जलचर लग्नसे चन्द्रमा दशम वा चतुर्थ वा प्रथममें हो तो भी वही फल जाने ॥ ६२ ॥

जन्मलग्न और चन्द्रमासे शनि १२ वें हो और उसको पापग्रह देखता हो तो कारागार ( जेल ) में जन्म जाने। वृश्चिक या कर्क राशिका लग्न हो, उसमें शनि हो और उसपर चन्द्रमाकी दृष्टि हो तो गढ़ेमें जन्म जाने ॥ ६३ ॥

जलचर राशिका शनि लग्नमें हो, उसको बुध देखता हो तो क्रीड़ाभवन ( रतिगृह ) में जन्म जाने। सूर्य देखता हो तो देवमन्दिरमें जन्म जाने। इसी प्रकार शनिको चन्द्रमा देखे तो ऊसर भूमिमें जन्म जाने ॥ ६४ ॥

जन्मलग्न पुरुषराशि हो और उसमें शनिको मङ्गल देखता हो तो श्मशानमें जन्म जाने। शुक्र और चन्द्रमा देखें तो रमणीय घरमें जन्म, गुरु देखे तो अग्निहोत्रके घरमें, अथवा रसोईके घरमें जन्म, सूर्य देखता हो तो राजा अथवा देवताके घरमें वा गोशालामें जन्म, और बुध देखता हो तो शिल्पके घरमें जन्म जाने ॥ ६५ ॥

पूर्वमें जो प्रसव देशके ज्ञान कहे गये हैं, उनके अभावमें योगान्तर कहते हैं—चर और स्थिर राशिके लग्नमें लग्नकी राशि और नवांशकी राशिके सदृश भूमिमें जन्म कहना चाहिये ( जिस राशिकी जो भूमि कही गयी है, उसी भूमिमें )। सभी राशिके लग्नमें यदि अपना नवांश विद्यमान हो तो अपने घरमें जन्म कहना। यहां राशिकी समान भूमि या नवांशकी भूमि कहनी चाहिये ? इस सन्देहमें उत्तर यह है कि राशि या नवांशमें जो बली हो उसी-की भूमि कहनी चाहिये। ( सु० शा० कार ) ॥ ६६ ॥

अथ मात्रा त्यक्तस्य दीर्घायुष्ट्वम्।

आरार्कजयोस्त्रिकोणगे चन्द्रेऽस्ते च विसृज्यतेऽम्बया।

दृष्टेऽमरराजमन्त्रिणा दीर्घायुः सुखभाक् च स स्मृतः ॥ ६७ ॥

इदानीं मात्रा त्यक्तस्य योगं तस्य दीर्घायुष्ट्वमाह। चन्द्रे मंगलशन्योरेकत्रस्ययो-

त्रिकोणे (५।९) विद्यमाने, अथवा सप्तमे च विद्यमाने जातो बालोऽम्बया=मात्रा विसृज्यते=त्यज्यते । तथोक्तं समुद्रजातके—

'एकस्थार्कार्यारयोः कोणेऽस्ते चन्द्रे त्यज्यतेऽम्बया' इति ।

अथ तत्र योगे गुरुणा दृष्टे स जातो मात्रा त्यक्तोऽपि दीर्घायुश्चिरजीवी सुखभाक् च भवति । 'दृष्टे सुरेन्द्रगुरुणा सुखान्वितो दीर्घजीवी च' इत्यपि दर्शनात् ॥ ६७ ॥

मङ्गल और सूर्य एक स्थानमें हों और उस स्थानसे ९ वें वा ५ वें वा ७ वें भावमें चन्द्रमा हो तो बालकको माता त्याग देती है । ऐसे योगमें बृहस्पति चन्द्रमाको देखता हो तो मातासे त्यागा हुआ भी दीर्घायु और सुखी होता है ॥ ६७ ॥

## अथ मात्रा त्यक्तस्य विनाशयोगः ।

पापेक्षिते तुहिनगावुदये कुजेऽस्ते त्यक्तो विनश्यति कुजार्कजयोस्तथाऽऽये ।
सौम्येऽपि पश्यति तथाविधहस्तमेति सौम्ये तरेषु परहस्तगतोऽप्यनायुः ॥६८॥

लग्नवर्त्तिनि चन्द्रे पापग्रहेणालोकिते, भौमे सप्तमगते च जातो मात्रा त्यक्तो विनश्यति=म्रियते । तथा पूर्वोक्तश्चन्द्रः ( लग्नगतः, सूर्यदृष्टः ) कुजशन्योरेकादशस्थानगतो भवति तदा मात्रा त्यक्तो म्रियते । तथाभूते चन्द्र, सौम्येऽपि पश्यति = शुभग्रहेणाप्यवलोक्यमाने तथाविधस्य = स ग्रहो यो वर्णस्तस्य वर्णस्य हस्तमेति जीवति च । सौम्येतरेषु पश्यत्सु ( पापग्रहैरवलोक्यमाने चन्द्रे ) परहस्तगतोऽपि अनायुर्भवति = म्रियत एवेत्यर्थः ॥ ६८ ॥

लग्नस्थित चन्द्रमाको पापग्रह ( सूर्य, शनि ) देखते हों और मङ्गल ७ वें भावमें हो तो मातासे त्याग किया बालक मर जाता है । यदि चन्द्रमा ( लग्नगत, सूर्यदृष्ट ) मङ्गल और शनिसे ११ वें भावमें हो तो मातृत्यक्त बालक मरता है । उस हालतमें चन्द्रमा शुभग्रहसे देखा जाता हो तो जिस जातिके शुभग्रहसे देखा जाता हो उसी जातिके हाथमें वह बालक जाता है और जीता है । यदि चन्द्रमा पापग्रहसे देखा जाता हो तो दूसरेके हाथमें जाने पर भी बालक मरता ही है । ( बृ० शा० कार ) ॥ ६८ ॥

## अथ प्रसवस्थानम् ।

पितृमातृगृहेषु तद्बलात्तरुशालादिषु नीचगतैः शुभैः ।
यदि नैकगतैश्च वीक्षितौ लग्नेन्दू विजने प्रसूयते ॥ ६९ ॥

दिवार्कशुक्रावित्यादिना ( १५ श्लो० ) पितृमातृग्रहा उक्ताः । तत्र जन्मकाले मातृग्रहे बलवति मातृगृहे, पितृग्रहे बलवति पितृगृहे प्रसवो वाच्यः । शुभग्रहाः सर्वे नीचगतास्तदा तरुशालादिषु=वृक्षमूले, आरामे, नदीकूले, इत्यादिषु जन्म वाच्यम् । अथ लग्नचन्द्रौ त्रिप्रभृतिभिर्ग्रहैरेकगतैर्यदि न वीक्षितौ=नावलोकितौ भवतस्तदा विजने=जनरहिते स्थले प्रसूते । अर्थादेव लग्नेन्दू त्रिप्रभृतिग्रहैरेकगतैरवलोकितौ तदा जनसंकुले जन्मेति ॥ ६९ ॥

पितृसंज्ञक ग्रह ( सूर्य, शनि ) बलवान् हों तो पिता या चाचाके घरमें बालकका जन्म जाने । मातृसंज्ञक ग्रह ( चन्द्रमा, शुक्र ) बलवान् हों तो माता या मौसीके घरमें बालकका जन्म जाने । शुभग्रह नीच राशिमें हों तो वृक्षके नीचे, वा काष्ठके गृहमें, वा नदी तटपर अथवा पर्वतपर जन्म जाने । यदि लग्न और चन्द्रमाको एक राशिगत बहुत ग्रह न देखें तो निर्जन जगहमें जन्म हो । यदि बहुत ग्रह देखें तो मनुष्योंके समुदायमें जन्म जाने ॥ ६९ ॥

मन्दर्क्षांशे शशिनि हिबुके मन्ददृष्टेऽब्जगे वा
तद्युक्ते वा तमसि शयनं नीचसंस्थैश्च भूमौ ।
यद्वद्राशिर्व्रजति हरिजं गर्भमोक्षस्तु तद्वत्
पापैश्चन्द्रस्मरसुखगतैः क्लेशमाहुर्जनन्याः ॥ ७० ॥

अधुना प्रसूतिशयनस्थानं, प्रसवप्रकारं, प्रसूतिकष्टञ्चाह । शशिनि=चन्द्रे कुम्भ-

पि = राशौ शनेः ( १०।११ ) नवांशे विद्यमाने, वा हिबुके=लग्नाच्चतुर्थे, वा मन्ददृष्टे=यत्र कुत्रापि शनैश्चरेणावलोकिते, वा अब्जगे = कर्के मीने वा, ( मकरकुम्भयोः पूर्वमुक्तत्वात् ) वा तेन शनिना युक्ते चन्द्रे तमसि = अन्धकारे प्रसूतिकायाः शयनं वाच्यम्। परश्चैतेषु योगेषु चन्द्रे रविणाऽवलोकिते प्रकाश एव।

"इन्दुः सूर्येण दृष्टश्चेत्तेजस्येव तदादिशेत्"

इति दर्शनात्। नीचसंस्थैः = त्रिप्रभृतिभिर्ग्रहैर्नीचगतैर्भूमौ = धरायां शयनं वाच्यम्।

अथ गर्भमोक्षमाह—राशिः=प्रसवलग्नं, यद्वद्रिजं व्रजति यथोदयं गच्छति तद्वदस्यैव गर्भमोक्षः = प्रसवो भवति। यदि लग्नं पृष्ठोदयराशिस्तदा पृष्ठं दर्शयतोऽधोमुखस्य गर्भस्य मोक्षः। शीर्षोदये लग्ने उपरिकृतोदरस्योर्ध्वमुखस्य गर्भस्य मोक्षः। एवमुभयोदये पार्श्वदिग्गतस्य मोक्षो वाच्यः।

अथ जननीक्लेशयोगः। पापैः = पापग्रहैः, चन्द्रयुक्तैः, लग्नात् सप्तमगतैश्चतुर्थगतैर्वा जनन्याः = मातुः प्रसवकाले क्लेशं = कष्टं विज्ञा आहुः। तथोक्तं च सारावल्याम्—

"क्लेशो मातुः क्रूरैर्बन्धुस्तगतैः शशाङ्कयुक्तैर्वा" इति ॥ ७० ॥

चन्द्रमा शनिकी राशि ( १० । ११ ) या नवांशमें हो, अथवा लग्नसे ४ थे भावमें हो, वा किसी भी राशिमें शनिसे देखा जाता हो, वा जलचर ( ४ । १२ ) राशिमें हो, वा कहीं भी शनिके साथ हो तो अन्धेरेमें प्रसूतीका शयन कहना चाहिये। इन योगोंमें चन्द्रमापर सूर्यकी दृष्टि रहनेपर पहलेके कहे हुए योगका फल नहीं होता है अर्थात् सूतिकागृहमें दीप अवश्य जन्मके समय रहता है। तीनसे अधिक ग्रह नीच राशिमें हों तो भूमिमें जन्म कहे। शीर्षोदय लग्नमें जन्म हो तो प्रसव समयमें बालकका मुख ऊपर जाने ( उत्तान जन्मा हुआ )। पृष्ठोदय लग्न हो तो नीचे मुख करके जन्म जाने। मीन लग्नमें जन्म हो तो करवट जन्म जाने, क्योंकि यह उभोदय राशि है। लग्नेश वा नवांशपति ग्रह वक्री हो तो उलटा प्रसव जाने अर्थात् योनिके बाहर पहले पैर निकला होगा। यदि जन्मके समय पापग्रह चन्द्रमाके साथ, वा लग्नसे सप्तम वा चतुर्थमें हो तो माताको प्रसवके समय अधिक कष्ट हुआ होगा ॥ ७० ॥

## अथ सूतीगृहे दीपज्ञानं द्वारज्ञानं च।

स्नेहः शशाङ्कादुदयाच्च वर्ती दीपोऽर्कयुक्तर्क्षवशाच्चराद्यः।
द्वारं च तद्वास्तुनि केन्द्रसंस्थैर्ज्ञेयं ग्रहैर्वीर्यसमन्वितैर्वा ॥ ७१ ॥

इदानीं सूतिकागारे दीपादिज्ञानं गृहद्वारज्ञानञ्चाह। चन्द्राद्दीपे तैलं वाच्यमर्थाच्चन्द्रो राश्यादौ भवेत्तदा दीपपात्रं तैलपूर्णं, राश्यन्ते तैलशून्यं, मध्येऽर्द्धमात्रमिति। उदयाल्लग्नाद्वर्ती वाच्या। राश्यादौ लग्ने तत्कालदत्ता, मध्येऽर्द्धदग्धा, राश्यन्ते सम्पूर्णदग्धा वर्तीति। सूर्यस्थितराशिवशाच्चराद्यो दीपो वाच्यः। सूर्ये चरराशौ दीपश्चलितः, स्थिरे दीप एकत्र स्थितः, द्विस्वभावे दीप एकस्थानादन्यत्रावधारितो वाच्यः।

अथ सूतिकागृहे द्वारज्ञानम्। लग्नात्केन्द्र-( १।४।७।१० ) गतैर्ग्रहैर्वास्तुनि=सूतिकालये द्वारं वाच्यमर्थात्केन्द्रे यो ग्रहो भवति, तस्य या दिक्तन्मुखं प्रसवगृहं वाच्यम्। यदि केन्द्रेऽनेके ग्रहाः स्युस्तदा वीर्यसमन्वितैर्ग्रहैस्तेषां यो बलीयाँस्तद्दिगभिमुखमिति। केन्द्रे ग्रहाभावे लग्नराशिदिगभिमुखं द्वारं वाच्यमिति दिक् ॥ ७१ ॥

जन्मके समय चन्द्रमा राश्यादिमें हो तो दीपमें तेल भरा जाने। जिस प्रकार चन्द्रमाके अंश बीते हों उसी प्रकार दीपमें तेल जाने। राश्यन्तमें हो तो खाली दीप जाने। इसी प्रकार लग्नके आरम्भमें जन्म हो तो पूरी बत्ती, मध्य लग्नमें आधी जली बत्ती, अन्त्य लग्नमें थोड़ी बत्ती जाने। सूर्य चर राशिमें हो तो दीप चलायक समझे, स्थिरमें स्थिर, द्विस्वभावमें

एक जगहसे दूसरी जगह रखी जावे। जिस दिशाकी सूर्यकी राशि हो उसी दिशामें दीप कहे। अथवा सूर्य आठ प्रहर आठों दिशाओंमें घूमता है, उस समय जिस दिशामें सूर्य हो उसी दिशामें दीप कहे। लग्नका जैसा रंग हो उसी रंगकी बत्ती कहे। केन्द्रमें जो ग्रह हो उसकी जो दिशा हो उसी दिशाके तरफ सूतिकाके गृहका द्वार कहे। बहुत ग्रह केन्द्रमें हों तो बलवान् ग्रहकी दिशा कहे। केन्द्रमें कोई ग्रह न हो तो लग्नराशिकी दिशा अथवा लग्न द्वादशांशकी दिशामें सूतिका गृहका द्वार कहे ॥ ७१ ॥

## अथ सूतीगृहस्वरूपम्।

जीर्णं संस्कृतमर्कजे क्षितिसुते दग्धं नवं शीतगौ
काष्ठाढ्यं सुदृढं रवौ शशिसुते चानेकशिल्प्युद्भवम्।
रम्यं चित्रयुतं नवं च भृगुजे जीवे दृढं मन्दिरं
चक्रस्थैस्तु यथोपदेशरचनां सामन्तपूर्वां वदेत् ॥ ७२ ॥

अधुना प्रसवगृहस्वरूपमुच्यते। वीर्ययुते इति सर्वग्रहेऽनुवर्त्तते। स्पष्टमेव सर्वम्। अथ चक्रस्थैः = भचक्रगतैर्ग्रहैर्गृहयोगकर्तृग्रहनिकटस्थैः, सामन्तपूर्वां = समन्तात्सर्वदिक्षु यथोपदेशरचना ब्रूयात्। अत्रेदमवधेयम्–प्रसवगृहकारको यो ग्रहस्तस्याग्रतः पृष्ठतः पार्श्वतश्च विद्यमाना ग्रहा अस्वस्थितिक्रमेण सूतीगृहस्य सन्निधावन्यानि स्वतुल्यानि गृहोपगृहाणि कुर्वन्ति।

तथोक्तं च सारावल्याम्—

"भवनग्रहसंयोगैः प्रतिवेश्माश्चिन्तनीयाश्च।
देवालयाम्बुपावककोशविहारायवस्करस्थानम् ॥
निद्रागृहं च भास्करशशिकुजगुरुभार्गवार्किबुधयोगात्" इति ॥ ७२ ॥

जन्मकालमें शनि बलवान् हो तो सूतिकाका गृह पुराना, मङ्गल बली हो तो जला हुआ, चन्द्रमा बलवान् हो तो नवीन, शुक्ल पक्षमें पोता हुआ, सूर्य बली हो तो काष्ठसे भरा हुआ मजबूत, बुधसे चित्र-विचित्र, शुक्रसे सुन्दर रमणीय, अनेक चित्रोंसे युक्त और नया, बृहस्पति से दृढ (मजबूत) कहना चाहिये। जिस ग्रहका गृह-लक्षण पाया जाय उसके समीप आगे पीछे जितने ग्रह हों उतने गृह उसके आगे पीछे होंगे ॥ ७२ ॥

## अथ सूतीगृहदिशा।

मेषकुलीरतुलालिघटैः प्रागुत्तरतो गुरुसौम्यगृहेषु।
पश्चिमतश्च वृषेण निवासो दक्षिणभागकरौ मृगसिंहौ ॥ ७३ ॥

अधुना समस्तवास्तुनि प्रसवदिग्ज्ञानमुच्यते। मेष-कर्क-तुला-वृश्चिक-कुम्भानामन्यतमे राशौ लग्ने पूर्वभागे सूतिकागारो भवति। धनुर्मीनमिथुनकन्यासु उत्तरभागे। वृषराशौ पश्चिमभागे। मकरसिंहयोः दक्षिणभागे प्रसवालयो वाच्य इति ॥ ७३ ॥



मेष, कर्क, तुला, वृश्चिक, और कुम्भ इन राशियोंमें से कोई राशि लग्नमें हो या इनके अंशमें से किसीका अंश हों तो वास्तुके पूर्व भागमें जन्म कहे । धनु, मीन, मिथुन और कन्या, इन राशिमें वा इनके अंशमें लग्न हो तो उत्तरमें, वृष राशि हो तो पश्चिममें, सिंह वा मकर राशि लग्नमें हो तो दक्षिण दिशामें प्रसव कहे ॥ ७३ ॥

अथ सूतीगृहे जन्मस्थानम् ।

प्राच्यादिगृहे क्रियाद्यो द्वौ द्वौ कोणगता द्विमूर्त्तयः ।
शय्यास्वपि वास्तुवद्वदेत् पादैः षट्त्रिनवान्त्यसंस्थितैः ॥ ७४ ॥

सूतिकागृहे पूर्वाद्यासु चतसृषु दिक्षु मेषादिक्रमेण द्वौ द्वौ राशी, तथा आग्नेयादिकोणचतुष्टयेषु मिथुनाद्या द्वन्द्वाः स्थाप्याः । अर्थाज्जन्मनि यो राशिर्लग्नं तस्य या दिक्तस्यामेव दिशि सूतिकागृहे जन्म वाच्यम् । एवमेव शय्यायामपि वाच्यम् । स्पष्टार्थं चक्रद्वयं विलोक्यम् । शय्यायां यत्र द्वन्द्वस्तत्र विनतत्वं यत्र पापस्तत्रोपघातो वाच्यः इति ॥ ७४ ॥




मेष, वृष राशिका लग्न हो तो प्रसूती घरमें पूर्व, मिथुनसे अग्निकोण, कर्क, सिंहसे दक्षिण, कन्यासे नैर्ऋत्यकोण, तुला, वृश्चिकसे पश्चिम, धनुसे वायव्य, मकर, कुम्भसे उत्तर और मीनसे ईसान भागमें जन्म कहना चाहिये । इसी तरह शय्या ( चारपाई ) में भी विचारना । यहां विशेषता यह है कि शय्यामें भावोंका न्यास करना, यानें लग्न और २ रा भाव सिरकी ओर, ३ रा भाव सिरहानेकी दक्षिण पावा, ४ । ५ भाव दाहिनी पाटी, ६ ठा भाव पैथानेकी दाहिनी पावा, ७ । ८ भाव पैरकी ओर, ९ वां पैथानेकी बाँयीं पावा, १० । ११ भाव बाँयीं पाटी और १२ वां भाव सिरहानेकी बाँयीं पावापर न्यास करे । इसका प्रयोजन यह है कि जिस भागमें द्विस्वभाव राशि हो, उस अङ्गमें टेढापन और जिस भागमें पापग्रह हों उस अङ्गमें आघात कहना चाहिये । ( सु. शा. कार ) ॥ ७४ ॥

अथ उपसूतिकाज्ञानम् ।

लग्नचन्द्रान्तरगतैर्ग्रहैः स्युरुपसूतिकाः ।
बहिरन्तश्च चक्रार्द्धे दृश्यादृश्येऽन्यथा परे ॥ ७५ ॥

लग्नाच्चन्द्रपर्यन्तं यावन्तो ग्रहा भवेयुस्तावन्मिता उपसूतिकाः = प्रसवदर्शिकाः स्त्रियो वाच्याः । तत्र दृश्ये चक्रार्द्धे = सप्तमादिद्वादशभावाभ्यन्तरे यावन्तो ग्रहास्तावत्यः स्त्रियो

गृहाद्बाह्यं, एवमदृश्ये=लग्नादिषड्भावाभ्यन्तरे वर्तमानग्रहतुल्या गृहाभ्यन्तरे स्त्रियो वाच्याः । अत्रापरे आचार्या अन्यथा = दृश्ये गृहे, अदृश्ये बाह्ये उपसूतिका इति वदन्ति । तथा च जीवः–"उदयशशिमध्यस्थैर्ग्रहैः स्युरुपसूतिकास्तत्र । उदगर्धस्थैर्बाह्ये दक्षिणगैरन्तरे ज्ञेयाः इति ॥

परश्चैतमाचार्याभिमतमिस्युक्तमन्यथा परे इति ।

तथोक्तञ्च स्वल्पजातकेऽपि—

"उदगर्धेऽभ्यन्तरगा बाह्यावक्रस्य दृश्येऽर्धे" इति ॥ ७५ ॥

जन्मके समय लग्न और चन्द्रमाके बीचमें जितने ग्रह हों उतनी उपसूतिका ( जन्म की ) होंगी उपसूतिका का वर्ण, रूप अवस्था उन्हीं ग्रहोंके सदृश कहे । लग्नसे सप्तम गृह पर्यन्त अदृश्य चक्रार्ध कहाता है । उसमें जितने ग्रह हों उतनी स्त्रियां भीतर रहेंगी । सप्तम-से १२ पर्यन्त ग्रहों के तुल्य स्त्रियां बाहर होंगी । जो ग्रह वक्री तथा उच्चका हो उसकी तिगुनी, जो उच्चांश, स्वांश, स्वद्रेष्काणमें हो उसकी द्विगुणी संख्या कहे ॥ ७५ ॥

## अथ जातकस्य स्वरूपादिज्ञानम् ।

लग्ननवांशपतुल्यतनुः स्याद्वीर्ययुतग्रहतुल्यतनुर्वा ।
चन्द्रसमेतनवांशपवर्णः कादिविलग्नविभक्तभगात्रः ॥ ७६ ॥

जन्मलग्ने विद्यमाननवांशस्य योऽधिपतिस्तत्तुल्यं शरीरं जातकस्य वाच्यम् । अथवा तत्काले बलीग्रहस्य सदृशं शरीरं वाच्यम् । वा चन्द्रमा यस्मिन्नंशे भवेत्तत्पतिसमान-वर्णको जातो भवतीति । कादिविलग्नविभक्तभगात्र इति । कादिभिः = शीर्षादिभिः, विल-ग्नादिभिर्लग्नप्रभृतिभिः विभक्तानि गात्राणि यस्य सः । इदमुक्तं भवति–पूर्वं यथा— 'कालात्मकस्य च शिरोमुखदेशेत्यादिना' शरीरे राशीनां स्थापनं कृतं, तथैवात्र जातस्य शरीरे शीर्षादिगात्रेषु लग्नादयो द्वादश भावाः स्थाप्याः । तेषु यत्राङ्गे बृहन्मानके राशौ दीर्घराशिपतिरेवं लघुराशौ लघुराशिपतिः स्यात्तत्क्रमेण तत्तदङ्गं बृहल्लघुमानकं वाच्यम् ॥ ७६ ॥

जन्मलग्नमें जिस ग्रहका नवांश हो, उसी ग्रहके सदृश बालकका रूप कहे, वा जिस ग्रहका सब ग्रहोंसे अधिक बल हो उसके समान रूप कहे । यदि राशि–बल विशेष हो तो लग्न नवांशके तुल्य, ग्रहबल अधिक हो तो ग्रहके सादृश्य, अथवा जिस नवांशपर चन्द्रमा हो उसके स्वामीके तुल्य बालकका वर्ण जाने । यहां लग्नादि १२ भावोंको शिर आदि १२ अंगोंमें न्यास करे ( जैसे १२ राशियोंका न्यास किया है ) । प्रयोजन यह है कि जिस अंगमें अधिक मान वाली राशि होगी वह अङ्ग बड़ा और अल्पमानवाली राशि का अङ्ग छोटा होता है । लेकिन उस बड़े मानवाली राशिमें यदि अधिक मानके राशिपति विद्यमान हों तब ही सङ्गत होगा । ( सु० शा० कार ) ॥ ७६ ॥

कन्दृक्श्रोत्रनसाकपोलहनवो वक्त्रं च होरादय-
स्ते कण्ठांसकबाहुपार्श्वहृदयक्रोडानि नाभिस्ततः ।
बस्तिः शिश्नगुदे ततश्च वृषणावूरू ततो जानुनी
जङ्घाङ्घ्रीत्युभयत्र वाममुदितैर्द्रेक्काणभागैस्त्रिधा ॥ ७७ ॥

इदानीं जातस्य शरीरे द्रेष्काणवशाद् भावानां त्रिधा–परिकल्पनम् । तत्र लग्ने प्रथमद्रेष्काणे विद्यमाने शिरःप्रभृत्यङ्गभेदो द्वितीये द्रेष्काणे कण्ठाद्यस्तृतीये बस्त्याद्योऽङ्गविभागो वाच्यः । तत्रोदितराशिभिः ( १२।११।१०।९।८।७ ) वाममङ्गमनुदितैर्लग्ना-दिषट्कैः ( १।२।३।४।५।६ ) दक्षिणमङ्गं वाच्यम् । स्पष्टार्थं नरचक्रं विलोक्यमलं विस्तरेण ॥ ७७ ॥




लग्नके द्रेष्काणानुसार तीन भागोंमें १२ भावोंका न्यास होता है । लग्नमें प्रथम द्रेष्काण हो तो लग्न शिर, दूसरी और बारहवीं नेत्र, तीसरी और ग्यारहवीं कान, चौथी और दशवीं नाक, पांचवीं और नववीं गाल, छठीं और आठवीं दाढ़ी, सातवीं मुख । दूसरा द्रेष्काण हो तो लग्न-राशि कण्ठ, २।१२ कंधे, ३।११ बाहु, ४।१० बगल; ५।६ हृदय, ६।८ पेट, ७ नाभि । तीसरा द्रेष्काण हो तो लग्न-राशि बस्ति ( लिङ्ग और नाभिके बीच ), २।१२ लिंग और गुदा, ३।११ वृषण ( पोता ), ४।१० ऊरू, ५।९ घुटने, ६।८ बाछूयें, ७ पैर इस प्रकारसे द्रेष्काणवश अङ्गोंके विभाग हैं । इसमें लग्नसे सप्तम पर्यन्त दक्षिण भागके अंग और सप्तमसे द्वादश पर्यन्त वाम भागके अंग जाने ॥ ७७ ॥

अथ जाताङ्गे चिह्नज्ञानम् ।

तस्मिन्पापयुते व्रणं शुभयुते दृष्टे च लक्ष्मादिशेत्
स्वांशे स्थिरसंयुते च सहजः स्यादन्यथाऽऽगन्तुकः ॥
मन्देऽश्मानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः
सूर्ये काष्ठचतुष्पदेन हिमगौ शृङ्गयब्जजोऽन्यैः शुभम् ॥ ७८ ॥
समनुपतिता यस्मिन् भागे त्रयः सबुधा ग्रहा
भवति नियमात्तस्यावाप्तिः शुभेष्वशुभेषु वा ॥
व्रणकृदशुभः षष्ठे देहे तनोर्भसमाश्रिते
तिलकमशकृद्दृष्टः सौम्यैर्युतश्च स लक्ष्मवान् ॥ ७९ ॥

पूर्वोक्ताङ्गेषु लिखं राशिकल्पनाप्रयोजनमुच्यते । तस्मिन् ( लग्नस्य प्रथमद्रेष्काणे शीर्षादौ, द्वितीये कण्ठादौ, तृतीये बस्त्यादौ ) पापग्रहयुते व्रणमादिशेत् । तत्र शुभग्रहावलोकिते युते च तदङ्गे तिलमशकादि चिह्नमादिशेत् । स च व्रणादिकारको ग्रहो निजराशौ नवांशेवा,

स्थिरराशौ स्थिरनवांशे च भवेत्तदा तद्व्रणादि सहजोत्पन्नं वाच्यम्। अन्यथा = अन्य-राश्यादौ चरादौ च केनचित्कारणेनागन्तुको व्रणादिको भवति। आगन्तुकस्य व्रणादेः ग्रह-वशान्निमित्तमुच्यते। मन्देऽश्मानिलज इत्यादिकं सरलार्थमेव ॥ ७८ ॥

अथ पूर्वप्रदर्शिते यस्मिन्भागे बुधसहिताः परे त्रयो ग्रहाः शुभाः पापा वा वियमाना भवन्ति तत्राङ्गे पूर्वोक्तस्य व्रणादेरवश्यमेव प्राप्तिर्भवति। तनोः षष्ठे भावे पापग्रहो देहे व्रणं करोति। कुजेत्युच्यते। भसमाश्रिते। स षष्ठो भावो यस्मिन्नङ्गे (कालपुरुषस्य) भवेत्तत्रैवे-ति। स षष्ठस्थः पापः शुभग्रहैर्दृष्टस्तदा तिलकमशकृद्भवति। सौम्यैर्युतस्तदा लक्ष्मवान् भवति = तस्मिन्नङ्गे चिह्नं भवतीत्यलम् ॥ ७९ ॥

उन पूर्वोक्त अङ्गोंमें जिस अङ्गमें पापग्रह हो उस अङ्गमें चोट या घाव करता है। यदि उस पापग्रहके साथ शुभग्रह भी हो या शुभग्रहसे देखा जाता हो तो तिला मासा आदि होवे। यदि वह व्रण (घाव) आदि के करनेवाला ग्रह अपनी राशि या अपने नवांशमें हो, या स्थिर राशि या स्थिर राशिके अंशमें हो तो उस अंगमें घाव आदि चिह्न जन्मसे ही रहेगा। यदि ऐसा न हो तो वह चिह्न पीछे होगा। यदि चिह्न करनेवाला शनि हो तो पत्थर या वायुसे, मंगल हो तो अग्निसे या शस्त्रसे या विषसे चिह्न होगा। बुध हो तो भूमिपर गिरने से, सूर्य हो तो काष्ठसे या चतुष्पदसे. चन्द्रमा हो तो सींगवाले पशुसे या जलजन्तुसे व्रण आदि होते हैं। बृहस्पति और शुक्र व्रणकारक नहीं होते हैं, वे शुभ होते हैं ॥ ७८ ॥

वाम या दक्षिण जिस भागमें बुधके सहित तीन ग्रह (शुभ या पाप) युत हों उस अङ्गपर अवश्य चिह्न कहे। उन ग्रहोंमें विशेष बलवान् ग्रहकी दशामें व्रण, चोट होगी। लग्न से छठे भावमें पापग्रह हो तो "कालात्मकस्य च शिरो" इसके अनुसार वह छठा भाव जिस अङ्गमें है उस पर घाव करेगा। वह षष्ठ-भावस्थित ग्रह शुभ ग्रहसे दृष्ट हो तो मशा करता है। यदि शुभ ग्रहसे युत हो तो उस अङ्गमें कोई अच्छा चिह्न करता है ॥ ७९ ॥

वियोनिजन्मविज्ञानं निषेकोदयजं फलम्।
जन्मकालपरिज्ञानं यत्तदाचार्यभाषितम् ॥ ८० ॥

इति नवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते
आधानजन्माध्यायस्तृतीयः ॥ ३ ॥

---

अथात्र तृतीयेऽध्याये वियोनिजन्मज्ञानम्, निषेकलग्नजं फलम्, तथा जन्मविधिपरि-ज्ञानमिति विषयत्रयं यदुद्भासते तत्सर्वमेवाचार्येण तत्र भवता वराहमिहिराचार्येण भाषितं वर्त्तते। तत्सर्वं सङ्ग्रहरूपेणात्र मया वैद्यनाथेन निवेशितमिति भावः ॥ ८० ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता।
जन्माख्ये च तृतीयेऽस्मिन्नध्याये पूर्णतां गता ॥३॥

इस ३ रे अध्यायमें जो वियोनिजन्मज्ञान, गर्भाधान का फल और जन्मके प्रकारोंके ज्ञान हैं वे सब आचार्य वराहमिहिरने कहे हैं अर्थात् ये बातें बृहज्जातक की हैं ॥ ८० ॥

इति श्रीवैद्यनाथदैवज्ञविरचिते जातकपारिजाते तृतीयाध्याये
'विमला' हिन्दी टीका समाप्ता ॥ ३ ॥

---

## अथारिष्टाध्यायः ॥ ४ ॥

### तत्रादौ द्वादशाब्दीमध्ये आयुषोऽनिश्चितता ।

अथाधुना अरिष्टाध्यायो व्याख्यायते । तत्र सत्यप्यायुषि द्वादशाब्दाभ्यन्तरे बालानां कतिभिः कारणैर्मरणसम्भवात् जन्मतो द्वादशाब्दं यावदायुषोऽनिश्चितत्वमाह—

आद्वादशाब्दान्तरयोनिजन्मनामायुष्कला * निश्चयितुं न शक्यते ।
मात्रा च पित्रा कृतपापकर्मणा बालग्रहैर्नाशमुपैति बालकः ॥ १ ॥
आद्ये चतुष्के जननीकृताघैर्मध्ये तु पित्राऽर्जितपापसङ्घैः ।
बालस्तदन्त्यासु चतुः समासु स्वकीयदोषैः समुपैति नाशम् ॥ २ ॥

सर्वेषामेव जनिमतां सत्यप्यायुर्योगे जन्मतो द्वादशवर्षाभ्यन्तरे तदायुर्न निर्णेतव्यम् । यतस्तत्र प्रथमे द्वादशाब्दे मातृपितृकृतकिल्बिषैर्बालग्रहैश्च बालको मरणमेति । तत्र प्रथमे वर्षचतुष्के जननीकृतपापैस्ततो द्वितीये वर्षचतुष्के ( ५–८ ) पितृकृतपापैरन्तिमे वर्षचतुष्के ( ९–१२ ) स्वकीयदोषैः प्राक्तनैः ( बालारिष्टभूतैः ) बालको मृत्युमुपैति । अत एव द्वादशाब्दाद्बालानामुक्तदोषपरिहारार्थं जपहोमादिकं कुर्यात् । तदोक्तमाचार्यवेङ्कटेन—"आद्वादशाब्दाज्जन्तूनामायुर्ज्ञातुं न शक्यते । जपहोमचिकित्साद्यैर्बालरक्षां तु कारयेत् ॥ पित्रोर्दोषैः मृताः केचित् केचिद्बालग्रहैरपि । अपरेऽरिष्टयोगाच्च त्रिविधा बालमृत्यवः" इति ॥ १–२ ॥

योनिसे जायमानोंके बारह वर्षके भीतर आयुका निश्चय नहीं हो सकता, क्योंकि मातापिताके किये हुए पाप कर्मसे और बालग्रहोंसे बालकका नाश होता है ॥ १ ॥

जन्मसे १२ वर्ष तक चार २ वर्ष तीन जगह विभाग किया है। चार वर्ष तकका बालक माताके पापसे मरता है । उसके बाद आठ वर्ष पर्यन्तका बालक पिताके पापसे मरता है, और अन्तके जो चार वर्ष हैं ( आठवेंके बाद १२ तक ) उसमें अपने पापोंसे मरता है ॥२॥

### अथारिष्टपूर्वकमायुषां भेदाः ।

अष्टौ बालारिष्टमादौ नराणां योगारिष्टं प्राहुराविंशतिः स्यात् ।
अल्पं चाद्वात्रिंशतान्मध्यमायुरासप्तत्याः पूर्णमायुः शतान्तम् ॥ ३ ॥

अष्टौ वर्षाणि बालारिष्टं, ततोऽनन्तरं विंशतिवर्षपर्यन्तं योगारिष्टं ( प्रतिकूलग्रहजनितम् ) विज्ञाः प्राहुः । द्वात्रिंशद्वर्षाणि अल्पमायुस्तथा सप्ततिवर्षाणि ( ७० ) मध्यमायुरेवं च वर्षशतं पूर्णायुः । वक्ष्यति चाग्रे 'द्वात्रिंशद्वत्सरादुपरि सप्ततिपर्यन्तं मध्यमायुर्योगः' तथा 'सप्तत्युपरि शतान्तं पूर्णमायुः' इति । अत्र शतोर्ध्वमुत्तमायुः पूर्णायुर्वेति ज्ञेयम् । उक्तञ्च सर्वार्थचिन्तामणौ—

"द्वात्रिंशत्पूर्वमल्पं स्यात्तदूर्ध्वं मध्यमं भवेत् । आसप्ततेस्तदूर्ध्वं तु दीर्घायुरिति सम्मतम् ॥
उत्तमायुः शतादूर्ध्वमिह शंसन्ति तद्विदः" इति ॥ ३ ॥

जन्मसे प्रथम ८ वर्ष तक बालारिष्ट रहता है । उसके बाद २० वें वर्ष तक योगारिष्ट ( दुष्ट ग्रहोंसे उत्पन्न ) रहता है। ३२ वें वर्ष तक अल्पायु, ३२ से ७० तक मध्यमायु और ७० के बाद १०० तक पूर्णायु कही गयी है। एवं १०० से १२० वर्ष तक परमायु समझनी चाहिये। ( वृ० जा० कार ) ॥ ३ ॥

### अथ अरिष्टदा ग्रहस्थितिः ।

त्रिकोणगस्त्वपि देवमन्त्री विनाशकारिःफारिगते शशाङ्के ।
विलोकिते पापवियच्चरेण विभानुना मृत्युमुपैति बालकः ॥ ४ ॥

---

*अत्र निश्चेतुमिति—पाठान्तरे ज्ञातुं न शक्यते इति परिसज्ञातुमिति पठितम् ।

जन्मकाले चन्द्रे षडष्टव्ययभावानामन्यतमगते, तत्र सूर्यरहितेन पापग्रहेण ( मं० श० रा० के० ) वीक्षिते, देवमन्त्री=बृहस्पतिर्विलग्ने प्राप्तोऽपि भवति तदाऽपि बालको मृत्युमुपैति। अत्र 'विलग्नयातस्त्वपि देवमन्त्री' इत्यनेनेदमुक्तं भवति—लग्नवर्ती गुरुररिष्टनाशको भवति।

"एक एव बली जीवो लग्नस्थोऽरिष्टसञ्चयम्।

हन्ति पापक्षयं भक्त्या प्रणाम इव शूलिनः॥" इत्युक्तेः।

परञ्च चन्द्रमा यदि षडष्टव्ययगतः पापदृष्टश्च भवति तदानीं लग्नवर्तिन्यपि गुरौ बालकस्य मृत्युरेव भवति। प्रबलारिष्टोऽयमिति भावः॥ ४॥

जन्मकालमें यदि चन्द्रमा छठें, आठवें या १२ वें भावमें रहकर सूर्यके अतिरिक्त पाप-( मं० श० रा० के० ) ग्रहसे देखा जाता हो तो बृहस्पतिके लग्नमें रहने पर भी बालक मरता ही है, याने यह प्रबल अरिष्ट योग है। ( सु० शा० कार )॥ ४॥

**गण्डान्ततारासहिते मृगाङ्के पापेक्षिते पापसमन्विते वा।**
**बालो लयं याति समृत्युभागे चन्द्रे तथा पापनिरीक्षिते वा॥ ५॥**

गण्डान्तमृक्षसन्धिः ( १ अ. २२ श्लो. ) तेषां ताराः "ज्येष्ठापौष्णभसार्पभान्त्यघटिकायुग्मं च मूलाश्विनीपित्र्यादौ घटिकाद्वयम्" एतेषामन्यतमे विद्यमाने चन्द्रे, पापग्रहेण निरीक्षिते वा युक्ते बालो लयं = मृत्युं याति। अथवा चन्द्रे कस्मिन्नपि राशौ मृत्युभागगते ( अ. १. श्लो. ५७ द्रष्टव्यम् ) पापग्रहेणावलोकिते तथैव = मृत्युमुपैति॥ ५॥

गण्डान्त नक्षत्रमें चन्द्रमा हो, पापग्रहसे दृष्ट या युत हो, वा चन्द्रमा मृत्युभागमें पाप-दृष्ट हो तो बालक मृत्युको प्राप्त हो ( मरे )॥ ५॥

## अथ पित्रादीनामरिष्टयोगाः।

**ताताम्बिकासोदरमातुलाश्च मातामही मातृपिता च बालः।**
**सूर्यादिकैः पञ्चमधर्मयातैः क्रूरर्क्षगैराशु हताः क्रमेण॥ ६॥**
**रसातलस्थौ यदि भानुचन्द्रौ शनिः स्मरस्थो मरणाय मातुः।**
**यदा यदा क्रूरखगो विलग्नादरातिगः सोदरनाशहेतुः॥ ७॥**
**क्रूरेक्षितौ चन्द्रविलग्नराशी सौम्यग्रहैर्वीक्षणयोगहीनौ।**
**केन्द्रच्युतो यद्यमरेशमन्त्री जातस्य माता समुपैति नाशम्॥ ८॥**

इदानीं तातादीनां मरणयोगा उच्यन्ते। लग्नात्पञ्चमो वा नवमः भावः पापर्क्षो भवेत्, तत्र सूर्यादिग्रहे प्राप्ते तातादीनामाशु नाशं ब्रूयात्। यथा सूर्ये तातस्य (पितुः)। चन्द्रेऽम्बिकायाः ( मातुः )। भौमे सोदरस्य। बुधे मातुलस्य ( मातृभ्रातुः )। गुरौ मातामह्याः ( मातृमातुः )। शुक्रे मातृपितुः। शनैश्चरे बालस्य = जातकस्यैव मृत्युर्भवतीति॥ ६॥

अथ सूर्याचन्द्रमसौ लग्नाच्चतुर्थभावगतौ भवेतां शनिश्च सप्तमस्थो भवेत्तदाऽयं योगो मातुः मरणकारको भवति। एवं लग्नात् षष्ठगतोऽशुभग्रहः सोदरस्य नाशको भवति। अत्र यदा यदा इति पुनरुक्तेन गोचरे वर्षे च षष्ठस्थोऽशुभग्रहः सोदरनाशक इति ध्वन्यते॥ ७॥

अथापरो जननीमरणयोगः। लग्नं चन्द्रश्च पापग्रहनिरीक्षितौ भवेतां तथा शुभग्रहैरनवलोकितौ वियुक्तौ च भवेतां, गुरुश्च केन्द्रगतो न भवेद तदा जातस्य माता नाशमुपैति = म्रियत इत्यर्थः। अर्थादेव यदि चन्द्रः शुभेक्षितयुतो गुरुः केन्द्रे च भवति तदा शुभं स्यान्मातुरिति॥ ८॥

लग्नसे ५।९ भाव पापग्रहकी राशि हो उसमें सूर्यादि ग्रह हों तो क्रमसे पिता, माता, भाई, मामा, मातामही ( नानी ) मातामह ( नाना ) और बालक अवश्य नाश होते हैं॥ ६॥

यदि सूर्य, चन्द्रमा चतुर्थ स्थानमें स्थित हों और शनि सप्तममें हो तो माताकी मृत्यु कहे। यदि लग्नसे छठे स्थानमें क्रूरग्रह हो तो भाईके नाशका कारण होता है ॥ ७ ॥

लग्न और चन्द्रमा क्रूरग्रहसे दृष्ट हों शुभग्रहोंसे दृष्ट-युत न हों और बृहस्पति यदि केन्द्रमें न हो तो जातककी माता नाशको प्राप्त होवे ॥ ८ ॥

### अथ सगर्भामृत्युयोगौ।

सभानुजे शीतकरे विलग्नाद् दिवाकरे रिःफगृहोपयाते।
धरासुते बन्धुगते तदानीं विपद्यते तज्जननी सगर्भा ॥ ९ ॥
विलग्नचन्द्रौ शुभदृक्विहीनावशोभनव्योमचरान्तरस्थौ।
विनाशमेति प्रमदा सगर्भा वदन्ति सर्वे युगपत् पृथग्वा ॥ १० ॥
षष्ठावसानाष्टमभावगेषु क्रूरेषु सौम्यग्रहवर्जितेषु।
पापान्तरस्थे भृगुजे गुरौ वा नारी सपुत्रा म्रियते तु सद्यः ॥ ११ ॥
लग्नास्तयातौ यदि पापखेचरौ शुभैरयुक्तौ शुभदृष्टिवर्जितौ।
शस्त्रेण मृत्युं समुपैति गर्भिणी मासाधिपो नष्टकरो यदा वदेत् ॥ १२ ॥

इदानीं गर्भयुक्तायाः स्त्रिया मरणयोगा उच्यन्ते। लग्नाद्द्वादशे भावे शनिसूर्ययुतश्चन्द्रो भवेत्तथा मङ्गलश्चतुर्थभावे भवेत्तदा तज्जननी = गर्भस्थस्य शिशोर्माता सगर्भा = गर्भयुक्तैव विपद्यते = म्रियते। अयं विचारो निषेककाले युक्तः, प्रसवे सगर्भाया मरणासम्भवात्। अत एव गर्भाधाने यद्ययं योगः स्यात्तदा गर्भिण्याः स्त्रिया मरणं भवेदिति। **योगान्तरम्**— निषेककाले लग्नं चन्द्रश्च युगपदेकत्र वा पृथक् शुभग्रहदृष्टिरहितौ, पापग्रहद्वयमध्यगतौ च भवेतां तदा सगर्भा स्त्री मरणमेतीति। उक्तञ्च बृहज्जातके—

"पापद्वयमध्यसंस्थितौ लग्नेन्दू न च सौम्यवीक्षितौ।
युगपत्पृथगेव वा वदेन् नारी गर्भयुता विपद्यते ॥" इति।

योगकर्तृणां बलवतो ग्रहस्य मासे मरणं वाच्यमिति ॥ **सगर्भामरणयोगौ।**




अथ पापग्रहाः षष्ठाष्टमव्ययभावगता भवेयुः तेषु शुभग्रहा न भवेयुः; अथवा पापद्वयवर्ती शुक्रो वा गुरुर्भवेत्तदा सपुत्रा नारी= पुत्रेण सहिता स्त्री सद्यः = प्रसूतिकाल एव म्रियते। प्रसवकालिकोऽयं विचारः। निषेकेऽप्यस्मिन्योगे सगर्भाया मरणं वाच्यमिति। अथ पापखेचरौ = भौमसूर्यौ क्रमेण लग्ना-

### शस्त्रकृतमृत्युयोगः।




स्तयातौ (१।७) भवेतां (कुजो लग्नगतः सूर्यः सप्तमगतश्च स्यादिति) तौ च शुभग्रहयुतिदृष्टिरहितौ यदि स्यातां तदा गर्भिणी स्त्री शस्त्रेण = खड्गादिना मृत्युं समुपैति यदा मासाधिपो (१७ श्लोके वक्ष्यमाणः) नष्टकरो निर्बलो भवेत्। अत्रेदमुक्तं भवति— निषेककाले यो ग्रहो निर्बलो भवेत्तस्य यस्मिन्मासे आधिपत्यं भवति तस्मिन्मासे गर्भयुक्ता स्त्री शस्त्रद्वारेण मरणमेति। तथोक्तं च बृहज्जातके—

उदयास्तगयोः कुजार्कयोर्निधनं शस्त्रकृतं वदेत्तथा ।
मासाधिपतौ निपीडिते तत्कालं स्रवणं समादिशेत् ॥

तथा च सारावल्याम्-"आमित्रे रवियुक्ते लग्नगते वा कुजे निषिक्तस्य ।
गर्भस्य भवति मरणं शस्त्रच्छेदैः सह जनन्या" इति ॥ ६-१२ ॥

शनिके साथ चन्द्रमा और सूर्य बारहवेंमें हों, मङ्गल चौथेमें हो तो उसकी माता गर्भ के साथ मरे ॥ ९ ॥

लग्न और चन्द्रमा एक साथ या अलग २ शुभग्रहकी दृष्टिसे रहित हों, पापग्रहके मध्यमें हों तो स्त्री गर्भके सहित मरे ॥ १० ॥

षष्ठ, द्वादश और अष्टम भावमें क्रूर ग्रह हों और इन स्थानोंमें शुभग्रह न हों, पापग्रहके मध्यमें शुक्र वा गुरु हो तो प्रसव होते ही स्त्री पुत्रके सहित मरे ॥ ११ ॥

आधानमें यदि दो पापग्रह लग्न और सप्तम स्थानोंमें हों शुभग्रहसे युक्त दृष्ट न हों तो जो मासाधिप नष्ट-प्रभाव हो उस समय गर्भिणी शस्त्रसे मृत्युको प्राप्त होवे ॥ १२ ॥

## अथ जातस्य मातृमरणयोगाः ।

चन्द्राच्चतुर्थोपगतैरसद्भिर्वा नस्थितैः शोभनदृष्टिमुक्तैः ।
व्यापारगैर्वा यदि वासरेशाज्जातस्य माता निधनं प्रयाति ॥ १३ ॥
शुक्राद्रवौ विक्रमगे बलाढ्ये मन्देक्षिते मन्दसमन्विते वा ।
क्षीणे शशाङ्के यदि वा सपापे माता सपुत्रा म्रियतेऽचिरेण ॥ १४ ॥
लग्नादिने वाऽष्टमगे धराजे पापेक्षिते सौम्यदृशा विहीने ।
ताराधिपे वृद्धिकलाविहीने माता कृतान्तस्य पदं समेति ॥ १५ ॥
शुक्रात् कुजेऽहनि तपः सुतराशियाते चन्द्रात्त्रिकोणगृहगे रविजे रजन्याम् ॥
पापेक्षिते च शुभयोगदृशा विहीने नाशं समेति जननी विबले शशाङ्के ॥ १६ ॥

इदानीं जातस्य मातृमरणयोगा उच्यन्ते । चन्द्राच्चतुर्थगतैर्वा नस्थितैः = ने दशमस्थाने गतैरसद्भिः = पापग्रहैः शुभग्रहदृष्टिरहितैरुपलक्षिते काले जातस्य माता निधनं=मरणं प्रयाति । अथवा वासरेशात्सूर्याद्व्यापारगैर्दशमगतैः पापग्रहैः शुभदृष्टिमुक्तैर्जातस्य माता मरणमेतीति वाच्यम् । अथ बली सूर्यः शनिना दृष्टो युक्तो वा यदि शुक्रात्तृतीयस्थानगतो भवेत् , अथवा क्षीणो वा पापयुक्तश्चन्द्रः शुक्रात्तृतीयगो भवेत्तदा माता सपुत्रा = पुत्रेण सहिता अचिरेण=शीघ्रमेव (प्रसवकाले) म्रियते ।




अथ सूर्यो वा भौमो लग्नादष्टमभावगतो पापग्रहेण (शनिना) दृष्टः, शुभदृष्टिविहीनोऽथ भवेत्, ताराधिपश्चन्द्रो वृद्धिकलाविहीनोऽर्थात्क्षीणो भवेत्तदा जातस्य माता म्रियते इति । अथ च अहनि=दिने प्रसवे जायमाने शुक्रात् नवमे पञ्चमे वा राशौ कुजे भौमे प्राप्ते तत्र पापेन=रविणा शनिना वाऽवलोकिते शुभग्रहयोगदृष्टिरहिते, चन्द्रे निर्बले च जातस्य जननी नाशं समेति ( म्रियते ) । तथा रजन्यां = रात्रौ प्रसवे चन्द्रात्त्रिकोण-(५।९) गृहगते रविजे=शनैश्चरे, पापेन=सूर्येण भौमेन वा वीक्षिते शुभयोगदृष्टिरहिते, शशाङ्के च निर्बले जातस्य जननी मरणमेतीति । तथा चोक्तं सारावल्याम्-

चन्द्रात् त्रिकोणराशौ रविजो मातुर्वधं दिशति रात्रौ ।
शुक्रात् तथैव दिवसे भौमः पापेन सन्दृष्टः ॥ इति ॥ १३-१६ ॥

चन्द्रमासे ४ थे, या १० वें भावमें पापग्रह हों, उन्हें शुभग्रह न देखते हों तो माताकी मृत्यु हो। अथवा सूर्यसे १० वें पापग्रह शुभग्रहोंसे न देखे जायँ तो माताकी मृत्यु होती है॥
बली सूर्य शनिसे दृष्ट या युक्त होकर शुक्रसे ३ रे भावमें हो, अथवा क्षीण चन्द्रमा पापग्रहके सहित शुक्रसे ३ रे हो तो प्रसव होते ही माता पुत्रके साथ मरती है ॥ १४ ॥

जन्मसे अष्टम सूर्य या मङ्गल पापदृष्ट हो शुभग्रहसे देखा न जाता हो चन्द्रमा वृद्धि कला से हीन ( कृष्णपक्ष ) का हो तो उस जातककी माता यमपदको प्राप्त हो ( मरे )॥

दिनमें जन्म हो तो शुक्रसे सूर्य ९।५ में हो और रात्रिमें चन्द्रमासे शनि ९।५ में हो उसे पापग्रह देखते हों और शुभग्रहकी दृष्टि न हो तथा चन्द्रमा बक्ररहित हो तो माता का नाश हो ॥ १६ ॥

## अथ गर्भस्य मासाधिपाः ( होरायाम् )

कललघनाङ्कुरास्थिचर्माङ्गजचेतनताः
सितकुजजीवरविचन्द्रार्किबुधाः परतः ॥
उदयपचन्द्रसूर्यनाथाः क्रमशो गदिता
वदन्ति शुभाशुभं च मासाधिपतेः सदृशम् ॥ १७ ॥

अथाधुना निषेकानन्तरं प्रसूतिं यावद्दशमासानामधिपा गर्भपरिस्थितिश्च निरूप्यन्ते। प्रथममासमारभ्य क्रमेण कललाद्याः स्थितयस्तथा सिताद्यो ग्रहा मासेश्वराश्च भवन्ति। तद्यथा प्रथमे मासे गर्भे कललं=शुक्रशोणितयोः संमिश्रणं भवति, तत्र सितः शुक्रो मासपतिरिति। द्वितीये घनत्वं=शुक्रशोणितयोः पिण्डं काठिन्यमुपयाति, तत्र कुजो भौमो मासपतिः। तृतीयेऽङ्कुरो हस्तपादाद्यवयवोत्पत्तिस्तत्र जीवो गुरुरधिपः। चतुर्थेऽस्थिप्रादुर्भावस्तत्र सूर्योऽधिपतिः। पञ्चमे चर्म=त्वग्जायते तत्र चन्द्रोऽधिपः। षष्ठे अङ्गजाः=लोमानि भवन्ति, तत्रार्किः=शनिरधिपः। सप्तमे चेतनता=प्राणोद्गमो भवति, तत्र बुधोऽधिपः। परतः 'अशनोद्वेगप्रसवाः' इति लघुजातकोक्त्या अष्टमे मासे अशनं=भक्षणं, मात्रा भुक्तस्य पीतस्य च रसस्य गर्भस्थो जीवो नाभिलग्ननालेनाकर्षणं करोति। तत्रोदयपः=आधानलग्नेशोऽधिपतिः। नवमे मासे उद्वेगो भवति तत्र चन्द्रो मासेश्वरः। दशमे प्रसवः=जन्म जायते, तत्र सूर्यो नाथः=मासपतिर्भवतीति। तेषु मासाधिपतेः सदृशं शुभाशुभं वदन्ति। निषेककाले यो ग्रहो बलवान् भवति तस्य मासे गर्भस्य शुभं ( पुष्टिः ) भवति। यो ग्रहो विवर्णो भवेत्तन्मासे गर्भे पीडा, तथा यो ग्रहो निपीडितो भवेत्तन्मासे गर्भस्य स्खलनं वाच्यम्। उक्तं च लघुजातके—

"कलुषैः पीडा, पतनं निपीडितैः, निर्मलैः पुष्टिः" इति ॥ १७ ॥

जब गर्भ रह जाता है तो पहले महीनेमें रज और वीर्य खौलता है। दूसरे महीनेमें रज वीर्य जम कर पिण्डके समान हो जाता है। तीसरे महीनेमें अङ्कुर ( मुख, हाथ, पैर ) निकलते हैं। चौथे महीनेमें हड्डी पैदा होती है। पांचवें मासमें चर्म ( खाल ) पैदा होता है। छठे मासमें रोम, सात वें महीनेमें चेतना ( सिर, हाथ, पैर हिलना ) इन सात मासोंका शुक्र, मङ्गल, बृहस्पति, सूर्य, चन्द्र, शनि और बुध क्रमशः स्वामी हैं, अर्थात् प्रथम मासका शुक्र, दूसरे मासका मङ्गल, तीसरे मासका गुरु, चौथे मासका सूर्य, पांचवें मासका चन्द्र, छठे मासका शनि, सातवें मासका बुध है। आठ वें मास में माताकी खाई हुई वस्तु खाता है। नववें मासमें बालक गर्भमें चलता है। दशव मासमें जन्म लेता है। आठवें मासका स्वामी लग्नेश। नववें मासका ईश चन्द्रमा और दशवें मासका स्वामी सूर्य है। मासाधिपति ग्रह पीड़ित हो तो अपने मासमें गर्भपात करता है, निर्बल हो तो पीड़ा देता है, बलवान् हो तो पुष्टि करता है॥ १७॥

अथ गर्भे सुखम् ।

शशाङ्कलग्नोपगतैः शुभग्रहैस्त्रिकोणजायार्थसुखास्पदस्थितैः ।
तृतीयलाभर्क्षगतैश्च पापकैः सुखी च गर्भो रविणा निरीक्षितः ॥ १८ ॥

इदानीं गर्भे पुष्टियोग उच्यते । शशाङ्कश्चन्द्रो यत्र भवेल्लग्नश्चाधानकालिकं यद्भवेत्तत्र युगपत्पृथग् वोपगतैः = विद्यमानैश्शुभग्रहैरथवा लग्नाच्चन्द्राद्वा शुभग्रहैस्त्रिकोणजायार्थसुखास्पदस्थितैः = पञ्चमनवमसप्तमद्वितीयचतुर्थदशमस्थानगतैः, पापकैः = पापग्रहैश्चन्द्राल्लग्नाद्वा तृतीयलाभर्क्ष-( ३।११ ) गतैश्च गर्भो रविणा निरीक्षितः सुखी भवति । अर्थादुक्तयोगे लग्नं वा चन्द्रो यदि सूर्येण दृष्टो भवेत्तदा गर्भो सुखी भवति = सुखेन प्रसूत इत्यर्थः । तथोक्तं सारावल्याम्—"होरेन्दुयुतैः सौम्यैस्त्रिकोणजायासुखाम्बरार्थस्थैः ।
पापैस्त्रिलाभयातैः सुखी च गर्भो निरीक्षितो रविणा ॥" इति ॥ १८ ॥

आधानकालमें लग्न और चन्द्रमा एकत्र या अलग २ हों, उनसे युक्त शुभग्रह हों, लग्न या चन्द्रमासे १।५।७।२।४।१० स्थानों में शुभग्रह हों और ३।११ में पापग्रह हों लग्न या चन्द्रमा सूर्यसे दृष्ट हो तो गर्भ सुखी रहता है। ( सु. शा. कार ) ॥ १८ ॥

अथ जातस्य पितृमरणयोगाः ।

व्ययस्थितेऽर्के ससुते विलग्नादपि क्षयेन्दौ मदनोपयाते ।
पितुर्वियोगं प्रवदन्ति सद्यः शुभेक्षिते तु त्रिभिरब्दमानैः ॥ १९ ॥
चरोपगे चन्द्रमसि क्षपायां बुधेक्षिते दूरदिशं प्रयातः ।
चरे शनौ भानुयुते निशायां विदेशगो याति पिता विनाशम् ॥२०॥

इदानीं जातस्य शिशोः पितृमरणयोगा उच्यन्ते । अर्के ससुते=शनिसहिते सूर्ये विलग्नाज्जन्मलग्नाद् व्ययस्थिते=द्वादशभावगते तत्र क्षयेन्दौ=क्षीणे चन्द्रे मदनोपयाते=सप्तमभावगते अपि सद्यः शीघ्रमेव पितुर्वियोगं=पितृमरणं सन्तः प्रवदन्ति । तत्र योगे शुभेक्षिते= शुभग्रहावलोकिते त्रिभिरब्दमानैः=वर्षत्रयेण पितुर्मरणं स्यादिति ॥ १९ ॥

पितृमरणयोगाः ।




अथ जन्मनि विदेशस्थस्य पितुर्मरणयोगौ । क्षपायां=रात्रौ प्रसवे चन्द्रमसि चरोपगे=मेष-कर्क-तुला-मकराणामन्यतमगते, बुधेनावलोकिते दूरदिशं प्रयातो जातकस्य पिता विनाशं याति । अथवा निशायां= रात्रौ जन्मनि शनौ चरे=चरराशिगते तत्र भानुना=सूर्येण युते=सहिते जातस्य पिता विदेशगो विनाशं=मरणं याति=प्राप्नोति २०

यदि लग्नसे १२ वें स्थानमें सूर्य और शनि हों क्षीण चन्द्रमा सप्तममें हो तो पिता का तुरन्त वियोग आवे। शुभग्रह देखते हों तो तीन वर्षमें पिताका वियोग आवे॥ १९ ॥

रात्रिके जन्ममें चर राशिमें चन्द्रमा को बुध देखता हो तो दूर देशमें पिताका मरण कहे। रात्रिमें चरराशिमें शनि सूर्ययुत हो तो विदेशमें पिताका विनाश हो ॥ २० ॥

अथ जातस्य मृत्युयोगाः ।

क्षीणे शशिन्युदयगे यदि कण्टकस्थे पापेऽथवा निधनगे म्रियतेऽथ बालः ॥
रन्ध्रारिगैरशुभखेटदृशा समेतैः सौम्यैः कृतान्तनगरं समुपैति मासात् ॥ २१ ॥

अथाधुना जातस्य मरणयोगा उच्यन्ते । क्षीणे शशिनि = निर्बले चन्द्रे, उदयगे= लग्नगते, पापे कण्टकस्थे = केन्द्रगते, वा निधनगेऽष्टमगते यदि जन्म भवेत्तदा बालो

बालो म्रियते । 'लग्ने क्षीणे शशिनि निधनं रन्ध्रकेन्द्रेषु पापैः' इति च श्रवणात् । अथ सौम्यैः=शुभग्रहैः रन्ध्रारिगैरष्टमषष्ठभावगतैरशुभग्रहावलोकितैश्च जातो बालो मासात् कृतान्तनगरं=यमपुरीं समुपैति । अस्मिन्योगे बालो मासमेकं जीवति तदनन्तरं म्रियते इत्यर्थः॥२१॥

**यदि क्षीण चन्द्रमा लग्नमें, पापग्रह केन्द्रमें हो वा अष्टममें हो तो बालक मरे । अष्टम, षष्ठ में प्राप्त शुभग्रह पापग्रहसे दृष्ट हों तो वह बालक एक मास में यमपुर जाय ॥ २१ ॥**

एकत्र मन्दावनिनन्दनार्का रन्ध्रस्थिता वा रिपुराशियाताः ।
सौम्यैरयुक्ता अविलोकितास्ते जातस्य सद्यो मरणप्रदाः स्युः ॥ २२ ॥

मन्दावनिनन्दनार्काः=शनिभौमसूर्यास्त्रयः पापा एकत्र युक्ता रन्ध्रस्थिताः=अष्टमभावगता वा रिपुराशियाताः=षष्ठभावगतास्ते सौम्यैः = शुभग्रहैरयुक्ता अविलोकिताश्च भवेयुस्तद जातस्य सद्यः = शीघ्रमेव मरणप्रदाः स्युरर्थादस्मिन्योगे जात एव म्रियत इति ॥ २२ ॥

**एकत्र शनि मङ्गल और सूर्य अष्टम स्थान में वा षष्ठस्थान में होकर शुभग्रह से न युक्त हों न दृष्ट हों तो जातकके तुरन्त मरणप्रद होते हैं ॥ २२ ॥**

चन्द्रांशे सप्तमे भौमे सौम्यदृष्टिविवर्जिते ।
सप्तसप्ततितारायामुपैति मरणं शिशुः ॥ २३ ॥
मन्दावनिजमार्तण्डैः पुत्रस्थानसमन्वितैः ।
सप्तसप्ततिनक्षत्रे जातस्य मरणं वदेत् ॥ २४ ॥

भौमो मङ्गलो लग्नात्सप्तमे भावे चन्द्रनवांशे वर्त्तमानः शुभदृष्टिरहितश्च भवेत्तदानीं जातो बालकः सप्तसप्तति-(७७) तारायां=यस्मिन्नक्षत्रे जन्म भवेत्तस्मात्सप्तसप्ततिमिते नक्षत्रे तृतीयावृत्तस्य त्रयोविंशे नक्षत्रे मरणमुपैति । अश्विनीमे जातस्तृतीयावृत्तस्य धनिष्ठायां म्रियत इति । एवं मन्दावनिजमार्त्तण्डैः=शनिभौमसूर्यैस्त्रिभिः पुत्रस्थानसमन्वितैः = पञ्चमभावगतैः जातस्य शिशोः सप्तसप्तति-(७७) नक्षत्रे मरणं वदेदिति ॥ २३-२४ ॥




**चन्द्रमाके नवांशमें सप्तमस्थ मङ्गल हो शुभ ग्रहकी दृष्टिसे रहित हो तो बालक ७७ वें नक्षत्र में मरे ॥ २३ ॥**

**शनि मङ्गल और सूर्य पुत्र स्थानमें हों तो ७७ वें नक्षत्रमें जातक का मरण हो ॥ २४ ॥**

धरासुते चन्द्रनवांशकस्थे लग्नांशके वा न च जीवदृष्टे ।
सुधाकरे नन्दनराशियाते समेति याम्यं पदमाशु बालः ॥ २५ ॥

धरासुते = भौमे यत्र कुत्रापि चन्द्रस्य नवांशे विद्यमाने, अथवा लग्नराशेर्नवांशके विद्यमाने, न च जीवदृष्टे=गुरुणाऽनवलोकिते, सुधाकरे=चन्द्रे नन्दनराशौ=पञ्चमभावे याते च जायमानो बाल आशु=शीघ्रमेव याम्यं पदं=कृतान्तस्थानं समेति, म्रियत इत्यर्थः ॥२५॥




**मंगल चन्द्रमाके नवांशमें हो वा लग्नके नवांशमें हो उसपर गुरुकी दृष्टि न हो और चन्द्रमा पंचम भावमें हो तो बालक मरे ॥ २५ ॥**

नीचं गते लग्नपतौ विलग्नान्नाशं गते वा रविजे तथाऽस्ते ।
जातो मृतप्रायकलेवरः सन् कृच्छ्रेण वैवस्वतलोकमेति ॥ २६ ॥

लग्नपतौ = लग्नेशे नीचं = स्वनीचराशिं गते, अथवा विलग्नान्नाशं गते = अष्टमभावमुपगते, रविजे = शनैश्चरे तथास्तेऽर्थान्नीचगते, वा सप्तमभावगते जातो बालो मृतप्रायकलेवरः = विविधक्लेशैर्व्यथितदेहः सन् कृच्छ्रेणातीव कष्टेन वैवस्वतलोकं = प्रेतपुरीमेति = म्रियत इत्यर्थः ।




ग्रन्थान्तरे—
"विलग्नाधिपतौ नीचे निधने चार्कजो भवेत् ।
कृच्छ्रेण जीवितं विद्यादृणप्रायो विनश्यति" ॥
इति दृश्यते । परञ्च सदाष्टमस्थः शविरिष्टदः स्यादित्युक्तेः (२अ. ५२ श्लो.) सप्तमे शनिरिति युक्तं 'रविजः कलत्रे विफलः' इत्युक्तेश्च ( २ अ. ७२ श्लो. ) ॥ २६ ॥

लग्नेश नीच राशिमें हो या लग्नसे अष्टममें हो और शनि भी उसी तरह तथा सप्तममें हो तो जातकका मृतकके समान कष्टान्वित शरीर यम-भवन जाय ॥ २६ ॥

आपोक्लिमस्थानगता न भोगा विधूतवीर्या यदि भानुमुख्याः ।
मासद्वयं तस्य ऋतुत्रयं वा जातस्य चायुः कथयन्ति तज्ज्ञाः ॥ २७ ॥

विधूतवीर्याः = निर्बला भानुमुख्याः = सूर्यादयो नभोगाः = ग्रहाः, आपोक्लिम—(३।६।९।१२) स्थानेषु वर्त्तमाना यदि भवेयुस्तदानीं जातस्य तस्य=तस्य बालस्य मासद्वयम्, ऋतुत्रयं = षण्मासं वा आयुः तज्ज्ञाः = विज्ञाः कथयन्ति । उक्तञ्च शुक्रजातके—

"आपोक्लिमे स्थिताः सर्वे ग्रहा बलविवर्जिताः ।
षण्मासं वा द्विमासं वा तस्यायुः समुदाहृतम्" २७




अत्रोदाहरणे—र=५।३°।१५'। चं = ५।२°।१०'। मं=८।९°।२०'। बु=५।२०°।१५'। बृ=२।३°।१५'।शु=५।२०°।३०'। श = ११।४°।२०'। रा=८।१२°।१५'। एवं प्रकरस्योदाहृतमिति ॥ २७ ॥

सूर्यादि बलहीन ग्रह यदि आपोक्लिम ( ३।६।९।१२ ) में हों तो उस जातककी दो महीने या छे महीनेकी आयु विद्वान् लोग कहते हैं ॥ २७ ॥

लग्नारिरन्ध्रव्ययगे शशाङ्के पापेन दृष्टे शुभदृष्टिहीने ।
केन्द्रेषु सौम्यग्रहवर्जितेषु प्राणैर्वियोगं व्रजति प्रजातः ॥ २८ ॥

शशाङ्के = चन्द्रे लग्नारिरन्ध्रव्ययानां ( १।६।८।१२ ) अन्यतमभावगते पापग्रहेण केनचिद्दृष्टे शुभग्रहाणां दृष्टिरहिते केन्द्रेषु ( १।४।७।१० ) शुभग्रहवर्जितेषु प्रजातो बालः प्राणैर्वियोगं = मरणं व्रजति । 'व्ययाष्टषष्ठोदयगे शशाङ्के पापेन युक्ते शुभदृष्टिहीने' इत्यपि श्रुतत्वात् ॥ २८ ॥

चन्द्रमा लग्न, छठें, आठवें, या १२ वें में हो उसे पापग्रह देखते हों शुभग्रहकी दृष्टिसे हीन हो तो वह बालक मरे ॥ २८ ॥

सौरे मदस्थे यदि वा विलग्ने जलोदयेऽब्जे यदि कीटगे वा ।
सौम्येषु केन्द्रोपगतेषु सद्यो जातस्य नाशं यवनोपदिष्टम् ॥ २९ ॥

सौरे = शनौ मदस्थे=सप्तमस्थे, वा विलग्नस्थे, अब्जे = चन्द्रे जलोदये=जलचरलग्नगे, यदि वा कीटगे=वृश्चिकराशिगे, सौम्येषु=शुभग्रहेषु केन्द्रो-( १।४।७।१० ) पगतेषु जातस्य सद्यः=त्वरितमेव नाशं=मरणं यवनाचार्येणोपदिष्टं वाच्यम् ॥ २९ ॥

यदि शनि सप्तममें हो वा लग्नमें हो, जलचर राशिमें वा वृश्चिक राशिमें चन्द्रमा हो शुभग्रह केन्द्रमें हो तो जातक का शीघ्र नाश होवे ॥ २९ ॥

भौमक्षेत्रगते जीवे नीचराशिगतेऽथवा ।
सन्ध्यात्रये च सञ्जातो मासान्मृत्युमुपैति सः ॥ ३० ॥

जीवे = बृहस्पतौ भौमक्षेत्रे=मेषे वा वृश्चिके गते, अथवा नीचराशौ ( मकरे ) गते, सन्ध्यात्रये=सूर्योदयात्पूर्वं घटीत्रयं पूर्वसन्ध्या, मध्यन्दिनात्पूर्वं पश्चाच्च सार्धघटीति घटिकात्रयं मध्यसन्ध्या, सूर्यस्यास्तमनात्परं घटीत्रयं सायंसन्ध्येति सन्ध्यात्रयं तस्मिंश्च सञ्जातो बालको मासान्मृत्युमुपैति, मासमेकं जीवति ततो म्रियते । अत्र 'सन्धित्रये' इति पाठे सन्धित्रयं = कटकालिमीनमान्तं, तस्मिन्निति व्याख्येयम् । सर्वार्थचिन्तामणौ—

"नीचस्थे देवपूज्ये तु भौमक्षेत्रगतेऽथवा ।
सन्धित्रयेऽपि सञ्जातो मासान्मृत्युं प्रयच्छति" ॥ इति ॥ ३० ॥

बृहस्पति मंगलके गृहमें हो, वा नीच राशि ( मकर ) में हो, तीनों सन्ध्यामें से किसी में उत्पन्न हो तो वह जातक एक मासमें मरे ॥ ३० ॥

रन्ध्रे धरासूनुदिनेशसौरा जातस्तु मृत्युं समुपैति मासात् ।
केतुस्तु यस्मिन्नुदितोऽत्र जातो मासद्वयेनैव यमं प्रयाति ॥ ३१ ॥

धरासूनुदिनेशसौराः = मङ्गलसूर्यशनैश्चराः, रन्ध्रे = जन्मलग्नादष्टमे वर्त्तमानाश्चेद्भवेयुस्तदा जातो बालको मासान्मृत्युं प्राप्नोति । अथ यस्मिन्नक्षत्रे केतुः ( २ अ० ६८ श्लो० टीका द्रष्टव्या ) उदितो भवति, अत्रास्मिन् नक्षत्रे जायमानो बालो मासद्वयेन यमं प्रयाति= मरणं प्राप्नोतीति । उक्तं च सारावल्याम्—

"भौमदिवाकरसौरारिछद्रे जातस्य भौमगृहे । म्रियतेऽवश्यं स नरो यमकृतरक्षोऽपि मासेन ॥

केतुर्यस्मिन्नृक्षेऽभ्युदितस्तस्मिन्प्रसूयते यो हि ।
मासद्वयेन मरणं विनिर्दिशेत्तस्य जातस्य ॥" इति ॥ ३१ ॥

मङ्गल, सूर्य और शनि अष्टममें हों तो वह जातक एक मासमें मरे । जिस नक्षत्रमें केतुका उदय हो उस नक्षत्रमें जन्म लेनेवाला बालक २ मासमें मृत्यु पाता है ॥ ३१ ॥

पापावुदयास्तगतौ क्रूरेण युतश्च शशी ।
दृष्टश्च शुभैर्न यदा मृत्युश्च भवेदचिरात् ॥ ३२ ॥



द्वौ पापावुदयास्तगतावेक उदये = लग्ने, एकोऽस्ते = सप्तमे गतः, शशी = चन्द्रः क्रूरेण = पापग्रहेण सहितो यत्र कुत्रापि भवेत् स यदा शुभग्रहैरनवलोकितो भवेत्तदाऽचिराच्छीघ्रमेव जातस्य मृत्युर्भवेदिति वाच्यम् । उक्तञ्च स्कान्दे—

"यदा लग्नगतः पापस्तथैवास्तगतोऽपरः । क्रूरयुक्तश्च चन्द्रश्चेच्छुभदृष्टिविवर्जितः ।
तदा जातस्य सद्यः स्यान्मरणं नान्यथा भवेत् ॥ इति ॥ ३२ ॥

लग्न तथा सप्तम दोनों स्थानमें पापग्रह हो क्रूर ग्रहसे युत चन्द्रमा को शुभ ग्रह यदि न देखते हों तो शीघ्र ही बालक की मृत्यु होवे ॥ ३२ ॥

क्षीणे हिमगौ व्ययगे पापैरुदयाष्टमगैः ।
केन्द्रेषु शुभाश्च न चेत् क्षिप्रं निधनं प्रवदेत् ॥ ३३ ॥

सरलार्थः श्लोकः ॥ ३३ ॥

क्षीण चन्द्रमा १२ वे हो, पापग्रह लग्न तथा अष्टममें हों केन्द्रमें शुभग्रह न हों तो शीघ्र मृत्यु जाने ॥ ३३ ॥




क्रूरेण संयुतः शशी स्मरान्त्यमृत्युलग्नगः ।
कण्टकाद्बहिःशुभैरवीक्षितश्च मृत्युदः ॥ ३४ ॥

पापग्रहेण संयुक्तश्चन्द्रः स्मरान्त्यमृत्युलग्ना—( ७।१२।८।१ ) नामन्यतमगतः कण्टकाद्बहिःस्थितैः = केन्द्र–( १।४।७।१० ) वर्जितस्थानगतैः शुभग्रहैरवीक्षितोऽनवलोकितो मृत्यदो भवति । अत एव यदि शुभाः केन्द्रगाः स्युस्तदा न मरणदो भवेदिति । तथैव सारावल्याम्—




व्ययाष्टसप्तोदयगे शशाङ्के पापैः समेते शुभदृष्टिहीने ।
केन्द्रेषु सौम्यग्रहवर्जितेषु जातस्य सद्यः कुरुते प्रणाशम् ॥ इति ॥ ३४ ॥

क्रूरग्रहसे युक्त चन्द्रमा ७ वें, वा १२ वें, वा ८ वें, वा लग्नमें हो, शुभग्रह केन्द्रमें न हों न शुभग्रह देखते हों तो उस बालक की मृत्यु हो ॥ ३४ ॥

शशिन्यरिविनाशगे निधनमाशु पापेक्षिते ।
शुभैरथ समाष्टकं दलमतश्च मिश्रेक्षिते ॥
असद्भिरवलोकिते बलिभिरत्र मासं शुभे
कलत्रसहिते च पापविजिते विलग्नाधिपे ॥ ३५ ॥

शशिनि=चन्द्रे, अरिविनाशगे=षष्ठाष्टमयोरन्यतरभावगते, पापग्रहेणावलोकिते, आशु=शीघ्रमेव, निधनं = मरणं, भवेत् । अथ षष्ठाष्टमस्थे चन्द्रे, शुभैरीक्षिते, समाष्टकं = वर्षाष्टकमायुः, स्यात् । तस्मिन्नेव चन्द्रे, मिश्रैः = पापैः शुभैश्चेक्षिते, अतः = समाष्टकाद् दलमर्धमर्धाद्वर्षचतुष्टयं जीवति, पश्चान्म्रियत इति । अत एव षष्ठाष्टमस्थे चन्द्रे न केनापि दृष्टे अरिष्टाभाव इति । अथात्रास्मिन्नेव षष्ठेऽष्टमे वा स्थाने विद्यमाने, शुभे=शुभग्रहे, बलिभिरसद्भिः=पापग्रहैरवलोकिते, मासमेकं जीवति । तथा विलग्नाधिपे = जन्मलग्नेशे, कलत्रसहिते =

सप्तमभावमुपगते, पापविजिते = पापग्रहेण पराजिते च, मासमेकं जीवति, ततो म्रियते। अत्र विशेषोऽयमवधेयः-शुक्ले रात्रौ, कृष्णे दिने च प्रसवे सति षष्ठाष्टमस्थश्चन्द्रः शुभाशुभदृष्टोऽपि जातकस्यारिष्टदो न भवति—

"पक्षे सिते भवति जन्म यदि क्षपायां कृष्णेऽथवाऽहनि शुभाशुभदृश्यमानः।

तं चन्द्रमा रिपुविनाशगतोऽपि यत्नादापत्सु रक्षति पितेव शिशुं न हन्ति॥" इत्युक्तेः॥३५॥

चन्द्रमा छठे या आठवें हो उसे पापग्रह देखते हों तो जातक शीघ्र मरे। शुभग्रह देखते हों तो आठ वर्ष में मृत्यु होय। उन्हीं (६।८) स्थानोंमें शुभग्रह बली पाप ग्रहोंसे दृष्ट हों, लग्नेश सप्तम भावमें हो और पापग्रहसे पराजित (हारा) हो तो १ मासमें मरे॥ ३५॥

अशुभसहिते ग्रस्ते चन्द्रे कुजे निधनाश्रिते
जननिसुतयोर्मृत्युर्लग्ने रवौ तु सशस्त्रजः॥
उदयति रवौ शीतांशौ वा त्रिकोणविनाशगै-
र्निधनमशुभैर्वीर्योपेतैः शुभैरयुतेक्षिते॥ ३६॥

अशुभेन = शनिना सहिते, ग्रस्ते = राहुयुक्ते च, चन्द्रे लग्ने गतवति, कुजे निधनाश्रिते = अष्टमभावगते प्रसवे सति जननिसुतयोः = मातृपुत्रयोर्मृत्युर्भवति। रवौ = सूर्ये, एवं विधे जननिसुतयोः सशस्त्रजः = खड्गाद्यायुधजनितो मृत्युर्भवति। अत्र रविग्रहणेऽशुभसहितेऽनेन शनिना, बुधेन, चन्द्रेण च सहिते इति व्याख्येयम्, तत्र बुधचन्द्रयोरपि पापत्वभावात्।

अथ रवौ = सूर्ये उदयति = लग्नप्राप्तेऽथवा शीतांशौ = चन्द्रे, लग्नगते, अशुभैः = पापग्रहैस्त्रिकोणविनाशगैः = नवमपञ्चमाष्टमभावगतैः सद्भिस्तथा वीर्योपेतैः = बलिभिः शुभैः, सूर्ये, वा चन्द्रे, न युक्ते, न वीक्षिते, जातस्य निधनं मरणं वाच्यम्। उक्तं च—

"ग्रहणोपगते चन्द्रे सक्रूरे लग्नगे कुजेऽष्टमगे। मात्रा सार्धं म्रियते चन्द्रवदर्के च शस्त्रेण॥

लग्ने चन्द्रेऽर्के वा पापा बलिनस्त्रिकोणनिधनेषु।

सौम्यैरदृष्टयुक्ताः सद्यो मरणाय कीर्त्तिता यवनैः॥"

अर्थादेवोक्ते योगे रवौ चन्द्रे वा बलवच्छुभैर्युक्ते दृष्टे वाऽरिष्टाभाव इति॥ ३६॥







लग्नमें ग्रस्त चन्द्रमा पापग्रहके साथ हो, मङ्गल अष्टम में हो तो माता और पुत्र दोनों मरें। सूर्य लग्नमें हो तो बालक और उसकी माताकी मृत्यु शस्त्रसे होवे। लग्नमें सूर्य वा चन्द्रमा हो, त्रिकोणमें (५।९) वा अष्टममें स्थित बलवान् पापग्रह हो और शुभग्रहसे युक्त दृष्ट न हो तो जातक शीघ्र मरे॥ ३६॥

असितरविशशाङ्कभूमिजैर्व्ययनवमोदयनैधनाश्रितैः॥
भवति मरणमाशु देहिनां यदि बलिना गुरुणा न वीक्षितैः॥ ३७॥

असितरविशशाङ्कभूमिजैः = शनिसूर्यचन्द्रमङ्गलैः, व्ययनवमोदयनैधना-(१२।९।१।८) श्रितैर्यथा शनिर्व्यये, सूर्यो नवमे, चन्द्रो लग्ने, भौमोऽष्टमे आस्ते। एवं सर्वे स्थित यदि

बलिना गुरुणा न वीक्षिताः=न दृष्टाः स्युस्तदा देहिनां=जनिमतामाशु=शीघ्रमेव मरणं भवति ।
तथाहि—"लग्नान्त्यनवमनैधनसंयुक्ताश्चन्द्रसूर्यसौराराः ।
जातस्य वधकृतः स्युः सद्यो गुरुणा न चेद्दृष्टाः ॥" इति दर्शनात् ।

इह खलु व्ययनवमोदयनैधनाश्रिताः सर्वे गुरुणा अनवलोकिताः स्युरित्यसम्भवम् । तेन केचिद्दृष्टाः केचिददृष्टाश्च भवन्ति । अतः तथा भूते योगे न शीघ्रं मरणं किन्तु कालान्तरेणेति । यदि असितरविशशाङ्कभूमिजाः यथासम्भवं व्ययनवमोदयनैधनाश्रिता भवेयुः, न क्रमिका इति व्याख्यानं चेत्तदा सर्वे गुरुणाऽदृष्टा इति सम्भवम् । अत्र यदि गुरुः

| | | |
|---|---|---|
| १, २ | ल. १२ चं. | ११ श., १० |
| ३ | अरिष्ट-परिहारः | ९ |
| ४ बृ., ५ | ६ | ८ र., ७ मं. |

पञ्चमगो भवेत्तदा सर्वान् पश्येदिति तदाऽरिष्टाभावः । चक्रं द्रष्टव्यम् ॥ ३७ ॥

शनि १२ वें, सूर्य नववें, चन्द्रमा लग्नमें हो और मंगल अष्टममें हो, इनको बलवान् बृहस्पति न देखता हो तो बालककी शीघ्र मृत्यु हो । बृहस्पति किसी को देखता हो और किसी को न देखता हो तो अरिष्टमात्र कहे । बलहीन बृहस्पति इन सबोंको देखे तो दोष-परिहार नहीं करता है । यदि गुरु ५ वें भावमें हो तो सब ( १।१२।८।९। ) को देख सकेगा । तब दोषका परिहार समझना चाहिये ॥ ३७ ॥

सुतमदननवान्त्यलग्नरन्ध्रेष्वशुभयुतो मरणाय शीतरश्मिः ॥
भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितो वा ॥ ३८ ॥

अशुभयुतः = पापग्रहसहितः, शीतरश्मिश्चन्द्रः, सुतमदननवान्त्यलग्नरन्ध्रेषु = पञ्चमसप्तमनवमद्वादशप्रथमाष्टमानामन्यतमस्थाने गतो यदि बलिभिर्भृगुसुतशशिपुत्रदेवपूज्यैस्त्रिभिः शुभग्रहैर्युतोऽवलोकितो वा न भवति तदा जातस्य मरणाय = मृत्युकारणं भवति । तथा हि सारावल्याम्—

"निधनास्तव्ययलग्नत्रिकोणगाः क्षीणचन्द्रसंयुक्ताः ।
पापा बलिभिः शुभैरदृश्यमाना गतायुषं कुर्युः ॥" इति ॥ ३८ ॥

चन्द्रमा पापग्रहसे युक्त होकर पंचम वा सप्तम वा नवम वा द्वादश वा लग्न अथवा अष्टममें हो और उसे बलवान् शुक्र, बुध और बृहस्पति न देखें तो बालककी मृत्यु शीघ्र होवे ॥

## अथ वर्षमध्ये मरणम् ।

योगे स्थानं गतवति बलिनश्चन्द्रे स्वं वा तनुगृहमथवा ॥
पापैर्दृष्टे बलवति मरणं वर्षस्यान्तः किल मुनिगदितम् ॥ ३९ ॥

अथाधुनाऽनुक्तकालानामरिष्टानां कालज्ञानमुच्यते । योगे=अनुक्तकालारिष्टयोगे, बलिनो ग्रहस्य स्थानं गतवति चन्द्रे, अथवा स्वमात्मीयराशिं गते, वा तनुगृहं गते चन्द्रे, वर्षस्यान्तः = वर्षाभ्यन्तरे मरणं वाच्यम् । अत्रेदमुक्तं भवति । जन्मकाले अरिष्टकारकग्रहाणां मध्ये यो ग्रहो बलीयान् स यस्मिन् राशौ भवेत् तस्मिन्नेव राशौ चारवशाद्याते चन्द्रे, अथवा जन्मनि यत्र राशौ चन्द्रो भवेत्तस्मिन्नेव चारवशात्पुनरागते चन्द्रे वा जन्मलग्नराशौ पुनः समागते चन्द्रे वर्षमध्ये मरणं वक्तव्यम् । त्रिष्वपि बलवद्ग्रहणम् । अनुक्तकालारिष्टे वर्षोर्ध्वं न जीवतीति भावः ।

ननु चन्द्रः प्रतिमासं सर्वेष्वपि स्थानेषु गच्छतीति किं वर्षान्ते मरणमुक्तमित्युच्यते । तेषु न केवलं गते चन्द्रे किन्तु बलवति = बलयुक्ते, चन्द्रे पापैर्दृष्टे च । यस्मिन्मासे बलवान् चन्द्रः पापदृष्टश्च पूर्वोक्तस्थानेषु चारवशाद्गच्छेत्तदा मरणं किल इति निश्चयेन मुनिभिः प्राक्तनैर्गदितं = भाषितं वक्तव्यमिति । उक्तं च सारावल्याम्—

"योगे बलिनः स्थानं स्वं वा लग्नं गतेऽपि वा चन्द्रे ।
बलवति पापैर्दृष्टे वर्षान्ते मृत्युकालः स्यात् ॥" इति ॥ ३९ ॥

जिन अरिष्टोंके फलका समय नहीं लिखा है उनमें योग करनेवाले ग्रहोंमेंसे जो बलवान् हो उसकी राशिपर जब गोचरका चन्द्रमा हो उस समय अरिष्ट होगा । अथवा अपनी राशिमें या लग्नराशिमें चन्द्रमा चारवश जब जाय तथा बलयुक्त रहे और पापग्रहसे दृष्ट रहे तो १ सालके भीतरमें मृत्यु होती है ऐसा प्राचीन मुनियों ने कहा है । (सु.शा.कार) ॥३९॥

### अथ वर्षद्वयमायुः ।

वक्री शनिर्भौमगृहोपयातः केन्द्रेऽथवा शत्रुगृहे विनाशे ॥
कुजेन सम्प्राप्तबलेन दृष्टो वर्षद्वयं जीवयति प्रजातम् ॥ ४० ॥

| | | |
|---|---|---|
| ३ / ४ | २ | १ मं. / १२ |
| ५ | २ वर्षायुः | ११ |
| ६ / ७ | ८ श. | १० / ९ |

वक्री = वक्रगतिकः, शनिः, भौमगृहो-(१।८) पयातः सन् केन्द्रे (१।४।७।१०भावे) अथवा शत्रुगृहे = षष्ठभावे वा विनाशेऽष्टमे भावे, विद्यमानः, सम्प्राप्तबलेन = पूर्णबलेन, कुजेन, दृष्टो भवेत् तदा प्रजातं बालकं, वर्षद्वयं जीवयति, तदनन्तरं मारयतीति ॥४०॥

वक्री शनि मंगलके गृहमें ( १।८ ) होकर केन्द्रमें हो अथवा छठें या ८ वेंमें हो उसे बलवान् मंगल देखता हो तो ऐसे समयका उत्पन्न बालक दो वर्ष तक जीता है ॥ ४० ॥

### अथ वर्षत्रयमायुः ।

बृहस्पतिर्भौमगृहेऽष्टमस्थः सूर्येन्दुभौमार्कजदृष्टमूर्तिः ॥
अब्दैस्त्रिभिर्भार्गवदृष्टिहीनो लोकान्तरं प्रापयति प्रजातम् ॥ ४१ ॥

| | | |
|---|---|---|
| ७ / ८ शु. | ६ चं. श. | ५ / ४ |
| ९ र. बु. | ३ वर्षायुः | ३ |
| १० मं. / ११ | १२ | २ / १ बृ. |

भौमगृहे विद्यमानो बृहस्पतिर्लग्नादष्टमभावगतो भवति, तत्र सूर्येन्दुभौमार्कजदृष्टमूर्तिः=सूर्यचन्द्रमङ्गलशनैश्चरैरवलोकितश्च भवति, तथा भार्गवदृष्टिहीनः = शुक्रदृष्टिरहितो भवति, तदा प्रजातं बालकं त्रिभिरब्दैः लोकान्तरं प्रापयति = मारयतीत्यर्थः । उक्तं च ग्रन्थान्तरे—

"मेषालियः सुरगुरुर्निधने विशुक्रैरालोकितो गगनगैर्मृतिकृत् त्रिवर्षात् ।
वर्षद्वयेन रिपुनाशगतस्तथैव वक्री शनिर्बलवता कुसुतेन दृष्टः ॥" इति ॥ ४१ ॥

बृहस्पति मंगलके गृहमें अष्टम भावमें हो ( मेष या कन्या लग्नमें इस योगका संभव होता है ) उसे सूर्य-चन्द्रमा-मंगल-शनि देखते हों और शुक्र न देखता हो तो वह बालक तीन वर्ष में मरे ॥ ४१ ॥

## अथ चतुर्थवर्षे मरणम् ।

षष्ठाष्टमे कर्किणि जन्मलग्नात् सौम्ये सुधारश्मिनिरीक्ष्यमाणे ॥
अब्दैश्चतुर्भिः समुपैति नाशं जातो नरः सर्वबलान्वितोऽपि ॥ ४२ ॥

४ वर्षायुः




कर्कराशिगते सौम्ये=बुधे जन्मलग्नात् षष्ठेऽष्टमे वा विद्यमाने सुधारश्मिना = चन्द्रेण निरीक्ष्यमाणे = अवलोकिते जातो नरः सर्वबलान्वितोऽपि यदि भवति तथापि चतुर्भिरब्दैः नाशं= मृत्युं समुपैति । तथा सारावल्याम्—
"कर्कटधामनिसौम्यः षष्ठाष्टमसंस्थितो विलग्नर्क्षात् ।
चन्द्रेण दृष्टमूर्तिर्वर्षचतुष्केण मारयति॥" इति॥४२॥

कर्कका बुध जन्मलग्नसे छठें वा आठवेंमें हो उसको चन्द्रमा देखता हो तो जातक सर्व-बल-सम्पन्न होनेपर भी चौथे वर्षमें मरे ॥ ४२ ॥

## अथ पञ्चमेऽब्दे मरणम् ।

रविचन्द्रभौमगुरुभिः कुजगुरुसौरेन्दुभिः सहैकस्थैः ॥
रविशनिभौमशशाङ्कैर्मरणं खलु पञ्चभिर्वर्षैः ॥ ४३ ॥




यत्र कुत्रापि रविचन्द्रभौमगुरूणामेकत्र योगे, अथ च कुजगुरुशनिचन्द्राणां योगे, तथा च रविशनिभौमचन्द्राणां योगे खलु = निश्चयेन पञ्चभिर्वर्षैर्मरणं भवति । अत्र—
"तिग्मांशुनीहारकरावनीज-
युक्तैः क्रमादेकगृहाश्रितैस्तैः ।
सूर्यात्मजेनाङ्गिरसा सितेन
स्यात्पञ्चता पञ्चभिरेव वर्षैः" इति गुणाकरः ४३

रवि-चन्द्र-मंगल-गुरु एकत्र हों, वा मंगल-गुरु-शनि-चन्द्रमा एकत्र हों वा रवि-शनि-मंगल-चन्द्रमा एकत्र हों तो ५ वर्षमें बालककी मृत्यु करते हैं ॥ ४३ ॥

## अथ षड्वर्षमायुः ।

यदा सुधारश्मिनवांशकस्थे निरीक्षिते शीतकरेण मन्दे ॥
लग्नाधिपे चन्द्रदृशा समेते जातस्य षड्वर्षमितं तदाऽऽयुः ॥ ४४ ॥

६ वर्षायुः




यदा = यस्मिन्काले, मन्दे = शनौ यत्र कुत्रापि सुधारश्मेश्चन्द्रस्य नवांशकस्थे, शीतकरेण = चन्द्रेण निरीक्षिते, लग्नाधिपे च चन्द्रदृशा समेते ( चन्द्रदृष्ट इत्यर्थः ) सति जन्म भवति, तदा जातस्य षड्वर्षमितमायुर्भवति । ततोऽनन्तरं म्रियते ॥ ४४ ॥

यदि शनि चन्द्रमाके नवांशमें हो उसे

चन्द्रमा देखता हो और लग्नेशपर चन्द्रमाकी दृष्टि हो तो जातककी छः वर्षकी आयु होती है ॥ ४४ ॥

### अथ सप्तमेऽब्दे मरणम् ।

लग्ने यद्द्रेक्काणो निगलाहिविहङ्गपाशधरसञ्ज्ञः ॥
मरणाय सप्तवर्षैः क्रूरयुतो न स्वपतिसंदृष्टः ॥ ४५ ॥

जन्मलग्ने निगलाहिविहङ्गपाशधरसञ्ज्ञानामन्यतमो द्रेष्काणो यदि पापग्रहेण युक्तो निजनाथेन ( द्रेष्काणेशेन ) नावलोकितश्च भवेत्तदा जातस्य सप्तवर्षैर्मरणाय = मृत्युकारणं भवति । तथाऽऽह गुणाकरः—

"द्रेष्काणा लग्नगाः सर्पश्रृगालपाशपक्षिणाम् ।
सपापा मृत्युदा वर्षैः सप्तभिर्नेशवीक्षिताः ॥" इति ।

७ वर्षे मरणम्




अत्र निगलाहिविहङ्गपाशा द्रेष्काणा वक्ष्यमाणेन "कुलीरमीनालिगता दृगाणा मध्यावसानप्रथमा भुजङ्गाः । अलिद्वितीयो मृगलेपपूर्वः क्रमेण पाशो निगलो विहङ्गः" । इत्यनेन श्लोकेन ( ५ अ. । ५५ श्लो० ) ज्ञेयाः ॥ ४५ ॥

यदि लग्नमें निगल या अहि या पाशधर संज्ञावाला द्रेष्काण क्रूरग्रहसे युक्त हो और अपने पतिसे दृष्ट न हो तो सात वर्षमें बालक मरे ॥ ४५ ॥

### अथ सप्ताष्टवर्षे मृत्युः ।

लग्ने रविशनिभौमाः शुक्रगृहे सप्तमे शशी क्षीणः ॥
दृष्टो न देवगुरुणा सप्तभिरष्टभिरब्दकैर्वा स्यात् ॥ ४६ ॥

| | | |
|---|---|---|
| ९ / १० | र. श. मं. ८ | ७ चं. / ६ |
| ११ | ७।८ वर्षे मृत्युः | ५ |
| १२ / १ | २ | ४ / ३ |

लग्ने=जन्मलग्ने रविशनिभौमा भवेयुः क्षीणः शशी=चन्द्रः शुक्रगृहे सप्तमे ( तुलायामित्यर्थः ) भवेत् । शुक्रस्य वृषतुले इति द्वे गृहे, परन्तु वृषे चन्द्रस्योच्चत्वमतस्तुलाया ग्रहणमेवोचितम् । सप्तमो राशिस्तुलेति 'शुक्रगृहे सप्तमे' कथितम् । केचित्तु सप्तमे भावे शुक्रगृहे शशी क्षीण इति व्याख्यायन्ति । परन्तु न तन्मन्मतम् । लग्ने विद्यमाने रवौ तस्मात्सप्तमे चन्द्रमसा पूर्णेन भवितव्यं न तु क्षीणेनेति विवेचनीयं मनीषिभिरिति । तथा भूतश्चन्द्रो देवगुरुणा दृष्टो न भवेत्तदा सप्तभिर्वाऽष्टभिर्वर्षैर्मरणं स्यादिति ॥ ४६ ॥

लग्नमें रवि, शनि और मंगल हों, शुक्रके गृह ७ में क्षीण चन्द्रमाको बृहस्पति न देखता हो तो बालक सात, या आठ वर्षमें मरे ॥ ४६ ॥

### अथ नवमेऽब्दे मृत्युः ।

दिवाकरेन्दुभूपुत्राः पुत्रस्थानसमन्विताः ॥
जातो यमपुरं याति नवमाब्दे न संशयः ॥ ४७ ॥

सरलार्थः ।

सर्वार्थचिन्तामणौ—तरणीन्दुकुजाः पुत्रस्थाने युक्ता न सौम्यगाः । जातो यमपुरं याति नवमेऽब्दे न संशयः ॥ ४७ ॥

सूर्य, चन्द्र, मंगल ये पंचम भाव में हों ऐसे योगमें जायमान बालक ९ वर्षमें मरे इसमें संदेह नहीं है ॥ ४७ ॥

| | | |
|---|---|---|
| | | |
| | नवमेऽब्दे मरणम् | |
| र.चं.मं. | | |

पापो विलग्नाधिपतिः शशांकादन्त्यस्थितः क्रूरनिरीक्षितश्चेत् ॥
चन्द्रांशकस्थे यदि वा तदीशो जातः शिशुर्याति लयं नवाब्दैः ॥ ४८ ॥

जन्मलग्नाधिपः पापो भवेदसौ चन्द्रादन्त्ये=द्वादशेस्थितो भवेत्क्रूरग्रहनिरीक्षितश्च चेद्भवेदथवा तदीशो लग्नेशश्चन्द्रांशकस्थश्चन्द्रस्य नवांशे भवेत्तदा जातो बालो नवाब्दैर्लयं = मरणं याति ।

तथोक्तं च सारावल्याम्—

| | | |
|---|---|---|
| ११ शं ३ | १० | ९ ८ मं. |
| १ | ६ वर्षे मरणम् | ७ |
| श. २ चं. ३ | ४ | ६ बु.र. ५ |

लग्नाधिपतिः पापः शशिनोऽन्त्ये रिःफगो यदि च चन्द्रात् ।
क्रूरैर्विलोक्यमानो मारयति शिशुं नवभिरब्दैः ॥ इति ॥ ४८ ॥

लग्नेश पापी हो ( याने पापग्रह का लग्न हो ) वह चन्द्रमासे १२ वें स्थान में हो या लग्नेश किसी भी राशिमें चन्द्रमाके नवांशमें हो उसे पापग्रह देखते हों तो ९ वें वर्षमें बालक मर जाय ॥ ४८ ॥

अथ दशवर्षायुः ।

मृगांशकस्थिते मन्दे सौम्यदृष्टिसमन्विते ॥
जन्मप्रभृतिशत्रुत्वं तस्यायुर्दशवत्सरम् ॥ ४९ ॥

मन्दे=शनैश्चरे यत्र कुत्र राशौ मृगांशकस्थिते=मकरनवांशगते, तथाभूते सौम्यदृष्टिसमन्विते=बुधेनावलोकिते जातस्य जन्मप्रभृतिशत्रुत्वं=जन्मत एव तस्य लोकैः सह शत्रुत्वं जायते । सर्वे एव तस्य मरणमिच्छन्तीति भावः । तथा तस्य दशवत्सरमायुर्भवति तदनन्तरं म्रियत इति ॥ ४९ ॥

५ ३ ६ ४ २
७ श.१२ र.बु. १
८ १० गु. १२
९ चं. शु.११

शनि मकरके अंशमें हो उसे बुध देखता हो तो उस बालकके जन्मसे ही लोग शत्रुता करे और उसकी आयु १० वर्ष की होवे ॥ ४९ ॥

अथ एकादशे वर्षे मरणम् ।

रविणा युक्तः शशिजः सौम्यैर्दृष्टो विनाशयति ॥
एकादशभिर्वर्षैर्जातं नृपतुल्यभोगसम्पन्नम् ॥ ५० ॥

सरलार्थः । उदाहरणं ४६ चक्रे द्रष्टव्यम् ॥ ५० ॥

बुध सूर्यके साथ होकर शुभग्रहोंसे देखा जाता हो तो राजाके समान सुखभोग युक्त बालकको ११ वें वर्षमें मारता है। अर्थात् ऐसे योगमें राजकुमारकी भी ११ वें वर्षमें मृत्यु होती है। ( सु. शा. कार ) ॥ ५० ॥

### अथ द्वादशेऽब्दे मरणम् ।

चन्द्रलग्नाधिपः सूर्यः स्वपुत्रेण समन्वितः ॥
लग्नादष्टमराशिस्थो द्वादशाब्दे सितेक्षितः ॥ ५१ ॥
अल्यंशकस्थिते मन्दे सूर्येणैव निरीक्षिते ॥
पितृद्वेषसमायुक्तो द्वादशाब्दं च जीवति ॥ ५२ ॥

चन्द्रलग्नाधिपः सूर्यश्चन्द्रो यस्मिन् लग्ने ( राशौ ) भवेत्तदधिपः सूर्यो भवेदर्थाच्चन्द्रः सिंहराशौ भवेत्तथा सूर्यः स्वपुत्रेण = शनिना सहितो लग्नादष्टमराशिगतो भवेच्छुक्रेणेक्षितश्च भवेत्तदा जातस्य द्वादशाब्दे मरणं वाच्यम् । अस्मिन्योगे गुणाकरेण नवमे वर्षे मरणं कथितम् । तथा तद्वचनम्—

'जन्मेश्वरो दिनकरः ससुतस्तथैव दृष्टः सितेन नवमप्रमितैश्च वर्षैः ।' इति ।

मन्दे=शनैश्चरे अल्यंशके=वृश्चिकनवांशे यत्र तत्र राशौ विद्यमाने, सूर्येणैव निरीक्षिते= दृष्टे, जातकः पितृद्वेषसमायुक्तः ( तस्मिन्पुत्रे पितुर्वैरिभावमुत्पद्यत इति भावः, यथा प्रह्लादे हिरण्यकशिपोः ) द्वादशाब्दं जीवत्यतः परं म्रियते पितुर्द्वेषेण ॥ ५१-५२ ॥

शु. १ | ११ | २ | १२ | १० | ३ | ९ | ४ | ६ | ८ | ५ चं. | ७ सू. श.

१२ | १० | १ सू. | ११ | ९ | ८ | ३ | ५ | श. ५ | ४ | ६ | ७

चन्द्रलग्नाधिप सूर्य ( याने सिंहमें चन्द्रमा हो ) अपने पुत्र ( शनि ) से युक्त होकर अष्टम स्थानमें हो, उन्हें शुक्र देखता हो तो १२ वें वर्ष में बालक मरे ॥ ५१ ॥

शनि वृश्चिकके नवांशमें हो उसे सूर्य देखता हो तो वह बालक पिताके वैरसे युक्त हो १२ वर्ष जीवे ॥ ५२ ॥

### अथ त्रयोदशेऽब्दे मृत्युः ।

तुलांशकस्थिते मन्दे जीवदृष्टिसमन्विते ॥
त्रयोदशाब्दे मरणं जातस्य पितृवैरिणः ॥ ५३ ॥

शनैश्चरे यत्र तत्र तुलानवांशे विद्यमाने गुरुणा दृष्टे च जातो बालः पितुः वैरी भवति । तथा तस्य पितृद्विषस्त्रयोदशे वर्षे मरणं जायते ॥ ५३ ॥

तुलाके नवांशमें शनि हो उसे गुरु देखते हों तो वह जातक पिताका वैरी हो और १३ वें वर्षमें मरे ॥ ५३ ॥

### अथ चतुर्दशेऽब्दे मृत्युः ।

कन्यांशकस्थिते मन्दे सौम्यदृष्टिसमन्विते ॥
चतुर्दशाब्दे मरणं जातः कोपी समेति च ॥ ५४ ॥

मन्दः = शनिः यत्र तत्र कन्याराशिनवांशे भवेत्तथाभूतो बुधदृष्टिसहितश्च भवेत्तदा जातकः कोपवान् ( क्रोधी ) भवति । तदायुश्च चतुर्दश वर्षाणि । इति ॥ ५४ ॥

१३ वर्षे मृत्युः




१४ वर्षे मृत्युः




कन्याके नवांशमें शनि हो उसे बुध देखता हो तो वह जातक क्रोधी हो और १४ वें वर्षमें मरे ॥ ५४ ॥

अथ पञ्चदशाब्दायुः ।

सिंहांशकस्थिते मन्दे राहुणा च निरीक्षिते ॥
शस्त्रपीडा भवेत्तस्य चायुः पञ्चदशाब्दकम् ॥ ५५ ॥

सरलार्थः ॥ ५५ ॥

सिंहके नवांशमें शनि हो, राहु उसको देखता हो तो उस बालकको शस्त्रसे घाव लगे और उसकी आयु १५ वर्षकी होवे ॥ ५५ ॥

अथ षोडशेऽब्दे मरणम् ।

कर्कांशकस्थिते मन्दे जीवदृष्टिसमन्विते ॥
सर्पपीडा भवेत्तस्य षोडशाब्दान्मृतिं वदेत् ॥ ५६ ॥

सरलार्थः ॥ ५६ ॥

कर्कके नवांशका शनि हो बृहस्पति उसको देखता हो तो उस बालकका सर्प डसनेका कष्ट हो और १६ वें वर्षमें मृत्यु कहे ॥ ५६ ॥

अथ सप्तदशेऽब्दे मृत्युः ।

यमांशकस्थिते मन्दे लग्ननाथेन वीक्षिते ॥
रणशूरो महाभोगी मृतः सप्तदशाब्दके ॥ ५७ ॥

यत्र तत्र गते मन्दे यमांशकस्थिते = मिथुननवांशे विद्यमाने तथा लग्ननाथेन=जन्म-लग्नपतिना यत्र तत्र वर्तिना वीक्षिते जातको रणे=युद्धे शूरो भवति, महाभोगी=उत्तमसुख-युक्तश्च भवति, तथा सप्तदशाब्दके मृतो भवति । सप्तदशवर्षे म्रियत इत्यर्थः ॥५७॥




अत्रोदाहरणे ( रा. श. ) अनेन १५ वर्षाणि । ( बृ. शं. ) अनेन १६ वर्षाणि । ( शु. शं. ) अनेन १७ वर्षाणि आयुः ।

शनि मिथुनांशकमें हो उसको लग्नेश देखता हो तो वह बालक रणशूर हो, महाभोगी हो और १७ वें वर्षमें मरे ॥ ५७ ॥

### अथ अष्टादशेऽब्दे मृत्युः ।

परस्परक्षेत्रसमन्वितौ वा रन्ध्रेशलग्नाधिपती न सौम्यौ ॥
रिःफारिभे वा गुरुणा वियुक्ते त्वष्टादशाब्दे निधनं प्रयाति ॥ ५८ ॥

रन्ध्रेशोऽष्टमेशः, लग्नाधिपतिर्लग्नेशस्तौ न सौम्यौ=पापौ वा शुभग्रहयोगरहितौ वा परस्परक्षेत्रसमन्वितौ लग्नेशोऽष्टमेशगृहे तथाऽष्टमेशो लग्नेशगृहे स्थितः, अथवा तावेव गुरुणा वियुक्ते=बृहस्पतिरहिते रिःफारिभे=षष्ठे द्वादशे वा भावे भवेतां तदा जातस्त्वष्टादशाब्दे निधनं=मरणं प्रयाति ॥ ५८ ॥

लग्नेश-अष्टमेश दोनों पापग्रह हों, परस्पर एक दूसरेके गृहमें हों, वा १२ या ६ ठे हों गुरुसे वियुक्त हों तो वह बालक १८ वें वर्षमें मरे ॥ ५८ ॥

### अथ सद्यो मृत्युः ।

जीवांशकस्थिते मन्दे राहुणा च निरीक्षिते ॥
देहाधिपे शुभादृष्टे जातः सद्यो विनश्यति ॥

### अथ १९ वर्षे मृत्युः ।

तदीशस्तुङ्गभागश्चेदायुरेकोनविंशतिः ॥ ५९ ॥




यत्र तत्र मन्दे = शनौ जीवस्य = बृहस्पतेः (९।१२) अंशके=नवांशे स्थिते राहुणा निरीक्षिते च देहाधिपे = लग्नेशे शुभादृष्टे=शुभग्रहैरनवलोकिते जातो बालः सद्यः = जातमात्र एव विनश्यति = म्रियते ।

अथास्मिन्योगे तदीशः = लग्नेशो यदि तुङ्गभागः = उच्चांशगतो भवेत्तदा तस्यैकोनविंशति-(१९)वर्षाण्यायुर्भवत्यनन्तरं म्रियते ॥

बृहस्पतिके नवांशमें शनि हो उसे राहु देखता हो और लग्नेश शुभग्रहोंसे अदृष्ट हो तो वह बालक जन्म लेते ही मरे । यदि उसका स्वामी उच्चराशिमें हो तो १९ वर्ष उसकी आयु होवे ॥ ५९ ॥

### अथ २० वर्षे मृत्युः ।

केन्द्रेषु पापेषु निशाकरेण सौम्यग्रहैरीक्षणवर्जितेषु ॥
षष्ठाष्टमे वा यदि शीतरश्मौ जातः सुखी विंशतिवत्सरान्तम् ॥ ६० ॥




केन्द्रेषु (१।४।७।१०) यथासम्भवं विद्यमानेषु पापग्रहेषु निशाकरेण = चन्द्रेण तथान्यैः शुभग्रहैः (बु.गु.शु.) श्चेक्षणवर्जितेषु=अनवलोकितेषु, वा यदि शीतरश्मौ = चन्द्रे लग्नात् षष्ठेऽष्टमे वा विद्यमाने (केन्द्रेषु पापेषु च) बालकः विंशतिवत्सरान्तं सुखी भवति, तदनन्तरं मरणमेतीति ॥ ६० ॥

केन्द्रोंमें पापग्रह हों उन्हें चन्द्रमा तथा शुभग्रह न देखते हों, या यदि चन्द्रमा छठें वा ८ वें स्थानमें हो तो वह बालक उत्पन्न होनेपर २० वर्षके भीतर सुखी रहे, बादमें मरे ॥ ६० ॥

## अथ २२ वर्षे मृत्युः ।

जीवेन सहितः सूर्यो लग्नस्थः कीटराशिगः ॥
अष्टमाधिपतौ केन्द्रे द्वाविंशत्यब्दके मृतिः ॥ ६१ ॥

कीटराशिगः = कर्कराशिस्थः सूर्यो जीवेन = बृहस्पतिना सहितो लग्नस्थो भवेदर्थात्कर्कराशिर्लग्नं भवेत्तस्मिन् सूर्यगुरू च भवेतां तथा लग्नादष्टमाधिपतिः केन्द्रे (१।४।७।१० भावे) भवेत्तदा जातस्य द्वाविंशत्यब्दके ( २२ वर्षे ) मृतिर्मरणं भवति ।




ननु संज्ञाध्याये 'अत्यष्टमं वृश्चिककौर्पिकीटाः' इत्यनेन कीट इति वृश्चिकराशेः संज्ञा, तत्कथं कीट इत्यत्र कर्कटो व्याख्यातः ? उच्यते, कीट इत्यनेन वृश्चिकस्य ग्रहणे कृते तस्मादष्टमं मिथुनं, तत्पतिर्बुधो वर्त्तते, स तदा लग्नस्थसूर्यात्केन्द्रेषु १।४।७।१० न जातु भवितुमर्हतीति। यदि केन्द्रमित्यनेन केवलं प्रथमस्यैव ग्रहणं क्रियेत तदा 'अष्टमाधिपतिस्तत्र' इत्येवमेव पाठमकरिष्यदिति । अस्तु 'कीटः कर्कटराशिः' इति वराहवचनमुररीकृत्य कीटे कर्कटो व्याख्यातः ॥ ६१ ॥

बृहस्पति के साथ सूर्य कर्कराशिका लग्नमें हो और अष्टमेश केन्द्रमें हो तो जातक २२ वें वर्ष में मरे ॥ ६१ ॥

## २६।२७ वर्षे मृत्युः ।

मन्दोदये शत्रुराशौ सौम्यैरापोक्लिमोपगैः ॥
षड्विंशत्यब्दके वा स्यात् सप्तविंशतिवत्सरे ॥ ६२ ॥

शत्रुराशौ लग्नवर्त्तिनि शनौ ( लग्नेशो मन्दस्य शत्रुः शनैश्वरो लग्नवर्त्ती च भवेत्) सौम्यैः=शुभग्रहैरापोक्लिमे ( ३।६।९।१२ ) उपगतैः जातस्य षड्विंशत्यब्दके, अथवा सप्तविंशतिवत्सरे (२६।२७) मरणं स्यादिति॥




लग्नमें शनि शत्रुकी राशिका हो सौम्यग्रह आपोक्लिममें हों तो उस जातककी आयु २६ या २७ वर्ष की जाने ॥ ६२ ॥

## अथ २८ वर्षे मरणम् ।

रन्ध्रेशे जीवसंदृष्टे पापे पापनिरीक्षिते॥रन्ध्रस्थे जन्मपे मृत्युरष्टाविंशतिवत्सरे ॥६३॥

रन्ध्रेशेऽष्टमभावपतौ पापे = पापग्रहे जीवसंदृष्टे=यत्र तत्र गुरुणाऽवलोकिते तथा जन्मपे=जन्मराशिपतौ पापनिरीक्षिते=पापग्रहेण दृष्टे रन्ध्रस्थेऽष्टमभावमुपगते च जातस्याष्टाविंशति-(२८)वत्सरे मृत्युः स्यादिति॥ ६३॥




अष्टमेश पापग्रह हो उसे गुरु देखता हो और जन्मराशीश आठवेंमें हो तथा पापग्रह

से दृष्ट हो तो बालककी मृत्यु २८ वें वर्षमें होती है ॥ ६३ ॥

अथ २९ वर्षे मृत्युः ।

चन्द्रो मन्दसहायस्तु सूर्यश्चाष्टमसंस्थितः ॥
एकोनत्रिंशके वर्षे जातो यमपुरं व्रजेत् ॥ ६४ ॥

चन्द्रो मन्दस्य = शनैश्चरस्य सहायः = सम्बन्धी ( स्थानसम्बन्धी वा दृष्टिसम्बन्धी ) तु=तथा सूर्यश्चाष्टमे = लग्नादष्टमभावे संस्थितो भवेत्तदा जात एकोनत्रिंशके ( २९ ) वर्षे यमपुरं=यमालयं व्रजेद्धार्थान्म्रियते ॥ ६४ ॥

चन्द्रमा शनिका सहायक हो सूर्य अष्टममें स्थित हो तो जातक २९ वें वर्षमें यमपुरकी यात्रा करे, याने मरे ॥ ६४ ॥

अथ २७ वा ३० वर्षे मृत्युः ।

जन्मरन्ध्रपयोर्मध्ये निशानाथे व्यये गुरौ ॥
सप्तविंशतिवर्षे वा त्रिंशद्वयसि वा मृतिः ॥ ६५ ॥




निशानाथे=चन्द्रे जन्मरन्ध्रपयोर्जन्मराशिपत्यष्टमभावेशयोर्मध्ये भवति सति इदमुक्तं भवति । चन्द्राज्जन्मरन्ध्रेशयोरेको द्वादशेऽपरो द्वितीये भवेत्, तथा गुरौ व्यये=लग्नात् द्वादशे भावे विद्यमाने जातस्य सप्तविंशति-( २७ ) वर्षे वा त्रिंशद्वयसि ( ३० वर्षे ) मृतिर्भवति ॥ ६५ ॥

जन्मपति और अष्टमेशके मध्यमें चन्द्रमा हो और बृहस्पति १२ वें हो तो २७ वें वर्ष वा ३० वर्षकी उमरमें बालककी मृत्यु हो ॥ ६५ ॥

अथ ३२ वर्षे मरणम् ।

अष्टमाधिपतौ केन्द्रे लग्नेशे बलवर्जिते ॥
त्रिंशद्वर्षमितायुष्मान् द्वात्रिंशद्वत्सरे मृतिः ॥ ६६ ॥
क्षीणे शशाङ्के यदि पापयुक्ते रन्ध्राधिपे केन्द्रगतेऽष्टमे वा ॥
पापान्विते हीनबले विलग्ने द्वात्रिंशदब्दे निधनं प्रयाति ॥ ६७ ॥

सरलार्थः ॥ ६६ ॥




अथ क्षीणे=कृष्णपक्षीये शशाङ्के = चन्द्रे यदि पापग्रहेण युक्ते, रन्ध्राधिपेऽष्टमेशे केन्द्रे ( १।४।७।१० ) गते वाऽष्टमे गते, तथा विलग्ने = जन्मलग्ने पापान्विते = पापग्रहयुक्ते हीनबले च जातको द्वात्रिंशदब्दे निधनं = मरणं प्रयाति ।

उदाहृते चक्रे ( मं० बु० ) अनेन प्रथमो योगः । ( चं०श०रा०मं० ) अनेन द्वितीयो योगो विचारणीयः ॥ ६७ ॥

अष्टमेश केन्द्रमें हो और लग्नेश बलसे रहित हो तो जातक ३० वर्ष की आयुवाला हो और ३२ वें वर्ष में मृत्यु पावे ॥ ६६ ॥

यदि क्षीण चन्द्रमा पापग्रहसे युक्त हो, अष्टमेश केन्द्रमें वा अष्टममें हो, लग्नमें पापग्रह हो और लग्न निर्बल हो तो वह बालक ३२ वें वर्षमें मरे ॥ ६७ ॥

अथ अल्पायुर्योगाः ।

षष्ठाष्टमे व्यये पापे लग्नेशे दुर्बले सति ॥
अल्पायुरनपत्यो वा शुभदृग्योगवर्जिते ॥ ६८ ॥
क्रूरषष्ठ्यंशके वाऽपि रन्ध्रेशे भानुजेऽपि वा ॥
पापान्विते पापखेटे चाल्पमायुर्विनिर्दिशेत् ॥ ६९ ॥
व्ययार्थौ पापसंयुक्तौ शुभदृष्टिविवर्जितौ ॥
क्रूरषष्ठ्यंशसंयुक्तौ वाऽल्पमायुर्वि निर्दिशेत् ॥ ७० ॥

इति द्वात्रिंशद्वत्सरान्तर्भूतबालारिष्टयोगारिष्टस्वल्पायुर्भेदाः समाप्ताः ॥

अथाधुनाऽल्पायुर्योगाः उच्यन्ते । लग्नात् षष्टेऽष्टमे व्यये वा ( ६।८।१२ ) पापे विद्यमाने लग्नेशे च दुर्बले = बलहीने तथा शुभग्रहाणां दृष्ट्या योगेन च रहिते जातोऽल्पायुर्वाऽनपत्यः = सन्तानहीनो भवति । अपि वा योगान्तरमुच्यते । रन्ध्रेशेऽष्टमेशेऽपि वा भानुजे = शनैश्चरे क्रूरषष्ठ्यंशे ( प्रथमाध्याये षष्ठ्यंशचक्रं विलोक्यम् ) विद्यमाने पापखेटे च ( रन्ध्रेशे ) पापान्विते जातस्याल्पमायुर्विनिर्दिशेदिति । अथवा लग्नात् व्ययार्थौ = द्वादशद्वितीयौ, पापग्रहेण संयुक्तौ, शुभग्रहाणां दृष्ट्या रहितौ, तथा क्रूरषष्ठ्यंशगतौ च भवेतां तदा जातस्याल्पमायुर्विनिर्दिशेदिति ॥ ६८-७० ॥

अस्मिन् बालारिष्टप्रकरणे द्वात्रिंशद्वर्षान्तर्गतानां बालारिष्टयोगारिष्टाल्पायुषां भेदाः प्रवर्णिताः

अत्रोदाहरणे ( सू० श० रा० म० ) अनेन प्रथमो योगः । द्वितीययोगे ( म० बु० श० ) अस्मिन् मं = ३।१।२०, श = ०।०।२५। तृतीययोगे ( सू० रा० ) द्वितीयभावे सू = ११।४।१० द्वादशभावे रा = ११।५।५०। इति प्रकल्प्य विवेचनीयम् । अत्र यान्युदाहरणानि दर्शितानि तानि कल्पनामात्राण्येव, केवलं बालबोधार्थानीति ।




पापग्रह छठे, आठवें और बारहवें हों, लग्नेश बलरहित हो, शुभग्रहसे दृष्ट-युत न हो तो वह बालक अल्पायु या अनपत्य ( सन्तानरहित ) होता है ॥ ६८ ॥

अष्टमेश या शनि क्रूरषष्ठ्यंशकमें हों पाप पापग्रह युक्त हों तो अल्पायु जाने ॥ ६९ ॥

पापग्रहसे युक्त द्वादश द्वितीयभवनमें हों और शुभग्रहकी दृष्टिसे हीन हों क्रूरषष्ठ्यंशकमें हों तो अल्पायु जाने ॥ ७० ॥

अथारिष्टभङ्गाः ।

अथाधुना पूर्वोक्तेष्वरिष्टयोगेषु सत्स्वपि कैश्चिद्ग्रहयोगैररिष्टानां परिहारो भवति, अतस्तेऽरिष्टभङ्गयोगाः समुच्यन्ते—

अत्यन्तसत्त्वे यदि लग्ननाथे सौम्यान्विते तादृशदृष्टियोगे ॥
केन्द्रस्थिते पापदृशा विहीने सद्भाग्ययुग् जीवति दीर्घमायुः ॥ ७१ ॥

लग्ननाथे=जन्मलग्नेशे, अत्यन्तसत्वे = पूर्णबलयुक्ते ( स्ववर्गगतो ग्रहो भवति पूर्णबलः ), सौम्यान्विते = शुभग्रहयुक्ते, तादृशानामर्थाच्छुभग्रहाणां दृष्टियोगे ( शुभग्रहदृष्ट इत्यर्थः ), केन्द्रस्थिते ( १।४।१०।७ भावगते ), पापग्रहाणां, दृशा = दृष्ट्या, विहीने च जातोऽरिष्टयोगे सत्यपि, सद्भाग्ययुगुत्तमसुखभोगादिसहितो दीर्घमायुश्चिरकालं जीवति । उक्तमपि—

"लग्नाधिपोऽतिबलवानशुभैरदृष्टः केन्द्रस्थितैः शुभखगैरवलोक्यमानः ।
मृत्युं विधूय विदधाति स दीर्घमायुः सार्द्धं गुणैर्बहुभिरूर्जितया च लक्ष्म्या ॥"

इति, स्वल्पजातके ॥ ७१ ॥




अत्रोदाहरणे २२ श्लोकोक्तयोगेन (र० मं० श०) सद्यो मरणम् । पश्चादनेनोक्त-(७१) श्लोकयोगेनारिष्टभङ्गो जात इति चिन्त्यम् ।

यदि लग्नेश अत्यन्त बलवान् हो, शुभग्रहसे युक्त या दृष्ट हो, केन्द्रमें स्थित हो, पापग्रहकी दृष्टिसे रहित हो तो वह जातक सदा भाग्य से युक्त होकर दीर्घायु होता है ७१

## अथ चन्द्रकृतोऽरिष्टभङ्गः ।

चन्द्रः सम्पूर्णगात्रस्तु सौम्यक्षेत्रांशगोऽपि वा ॥
सर्वारिष्टनिहन्ता स्याद् विशेषाच्छुक्रवीक्षितः ॥ ७२ ॥

सम्पूर्णगात्रः=पूर्णबिम्बश्चन्द्रो वा सौम्यक्षेत्रांशगोऽपि=शुभग्रहराशौ शुभग्रहनवांशेऽपि गतः ( अत्र अपिशब्देन क्षीणोऽपि चन्द्रः शुभराश्यंशगतो बोध्यः ) सर्वेषामरिष्टानां निहन्ता = नाशको भवति । तत्रापि शुक्रसन्दृष्टश्चन्द्रो विशेषात् सर्वारिष्टान्नाशयतीति । उक्तं च वराहेण—

"चन्द्रः सम्पूर्णतनुः सौम्यर्क्षगतः स्थितः शुभस्यान्तः ।
प्रकरोत्यरिष्टभङ्गं विशेषतः शुक्रसन्दृष्टः ॥" इति ॥ ७२ ॥

**पूर्ण चन्द्रमा शुभगृहमें वा शुभांशमें हो तो सम्पूर्ण अरिष्टोंका नाश करता है, यदि उसको शुक्र देखता हो तो और विशेषारिष्टनाशक होता है ॥ ७२ ॥**

## अथ शुभग्रहकृतोऽरिष्टभङ्गः ।

जीवभार्गवसौम्यानामेकः केन्द्रगतो बली ॥
पापकृद्योगहीनश्चेत्सद्योऽरिष्टस्य भङ्गकृद् ॥ ७३ ॥

जीवभार्गवसौम्यानामेकः=बृहस्पति-शुक्र-बुधेति त्रयाणां कश्चिदेको बली=स्ववर्गादिगतः सन् केन्द्रे=लग्नात् १।४।७।१० भावानामन्यतमे गतो भवति तथाभूतश्चेत्पापग्रहाणां दृष्ट्या योगेन च हीनो भवति तदा सद्यः = शीघ्रमेवारिष्टस्य भङ्गकृद् भवतीति । वराहेणाप्युक्तं स्वल्पजातके—

"बुधभार्गवजीवानामेकतमः केन्द्रमागतो बलवान् ।
यद्यक्रूरसहायः सद्योऽरिष्टस्य भङ्गाय ॥" इति ॥ ७३ ॥

**बृहस्पति, शुक्र, और बुध इनमें एक भी बली होकर केन्द्रमें हो, उसे पापग्रहसे योग न हो तो तुरन्त अरिष्टका संहार करता है ॥ ७३ ॥**

## अथ चन्द्रकृतोऽरिष्टभङ्गः ।

स्वोच्चस्थः स्वगृहेऽथवापि सुहृदां वर्गे च सौम्यस्य वा
सम्पूर्णः शुभवीक्षितः शशधरो वर्गे स्वकीयेऽपि वा ॥
शत्रूणामवलोकनादिरहितः पापैरयुक्तेक्षितोऽ-
रिष्टं हन्ति सुदुस्तरं दिनमणिः प्रालेयराशिं यथा ॥ ७४ ॥

शशधरश्चन्द्रः, स्वोच्चस्थः=वृषराशिगतः, स्वगृहे=कर्कटे वा गतोऽथवा सुहृदां = स्वमित्राणां वर्गे, वा सौम्यस्य=शुभग्रहस्य (बुधगुरुशुक्राणामन्यतमस्य) वर्गे स्थितो वा सम्पूर्णः= परिपूर्णबिम्बः शुभग्रहावलोकितो वा स्वकीये वर्गे च भवेत्तथाभूतश्चेच्छत्रूणामवलोकनेन योगेन च रहितस्तथा पापग्रहाणां योगेन दृष्टया च रहितो भवेत्तदा सुदुस्तरमतीव कठिनमरिष्टं हन्ति । अत्रोपमा—यथा दिनमणिः = सूर्यः सुदुस्तरमतिगहनं प्रालेयराशि = तुषारजालं स्वकिरणैर्विनाशयति तथैवोक्तपरिस्थितिगतश्चन्द्रमा अरिष्टसङ्कुलमपि हन्तीति ॥ ७४ ॥

जैसे सूर्य अपने किरणोंके द्वारा अत्यन्त निविड़ कुहरों ( पाला ) को नाश करता है उसी तरह चन्द्रमा अपने उच्च ( वृष ) में, या अपने गृह ( कर्क ) में, वा अपने मित्रोंके वर्गमें, अथवा शुभवर्गमें, या पूर्णबिम्ब हो तथा शुभदृष्ट हो, वा अपने वर्गमें हो, ऐसा होनेपर अपने शत्रुओंकी दृष्टि और योगसे सहित न हो, तो अति कठिन अरिष्टोंको नाश करता है ॥ ७४ ॥

पक्षे सिते भवति जन्म यदि क्षपायां कृष्णेऽथवाऽहनि शुभाशुभदृष्टमूर्तिः ॥
तं चन्द्रमा रिपुविनाशगतोऽपि नूनमापत्सु रक्षति पितेव शिशुं प्रजातम् ॥ ७५ ॥

अथ शशिन्यरिविनाशग इत्यादि ३५ श्लोके यच्चन्द्रारिष्टमुक्तं तस्य परिहारोऽधुनोच्यते । यदि सिते = शुक्ले पक्षे क्षपायां = रात्रौ जन्म भवति, तथा कृष्णपक्षे अहनि=दिने जन्म भवति, तथा क्रमेण शुभैरशुभैश्चावलोकितश्च चन्द्रो भवेत्तदा रिपुविनाशगतोऽपि=षष्ठाष्टमभावगतोऽपि ( चन्द्रः ) प्रजातं शिशुमापत्सु नूनं = निश्चितमेव रक्षति । यथा पिताऽऽत्मजमापत्सु यत्नेन रक्षति तथैवोक्तलक्षणलक्षितश्चन्द्रः षष्ठाष्टमगतोऽपि जायमानं शिशुमापत्स्वरिष्टेषु रक्षति, न मारयतीति भावः । तथा च—

वलक्षपक्षे यदि जन्म रात्रौ कृष्णे दिवाऽष्टारिगतोऽपि चन्द्रः ।
क्रमेण दृष्टः शुभपापखेटैः पितेव बालं परिपालयेत्सः ॥ इत्युक्तं जातकाभरणे ॥ ७५ ॥

शुक्लपक्षमें रात्रिमें जन्म हो और कृष्णपक्षमें दिनमें जन्म हो तो शुभाशुभदृष्ट मूर्ति चन्द्रमा षष्ठ या अष्टम स्थानमें प्राप्त होनेपर भी निश्चय जातककी रक्षा जिस प्रकार पिता करता है उस प्रकार रक्षा करता है ॥ ७५ ॥

## अथ गुरुकृतोऽरिष्टभङ्गः ।

केन्द्रोपगोऽतिबलवान् स्फुरदंशुमाली स्वर्लोकराजसचिवः शमयेदवश्यम् ।
एको बहूनि दुरितानि सुदुस्तराणि भक्त्या प्रयुक्त इव शूलधरे प्रणामः ॥७६॥

अतिबलवान् = वीर्योत्कटः, स्फुरदंशुमाली=देदीप्यमानकिरणवान् स्वर्लोकराजसचिवः= इन्द्रस्य मन्त्री (बृहस्पतिः), केन्द्रोपगः=१।४।७।१० भावानामन्यतमगतो यदि भवेत्तदा एक एवासौ गुरुः सुदुस्तराण्यतिकठिनानि बहूनि=अनेकानि दुरितानि=पापानि (अरिष्टानि) अवश्यमेव शमयेन्नाशयेत्किमुतान्येपि शुभग्रहाः केन्द्रगताश्चेद्भवेयुरिति । यथा किल शूलधरे= महादेवे भक्त्या प्रयुक्तः=विनम्रभावेन पुरस्कृत एकोऽपि प्रणामः सुदुस्तराणि बहूनि=विविधजन्मकर्मार्जितानि, दुरितानि=कल्मषाणि, नाशयति तथैवैकोऽपि केन्द्रगतः पूर्णबलो गुरुर्जातकस्य विविधारिष्टानि नाशयतीति । उक्तमपि—

'लक्षान्दोषान् हन्ति देवेन्द्रमन्त्री केन्द्रे प्राप्तः' इति ॥ ७६ ॥

पूर्ण-बलवान् और निर्मलबिम्बवाला बृहस्पति यदि केन्द्र ( १।४।७।१० ) में हो तो वह अकेला भी अनेकों कठिन अरिष्टोंको अवश्य ही नाश करता है। जैसे भक्तिपूर्वक श्रीशङ्कर जी के लिये एकबार भी किया हुआ प्रणाम कठिनसे कठिन पापोंको नाश करता है ॥७६॥

अथ लग्नेशकृतोऽरिष्टभङ्गः ।

लग्नेशो बलयुक्तश्चेत् त्रिकोणे वा चतुष्टये ॥
अरिष्टयोगजातोऽपि बालो जीवति निश्चयः ॥ ७७ ॥

सरलार्थः ॥ ७७ ॥

यदि लग्नेश बलवान् होकर त्रिकोण वा केन्द्रमें हो तो अरिष्टयोगमें भी उत्पन्न बालक निश्चय जीवे ॥ ७७ ॥

अथ ग्रहकृतोऽरिष्टभङ्गः ।

यस्य जन्मनि तुङ्गस्थाः स्वक्षेत्रस्थानमाश्रिताः ॥
चिरायुषं शिशुं जातं कुर्वन्त्यत्र न संशयः ॥ ७८ ॥

तुङ्गस्थाः=स्वस्वोच्चराशिगताः, वा स्वक्षेत्रस्थानमाश्रिताः=आत्मीयराशिगता ग्रहाः ( बहुवचनात् त्र्यादिकाः ) यस्य जन्मनि=जन्मकाले भवेयुस्तं जातं, शिशुं=बालकं, चिरायुषं = दीर्घजीविनं कुर्वन्त्यत्र न संशयः । अधिका उच्चस्थाः स्वराशिस्था वा अरिष्टनाशका भवन्तीति भावः ॥ ७८ ॥

जिसके जन्मसमयमें उच्चस्थ वा स्वगृहमें बहुत ग्रह हों तो वे ग्रह बच्चेको चिरायु करते हैं इसमें संशय नहीं है ॥ ७८ ॥

अथ राहुकृतोऽरिष्टभङ्गः ।

राहुस्त्रिषष्ठलाभे लग्नात्सौम्यैर्निरीक्षितः सद्यः ॥
नाशयति सर्वदुरितं मारुत इव तूलसङ्घातम् ॥ ७९ ॥
अजवृषकर्किविलग्ने रक्षति राहुर्निरन्तरं बालम् ॥
पृथिवीपतिः प्रसन्नः कृतापराधं यथा पुरुषम् ॥ ८० ॥

लग्नात् त्रिषष्ठलाभे ( ३।६।११ ) गतो राहुः सौम्यैः = शुभग्रहैश्चेन्निरीक्षितो भवति तदा सद्यः सर्वदुरितं = निखिलमरिष्टं नाशयति । तूलसङ्घातं = तूलराशिं मारुतः = वायुरिवेत्युपमा । अथ राहुः, अज-वृष-कर्किविलग्ने = मेष-वृष-कर्कटानामन्यतमे लग्ने विद्यमानश्चेत्तदा जातं बालं निरन्तरं सततं रक्षति । न तदाऽरिष्टदोषोऽभिभवति । तथोक्तं च—

'राहुस्तृतीये षष्ठे वा लाभे वा शुभसंयुतः ।
तद्दृष्टो वा तदाऽरिष्टं सर्वं शमयति ध्रुवम् ।', इति शौनकेन ।

एवम्—'सुतजन्मोद्भवान् दोषान् हन्ति ध्वान्तं यथा रविः ।
राहुस्त्रिषष्ठलाभस्थः शुभग्रहनिरीक्षितः ॥
वृषकर्काजगो वाऽपि सर्वारिष्टविनाशकृत् ।' इति कालप्रकाशिकायाम् ॥

अत्रोत्तरार्धेनोपमोदाह्रियते । प्रसन्नः=प्रफुल्लितान्तःकरणो हि पृथिवीपती राजा ( क्षमाशीलो भूत्वा ) कृतापराधं = जातदोषं पुरुषं यथा रक्षति, तथैवोक्तलक्षणलक्षितो राहुररिष्टादिदोषभ्यात्तं बालकमनुकूलो रक्षति । इति ॥ ७९-८० ॥

राहु लग्नसे तीसरे, छठे या ग्यारहवें हो उसको शुभग्रह देखते हों तो जिस प्रकार रूईकी ढेरको वायु नाश करता है उसी प्रकार राहु सब कष्टों का संहार करता है ॥ ७९ ॥

मेष वृष कर्क लग्नमें राहु निरन्तर बालक की रक्षा उस प्रकार करता है जिस प्रकार प्रसन्न राजा अपराधी पुरुषकी रक्षा करता है ॥ ८० ॥

अथ पुनश्चन्द्रकृतोऽरिष्टभङ्गः ।

निशाकरः शोभनवर्गयुक्तः शुभेक्षितः पूरितदीप्तिजालः ॥
जातस्य निःशेषमरिष्टमाशु निहन्ति यद्वद् गरलं गरुत्मान् ॥ ८१ ॥

सरलार्थः, ७२ श्लोकोक्तविषय एव पुनरुक्त इवाभाति ॥ ८१ ॥

**पूर्णचन्द्रमा शुभवर्गमें प्राप्त हो उसको शुभग्रह देखते हों तो जातकके निःशेष अरिष्टका उस प्रकार नाश करता है जैसे जहरीले सर्पका गरुड नाश करता है ॥ ८१ ॥**

**अथ राशीशकृतोऽरिष्टभङ्गः ।**

चन्द्राधिष्ठितराशीशे लग्नस्थे शुभवीक्षिते ॥
भृगुणा वीक्षिते चन्द्रे स्वोच्चेऽरिष्टं हरेत्तदा ॥ ८२ ॥

चन्द्रो यस्मिन् राशावधिष्ठितो भवेत्तस्य राशेरीशे = स्वामिनि, लग्नस्थे = जन्मलग्नगते शुभग्रहेण वीक्षितेऽवलोकिते च, तथा चन्द्रे स्वोच्चे = वृषराशिगते तथाभुते भृगुणा = शुक्रेण वीक्षिते च जातस्यारिष्टं हरेन्नाशयेदिति ॥ ८२ ॥

**चन्द्रराशीश लग्नमें हो उसको शुभग्रह देखते हों और उच्चस्थ चन्द्रमा शुक्रसे देखा जाता हो तो अरिष्टको हरता है ॥ ८२ ॥**

**अथ लग्नेशकृतोऽरिष्टभङ्गः ।**

लग्नाधिपोऽतिबलवानशुभैरदृष्टः केन्द्रस्थितः शुभखगैरवलोक्यमानः ॥
मृत्युं विधूय विदधाति स दीर्घमायुः सार्धं गुणैर्बहुभिरूर्जितराजलक्ष्म्या ॥ ८३ ॥

इत्यरिष्टभङ्गः ।

विषयोऽयं ७१ श्लोके उक्तोऽपि पिष्टपेषणमिव पुनरुक्तः । अतिबलवान् = स्ववर्गादिगतो लग्नेशोऽशुभैः = पापग्रहैरदृष्टस्तथाभूतः केन्द्र—( १।४।७।१० ) स्थितैः शुभखगैः = शुभग्रहैरवलोक्यमानश्च जातस्य मृत्युं = प्रतिकूलग्रहजनितमरिष्टदोषं विधूय = विनाश्य, बहुभिर्गुणैरूर्जिता = वृद्धिं गता या राजलक्ष्मीस्तया सार्द्धं = सहितं दीर्घमायुश्चिरं जीवनं विदधाति । सत्यप्यरिष्टे लग्नेश उक्तलक्षणसम्पन्नश्चेद्भवेत्तदा जातको भाग्यवान् दीर्घजीवी च भवेदिति । अत्राह दक्षः—

"बलपुष्टिर्विलग्नस्य पत्युः पापैरदर्शनम् । शुभकेन्द्रस्थितिस्तेषां दृष्टिश्चेति चतुष्टयम् ॥
प्रोक्तानेतानतोऽन्यांश्च सकलानपि नारद । बाधते सम्यगालोच्य तस्मान्मरणमादिश ॥" इति ॥

॥ इत्यरिष्टभङ्गव्याख्यानम् ॥

**लग्नेश अतिबलवान् होकर केन्द्रमें हो उसको पापग्रह न देखते हों और शुभग्रह देखते हों तो वह मृत्युको हटाकर बहुत गुण तेजस्विनी राजलक्ष्मीके साथ दीर्घायुको देता है ॥ ८३ ॥**

**अथ मध्यमायुःप्रदता जीवस्य ।**

बलहीने विलग्नेशे जीवे केन्द्रत्रिकोणगे ॥
षष्ठाष्टमव्यये पापे मध्यमायुरुदाहृतम् ॥ ८४ ॥

द्वात्रिंशद्वत्सरादुपरि सप्ततिपर्यन्तं मध्यमायुर्योगः ।

अथाधुना यस्मिन् योगे जातो नरो मध्यायुर्भवति तस्य निरूपणपूर्वकं मध्यायुःप्रमाणमुच्यते । विलग्नेशे=जन्मलग्नपतौ बलहीने ( अस्तं वा नीचं वा शत्रुगृहं गते ) जीवे = गुरौ केन्द्रत्रिकोणगे =( १।४।७।१०।५।९ भावानामन्यतमगते ) तथा पापग्रहे षष्ठाष्टमव्यये ( ६।८।१२ ) गते जातस्य मध्यमायुर्द्वात्रिंशत्सप्ततिवर्षमध्यवत्युदाहृतमि-



ति । तत्र मध्यमायुषः प्रमाणमुच्यते-द्वात्रिंशद्वत्सरा-( ३२ ) दुपरि सप्तति-( ७० ) वर्षपर्यन्तं मध्यमायुरिति ।

अथात्र प्रसङ्गात् मध्यायुषः केचन भेदा ग्रन्थान्तरसङ्गृहीता विलिख्यन्ते ।

चतुरस्रगताः पापा लग्नात्कुर्वन्ति मध्यमायुष्यम् ।
चन्द्रात्तथैव दिवसैः सौम्यैरनवीक्षिता न शुभयुक्ताः ॥

सौम्यैः पापांशकार्कस्थैः पापैः केन्द्रगतैस्तथा । मध्यमायुरयं योगः सौम्यैः केन्द्रविवर्जितैः ॥
सुतदशमे सौम्यैः स्यान्निधने रव्यन्विते व्यये चन्द्रे । गुरुशुक्रावेकगतौ जातस्तत्रैव मध्यायुः॥

पापग्रहे रन्ध्रपतौ सचन्द्रे केन्द्रस्थिते वा यदि वा त्रिकोणे ।
निरीक्षिते पापखगैर्नभस्थैर्जातस्त्रयस्त्रिंशदुपैति वर्षम् ॥
चन्द्रे कुजर्क्षे तनुगे प्रदृष्टे क्रूरग्रहैः शोभनखेचरेन्द्रैः ।
केन्द्राद्बहिस्थैर्निधनं प्रयाति वर्षैस्त्रयस्त्रिंशसमानकैस्तु ॥
लग्ने शनौ रात्रिकरेण युक्ते भौमे घटस्थे सुरसङ्ख्य ( ३३ ) वर्षैः ॥

गुरुशुक्रौ च केन्द्रस्थौ लग्नेशे पापसंयुते । आपोक्लिमस्थे सन्ध्यायां जातस्यायू रवित्रयम्(३६)
पापमध्यगते सूर्ये लग्नस्थे शत्रु वेश्मनि । जातश्च रोगपीडार्त्तः परमायू रवित्रयम् ( ३६ )

क्रूरान्तरे लग्नगते तदीशे युग्मस्थिते देवगुरौ रिपुस्थे ।
जातस्तु मृत्युं मुनिवह्नि ३७ वर्षैः प्रयाति शास्त्रज्ञपरैः प्रदिष्टम् ॥
अष्टमपतौ विलग्ने स्थिरराशौ जायते नरो यस्तु ।
चत्वारिंशद्वर्षैः ( ४० ) मरणं रन्ध्रे न शुभयुक्ते ॥
लग्नेश्वरे रन्ध्रगते सपापे केन्द्राद्बहिस्थे यदि सौम्यखेटे ।
चत्वारिंशद्वत्सरे ४० मृत्युमेति जातः पुत्रो नान्यथा शास्त्रमेतत् ॥
सभूमिजे रन्ध्रपतौ विलग्ने राशौ स्थिरे वा यदि वा चराजे ।
रिःफेऽष्टमे मृत्युमुपैति जातस्त्वब्दैर्द्विचत्वारि ४२ समानकैर्वा ॥
केन्द्रे गुरौ कर्मणि सूर्यपुत्रे लग्ने चरे वेदयुगैः ४४ समानैः ॥

अष्टमाधिपतौ केन्द्रे भौमे लग्नं समाश्रिते । अर्कार्कजौ त्रिषष्ठस्थौ जीवेद्रुद्रचतुष्टयम् (४४) ॥

स्वोच्चे विलग्ने क्षितिनन्दने च जीवेऽस्तगे कर्मणि सूर्यपुत्रे ।
जातो धनाढ्यो बहुशास्त्रवेत्ता वेदाब्धि ( ४० ) वर्षैर्निधनं प्रयाति ॥
जन्माधिपे रन्ध्रगते सपापे पापान्विते लग्नपतौ रिपुस्थे ।
बलान्विते न शुभदृग्विमुक्ते पञ्चाब्धि ( ४५ ) वर्षैर्निधनं प्रयाति ॥
मेषे शशाङ्के तनुगे सुपूर्णे सौम्येक्षिते भूपतिरत्र जातः ।
पापग्रहाणां च दशाविहीने नागाब्धि ( ४८ ) वर्षैर्निधनं प्रयाति ॥

वर्गोत्तमांशगे चन्द्रे लग्नस्थे पापवीक्षिते । सौम्यैर्बलविहीनैश्च द्वादशाब्दचतुष्टयम् (४८) ॥
लग्नेशे निधनांशस्थे लग्नांशे निधनेश्वरे । पापयुक्तो तदा जातः पञ्चाशद्वर्षजीवितः ॥

द्विशरीरोदयजाते मन्दे चन्द्रे व्ययेऽष्टमे वाऽपि ।
जातस्तत्र मनुष्यो जीवेद्वर्षाणि द्विपञ्चाशत् ( ५२ ) ॥
शनैश्चरो लग्नगतः सहायस्त्वन्येन चन्द्रो व्ययमेऽष्टमाः स्युः ।
वेदान्तविज्ञानसुशीलवृत्तो जातस्तु मृत्युं नयनेषु ५२ वर्षैः ॥
पापे गुरौ लग्नगतेऽष्टमस्थे भौमे सराहौ मुनिबाण ५७ वर्षे ।
रन्ध्रेश्वरे कामगते शशाङ्के पापान्विते पञ्मृतिगेऽष्टबाणे(५८) ॥

शन्यंशे लग्नेशे निधनेशसमन्विते निशानाथे ।
षष्ठेऽष्टमे व्यये वा जीवेज्जातोऽष्टपञ्चाशत् (५८) ॥

षष्ठाष्टमव्ययगतैर्ग्रहैः समस्तैर्नृपालयोगे च । अस्मिन् योगे जातः परमायुश्चाष्टपञ्चाशत् ॥५८॥

यस्य केन्द्रे पापयुक्ते लग्ने क्रूरविवर्जिते । षष्टिवर्षात् परं नास्ति पापैः पञ्चमसंस्थितैः ॥

लग्नेशे व्ययसंस्थे च क्षीणे पापयुतेऽपि वा । षष्टिवर्षात्परं नास्ति न लग्ने च बृहस्पतिः ॥

लग्नाधीशान्मृत्युषष्ठव्ययस्थाः पापाः सन्तो नैधनं वर्ज्यसंस्थाः ।
अस्मिन् योगे जायते यो मनुष्यस्तस्यायुः स्यात् षष्टिवर्षं ६० प्रदिष्टम् ॥

सौरे विलग्ने, हिबुके शशाङ्के, कुजे कलत्रे, गगने दिनेशे ।
कवीज्यसौम्येष्विह तैर्युतेषु नरेश्वरो जीवति वर्षषष्ट्या ॥

लग्नाधिमाने विबुधारिपूज्ये बुधेज्यचन्द्रैः परिपश्यमाने ।
जातं नरं भूमिपतिं धनाढ्यं करोति षष्ट्या सुतमेन्द्रपूज्ये ॥

सिते विलग्ने बुधभास्करात्मजौ चतुष्टयस्थाः परमोच्चखेचराः ।
तृतीयलाभर्क्षगतास्तु योगे महीपतिः स्यान्निधनं च षष्ट्या ॥

सरन्ध्रगे देवगुरौ विलग्ने कुम्भे सपापे यदि केन्द्रराशौ ।
सर्वज्ञानां पुण्यवान् शास्त्रवेत्ता जातस्तु षष्ट्या ६० निधनं प्रयाति ॥

केन्द्रे सपापे तनुपे व्ययस्थे लग्नेश्वरे रन्ध्रगते हि वह्नौ ।
लोकान्तरं प्रापयति प्रजातं कुशीलवृत्तं कुलपांसनं तम् ॥

होराजन्माधिपती केन्द्रगतौ मृत्युनाथसंयुक्तौ ।
लग्नचतुष्टयहीने देवगुरौ पञ्चषष्टि ६५ वर्षान्तम् ॥

चन्द्रे विलग्ने स्वगृहे प्रयाते नीचे शनौ भास्करे लग्ने च ।
अस्मिन् योगे मानुषो ज्ञातिमुख्यो जीवेत् षष्टिः पञ्चभिः सम्प्रयुक्ता (६५) ॥

होराजन्माधिनाथौ निधनमुपगतौ मृत्युनाथे च केन्द्रे
योगे जातो नरोऽस्मिन् जनयति न परं कीर्त्तिवित्तान्वितं च ।
षष्ट्यां षड्भिर्युतायां (६६) निधनमभिहितं नन्दकोक्ते तदिध्नम्
वर्षे त्रिंशेऽथवा स्यात्स्वखिलमिति खगैर्जायते पार्थिवेन्द्रः ॥

जीवे विलग्ने बुधसूर्ययुक्ते मीने शनौ द्वादशे शीतरश्मौ ।
जातो योगे चार्थवान् मृत्युभाक् च जीवेत् षष्ट्या षट्सहायो (६६) मनुष्यः ॥

नक्षत्रनाथसहितः सविता नभस्थः सौरिर्विलग्नसहितो हिबुके सुरेज्यः ।
अस्मिन् योगे जायमानो मनुष्यः क्षोणीपतिर्नैधनमष्टषष्ट्या (६८) ॥

अर्ककुजमन्दयुक्ते बलवर्जिते देवराट्पूज्ये ।
चन्द्रो व्यये सुते वा सप्ततिवर्षाणि (७०) जीवति प्रायः ॥

नीचे मन्दे केन्द्रगे वा त्रिकोणे सौम्ये केन्द्रे भास्करे वा ससौम्ये ।
योगे जातः पण्डितो धर्मशीलो ज्ञानी प्राज्ञः सप्ततेर्वत्सराणाम् ॥

प्रबले केन्द्रगे सौम्ये निधने सौम्यवर्जिते । लग्नाधिपेन दृष्टश्चेत्पापैर्जीवति सप्ततिम् (७०) ॥

पञ्चमस्थे धरासूनौ नीचे मन्देऽस्तगे रवौ ।
अस्मिन् जातो मनुष्यस्तु सप्तत्यां ७० निधनं व्रजेत् । इति ॥ ८४ ॥

**लग्नेश बलरहित हो और बृहस्पति केन्द्र (१।४।७।१०) त्रिकोण (५।९) में हो, और छठें आठवें बारहवें पापग्रह हों तो मध्यमायु होती है ॥ ८४ ॥**

बत्तीस वर्षके बाद ७० वर्ष पर्यन्त मध्यमायुका योग होता है।

**अथ पूर्णायुःप्रदा योगाः।**

चतुष्टये शुभैर्युक्ते लग्नेशे शुभसंयुते ॥
गुरुणा दृष्टिसंयोगे पूर्णमायुर्विनिर्दिशेत् ॥ ८५ ॥
केन्द्रान्विते विलग्नेशे गुरुशुक्रसमन्विते ॥
ताभ्यां निरीक्षिते वाऽपि पूर्णमायुर्विनिर्दिशेत् ॥ ८६ ॥
उच्चान्वितैस्त्रिभिः खेटैर्लग्नरन्ध्रेशसंयुतैः ॥
रन्ध्रे पापविहीने च दीर्घमायुर्विनिर्दिशेत् ॥ ८७ ॥
रन्ध्रेस्थितैस्त्रिभिः खेटैः स्वोच्चमित्रस्ववर्गगैः ॥
लग्नेशे बलसंयुक्ते दीर्घमायुर्विनिर्दिशेत् ॥ ८८ ॥
स्वोच्चस्थितेन केनापि खेचरेण समन्वितः ॥
शनिर्वा रन्ध्रनाथो वा दीर्घमायुर्विनिर्दिशेत् ॥ ८९ ॥
त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ॥
लग्नेशो बलसंयुक्तः पूर्णमायुर्विनिर्दिशेत् ॥ ९० ॥
षट्सप्तरन्ध्रभावेषु शुभेषु सहितेषु च ॥
त्रिषडायेषु पापेषु दीर्घमायुर्विनिर्दिशेत् ॥ ९१ ॥
रिःफशत्रुगताः पापा लग्नेशो यदि केन्द्रगः ॥
रन्ध्रस्थानगता पापाः कर्मेशः स्वोच्चराशिगः ॥
योगद्वयेऽपि दीर्घायुरुपैति बहुसम्मतम् ॥ ९२ ॥
रन्ध्रेशस्थगृहाधीशो यस्मिन् राशौ व्यवस्थितः ॥
तदीशो लग्ननाथश्च केन्द्रगो यदि तद्दशम् ॥ ९३ ॥
द्विस्वभावं गते लग्ने तदीशे केन्द्रगेऽपि वा ॥
स्वोच्चमूलत्रिकोणे वा चिरं जीवति भाग्यवान् ॥ ९४ ॥
द्विस्वभावं गते लग्ने लग्नेशात् केन्द्रगौ यदि ॥
द्वौ पापौ यस्य जनने तस्यायुर्दीर्घमादिशेत् ॥ ९५ ॥
चरांशकस्था रविमन्दभौमाः स्थिरांशकस्थौ गुरुदानवेज्यौ ॥
शेषाश्च युग्मांशगता यदि स्युस्तदा समुद्भूतनरः शतायुः ॥ ९६ ॥

अथाधुना येषु योगेषु समुद्भवा मनुजाः पूर्णमायुष्यं भजन्ति ते योगाः समुच्यन्ते। तत्र सरलार्था अपि श्लोका बालबोधार्थं व्याख्यायन्ते। चतुष्टये = केन्द्रे (१।४।७।१०) शुभैः = शुभग्रहैर्युक्तेऽर्थाच्छुभग्रहाः केन्द्रवर्त्तिनो भवेयुः, लग्नेशे शुभग्रहाणामन्यतमेन संयुक्ते, गुरुणा दृष्टिसंयोगे = बृहस्पतिनाऽवलोकिते लग्नेशे जातस्य पूर्णमायुः (सप्तत्यूर्ध्वं शतान्तं) विनिर्दिशेत्(१) ॥ ८५ ॥

विलग्नेशे = जन्मलग्नपतौ केन्द्रान्विते (१।४।७।१० भावानामन्यतमगते) गुरुणा शुक्रेण च समन्विते वा ताभ्यां = गुरुशुक्राभ्यां केन्द्रगते लग्नेशे निरीक्षितेऽपि जातस्य पूर्णमायुः विनिर्दिशेदिति(२) ॥ ८६ ॥

त्रिभिः शुभैः पापैर्वा खेटैः = ग्रहैः उच्चान्वितैः = स्वस्वोच्चराशिगतैस्तथाभूतैर्लग्नेशान, रन्ध्रेशेनाष्टमभावपतिना च संयुतैस्तथा रन्ध्रेऽष्टमे भावे पापविहीने = पापग्रहरहितेऽस्मिन् योगे जातस्य दीर्घमायुः विनिर्दिशेदिति(३) ॥ ८७ ॥

त्रिभिः खेटैः ( पापैः शुभैर्वा ) रन्ध्रस्थितैरष्टमभावगतैः, वा स्वोच्चराशिगतैर्वा स्वमित्राणां वर्गगतैर्वा स्ववर्गगतैश्च तथा लग्नेशे = जन्मलग्नाधिपतौ बलसंयुक्ते ( स्ववर्गादिगते ) जातस्य दीर्घमायुर्विनिर्दिशेदिति(४) ॥ ८८ ॥

यस्य जन्मकाले यत्र तत्र गतः शनिर्वा रन्ध्रनाथोऽष्टमेशः स्वोच्चस्थितेनात्मोच्चराशिगतेन केनापि खेचरेण=ग्रहेण समन्वितो भवति तस्य जातस्य दीर्घमायुर्विनिर्दिशेदिति(५) ॥

यस्य जन्मकाले पापाः ( रविभौमशनिसपापबुधक्षीणेन्दुराहुकेतवः ) त्रिषडाय-( ३।६।११ ) गताः, शुभाः ( बुधगुरुशुक्रशुक्लचन्द्राः ) केन्द्रत्रिकोण—(१।४।७।१०।५।९) गताः स्युस्तथा लग्नेशो बलसंयुक्तो भवेत्तस्य जातस्य पूर्णमायुर्विनिर्दिशेदिति(६) ॥ ९० ॥

जन्मकाले षट्सप्तरन्ध्रभाव—( ६।७।८ ) गताः शुभग्रहा भवेयुः, पापग्रहाश्च त्रिषडाय-( ३।६।११ ) भावगताः स्युस्तदा जातस्य दीर्घमायुर्विनिर्दिशेदिति(७) ॥ ९१ ॥

यदि जन्मसमये पापग्रहा रिःफशत्रुगताः = द्वादशे षष्ठे च स्थिताः स्युः, लग्नेशश्च केन्द्र-( १।४।७।१० ) गतो भवेत् (८) एवं पापग्रहा रन्ध्रस्थानेऽष्टमे भावे गताः स्युः, कर्मेशः = दशमभावपतिः स्वकीयोच्चराशिगतो भवेत् (९) तदा अस्मिन् ( ८।९ ) योगद्वयेऽपि जातो दीर्घमायुरुपैति, तद्बहूनां सम्मतमस्तीति ॥ ९२ ॥




जन्मकाले रन्ध्रेशस्थगृहाधीशः=रन्ध्रेशोऽष्टमभावपतिः स यत्र राशौ स्थितो भवेत्तद्गृहस्याधिपतिर्यस्मिन् राशौ व्यवस्थितो भवेत् तद्राशीशो लग्ननाथः=जन्मलग्नेशश्च यदि केन्द्रगतौ भवेतां तदा तादृशं=पूर्वं यथोक्तमर्थाद्दीर्घायुर्विनिर्दिशेदिति। यथाऽत्रोदाहरणे रन्ध्रेशो गुरुः कर्मस्थस्तथा कर्कराशिपतिश्चन्द्रः कन्यायां व्यवस्थितः कन्यापतिः बुधो लग्नेशः शुक्रश्च केन्द्रगतावतोऽत्र दीर्घायुर्योग इति वाच्यम्(१०)॥

अथ यस्य जन्मलग्ने द्विस्वभावं = मिथुनकन्याधनुर्मीनानामन्यतमं गते तदीशे = लग्नेशे केन्द्र-( १।४।७।१० ) गे, अपि वा ( अपि वेति पक्षान्तरावधारणे ) स्वोच्चमूलत्रिकोणे स्वोचराशौ, वा स्वकीयमूलत्रिकोणराशौ स्थिते जन्म भवति, स जातो भाग्यवान् सन् चिरं = पूर्णमायुर्जीवतीति (११) ॥ ९४ ॥




यस्य जनने=जन्मकाले लग्ने द्विस्वभावं पूर्वोक्तं गते यदि द्वौ पापग्रहौ लग्नेशात्=लग्नेशो यस्मिन् राशौ भवेत्तस्मात् केन्द्रगौ भवेतां तदा तस्य जातस्य दीर्घमायुरादिशेदिति (१२) ॥ ९५ ॥

रविमन्दभौमाः=सूर्यशनिमङ्गलाश्चरांशकस्थाः=यत्र तत्र चर-( १।४।७।१० ) राशीनां नवांशके वर्तमानाः स्युः, गुरुदानवेज्यौ = बृहस्पतिशुक्रौ स्थिरांशकस्थौ = स्थिरराशीनां ( २।५।८।११ ) नवांशके गतौ भवेताम्, शेषाश्च = चन्द्रबुधराहुकेतवो यदि

युग्मांशगताः = द्विस्वभाव=( ३।६।९।१२ ) राशीनां नवांशगताः स्युस्तदाऽस्मिन् योगे समुद्भूतः = जातो नरः शतायुः = वर्षशतं जीवेदिति (१३) ॥ ९६ ॥

अथ पूर्वोक्तेषु ( १३ भेदेषु ) दीर्घायुर्योगेषु दीर्घायुषः प्रमाणमुच्यते सप्तत्युपरिशतान्तं पूर्णमायुः = सप्ततिवर्षा-(७०) दूर्ध्वं शतान्तं ( १०० वर्ष ) यावत् पूर्णायुः ( दीर्घायुः ) भवतीति ।

चतुष्टय ( १।४।७।१० ) भाव शुभग्रहसे युक्त हो लग्नेश शुभग्रहसे युक्त हो और गुरुसे देखा जाता हो तो पूर्ण आयुको देता है ॥ ८५ ॥

केन्द्रस्थ लग्नेश गुरु और शुक्रसे युक्त हो वा गुरु और शुक्र उसे देखते हों तो पूर्णायु को देता है ॥ ८६ ॥

तीन ग्रह उच्चराशिके हों लग्नेश और अष्टमेशसे युक्त हों, तथा अष्टम स्थान पापग्रहसे रहित हो तो पूर्णायुको देता है ॥ ८७ ॥

अष्टमभावमें तीनग्रह हों या अपनी उच्चराशिके मित्रस्थानके वा अपने वर्ग के हों और लग्नेश बलवान् हो तो दीर्घायुको देता है ॥ ८८ ॥

उच्चराशिमें स्थित कोई भी ग्रह हो उससे शनि वा अष्टमेश युक्त हो तो दीर्घ आयुको देता है ॥ ८९ ॥

पापग्रह तृतीय, एकादश, षष्ठ स्थानमें हों शुभग्रह केन्द्र-त्रिकोणमें हों और लग्नेश बली हों तो पूर्णायुको देते हैं ॥ ९० ॥

शुभग्रहसे युक्त षष्ठ, सप्तम और अष्टम भाव हों और तीसरे, ग्यारहवें, छठें पापग्रह हों तो दीर्घायु को करते हैं ॥ ९१ ॥

पापग्रह १२ वें ६ ठें हों और यदि लग्नेश केन्द्रमें बैठा हो, वा अष्टमस्थानमें पापग्रह हों और दशमेश अपनी उच्चराशिमें हो तो बहुत पंडितों का संमत है कि इन दोनों योगोंसे दीर्घायु होती है ॥ ९२ ॥

अष्टमेश जिस भावमें हो उसका स्वामी जिस राशिमें स्थित हो उस राशिका स्वामी और लग्नेश केन्द्रमें हों तो दीर्घायु होती है ॥ ९३ ॥

जिसका द्विस्वभाव लग्नमें जन्म हो, लग्नेश केन्द्रस्थ हो वा अपनी उच्च राशिका वा मूलत्रिकोणका हो तो वह चिरकाल तक जीवे और भाग्यशाली होवे ॥ ९४ ॥

जिसके जन्मसमयमें द्विस्वभाव लग्न हो और लग्नेशसे केन्द्रमें दो पापग्रह हों तो उसकी दीर्घायु होती है ॥ ९५ ॥

सूर्य, शनि और मंगल चरराशिके नवांशमें हों, बृहस्पति और शुक्र स्थिर राशिके नवांशमें हो, और शेष ( चं० बु० रा० के० ) ग्रह द्विस्वभाव राशिमें स्थित हों तो इस योगका उत्पन्न मनुष्य सौ वर्ष तक जीवित रहता है ॥ ९६ ॥

अथ पूर्णायुषः प्रमाणम् ।

सप्तत्युपरिशतान्तं पूर्णमायुः ।

सत्तर वर्षके बाद सौ वर्ष पर्यन्त पूर्णायु होती है ।

अथ योगविशेषात् युगान्तमायुः ।

मन्दांशकस्था रविजीवभौमा धर्मस्थितास्तन्नवभागसंस्थाः ।
बलान्विता लग्नगतो हिमांशुर्युगान्तमायुः श्रियमादधाति ॥ ९७ ॥

रविजीवभौमाः=सूर्यबृहस्पतिमङ्गलाः, मन्दस्य=शनैश्चरस्य (१०।११राश्योः) अंशके=नवांशे यत्र तत्र स्थिताः स्युः, वा त एव धर्मस्थिताः = नवमभावगतास्तन्नवभागसंस्थाः = तस्यैव नवमभावराशेर्नवांशे स्थिता एवं बलान्वितास्च भवेयुस्तथा बलान्वितो हिमांशुश्चन्द्रो लग्नगतो भवेत्तदा जातस्य युगान्तं जातयुगसमानमायुः, श्रियं=सम्पत्तिञ्चादधाति । यथोक्तं होराप्रकाशे—

मन्दांशकस्था रविभौमजीवा धर्माश्रिताः कर्मयुताः बलाढ्याः ।
राश्यावसाने हिमगौ विलग्ने युगान्तमायुः श्रियमादधाति ॥ इति ॥

सूर्य, गुरु, और भौम शनि के नवांशमें स्थित हों, या नवमभावमें वा उसके नवांशमें बलवान् हों और लग्नमें चन्द्रमा हो तो लक्ष्मीयुत युगान्त आयु होती है ॥ ९७ ॥

### अथ मुनित्वप्रदो ग्रहयोगः ।

एकांशभागौ गुरुसूर्यपुत्रौ धर्मस्थितौ वा यदि कर्मसंस्थौ ।
अर्कोदये सौम्यनिरीक्ष्यमाणौ मुनिर्भवेदत्र भवश्चिरायुः ॥ ९८ ॥




धर्मस्थितौ=नवमगतौ यदि वा कर्मसंस्थौ=दशमगतौ गुरुशनी एकांशभागौ=तुल्यनवांशगतौ, सौम्यैः=शुभग्रहैर्निरीक्ष्यमाणौ=दृष्टौ च भवेतां तथा अर्कोदये = सूर्यस्योदयेऽर्थाल्लग्नस्थः सूर्यो भवेत् तदाऽत्रास्मिन् योगे भवः=जातश्चिरायुर्दीर्घजीवी मुनिः = तपस्वी भवेदिति ॥ ९८ ॥

बृहस्पति और शनि एक ही अंशके होकर धर्म में (९) वा कर्म (१०) में स्थित हों सूर्योदयमें शुभग्रहसे देखे जाते हों तो इस योगमें उत्पन्न होनेवाला चिरायुमुनि ( तपस्वी ) होता है ॥ ९८ ॥

### अथ अमितमायुः ।

गुरुशशिसहिते कुलीरलग्ने शशितनये भृगुजे च केन्द्रयाते ।
भवरिपुसहजोपगैश्च शेषैरमितमिहायुरनुक्रमाद्विना स्यात् ॥ ९९ ॥




कर्कटो राशिर्लग्नं भवेत्तस्मिन् गुरुचन्द्रौ भवेतां, बुधः शुक्रश्च केन्द्रगतौ भवेतां, शेषाः (सूर्य-भौम-शनि-राहु-केतवः) पापाः भवरिपुसहजेषु (११।६।३) उपगताश्चेद्भवेयुस्तदेहास्मिन् योगे जातस्यानुक्रमाद्विना=गणितागतं विनैवामितमप्रमाणमायुः स्यादर्थादस्मिन् योगे जातस्यायुर्गणना न कार्या, तस्यासम्भवत्वादिति । उक्तं च सारावल्याम्—

"कर्किलग्ने गुरुः सेन्दुः केन्द्रगौ बुधभार्गवौ ।
शेषैस्त्रिषष्ठलाभस्थैरमितायुर्भवेन्नरः" ॥ इति ॥ ९९ ॥

कर्क लग्न हो उसमें बृहस्पति और चन्द्रमा हों, बुध और शुक्र केन्द्रमें बैठे हों, शेष ग्रह ( सू० मं० श० रा० के० ) ग्यारहवें छठे तीसरे स्थानमें हों तो अमित आयु होती है ॥ ९९ ॥

### अथ देवसादृश्यप्रदा ग्रहस्थितिः ।

त्रिकोणे पापनिर्मुक्ते केन्द्रे सौम्यविवर्जिते ।
रन्ध्रे पापविहीने च जातस्त्वमरसन्निभः ॥ १०० ॥

शन्यादिभौमपर्यन्तं लग्नादौ खेचराः स्थिताः ।
वैशेषिकांशसंयुक्ता जातस्त्वमरसन्निभः ॥ १०१ ॥

पापग्रहाः त्रिकोणे ( ५।९ ) न भवेयुः, शुभग्रहाः केन्द्रे ( १।४।७।१० ) न भवेयुः, अष्टमेऽपि भावे पापग्रहरहिते जातोऽमरसन्निभः = देवतुल्यो भवति ॥ १०० ॥

शन्यादिभौमपर्यन्तं=शनिमारभ्य कुजावधिकाः खेचराः = ग्रहा लग्नादौ = लग्नादिभावे स्थितास्तथा सन्तो वैशेषिकांशसंयुक्ताः = दशवर्गे तत्कालविचारेण द्विभ्यादिस्ववर्गे वर्तमानाः (अ० १ श्लो० ४४-४७) चेद् भवेयुस्तदा जातोऽमरसन्निभः = देवतुल्यो भवेत् ॥१०१॥

त्रिकोणमें पापग्रह न हों और केन्द्रमें शुभग्रह न हों अष्टमभाव पापग्रहसे रहित हो ऐसे योगमें उत्पन्न जातक देवताके सदृश होता है ॥ १०० ॥

लग्नादि भावोंमें शनिसे लेकर मंगल पर्यन्त ग्रह स्थित होकर अपने २ वैशेषिकांशके हों तो जातक देवता के तुल्य होवे ॥ १०१ ॥

## अ असङ्ख्यायुःप्राप्तिः ।

मेषान्त्यलग्ने सगुरौ भृगौ वा निशाकरे गोगृहमध्यमांशे ।
सिंहासनांशे यदि वा धराजे जातस्त्वसङ्ख्यातमुपैति मन्त्रैः ॥ १०२ ॥

इदानीमसङ्ख्यायुर्योग उच्यते । मेषान्त्यलग्ने=मेषराशेरन्तिमो भागो लग्नं भवेत्तस्मिन् सगुरौ वा भृगौ=बृहस्पतिर्वा शुक्रो गतो भवति, निशाकरे=चन्द्रे, गोगृहमध्यमांशे=वृषराशेर्मध्यमे (५) नवांशे विद्यमाने, तथा धराजे=भौमे सिंहासनांशे = स्वकीयपञ्चवर्गे स्थिते जातस्तु मन्त्रैः=मन्त्रादीनामनुष्ठानैरसङ्ख्यातं=सङ्ख्यारहितमायुरुपैति । उक्तयोगे जातो नरो मान्त्रिको भवति तथा मन्त्रादीनां जपादिबलेनातिदीर्घंजीवित्वमाप्नोतीति भावः ॥ १०२ ॥

मेषका अन्त्यलग्न गुरु या शुक्रसे युत हो और चन्द्रमा वृषके मध्य नवांशमें हो मंगल अपने सिंहासनांशमें हो तो जातक मन्त्रबलसे असंख्यायु होवे ॥ १०२ ॥

## अथ मुनिसमत्वम् ।

देवलोकांशके मन्दे भौमे पारावतांशके ।
सिंहासने गुरौ लग्ने जातो मुनिसमो भवेत् ॥ १०३ ॥

इदानीं मुनित्वप्राप्तियोग उच्यते । यस्य जन्मकाले मन्दो देवलोकांशके = स्वसप्तवर्गे, भौमः पारावतांशके = स्वकीयषड्वर्गे, गुरुः सिंहासने=स्वकीयपञ्चवर्गे लग्ने च भवेत्स जातो मुनिसमो भवेत् ॥ १०३ ॥

शनि देवलोकांशमें हो मंगल पारावतांशमें हो और गुरु सिंहासनांशका लग्नमें हो तो जातक मुनिके सदृश होवे ॥ १०३ ॥

## अथ युगान्तमायुः ।

गोपुरांशे गुरौ केन्द्रे शुक्रे पारावतांशके ।
त्रिकोणे कर्कटे लग्ने युगान्तं स तु जीवति ॥ १०४ ॥

गुरौ केन्द्रे वर्तमाने गोपुरांशे = स्वकीयचतुर्वर्गे च प्राप्ते, शुक्रे त्रिकोणे (९।५) गते पारावतांशके स्वषड्वर्गे प्राप्ते, कर्कराशौ लग्ने च जातो नरो यः स तु युगान्तं यावज्जीवति ॥ १०४ ॥

गुरु गोपुरांशका होकर केन्द्रमें हो, शुक्र पारावतांशमें त्रिकोणमें हो, कर्क लग्न हो तो वह युगान्त पर्यन्त जीवित रहता है ॥ १०४ ॥

## अथ ब्रह्मपदप्राप्तिः ।

चापांशे कर्कटे लग्ने तस्मिन् देवेन्द्रपूजिते ।
त्रिचतुर्भिर्ग्रहैः केन्द्रे जातो ब्रह्मपदं व्रजेत् ॥ १०५ ॥
लग्ने सौम्ये भृगौ कामे कन्यायामुडुनायके ।
चापे मेषांशके लग्ने जातो याति परं पदम् ॥ १०६ ॥

यस्य जन्मकाले कर्कराशिर्लग्नं स्यात्तस्मिन्धनूराशेर्नवांशो भवेत्तथा तत्र बृहस्पतिः स्थितो भवेत्, त्रयो वा चत्वारो ग्रहाः केन्द्रे भवेयुः तदा स जातो ब्रह्मपदं = ब्रह्मसायुज्यं

व्रजेत्। अस्मिन् योगे जातो नरो ज्ञानी भवति, तथा ज्ञानाग्निदग्धाखिलपुण्यपापः सन् मोक्षभाग्भवति ॥ १०५ ॥

तथा च लग्ने गुरुर्भवेत्, सप्तमे भृगुः (शुक्रः) भवेत्, कन्यायां चन्द्रो भवेत्, धनूराशौ मेषनवांशके लग्नं भवेत्तदाऽस्मिन् योगे जातोऽपि परं पदं=ब्रह्मसायुज्यं याति ॥ १०६ ॥

कर्कलग्न धनुके अंश ( १६ अं० ४० क० के बाद २० अं० तक ) का हो उसपर गुरु हो, तीन या चार ग्रह केन्द्रमें हों तो जातक ब्रह्मपदको प्राप्त करे ॥ १०५ ॥

जिसके जन्म समयमें धनु राशिमें मेषका नवांश याने ८।३।२०ं लग्न हो उसमें बृहस्पति हो, ७ वें भावमें शुक्र हो और कन्या राशिमें चन्द्रमा हो वह जातक परम्पद याने मोक्ष प्राप्त करता है। (सु. शा. कार) ॥ १०६ ॥

( २ )

| | | |
|---|---|---|
| ६ / ५ | ल. २०ं बृ. ४ | ३ / २ |
| ७ शु. र. | मोक्षयोगः १ | १ चं. |
| ८ / ९ | १० मं. श. | ११ / १२ |



अथ आयुषः सप्तविधता।

बालारिष्टं योगसञ्जातमल्पं तेषां भङ्गान्मध्यमं दीर्घमायुः।
दिव्यं योगाभ्यासमन्त्रक्रियाद्यैरायुः सप्तैतानि सङ्कीर्तितानि ॥ १०७ ॥

इति श्रीनवग्रहकृपया वैद्यनाथरचिते जातकपारिजाते
बालारिष्टाध्यायः चतुर्थः ॥ ४ ॥

---

अथेदानीमायुषः सप्त भेदा निरूप्यन्ते। प्रथमं बालारिष्टं वर्षाष्टकं यावत्। द्वितीयं योगसञ्जातं विंशतिवर्षं यावत्। तृतीयमल्पमल्पायुरिति द्वात्रिंशद्यावत्। तेषां त्रयाणां भङ्गादतिक्रमणाच्चतुर्थं मध्यममायुः सप्ततिपर्यन्तम्। ततो दीर्घमायुः शतान्तं तत्पञ्चमम्। ततो दिव्यं देवतुल्यमायुस्तत्षष्ठम्। ततोऽप्यूर्ध्वं योगाभ्यासमन्त्रक्रियाद्यैर्जातमसङ्ख्यमायुस्तत्सप्तममिति सप्त भेदा भवन्त्यायुषः। तेषां पूर्वपूर्वस्य भङ्गाद्यथोत्तरं वर्द्धते। अथात्रायुषां प्रमाणभेदा ये प्रदर्शितास्ते सत्यपि ग्रहयोगे न भवन्ति सर्वेषामनाचारादिदुष्टक्रियानिरतानाम्। तथोक्तं चायुःप्रकरणे केशवेन—

"स्याद्धर्मिष्ठसुशीलपथ्यसुभुजां न स्यादिदं पापिनाम्" इति ॥ १०७ ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता। चतुर्थेऽरिष्टसञ्ज्ञेऽस्मिन्नध्याये पूर्णतां गता ॥४ ॥

( १ ) बालारिष्ट ८ वर्ष तक, (२) योगारिष्ट २० वर्ष तक, (३) अल्पायु ३२ वर्ष तक, इनके भङ्गसे (४) मध्यायु ७० वर्ष तक, (५) दीर्घायु १०० वर्ष तक, उसके बाद (६) देवायु उसके अनन्तर ( ७ ) योगाभ्यास, मन्त्रादिके अनुष्ठानादि द्वारा असङ्ख्यायु ये सात प्रकारके आयुके भेद कहे गये हैं। (सु. शा. कार) ॥ १०७ ॥

इति जातकपारिजाते चतुर्थाऽध्याये 'विमला' हिन्दीटीका समाप्ता ॥

# अथ आयुर्दायाध्यायः ॥ ९ ॥

अथाधुनाऽऽयुर्दायाध्यायो व्याख्यायते। तत्र पूर्वोक्तारिष्टयोगरहितानामेव जनिमतामायुर्दायविचारः कर्त्तव्यः। समुपस्थिते चायुर्विचारे प्राक्तनैः पराशराद्यैर्निर्दिष्टान्यायूंष्यत्रोच्यन्ते—

निसर्गपैंड्यांशकरश्मिचक्रनक्षत्रदायाष्टकवर्गजानि।
पराशराद्यैः कथितानि यानि संगृह्य तानि क्रमशः प्रवच्मि ॥ १ ॥

निसर्गेति। पराशराद्यैर्मुनिभिः कथितानि यानि निसर्ग-पिण्डां-शक-रश्मि-चक्र-नक्षत्र-दायाष्टकवर्गजानि अष्टावायूंषि तानि सङ्गृह्य क्रमशोऽहं प्रवच्मि ॥ १ ॥

पराशर आदि ने जिन निसर्गायु, पिण्डायु, लग्नायु, अंशकायु, रश्मिजायु, चक्रायु, नक्षत्रायु, अष्टवर्गजायु को कहा है उन आयुर्योंको संग्रह करके क्रमशः कहता हूं ॥ १ ॥

## अथ निसर्गायुषो वर्षसङ्ख्याः।

नखाः शशी द्वौ नवकं धृतिश्च कृतिः खबाणा रविपूर्वकाणाम्।
इमा निरुक्ताः क्रमशो ग्रहाणां नैसर्गिके ह्यायुषि वर्षसंख्याः ॥ २ ॥

अथ नैसर्गिके सूर्यादीनां नखाद्या वर्षसङ्ख्या बोद्धव्याः। सूर्यस्य = २० वर्षाणि। चन्द्रस्य = १ व०। मं०=२ व। बु० = ९। गु० = १८। शु० = २०। श० = ५०। उक्तञ्च सारावल्याम्—

"विंशतिरेकं द्वितयं नव धृतिरिह विंशतिश्च पञ्चाशत्।
वर्षाणामपि सङ्ख्याः सूर्यादीनां निसर्गभवाः" ॥ इति।

अत्रोक्तानि निसर्गायुर्वर्षाणि ग्रहेषूच्चगतेष्विति। तत्काले च स्थितिवशेन कानिचित् क्षीयन्ते, तेषां स्पष्टीकरणमग्रतो द्रष्टव्यमिति ॥ २ ॥

ग्रहोंकी निसर्ग आयु इस प्रकार है-२० वर्ष सूर्यकी, १ वर्ष चन्द्रमाकी, २ वर्ष मंगलकी, ९ वर्ष बुधकी, १८ वर्ष बृहस्पतिकी, २० वर्ष शुक्रकी और ५० वर्ष शनिकी आयु है ॥ २ ॥

## अथ पिण्डायुषो वर्षसंख्याः।

नवेन्दवो बाणयमाः शरद्मा दिवाकराः पञ्चभुवः कुपक्षाः।
नखाश्च भास्वत्प्रमुखग्रहाणां पिण्डायुषोऽब्दा निजतुङ्गगानाम् ॥ ३ ॥

इदानीं ग्रहाणां पिण्डायुर्वर्षाण्युच्यन्ते। निजतुङ्गगानां स्वकीयोच्चगतानां भास्वत्प्रमुखग्रहाणां=सूर्यादीनां नवेन्द्वादयः पिण्डायुषोऽब्दाः पठितास्ते चाङ्केन द्योत्यन्ते। सूर्यस्य= १९ वर्षाणि। चं०= २५ व०। मं०= १५ व०। बु०= १२ व०। बृ०= १५ व०। शु० २१ व०। श०= २० व०।

तथैव सारावल्याम्—

एकोनविंशतिर्भानोः शशिनः पञ्चविंशतिः। तिथयः क्षितिपुत्रस्य द्वादशैव बुधस्य तु ॥
गुरोः पञ्चदशाब्दानि शुक्रस्याप्येकविंशतिः। विंशती रविपुत्रस्य पिण्डायुः स्वोच्चसंस्थिते ॥

बृहज्जातकेऽपि—

"मययवनमणित्थशक्तिपूर्वैर्दिवसकरादिषु वत्सराः प्रदिष्टाः।
नवतिथिविषयाश्विभूतरुद्रैर्दशसहिता दशभिः स्वतुङ्गभेषु" ॥ इति।

अत्रोक्तानि वर्षाणि ग्रहाणां स्वस्वपरमायुःप्रमाणानि। एतानि किल वर्षाणि तुङ्गस्थानां ग्रहाणां वर्तन्ते। तत्कालस्थितौ स्पष्टीकरणमग्रेद्रष्टव्यम् ॥ ३ ॥

उच्च राशि स्थित सूर्यादि ग्रहोंकी पिण्डायु इस प्रकार है—सूर्यकी १९ वर्ष, चन्द्रमाकी

२५ वर्ष, मंगलकी १५ वर्ष, बुधकी १२ वर्ष, बृहस्पतिकी १५ वर्ष, शुक्रकी २१ वर्ष और शनिकी २० वर्ष आयु है ॥ ३ ॥

अथ पिण्डायुषः स्पष्टीकरणविधिः।

निजोच्चशुद्धः खचरो विशोध्यो भमण्डलात् षड्भवनोनकश्चेत्।
यथास्थितः षड्भवनाधिकश्चेल्लिप्तीकृतः सङ्गुणितो निजाब्दैः ॥ ४ ॥
तत्र खाभ्ररसचन्द्रलोचनैरुद्धृते सति यदाप्यते फलम्।
वर्षमासदिननाडिकादिकं तद्धि पिण्डभवमायुरुच्यते ॥ ५ ॥
स्वोच्चोनस्फुटखेचरं यदि रसादल्पं भचक्रोद्धृतम्
लिप्तीकृत्य निजायुरब्दगुणितं तच्चक्रलिप्ताहृतम्।
लब्धं वासरनायकादिखचरैर्दत्तायुरब्दादिकम्
नीचार्द्धक्रमशो वदन्ति मुनयः पैण्ड्ये च नैसर्गिके ॥ ६ ॥

अथाधुना आयुषः स्पष्टीकरणमुच्यतेऽर्थात्तत्काले ग्रहस्य कियन्मितमायुः स्यात्तदानयनं क्रियते। निजोच्चशुद्धः = आत्मीयोच्चेन रहितो ग्रहः षड्भवनोनकः=राशिषट्कादल्पश्चेद्ग्र-चेत्तदा भमण्डलात् = द्वादशराशेर्विशोध्यस्तथोच्चोनो ग्रहः षड्भवनाधिकश्चेत्तदा यथास्थि-तोऽविकृत एव स्थाप्यः। एतदुक्तं भवति। यस्य ग्रहस्यायुः साध्यते तस्माद् ग्रहादुच्चं विशोधयेत्। यदि ग्रहादुच्चमेवाधिकं भवेत्तदा ग्रहे द्वादश राशीन् संयोज्य तस्मादुच्चं विशोधयेत्। एवमुच्चोनो ग्रहो यदि षड्भादूनं भवेत्तदा तमुच्चोनं ग्रहं द्वादशराशिभ्यो विशोधयेत्। षड्भादधिके उच्चोने ग्रहे तं यथास्थितमेव संस्थापयेदिति। ततस्तथाभूतो ग्रहो लिप्तीकृतः = कलीकृतस्तथा निजाब्दैः = स्वायुःप्रमाणवर्षैः सङ्गुणितः कार्यः। तत्र = तस्मिन् गुणनफले खाभ्ररसचन्द्रलोचनैः २१६०० उद्धृते = भक्ते सति यत्फलं वर्षमास-दिननाडिकादिकमाप्यते = लभ्यते, तद्धि=तदेव पिण्डभवं = पिण्डाज्जायमानं स्पष्टायुरुच्यते मनीषिभिरिति। अत्र षष्ठश्लोकेऽप्ययमेव विषयः। भचक्रोद्धृतमित्यत्र भचक्रात् (१२) शोध्यमिति व्याख्येयम् ॥ ४–६ ॥

अत्रोपपत्तिरुच्यते—उच्चस्थाने विद्यमाने ग्रहे तस्य पठिताङ्कतुल्यं पूर्णमायुर्भवति। तत उच्चादुभयदिशि सममपचीयमानमायुर्नीचस्थानेऽर्द्धमवशिष्यते 'नीचेऽतोर्द्धं ह्रसति हि' इति वक्ष्यमाणवचनात्। अत एवाभीष्टस्थाने ग्रहोच्चयोरन्तरज्ञानार्थमुच्चेनोनो ग्रहः क्रियते। ततः षड्राशिमितेन ग्रहोच्चान्तरेणायुषोऽर्द्धमपचीयते तदेष्टेनान्तरेण किमित्यनुपातेन

$\frac{\frac{1}{2} \text{आ} \times \text{अं}}{6\text{रा}}$ लब्धं फलं पूर्णायुर्मानाद्विशोधितमिष्टस्थानीयमायुर्भवेदिति।

$\therefore$ इष्टस्थानीयमायुः=आ$-\frac{\text{आ} \times \text{अं}}{2 \times 6} = \frac{12 \times \text{आ} - \text{आ} \times \text{अं}}{12}$

$= \frac{\text{आ}\,(12 - \text{अं})}{12}$। अत उपपद्यते उच्चोनो ग्रहो यदि षड्भवनोनस्तदा भमण्डला-द्विशोध्यः इति (१)।

अथ यदि ग्रहोच्चान्तरं षड्भादधिकमर्थान्नीचादग्रे उच्चाभिमुखो ग्रहो भवेत्तदा युक्तिः—

नीचे ग्रहेऽर्द्धमितमायुस्ततो वर्धिष्यमाणमुच्चे पूर्णं भवति। नीचादुच्चं यावद्राशिषट्केऽर्द्धं वर्द्धते इति।

अतो मध्येऽनुपातः $\frac{\frac{1}{2} \text{आ} \times \text{अं}}{6}$, फलं नीचायुषि (आयुषोऽर्द्धे) युक्तमिष्टस्थानी-यमायुर्भवेदिति।

$\therefore$ इष्टस्यानीयमायुः$=\frac{1}{2}$आ$+\frac{\text{आ}\times\text{अं}}{2\times 6}=\frac{6\times\text{आ}+\text{आ}\times\text{अं}}{12}$

$=\frac{\text{आ}(6+\text{अं})}{12}$ । अत्र अं = नीचग्रहान्तरमतः ६ + अं = उच्चग्रहान्तरं जातम् ।

अत उपपद्यते नीचादग्रेऽर्थात् षड्राश्यधिके ग्रहोच्चान्तरे यथा स्थितः इति (२)।

अत्र (१), (२) स्वरूपयो राश्यात्मकयोः लिप्तीकृतयोः हरे $12\times30\times60=$ २१६००' । तेन सर्वमुपपन्नमित्यलं विस्तरेण ॥ ४-६ ॥

पिण्डायु तथा निसर्गायुका स्पष्टीकरण इस प्रकार है—स्पष्ट ग्रहमें उच्चको घटावे, वह उच्चोन ग्रह यदि ६ राशिसे कम हो तो उसे १२ राशिमें घटावे यदि ६ से अधिक हो तो यों ही रखे। उस ग्रह की कला बनाकर अपने निसर्ग या पिण्डायुके वर्ष से गुणा करे उस में २१६०० का भाग देकर जो वर्ष, मास, दिन और दण्ड लब्धि मिले वही पिण्डसे अथवा निसर्ग से उत्पन्न उस ग्रहकी स्पष्टायु होती है ॥ ४-६ ॥

जैसे—स्पष्ट बुध १।१४।२९।४९। बुधका उच्च ५।१५।०।०। स्पष्ट बुधमें उच्चके घटानेसे शेष= ७।२९।२९।४९। यह अन्तर ६ राशिसे अधिक है ( यदि ६ राशिसे कम होता तो उसे १२ में घटाता ) इसलिये उस अन्तरकी कला बनाई १४३६९।४९ । इसे बुधकी पिण्डायु १२ से गुणा किया तो १७२४३७।४८ हुआ। इसमें २१६०० का भाग देनेसे बुधकी आयु वर्षादि ७।११।२४।१ हुई। यह स्पष्ट पिण्डायु हुई। इसी तरह निसर्गायुका स्पष्टीकरण भी होता है। ( सु. शा. कार ) ॥ ४-६ ॥

## अथायुषो हरणं होरायाम् ।

नीचेऽतोऽर्द्धं ह्रसति हि ततश्चान्तरस्थेऽनुपातो
होरा त्वंशप्रतिममपरे राशितुल्यं वदन्ति ।
हित्वा वक्रं रिपुगृहगतैर्हीयते स्वत्रिभागः
सूर्योच्छिन्नद्युतिषु च दलं प्रोज्झ्य शुक्रार्कपुत्रौ ॥ ७ ॥
क्षोणीपुत्रं वर्जयित्वा रिपुस्थास्त्र्यंशं नीचस्थानगास्ते तदर्धम् ।
अस्तं याताः शर्व एवार्द्धहानिं कुर्युर्हित्वा शुक्रमार्तण्डपुत्रौ ॥ ८ ॥

अथाधुना पठितायुषः क्षयो ग्रहस्थितिवशेनोच्यते । नीचे वर्त्तमाने ग्रहे अतः = पठितपूर्णायुर्मानादर्द्धं ह्रसति = क्षीयते । तत उच्चनीचयोरन्तरस्थे ग्रहेऽनुपातः कार्यः । तद्यथा—उच्चनीचान्तरेण भगणार्द्धकलातुल्येन (१०८००') यदि पठितायुषोऽर्धमपचीयते तदेष्टग्रहोच्चान्तरेण किमिति लब्धं परमायुः प्रमाणाच्छोध्यमवशिष्टमिष्टग्रहस्य स्पष्टायुः ( पिण्डायुर्निसर्गायुर्वा ) भवेदिति ।

अथ लग्नायुः । होरा = लग्नं, तु अंशप्रतिमं=यत्र तत्र राशौ यावन्तो नवांशा लग्नेन भुक्ताः तावन्ति वर्षाणि तथाऽनुपातागतमासाद्यं च लग्नस्यायुर्ज्ञेयमिति । अत्रापरे केचिदाचार्या राशितुल्यं लग्नस्यायुर्वदन्ति । लग्नेन यावन्तो राशयो भुक्तास्तावन्त्येव वर्षाणीति । तथाऽऽह मणित्थः—

"लग्नराशिसमाश्चाब्दा मासाद्यमनुपाततः ।
लग्नायुर्द्दायमिच्छन्ति होराशास्त्रविशारदाः" इति ।

अथ सिद्धस्याप्यायुषो ह्रणम् । वक्रं = भौमग्रहं हित्वा रिपुगृहगतैः = शत्रुराशिस्थितैः ग्रहैः स्वत्रिभागः = सिद्धस्य निजायुषस्त्रिभागः ( $\frac{1}{3}$ ) हीयते । भौमः शत्रुगृहगतोऽपि नापहरतीति भावः । उक्तमपि—

"भूम्याः पुत्रं वर्जयित्वाऽरिभस्था हन्युः स्वात्स्वादायुषस्ते त्रिभागम्" इति बादरायणेन।

तथा शुक्रार्कपुत्रौ प्रोज्झ्य = शुक्रशनी वर्जयित्वा, सूर्योच्छिन्नद्युतिषु = सूर्येणोच्छिन्ना कर्त्तिता द्युतिर्येषां तेष्वर्थादस्तमितेषु ग्रहेषु दलमायुषोऽर्द्धं हीयते। अस्तङ्गतावपि शुक्रशनी स्वायुर्नापहरतोऽन्येषामस्तंगतानां तु सिद्धस्य स्वायुषोऽर्द्धं क्षीयते ॥ ७ ॥

अष्टमश्लोकेऽपि पूर्व (७) श्लोकार्थसादृश्यमवलोक्य पुनरुक्ततया न व्याख्यातमिति ॥८॥

उच्च राशिमें ग्रहोंकी जो पूर्णायु कही गई है उसकी आधी नीचमें प्राप्त होने पर नाश होती है याने जो ग्रह नीचमें रहते हैं उनकी आयु आधी होती है। जैसे सूर्यकी आयु रा ११०ं में २० वर्ष, तथा रा ६।१०ं में १० वर्ष। एवं सर्वत्र जानना चाहिये। उच्च और नीच के बीचमें-ग्रह हो तो अनुपातसे समझना। जैसे ६ राशिमें, याने १०८०० कलामें आधी आयु घटती है तो इस ग्रह और उच्चके अन्तरमें क्या? यहां दोनों ओर ग्रह तथा उच्चकी दूरी जानकर अनुपात करे। उससे जो फल मिले उसे पूर्णायुमें घटावे वह उस ग्रहकी स्पष्ट पिण्डायु या निसर्गायु होती है। मङ्गलको छोड़कर शत्रुगृहमें प्राप्त ग्रह अपने आयुका त्रिभाग ⅓ नाश करता है। मङ्गल शत्रुगृहमें रहनेपर भी पूर्णायु पाता है। शुक्र और शनि के बिना सभी ग्रह अस्त होनेपर अपनी आयुका आधा नाश करते हैं। शुक्र और शनि अस्त होनेपर भी पूर्णायु पाते हैं। (सु. शा. कार) ॥ ७-८ ॥

## अथ व्ययादिहरणम्।

सर्वार्द्धत्रिचरणपञ्चषष्ठभागाः क्षीयन्ते व्ययभवनादसत्सु वामम्।
सत्स्वर्धं ह्रसति तथैकराशिगानामेकोंऽशं हरति बली तथाऽऽह सत्यः ॥९॥
एकर्क्षोपगतानां यो भवति बलाधिको विशेषेण।
क्षपयति यथोक्तमंशं स एव नान्योऽपि तत्रस्थः ॥ १० ॥

असत्सु = पापग्रहेषु, व्ययभवनात्=द्वादशभावात्, वामं=विपरीतं, व्यवस्थितेषु ( व्ययभावमारभ्य सप्तमपर्यन्तमवस्थिताः पापग्रहाः स्युस्तदा ) स्वायुषः सर्वार्द्धत्रिचरणपञ्चषष्ठभागाः क्षीयन्ते। यथा व्यये पापः सर्वमायुरपहरति। एकादशस्थोऽर्द्धमपहरति। दशमस्थस्त्रिभागम्। नवमे चतुर्थांशम्। अष्टमे पञ्चमांशम्। सप्तमे षष्ठभागमपहरति ॥ सत्स्वर्द्धमिति। तेष्वेव शुभग्रहा विद्यमानास्तदर्द्धमर्थात्पापेषु यन्मितमुक्तं तदर्द्धमपहरन्तीति। तद्यथा व्यये शुभोऽर्द्धमपहरति। एकादशे चतुर्थांशम्। दशमे षष्ठांशम्। नवमेऽष्टमांशम्। अष्टमे दशमभागम्। सप्तमे द्वादशांशमपहरति। तथैवैकराशिगानामुक्तस्थानेषु यदा द्व्यादयो ग्रहा एकस्थानगता भवन्ति तदा तेषां मध्ये बली ग्रह एक एव स्वीयं यथापठितमंशं हरति नान्यो न्यूनबलः कश्चिदिति सत्याचार्य आह। तथा च—

"एकर्क्षोपगतानां यो भवति बलाधिको विशेषेण।
क्षपयति यथोक्तमंशं स एव नान्योऽपि तत्रस्थः" ॥ इति।

अत्र दशमश्लोकः सत्याचार्यभाषितः पूर्वश्लोकार्थपोषक इति ॥ ९-१० ॥

यदि पापग्रह बारहवें हो तो पुरी आयु घटती है। ग्यारहवें में आधा भाग १० वें में तीसरा भाग, नववेंमें चौथाई, आठवेंमें पंचमांश, सप्तममें छठा भाग घटता है। और शुभ ग्रह का आधा घटेगा। यथा बारहवें में आधा, ग्यारहवें में चौथाई, दशवेंमें छठा, नववेंमें आठवां, आठवेंमें दशवां, और सातवेंमें बारहवां भाग घटता है। यदि एक ही स्थान में दो तीन वा बहुत ग्रह हों तो सब ग्रहोंका भाग नहीं घटता है उनमें जो सबसे अधिक बलवान् हो उसीका एक भाग घटता है याने जिस भावमें पाप वा शुभमें जितना घटता है उतना बलवान् एकही ग्रहका घटेगा। यद्यपि क्षीण चन्द्रमा और पापग्रहसे युक्त बुध क्रूर है

परन्तु स्मरण रखिये कि यहां उनका पापवाला कार्य नहीं है अर्थात् आधा भाग घटेगा पूरा भाग नहीं घटेगा, ऐसा सत्याचार्यने कहा है ॥ ९-१० ॥

अथ क्रूरोदयहरणम् ।

सार्द्धोदितोदितनवांशहतात्समस्ताद् भागोऽष्टयुक्तशतसङ्कल्य उपैति नाशम् ।
क्रूरे विलग्नसहिते विधिना त्वनेन सौम्येक्षिते दलमतः प्रलयं प्रयाति ॥ ११ ॥
लिप्तीभूतैर्लग्नभागैर्निहन्यादायुर्दायं खेचराणां पृथक्स्थम् ।
व्योमाकाशर्त्विन्दुपक्षैर्भजेत्तत् स्वायुर्दायाच्छोध्यमब्दादि लब्धम् ॥ १२ ॥
एतत् क्रूरे लग्नके सौम्यदृष्टे तस्मिन्पापे तत्फलार्द्धं विशोध्यम् ।
एतद्दायेनांशसञ्ज्ञे विधेयं पिण्डायुर्वत् कर्म नैसर्गिके च ॥ १३ ॥

इदानीं लग्नस्थे पापग्रहे हरणमाह । क्रूरे = पापग्रहे विलग्नसहिते = लग्ने विद्यमाने सार्द्धोदितोदितनवांशहतात्=अर्धोदितेन ( उदितावयवेन ) सहिताः उदिता ( भुक्ताः ) ये नवांशास्ते सार्द्धोदितोदितनवांशाः तैर्हतात्=गुणितात् समस्तात् ग्रहस्य गणितागतायुर्मानात् । इदमुक्तं भवति । तत्काले लग्नेन यावन्तो भागा भुक्तास्तेषां कलाः, शतद्वयेन भक्ताः सावयवलभोदितनवांशा जायन्ते तैः पृथक् पृथक् ग्रहस्य स्वं स्वं गणितागतमायुः सङ्गुण्य तस्मिन्नष्टयुक्तेन शतेन (१०८) भक्ते लब्धमायुस्तत्तद्ग्रहस्य नाशमुपैति = क्षीयते । अतस्तदायुर्गणितागतायुः पिण्डाच्छंशोध्य शेषं तत्तद्ग्रहस्य स्पष्टमायुर्भवति । अथ तस्मिन्नेव लग्नस्थे पापे सौम्येक्षिते = शुभग्रहेणावलोकिते अनेन विधिना ( सार्द्धोदितोदितेत्यादिना ) यदायुरागच्छति अतोऽस्माद्दलमर्धमेव प्रलयं= नाशं प्रयाति न यावदागतमिति । एवं कृते ग्रहाणामायुः शुद्धानि तद्दशावर्षाणि जायन्ते ।

अयमेवार्थः पुनरुच्यते । लिप्तीभूतैरिति । लग्नभागैः = लग्नस्य भुक्तांशैर्लिप्तीभूतैः = कलीकृतैः खेचराणां पृथक्स्थं स्वं स्वमायुर्दायं निहन्यात्=गुणयेत् तस्मिन् व्योमाकाशर्त्विन्दुपक्षैः २१६०० भक्ते यदब्दादि = वर्षादि लब्धं तत् तद्ग्रहस्य स्वायुर्दायाद्गणितागताच्छोध्यमेवं स्पष्टायुर्भवेत् । एतत्कर्म लग्नगे क्रूरे सति कार्यम् । तस्मिन् पापे (लग्नस्थे) सौम्यदृष्टे तत्फलार्धं विशोध्यम् । अंशसञ्ज्ञे दाये = अंशायुषि एतत्कर्म न विधेयम् । अंशायुषि लग्ने पापे सत्यपि नायुषो हानिर्भवतीति भावः । पिण्डायुर्वत् कर्म नैसर्गिके च विधेयम् । यथा पिण्डायुषि कर्म कृतं तथैव निसर्गायुषि च कार्यमिति । एतद्विषये कल्याणवर्मा— "लग्नांशलिप्तिका हत्वा प्रत्येकं विहगायुषा । भाज्या मण्डललिप्ताभिर्लब्धं वर्षादि शोधयेत् ॥
स्वायुषो लग्नगे क्रूरे, सौम्यदृष्टे च तद्दलम्" इत्याह ।

अथात्रोपपत्तिरुच्यते—होरा त्वंशप्रतिममित्युक्त्या लग्नवांशवशेन ग्रहायुषोऽपचयदर्शनादर्धाद्दलमादौ पूर्णमायुर्लग्नान्ते ग्रहायुषो द्वादशांशहानिरित्येकराशेर्नवनवांशैरनुपातः

यदि नवभिर्नवांशैः द्वादशांशतुल्या हानिस्तदा लग्नेष्टभुक्तांशैः केति ? $\frac{\text{आ}}{१२} \times \frac{\text{ल. भु. न.}}{९} =$

$\frac{\text{आ० × ल० भु० न०}}{१०८}$ = इष्टहीनांशाः । ∴ उपपन्नम् ।

अथात्र $\frac{\text{आ × ल० भु० न०}}{१०८}$, स्वरूपे हरभाज्ययोः शतद्वयेन गुणितयोः लग्नभुक्तनवांशानां कला जायन्ते ।

एकस्मिन्नवांशे २०० कला भवन्ति । तथा हरे २१६०० भवेत् ।

$\therefore \frac{\text{आ० × ल० भु० न० × २००}}{१०८ × २००} = \frac{\text{आ० × ल० भु० न० क०}}{२१६००}$ ।

अतः—लग्नांशलिप्तिका हत्वा प्रत्येकं विहगायुषा। भाज्या मण्डलनिघ्नाभिरिति कल्याणवर्मोक्तमप्युपपद्यते ॥ ११-१३ ॥

अब और संस्कार इसका इस प्रकार है कि-लग्नके जितने नवांश भुक्त हुए हों वे उदित नवांशके नामसे कहे जाते हैं। जिस नवांशमें जन्म है वह जितना भुक्त हुआ हो उसपरसे त्रैराशिक द्वारा जो फल मिले उसको उदित नवांशमें जोड़नेसे सार्द्धोदित उदित नवांश होता है इसकी कला करके लग्नमें यदि पापग्रह हैं तो इष्ट ग्रहकी दशापिंडसे गुणनकर उसमें १०८ का भाग देनेसे जो लब्धि मिले वह उस ग्रहके वर्षादिमें हीन करे यदि उस लग्नस्थित पापग्रहपर शुभग्रह की पूर्ण दृष्टि हो तो उस लब्ध फलका आधा ही घटावे।

इस संस्कारमें ऐसा भी अर्थ कोई २ आचार्य करते हैं कि लग्नमें पापग्रह हों तो सार्द्धोदित उदित नवांशसे सब ग्रहोंके आयुयोगको गुणे फिर उसमें १०८ का भाग देनेसे जो मिले उसे सम्पूर्ण पिंडमें घटावे यदि लग्नमें शुभग्रह हो तो उस लब्धि फलका आधा घटाने से जो बचे वह समस्त ग्रहोंकी दशा होती है। बाद दशाको गणना से सब ग्रहोंकी दशा वर्षादि लेवे ॥ ११ ॥

लग्नके भुक्त अंशोंकी कला बनाकर उससे ग्रहोंकी अपनी २ आयुको अलग २ गुण दे और २१६०० से भाग दे, जो लब्धि मिले उसे ग्रहोंकी गणितागत आयुमें घटावे, शेष ग्रह की स्पष्टायु होती है। परन्तु यह क्रिया यदि पापग्रह लग्नमें हो तभी करनी चाहिये। यदि उस लग्नस्थित पापग्रहके ऊपर शुभग्रहकी दृष्टि हो तो ऊपर की क्रियासे जो वर्षादि लब्धि मिले उसका आधा ही ग्रहोंकी आयुमें घटाना चाहिये। परन्तु यह प्रकार अंशायुमें नहीं होता। पिण्डायुकी तरह निसर्गायुकी भी प्रक्रिया करनी चाहिये ॥ १२-१३ ॥

अथ लग्नायुःसाधनम्।

आयुस्तथैतेषु बलाढ्यलग्ने विहाय राशीन् कृतलिप्तिकेऽत्र।
भक्ते द्विशत्या फलमब्दपूर्वं यत्स्याद्विलग्नायुषि तच्च योज्यम् ॥ १४ ॥
लग्नराशिसमाश्चाब्दास्तन्मासाद्यनुपाततः।
लग्नायुर्दायमिच्छन्ति होराशास्त्रविशारदाः ॥ १५ ॥

अथाधुना लग्नायुः साध्यते। आयुस्तथैतेषु = यथा किल ग्रहाणामायुः साध्यते तथा एतेषु पिण्डादिषु लग्नस्याप्यायुः साध्यमिति भावः। तत्र बलाढ्यलग्ने स्वषड्बलेन सहिते लग्ने लग्नस्य राशीन् विहाय भुक्तभागानां कृतलिप्तिके = कलीकृतेऽत्र द्विशत्या भक्ते अब्दपूर्वं वर्षाद्यं फलं यत्स्यात् तच्च लग्नायुषि लग्नायुर्दाये योज्यं वाच्यमित्यर्थः। लग्नस्य पिण्डाद्यायुर्मानं यथा ग्रहाणामुक्तं तथा नोक्तम् "होरात्वंशप्रतिममपरे राशितुल्यं वदन्तीति" श्रवणात्। अत्र लग्नस्य भुक्तभागाः कलीकृताः शतद्वयेन विभक्ता नवांशा लभ्यन्तेऽतो लग्ने नवांशतुल्यमेवायुर्वर्षाद्यमिति होरात्वंशप्रतिमं सङ्गच्छते। अथापरे राशितुल्यं वदन्तीति द्योत्यते। लग्नेन यावन्तो राशयो मेषादयो भुक्तास्तावन्ति वर्षाणि, तथाऽनुपाततस्तन्मासादिः लग्नायुर्दायो भवति। तत्र मासाद्यर्थमनुपातो यथा यद्यष्टादशशतकलाभिर्द्वादशमासास्तदा लग्नस्य भुक्तकलाभिः क इति लब्धं मासादि राशितुल्यवर्षे संयोज्य लग्नायुर्ज्ञेयम्। अथात्र केशवेन।

"स्याल्लिप्ताः खनखोद्धृता विभतनोर्वर्षादि पैण्ड्यत्रिके
लग्नायुर्निखिलैस्तदंशकसमं कैश्चिद्भतुल्यं स्मृतम्।
यस्येशोऽधिबलस्तदेव हि परैस्तेनाक्ष्यमन्यैर्यदं
शायुर्वत् त्वथ चांशतुल्यमखिलोर्क्ता माद्यमेवादिमम्" ॥

इत्युक्तत्वान्नवांशतुल्यमेव लग्नस्यायुर्ग्राह्यमिति ममापि मतम् ॥ १४-१५ ॥

इन पूर्वोक्त आयुर्दायोंमें लग्न यदि बली हो ( 'होरा स्वामिगुरुज्ञवीक्षितयुता' इस लक्षणसे सहित हो ) तो लग्न की राशि को छोड़कर भुक्त अंशों की कला करले उसमें २०० से भाग देनेसे जो वर्षादि लब्धि मिले वही लग्नायु होती है। किसी २ का मत है कि लग्नमें जितनी राशियां भुक्त हों उतने ही वर्ष तथा भुक्तांश परसे त्रैराशिकके द्वारा यानें १८०० कलामें १२ महीने तो भुक्तकलामें क्या ? इस प्रकार जितने महीने मिले, सब वर्षादि लग्नायु होती है। परन्तु यहां पूर्व मतमें ही बहुतों की सम्मति है। ( सु शा. कार ) ॥ १४-१५ ॥

## अथ षड्विधहरणम् ।

क्रूरोदयास्तरिपुनीचखगोपगानां रिःफायमानननवरन्ध्रकलत्रगानाम् ।
कृत्वा यथाहरणषट्कमिनादिकानां लग्नायुषा सह युते यदि तुल्यमायुः ॥ १६ ॥

अधुना षड्विधमायुषो हरणमुच्यते (१)क्रूरोदयहरणम् ( सार्द्धोदितोदितेत्यायुक्तम् ) (२) अस्तङ्गतहरणम् ( अस्तं याता सर्वं एवार्द्धेत्यायुक्तम् )। (३) रिपुक्षेत्रहरणम् ( क्षोणीपुत्रं वर्जयित्वेत्यायुक्तम् )। (४) नीचगतहरणम् ( नीचेऽतोर्द्धमित्युक्तम् )। (५) खगोपगानां हरणम् ( एकर्क्षोपगतानामित्युक्तम् ), (६) रिःफायमानननवरन्ध्रकलत्रगानां = १२, ११, १०, ९, ८, ७ भावगतानां हरणम् ( व्ययादिहरणम् ) इत्येतद्यथोद्दिष्टं हरणषट्कमिनादिकानां = सूर्यादिग्रहाणां कृत्वा हरणावशेषाणां ग्रहायुषां लग्नायुषा सह लग्नायुर्दायसहिते युते = योगे तत्तुल्यमायुर्भवति तत्क्षणजातपुरुषस्येति। हरणरहितं सप्तग्रहाणामायुः ( स्पष्टायुः ) लग्नायुश्चेत्यष्टायुषां योगतुल्यं पुरुषायुरिति फलितार्थः ॥ १६ ॥

(१) लग्नमें पापग्रहके रहनेमें, (२) अस्त होनेमें, (३) शत्रुराशिमें, (४) नीच में, (५) ग्रहोंके योगमें, और (६) व्ययादि ( १२।११।१०।९।८।७ ) भावमें जो हरण कहे गये हैं सब करके सूर्यादि ग्रहोंके सहित लग्नकी भी आयुर्दायोंके योगके समान मनुष्यकी स्पष्टायु होती है। तात्पर्य है कि हरणके अतिरिक्त सूर्यादि ग्रहोंकी शेष आयुर्दायोंके योगमें लग्नकी आयु भी जोड़नी चाहिये। योगतुल्य मनुष्यकी आयु होती है। ( सु. शा. कार ) ॥ १६ ॥

## अथ अंशकायुः ।

स्वमतेन किलाह जीवशर्मा ग्रहदायं परमायुषः स्वरांशम् ।
ग्रहभुक्तनवांशराशितुल्यं बहुसाम्यं समुपैति सत्यवाक्यम् ॥ १७ ॥
सत्योक्ते ग्रहमिष्टं लिप्तीकृत्वा शतद्वयेनाप्तम् ।
मण्डलभागविशुद्धेऽब्दाः स्युः शेषात्तु मासाद्याः ॥ १८ ॥
स्वतुङ्गवक्रोपगतैस्त्रिसंगुणो द्विरुत्तमस्वांशकभत्रिभागगैः ।
इयान् विशेषस्तु भदन्तभाषिते समानमन्यत् प्रथमेऽप्युदीरितम् ॥ १९ ॥
किन्त्वत्र भांशप्रतिमं ददाति वीर्यान्विता राशिसमं च होरा ।
क्रूरोदये योऽपचयः स नात्र कार्यं च नाब्दैः प्रथमोपदिष्टैः ॥ २० ॥
सत्योपदेशो वरमत्र किन्तु कुर्वन्त्ययोग्यं बहुवर्गणाभिः ।
आचार्यकं त्वत्र बहुघ्नतायामेकं तु यद्भूरि तदेव कार्यम् ॥ २१ ॥

अथाधुना जीवशर्म-सत्याचार्ययोर्मतेनायुःप्रमाणे उच्येते। तत्र सत्याचार्यस्यांशायुरेवाभिमतम्। अंशायुर्नोमांशवशात्साधितमायुः। अस्मिन्नायुषि राशेः प्रयोजनं न भवति। परमायुषः = पञ्चदिनोत्तरस्य विंशाधिकशताब्दस्य स्वरांशं = सप्तमांशं १७।१।२२।८।३४। वर्षादि ग्रहदायं = प्रत्येकस्य ग्रहस्य तुल्यमायुः जीवशर्मा नामाचार्यः स्वमतेन किलाह। परमुच्चस्थानामिति। नीचस्थानां तदेवार्द्धं क्षीयते। तथोक्तं जीवशर्मणा—

समदशैको द्वियमौ वसवो वेदाग्नयो ग्रहेन्द्राणाम् ।
वर्षाण्युच्चस्थानां नीचस्थानामतोऽर्द्धं स्यात् ॥

मध्येऽनुपाततः स्यादानयनं शेषमत्र यत्किञ्चित् ।
पिण्डायुष इव कार्यं तत्सर्वं गणिततत्त्वज्ञैः ॥ इति ॥

अतोऽनेन जीवशर्मणा आयुः स्पष्टीकरणादि सर्वं कर्म तुल्यमेवाकारि केवलं वर्षपाठे विशेषः । परमस्मिन्नायुषि न कस्याप्यभिमतम् । इति । अथ सत्याचार्यमतमुच्यते । ग्रहभुक्तनवांशराशितुल्यं यत्र तत्र राशौ ग्रहो यस्मिन्नवांशे भवेत्तन्नवांशराशिसङ्ख्यातुल्यानि वर्षाणि तस्य ग्रहस्यायुर्भवति । यथा कुत्रापि राशौ ग्रहो सिंहनवांशे तदा ५ वर्षाणि, मकरनवांशे १० वर्षाण्येवं सर्वत्र ज्ञेयम् । एतत् सत्याचार्यस्य वाक्यं बहुसाम्यं = बहूनामाचार्याणां वाक्येन सादृश्यमुपैति । यथा वचनम्—

"आयूंषि राश्यंशकचारयोगात्" इति यवनेश्वरस्य ।

सत्यवाक्यं बहुसाम्यमुपैतीत्यनेन वराहस्यापि सत्यमतमेवाभिमतमिति । अत्र बादरायणोऽपि—

"राश्यंशकला गुणिता द्वादशनवभिः ग्रहस्य भगणेभ्यः ।
द्वादशहृताऽवशेषेऽब्दमासदिननाडिकाः क्रमशः" इत्याह ॥

अथ वराहेण सत्याचार्यमतायुःसाधनं क्रियते । सत्योक्ते = सत्याचार्योक्तायुःकरणे ( ग्रहभुक्तनवांशराशितुल्यमित्यत्र ) इष्टं ग्रहं लिप्तीकृत्वा = कलामयं कृत्वा तस्मिन् शतद्वयेन भक्ते, यदवाप्तं, तस्मिन्द्वादशाभिक्ष्ये, मण्डलभागविशुद्धे = द्वादशतष्टे, शेषमब्दाः = वर्षाणि भवन्ति । अंशायुः द्वादशवर्षाधिकं न भवतीति भावः । तथा शेषान्मासाद्याः । द्विशतभक्तेन यच्छेषं तस्मिन्द्वादशगुणिते तेनैव ( २०० ) हरेण भक्ते लब्धं मासाः । एवं मासशेषं त्रिंशद्गुणितं हारहृतं दिनानि भवन्ति । दिनशेषं षष्टिगुणितं हारहृतं दण्डा इति ।

यथा तत्काले ग्रहः = २।५।१०।०। अस्य कलाः = ३९१०। शतद्वयेन भक्ताः । ३९१०÷२०० = १९, शेषं ११० अत्र १६ इदं द्वादशाधिकमतो द्वादशतष्टमवशेषं = ७। अतः ७ वर्षाणि । पूर्वशेषम् ११० द्वादशगुणितं ११०×१२ = १३२० । हारहृतम् १३२०÷२०० = ६ मासाः, शेषम् १२० त्रिंशद्गुणितम् १२०×३० = ३६००। हारहृतं ३६००÷२०० = १८ दिनानि । एवं जातमायुर्वर्षादि ७।६।१८।०।

अथास्मिन्सत्याचार्यमतायुर्दाये विशेषमाह—स्वतुङ्गेति । ये ग्रहाः स्वकीये तुङ्गे = उच्चे स्थिताः वक्रोपगताः=वक्रगतिका वा भवन्ति तैर्दत्तायुस्त्रिसङ्गुणं कार्यं गणितागतस्य त्रिगुणितमायुर्भवति वक्रोपगतानामित्यर्थः । उत्तमस्वांशकभत्रिभागगैः = ये ग्रहाः स्वकीये वर्गोत्तमे, नवांशे, गृहे, द्रेष्काणे वा भवन्ति तैर्यद्दत्तमायुस्तद्द्विगुणं कार्यम् । उत्तमस्वांशकभत्रिभागगानां द्विगुणमायुर्भवतीति भावः । भदत्तभाषिते = सत्याचार्योदिते आयुर्दाये इयान् स्वतुङ्गवक्रोपगतानां त्रिगुणमुत्तमस्वांशकभत्रिभागगतां द्विगुणमायुरेतावान् विशेषः । नान्येन केनचिदित्युक्तमिति भावः । अन्यत्सकलं=नीचेऽर्द्धं शत्रुक्षेत्रे त्र्यंशमस्तङ्गतस्यार्द्धमित्यादि पातनार्थं प्रथमे=पूर्वाचार्यमते यथोक्तं तत्समानमेव सत्यमतेऽपि विज्ञेयमिति ॥

अथ सत्यमते लग्नायुषि विशेषमाह—किन्त्वत्रेति । अत्र सत्यमतायुर्दाये लग्नं भांशप्रतिमं = भस्य राशेरंशस्य = नवांशस्य तुल्यमायुर्ददाति । लग्ने यस्य राशेर्नवांशो भवति तद्राशिसंख्यातुल्यवर्षमिति । यथा मेषनवांशे वर्षमेकम् । वृषनवांशे वर्षद्वयमेवं यथावृद्धया मीननवांशे द्वादश वर्षाणि । मासाद्यनुपाततो यथा सत्योक्ते ग्रहमिष्टमित्यादिना आयुरानीयते तथा कर्त्तव्यम् । यदि होरा = लग्नं वीर्यान्विता = होरा स्वामिगुरुज्ञवीक्षित-

युता' इति लक्षणलक्षिता भवेत् तदा राशिसमं = लग्नेन यावन्तो राशयो मेषादयो भुक्तास्ता-वन्ति वर्षाण्यायुर्दाये ददाति । तत्रापि मासाद्यं भुक्तांशवशाज्ज्ञेयम् । तथोक्तं बादरायणेन—

होरादायोऽप्येवं बलयुक्तान्यानि राशितुल्यानि ।

वर्षाणि सम्प्रयच्छत्यनुपाताच्चांशकादि फलम् ॥ इति ।

अत्र = सत्यमतांशायुर्दाये क्रूरोदये सार्द्धोदितोदितेत्यादिना यः अपचयः पूर्वाचार्यमतेन क्रियते स न कार्यः । तथा प्रथमोपदिष्टैः 'नवेन्दवो बाणयमा' इत्यादि पूर्वोक्तैरब्दैरेवं 'ग्रहदायं परमायुषः स्वरांशमिति' च तैरायुषः स्पष्टीकरणं न कर्त्तव्यमिति ॥

अथात्रायुर्विषये सत्यमताङ्गीकरणमाह—सत्येति । अत्रास्मिन्नायुःसाधनेऽन्याचार्यपेक्षया सत्योपदेशो वरं = समीचीन इति । किन्तु वरमपि सत्यमतं बहुवर्गणाभिः = स्वतुङ्गवक्रोपगतैस्त्रिसङ्गुणामित्यादिभिरनेकगुणनाभिरयोग्यङ्कुर्वन्ति=विनाशयन्ति । यथा कश्चिद्ग्रहः स्वीय एव षड्वर्गादौ भवेत्तदा तस्य स्वगृहगतत्वात्तदायुर्द्विगुणं कुर्वन्ति । तस्यैव स्वद्रेष्काणे गतत्वात्पुनर्द्विगुणमेवं तस्यैव स्वोच्चगतत्वात् त्रिगुणमेवं पुनः पुनर्गुणनाभिरनवस्था भवति । तथा हि—

वर्गोत्तमे स्वरांशौ द्रेष्काणे स्वे नवांशके द्विगुणम् ।

वक्रोच्चगते त्रिगुणं द्विगुणं कार्यं यथासङ्ख्यम् ॥

इत्येवं बहुवर्गणाभिः सत्यमतमयोग्यं कुर्वन्ति । अत एव बहुग्नतायां = पुनः पुनर्गुणनायां यदेकं भूरि = बहुतरं तदेव कार्यम् । पुनः पुनः द्विगुणे सकृदेव द्विगुणम् । यत्र द्विगुणत्वं त्रिगुणत्वं च प्राप्तं तत्र सकृत्त्रिगुणम् । पुनः पुनस्त्रैगुण्ये सकृदेव त्रिगुणमिति । एतदाचार्यकमाचार्याभिमतमिति । तथाऽऽहाचार्यः स्वल्पजातके वराहः—

वर्गोत्तमे दृकाणे स्वनवांशके सकृद् द्विगुणम् ।

वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वे सकृत् त्रिगुणम् ॥ इति ॥

अत्र यथा बहुग्नतायामेकैव महती गुणना क्रियते तथैव बहुवारं हानिष्वपि प्राप्तास्वेकवारमेवापहानिः प्रकर्त्तव्या । तथा च भगवान् गार्गिः—

·········ततोऽन्यासु बहुष्वपि । प्राप्तास्वेकैव कर्त्तव्या या स्यात्तासु महत्तरा ।

ततोऽपि गुणना कार्याऽप्येकैव महती सकृत् ॥ इत्याह ॥ १९–२१ ॥

इस अध्यायके तीसरे श्लोकमें सूर्यकी १९ वर्ष, चन्द्रमा की २५ वर्ष इत्यादि क्रमसे ग्रहायु कही है । परन्तु जीवशर्माजीका मत है कि मनुष्योंके परमायु का प्रमाण १२० वर्ष ५ दिन हैं, और सूर्यादि सात ग्रह हैं इन सबकी बराबर आयु उच्चमें १७ वर्ष, १ मास, २२ दिन, ८ घटी, ३४ पल, १७ विपल हैं और नीचमें इसका आधा वर्षादि ८।६।२६।४।१७। है, बीचमें अनुपातसे कहा है । और कर्म चक्र पातादि पहले ही के प्रकार कहा है । इस बात को केवल जीव शर्माने अपनी युक्तिसे कहा है । इसमें किसी की सम्मति नहीं है । यवनेश्वर सत्याचार्यादिके मतानुसार वराहमिहिरने जो प्रमाण कहा है वही ठीक है ।

किसी भी राशिमें ग्रह जिस राशिके नवांसमें हों उसके बराबर वर्ष ग्रहायु जाने । जैसे जहाँ तहाँ मेषके नवांसमें होने से १ वर्ष, वृष नवांशमें २ वर्ष, यों वृद्धि क्रमसे मीनके नवांशमें १२ वर्ष ग्रहायु होती है । यह सत्याचार्यका मत अधिक आचार्योंके मतसे सहमत है । सं० टी० देखिये ॥ १७ ॥

सत्याचार्यके मतसे आयुका निर्णय इस प्रकारसे है कि स्पष्ट ग्रहके राश्यादिकी कलापिंड बनाकर उसमें २०० का भाग देनेसे जो लब्धि मिले उसको वर्ष जाने यदि लब्धि १२ से अधिक होतो उसमें १२ का भाग देनेसे शेष वर्ष जाने । दो सौ का भाग देनेके बाद जो शेष बचा है उसको १२ से गुणाकर दो सौका भाग देने पर लब्ध मास होते हैं शेष को ३०

से गुणाकर दो सौका भाग देनेसे लब्ध दिन होते हैं । शेष को ६० से गुणाकर दो सौका भाग देने से लब्ध घटी होती है, शेष को ६० से गुणा कर २०० का भाग देने से लब्ध पल होते हैं ॥

उदाहरण संस्कृत टीका में देखिये । ( सु० शा० कार ) ॥ १८ ॥

इसकी उपपत्ति यह है कि–'ग्रहभुक्तनवांशराशितुल्यम्' के अनुसार ग्रह जिसके नवांश-पर हों उतने वर्ष होते हैं । इसलिये ग्रहभुक्तराशियों तथा अंशादिकों की कलामें २०० का भाग देनेसे लब्धि नवांश होते हैं।

∵ १ नवांशामें २०० कलायें होती हैं।

∴ ग्र. भु. क ÷ २०० = नवांश = वर्ष ।

यहां राशिसङ्ख्या १२ ही होनेके कारण १२ से अधिक नवांशसंख्या ( वर्ष ) होने पर १२ से भाग देना उचित है ।

शेष परसे २०० कलामें यदि १ वर्ष ( १२ महीने ) तो शेषकलामें क्या $\frac{१२ \times शे}{२००}$ इस अनुपातसे मासादि आते हैं । ( सु. शा. कार ) ॥ १८ ॥

सत्याचार्यके मतमें इतना विशेष है कि जो ग्रह अपनी उच्च राशिमें है, अथवा वक्री है उसकी आयु वर्षादि जो मिले उसको तिगुना करे, और जो ग्रह वर्गोत्तम नवांश वा स्वनवांश या अपने द्रेष्काणमें हो वा अपनी राशिमें हो उसको द्विगुणा करे और सब कर्म पूर्वोक्त प्रकारसे करे । जो ग्रह शत्रु राशिमें है उसका तीसरा भाग घटता है और शुक्र, शनि के विना अस्तंगत ग्रहका आधा घटता है तथा "सर्वार्धेति" इस श्लोक के अनुसार चक्र पात करे ॥ १९ ॥

यहां सत्याचार्यके मतमें लग्न भुक्तनवांशके बराबर आयु देता है । यदि लग्न बलवान् ( स्वामिगुरुज्ञवीक्षितयुता ) हो तो भुक्त राशिके तुल्य वर्ष आयु देता है । सत्याचार्यके मतमें क्रूरोदय ( सार्द्धोदितोदितोक्त ) प्रकारसे जो हरण करते हैं वह नहीं करना चाहिये। तथा पूर्वोक्त पिण्डायु तथा निसर्गायु इत्यादि परसे आयुकी स्पष्टी क्रिया नहीं करनी चाहिये॥

मय आदिके तथा जीवशर्माके मतसे सत्याचार्य का मत श्रेष्ठ है । परन्तु शंका यह है कि कोई ग्रह स्वगृहमें है तो द्विगुण हुआ, वही स्वनवांशमें है तो फिर द्विगुण हुआ, फिर स्वद्रेष्काणमें होनेसे फिर द्विगुण, और वर्गोत्तमांशमें होनेसे फिर द्विगुण वही ग्रह वक्री हो तो त्रिगुण और उच्चराशिमें हो तो पुनः त्रिगुण इस प्रकार इसकी अनवस्था होती है। इस शङ्काकी निवृत्ति इस श्लोकके उत्तरार्धमें है कि बहुत बार द्विगुण की प्राप्ति हो तो भी एक ही बार द्विगुण करे । बहुत बार त्रिगुणकी प्राप्ति हो तो भी एक बार त्रिगुण करे, और जहां द्विगुण त्रिगुण दोनों की प्राप्ति हो वहां एक बार त्रिगुण करे । घटनेके क्रममें भी बहुतकी प्राप्तिमें एकही बार घटेगा ( चक्र पात भिन्न है वह सबका होता है ) अर्थात् दो भाग तीन भाग घटनेमें दो भाग ही घटेगा। जहां किसी प्रकारसे घटता है और किसी प्रकारसे बढ़ता है वहां पहले घटनेका मुख्य भाग घटा करके तब वृद्धिके मुख्यभागसे वृद्धिकरे । घटानेमें पहले चक्रपातसे हानि करले पश्चात् और क्रमसे घटावे इसके बाद वृद्धि करे । यह अंशायुदशा है । आचार्यने पिंडायु निसर्गायुको छोड़कर अंशायुको ही प्रमाणित माना है । औरोंके मतमें लग्नके अधिक बल होनेसे अंशायु, सूर्य अधिक बली हो तो पिण्डायु और चन्द्रमा विशेष बलवान् हो तो निसर्गायु होती है ॥ २१ ॥

## अथ रश्मिजायुः।

दशगोशरबाणाद्रिवसुसायकरश्मयः । दिननायकमुख्येषु निजतुङ्गगतेषु च ॥२२॥
स्वोच्चोनमिष्टखचरं यदि षड्गृहोनं चक्राद्विशोध्य कृतलिप्तकमंशुमानैः ॥
हत्वा भचक्रकलिकाहृतमब्दपूर्वं रव्यादिरश्मिजनितायुरिति ब्रुवन्ति ॥ २३ ॥

इदानीं ग्रहाणां रश्म्यानयनमुच्यते । निजतुङ्गगतेषु दिननायकमुख्येषु = सूर्यादिग्रहेषु

दशादिसङ्ख्यका रश्मयः सन्ति । सूर्यस्य दश । चन्द्रस्य गावः = नव । भौमस्य शराः पञ्च । बुधस्य बाणाः = पञ्च । गुरोरद्रयः = सप्त । शुक्रस्य वसवः=अष्टौ । शनेः सायकाः= पञ्चरश्मयो ज्ञेयाः । नीचगता ग्रहा रश्मिरहिताः, नीचाद्भ्रष्टा ग्रहा अभिमुखरश्मयः, उच्चाद्भ्रष्टाः पराङ्मुखा उच्यन्ते । तथोक्तं सारावल्याम्—

"स्वोच्चस्थे दश सूर्ये, नव चन्द्रे, पञ्च भूमितनये च ।
पञ्चेन्दुजे, सुरेज्ये सप्ताष्टौ भार्गवे, शनौ पञ्च ॥
एवं महेन्द्रशास्त्रे मणित्थमयवादरायणप्रोक्ते ।
सप्त प्रत्येकस्या निर्दिष्टा रश्मयो ग्रहेन्द्राणाम् ॥
सर्वे प्रमाणमेते मुनिवचनात् किन्तु सप्तसङ्ख्यैव ।
बहुवाक्यादस्माकं नीचगतः स्याद्विगतरश्मिः ॥
अभिमुखरश्मिर्नीचाद् भ्रष्टः, स्वोच्चात्पराङ्मुखो ज्ञेयः" इति ॥

अथोच्चनीचयोर्मध्ये ग्रहस्य रश्म्यानयनम् । इष्टखचरं स्वकीयोच्चेनोनं कृत्वा यदि षड्गृहोनोऽर्थाद्राशिषट्कादूनो भवेत्तदा तं चक्रात् ( १२ ) विशोध्य कृतलिप्तकं = कलीकृतं तं स्वकीयैरंशुमानैरुक्तपठितरश्मिप्रमाणैः हत्वा = सङ्गुण्य भचक्रकलिकाभिः २१६००' हृतं = भक्तं लब्धमब्दपूर्वं = वर्षाद्यं रव्यादीनां रश्मिजनितमायुर्भवति, इति विज्ञा ब्रुवन्ति । अत्र प्रकृतग्रन्थकृता पिण्डाद्यायुर्वदुच्चगते ग्रहे पूर्णो रश्मिस्तथा नीचे तदर्धमुररीकृत्य नीचोच्चान्तरे षड्राशिमिते रश्मेरर्द्धमवशिष्यते तदेष्टग्रहोच्चान्तरे किमित्यनुपातागतं फलं पठितपूर्णरश्मिमानाच्छंशोध्येष्टरश्मिसाधनं कृतम् । र.— $\frac{\text{र.}}{२} \times \frac{\text{अं}}{६} = \frac{\text{र.} \times १२ - \text{र.} \times \text{अं}}{१२} =$

$\frac{\text{र.} ( १२ - \text{अं} )}{१२} = \text{इ. र.}$ ।

परञ्च सारावलीकारेण नीचगते ग्रहे शून्या रश्मिरभिहिता—'नीचगतः स्याद्विगतरश्मिः' इति । तथा तेनैवेष्टस्थाने रश्मिसाधनपद्यमुक्तम्—

"नीचविहीनः शोध्यश्चक्रात्षड्भवनतो यदाभ्यधिकः ।
आत्मीयरश्मिगुणितात्षड्भक्ताद्रश्मयस्तस्मात्" । इति ।

एतन्मते उच्चे पूर्णरश्मिस्तत उभयदिशि क्षीणत्वमुपगता नीचे शून्यत्वमुपयाति । नीचे रश्म्यभाव उच्चे परमरश्मिरिति षड्राशिमिते ग्रहनीचान्तरे पूर्णो रश्मिस्तदाऽभीष्टग्रहनीचान्तरे किमित्यनुपातेन रश्म्यानयनमुपपद्यते । तत्र षड्भाधिके ( उच्चादग्रे ) ग्रहनीचान्तरे चक्राच्छुद्धं कार्यमुच्चादुभयत्र रश्मेस्तुल्यमेवापचयत्वादिति ॥ २२–२३ ॥

**सूर्यादि ग्रहोंके अपनी उच्च राशिमें होनेसे दश आदि रश्मिजायु हैं । सूर्य की १०, चन्द्र की ९, मंगल की ५, बुधकी ५, बृहस्पतिकी ७, शुक्रकी ८ और शनिकी ५ रश्मिजायु हैं ॥ २१ ॥**

**इष्ट ग्रहमें उसके उच्च को हीन करे, यदि उच्चोन ग्रह ६ राशि से ऊन हो तो चक्र ( १२ ) में घटाकर कला बनाकर रश्मि मानसे गुणाकर भचक्र ( २१६०० ) का भाग देने से वर्षादि होते हैं । यह आचार्य लोग सूर्यादि के रश्मिजायु कहते हैं । यहां विशेष संस्कृत टीकामें देखिये ॥ २३ ॥**

**अथ रश्मेर्हरणम् ।**

**स्वराशितुङ्गातिसुहृद्गृहस्थे वक्रोपगे तद्द्विगुणीकृतांशुः ।**
**अस्तंगतेऽष्टमभागवर्ज्यो सपत्नगे द्वादशभागहानिः ॥ २४ ॥**

अस्तङ्गतेषु द्युचरेषु चार्द्धं हित्वा शनिं दानवपूजितं च ।
तद्रश्मियोगे ग्रहदत्तमायुर्महेन्द्रशास्त्रोदितमाहुरार्याः ॥ २५ ॥

स्वराशौ, स्वोच्चे, अतिमित्रस्य गृहे, वक्रत्वे च स्थिते ग्रहे गणितागता रश्मयो द्विगुणिता भवन्ति । वक्रावसानेऽष्टमभागवर्ज्या अष्टमांशेन रहिता रश्मयो भवन्ति । सपत्नगे = शत्रुराशौ द्वादशभागहानिः कार्या । शनिं, दानवपूजितं=शुक्रं, च हित्वा अस्तङ्गतेषु द्युचरेषु चार्द्धं ह्रसति । शनिशुक्रयोरस्तङ्गतयोरपि न हानिर्भवति । तथोक्तं—

मित्रद्वादशभागे द्विगुणास्त्रिगुणाः स्वके च दीधितयः ।
वक्रे पुनस्तथोच्चे स्वराशिगे तद्भवत्येव ॥
द्विगुणाः स्युर्दीधितयो वक्रस्थेऽप्येवमेव स्युः ।
वैरिद्वादशभागे नीचे च भवन्ति षोडशांशोनाः ॥
अस्तं गतो विरश्मिः शनिसितवर्ज्यं ग्रहो ज्ञेयः ॥ इति सारावल्याम् ।

अनेन विधिना लब्धा ये ग्रहाणां रश्मयस्तेषां योगे ग्रहदत्तं रश्मिजमायुः (रश्मियोगतुल्यवर्षकमायुः ) महेन्द्रशास्त्रोदितं=महेन्द्रनामाचार्यकथितमार्या आहुः । तत्र रश्मियोगसङ्ख्याफलानि सारावल्यां ३६ अध्याये द्रष्टव्यानि । बाहुल्यभयादत्र नाङ्कितानि ॥ २४-२५ ॥

यदि ग्रह अपनी राशिमें, उच्चमें, अतिसुहृत्के गृहमें, वक्रमें गणितागत रश्मि दूनी करे । वक्रके अवसानमें अष्टमांश हीन करे । शत्रु स्थानमें हो तो १२ वां भाग घटावे । शनि और शुक्रको छोड़कर अस्त ग्रह हो तो आधा त्याग दे । सब रश्मियोंके योगतुल्य ग्रहोंके रश्मिजायु होती है यह महेन्द्रशास्त्रका कहा हुआ श्रेष्ठ विद्वान् कहे हैं ॥ २४-२५ ॥

## अथ चक्रायुः ।

रव्यादिसप्तग्रहतारकांशभुक्तावशेषाब्दसमूहमायुः ।
सव्यापसव्योपगवाक्यजं वा वदन्ति चक्रायुरिनादिकानाम् ॥ २६ ॥

अधुना चक्रायुरुच्यते—रव्यादीति । चक्रायुषो विशेषविवरणं १७ अध्याये द्रष्टव्यम् । इह दिग्दर्शनमात्रमेव क्रियते । रव्यादिसप्तग्रहैस्तारकांशानां भुक्तावशेषा ये तैः साधितमब्दसमूहं वर्षसङ्कुलमायुः । अत्रेदमुक्तं भवति । सूर्यादिसप्तग्रहैः पृथक् पृथग् भुक्तस्य नक्षत्रस्य ये भागा अवशिष्टास्तेभ्योऽनुपातेनोर्वरितान्यायुर्वर्षाणि समानीय तेषां योगश्चक्रायुर्भवति । तत्रानुपातः यदि नक्षत्रमानैः ( भभोगैः ) पठितमायुस्तदा भोग्यघटीभिः किमिति सर्वेषामायुः पृथक् पृथक् भवति । तत्र १७ अध्याये पठितायूंषि—"भूतैकविंशद्विरयो नवदिक्षोडशाब्धयः सूर्यादीनां क्रमादब्दाः" इति । एतदेवायुः सव्यापसव्योपगवाक्यजं ( वक्ष्यमाणम् ) इनादिकानां ग्रहाणां चक्रायुरार्या वदन्ति ॥ २६ ॥

सूर्यादि सप्तग्रहका तारकांशभुक्तसे अवशिष्ट वर्षोंका जो समूह वही आयु है, वा सूर्यादि की आयु सव्यापसव्यसे जो प्राप्त हो वही चक्रायु है ऐसा विद्वान् लोग कहते हैं ॥२६॥

## अथ दशायुः ।

आदित्यमुख्यनवखेचरयोगताराभुक्तावशिष्टघटिकाजनिवत्सराद्यम् ।
आयुर्दशाजनितमष्टकवर्गजातं यत्प्रोक्तमेव सकलं प्रवदन्ति तज्ज्ञाः ॥ २७ ॥

एतेन दशायुरुच्यते । दशायुषो विवरणं १८ अध्याये द्रष्टव्यम् । इह किञ्चिदुच्यते । आदित्यमुख्यनवखेचराणां=सूर्यादिनवग्रहाणां योगताराभुक्तावशिष्टघटिकाजनिवत्सराद्यम् । एतदुक्तं भवति । सूर्यादयो नवग्रहाः पृथक् पृथक् येषु नक्षत्रेषु भवेयुस्तेषां भोग्यघटीभ्योऽनुपातवशाज्जायमानं वर्षाद्यं यत्तेषां दशाजनितमायुः ( दशायुः ) स्यात् । अथ अष्टकवर्गजातं यदायुः प्रोक्तं तत्सकलमेवायुः तज्ज्ञा आयुर्विषयज्ञाः प्रवदन्ति । नाष्टकवर्गायुषि भुक्तभोग्या-

नयनं कर्त्तव्यमिति भावः। अथ पराशराद्यैर्दशायुरेव नक्षत्रायुरपरनाम्ना व्यवह्रियते। तत्र कृत्तिकादिनवनक्षत्राणां प्रथमावृत्तौ, उत्तरफल्गुनी प्रभृतिनवनक्षत्राणां द्वितीये पर्यये, उत्तराषाढादिनक्षत्रनवकानां तृतीये पर्यये सूर्यादयो नव ग्रहाः स्वामिनो भवन्ति। कृत्तिकायां जन्म चेत् तदा सूर्यस्य दशा। रोहिण्यां चन्द्रस्यैवं क्रमेण। ते च क्रमिका ग्रहास्तथा तेषां वर्षप्रमाणानि च पराशरोक्तानि—

रवीन्द्वाराहिजीवार्किबुधकेतुसिताः क्रमात्। आग्नेयाद्भगणेशाः स्युः स्वामिनो वत्सराः क्रमात्॥
षडाशाः सप्त धृतयो नृपा एकोनविंशतिः। अत्यष्टिः सप्त च नखा उच्चे नीचेऽर्धमुच्यते॥

सू०=६। चं०=१०। मं० = ७। रा० = १८। बृ० = १६। श०=१९। बु० = १७। के०=७। शु० = २०। एतान्युच्चे। एवम् ३।५।३३।९।८।९३।८३।३३।१० क्रमेणैतानि नीचनक्षत्रेवर्षायुः॥ २७॥

सूर्यादि नव ग्रहोंकी जो योग तारा उसके भोगनेसे बची हुई जो घटिकादि वह दशायु है अष्टकवर्गसे उत्पन्न आयु जो होती है वह पूरी आयु विद्वान् लोग कहते हैं॥ २७॥

## अथ आयुर्ग्रहणम्।

विलग्नपे बलोपेते शुभदृष्टेंऽशसम्भवम्।
रवौ पिण्डोद्भवं कुर्याच्चन्द्रे नैसर्गिकं क्रमात्॥ २८॥
उचङ्गते रवौ चान्ये बलिष्ठाः केन्द्रकोणगाः।
सर्वेषु स्वोच्चभावेषु बलिष्ठे शशहंसके॥ २९॥
एवं चिरायुषां योगेष्वन्येषु गणितेषु च।
चान्द्रयोगेषु तुर्ये तु चन्द्रे च बलसंयुते॥ ३०॥
महापुरुषयोगेषु वीर्योत्कटयुतेषु च।
राजयोगेषु सर्वेषु पैण्ड्यमाह पराशरः॥ ३१॥
लग्ने गुरौ कर्मगते च भानौ चन्द्रे सुखे वाऽस्तगते बलाढ्ये।
केन्द्रत्रिकोणोपचये च सौम्ये पापेष्वथापोक्लिमगेषु पैण्ड्यम्॥३२॥
पैण्डयं भानौ निसर्गप्रभवमुडुपतौ रश्मिजं सोमपुत्रे
भौमे भिन्नाष्टवर्गोदितमसुरगुरौ कालचक्रोद्भवायुः।
देवाचार्ये दशायुर्दिनकरतनये सामुदायं बलिष्ठे
लग्ने यद्यंशकायुर्भवति बलयुते चाहुराचार्यमुख्याः॥ ३३॥

इदानीं पूर्वोक्तानामायुषां कतमं ग्राह्यमित्युच्यते—विलग्नप इति। विलग्नपे = जन्मलग्नपतौ बलोपेते = स्ववर्गादिगते शुभग्रहावलोकिते चांशसम्भवमंशायुर्ग्राह्यम्। रवौ बलयुते = यदि जन्मकाले रविर्बलीयान्स्यात् तदा पिण्डोद्भवमायुर्ग्राह्यम्। चन्द्रे बलवति नैसर्गिकमायुः कुर्यादिति क्रमाद् बलयुक्ते कथितग्रहे कथितमायुरेव ग्राह्यमिति। अथ चेदुक्तेषु लग्नसूर्यचन्द्रेषु कयोश्चित् द्वयोस्तुल्यं बलं स्यात्तदा तयोरायुषोर्योगार्द्धमेवं यदि त्रयोऽपि तुल्यबलास्तदा त्रयाणामायुषां योगत्रिभागं ग्राह्यम्। यदि लग्नसूर्यशशिनस्त्रयोऽपि विबलास्तदा जीवशर्मकथितमायुः (ग्रहदायं परमायुषः स्वरांशमित्युक्तम्) ग्रहीतव्यम्। तथोक्तं केशवाचार्येण—

'अंशायुश्च तनाविनेऽधिकबले पैण्डं, निसर्गं विधौ
स्याच्चेत्तुल्यबलं द्वयोर्युतिदलं तञ्चायुषोर्वेद त्रयः।
त्र्यायूंषि त्रिबलैर्निहत्य च युतिर्वीर्यैक्यहृद्वा त्रिधा-
युर्युत्याखिलतोऽथ जैवमुदितं चेद्दीनवीर्याक्रमः' इति॥ २८॥

अस्मादन्येष्वपि ( २६–३२ ) श्लोकोक्तयोगेषु पिण्डायुः ग्राह्यम् । अथ च जन्मकाले सूर्ये बलवति ( सर्वापेक्षया बलिनि ) पिण्डायुः । चन्द्रे बलिनि निसर्गायुरेवं बुधे रश्मिजायुः । भौमेऽष्टकवर्गायुः ( वक्ष्यमाणम् ) शुक्रे कालचक्रायुः । देवाचार्ये दशायुः । शनौ समुदायजम् । लग्ने बलवति अंशायुर्भवति । इति प्राचीना आचार्यप्रवरा आहुः ॥ २९–३३ ॥

सुधाशालिनीकर्त्ता, पूर्वकथित आयुर्दायोंमें कौनसी आयु लेनी चाहिये इसका निर्णय करते हैं। जन्मसमयमें लग्नेश, सूर्य और चन्द्रमा इन तीनोंमें यदि लग्नेश सबसे बली हो और शुभग्रहसे दृष्ट हो तो अंशायु लेनी चाहिये। यदि सूर्य बली हो तो पिण्डायु, चन्द्रमाके बली होनेपर निसर्गायु लेनी चाहिये। यदि दो ग्रहोंकी तुल्यता हो तो दोनोंकी आयुका योगार्द्ध याने सूर्य और लग्नेशके तुल्य बल होनेपर अंशायु तथा पिण्डायुका योगार्द्ध। सूर्य, चन्द्रमाके तुल्य होनेपर पिण्डायु तथा निसर्गायुका योगार्द्ध। लग्नेश और चन्द्रमाके तुल्य बलमें अंशायु–निसर्गायुका योगार्द्ध लेना चाहिये। यदि तीनों तुल्यबल हों तो तीनों आयुर्दायोंके योगका तृतीयांश ग्रहण करना चाहिये ॥ २८ ॥

सूर्य उच्चमें हो, अन्य ग्रह बलयुक्त हों, केन्द्र ( १।४।७।१० ) या कोण ( ५।९ ) में हों या सभी ग्रह उत्तमभावमें हों, या बलयुक्त, शशयोग और हंसयोग हो, तथा दीर्घायु योगोंके अनेक भेदोंमें, चन्द्रयोगों ( सुनफा, अनफ़ा, दुरधुरा ) में, तथा चौथे चन्द्रयोग ( केमद्रुम ) में, चन्द्रमाके बली होनेपर, महापुरुषयोगोंमें, प्रत्येक राजयोगोंमें पराशर ने पिण्डायु लेनेको कहा है ॥ २९–३१ ॥

गुरु लग्नमें हो, सूर्य १० वें भावमें हो, चन्द्रमा ४ थे, या ७ वेंमें बली हो, शुभग्रह केन्द्र ( १।४।७।१० ) त्रिकोण ( ५।९ ) उपचय ( ३।६।११।१० ) में हों, पापग्रह आपोक्लिम ( ३।६।९।१२ ) में हों तो पिण्डायु लेनी चाहिये ॥ ३२ ॥

और भी प्रकारान्तर देखिये–जन्मसमय यदि सूर्य बली हो तो पिण्डायु, चन्द्रमा बली हो तो निसर्गायु, बुध बली हो तो रश्मिजायु, मङ्गल बली हो तो अष्टकवर्गायु, शुक्र बली हो तो अंशायु लेनी चाहिये। यहां आठों में सबसे बली ग्रहकी आयु ग्रहण करनी चाहिये। बलकी समतामें उनके योगमें उतनेसे भाग देकर आयु लेनी चाहिये। ऐसा आचार्योंने कहा है ॥ ३३ ॥

## अथायुषः स्पष्टीकरणम् ।

आयुरब्दादिकं सर्वं निश्चलेन गुणीकृतम् ।
मातङ्गेन हृतं लब्धं सौरमानायुरुच्यते ॥ ३४ ॥

इदानीं पूर्वानीतस्य क्षेत्रात्मकस्यायुषः सौरमानेन वर्षादिकरणमुच्यते । पूर्वमानीतमायुः क्षेत्रात्मकं राश्यादिवशादानीतत्वात् । अपेक्षितं तु सौरकालात्मकम् । वर्षायनर्तुयुगपूर्वकमत्र सौरादित्युक्तत्वात् । अतोऽब्दादिकं सर्वमायुः निश्चलेन गुणीकृतम् । अत्र 'क ट प य वर्गभवैरिह, इति पूर्वोक्तसंख्याबोधकसङ्केतेन निश्चल = ३६०, तेन गुणितं कृत्वा, मातङ्गेन = ( ३६५ ) हृतं = भक्तं च कुर्यात् तदा लब्धं सौरमानेन वर्षाद्यमायुर्भवेदित्युच्यते विद्भिः । अत्र द्वादशराश्यात्मके ( सौरे ) एकस्मिन्वर्षे ३६० भवन्ति । तथैकस्मिन्सौरवर्षे ३६५ दिनानि सावयनानि भवन्ति । अर्थात् ३६० अंशाः सूर्येण ३६५ दिनैर्भुज्यन्ते । तेनायुर्वर्षसङ्ख्याः ३६० गुणिताः, ३६५ भक्ताश्च सौरवर्षाणि भवन्तीत्युपपन्नं यथोक्तम् । परञ्चैतत्स्थूलं, प्रत्यब्दं १५।३०।२२।३० घट्यादेस्त्यागात् ॥ ३४ ॥

आयुके वर्षादिको ३६० से गुणाकर उसमें ३६५ से भाग देनेसे जो लब्धि मिले वह सौरमान आयु होती है ॥ ३४ ॥

## आयुषोऽधिकारिणः ।

ये धर्ममार्गनिरता द्विजदेवभक्ता ये पथ्यभोजनरता विजितेन्द्रियाश्च ।

येमानवादधृतिसत्कुलशीलसीमास्तेषामिदं कथितमायुरुदारधीभिः ॥३५॥

ये पापलुब्धाश्चोराश्च देवब्राह्मणनिन्दकाः ।
सर्वाशिनश्च ये तेषामकालमरणं नृणाम् ॥ ३६ ॥
धर्मे विकल्पबुद्धीनां दुःशीलानां च विद्विषाम् ।
ब्राह्मणानां च देवानां परद्रव्यापहारिणाम् ॥ ३७ ॥
भयङ्कराणां सर्वेषां मूर्खाणां पिशुनस्य च ।
स्वधर्माचारहीनानां पापकर्मोपजीविनाम् ॥ ३८ ॥
शास्त्रेष्वनियतानां च मूढानामपमृत्यवः ।
अन्येषामुत्तमायुः स्यादिति शास्त्रविदो विदुः ॥ ३९ ॥

इदानीमुदाहृतस्यायुषः केऽधिकारिणः के चानधिकारिण इत्युच्यते पञ्चभिः श्लोकैः । श्लोकाश्च सरलार्थाः । धर्मात्मनां सदाचारवतां चानीतमायुः सम्भवति । पापिनां कुकर्मनिरतानां च गणितसाधितमप्यायुर्न सम्भवति । पापिनः सत्यप्यायुर्दाये ( अकाले ) म्रियन्ते । ननु 'नाकाले म्रियते कश्चिदिति' श्रूयतेतरां तर्हि पापिनः कथमकाले म्रियन्ते ? इत्युच्यते । इह यदायुः साधितं तत्परिभाषापरमर्थात् प्रशस्तेन्द्रियपुरुषस्य यः श्वासोच्छ्वासान्तर्वर्ती कालः स प्राणोऽसुर्वा कथ्यते । तैः षड्भिः प्राणैरेकं पलम् । पलषष्ट्या घटिकैका । षष्टिघटीनां दिनमेकम् । त्रिंशद्दिनैरेको मासः । द्वादशभिर्मासैरेकं वर्षम् । एवं यथागतं वर्षाद्यं जीवितं जितेन्द्रिया जीवन्ति । जितेन्द्रियाणां धर्मात्मनां च तदनुकूलश्वासोच्छ्वासानां निर्गतत्वात् । पापिनां दुष्कर्मनिरतानां च शरीरास्वस्थवशात् तत्प्रतिकूलं ( प्रमाणादधिकमात्रायाम् ) श्वासोच्छ्वासाः ( प्राणाः ) निस्सरन्ति । तदनुसारेण तस्य कालोऽपि परिणमति । तेनैव कारणेन शताब्दमायुरपि केनचित् ३० वर्षैः, केनचित् ४० वर्षैः स्वप्राणानुसारेण याप्यत इति । अत एवोक्तं यथा श्रूयते—

'ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत' इति ।

तथा चिरञ्जीवित्वमिच्छता प्रयतितव्यमपि । केशवेनाप्युक्तम्—

स्याद्धर्मिष्ठसुशीलपथ्यसुभुजां न स्यादिदं पापिनामिति ॥ ३५–३९ ॥

जो धर्म कर्म में निरत हैं, द्विज-देवभक्त हैं, पथ्यसे भोजन करते हैं और जितेन्द्रिय हैं, मान, वाद, धैर्य युक्त सत् कुल सीमामें निरत हैं उनकी यह कथित आयु है ऐसा उदार बुद्धिके विद्वानोंने कहा है ॥ ३५ ॥

जो पापी, लोभी, चोर, देव-ब्राह्मणका निन्दक, मद्य-मांसादि सब खानेवाले हैं उन मनुष्यकी अकालमृत्यु होती है ॥ ३६ ॥

जिनकी धर्ममें विकल्प बुद्धि है, जो दुःशील और वैर करनेवाले हैं, ब्राह्मण-देवता और दूसरेका द्रव्य हरनेवाले हैं, सबको भय देनेवाले हैं, चुगलखोरोंकी, अपने धर्म आचार से हीनकी, पापकर्मसे जीविका करनेवालेकी, शास्त्रोंको न माननेवाले मूर्खोंकी अपमृत्यु होती है ॥ ३७–३९ ॥

अथ नानाजातीयमायुः ।

गृध्रोलूकशुकध्वाङ्क्षसर्पाणां च सहस्रकम् ।
श्येनवानरभल्लूकमण्डूकानां शतत्रयम् ॥ ४० ॥
पञ्चाशदुत्तरशतं राक्षसानां प्रकीर्तितम् ।
नराणां कुञ्जराणां च विंशोत्तरशतं विदुः ॥ ४१ ॥
द्वात्रिंशदायुरश्वानां पञ्चविंशत् खरोष्ट्रयोः ।

वृषमाहिषयोश्चैव चतुर्विंशतिवत्सराः ॥ ४२ ॥
विंशत्यायुर्मयूराणां छागादीनां च षोडश ।
हंसस्य पञ्चनवकं द्वादशाब्दाः पिकाः शुकाः ॥ ४३ ॥
तद्वत्पारावतानां च कुक्कुटस्याष्टवत्सराः ।
बुद्बुदानामण्डजानां सप्तसङ्ख्याः समाः स्मृताः ॥ ४४ ॥

सरलार्थाः श्लोकाः । वियोनिजन्मनां जन्मकालं विज्ञाय तस्मान्मनुष्यायुर्वदायुः समानीय मनुष्यपरमायुषोऽनुपातेन तत्तत्परमायुष्यायुरानेयम् । यथा मनुष्यपरमायुषि ( १२० व०।५दि० ), एतदायुस्तदा वियोनिपरमायुषि किमिति तत्तद्वियोनेरायुर्भवति ॥ ४०-४४ ॥

गिद्ध-उल्लू-शुक-काक और सर्पो की हजार वर्षकी आयु है। बटेर-बानर-भालू-मेघा की तीन सौ वर्षकी आयु है। राक्षसोंकी १५० वर्षकी आयु है। मनुष्योंकी और हाथियों की १२० वर्षकी आयु है। घोड़ेकी आयु ३२ वर्षकी है। गदहा-ऊंटकी आयु २५ वर्षकी है। बैल भैंसेकी आयु २४ वर्षकी है। मोरकी २० वर्षकी आयु है। बकरा-भेंड़ा आदिकी १६ वर्षकी आयु है। हंसकी आयु १४ वर्षकी है। कोकिल-शुककी १२ वर्षकी आयु है। और कबूतरकी भी आयु १२ वर्षकी है। मुरगेकी आयु ८ वर्षकी है। बुलबुलोंकी ७ वर्ष की आयु कही है ॥ ४०-४४ ॥

## अरिष्टदशा ।

त्रिमण्डलेष्वथैकस्मिन् पापस्तिष्ठति दुर्बलः ।
न सौम्यग्रहसंयुक्तस्तद्दशान्ते मृतिं वदेत् ॥ ४५ ॥
राशिसन्धिस्थखेटानां दशा रोगप्रदा भवेत् ।
त्रिंशद्भागमनुक्रान्तदशायां मरणं नृणाम् ॥ ४६ ॥
षष्ठाष्टमस्थो रिपुदृष्टमूर्त्तिः पापग्रहः पापगृहोपगश्चेत् ।
स्वान्तर्दशायां मरणं नराणां वदन्ति युद्धे विजितस्य दाये ॥ ४७ ॥
पञ्चम्यारदशा मृत्युं दद्यात्षष्ठी गुरोर्दशा ।
शनेश्चतुर्थी मृत्युः स्याद्दशा राहोस्तु पञ्चमी ॥ ४८ ॥
नीचारातिविमूढस्य विपत्प्रत्यरिनैधनाः ।
दशा दद्युर्मृतिं तस्य पापयुक्ता विशेषतः ॥ ४९ ॥
तत्तद्भावार्थकामेशदशास्वन्तर्दशासु च ।
तत्तद्भावविनाशः स्यात् तद्युक्तेक्षितकारकैः ॥ ५० ॥
अष्टमस्य त्रिभागांशपतिस्थितगृहं शनौ ।
तदीशनवभागर्क्षे गते वा मरणं भवेत् ॥ ५१ ॥

अथाधुना स्थितिवशेनारिष्टदशोच्यते—त्रिमण्डलेष्वथेत्यादि । त्रिमण्डलेषु = लग्नपञ्चमनवमेषु यथेकस्मिन्नपि ( लग्ने वा पञ्चमे वा नवमे ) दुर्बलः पापग्रहस्तिष्ठति तथा स पापग्रहः सौम्यग्रहेण = शुभग्रहेण केनचित् संयुक्तो न भवेत् तदा तस्य पापग्रहस्य दशान्ते तस्य जातकस्य मृतिं = मरणं वदेत् । अत्र त्रिमण्डले चतुराद्यैर्ग्रहैः क्रमाद्दीर्घमध्याल्पजीवित्वमुक्तं जातकादेशे—

" लग्नपञ्चमभाग्यादिभावेष्वेकत्र संस्थितैः । चतुराद्यैर्ग्रहैर्जाता दीर्घमध्याल्पजीविनः" इति ॥

राशिसन्धिगतग्रहाणां दशासु जातको रोगी भवति । तथा यो ग्रहो राशेस्त्रिंशत्तमं भागमनुक्रान्तो भवति तस्य दशायां नृणां मरणं भवति । पापगृहोपगः = पापग्रहराशिगतः कश्चित्पापग्रहश्चेत् लग्नात् षष्ठेऽष्टमे वा स्थितो भवेत्तथाभूतश्च रिपुदृष्टमूर्त्तिः = स्वशत्रुणा

निरीक्षितो भवेत्तदाऽसौ पापग्रहो युद्धे = ग्रहयुद्धे विजितस्य=पराजितस्य ग्रहस्य दाये=महादशायां स्वान्तर्दशां प्राप्य तस्यां नराणां मरणं करोतीति विज्ञा वदन्ति। इदमुक्तं भवति। प्रत्येकस्य ग्रहस्य दशायां सर्वेषामन्तर्दशा भवन्ति। तत्काले कथितलक्षणलक्षितः पापग्रहः युद्धे विजितस्य ग्रहस्य दशायामात्मीयावान्तर्दशायां पुरुषस्य मरणं करोतीति।

आरस्य = भौमस्य पञ्चमी दशाऽर्थाद्यद्दशायां जन्म भवेत्ततः पञ्चमी दशा यदि मङ्गलस्य स्यात्तदा जातस्य भौमदशायां मृत्युं दद्यात् = मरणं कुर्यादित्यर्थः। एवं गुरोः षष्ठी, शनेश्चतुर्थी, राहोः पञ्चमी दशा मृत्युप्रदा भवति। तथा नीचारातिविमूढस्य क्रमेण विपत्प्रत्यरिनैधना दशा मृत्युं दद्युः। नीचगतस्य ग्रहस्य विपत्तृतीया दशा, अरातिः = शत्रुस्तद्गृहं गतस्य प्रत्यरिः = पञ्चमी दशा, विमूढोऽस्तङ्गतस्तस्य नैधनाऽष्टमी दशा मृत्युकारणं भवति। तद्दशायां म्रियत इत्यर्थः। ता एव दशा यदि पापयुक्ता अर्थात्पापग्रहसम्बन्धिन्यो भवेयुस्तदा विशेषतो निश्चयेन मरणं कुर्वन्तीति।

यस्य यस्य भावस्य विचारोऽपेक्षितस्तत्तद्भावानामर्थेशो द्वितीयेशः, कामेशः = सप्तमेशश्च, यो भवति तद्दशासु तथा तदन्तर्दशासु च तत्तद्भावस्य विनाशः स्यात्। यथा तृतीयस्य विचारोपस्थिते चतुर्थेशनवमेशयोर्दशायामन्तर्दशायां च तृतीयभावस्य विनाशो वाच्यः। एवमेव सर्वत्र विचारणीयम्। अत्र न केवलं द्वितीयेशसप्तमेशदशाऽन्तर्दशासु मरणं वाच्यमपितु तेन द्वितीयेशेन सप्तमेशेन वा युक्ता ईक्षिता वा तत्तद्भावकारका ग्रहा यदि भवेयुरिति। कारका ग्रहा पूर्वमेवोक्ताः ( द्वितीयाध्याये ५१ श्लोके )।

अष्टमस्य = जन्मलग्नादष्टमभावस्य त्रिभागांशपतिः = द्रेष्काणेशः। एतदुक्तं भवति। जन्मकाले लग्ने यो द्रेष्काणस्तेनैव द्रेष्काणेनाष्टमभावेऽपि भवितव्यम्। यदि लग्ने प्रथमो द्रेष्काणस्तदाऽष्टमेऽपि प्रथम एव द्रेष्काणो ग्रहीतव्यः। द्वितीये द्वितीयस्तृतीये तृतीय इति। 'उदयाद् द्वाविंशतितमं द्रेष्काणं कारणं मृत्योरिति' वक्ष्यमाणवचनात्। तद्द्रेष्काणपतिर्यस्मिन् गृहे तिष्ठति तद्गृहं शनौ प्राप्ते सति ( गोचरेण ), अथवा तद्द्रेष्काणस्य यः स्वामी स यस्मिन्नवांशे स्थितो भवेत्तन्नवांशराशिमुपगते शनौ ( गोचरेण ) जातस्य मरणं भवेत्। अत्र राशिनवांशयोर्बलवतो ग्रहणं कर्त्तव्यमिति ॥ ४५–५१ ॥

तीन मण्डलमें से एकमें भी यदि दुर्बल पापग्रह हो और शुभग्रहसे युक्त न हो तो उसकी दशाके अन्त्यमें मृत्युको कहे ॥ ४५ ॥

राशियोंकी सन्धिमें स्थित ग्रहोंकी दशा रोग देनेवाली होती है। ३० वें अंशको अतिक्रमण करनेवाले ग्रहोंकी दशामें मनुष्योंका मरण होता है ॥ ४६ ॥

षष्ठ, अष्टम भवनमें स्थित शत्रु-दृष्ट-मूर्ति पापग्रह पापग्रहकी राशिमें प्राप्त हों तो अपनी अन्तर्दशामें युद्धमें विजितग्रहकी दशामें मनुष्योंके मरणको करते हैं ॥ ४७ ॥

जिस ग्रहकी दशामें जन्म हो उससे मङ्गलकी दशा यदि ५ वीं हो, गुरु की दशा ६ ठीं हो, और शनि की दशा ४ थी हो एवं राहुकी दशा ५ वीं हो तो ये दशायें मृतु देनेवाली होती हैं। जो ग्रह अपने नीचमें हो उसकी ३ री दशा, जो शत्रु गृहमें हो उसकी ५ वीं दशा, जो सूर्यके साथ अस्त हो उसकी ८ वीं दशा मृत्यु देती है। यदि वे दशा पापग्रह सम्बन्धी हों तो निश्चय ही मरण होता है।

विचारणीय भावसे २ रे और ७ वें भावके स्वामीकी दशा तथा अन्तर्दशामें उस २ भाव की हानि कहनी चाहिये। यदि उस भावके द्वितीयेश या सप्तमेशसे उस भावका कारक ग्रह युक्त या दृष्ट हो।

जन्मकालिक अष्टम भावमें जो द्रेष्काण हो उसका स्वामी जिस राशिमें स्थित हो उस राशिमें चार वश शनिके जानेपर अथवा वह द्रेष्काणेश जिसके नवांशमें हो उस नवांशराशिमें शनिके जानेपर मरण कहना चाहिये ॥ ४८–५१ ॥

अथ छिद्रग्रहाः ।

रन्ध्रेश्वरो रन्ध्रयुक्तो रन्ध्रद्रष्टा खरेश्वरः ।
रन्ध्राधिपयुतश्चैव चतुःषष्ट्यंशनायकः ॥ ५२ ॥
रन्ध्रेश्वरातिशत्रुश्च सप्त च्छिद्रग्रहाः स्मृताः ।
तेषां मध्ये बली यस्तु तस्य दाये मृतिं वदेत् ॥ ५३ ॥
तत्तद्भावाद्व्ययस्थस्य तद्भावाधीश्वरस्य वा ।
वीर्योपेतस्य खेटस्य पाके मृत्युर्न संशयः ॥ ५४ ॥

अथाधुना मारकग्रहा उच्यन्ते । रन्ध्रेश्वरो लग्नादष्टमभावपतिः (१), रन्ध्रयुक्तोऽष्टमभावस्थितो ग्रहः (२), रन्ध्रद्रष्टा = अष्टमभावे यस्य सर्वाधिका दृष्टिर्भवेत् (३), खरेश्वरो जन्मलग्ने यो द्रेष्काणस्तस्माद्द्वाविंशो द्रेष्काणः खरस्तस्येशः (४), रन्ध्राधिपयुतश्चैवाष्टमेशेन सहितो ग्रहो वाऽष्टमेशाधिष्ठितराशीशः (५), चतुःषष्ट्यंशनायकः = जन्मकाले चन्द्रो यस्मिन्नवांशे भवति तस्माच्चतुःषष्टितम—(६४) नवांशेशोऽर्थाद्यावन्मिते नवांशे यस्मिन् राशौ चन्द्रो भवेत्तावन्मितो नवांशस्तस्मादष्टमभावस्य चतुःषष्टितमो भवति तत्पतिः (६), रन्ध्रेश्वरातिशत्रुश्च = अष्टमेश्वरस्यातिशत्रुर्यो ग्रहो भवेत्सोऽपीत्येते (७) सप्त छिद्रग्रहा उच्यन्ते । तेषां सप्तग्रहाणां मध्ये यो ग्रहो बलीयान् भवति तस्य दाये = दशायां नरस्य मृतिं = मरणं वदेत् । एवं प्रत्येकस्य भावस्य विचारः कर्त्तव्यः । पक्षान्तरमुपदिशति—वा तत्तद्भावात् = यस्य यस्य भावस्य विचारः क्रियते तत्तद्भावात् व्यये = द्वादशे स्थितस्य ग्रहस्य, तद्भावाधीश्वरस्य = तद्भावव्ययाधीश्वरस्य चानयोः मध्ये वीर्योपेतस्य = बलीयसः खेटस्य पाके=दशायां तद्भावस्य मृत्युर्भवतीत्यत्र संशयो नेति । अथ तत्तद्भावादित्यत्र श्लोके पाठान्तरं फलदीपिकायाम्—

'तत्तद्भावाद् व्ययस्थस्य तद्भावव्ययपस्य च ।
वीर्यहीनस्य खेटस्य पाके मृत्युमवाप्नुयात्'' इति ॥ ५२-५४ ॥

अष्टमेश १, अष्टममें स्थित २, अष्टमको देखनेवाला ३, खरेश्वर ४, अष्टमेशसे युत ग्रह ५, चतुःषष्टि अंशका स्वामी ६, रन्ध्रेश्वरका अतिशत्रु ७ ये सात छिद्रग्रह हैं। इन सातों में जो बली हो उसकी दशामें मृत्युको कहे । उस उस भावका व्ययस्थ वा उस उसभावके व्ययेश इन दोनोंमें बलवान् ग्रहकी दशामें मृत्यु होती है इसमें सन्देह नहीं है ॥ ५२-५४ ॥

अथ द्रक्काणस्वरूपम् ।

कुलीरमीनालिगता दृगाणाः मध्यावसानप्रथमा भुजङ्गाः ।
अलिद्वितीयो मृगलेयपूर्वः क्रमेण पाशो निगडो विहङ्गः ॥ ५५ ॥
विलग्नजन्मद्रेक्काणाद्यस्तु द्वाविंशतिः खरः ।
सुधाकरोपगांशर्क्षात् चतुःषष्ट्यंशको भवेत् ॥ ५६ ॥

अथाधुना द्रेष्काणानां स्वरूपाण्युच्यन्ते—कुलीरेत्यादिना । कुलीरमीनालिगता मध्यावसानप्रथमा दृगाणा भुजङ्गा उच्यन्ते । कुलीरस्य ( कर्कस्य ) मध्यो द्वितीयो द्रेष्काणः, मीनस्यावसानोऽन्तिमो द्रेष्काणः, अलेर्वृश्चिकस्य प्रथमो द्रेष्काणश्चेति त्रयो द्रेष्काणा भुजङ्गाः सर्पाख्या भवन्ति । अलिद्वितीयो मृगलेयपूर्वः क्रमेण पाशः, विहङ्गः ज्ञेयः । यथा वृश्चिकस्य द्वितीयः पाशसंज्ञः । मकरस्य प्रथमो निगडाख्यः । सिंहस्य प्रथमो विहङ्गः = पक्षी द्रेष्काण उक्तः । अतोऽपि विशेषा बृहज्जातके द्रेष्काणाध्याये द्रष्टव्याः । प्रयोजनं पूर्वमुक्तं 'खगे दृगाणे' तथा 'लग्नत्रिभागेऽण्डजसर्पकोलाः' इत्यादौ । अन्यच्च, षट्पञ्चाशिकायाम्—

"अंशकाज्ज्ञायते द्रव्यं द्रेष्काणैस्तस्कराः स्मृताः ।
राशिभ्यः कालदिग्देशा वयो जातिश्च लग्नपात्" इति ।

अथ खरः परिभाष्यते । जन्मकाले लग्ने यो द्रेष्काणस्तस्मात् द्वाविंशतिसङ्ख्यको द्रेष्काणः खरसंज्ञक उच्यते । यदि लग्ने प्रथमो द्रेष्काणः स्यात्तदा लग्नादष्टमभावस्य प्रथमद्रेष्काणः खरः । एवं लग्ने द्वितीयो द्रेष्काणस्तदाऽष्टमस्य द्वितीयो द्रेष्काणः खरः इति । स खरो जन्मकाले सुधाकरश्चन्द्रो यस्मिन्नवांशे स्थितो भवेत्तस्माच्चतुः षष्ट्यंशकः (६४) भवेत् । चन्द्रो यस्य भावस्य यस्मिन्नवांशे भवेत्तस्मादष्टमभावस्य तावन्मितो नवांशः खरः । प्रतिराशि नव नवांशास्त्रयो द्रेष्काणाश्चेति ७ × ९=६३ नवांशाः । तथा ७ × ३=२१ द्रेष्काणाः । वर्तमानश्चैक इति योगे तथात्वमुपपद्यते । खरस्य प्रयोजनमुक्तं 'खरेश्वरो मारकग्रहः' । तथैव बृहज्जातकेऽपि—

द्वाविंशः कथितस्तु कारणं द्रेष्काणो निधनस्य सूरिभिः ।
तस्याधिपतिर्भपोऽपिवा निर्याणं स्वगुणैः प्रयच्छति ॥ इति ॥ ५५–५६ ॥

अब द्रेष्काणोंके स्वरूप कहते हैं । कर्कराशिका २ रा, मीनका ३ रा, वृश्चिका १ ला, द्रेष्काण भुजङ्ग ( सर्प ) कहलाता है । वृश्चिकका २ रा पाश, मकर का १ ला, निगड और सिंहका १ ला, विहङ्ग कहलाता है ।

लग्नके जिस द्रेष्काणमें जन्म हो उससे २२ वां द्रेष्काण याने ८ वें भावका लग्न तुल्य द्रेष्काण 'खर' कहलाता है । वह 'खर' चन्द्रमा जिस नवांशपर हो उससे ६४ वां नवांश भी होता है । (सु० शा० कार) ॥ ५५–५६ ॥

## अथ जीवदेहमृत्युसंज्ञाः ।

लग्नं पञ्चहतं च मान्दिसहितं प्राणस्फुटं प्राणिनाम्
चन्द्रस्य स्फुटमष्टकेन गुणितं देहं समान्दिस्फुटम् ।
सप्तघ्नं गुलिकस्फुटं सह दिवानाथेन मृत्युर्भवेत्
तस्माज्जीवकलेवरैक्यविपुले जातश्चिरं जीवति ॥ ५७ ॥

लग्नं तात्कालिकं पञ्चभिर्हतं=गुणितं कार्यं, ततो मान्दिसहितं = गुलिकेन युक्तञ्च कार्यं तदा तत् प्राणिनां प्राणस्फुटं = जीवाख्यं भवति । अथ चन्द्रस्य स्फुटं राश्यादिकं अष्टकेनाष्टसंख्यया गुणितं, समान्दिस्फुटं = गुलिकस्पष्टराश्यादिना सहितञ्च कार्यं तत् देहं=देहसंज्ञकं भवति । अथ च गुलिकस्फुटं = गुलिकस्य राश्यादि सप्तघ्नं=सप्तगुणितं कृत्वा दिवानाथेन= स्पष्टसूर्येण सह युक्तं कार्यं तदा तन्मृत्युसंज्ञकं भवति । तस्मान्मृत्युसंज्ञकात् जीवकलेवरैक्यविपुले = जीवदेहयोर्योगेऽधिके ( मृत्यु < जीव + देह ) जातश्चिरं जीवति=दीर्घायुर्भवति । अर्थादेव मृत्युमानात् जीवदेहयोगे न्यूनेऽल्पायुः ( मृत्यु > जीव + देह ) इति ॥ ५७ ॥

लग्नको ५ से गुणाकर उसमें स्पष्ट गुलिक जोड़नेसे प्राणियोंका स्पष्ट 'प्राण' ( जीव ) होता है । स्पष्ट चन्द्रमाको ८ से गुणाकर उसमें गुलिक जोड़नेसे 'देह' स्पष्ट होता है । स्पष्ट गुलिकको ७ से गुणा कर स्पष्ट सूर्य जोड़ने से 'मृत्यु' स्पष्ट होता है । इन प्राण, देह, और मृत्युओंका प्रयोजन कहते हैं—उससे याने मृत्युसे जीव और देहका योग यदि अधिक (मृत्यु < जीव + देह) हो तो प्राणी चिरजीवी (दीर्घायु) होता है । यदि मृत्युसे जीव और देहका योग कम (मृत्यु > जीव + देह) हो तो अल्पायु कहनी चाहिये । (सु.शा.कार) ॥

## अथ निर्याणसमयाः ।

जीवमृत्युतनुयोगराशिगे गोचरेण रविजे धनक्षयः ।
तत्त्रिकोणगृहगेऽथवा नृणां तन्नवांशकयुते मृतिं वदेत् ॥ ५८ ॥

भावत्रिकोणगे मन्दे भावनाशं वदेद्बुधः ।
भावाधिपतिकोणे वा गुरौ प्राप्ते मृतिर्भवेत् ॥ ५९ ॥

पूर्वानीतानां जीव-मृत्यु-देहानां योगराशौ गते गोचरेण=चारवशात् रविजे = शनैश्चरे धनक्षयो धनस्य नाशो वाच्यः । अथ तत्त्रिकोणगृहगे=तस्माज्जीवमृत्युतनुयोगराशेस्त्रिकोण-( ५।९ ) राशौ गतवति रविजे, अथवा तस्मिन्योगे यस्य राशेर्नवांशो भवेत्तद्राशियुते रवि-जे ( चारवशादागते शनौ ) नृणां = जनिमतां मृतिं = मरणं वदेत् ॥ ५८ ॥

भावात् त्रिकोणे ( ५।९ ) गतवति मन्दे तस्य भावस्य नाशं बुधो वदेत् । धनभावस्य विचारे षष्ठे वा दशमे भावे गते शनैश्चरे धनस्य नाशं ब्रूयादेवं सर्वत्र । तथा भावाधिपतिर्यत्र तिष्ठति तस्मात्कोणे ( ९।५ ) प्राप्ते गुरौ तद्भावस्य मृतिर्भवेत् । तत्र लग्नेशात् कोणे गते गुरौ जातस्य मरणं, धनेशाद्धनस्य कुटुम्बस्य च हानिः, सहजेशात् भ्रातुर्मरणमेवं प्रत्येकस्य विचारः कर्त्तव्यः ॥ ५९ ॥

**पूर्वोक्त जीव, मृत्यु और देहका योग करनेपर जो राशि हो उस राशिमें जब गोचरसे शनि पहुंचे तब धनका नाश कहना चाहिये । अथवा उस योग राशिसे ५।९। भावमें वा उस योगराशिमें जिसका नवांश हो उस राशिपर जानेसे ( शनिके ) मनुष्योंका मरण करता है ॥ ५८ ॥**

**भावसे त्रिकोणमें शनि हो तो भावका नाश होना पण्डितोंने कहा है, वा भावाधिपके कोणमें गुरुके पहुचनेपर मृत्यु होवे ॥ ५९ ॥**

लग्नार्कमान्दिस्फुटयोगराशेरधीश्वरो यद्भवनोपगस्तु ।
तद्राशिसंस्थे पुरुहूतवन्द्ये तत्कोणगे वा मृतिमेति जातः ॥ ६० ॥
स्फुटे विलग्ननाथस्य विशोध्य यमकण्टकम् ।
तद्राशिनवभागस्थे जीवे मृत्युर्न संशयः ॥ ६१ ॥
मान्दिस्फुटे भानुसुतं विशोध्य राश्यंशकोणे रविजे मृतिः स्यात् ।
धूमादिपञ्चग्रहयोगराशिद्रेक्काणयातेऽर्कसुते च मृत्युः ॥ ६२ ॥

जन्मकाले स्पष्टलग्नं, स्पष्टसूर्यः, स्पष्टमान्दिरिति त्रयाणां योगतुल्यराशेर्योऽधीश्वरः = पतिः स यद्भवनं ( राशिं ) उपगतस्तस्मिन् राशौ चारवशात् संस्थे पुरुहूतवन्द्ये = गुरौ, वा तस्माद्योगराशिपतेस्त्रिकोणगे गुरौ जाते जातो मृतिमेति ॥ ६० ॥

विलग्ननाथस्य=जन्मलग्नेशस्य स्फुटे = स्पष्टराश्यादिमानतो यमकण्टकं विशोध्य शेषं यत् तद्राशौ यस्य नवांशो भवेत्तस्मिंश्चारादागते जीवे = गुरौ जातस्य मृत्युर्भवति । तत्र न संशयः कश्चिदिति ।

अत्र प्रसङ्गाद्यमकण्टकज्ञानमुच्यते—

दिवसानष्टधा कृत्वा वारेशाद्गणयेत्क्रमात् ।
अष्टमांशो निरीशः स्याच्छन्यंशो गुलिकः स्मृतः ॥
रात्रिरप्यष्टधा भक्ता वारेशात्पञ्चमादितः ।
गणयेदष्टमः खण्डो निष्पत्तिः परिकीर्तितः ॥
शन्यंशे गुलिकः प्रोक्तो गुर्वंशे यमकण्टकः ।
भौमांशे मृत्युरादिष्टो रव्यंशे कालसंज्ञकः ॥
सौम्यांशेऽर्धप्रहरकः स्पष्टकर्मप्रदेशकः ॥

इत्यनेन यथा गुलिकेष्टज्ञानं कृत्वा गुलिकसाधनं लग्नवत् क्रियते तथैव प्रतिदिनं यम-कण्टकेष्टज्ञानं कृत्वा ततो लग्नवद्यमकण्टकसाधनं कर्त्तव्यम् ॥ ६१ ॥

यमकण्टकगुणकध्रुवाङ्काः।

| र. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रहाः |
|---|---|---|---|---|---|---|---|
| ५ | ४ | ३ | २ | १ | ७ | ६ | दिवा |
| १ | ७ | ६ | ५ | ४ | ३ | २ | रात्रौ |

मान्दिस्फुटे ( स्फुटगुलिकात् ) भानुसुतं=शनिं विशोध्योनं कृत्वा शेषमितराशौ यस्यांशको भवेत्तस्मात्कोणे ( ९।५ ) चारवशादागते रविजे=शनौ मृतिः स्यात्। अथ च धूमाद्यो ये पञ्च उपग्रहास्तेषां योगप्रमिते राशौ यस्य द्रेष्काणो भवेत्तत्र यातेऽर्कसुते = शनौ मृत्युः स्यात्। तावत्प्रसङ्गाद् धूमादीनां साधनप्रकारः—

चत्वारो राशयो भानौ युक्तभागास्त्रयोदश। धूमो नाम महादोषः सर्वकर्मविनाशकः॥
धूमो मण्डलतः शुद्धो व्यतीपातोऽत्र दोषदः। सषड्भेऽत्र व्यतीपाते परिवेषस्तु दोषकृत्॥
परिवेषश्च्युतश्चक्रादिन्द्रचापश्च दोषकृत्। अत्यष्ट्यंशयुते चापे केतुखेटः परोः विषम्॥
एकराशियुते केतौ सूर्यः स्यात्पूर्ववत्समः। अप्रकाशग्रहाश्चैते दोषाः पापग्रहाः स्मृताः॥इति॥

लग्न, सूर्य, गुलिक स्पष्टके योग राशिका स्वामी जिस गृहमें प्राप्त हो उस राशिमें बृहस्पति के जानेपर या उससे कोण ( ९।५ ) में जानेपर मनुष्य मृत्यु पाता है॥ ६०॥

स्पष्ट लग्नेशमें यमकण्टकको घटाकर शेष जो राशि हो उसके नवांशराशिमें गोचरीय गुरुके जानेपर मृत्यु होती है इसमें सन्देह नहीं। यमकण्टकके लानेका प्रकार संस्कृत टीका में देखिये॥ ६१॥

स्पष्ट गुलिकमें स्पष्ट शनिको घटाकर जो शेष हो उस राशिके नवांशवाले राशिसे ९।५ राशिमें गोचरीय शनिके जानेपर मृत्यु होती है। धूम वगैरह पांच उपग्रहोंके योग करनेसे जो राशि हो उसमें जिसका द्रेष्काण हो उस राशिमें शनिके जानेपर भी मृत्यु कहनी चाहिये॥ ६२॥

मान्दिस्फुटोदितनवांशगतेऽमरेज्ये तद्द्वादशांशसहिते दिननाथसूनौ।
द्रेक्काणकोणभवने दिनपे च मृत्युर्लग्नेन्दुमान्दियुतभेंऽश[illegible]दये स्यात्॥ ६३॥

मान्दिस्फुटोदितनवांशगते=स्पष्टगुलिके यस्य राशेर्नवांश उदितो भवेत्तस्मिन् गतेऽमरेज्ये = गुरौ, तथा तस्मिन्स्पष्टगुलिके यस्य द्वादशांशो भवेत्तस्मिन्सहिते = प्राप्ते दिननाथसूनौ = शनौ मृत्युः स्यात्। तत्र मृत्युमास उच्यते। तस्मिन्नेव मान्दिस्फुटे यस्य द्रेष्काणो भवेत्तस्मात्कोण-( ५।९ ) भवने दिनपे = सूर्ये गते मृत्युः। अंशमुपदिशति। लग्नं, इन्दुश्चन्द्रः मान्दिर्गुलिक इति त्रयाणां योगतुल्ये भे = राशौ यावानंशस्तद्गतस्य दिनपस्योदये मृत्युर्वाच्यः॥ ६३॥

गुलिकस्पष्टके उदित नवांशमें गुरुके प्राप्त होनेपर, उसके द्वादशांशमें शनि होनेपर, द्रेष्काण कोण भवनमें सूर्य प्राप्त होनेपर, लग्न-चन्द्र-गुलिकयुत राशि अंशगत सूर्यमें मृत्यु होवे॥ ६३॥

विलग्नमान्दिस्फुटयोगभांशं निर्याणमासं प्रवदन्ति तज्ज्ञाः।
निर्याणचन्द्रो गुलिकेन्दुयोगो लग्नं विलग्नार्किसुतेन्दुयोगम्॥ ६४॥

अत्र निर्याणस्य मासः चन्द्रो लग्नश्चोक्तम्। श्लोकः सरलार्थः॥ ६४॥

स्पष्ट लग्न और गुलिकका योग करनेसे जो राशि हो उसमें जिस राशिका नवांश हो उस राशिकी सङ्ख्याके बराबर मृत्युका मास जानना चाहिये। जैसे योग राशिमें मेषके

नवांश होनेसे १ मास, वृष होनेसे २ रा, एवं सिंहसे ५ वां इत्यादि। इसी तरह गुलिक और चन्द्रमाके योगसे निर्याणका चन्द्रमा याने योग-तुल्य राशिमें जब चन्द्रमार हे तो मरण हो। एवं लग्न, गुलिक और चन्द्रमाके योगवाले राशिका लग्न निर्याणका लग्न जानना चाहिये। ( सु. शा. कार ) ॥ ६४ ॥

गुलिकं रविसूनुं च गुणित्वा नवसङ्ख्यया।
उभयोरैक्यराश्यंशगृहगे रविजे मृतिः ॥ ६५ ॥
षष्ठावसानरन्ध्रेशस्फुटैक्यभवनं गते।
तत्त्रिकोणोपगे वाऽपि मन्दे मृत्युभयं नृणाम् ॥ ६६ ॥

स्फुटार्थौ श्लोकौ ॥ ६५-६६ ॥

गुलिक और शनिको नवसे गुणा करके दोनोंके योगके राश्यंश गृहमें शनिके प्राप्त होने· पर मृत्यु होवे ॥ ६५ ॥

षष्ठेश, द्वादशेश और अष्टमेशके स्पष्ट राश्यादिका योग करनेसे जो राशि हो उस राशिमें अथवा उससे ५।९ राशिमें गोचरीय शनिके जानेपर मनुष्योंको मृत्युभय होता है ॥ ६६ ॥

जीवे नन्दहते विरिञ्चिगुणितं मन्दं च मान्दिस्फुटम्
संयोज्यं पुनरङ्कवृद्धिमिनजं मन्दात्मजं योजयेत् ॥
तद्देवेशपुरोहितस्फुटचयप्राप्तं नवांशं गते
जीवे गोचरगे यदा यदि नृणां निर्याणकालो भवेत् ॥ ६७ ॥

नन्दहते = नवगुणिते जीवे = बृहस्पतौ विरञ्चिगुणितं = नवगुणितं मन्दं=शनिं मान्दि-स्फुटं = स्पष्टगुलिकं च संयोज्यं=युक्तं कर्त्तव्यम्। तस्मिन् योगे पुनरपि अङ्कवृद्धिं = नवगुणं इनजं = शनिं मन्दात्मजं = गुलिकं च योजयेत्। तदेतद्योगजातं देवेशपुरोहितस्य = गुरोः स्फुटे = स्पष्टराश्यादौ चयं = वृद्धिमर्थायुक्तं कृतं सचयप्राप्तं राश्यादि तद्राशिनवांशं गते = चारवशादागते गोचरगे जीवे नृणां निर्याणकालः = मरणकालो भवेत्। अत्रोक्तेनेदं फलि-तम्। तात्कालिके स्पष्टगुरौ दशगुणिते, शनिं मान्दिं चाष्टादशगुणितं संयोज्य यो राशिर्ल-भ्यते तन्नवांशे चारवशादागते जीवे मृत्युर्वाच्य इति। एतेन निर्याणवर्षं यातं गुरोश्चारेण वर्षज्ञानात् ॥ ६७ ॥

स्पष्ट गुरुको ९ से गुणा करके उसमें ९ गुणित शनि और गुलिक जोड़े, फिर उसमें शनि और गुलिक ९ गुणित जोड़कर उस समस्त योगको स्पष्ट गुरुमें जोड़े। उस योग राशिके नवांश राशिमें गोचरीय गुरुके जानेपर निर्याण काल समझना चाहिये। (सु शा.कार) ॥६७॥

भानुस्फुटे नवहते रविजं च मान्दिं हत्वा ग्रहैस्तदिनराशिगणेषु योज्यम्।
मान्दिं पुनश्च नवकेन हतं च युञ्ज्यात् तद्राशिकांशगतपूषणि मृत्युकालः ॥६८॥

इदानीमन्योऽपि मृत्युकाल उच्यते। भानुस्फुटे = स्पष्टसूर्ये नवहते = नवभिर्गुणिते, रविजं=शनिं, मान्दिं=गुलिकं च ग्रहैर्नवसङ्ख्याभिर्हत्वा=सङ्गुण्य तद्गुणनफलमिनराशिगणेषु= स्पष्टसूर्ये योज्यम्। तस्मिन् योगे पुनर्नवकेन = नवभिर्हतं = गुणितं मान्दिं युञ्ज्याद्योजयेत्। एवं योगेन यज्जातं राश्यादि तद्राशिनवांशे चारक्रमादागते पूषणि = सूर्ये मृत्युकालो वाच्यः। पूर्वश्लोकेभ्यो ( ६५-६७ ) निर्याणवर्षं विज्ञाय तस्मिन् वर्षे प्रकृत (६८) श्लोकान्मासज्ञानं भविष्यति। सूर्यस्य चारेण राश्यात्मकेन माससम्भवात् ॥ ६८ ॥

नवसे गुणे हुये स्पष्ट सूर्यमें शनि और गुलिक को ९ से गुणाकर जोड़े, फिर उसमें ९ गुणित गुलिक को जोड़ दे, उस योगकी राशिमें जिसका नवांश हो उस राशिमें जब सूर्य गोचरमें जाय तो मृत्युकाल जानना चाहिये। इससे निर्याणका मास ज्ञात होता है। वर्ष

सुतेशसंयुक्तनभश्चराणां दशाब्दसङ्ख्या दिननायकाप्ताः ।
तच्छेषिते मासि मृतिं नराणां वदन्ति लग्नेशयुतग्रहैर्वा ॥ ६९ ॥

जन्मकाले सुतेशेन = पञ्चमभावेशेन संयुक्तानां नभश्चराणां दशाब्दसङ्ख्या दिननायकेन ( द्वादशसङ्ख्यया ) आप्ताः = भक्ताः कार्यास्तच्छेषिते=शेषतुल्ये मासि नराणां मृतिं वदन्ति । अथवा लग्नेशेन युतैर्ग्रहैरेवं मृत्युमासो ज्ञेयः । लग्नेशेन संयुक्ता ये ग्रहास्तेषां दशावर्षाण्येकत्रीकृत्य द्वादशभिर्भक्तशेषतुल्ये मासि मृत्युर्वाच्यः । यदि लग्नेशेन पञ्चमेशेन वा न केचित् खेटाः संयुक्ताः स्युस्तदा केवलं लग्नेशदशातः पञ्चमेशदशातो वा मासानयनमुक्तवत्कार्यमिति ॥ ६९ ॥

पुत्रेशसे युत ग्रहोंकी दशाकी वर्ष संख्यामें १२ से भाग देकर शेषित मासमें मनुष्यों की मृत्यु आचार्य लोग कहते हैं वा लग्नेश युत ग्रहसे इसी तरह मनुष्योंकी मृत्यु कहते हैं ॥६९॥

चन्द्रस्फुटे नवकसङ्गुणिते तु मान्दिं मन्दं च नन्दहतमिन्दुनियोजनीयम् ।
कृत्वा पुनर्नवहतार्किसुतं समेतं यत्तन्नवांशकशशी मरणप्रदः स्यात् ॥ ७० ॥

श्लोकेनानेन निर्याणकालिकं चन्द्रानयनं कृतम् । व्याख्या ६७।६८ श्लोकवज्ज्ञेया । गणितञ्च ( १० × चं. )+( १८ × श. )+( ९ × गु. ) । लब्धराशौ यन्नवांशकस्तद्गते चन्द्रे मरणमिति ॥ ७० ॥

स्पष्ट चन्द्रमाको ९ से गुणा करके शनि और गुलिकको ९ से गुणाकर एकत्र जोड़कर पुनः ९ से गुणित गुलिकको युक्तकर जो हो उस नवांशका चन्द्रमा मृत्युको देनेवाला होता है ॥७०॥

जातोऽह्नि चेदर्कशनिस्फुटैक्यतारादिनिर्याणदशा प्रकल्प्या ।
तारेशराहुस्फुटयोगतारापूर्वा दशाऽनिष्टकरा रजन्याम् ॥ ७१ ॥

इदानीं निर्याणदशाज्ञानमुच्यते-जात इति । चेद्यदि अह्नि जातः = दिने जन्म भवेत् तदा अर्कशनिस्फुटैक्यतारा = स्पष्टसूर्यशनैश्चरयोर्योगे कृते या तारा ( यन्नक्षत्रम् ) लभ्यते तदादिनिर्याणदशा प्रकल्प्या । तस्यां तारायां यस्य ग्रहस्य दशा भवति तदादिग्रहदशा निर्याणदशा नाम्नी भवति । रजन्यां = रात्रौ जन्म चेत्तदा तारेशराहुस्फुटयोगतारा = चन्द्रराह्वोर्योगे कृते या तारा तत्पूर्वा दशाऽनिष्टकरा = निर्याणस्य दशा भवति । तत्र स्पष्टग्रहवशान्नक्षत्रानयनम् । स्पष्टग्रहं कलीकृत्याष्टशतैर्भागमपहृत्य लब्धमितं गतनक्षत्रं, शेषादनुपातेन वर्तमाननक्षत्रस्य भुक्तमानमिति ( $\frac{६० \times \text{शे.}}{८००}$ = वर्तमाननक्षत्रभुक्तमानम् ) । तस्मिन्वर्तमाननक्षत्रे यस्य ग्रहस्य दशा भवति तदादिनिर्याणदशेति । तत्र नक्षत्रपरत्वेन ग्रहाणां दशाज्ञानार्थं चक्रमवलोक्यम् ॥

| सू. | चं. | मं. | रा. | बृ. | श. | बु. | के. | शु. | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|
| ६ | १० | ७ | १८ | १६ | १९ | १७ | ७ | २० | वर्षाणि |
| कृ. उ. फ. उ. षा. | रो. ह. श्र. | मृ. चि. ध. | आ. स्वा. श. | पुन. वि. पू. भा. | पु. अनु. उ. भा. | श्ले. ज्ये. रे. | मं. मू. अ. | पू. फ. पू. षा. भ. | नक्षत्राणि |

एतद्दशायाः स्पष्टीकरणं १८ अध्याये दशाप्रकरणे द्रष्टव्यम् ॥ ७१ ॥

यदि दिनमें जन्म हो तो स्पष्ट सूर्य और शनिके योगसे जो नक्षत्र हो वही निर्याणकी प्रथम दशा होती है, अर्थात् उस नक्षत्रमें जिस ग्रहकी दशा हो तदादि निर्याणकी दशा जानना

चाहिये। रात्रिके जन्ममें चन्द्रमा और राहुके योगसे जो नक्षत्र मिले उसकी दशा निर्याणकी प्रथम दशा जाने। स्पष्ट ग्रह परसे नक्षत्रका ज्ञान तथा दशा ज्ञान सं० टी० में देखें॥ ७१ ॥

अथ निर्याणहेतुः।

उदयाद्द्वाविंशतिकं द्रेक्काणं कारणं मृत्योः।
तस्याधिपस्य निर्याणं सूचयेद्विधिवत्तमः ॥ ७२ ॥

अथाधुना निर्याणहेतुरर्थादस्य जातस्य किन्निमित्तकं मरणं भवेदिति व्याख्यायते-उदयादिति। उदयाज्जन्मलग्नात् द्वाविंशतिकं (२२) द्रेक्काणं, लग्ने यस्मिन् द्रेष्काणे जन्म भवेत् तदेव द्रेष्काणं लग्नादष्टमभावस्य द्वाविंशतिकं द्रेक्काणं भवति (५६ श्लोके द्रष्टव्यम्) तन्मृत्योः कारणं भवति तस्य द्वाविंशतितमद्रेक्काणस्य योऽधिपः = स्वामी तस्य विधिवत् = तस्य ग्रहस्योक्तदोषैः (२ अध्याये ७५—८१ श्लोकोक्तैः) निर्याणं = मरणं सूचयेत्। तथोक्तं वराहेण—

"द्वाविंशः कथितस्तु कारणं द्रेष्काणो निधनस्य सूरिभिः।
तस्याधिपतिर्भपोऽपि वा निर्याणं स्वगुणैः प्रयच्छति ॥" इति ॥ ७२ ॥

लग्नसे २२ वां द्रेष्काण मृत्युका कारण है। उसका स्वामी अपने विधिसे निर्याण सूचित करता है ॥ ७२ ॥

ज्ञेया जन्मनि यन्नवांशकगतो मान्दिस्तदीयास्तके
राशौ तिष्ठति चेत् शुभस्तु बलवान् सौख्येन नूनं मृतिः।
भूपुत्रे समरेण सूर्यतनये चोरादिभिर्दानवैः
सर्पाद्यैश्च तथा रवौ नृपभयात्क्षीणोडुपे तोयजात् ॥ ७३ ॥

जन्मनि = जन्मकाले मान्दिर्गुलिको यस्य राशेर्नवांशके गतो भवेत्तस्मादस्तके = सप्तमे राशौ चेद्यदि शुभग्रहो बलवान् = बलीभूतस्तिष्ठति तदा मरणकाले नूनं = निश्चितमेव तस्य सौख्येन = सुखपूर्वकं, मृतिर्मरणं भवति। तथा तत्र मान्दिस्थितनवांशराशितः सप्तमे भूपुत्रे= मङ्गले गतवति जातस्य समरेण = युद्धादिना मरणं स्यात्। सूर्यतनये = शनैश्चरे तत्र सति चोरादिभिर्धनलुब्धकैर्दानवैर्भूतप्रेतपिशाचादिभिः, सर्पाद्यैः = पन्नगादिदंशनैश्च मरणं स्यात्। तथा रवौ = सूर्ये तत्र गते नृपभयात् = राजशासनकर्तृकं मरणं (फांसी) स्यात्। क्षीणोडुपे = क्षीणे चन्द्रे सति तोयजात् = जले निमज्जितो म्रियात् इति। उक्तमपि—

"मान्द्यारूढनवांशकामगृहगाः सौम्याः सुमृत्युप्रदाः,
पापास्तत्र गतास्तु दुर्मृतिकरास्तेष्वर्क उर्वीपतेः।
क्षीणेन्दुः सलिले युधि क्षितिसुते सूर्यात्मजो वञ्चनात्,
राहुः पन्नगदंशनान्मरणदो यद्वा विषस्पर्शनात् ॥" इति ॥ ७३ ॥

जन्म-समय जिस नवांशमें गुलिक हो उसके सातवें राशिमें यदि बलवान् शुभग्रह हो तो निश्चय सुखसे मृत्यु होवे। वहां मङ्गल हो तो समरमें मृत्यु हो, शनि हो तो चोरों से, दानवसे, सर्पसे मृत्यु होवे, सूर्य हो तो राजदंडसे, क्षीण चन्द्रमा हो तो जलसे मृत्यु होवे ७३

रन्ध्रं येन निरीक्षितं बलवता तद्धातुकोपान्मृतिः
सूर्यादग्निजलायुधज्वरकफक्षुत्तृट्कृतैश्चामयैः।
लग्नादष्टमधामपे तनुगते कालस्य यद्देहजैः
छिद्रांशे च चरस्थिरोभयगते देशान्तरे स्वे पथि ॥ ७४ ॥

जन्मकाले रन्ध्रं = लग्नादष्टमो भावो येन बलवता ग्रहेण निरीक्षितं भवति तद्धातुकोपात्= तस्य ग्रहस्य यो धातुस्तद्दोषान्मृतिर्वाच्या। तत्र सूर्येणाग्निकोपात्। चन्द्रेण जले मज्जनात्

भौमेनायुधाच्छस्त्रादितः। बुधेन ज्वरकोपात्। गुरुणा कफात्। शुक्रेण क्षुधो बुभुक्षाकोपात्। शनैश्चरेण तृषः कोपात् कृतैर्जातैरामयै रोगैर्मरणं वाच्यम्। बहुभिर्बलिभिरवलोकितेऽष्टमे बहुभिर्दोषैर्मरणम्। अथ लग्नादष्टमधामपे = अष्टमेशे तनुगते = लग्ने गतवति, कालस्य यद्देहजैः = लग्नराशिः कालपुरुषस्य यस्मिन्नङ्गे भवति तज्जैः रोगैरष्टमेशकर्तृकैर्मरणं वाच्यम्। छिद्रांशे च चरस्थिरोभयगते = तत्राष्टमभावे चरराशि-( १।४।७।१० ) नवांशे सति देशान्तरे, स्थिरराशि-( २।५।८।११ ) नवांशे स्वे = स्वकीयदेशे, द्विस्वभावे—राशिनवांशे पथि = स्वदेशादन्यत्र मार्गे मरणं वाच्यम् ॥ ७४ ॥

अष्टम स्थानको जो बलवान् ग्रह देखता हो उसके धातु के कोपसे मृत्यु होती है। सूर्य देखता हो तो अग्निसे, चन्द्रमा देखता हो तो जल से, मङ्गल देखता हो तो आयुधसे, बुध देखता हो तो ज्वरसे, बृहस्पति देखता हो तो कफसे, शुक्र देखता हो तो क्षुधासे, शनि देखता हो तो तृषासे रोगोत्पन्न होकर मृत्यु होती है। लग्नसे अष्टम स्थानका स्वामी लग्नमें हो तो वह लग्नराशि जिस अङ्गमें (कालपुरुषके) हो उस अङ्गमें उत्पन्न रोगसे मरण हो। अष्टम भावका नवांश चरराशिमें हो तो विदेशमें, स्थिर राशिमें गृहमें, द्विस्वभाव राशिमें हो तो रास्तेमें मृत्यु होवे ॥ ७४ ॥

शून्यागारे रन्ध्रराशौ बलिष्ठैरादित्याद्यैर्वीक्षिते खेचरेन्द्रैः।
नो चेत् छिद्रस्थानयातैश्च नो चेत् तद्द्रेक्काणस्वामिना मृत्युमेति ॥ ७५ ॥

रन्ध्रराशौ = अष्टमे भावे बलिष्ठैर्बलयुक्तैरादित्याद्यैः=सूर्यादिभिः खेचरेन्द्रैर्ग्रहैश्चेन्नो वीक्षिते तथा नो चेच्छिद्रस्थानयातैश्चार्थात् बलिभिः सूर्याद्यैरष्टमं स्थानं न युक्तं नावलोकितञ्च भवेत्तदा शून्यागारे=लोकरहिते गृहे तद्द्रेष्काणस्वामिना = तस्याष्टमभावस्य यो द्रेष्काणस्तत्पतिना ( २२ द्रेष्काणेशेनेत्यर्थः ) मृत्युं = मरणमेति। तद्द्रेष्काणपतेर्यो धातुस्तत्कोपान्मृत्युं प्राप्नोतीति भावः ॥ ७५ ॥

यदि बली सूर्य आदि ग्रहोंसे ८ वां भाव दृष्ट या युत न हो तो शूने घरमें मृत्यु होवे। यहां ८ वें भावमें जो द्रेष्काण हो उसके पतिकी धातु रोगसे मृत्यु कहनी चाहिये ॥ ७५ ॥

रव्यादिखेटनिजधातुभवामयेन जातस्तदीयखलकिंकरपीडया वा।
रन्ध्रे शुभग्रहयुते तु विलापहेतुं सौख्येन मृत्युमुपयाति शुभोपयाते ॥ ७६ ॥

रन्ध्रे=अष्टमे भावे सूर्यादिग्रहाणां स्थितौ तत्तद्ग्रहस्य निजः=आत्मीयो यो धातुस्तद्भवामयेन तदुत्पन्नरोगेण, वा तदीयखलकिङ्करपीडया तत्तद्ग्रहस्य खलाः = प्रतिकूलाः ये किङ्कराः=उपग्रहाः कालादयस्तदुत्पादितपीडया जातो मृत्युमुपयाति=म्रियते। तत्राशुभग्रह-( र. मं. श. के. रा. ) युते रन्ध्रेऽतिविलापहेतुमतियातनापूर्वकं मरणं वाच्यम्। शुभोपयाते= रन्ध्रे शुभग्रह-(बु. बृ. शु. चं.) संयुक्ते सौख्येनानायासेन जातो मृत्युमुपयातीति ॥ ७६ ॥

सूर्यादि ग्रहके अपनी धातुके रोगसे और उनके उपग्रहकी पीड़ासे जातककी मृत्यु हो। अष्टम में पापग्रह युक्त हो तो कष्टसे मरण हो और शुभयुक्त हो तो सुखसे मृत्यु होती है ॥ ७६ ॥

तुलायां रुधिरे प्राप्ते वृषभस्थे दिवाकरे।
चन्द्रे मन्दगृहं प्राप्ते विस्रमध्ये मरणं भवेत् ॥ ७७ ॥
बलिना शनिना दृष्टे क्षीणेन्दौ निधनाश्रिते।
गुदाक्षिरुक्पीडया वा मृत्युः शस्त्रकृतो भवेत् ॥ ७८ ॥
लग्नाच्छिद्रत्रिकोणस्थैरर्कारार्किनिशाकरैः।
मृत्युः स्याच्छैलपातेन वज्रकुड्यादिभिश्च वा ॥ ७९ ॥

भौमारुणौ यदि परस्परराशियुक्तौ केन्द्रस्थितौ निधननायकखेचरेन्द्रात्।
जातोऽवसानसमये क्षितिपालकोपात् शूलादिकायुधवरैर्निधनं समेति ॥ ८० ॥

रुधिरे=मङ्गले तुलायां=तुलाराशौ याते, दिवाकरे=सूर्ये वृषराशिगते, चन्द्रे मन्दगृहं = मकरकुम्भयोरन्यतरं प्राप्ते जातस्य विण्मध्ये=पुरीषमये स्थाने मरणं भवेत् ॥ ७७ ॥

निधानाश्रितेऽष्टमभावमुपागते क्षीणेन्दौ बलिना शनिना दृष्टे जातस्य गुदा = गुह्यमार्गमक्षिणी = नेत्रे तयोः रुजा = रोगेणोद्भूतया पीडया, वा शस्त्रकृतः = शस्त्राद्याघातजनितो मृत्युर्भवेत् ॥ ७८ ॥

अर्कारार्किनिशाकरैः=सूर्यभौमशनिचन्द्रैः, लग्नाच्छिद्रत्रिकोणस्थैः=जन्मलग्नादष्टमनवमपञ्चमभावगतैर्जातस्य शैलपातेन = पर्वतात्पतनेन, वा वज्रकुड्यादिभिश्च = वज्र इन्द्रायुधः ( बिजली ) तस्मात् , कुड्यो भित्तिः ( दिवाल ) तदादिभिर्मृत्युः स्यात् । अर्थान्मरणसमये तस्योपरि वज्रः कुड्यो वा पतति ॥ ७९ ॥

भौमारुणौ = मङ्गलसूर्यौ यदि परस्परराशियुक्तौ, ( भौमः सिंहे, सूर्यो मेषे वा वृश्चिके भवेत् ) तथा निधननायकखेचरेन्द्रात् = अष्टमभावेशग्रहात् केन्द्र-( १।४।७।१० ) स्थितौ भवेतां तदा जातो नरोऽवसानसमये=मरणावसरे क्षितिपालकोपात्=नृपस्य वैमुख्यात् शूलादिकायुधवरैः = कुन्तादिभिर्निधनं = मरणं समेति । अस्मिन् योगे जातं नरं नृपो मारयति शूलादिनेति भावः ॥ ८० ॥

**तुलामें मंगल, वृषमें सूर्य और शनिके गृहमें चन्द्रमा हो तो विष्ठामें मृत्यु हो ॥ ७७ ॥**

**क्षीण चन्द्रमा अष्टमस्थ हो उसे बलवान् शनि देखता हो तो गुदारोगसे, नेत्ररोगकी पीडा से वा शस्त्रसे मृत्यु हो ॥ ७८ ॥**

**लग्नसे अष्टम वा त्रिकोणस्थ सूर्य, शनि, चन्द्र और मंगल हों तो शूलसे, वज्रसे, या दिवालसे मृत्यु जाने ॥ ७९ ॥**

**यदि मङ्गल और सूर्य परस्पर राशिमें हों, अष्टमेशसे केन्द्रमें स्थित हों तो ... प्राप्त होनेपर राजाके कोपसे शूलादि श्रेष्ठ आयुधसे जातक मृत्युको**




चन्द्रे तनौ दिनकरे विबलेऽष्टमस्थे
लग्नाद्व्यये सुरगुरौ सुखगे च पापे ।
जातस्य तस्य शयनाच्च्युतहेतुमृत्युः
शस्त्रेण वा निशि निषादकृतेन वा स्यात् ॥
लग्नेशे निधनांशस्थे मूढे षष्ठगतेऽथवा ।
क्षुद्बाधया च मरणं बन्धुहीने महीतले ॥
आयुर्विलग्नाधिपती बलेन हीनौ धरासूनुरन्ध्रेशयुक्तः
युद्धे मृतिं तस्य वदन्ति तज्ज्ञाः शस्त्रेण जातस्य मृतिं विशे
लग्नेश्वरे वाहननाथयुक्ते वागीश्वरेणापि युते त्वजीर्णात् ।
दारेश्वरे वाहनवित्तराशिनाथान्विते वा मरणं त्वजीर्णात्
भुक्त्यंशपो भानुसुतेन युक्तो दुःस्थानगो वा विषभक्षणो
सहाहिना वा शिखिना च तस्य मृत्युर्भवेद्रज्जुनिबन्धने
पिशाचपीडाऽग्निजले विपत्स्याद्भौमाहिमन्दान्यतमेन युक्ते
क्षीणे शशाङ्के निधनस्थिते च दुःस्थे त्वपस्मारभयान्मृतिः स्यात् ॥ ८६ ॥

चन्द्रे ( क्षीणे पूर्णे वा ) तनौ = लग्नगते, दिनकरे = सूर्ये निर्बले विबले (नीचादिगते) सत्यष्टमस्थे, सुरगुरौ = बृहस्पतौ लग्नाद्व्यये (१२) गते, पापे = भौमशनिग्रहयोरन्यतरे सुखगे = लग्नाच्चतुर्थभावगते यस्य जन्म भवति, तस्य जातस्य शयनात्=खट्वादितश्च्युतहेतुमृत्युः = पतननिमित्तकं मरणं वा शस्त्रेण मरणं वा निशि = रात्रौ निषादकृतेन=निषा-

दश्चाण्डालः 'निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः' इत्यमरोक्तेः, तत्कृतेन मृत्युः स्यादिति ॥ ८१ ॥

लग्नेशे = जन्मलग्नपतौ निधनांशस्थे = जन्मलग्नस्थितनवांशाच्चतुःषष्टितमनवांशगते। लग्ने यत्सङ्ख्ये नवांशे जन्म, तत्सङ्ख्य एव नवांशेऽष्टमभावस्येत्यर्थः। वा लग्नेशे मूढे = सूर्येण सहास्तङ्गते वा लग्नात्षष्ठगते जातस्य बन्धुहीने = आत्मीयजनविहीने महीतले क्षुद्बाधया = बुभुक्षोद्भूतपीडया मरणं जायत इति ॥ ८२ ॥

आयुर्विलग्नाधिपती = अष्टमेशलग्नेशौ बलेन हीनौ = निर्बलौ चेद्भवेतां, धरासूनुर्भौमः ऋणेशेन = षष्ठेशेन युक्तश्च भवेत्तदा तस्य जातस्य युद्धे = सङ्ग्रामे शस्त्रेण मृतिं = मरणं तज्ज्ञा विद्वांसो विशेषान्निश्चयेन वदन्ति ॥ ८३ ॥

लग्नेश्वरे = लग्नपतौ वाहननाथेन = चतुर्थेशेन युक्ते वागीश्वरेणापि = द्वितीयभावेशेन च युते जातस्याजीर्णादधिकभुक्तस्यापरिपाकात् मरणं भवेत् वा दारेश्वरे=सप्तमेशे वाहनवित्तनाथाभ्यां-चतुर्थेशद्वितीयेशाभ्यामन्विते = सहिते तु अजीर्णान्मरणं भवेदिति ॥ ८४ ॥

भुक्त्यंशपः = दशमभावस्य नवांशेशो भानुसुतेन = शनिना युक्तो वा दुःस्थानगो ( षष्ठे वाऽष्टमे वा द्वादशे ) भवेत्तदा जातस्य विषभक्षणेन = विषं गरलं तस्य भक्षणेन मरणं वाच्यम्। अथ स भुक्त्यंशपोऽहिना = राहुणा वा शिखिना केतुना = सह युक्तो भवेत्तदा तस्य जातस्य रज्जुनिबन्धनेन = रज्ज्वा गुणेन ( रस्सी ) निबन्धनेन मृत्युर्भवेदिति। अत्र पाठभेदः सर्वार्थचिन्तामणौ—

'भुक्त्यङ्गपौ भानुसुतेन युक्तौ दुःस्थानगौ वा विषभक्षणेन।
राहुध्वजाभ्यां सहितौ च दुःस्थावुद्बन्धनात्तस्य मृतिं वदन्ति ॥'' इति ॥ ८५ ॥

क्षीणे शशाङ्के=क्षीणबले चन्द्रे, भौमाहिमन्दानामन्यतमेन युक्ते निधनस्थिते च पिशाचपीडाग्निजले विपन्मरणं स्यात्। अष्टमस्थे क्षीणचन्द्रे भौमेन युक्ते पिशाचपीडया, अहिना = राहुणा युक्तेऽग्नौ, मन्देन = शनिना युक्ते जले मरणं वाच्यम्। तथा क्षीणे शशाङ्के तथाभूते दुःस्थे ( ६।८।१२ ) तदा तु अपस्मारभयात्, अपस्मारो मृगीरोगः Apilepsy तस्य भयान्मृत्युः स्यादिति ॥ ८६ ॥

चन्द्रमा लग्नमें हो, सूर्य निर्बल अष्टममें हो, लग्नसे १२ वें बृहस्पति हो, सुखमें पापग्रह हो तो उस जातककी मृत्यु चारपाई वगैरहसे गिरनेपर होवे ॥ ८१ ॥

यदि लग्नेश मृत्यु अंश ( ६४ वें नवांश ) में हो अथवा सूर्यके साथ अस्त हो या ६ ठे भावमें हो तो भूखसे पीड़ित होकर अपने बन्धुओंसे रहित जगहमें ( अकेला ) मृत्यु पाता है ॥ ८२ ॥

अष्टम और लग्नके स्वामी बलसे हीन हों मङ्गल षष्ठेशके साथ हो तो उस जातक की मृत्यु युद्धमें हो। विशेषतः शस्त्रसे मरण हो ॥ ८३ ॥

लग्नका स्वामी चतुर्थेशसे युक्त हो और गुरुसे युक्त हो तो अजीर्ण मृत्यु हो। सप्तमेश चतुर्थेश या द्वितीयेशके साथ हो तो अजीर्णसे मरण होता है ॥ ८४ ॥

१० वें भावका नवांशपति शनिसे युक्त हो, दुःस्थानमें प्राप्त हो तो विष खाकर मरे। राहुसे वा केतुसे युक्त हो तो गलेमें रस्सी बांध कर ( फांसी लगा कर ) मरे। मंगल-राहु-शनिसे युत हो तो पिशाच पीड़ासे, आगसे या अगाध जलमें मरण हो। क्षीण चन्द्रमा अशुभ स्थानमें स्थित हो तो अपस्मार ( मृगीरोग ) भयसे मृत्यु हो ॥ ८५-८६ ॥

रन्ध्रस्थानगते सूर्ये भौमे वा बलवर्जिते।
वित्ते पापग्रहैर्युक्ते पित्तरोगान्मृतिं वदेत् ॥ ८७ ॥
जलराशिगते चन्द्रे चाष्टमस्थेऽथवा गुरौ।

पापग्रहेण संदृष्टे क्षयरोगान्मृतिं वदेत् ॥ ८८ ॥
अष्टमस्थानगे शुक्रे पापग्रहनिरीक्षिते ।
वातरोगात्क्षयाद्वाऽपि प्रमेहाद्वा मृतिं वदेत् ॥ ८९ ॥
सूर्यस्थानगते सौम्ये पापग्रहनिरीक्षिते ।
त्रिदोषान्मरणं विन्द्याज् ज्वररोगेण वा वदेत् ॥ ९० ॥
मृत्युस्थानगते राहौ पापग्रहनिरीक्षिते ।
पिटकाद्युष्णरोगाद्वा सर्पदोषान्मृतिर्भवेत् ॥ ९१ ॥
पराभवगते राहौ पापग्रहनिरीक्षिते ।
मसूरिकादिरोगाद्वा पित्तभ्रंशान्मृतिं वदेत् ॥ ९२ ॥

सरलार्थाः श्लोकाः ॥ ८७–९२ ॥

**अष्टमस्थानमें निर्बल सूर्य हो वा निर्बल मंगल हो, धनभावमें पापग्रह हों तो पित्तरोगसे मृत्यु कहे ॥ ८७ ॥**

**चन्द्रमा या गुरु जलचर राशिमें होकर अष्टममें हो उसे पापग्रह देखते हों तो क्षय रोगसे मृत्यु कहे ॥ ८८ ॥**

**अष्टमस्थानमें शुक्र हो उसे पापग्रह देखते हों तो वातरोगसे वा क्षयरोगसे वा प्रमेहसे मृत्यु कहे ॥ ८९ ॥**

**सूर्यके स्थानमें बुध हो उसे पापग्रह देखते हों तो त्रिदोषसे वा ज्वररोगसे मृत्यु कहे॥९०॥**

**मृत्युस्थानमें राहु हो उसे पापग्रह देखता हो तो पिटकसे वा गर्मरोगसे वा सर्पसे मृत्यु होवे ॥ ९१ ॥**

**राहु ८ वेंमें प्राप्त हो पापग्रह उसको देखता हो तो मसूरिकादि रोगसे वा पित्तरोगसे मृत्यु कहे ॥ ९२ ॥**

॥ ८७ ॥

मं. १ श.
रा.
२
१२
ल.
११
१०
३
पित्तरोगा-
न्मरणम्
९
४
५
६
८
के. सू. ७

॥ ८८ ॥

श.
६
७
५ ल.
४
३
८ सू. मं.
क्षयरोगा-
न्मरणम्
२
९
१०
११
१
१२ बृ. चं.

॥ ८९ ॥

श.
ल.
मं.
वात–क्षय-
प्रमेहान्मरणम्
सू.
शु.

॥ ९० ॥

मं.
ल.
५ बु.
र.
त्रिदोषान्मर-
णम्
श.

॥ ९१ ॥

के. ल. श. पिटकोष्णरोगाद्वा सर्पदंशनात् मरणम् मं. रा.

॥ ९२ ॥

के. ल. वसन्ताद्वा पित्तभ्रंशात् मं. श. रा.

अथ हस्तादिविच्छेदयोगाः ।

धर्मे शनौ चाथ गुरौ तृतीये करच्छिदः स्यान्निधने व्यये वा ।
कर्मस्थिताश्चेद्यदि राहुमन्दसौम्याः करच्छेदयुतोऽत्र जातः ॥ ९३ ॥

धर्मे = लग्नान्नवमे भावे शनौ, अथ च गुरौ तृतीये भावे विद्यमाने, वा तौ शनिगुरू क्रमेण निधनेऽष्टमे, व्यये = द्वादशे भवेतां तदा जातः करच्छिदो भवति । तस्य जातस्य करच्छेदो जायते । अथ चेद्यदि राहुमन्दसौम्याः = राहुशनिबुधाः कर्मस्थिताः = दशमभावगता भवेयुस्तदाऽस्मिन्योगे जातः करच्छेदयुतो भवति । असौ जातो हस्तरहितो भवेदित्यर्थः । अत्र सर्वार्थचिन्तामणिकारः—

धर्मे शनौ वा सगुरौ तृतीये करच्छिदोऽर्के निधने व्यये वा ।
विधौ कलत्रे निधनान्विते वा कुजेन युक्ते यदि वा सजीवे । इत्याह ॥ ९३ ॥

यदि ९ वें भावमें शनि और ३ रेमें गुरु हो तो जातकके हाथ कट जाय । अथवा ८ वें शनि और १२ वें गुरु हो तो भी यही फल कहे । यदि राहु शनि और बुध १० वें भावमें हों तो जातक हाथसे रहित हो । ( बु. शा. कार ) ॥ ९३ ॥

शुक्रेण दृष्टे यदि रन्ध्रनाथे सूर्ये शनौ वा फणिनाथयुक्ते ।
क्रूरादिषष्ट्यंशसमन्विते वा विच्छेदनं तच्छिरसो वदन्ति ॥ ९४ ॥
मन्दे विलग्ने मदने सराहौ कन्यान्विते भार्गवनन्दने च ।
क्षीणे शशाङ्के मदराशियुक्ते विच्छिन्नहस्तश्च पदेन सार्द्धम् ॥९५॥

रन्ध्रनाथेऽष्टमभावेशे शुक्रेण दृष्टे, सूर्ये वा शनौ फणिनाथेन=राहुणा युक्ते, वा क्रूरादिषष्ट्यंशेन = पापादिषष्ट्यंशेन समन्विते ( अशुभषष्ट्यंशगत इत्यर्थः ) यदि जन्म भवति तदा तस्य जातस्य शिरसो विच्छेदनं भवति । अस्मिन्योगे जातो नरः शिरश्छेदेन म्रियत इति भावः । अत्र पाठभेदः—

'शुक्रेज्यदृष्टे दिवसाधिनाथे सारे शनौ वा फणिनाथयुक्ते' इति सर्वार्थचिन्तामणौ ॥९४॥

मन्दे = शनौ विलग्ने = जन्मलग्ने, मदने = सप्तमभावे सराहौ = राहुयुक्ते, भार्गवनन्दने = शुक्रे कन्यान्विते = कन्याराशिगते, क्षीणे शशाङ्के = कृष्णचन्द्रे च मदराशियुक्ते= सप्तमभावगते जातः पदेन = चरणेन सार्द्धं विच्छिन्नहस्तो भवति । उक्तयोगे जातो नरो हि करचरणरहितो भवेदित्यर्थः । अत्र सर्वार्थचिन्तामणौ पाठान्तरम्—

मन्दे विलग्ने मदने सराहौ कर्मान्विते भार्गवनन्दने च ।
कृष्णे शशाङ्के मदराशियुक्ते विच्छिन्नहस्तः स भवेत्पदेन ॥ इति ॥ ९५ ॥

यदि अष्टमेश शुक्रसे देखा जाता हो, सूर्य वा शनि राहुसे युक्त हो वा क्रूरादिषष्ठ्यंश युक्त हो तो उसका शिर विच्छेद ( शिर कटा ) कहे ॥ ९४ ॥

शनि लग्नमें, राहु सप्तममें, शुक्र कन्यामें, और क्षीण-चन्द्रमा सप्तममें हो तो जातकके हाथ और पैर दोनों ही कट जाते हैं ॥ ९५ ॥

भूसूनुलग्ने यदि वा तदंशे सूर्यान्विते कृष्णनिशाकरे तु ।
फणीशचन्द्रात्मजसंयुतेऽर्कराशौ यदा तद्युदरप्रभेदम् ॥ ९६ ॥
मन्दोदये सौम्यदृशा विहीने सर्पार्कयुक्ते यदि कृष्णचन्द्रे ।
नाभिप्रवेशोदरभेदमाहुः शस्त्रेण जातस्य पराशराद्याः ॥ ९७ ॥

भूसुनोर्मङ्गलस्य लग्ने=मेषवृश्चिकयोरन्यतरे राशौ लग्ने वा तदंशे=मेषस्य वृश्चिकस्य वा नवांशे लग्नगते, तत्र सूर्यान्विते सूर्ये गतवति, कृष्णपक्षस्य निशाकरे=चन्द्रे तु फणीशचन्द्रात्मजाभ्यां राहुबुधाभ्यां संयुतेऽर्कराशौ = सिंहे विद्यमाने । एतदुक्तं भवति । सूर्यो लग्ने भौमगृहे वा भौमनवांशे भवेत्, क्षीणचन्द्रराहुबुधाः सिंहे भवेयुः । अस्मिन्योगे यदा जन्म भवेत्तद्युदरप्रभेदमर्थात्तस्य जातस्य कुक्षिभेदेन मरणं भवेदिति । अत्रोत्तरार्द्धे भेदः—

'फणीशचन्द्रात्मजसंयुतेऽर्करश्म्याभिभूते क्षुदरस्य भेदः' । सर्वार्थचिन्तामणौ ॥ ९६ ॥

मन्दे उदयो मन्दोदयस्तस्मिंल्लग्नगते शनावित्यर्थः सौम्यदृशा विहीने = शुभग्रहदृष्टिरहिते सर्पार्काभ्यां = राहुसूर्याभ्यां युक्ते कृष्णचन्द्रे = क्षीणचन्द्रे ( सूर्ययुक्तश्चन्द्रोऽमायामेव भवति, तेन कृष्णचन्द्र इति विशेषणं व्यर्थमिवाभाति ) यदि जन्म स्यात्तदा जातस्य नाभिप्रदेशे उदरस्य भेदं शस्त्रेण पराशराद्या महर्षय आहुः ॥ ९७ ॥

यदि मङ्गलकी राशि या मङ्गलका नवांश सहित लग्नमें सूर्य हो और कृष्णपक्षका चन्द्रमा सूर्यकी राशिमें राहु-बुधसे युक्त हो तो जातकका पेट विदीर्ण होवे ॥ ९६ ॥

यदि लग्नवर्ती शनि शुभग्रहोंकी दृष्टिसे वञ्चित हो और कृष्णपक्षका चन्द्रमा राहु और सूर्यसे युत हो तो उस जातककी नाभिके नीचे ( पेरू ) शस्त्रसे भेदित हो ऐसा पराशर प्रभृति मुनियोंने कहा है । ( सु. शा. कार ) ॥ ९७ ॥

## अथ दुर्मरणयोगाः ।

षष्ठाष्टमव्यये चन्द्रे लग्ननाथेन वीक्षिते ।
मन्दमान्द्यगुसंयुक्ते तस्य दुर्मरणं वदेत् ॥ ९८ ॥

चन्द्रे षष्ठाष्टमव्ययाना—( ६।८।१२ ) मन्यतमे गते लग्ननाथेन = जन्मलग्नपतिना वीक्षिते, मन्दमान्द्यगुभिः = शनिगुलिकराहुभिः संयुक्ते च यस्य जन्म भवति तस्य दुर्मरणमपमृत्युर्भवतीति वदेत् ॥ ९८ ॥

यदि चन्द्रमा शनि, गुलिक, राहुसे युक्त होकर ६ ठे, या ८ वें, या १२ वें भावमें हो और लग्नेशसे देखा जाता हो तो उस जातककी अपमृत्यु होती है ॥ ९८ ॥

| | | |
|---|---|---|
| १० / ११ | ९ | च.रा.८ श.गु / ७ |
| १२ | दुर्मरणम् | ६ |
| १ / २ | ३ | ५ / ४ बु. |

मेषूरणस्थे यदि चित्रभानौ भौमे चतुर्थे न च सौम्ययुक्ते ।
सौम्ये विलग्नोपगते तु मृत्युं गोश्रृङ्गतः शूलनिपाततो वा ॥ ९९ ॥

चित्रभानौ = सूर्ये मेषूरणस्थे = लग्नाद्दशमभावगते, भौमे चतुर्थे, न च सौम्यैः=शुभग्रहैः युक्ते ( शुभग्रहयोगरहित इत्यर्थः ), सौम्ये = बुधे तु विलग्नोपगते = जन्मलग्नस्थे

यदि जन्म स्यात्तदा जातस्य गोशृङ्गतो वा शूलनिपाततो मृत्युमुपदिशेत् । अस्मिन्योगे जातं नरं गौः शृङ्गेण व्यापादयेत् वा कश्चित् शूलेन भेदयेदिति भावः ॥ ९९ ॥

**यदि सूर्य दशमें स्थानमें हो, मङ्गल चौथेमें हो, शुभग्रहसे युक्त न हो और बुध लग्नमें हो तो जातककी मृत्यु गाय-बैलकी सींघसे या शूलके निपातनसे हो ॥ ९९ ॥**

दशमसुखसमेतैः पापदृष्टैश्च सौम्यै-
रुदयनिधनयातैः शूलपातान्मृतिः स्यात् ।
शशिनि तनुगृहस्थे बन्धुगे भानुपुत्रे
कलहजनितदोषैरम्बरस्थे च भौमे ॥ १०० ॥

सौम्यैः = शुभग्रहैर्दशमसुखसमेतैरुदयनिधनयातैः पापदृष्टैश्च । इदमुक्तं भवति । शुभग्रहा लग्नाद्दशमचतुर्थप्रथमाष्टमभावगताः पापग्रहैर्दृष्टाश्च भवेयुस्तदा जातस्य शूलपातात्कुन्तादिभेदेन मृतिर्मरणं स्यात् । अथ शशिनि = चन्द्रे तनुगृहस्थे = लग्नगते, भानुपुत्रे=शनौ बन्धुगे=चतुर्थभावस्थे, भौमे=मङ्गलेऽम्बरस्थे=दशमभावगते कलहजनितदोषैर्विवादोत्पन्नदोषैर्मरणं स्यादिति ॥ १०० ॥

**दशम, चतुर्थ, लग्न, और अष्टममें शुभग्रह हों और वे पापग्रह से दृष्ट हों तो शूलपात से मृत्यु हो। चन्द्रमा लग्न में हो, शनि चतुर्थ में हो और दशवें में मंगल हो तो कलह से मृत्यु हो ॥ १०० ॥**

लग्नं गते दिनकरे तरुणीगतेन्दौ पापेक्षिते कलहतोयभयान्मृतिः स्यात् ।
लग्ने दिनेशशशिनौ द्विशरीरकेऽन्ये पापेक्षिता यदि बहूदकशृङ्गिदंष्ट्रात् ॥ १०१ ॥

दिनकरे = सूर्ये लग्नं गते, इन्दौ = चन्द्रे तरुणीगते=जायामुपगते, पापेक्षिते=पापग्रहावलोकिते च कलहतोयभयात्=कलहभयात् तोयभयाद्वा मृतिः स्यात् । अथ लग्ने=जन्मलग्ने दिनेशशशिनौ = सूर्याचन्द्रमसौ भवेतामन्ये ग्रहा भौमादयो द्विशरीरके ( ३।६।९।१२ ) स्थिताः, पापेक्षिताः=यथासम्भवं पापग्रहेणावलोकिताश्च यदि भवेयुस्तदा बहूदकशृङ्गिदंष्ट्रात्= बहूदकेऽगाधजले प्रवूडाच्छृङ्गिणां दंष्ट्राद्वा मरणं स्यादिति ॥ १०१ ॥

**सूर्य लग्नमें, और चन्द्रमा सप्तममें हों दोनोंको पापग्रह देखते हों तो कलहसे या जल में डूबने से जातक की मृत्यु हो। सूर्य और चन्द्रमा लग्न में हों, और सभी ग्रह जहां कहीं द्विस्वभाव राशियों में हों पापग्रहों से दृष्ट हों तो अगम जल में तथा सींगवाले जानवरों के काटने से मृत्यु होती है ॥ १०१ ॥**

तुहिनकिरणलग्नात् पापखेटोपयाते नवमतनयराशौ पापखेटेक्षिते वा ॥
भुजगनिगडपाशे रन्ध्रजन्मत्रिभागे जननसमयलग्नान्मृत्युमुद्बन्धनेन ॥ १०२ ॥

तुहिनकिरणलग्नाच्चन्द्राधिष्ठितभावान्नवमतनयराशौ ( ९।५ भावे ) पापखेटोपयाते = पापग्रहे गतवति, तस्मिन्पापखेटे स्थिते पापग्रहावलोकिते च, वा पक्षान्तरेण-जननसमयलग्नात् = जन्मसमये यल्लग्नं तस्मात्, रन्ध्रजन्मत्रिभागे = अष्टमे भावे जन्मतुल्यद्रेष्काणे ( जन्मलग्ने यदि प्रथमद्रेष्काणं तदाऽष्टमेऽपि प्रथमद्रेष्काणमिति ) भुजगनिगडपाशे = पूर्वोक्तानां ( ५१ श्लोको द्रष्टव्यः ) सर्पनिगडपाशसञ्ज्ञकद्रेष्काणानामन्यतमे सति जातस्योद्बन्धनेन ( कारागारादिना ) मृत्युः स्यादिति ॥ १०२ ॥

**जन्मकालमें चन्द्राश्रित राशिसे ५ वें और ९ वें स्थानमें पापग्रह हो या पापग्रहकी दृष्टि हो, तथा जन्मलग्नसे ८ वें भावका ( लग्नसे २२ वां ) द्रेष्काण यदि सर्प, निगड या पाश संज्ञक ( ५१ श्लो० देखिये ) हो तो जातककी मृत्यु बन्धन ( जेल वगैरह ) से होती है। ( सु० शा० कार ) ॥ १०२ ॥**

मीनोदये शशिरवी यदि पापयुक्तौ पापेऽष्टमे च मरणं रमणीकृतं स्यात् ॥
भौमे सुखे दिनकरे यदि वा मदस्थे मन्देऽष्टमे शशिनि चान्नविशेषजन्यम् ॥१०३॥

शशिरवी = चन्द्रसूर्यौ यदि मीनोदये=मीनलग्ने पापयुक्तौ=भौमशन्योरन्यतरेण सहितौ भवेतां, तथा पापे = मङ्गले वा शनौ लग्नादष्टमे च विद्यमाने ( अत्र पापेक्षिते इत्यपि पाठान्तरम्। तदा लग्ने पापग्रहेण केनचिदवलोकिते इति व्याख्येयम् ) जातस्य रमणीकृतं=स्त्रीजनितं मरणं स्यात्। उक्तयोगे जातस्य स्त्रीविद्वेषान्मरणं जायत इति भावः। अथ भौमेऽङ्गारके सुखे = चतुर्थभावे यदि वा दिनकरे=सूर्ये मदस्थे = सप्तमभावगते, मन्दे = शनौ, शशिनि = चन्द्रे चाष्टमे गतवति जातस्यान्नविशेषजन्यं = कस्यचिदन्नविशेषस्य ( कोद्रवादेः ) भक्षणान्मरणं वाच्यमिति ॥ १०३ ॥

मीन राशि लग्न हो, उसमें पापग्रहके साथ सूर्य और चन्द्रमा हों और ८ वें भावमें पापग्रह हो तो स्त्रीके द्वारा मरण होता है। यदि मंगल सुख भावमें हो, सूर्य सप्तममें हो, शनि और चन्द्र अष्टममें हों तो किसी अन्नसे मृत्यु हो ॥ १०३ ॥

मन्दे धने सुखगते शशिनि क्षमाजे मानस्थिते व्रणकृतेन मृतिं समेति ॥
बन्धुस्थितेऽवनिसुते धनगे शशाङ्के भानौ नभस्थलगते तु गजाश्वयानात् ॥१०४॥

सरलार्थः ॥ १०४ ॥

श.
ल.
चं. व्रणान्मृत्युः मं.

चं.
ल.
मं. यानात्पतनेन मरणम् सू.

शनि धन भावमें हो, चन्द्रमा सुख भावमें हो, और मंगल दशममें हो तो व्रण (घाव) से मृत्यु होती है।

मंगल चौथेमें हो, चन्द्रमा द्वितीयमें हो, और सूर्य दशममें हो तो हाथी घोड़ा आदि सवारीसे मृत्यु होती है ॥ १०४ ॥

रन्ध्रे शनौ वियति हीनबले शशाङ्के भानौ सुखे निभृतकाष्ठहतेन मृत्युः ॥
पापान्तरे जननलग्नपतौ सकेतौ लग्नाष्टमे खलयुते सति मातृकोपात् ॥ १०५ ॥

शनौ रन्ध्रे = जन्मलग्नादष्टमे भावे, हीनबले ( नीचगते शत्रुगृहगते वा ) शशाङ्के= चन्द्रे वियति = दशमे भावे, भानौ = सूर्ये सुखे=चतुर्थे भावे विद्यमाने सति जातस्य निभृतकाष्ठहतेन = निर्धारितकाष्ठपतनाघातेन मृत्युर्भवति। जननलग्नपतौ=जन्मलग्नस्वामिनि, सकेतौ=केतुना सहिते। अत्र सकेन्द्रे इति पाठान्तरे, केन्द्रेण ( १।४।७।१०, भावानामन्यतमेन ) सहित इति व्याख्येयम्। पाठान्तरे = पापग्रहयोरन्तरेऽर्थाल्लग्नेशादेकः पापो द्वितीयेऽन्यो द्वादशे च विद्यमानो भवेत्तथा लग्नाष्टमे = लग्नादष्टमे भावे खलेन = केनचित्पापग्रहेण युते सति मातृकोपात् = स्वमातुर्वैमुख्यान्मृत्युर्भवति। अत्र योगे जातस्य माता दुष्टा भवत्यतस्तत्कोपान्मरणमिति ॥ १०५ ॥

शनि अष्टममें हो, बलरहित चन्द्रमा दशममें हो और सूर्य सुखभाव ( ४ ) में हो तो काष्ठोंकी ढेरमें दब कर मृत्यु होती है।

लग्नेश पापग्रहोंके मध्यमें हो केतुसे युत हो और लग्नसे अष्टम स्थान पापग्रहसे युक्त हो तो माताके कोपसे मृत्यु होती है॥ १०५॥

काष्ठाघातान्मृत्युः।




मातृकोपान्मृत्युः।




सुखास्पदस्थैरशुभैर्ग्रहेन्द्रैस्त्रिकोणगैर्वाऽथ विलग्नराशौ॥
रन्ध्रेश्वरे भूतनयेन सार्द्धं उद्बन्धनात्तस्य मृतिं वदन्ति॥ १०६॥

अशुभैर्ग्रहेन्द्रैः=पापग्रहैः सुखास्पदस्थैश्च-तुर्यदशमभावगतैरथवा त्रिकोणगैर्नवमपञ्चम-भावगैः, रन्ध्रेश्वरे = अष्टमभावेशे भूतनयेन सार्द्धं = भौमेन सह विलग्नराशौ=जन्मलग्ने गते सति जातस्योद्बन्धनात्कारागृहादौ बन्धनेन मरणं वाच्यम्॥ इति॥ १०६॥




अशुभ ग्रह लग्नसे ४ और १० वें भावमें हों, अथवा ५।९ भावमें हों और अष्टमेश मंगलसे युक्त होकर लग्नमें हो तो उसकी मृत्यु बन्धनसे कहते हैं॥ १०६॥

लग्ने रवौ सुते मन्दे रन्ध्रस्थे तुङ्गनायके॥
धर्मं गते धरासूनौ वृक्षाशनिभयान्मृतिः॥ १०७॥

सरलार्थः। अस्मिन्योगे जातस्योपरि वृक्षनिपातेन वज्रनिपातेन वा मरणं वाच्यम्। एवमेव होरासारे—

अर्कोदयेऽर्कपुत्रे
सुतगे, रन्ध्रे विधौ, कुजे भाग्ये।
वृक्षाशनिकुड्यपातै—
र्योगे जातस्य निर्दिशेन्मरणम्॥ इति॥




सूर्य लग्नमें हो, शनि पञ्चममें हो, चन्द्रमा अष्टममें हो और मङ्गल नवममें हो तो वृक्षसे वा वज्रसे मृत्यु होवे॥ १०७॥

पापेष्वाज्ञाबन्धुराशिस्थितेषु क्षीणे तारानायके शत्रुराशौ॥
लग्नाच्छिद्रस्थानराशिं गते वा यात्राकाले शत्रुदोषान्मृतिः स्यात्॥ १०८॥




पापेषु = सूर्यभौमशनिषु, आज्ञाबन्धुराशिस्थितेषु = लग्नाद्दशमचतुर्थभावगतेषु, क्षीणे = कृष्णे तारानायके=चन्द्रे शत्रुराशौ= लग्नात्षष्ठे भावे स्थिते, वा लग्नात् छिद्रस्थानराशिं गतेऽष्टमभावे यो राशिस्तद्गते (अष्टमभावगत इत्यर्थः) जातस्य यात्राकाले शत्रुदोषाद्वैरिविद्वेषान्मृतिः स्यात् ॥ १०८ ॥

पापग्रह दशम और चतुर्थ स्थानमें स्थित हों, क्षीण-चन्द्रमा छठे भावमें हो वा ८ वें भावमें हो तो यात्रा समयमें शत्रुके दोषसे मृत्यु होती है ॥ १०८ ॥

लग्नान्त्यगौ भानुधराकुमारौ दिनेशचन्द्रेन्दुसुता मदस्थाः ॥
सुरालयोद्यानवनप्रदेशे प्रवासभूमौ म्रियते तु जातः ॥ १०९ ॥

भानुधराकुमारौ=शनिभौमौ लग्नान्त्यगौ=शनिर्लग्ने, भौमोऽन्त्ये=द्वादशे, तथा दिनेशचन्द्रेन्दुसुताः=सूर्यचन्द्रबुधाः, मदस्थाः=सप्तमभावगता भवेयुस्तदा जातस्तु सुरालये= देवमन्दिरे उद्याने=आरामे, वनप्रदेशेऽरण्ये, प्रवासभूमौ = स्वनिवासभूमौ वा म्रियते। अत्र होरासारे—

अर्ककुजौ व्ययसंस्थौ, राहुः शशी सप्तमे, गुरुः केन्द्रे।
जातस्य मृतिं विन्यात्प्रवासभूमौ सुरालयोद्याने। इति ॥ १०९ ॥

सूर्य और मङ्गल लग्न और द्वादशमें हों और सप्तम स्थानमें सूर्य, चन्द्र और बुध हों तो जातक देवगृहमें, या बागमें, या जङ्गलमें मरता है ॥ १०९ ॥

लग्नाष्टमे पापयुतेऽष्टमेशे रिःफोपयाते यदि केन्द्रगे वा ॥
लग्नेश्वरे हीनबलेन युक्ते दुर्मार्गदोषात्प्रवदन्ति मृत्युम् ॥११०॥




लग्नाष्टमे=लग्नादष्टमे भावे पापग्रहेण युते, अष्टमेशे रिःफोपयाते = द्वादशभावगते अथवा लग्नेश्वरे हीनबलेन=दुर्बलेन केन चिद्ग्रहेण युक्ते केन्द्र-( १।४।७।१० ) गते यदि जन्म भवेत्तदा जातस्य दुर्मार्गदोषात् मृत्युर्भवेत्। उक्तलक्षणे योगे जातो नरः कुपथे गच्छन्मृत्युमुपैतीति भावः ॥ ११० ॥

यदि लग्नसे अष्टम भाव पापग्रहसे युक्त हो, अष्टमेश बारहवें हो, वा केन्द्रमें होकर लग्नेश हीनबली ग्रहसे युक्त हो तो खराब रस्ताके दोषसे मृत्यु होना आचार्योंने कहा है ॥

भौमार्कजक्षेत्रगते शशाङ्के पापेक्षिते पापखगान्तरस्थे ॥
कन्यागृहे वा हिबुकोपयाते मृतिं वदेदग्निजशस्त्रपातैः ॥ १११ ॥

शशाङ्के=चन्द्रे भौमार्कजक्षेत्रगते=मङ्गलशनैश्चरयोः क्षेत्राणा-( १।८।१०।११ ) मन्यतमे याते, पापेक्षिते = केनचित्पापग्रहेणावलोकिते, तथा पापखगयोरन्तरे मध्ये स्थिते, अथवा शशाङ्के कन्यागृहे हिबुके = चतुर्थभावे चोपगते जातस्याग्निजशस्त्रपातैः = अग्निदाहेन शस्त्रादिपातेन वा मृतिं = मरणं वदेत्प्राज्ञः इति ॥ होरासारे—

भौमार्कजभवनेऽब्जे पापद्वयमध्यगे न सौम्ययुते।
कन्यायां हिमगौ वा ज्वराग्निसम्पातशस्त्रदोषैर्वा ॥ इति ॥ १११ ॥

यदि चन्द्रमा मङ्गलके या शनिके गृहमें हो उसे पापग्रह देखता हो वा पापग्रहके बीचमें कन्याराशिमें हो, वा चतुर्थ भावमें हो तो अग्निसे या शस्त्रके प्रहारसे मृत्यु कहे ॥ १११ ॥

यदि विषघटिकायामष्टमे पापयुक्ते त्रिषशिखिभवसस्त्रैर्जायते तस्य मृत्युः ॥
बहुदिविचरयुक्ते लग्नपे साष्टमेशे बहुजनमृतिकाले मृत्युमेति प्रजातः ॥११२॥

यदि चेत् विषघटिकायां, प्रतिनक्षत्रं केचिच्चत्वारो दण्डा विषघटिका उच्यन्ते । तथा हि मुहूर्तमार्तण्डे—

५० २४ ३० ४० १४ २३
पञ्चाशज्जिनखाग्नयश्च खकृता आखण्डला मूर्च्छना ।
३० २० ३२ ३० २० १८ २१ २०
त्रिंशद्विंशरदाः खरामनखधृत्येकाश्विनौ विंशतिः ॥
१४ १४ १० १४ ५६ २४ २० १० १०
शक्रेन्द्रौ दश वासवा रसशराः सिद्धा नखाऽऽशा दिशो
१८ १६ २४ ३० ४
धृत्यष्टी जिनखाग्नयोऽश्विवत इमाभ्योऽग्रेऽब्धिनाड्यो विषम् ।
नक्षत्रस्य गतैष्ययोगगुणितः स्वस्वध्रुवः षष्टिहृत्
स्पष्टः स्यादत उर्ध्वमब्धिघटिकाः स्पष्टाः स्युरेवं कृताः । इति ।

तस्यां विषघटिकायां तथाऽष्टमे भावे पापग्रहयुक्ते यस्य जन्म भवति तस्य विषशिखिभवशस्त्रैः = विषं गरलम्, शिखी अनलम्, भवः शिवस्तस्य शस्त्रं शूलं तैर्गरलानलशूलैर्मरणं जायते । साष्टमेशे = अष्टमभावेशेन सहिते लग्नपे = लग्नेशे बहुभिर्दिविचरैर्ग्रहैर्युक्ते प्रजातो नरः बहुजनमृतिकाले = बहवो जना म्रियन्ते यस्मिन्काले (महामारीप्रभृतिरोगोपद्रवे) तस्मिन्काले मृत्युमेति = म्रियते ॥ ११२ ॥

यदि विषघटीमें जन्म हो और लग्नसे अष्टम स्थान पापग्रहसे युक्त हो तो जहरीले या अग्निवाले शस्त्रसे उस जातककी मृत्यु होती है ।

लग्नेश अष्टमेशके साथ और भी बहुत ग्रहोंसे युक्त हो तो जिस समय बहुत लोगोंकी मृत्यु होती हो ( हैजा, प्लेगके समय ) उस समय उसकी मृत्यु हो ॥ ११२ ॥

लग्नेशस्थनवांशस्य राशिकोपोद्भवामयैः ॥
मृत्युं तस्य वदन्त्येके हौरिका मुनिपुङ्गवाः ॥ ११३ ॥

लग्नेशः=जन्मलग्नपतिस्तिष्ठति यस्य नवांशे तस्य राशेः कोपोद्भवामयैः ( तस्य नवांशराशेर्यो धातुस्तद्धातुविकाररोगैरित्यर्थः ) तस्य जातस्य मृत्युमेके हौरिकाः=होराशास्त्रविदो मुनिपुङ्गवाः = महर्षयो वदन्ति ॥ ११३ ॥

लग्नेश जिसराशि सम्बन्धी नवांशमें स्थित हो उस राशिके कोपसे उत्पन्न रोगसे उस जातककी मृत्यु हो ऐसा होरा ( ज्योतिः शास्त्रके ) ज्ञाता श्रेष्ठ मुनि लोग कहते हैं ॥११३॥

होरेशेंऽशगते तु तुम्बुरगृहे तापज्वराम्न्युद्भवै-
र्युग्मे श्वासविकारशूलजनितैर्युग्मे शिरःशूलजैः ॥
वातोन्मादभवैः कुलीरभवने सिंहे विषस्फोटकैः
कन्यायां जठराग्निगुह्यजनितैर्जातस्य मृत्युं वदेत् ॥ ११४ ॥
वृकेशोकचतुष्पदज्वरभवैः कीटेऽस्मशस्त्रादिभि-
श्चापे तीव्रमरुद्भवैर्मृगमुखे व्याघ्रादिशूलामयैः ॥
कुम्भे व्याघ्रवधूकृतैरनिमिषे तोयातिसार्यैर्मृतिम्
रंध्रस्यांशगता प्रचारधरणी जातस्य मृत्युप्रदा ॥ ११५ ॥

इदानीं मेषादिद्वादशराश्यंशगते लग्नेशे जातस्य निर्याणकारणान्युच्यन्ते । होरेशे=जन्मलग्नेशे तुम्बुरगृहे = मेषराश्यंशगते=नवांशस्थिते तु जातस्य तापज्वराग्न्युद्भवैः रोगैर्मरणं

स्यात् । ऊक्षे=वृषनवांशे श्वासविकारशूलजनितैः रोगैः, युग्मे=मिथुने शिरःशूलजैः=शिरोवेदनाभिः, कुलीरभवने = कर्कराशौ वातोन्मादभवैः, सिंहे विषस्फोटकैः, कन्यायां जठराग्निगुह्यजनितैः, जूके = तुलायां शोकचतुष्पदज्वरभवैः, कीटे = वृश्चिके अश्मशस्त्रादिभिः, चापे= धनुषि तीव्रमरुद्भवैरतिवातरोगैः, मृगमुखे = मकरे व्याघ्रादिशूलानयैः, कुम्भे व्याघ्रवधूकृतैः= व्याघ्रकृतैः वधूकृतैश्च, अनिमिषे = मीने तोयातिसारैः जातस्य मृत्युं वदेत् । इदमप्यवधेयम् । यस्य राशेर्या प्रचारधरणी ( अ. १. श्लो. १०-१२ ) तस्यां मरणमिति । तथा च रन्ध्रस्याष्टमभावस्यांशगता=नवांशगता या प्रचारधरणी=सञ्चरणभूमिः ( लग्नगतनवांशाच्चतुःषष्टितमो नवांशो यत्र सञ्चरति ) सा भूमिः जातस्य मृत्युप्रदा भवति । अत्र होरासारे—

लग्नादष्टमराशेः स्वभावदोषोद्भवं विजानीयात् ।

निधनेशस्य नवांशस्थितराशिनिमित्तदोषजनितं वा ॥ इति ११४-११५ ॥

लग्नेश यदि मेष-राशिके नवांशमें हो तो तापज्वर या अग्निभयसे मृत्यु हो । वृषके नवांशमें हो तो श्वास विकार और शूलसे मृत्यु हो । मिथुनमें शिरकी पीडासे मृत्यु हो । कर्कराशिमें हो तो वात और उन्मादसे, सिंहमें विस्फोटकसे, कन्यामें जठराग्निसे तथा गुह्यरोगसे, जातककी मृत्यु कहे । तुलामें शोकसे चतुष्पदसे और ज्वरसे, वृश्चिकमें पत्थल और शास्त्रादिसे, धनुमें अत्यन्त वायुसे, मकरमें व्याघ्रादिसे, शूल-रोगसे, कुम्भमें व्याघ्रसे और स्त्रीसे, मीनमें ज्वरसे और अतिसारसे मृत्यु होती है, अष्टम भावका नवांश ( जन्मकालके नवांशसे ६४ वां नवांश, श्लो० ५६ देखिये ) जिस राशिका हो उस राशि की जो भूमि है ( १ अ० १०-१२ श्लो. ) उसी भूमिमें जातककी मृत्यु कहनी चाहिये ॥११४-११५॥

## अथ निर्याणदिग्ज्ञानम् ।

निशि बलयुतराशौ लग्नयातेऽह्निकाले
यदि दिनबलयुक्ते जन्मलग्ने रजन्याम् ॥
उदयगनवभागे स्वामियोगेक्षितानाम्
दिशि मृतिमुपयाति स्थानवीर्याधिकस्य ॥ ११६ ॥

इदानीं निर्याणदिग्ज्ञानमुच्यते । अह्निकाले = दिने जन्मकाले, निशि बलयुतराशौ = रात्रिबलिनि राशौ ( वृषनृयुक्कर्किचापाजनक्राणामन्यतमे ) लग्नयाते = लग्ने गते, रजन्यां= रात्रौ जन्मकाले दिनबलयुक्ते राशौ ( सिंहकन्यातुलावृश्चिकमिथुनकुम्भानामन्यतमे ) जन्मलग्ने सति, उदये = लग्ने गतस्य नवभागस्य = नवांशस्य स्वामी ग्रहो यैर्योगः कृतो यैरीक्षितश्च तेषां मध्ये स्थानवीर्याधिकस्य = यस्य स्थानबलं सर्वतोधिकं तस्य ग्रहस्य दिशि जातो नरो मृतिं = मरणमुपयाति ॥ ११६ ॥

दिनके जन्ममें रात्रिबली राशि या रात्रिके जन्ममें दिनबली राशि लग्न हो तो लग्नगत नवांशपति, उसमें स्थितग्रह, और उसको देखनेवाले ग्रहोंमें जिसका स्थानबल अधिक हो उसकी दिशामें जातक मृत्यु पाता है । ( सु० शा० कारः ) ॥ ११६ ॥

## अथ मोहकालः शवपरिणामश्च ।

होराशेषनवांशमानघटिका मोहः स्वभांशोदिते
पापैस्तद्द्विगुणीकृतस्त्रिगुणितः सौम्यैरवस्थात्मकः ॥
क्रूरापश्चरसौम्यमिश्रतनुगैर्द्वाविंशतित्र्यंशकैः
र्नाशं याति शरीरमग्निजलसंमिश्रश्वमुख्यैः क्रमात् ॥ ११७ ॥

इदानीं मरणावसरे व्यामोहकाल उच्यते-होरेति । होरायाः=लग्नस्य शेषाः=अनुदिता ये नवांशास्तेषां मानादनुपातेन ( यद्यधिकशतेन नवांशेन षष्टिघटिका लभ्यन्ते तदा लग्ना-

नुदितनवांशेन किमिति ? ) या घटिकास्तावन्मितो मोहो मरणकाले मोहाख्यः कालः स्यात् । तस्मिन्स्वभांशेक्षिते = स्वनवांशपतिनाऽवलोकिते तावन्मित एव । पापैरवलोकते द्विगुणीकृतः कालः, सौम्यैरवलोकिते लग्ने त्रिगुणितोऽवस्थात्मकः कालः स्यात् ।

अथ क्रूरैः = पापैः, अपश्वरैर्जलचरैः, सौम्यैः=शुभैः, मिश्रतनुगैः=पापशुभसंयुक्तैः लग्नाद्द्वाविंशतित्र्यंशकैर्द्वाविंशद्रेष्काणैः क्रमात् अग्निजलसंमिश्रश्वमुख्यैः शरीरं नाशं याति । अत्रेदमुक्तं भवति । पापद्रेष्काणे ( द्वाविंशतिमे ) सति मरणान्तरं शरीरमग्निना दह्यते । जलद्रेष्काणे शरीरं जले क्षिप्यते । सौम्यद्रेष्काणे संमिश्रम्भवति शुष्यत इति । मिश्रद्रेष्काणे श्वमुख्यैः = कुक्कुरशृगालादिभिर्भक्ष्यते शरीरमिति । एवमुक्तमपि—

"मोहस्तु मृत्युसमयेऽनुदितांशतुल्यः स्वेशेक्षिते द्विगुणितस्त्रिगुणः शुभैश्च ।
तथा—दहनजलविमिश्रैर्भस्मसंक्लेदशोषैः निधनभवनसंस्थैर्व्यालवर्गैर्विडम्बः ।
इति शवपरिणामश्चिन्तनीयो यथोक्तः" इति वराहमिहिरेण ।

अत्र क्रूरजलसौम्यमिश्रद्रेष्काणा वक्ष्यमाणा नवमाध्याये ( ११२-११५ श्लोकेषु ) द्रष्टव्याः ॥ ११७ ॥

लग्नके शेष ( भोग्य ) नवांश वरसे अनुपातसे जितनी घड़ी ( दण्ड ) समय मिले सो यदि नवांशपतिकी दृष्टि उसपर हो तो उतना काल मोह कहना चाहिये । यदि उस पर ( लग्ननवांशपर ) पापोंकी दृष्टि हो तो गणितागत कालको दूना और शुभ ग्रहों की दृष्टि में त्रिगुण करके मोहकाल कहना चाहिये । अर्थात् मरने के समय उतनी देर तक मोहग्रस्त रहता है ।

अब मरनेके बाद शव-परिणाम कहते हैं । यदि जन्मलग्नसे २२ वां द्रेष्काण ( ८ वें भावका द्रेष्काण ) क्रूर हो तो शव अग्नि में जलाया जाय । जलचर हो तो जल में प्रवाह किया जाय । सौम्य हो तो मिट्टीमें गाड़ा जाय । मिश्र हो तो कुत्ता सियार वगैरह खाजावें । ( सु० शा० कारः ) ॥ ११७ ॥

## अथ मरणानन्तरं गतिज्ञानम् ।

देवमर्त्यपितृनारकालयप्राणिनो गुरुरिनक्षमासुतौ ॥
कुर्युरिन्दुभृगुजौ बधार्कजौ मृत्युकालभवलग्नगा यदि ॥ ११८ ॥

इदानीं मरणान्ते गतिज्ञानमुच्यते-देवमर्त्येति । गुरु=बृहस्पतिः, इनक्षमासुतौ=सूर्यभौमौ, इन्दुभृगुजौ=चन्द्रशुक्रौ, बुधार्कजौ=बुधशनी चैते यदि मृत्युकालभवलग्नगाः=मरणकाले भवमुत्पन्नं यल्लग्नं तस्मिन् गता ( मरणलग्नगता इत्यर्थः ) भवेयुस्तदा क्रमात् देवमर्त्यपितृनारकालयप्राणिनः कुर्युः । गुरुर्मरणकाललग्नगो मृतं देवलोकं नयति । सूर्यभौमौ मरणलग्नगौ मृतं मर्त्यलोकं नयतः । चन्द्रशुक्रौ पितृलोकं नयतः । बुधशनी नरकलोकं नयतः । अत्र स्वल्पजातके वराहेण जन्मकालिकग्रहस्थितिवशेन मृतस्य गतिज्ञानमभिहितम्—

'सुरपितृतिर्यङ्नरकान् गुरुरिन्दुसितावसृग्रवी ज्ञयमौ ।
रिपुरन्ध्रत्र्यंशकपा नयन्ति चास्तारिनिधनस्थाः' । इति ।

परञ्च तत्रैव—'षष्ठाष्टमकण्टकगो गुरुरुच्चो भवति मीनलग्ने वा ।
शेषैरबलैर्जन्मनि मरणे वा मोक्षगतिमाहुः' ॥

इत्युक्तश्लोके मरणे वेति वाक्यावलोकनात् मरणकाललग्नादपि गतिज्ञानं वराहस्याप्यभिमतमिति ॥ ११८ ॥

मरनेके बाद गतिका विचार करते हैं-मरणकालके लग्नमें बृहस्पति हो तो देवलोक (स्वर्ग) जाता है । सूर्य और मङ्गल हों तो मृत्युलोकमें आता है । चन्द्रमा और शुक्र हों तो पितृलोक जाता है । एवं बुध और शनिके होनेसे नरक में जाता है ।(सु० शा० कार) ॥११८॥

भूश्चक्रं स्यात् तुम्बुराद्यं चतुष्कं सिंहागाराद्यं भुवश्चक्रमाहुः ॥
चापादिस्थं तत्सुवश्चक्रजन्यं जीवो मृत्युक्षेत्रलोकं समेति ॥ ११९ ॥

इदानीं लग्नपरत्वेन गतिज्ञानमुच्यते–भूश्चक्रमिति । तुम्बुराद्यं = मेषाद्यं चतुष्कं मेषवृषमिथुनकर्केति लग्नचतुष्टयं भूश्चक्राख्यम् । सिंहागाराद्यं = सिंहकन्यातुलावृश्चिकेति चतुष्कं भुवश्चक्राख्यम् । चापादिस्थं = धनुर्मकरकुम्भमीनेति चतुष्कं सुवश्चक्राख्यं विद्वांस आहुः । चक्रप्रयोजनमुच्यते । जीवो मृत्युक्षेत्रलोकं समेति । यस्मिंल्लग्ने म्रियते तल्लग्नं यच्चक्रगतं भवति तल्लोकं मरणानन्तरं जीवः समेति=यातीति । मेषादिचतुष्के लग्ने मृतो भूर्लोकमुपयाति । सिंहादिचतुष्टये भुवर्लोकमेवं चापादिचतुष्टये स्वर्लोकं गच्छति ॥ ११९ ॥

**मेष, वृष, मिथुन और कर्क ये चार स्थान भूचक्र कहलाते हैं, ये मरणलग्न हों तो जीव भूर्लोकको जाता है। सिंह, कन्या, तुला और वृश्चिक भुवश्चक्र हैं, ये मरणलग्न हों तो जीव भुवर्लोक जाता है। शेष = धनु, = मकर, कुम्भ और मीन ये चार राशि स्वश्चक्र हैं, इन लग्नोंमें मरनेवाला स्वर्लोक जाता है। ( सु० शा० कार ) ॥ ११९ ॥**

रिःफाधीशे पापषष्ट्यंशयाते पापैर्दृष्टे नारकं लोकमेति ॥
राहौ रिःफे मान्दिरन्ध्रेशयुक्ते शत्रुस्थानस्वामिदृष्टे तथा स्यात् ॥ १२० ॥

अन्ययोगान्तरमुच्यते । रिःफाधीशे = जन्मलग्नान्मरणलग्नाद्वा व्ययभावपतौ पापषष्ठ्यंशमुपगते पापग्रहैर्दृष्टे च नारकं लोकं समेति । राहौ रिःफे = द्वादशे, मान्दिरन्ध्रेशाभ्यां युक्ते, तथा शत्रुस्थानस्य षष्ठभावस्य स्वामिना ( षष्ठेशेन ) दृष्टे तथा स्यादर्थान्नरकं गच्छतीति ॥ १२० ॥

**बारह वें भावका स्वामी पापषष्ठ्यंशमें हो उसे पापग्रह देखते हों तो नरकलोक जाता है। राहु, गुलिक और अष्टमेशसे युक्त होकर यदि १२ वें भावमें हो और उसे षष्ठेश देखता हो तो भी नरकलोकमें जाता है। ( सु० शा० कार ) ॥ १२० ॥**

उच्चस्थे शुभखेचरे व्ययगते पापग्रहैः शोभनैः
सन्दृष्टे शुभवर्गके च विपुलं स्वर्गादिभोगं वदेत् ॥
कर्मस्थानपतौ पुरन्दरगुरौ रिःफोपयातेऽथवा
सौम्यव्योमनिवासदृष्टिसहिते तस्यामरत्वं भवेत् ॥ १२१ ॥

शुभग्रहे स्वकीयोच्चराशिगते, व्ययगते = द्वादशभावगते, शुभवर्गके च गते, पापग्रहैः शुभग्रहैश्च सन्दृष्टे, मृतस्य विपुलमुत्कृष्टं स्वर्गादि–भोगं वदेत् । अथवा कर्मस्थानपतौ = दशमभावेशे पुरन्दरस्येन्द्रस्य गुरौ=बृहस्पतौ, रिःफोपयाते = द्वादशभावगते तथा सौम्याश्च ते व्योमनिवासिनो ग्रहाः ( शुभग्रहाः ) तेषां दृष्ट्या सहिते तस्य मृतस्यामरत्वं=देवत्वं भवेत् अस्मिन्योगे जातो मृतो वा देवपदवीमुपयातीति भावः ॥ १२१ ॥

**शुभग्रह उच्चराशिमें होकर १२ वें भावमें हो, उसे पापग्रह और शुभग्रह देखते हों, शुभवर्गमें भी हो तो उसको सुन्दर स्वर्गादिका भोग मिले यह फल कहे। बृहस्पति दशमेश होकर बारहवें हो और शुभग्रहों की दृष्टिसे युक्त हो तो उस जातकको अमर ( देव ) पद प्राप्त हो ॥ १२१ ॥**

बृहस्पतौ चापनवांशकस्थे बलान्विते कर्कटलग्नयाते ॥
त्रिभिश्चतुर्भिः सह कण्टकेषु नभश्चरैर्ब्रह्मपदं प्रयाति ॥ १२२ ॥

अथ ब्रह्मपदप्राप्तियोग उच्यते । बृहस्पतौ चापनवांशकस्थे = धनुर्नवांशगते, बलान्विते = बलयुक्ते, कर्कटलग्नयाते ( अत्र कर्कलग्नं भवति, तस्मिन्गुरुश्चोपगतो भवेत् । कर्कराशिः गुरोरुच्चं धनुर्नवांशकोऽपि गुरोर्गेहं इति तत्र गुरुर्बलीयान्भवत्येवेति 'बलान्विते' पद-

मुक्तम् ) त्रिभिर्वा चतुर्भिः नभश्चरैर्ग्रहैः कण्टकेषु = केन्द्रेषु ( १।४।७।१० ) सह गतैः जातो मृतो वा ब्रह्मपदं = ब्रह्मलोकं प्रयाति । अस्मिन्योगे ब्रह्मपदवीमुपयातीति ॥ १२२ ॥

बलवान् बृहस्पति धनुके नवांशमें होकर कर्क लग्नमें प्राप्त हो और तीन या चार ग्रह केन्द्रमें हों तो ब्रह्मपद प्राप्त करता है ॥ १२२ ॥

धनुर्विलग्ने यदि तुम्बुरांशके लग्ने गुरौ दानवपूजितेऽस्तगे ॥
कन्यागते शीतकरे बलान्विते परं पदं लोकमुपैति शाश्वतम् ॥ १२३ ॥

अथ मोक्षयोग उच्यते । धनुर्विलग्ने = धनुर्धरराशिलग्ने, तुम्बुरांशके = मेषराशेर्नवांशके च लग्ने, गुरौ = बृहस्पतौ विद्यमाने, दानवपूजिते = शुक्रेऽस्ते = लग्नात्सप्तमभावगते, बलान्विते = बलिनि, शीतकरे = चन्द्रे कन्यागते ( धनुषि लग्ने कन्याराशिर्दशमो भावो भवति, तद्गते चन्द्रे ) जातो वा मृतः परं = सर्वत उत्कृष्टं पदं, शाश्वतं = जन्ममरणादिरहितं लोकं ( मोक्षपदमिति ) उपैति । एतद्विष्णुपदमित्युक्तम् । न तस्मात्पुनर्निवर्त्तते । तथोक्तं भगवता श्रीकृष्णेन ।

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् । यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम ॥
आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन ! ।
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते ॥ इति गीतायाम् ।

अत्र वराहोक्तो मोक्षयोगः स्वल्पजातके—
षष्ठाष्टमकण्टकगो गुरुरुच्चो भवति मीनलग्ने वा ।
शेषैरबलैर्जन्मनि मरणे वा मोक्षगतिमाहुः ॥ इति ॥ १२३ ॥

गुरु धनुलग्नमें मेषके नवांशका हो, शुक्र सप्तम भावमें हो और बलवान् चन्द्रमा कन्या राशिमें हो तो मरनेके बाद परम्पद ( मोक्ष ) को प्राप्त हो ॥ १२३ ॥

| | | |
|---|---|---|
| १० / ११ | ९ ल. बृ. ३ | ८ / ७ |
| र. १२ | मोक्षप्राप्तियोगः | ६ चं २१ |
| १ / २ | ३ शु. | ४ / ५ |

## अध्यायोपसंहारः

नैसर्गदायप्रमुखायुरब्दस्फुटक्रियामृत्युदशाप्रभेदाः ॥
निर्याणकालप्रभवाश्च सर्वे सङ्कीर्तिता भानुमुखप्रसादात् ॥ १२४ ॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते
आयुर्दायाध्यायः पञ्चमः ॥ ५ ॥

अत्र प्रसङ्गात् बृहज्जातकोक्तनिर्याणाध्यायो विलिखितस्तत्र
पञ्चदश श्लोका अधोनिर्दिष्टाः—

अनेनाध्यायोपसंहारः क्रियते । सरलार्थः ॥ १२४ ॥

स्वसुखेस्वकेनैव बलिभिस्तद्धातुकोपोद्भवस्तत्संयुक्तभमानजो बहुभवो वीर्यान्वितैर्भूरिभिः ।

अम्भस्यायुधजो ज्वरामयकृतस्तृट्क्षुत्कृतश्चाष्टमे सूर्याद्यैर्निधने चरादिषु परस्वाध्वप्रदेशेष्विति ।
शैलाग्राभिहतस्य सूर्यकुजयोर्मृत्युः खबन्धुस्थयोः कूपे मन्दशशाङ्कभूमितनयैर्बन्ध्वस्तकर्मस्थितैः॥
कन्यायां स्वजनाद्विमोष्णकरयोः पापग्रहैर्दृष्टयोः स्यातां यद्युभयोदयेऽर्कशशिनौ तोये तदा मज्जितः
मन्दे कर्कटगे जलोदरकृतो मृत्युर्मृगाङ्के मृगे शस्त्राग्निप्रभवः शशिन्यशुभयोर्मध्ये कुजर्क्षे स्थिते ।
कन्यायां रुधिरोत्थशोषजनितस्तद्वत्स्थिते शीतगौ । सौरर्क्षे यदि तद्वदेव हिमगौ रज्ज्वग्निपातैः कृतः॥
बन्धाद्धीनवमस्थयोरशुभयोः सौम्यग्रहादृष्टयोर्द्रेष्काणैश्च सपाशसर्पनिगडैश्छिद्रस्थितैर्बन्धतः ।
कन्यायामशुभान्विते ऽस्तमयगे चन्द्रे सिते मेषगे सूर्ये लग्नगते च विद्धि मरणं स्त्रीहेतुकं मन्दिरे॥
शूलोद्भिन्नतनुः सुखेऽवनिसुते सूर्येऽपि वा स्वे यमे सप्रक्षीणहिमांशुभिश्च युगपत् पापैस्त्रिकोणाद्यगैः॥
बन्धुस्थे च रवौ वियत्यवनिजे क्षीणेन्दुसंवीक्षिते काष्ठेनाभिहतः प्रयाति मरणं सूर्यात्मजेनेक्षिते॥

रन्ध्रास्पदाङ्गहिबुकैर्लगुडाहताङ्गः प्रक्षीणचन्द्ररुधिरार्किदिनेशयुक्तैः ।
तैरेव कर्मनवमोदयपुत्रसंस्थैर्धूमाग्निबन्धनशरीरनिकुट्टनान्तः ॥ ६ ॥
बन्ध्वस्तकर्मसहितैः कुजसूर्यमन्दैर्निर्याणमायुधशिखिक्षितिपालकोपैः ।
सौरेन्दुभूमितनयैः स्वसुखास्पदस्थैर्ज्ञेयः क्षतक्रिमिकृतश्च शरीरघातः ॥ ७ ॥

खस्थेऽर्केऽवनिजे रसातलगते यानप्रपाताद्वधो यन्त्रोत्पीडनजः कुजेऽस्तमयगे सौरेन्द्विनाभ्युद्गमे।
चिणमध्ये रुधिरार्किशीतकिरणैर्जूकाजसौरर्क्षगैर्यातैर्वागलितेन्दुसूर्यरुधिरैर्व्योमास्तबन्ध्वाह्वयान् ॥८॥

वीर्यान्वितवक्रवीक्षिते क्षीणेन्दौ निधनस्थितेऽर्कजे ॥
गुह्योद्भवरोगपीडया मृत्युः स्यात् कृमिशस्त्रदाहजः ॥ ९ ॥
अस्ते रवौ सरुधिरे निधनेऽर्कपुत्रे क्षीणे रसातलगते हिमगौ खगान्तः ॥
लग्नात्मजाष्टमतपःस्विनभौममन्दचन्द्रैस्तु शैलशिखराशनिकुड्यपातैः ॥ १० ॥
द्वाविंशः कथितस्तु कारणं द्रेष्काणो निधनस्य सूरिभिः ।
तस्याधिपतिर्भूपोऽपि वा निर्याणं स्वगुणैः प्रयच्छति ॥ ११ ॥
होरानवांशकप्रयुक्तसमानभूमौ योगेक्षणादिभिरतः परिकल्प्यमेतत् ॥
मोहस्तु मृत्युसमयेऽनुदितांशतुल्यः स्वेशेक्षिते द्विगुणितस्त्रिगुणः शुभैश्च ॥ १२ ॥
दहनजलविमिश्रैर्भस्मसंक्लेदशोषैः निधनभवनसंस्थैर्व्यालवर्गैर्विडम्बः ।
इति शवपरिणामश्चिन्तनीयो यथोक्तः पृथुविरचितशास्त्राद् गत्यनूकादि चिन्त्यम् ॥ १३ ॥
गुरुरुडुपतिशुक्रौ सूर्यभौमौ यमज्ञौ विबुधपितृतिरश्चो नारकीयांश्च कुर्युः ।
दिनकरशशिवीर्याधिष्ठितात् त्र्यंशनाथात् प्रवरसमनिकृष्टास्तुङ्गह्रासादनूके ॥ १४ ॥
गतिरपि रिपुरन्ध्रत्र्यंशपोऽस्तस्थितो वा गुरुरथरिपुकेन्द्रच्छिद्रगः स्वोच्चसंस्थः ।
उदयति भवनेऽन्त्ये सौम्यभागे च मोक्षो भवति यदि बलेन प्रोज्झितास्तत्र शेषाः ॥१५॥

एषां श्लोकानां व्याख्या भट्टोत्पलकृता विलोक्याः । अत्र भूयस्त्वभयान्न लिखिता इति ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता । आयुर्दायाह्वयेऽध्याये पञ्चमे पूर्णतां गता ॥ ५ ॥

सूर्य आदि नव ग्रहों की कृपासे मैं ( वैद्यनाथ दैवज्ञ ) ने निसर्गायु प्रभृति विविध आयुकी स्पष्टीक्रिया, और मृत्यु दशाके भेदों को इस पांचवे अध्यायमें वर्णन किया। ( सु० शा० कार ) ॥ १२५ ॥

इति श्रीवैद्यनाथदैवज्ञविरचिते जातकपारिजाते आयुर्दायाख्ये पञ्चमेऽध्याये 'विमला' हिन्दी टीका समाप्ता ॥ ५ ॥

## अथ जातकभङ्गाध्यायः ॥ ६ ॥

### तत्रादौ जातकभङ्गपरिभाषा।

केचिद् योगा राजयोगस्य भङ्गाः केचिद्रेका नाम दारिद्र्ययोगाः ॥
केचित्प्रेष्याः के च केमद्रुमाख्यास्ते चत्वारो जातभङ्गाकराः स्युः ॥ १ ॥

अथातो जातकभङ्गाध्यायो व्याख्यायते । तत्र को नाम जातकभङ्ग इत्युच्यते । केचिदिति । राजयोगस्य = यस्मिन्योगे जातो राजा भवति तस्य राजयोगस्य भङ्गाः = नाशकाः केचिद्योगाः ( मेषे जूकनवांशक इत्यादिवक्ष्यमाणाः ) केचिद्रेका नाम दारिद्र्ययोगाः ( लग्नेशे बलवर्जिते इत्यादिवक्ष्यमाणाः ) केचित्प्रेष्या योगाः (माने रवावित्यादिवक्ष्यमाणाः) के च केमद्रुमयोगाः ( लग्नस्थिते हिमकरे इत्यादिवक्ष्यमाणाः ) इत्येते चत्वारो जातभङ्गाकाराः स्युरिति । एषां चतुर्णां मध्ये कश्चिदेको योगो यस्य जन्मकाले भवति तस्य जीवनं व्यर्थमिवेति भावः ॥ १ ॥

कितने राजयोगके नाशक योग, कितने रेका नामक दरिद्रयोग, कितने प्रेष्ययोग, कितने केमद्रुमयोग ये चार प्रकारके जातकभङ्ग ( शुभ योग नाशक ) कहे गये हैं । ( हु० शा० कारः ) ॥ १ ॥

### राजभङ्गाः ।

मेषे जूकनवांशके दिनकरे पापेक्षिते निर्धनः
कन्याराशिगते यदा भृगुसुते कन्यांशके भिक्षुकः ॥
नीचर्क्षे त्वतिनीचभागसहिते जातो दिवानायके
राजश्रेष्ठकुलाग्रजोऽपि विगतश्रीपुत्रदाराशनः ॥ १ ॥

यस्मिन्योगे जातो राजाऽपि दुःखभाग्भवतीत्युच्यते । राजश्रेष्ठकुलाग्रजोऽपि = राज्ञां श्रेष्ठकुले उत्तमकुलेऽग्रजः प्रथमजन्माऽपि, दिनकरे = सूर्ये मेषे (स्वोच्चे) राशौ जूकनवांशके= तुलानवांशे ( मेषस्य विंशतिभागादुपरि त्रयोविंशांशे सत्र्यंशे ( २०°–२३°।२०′ ) विद्यमाने तस्मिन् पापग्रहेर्वीक्षिते च यदि जायते तदाऽसौ जातो निर्धनो भवति । एतदुक्तं भवति राजकुले यः प्रथमः पुत्रः स राजा भवति, परन्तु तस्य जन्मकाले यदीदृग्योगो भवेत्तदा ( राज्ञो ज्येष्ठपुत्रोऽपि ) निर्धन एव भवति । एवं भृगुसुते=शुक्रे कन्याराशिगते कन्यांशके च विद्यमानेऽर्थात्कन्याया नवमे नवांशे (२६°।४०′–३०° ) विद्यमाने जातो भिक्षुको याचको भवति । अथ च दिवानायके=सूर्ये नीचर्क्षे=तुलाराशौ त्वतिनीचभागसहिते=दशमेंऽशे (६ रा १०° ) विद्यमाने सति सः ( राजश्रेष्ठकुलाग्रजोऽपि ) विगतश्रीपुत्रदाराशनः = श्रियः सम्पदः, पुत्रा आत्मजाः, दाराः = स्त्रियः, अशनं = भोजनं तैर्विगतो रहितो भवति । सर्वथा दुर्भाग्यो भवतीति भावः ॥ २ ॥

यदि सूर्य मेष राशिमें तुलाके नवांशमें हो उसे पापग्रह देखते हों तो जातक निर्धन होता है । यदि शुक्र कन्या राशिमें कन्या के ही नवांशमें हो तो भिक्षुक होता है । यदि सूर्य नीच राशि ( तुला ) में अतिनीच भाग (१०) से युत हो तो जातक श्रेष्ठ राज कुलका होनेपर भी लक्ष्मी, पुत्र, स्त्री और भोजनसे रहित होता है ॥ २ ॥

मन्दाराहिसमन्वितेऽमरगुरौ शुक्रेन्दुपुत्रेक्षिते
जातः शूद्रकलेवरोऽपि निखिलां विद्यामुपैति श्रियम् ।
ताराnathविकर्तनौ गदगतौ सौरेण संवीक्षितौ
जातोऽसौ समुपैति नीचविहितोपायेन सञ्जीवनम् ॥ ३ ॥

अमरगुरौ = बृहस्पतौ मन्दाराहिसमन्विते = शनिभौमराहुभिर्युक्ते शुक्रेन्दुपुत्रेक्षिते = शुक्रबुधाभ्यामवलोकिते च जातः शूद्रकलेवरोऽपि=शूद्रजातिरपि यदि भवति तथापि निखिलां विद्यां श्रियं = सम्पदश्चोपैति = प्राप्नोति । तथोक्तं सर्वार्थचिन्तामणौ—

"ध्वजाहिमन्दैः सहितेन्द्रपूज्ये शुक्रेक्षिते वा शशिसूनुदृष्टे ।
शूद्रोऽपि चेद्विप्रसत्वमेति विद्यां च सर्वामधिगम्य जातः" इति ॥

तारानाथविकर्त्तनौ = चन्द्रसूर्यौ गदगतौ = षष्ठभावगतौ सौरेण = शनैश्चरेण वीक्षितौ च भवेतां तदा जातोऽसौ नीचविहितोपायेन = नीचजातीनां जीवने य उपायो विहितस्तेन ( दासादिकर्मणा ) सञ्जीवनं = जीवनवृत्तिं समुपैति । अर्थादस्मिन्योगे कुलीनोऽपि जातो नीचवृत्तिको भवतीति तात्पर्यम् ॥ ३ ॥

गुरु यदि शनि, मङ्गल और राहुसे युक्त हो, शुक्र और बुधसे दृष्ट हो तो जातक शूद्र कुलमें उत्पन्न होने पर भी सम्पूर्ण विद्या और लक्ष्मीको प्राप्त करता है ।

लग्नसे छठे स्थानमें चन्द्रमा और सूर्य हों उन्हे शनि देखता हो तो वह जातक नीच कर्मके द्वारा जीविका पावे ॥ ३ ॥

केन्द्रस्थे वा विलग्ने दिनकरतनये सौम्यखेटैरदृष्टे
भूसूनोः कालहोरासमयजमनुजो भिक्षुको दासभूतः ॥
सौम्यादृष्टेऽर्किदृष्टे शशिनि सरुधिरे मेषगे भिक्षुकः स्या-
दर्कोन्द्वर्क्कैः सकेन्द्रैर्जडतनुरधनश्चान्यभुक्ताशनः स्यात् ॥ ४ ॥

दिनकरतनये = शनैश्चरे केन्द्र-( १।४।७।१० ) स्थे वा विलग्ने = लग्नगते, सौम्यखेटैः = शुभग्रहैरदृष्टे=अनवलोकिते तथा भूसुनोर्भौमस्य कालहोरासमये जातो मनुजो भिक्षुको याचको, दासभूतोऽन्यस्य भृत्यश्च भवति । अथ सरुधिरे=भौमसहिते शशिनि=चन्द्रे मेषराशिगते सौम्यैः = शुभैरदृष्टे, अर्किणा = शनिना दृष्टे च जातो भिक्षुकः स्यात् । अत्र सर्वार्थचिन्तामणौ—मेपे शशांके रविसूनुदृष्टे भिक्षाशनो भूमिसूतेन दृष्टे ।

निःश्रीर्विलग्नस्य निशाकरस्य लुब्धो दिनेशात्मजदृष्टियोगात् ॥
शुभग्रहाणामवलोकनेन हीनाङ्गवेदत्र समन्विताद्वा ।
तत्कालहोराधिपतौ धराजे केन्द्रे शनौ चेद्यदि वा विलग्ने ।
शुभग्रहाणामवलोकहीने दासस्तु भिक्षाशनदेहशीलः ॥ इति ॥

अर्कोन्द्वर्कैः=शनिचन्द्रसूर्यैः सकेन्द्रैः = केन्द्र-( १।४।७।१० ) गतैः जातो नरो जडतनुः = प्रज्ञाहीनशरीरः, अधनः = निर्धनः, अन्यभुक्ताशनः=परोच्छिष्टभोजी च भवति ।

अत्र प्रसङ्गात् कालहोराज्ञानप्रकारः—

वारादेर्घटिकाद्विघ्ना स्वाक्षहृच्छेषवर्जिता । सैका तष्टा नगैः कालहोरेशा दिनपात् क्रमात् ॥ ४ ॥

शनि केन्द्रमें वा लग्नमें हो, उसको शुभग्रह न देखते हों तथा मङ्गलकी कालहोरामें उत्पन्न हो तो मनुष्य भिक्षुक तथा दास होता है । चन्द्रमा मङ्गलके साथ मेष राशिमें हो उसको शुभ ग्रह न देखता हो और शनि देखता हो तो भिक्षुक होता है । केन्द्र में शनि, चन्द्र और सूर्य हों तो जड शरीर हो, दरिद्र हो, दूसरेका जूठा खानेवाला हो ॥ ४ ॥

मन्दे केन्द्रगते विलग्नगृहगे चन्द्रेऽन्त्यभे वाक्पतौ
जातो भिक्षुक एव शोकजलधौ मग्नो विदेशं गतः ॥
धर्मस्थानपतौ तु रिःफगृहगे पापग्रहे केन्द्रगे

जातः पापरतः पराम्रधनभुग् विद्याविहीनो भवेत् ॥ ५ ॥

मन्दे=शनौ केन्द्र-( १।४।७।१० ) गते, चन्द्रे विलग्नगृहगे=जन्मलग्ने गते, वाक्पतौ=गुरावन्त्यभे=द्वादशभावे गतवति जातो भिक्षुकः सन्नेव शोकजलधौ=चिन्तासागरे मग्नो लीनो विदेशं गतोऽन्यदेशं गतो भवति । तु पुनः-धर्मस्थानपतौ=नवमेशे रिःफगृहगे=द्वादशभावगते, पापग्रहे केन्द्रगते च जातः पापरतः, पराम्रधनभुक्, विद्याविहीनश्च भवेत् ॥५॥







शनि केन्द्रमें हो, चन्द्रमा लग्नमें हो और बृहस्पति बारहवें में हो तो जातक भिक्षुक और शोकरूपी समुद्रमें निमग्न होकर विदेश चला जाय। नववें भावका स्वामी बारहवें हो पापग्रह केन्द्रमें हो तो जातक पापमें रत हो, पराया अन्न, धन भोगनेवाला तथा मूर्ख हो ॥

जीवे राहुयुतेऽथवा शिखियुते पापेक्षिते नीचकृत्
नीचे नीचसमीक्षिते सुरगुरौ विप्रोऽतिदुष्कर्मकृत् ॥
निद्री चन्द्रविलग्नपौ सह दिवानाथेन मन्देक्षितौ
प्रेष्यः स्यादशुभैः शुभग्रहदृशा हीनैश्च मानस्थितैः ॥ ६ ॥

यत्र तत्र जीवे = बृहस्पतौ राहुणा युतेऽथवा शिखिना=केतुना युते, पापेन=शनिभौमसूर्याणामन्यतमेनेक्षिते = दृष्टे च जातो नीचकृदुच्चकुले जायमानोऽपि नीचकर्मकृद्भवति । सुरगुरौ=बृहस्पतौ नीचे=मकरराशौ गतवति नीचसमीक्षिते=नीचगतग्रहै-(पापग्रहै-) रवलोकिते च विप्रो ब्राह्मणोऽपि जायमानोऽतिदुष्कर्मकृदतिगर्हितकर्मा भवति ।

अत्र सर्वार्थचिन्तामणिकारेण—

जीवे सकेतौ यदि वा सराहौ चाण्डालता पापनिरीक्षिते चेत् ।
नीचांशके नीचसमन्विते वा जीवे द्विजश्चेदपि तादृशः स्यात्, इत्युक्तम् ॥




दिवानाथेन सह=संयुक्तौ चन्द्रविलग्नपौ मन्देक्षितौ = शनिना दृष्टौ भवेतां तदा जातः निद्री=सदा निद्रालुः भवेत्, तथा मानस्थितैर्दशमभावगतैरशुभैः=पापग्रहैः शुभग्रहाणां दृशा = दृष्ट्या हीनैः = रहितैश्च जातो नरः प्रेष्यः=परभृत्यो भवति ॥ ६ ॥

बृहस्पति राहु, वा केतुसे युक्त हो उसे पापग्रह देखते हों तो जातक नीच कर्म करनेवाला हो। बृहस्पति नीच राशिमें नीच गत ग्रहसे देखा जाता हो तो जातक ब्राह्मण होने पर भी अत्यन्त कुकर्म करनेवाला होता है।

लग्नेश या चन्द्रमा नीच राशिमें होकर सूर्यके साथ हो उसे शनि देखता हो तो जातक निद्रालु हो। यदि पाप ग्रह दशममें हो उन्हें शुभग्रह न देखते हों तो दूत हो ॥ ६ ॥

भाग्येशेऽन्त्यगते सहोदरगतैः पापैर्व्ययेशेऽर्थगे
दुर्भोजी परिबन्धनादिसहितो जातोऽन्यजायारतः ।।
सर्वैर्नीचसपत्नभागसहितैः कर्मेतरस्थानगै-
र्विद्याबुद्धिकलत्रपुत्ररहितः कोपी सदा भैक्षकृत् ।। ७ ।।

भाग्येशे = नवमभावेशे अन्त्यगते = द्वादशभावगते, पापैः सहोदरगतैस्तृतीयभावगतैः व्ययेशेऽर्थगे = द्वितीयभावगते जातो दुर्भोजी = गर्हिताशनो भवति, परिबन्धनादिभिः = यातनादिभिः सहितो भवति, अन्येषां = परेषां जायासु = स्त्रीषु रतो लीनो भवति ।

अथ सर्वैः ग्रहैर्नीचसपत्नभागसहितैः = कैश्चिन्नीचभागसहितैः कैश्चिच्छत्रुभागसहितैश्च कर्मेतरस्थानगैः = कर्म विहाय = दशमभावं विहायेतरेषु स्थानेषु स्थितैर्जातो नरो विद्यया, बुद्ध्या, कलत्रेण, पुत्रैश्च रहितो विहीनो भवति, कोपी = क्रोधनो भवति, तथा सदा भैक्षकृद् भवति ।। ७ ।।

( १ )




( २ )




नवमेश बारह वें में हो, तृतीय में पाप ग्रह हों, व्ययेश दूसरे में हो तो जातक दुर्भोजी ( मांस, लहसून, पियाज आदि खानेवाला ) बन्धनसे युक्त और दूसरे की स्त्री से विलास करनेवाला हो । सभी ग्रह नीचराशिमें शत्रुके नवांशमें हों दशमसे भिन्न स्थानमें स्थित हों तो विद्या, बुद्धि, स्त्री, और पुत्रसे रहित क्रोधी हो और भिक्षा मांगनेवाला हो ।। ७ ।।

लग्नस्वामिनि रिःफगे तु वियति क्रूरे सचन्द्रे कुजे
जातोऽसौ परदेशगः सुखधनत्यागी दरिद्रो भवेत् ।।
होराजन्मपती न शोभनयुतावस्तंगतावन्त्यगे
भाग्येशे यदि नष्टदारतनयो जातः कुलध्वंसकः ।। ८ ।।

लग्नस्वामिनि = जन्मलग्नेशे रिःफगे = लग्नाद्द्वादशभावगते, क्रूरे = पापग्रहे शनिसूर्ययोरन्यतरे वियति=दशमभावगते तत्र सचन्द्रे कुजे ( चन्द्रभौमौ तत्र संयुक्तौ भवेताम् ) तदाऽसौ जातः परदेशगः, सुखधनत्यागी, दरिद्रश्च भवेत् ।

होराजन्मपती = लग्नेश-चन्द्रराशीशौ शोभनेन = शुभग्रहेण युतौ न भवेतामस्तंगतौ वा भवेतां, भाग्येशे = नवमभावेशेऽन्त्यगते = द्वादशभावगते यदि जन्म भवेत्तदा जातो नष्टदारतनयः = मृतस्त्रीपुत्रकः कुलध्वंसकश्च भवति । उक्तञ्च सर्वार्थचिन्तामणौ—

"होरेश्वरे रिष्फगते तु माने क्रूरान्विते भौमयुते शशाङ्के ।
जातोऽभिशस्तः परदेशवासी भिक्षाशनी दुःखितदेहभाक्स्यात् ।।
भाग्येश्वरे चान्त्यगते सपापे जन्मोदयेशे रविगे कुलघ्नः ।
विनष्टपुत्रार्थकलत्रभाक्स्याच्छुभैर्न युक्तौ यदि वीक्षितौ वा" इति ।। ८ ।।




यदि लग्नेश बारहवें भावमें हो, दशवें भावमें पापग्रह हो उसमें मङ्गल चन्द्रमाके साथ हो तो वह जातक परदेशवासी हो, सुख और धनसे रहित होकर दरिद्र हो।

यदि लग्नेश और जन्मराशीश ये दोनों शुभग्रहोंसे युक्त नहीं हों अथवा अस्तङ्गत हों तथा नवमेश १२वें भावमें हो तो जातक स्त्री और पुत्रोंसे रहित होता है, तथा अपने कुलका संहार करनेवाला होता है। ( सु० शा० कार ) ॥ ८ ॥

सौम्यासौम्ययुतेषु केन्द्रभनेष्विन्दौ तनुस्वामिना
दृष्टे मन्दनवांशके सति कुलध्वंसी विदारात्मजः ॥
कामेबोधनशुक्रयोः सुतगृहे जीवे सुखस्थे शुभे
पापे रन्ध्रगते च चन्द्रभवनाज्जाताः कुलध्वंसिनः ॥ ९ ॥

केन्द्रभवनेषु ( १।४।७।१० ) सौम्यासौम्ययुतेषु, ( शुभग्रहाः पापग्रहाश्च केन्द्रगता भवेयुरित्यर्थः ) इन्दौ=चन्द्रे यत्र तत्र तनुस्वामिना=जन्मलग्नेशेन दृष्टे मन्दनवांशके=शनि-( १०।११ ) राशिनवांशे च गते सति जातो नरः कुलध्वंसी = वंशनाशकः, विदारात्मजः= स्त्रीपुत्ररहितश्च भवति। उक्तं सर्वार्थचिन्तामणौ—

शुभाशुभैः केन्द्रगतैः शशाङ्कः लग्नेश्वरेणापि निरीक्षितश्चेत्।
सौरांशके च यदि संयुतश्चेज्जातः कुलध्वंसकरो विदारः ॥ इति ॥

बोधनशुक्रयोः कामे = लग्नात्सप्तमे भावे स्थितयोः, सुतगृहे = पञ्चमे भावे जीवे=गुरौ गतवति, अशुभे=कस्मिंश्चित्पापे सुखस्थे=चतुर्थभावगते, तथा च चन्द्रभवनाच्चन्द्राधिष्ठित-राशितो रन्ध्रगते पापग्रहे जाताः = समुत्पन्ना नराः कुलध्वंसिनो भवन्ति ॥ ९ ॥

लग्नसे केन्द्र ( १।४।७।१० ) स्थानमें शुभ तथा अशुभ ग्रह हों चन्द्रमा लग्नेशसे देखा जाता हो और शनिके नवांशमें हो तो जातक कुलका नाश करनेवाला तथा स्त्री और पुत्रों से रहित हो।

यदि ७ वें स्थानमें बुध और शुक्र हों, ५ वें स्थानमें गुरु हो, ४ थेमें पापग्रह हो और चन्द्रमासे भी ८ वें में पापग्रह हो तो जन्मलेनेवाले कुलका संहार करनेवाले होते हैं। (सु० शा० कार ) ॥ ९ ॥

चराऽवसाने शशिनि स्थिरादौ द्विदेहमध्ये बलवर्जिते च ॥
हीने विलग्ने यदि केचरेन्द्रैर्विनाशमेति क्षितिपालयोगात् ॥ १० ॥

शशिनि=चन्द्रे चरराशीनां (मेष-कर्क-तुला-मकराणाम्) अवसानेऽन्त्ये (राश्यन्त्ये) स्थिरराशीनां ( २।५।८।११ ) आदौ तथा द्विदेहानां = द्विस्वभावराशीनां ( ३।६।९।१२ ) मध्ये गतवति, बलवर्जिते=निर्बले च सति, विलग्ने=जन्मलग्ने खेचरेन्द्रैर्ग्रहैर्हीने = रहितेऽर्थात् लग्ने न कोऽपि ग्रहो भवेत्तदा क्षितिपालयोगो राजयोगो नाशमेति = विनश्यतीति। एवं सारावल्याम्—जन्मकालादिमागे चरराश्यादिषु शशी यदा क्षीणः।

एकेनापि न दृष्टो ग्रहेण भङ्गस्तदा नृपतेः ॥

अस्मिन्योगे राजकुलोद्भूतोऽपि न राज्यं लभत इति तात्पर्यम् ॥ १० ॥

चर राशिके अन्त्य भागमें, स्थिर राशिके आदिमें, द्विस्वभाव राशिके मध्यमें बलहीन चन्द्रमा हो, और कोई भी ग्रह लग्नमें न हो तो राजयोगका विनाश होता है ॥ १० ॥

लग्नराशिनवभावनायका भानुशीतकरदेवपूजिताः ॥
शत्रुभागसहिताः स्वनीचभस्वामिभांशसहिताः परानुगः ॥ ११ ॥

लग्नं = जन्मलग्नम् । राशिर्जन्मकाले चन्द्राधिष्ठितो राशिः । नवभावो जन्मलग्नान्नवमो ( धर्मः ) भाव इत्येषां नायकाः = स्वामिनः ( लग्नेशराशीशनवमेशा इति ) तथा भानुशीतकरदेवपूजिताः=सूर्येन्दुगुरवः यदि शत्रुभागसहिताः = शत्रुनवांशगता वा स्वनीचभस्वामिभांशसहिताः = स्वस्वनीचराशिपतिनवांशगता भवेयुस्तदा जातो नरः परानुगोऽन्येषामनुचरो भवति ॥ ११ ॥

जन्मलग्न, जन्मराशि, और ९ वें भावका स्वामी, तथा सूर्य चन्द्रमा और बृहस्पति ये सब अपने शत्रु ग्रहके नवांशमें हों या अपने नीच राशिपति के अंशमें हों तो दूसरेके पीछे चलनेवाला हो ॥ ११ ॥

शशिनि गगनयाते कामगे दानवेज्ये नवमभवनयाते पापखेटे कुलघ्नः ॥
भृगुजशशिजचन्द्राः केन्द्रगा जन्मलग्ने तमसि विहितकर्मध्वंसको नीचतुल्यः ॥१२॥

शशिनि=चन्द्रे गगनयाते=दशमभावगते, दानवेज्ये=शुक्रे कामगे=सप्तमभावगते पापखेटे = सूर्यभौमशनीनामन्यतमे नवमभवनयाते=लग्नान्नवमं भावमुपगते जातो नरः कुलघ्नो वंशच्छेदको भवति । अथ च भृगुजशशिजचन्द्राः=शुक्रबुधचन्द्राः केन्द्रगा भवेयुः, तमसि=राहौ ( तमस्तु राहुः, इत्यमरः ) जन्मलग्ने गतवति जातो विहितकर्मध्वंसकः = स्वस्य विहितकर्मणो ध्वंसको भवति, नीचतुल्यः = उच्चकुले समुद्भूतोऽपि स्वकर्मरहितो नीचसदृशो भवतीति ॥ १२ ॥

( १ )




( २ )




यदि चन्द्रमा दसवें भावमें हो, शुक्र सप्तममें हो और पापग्रह नववें स्थान में हो तो जातक कुलका नाश करनेवाला हो । शुक्र, बुध और चन्द्रमा यदि केन्द्रमें हों जन्मलग्नमें राहु हो तो विहित कर्मोंका नाशक और नीचके समान हो ॥ १२ ॥

नीचे भृगौ मन्दनवांशके वा दुःस्थानगे भानुसुतेक्षिते च ॥
कामस्थिते शीतकरे सभानौ मात्रा सह प्रैष्यमुपैति नित्यम् ॥ १३ ॥

भृगौ = शुक्रे नीचे=स्वनीच-( कन्या ) राशौ मन्दस्य नवांशके वा दुःस्थानगे=षष्ठव्ययगे तथा भूते भानुसुतेन = शनिनेक्षितेऽवलोकिते च, वा सभानौ=सूर्यसहिते शीतकरे=

चन्द्रेकामस्थिते=सप्तमभावमुपगते शनिदृष्टे च जातो नरो मात्रा सह = जनन्या सहितो नित्यं प्रैष्यं = दास्यमुपैति। परप्रेष्ययोगः सर्वार्थचिन्तामणौ—

नीचे भृगौ मन्दनवांशके वा
व्ययस्थिते, चन्द्ररवी कलत्रे ।
निरीक्षितौ भानुसुतेन चात्र
जातः परप्रैष्यमुपैति नित्यम्॥१३॥

| | | |
|---|---|---|
| | १ ल. | १२ शु. |
| | मात्रा सह प्रेष्ययोगः | श. |
| ६ शु. ६ | चं. सू. | |

यदि शुक्र नीच राशिमें शनिके नवांशमें हो, दुष्टस्थानमें हो या शनिसे देखा जाता हो अथवा चन्द्रमा और सूर्य सप्तममें हों और शनि दृष्ट हों तो वह बालक अपनी माताके साथ नित्य दूत कर्म करने वाला ( सेवक ) होता है॥ १३॥

नीचे गुरौ वासरनायके वा केन्द्रस्थिते पापयुते शिशुघ्नः ॥
केन्द्रे सपापे शुभदृष्टिहीने रन्ध्रे गुरौ गोमृगजातिहन्ता ॥ १४ ॥

गुरौ = बृहस्पतौ, वा वासरनायके = सूर्ये, नीचे = स्वनीचराशौ केन्द्र-(१।४।७।१०) स्थिते, पापयुते = शनिना भौमेन वा युते जातः शिशुघ्नो बालघातको भवति । अथ केन्द्रे (१।४।७।१०) सपापे = पापग्रहयुक्ते तस्मिन् शुभदृष्टिहीने = शुभग्रहाणां दृष्ट्या रहिते, गुरौ = बृहस्पतौ रन्ध्रेऽष्टमे च गते जातो गोमृगजातिहन्ता = आखेटादौ गवां मृगादीनाञ्च विनाशको भवति । अत्र सर्वार्थचिन्तामणौ—'शुभदृष्टियुक्ते रन्ध्रे भृगौ' इति पाठान्तरमुपलभ्यते ॥ १४ ॥

(१)




(२)




बृहस्पति वा सूर्य नीच राशिमें होकर केन्द्रमें स्थित हो, पापग्रहसे युक्त हो तो वह बालक बालघाती होता है। केन्द्रमें पापग्रह हो उसपर शुभग्रहकी दृष्टि न हो, गुरु अष्टममें हो तो गौ और मृगोंके मारनेवाला हो॥ १४॥

शशाङ्कसौम्यौ दशमोपयातौ पापेक्षितौ पापसमन्वितौ च ।
नीचांशगौ सौम्यदृशा विहीनौ जातस्तु नित्यं खलु पक्षिहन्ता ॥ १५ ॥

शशाङ्कसौम्यौ = चन्द्रबुधौ दशमोपयातौ = लग्नाद्दशमभावमुपगतौ पापेक्षितौ = केनचित्पापग्रहेणावलोकितौ पापसमन्वितौ = केनचित्पापेन युक्तौ च भवेतामपि च नीचांशगौ = स्वनीचराशिनवांशगतौ, सौम्यदृशा = शुभग्रहदृष्ट्या विहीनौ च यदि भवेतां तदा जातस्तु खलु = निश्चयेन नित्यमनवरतं पक्षिहन्ता = विहगघातको भवति ॥ १५ ॥




चन्द्रमा और बुध दशवेंमें हों, पापग्रहसे देखे जाते हों और पापग्रहसे युक्त भी हों, नीचनवांशमें हों और शुभग्रहकी दृष्टिसे रहित हों तो वह जातक निश्चय पक्षी मारनेवाला होता है ॥ १५॥

चन्द्रात्सुते लग्नपतौ धने वा सौम्येतरेष्वष्टमराशिगेषु ।
मानस्थिते शीतकरे तदानीं जातस्तु जीवत्यतिहेयवृत्त्या ॥ १६ ॥

जन्मकाले चन्द्रात्सुते = पञ्चमे, वा धने = द्वितीये भावे लग्नपतौ = लग्नेशे गते, सौम्येतरेषु = पापग्रहेषु चन्द्रादष्टमराशिगेषु, शीतकरे = चन्द्रे मानस्थिते = लग्नाद्दशमभावगते । अत्रेदं फलितम्—चन्द्रो दशमगतो भवेत्तस्मात्सुते वा धने अर्थाल्लग्नादिद्वतीये वैकादशे लग्नेशो गतो भवेत्तथा चन्द्रादष्टमेऽर्थाल्लग्नात्पञ्चमे पापग्रहा भवेयुस्तदानीं जातस्तु अतिहेयवृत्त्या = कुत्सितजीविकया जीवति । अत्र सर्वार्थचिन्तामणौ पाठः—

चन्द्रात्सुतेऽर्थे यदि लग्ननाथे रन्ध्रस्थितैः सौम्यखगेतरैर्वा ।
मानस्थिते रात्रिकरे तदानीं जातस्तु जीवत्यतिहेयवृत्त्या ॥ १६ ॥

यदि लग्नेश चन्द्रमासे पञ्चम स्थानमें हो, वा दूसरेमें हो, और पापग्रह अष्टमराशिमें हो, चन्द्रमा दशममें हो तो वह जातक अत्यन्त नीच जीविकासे जीवे ॥१६॥




नीचारिभांशौ भृगुदेवपूज्यौ तदंशके वासरनाथपुत्रे ।
जातः सुदुःखःसुतदारहीनः कृच्छ्रेण संजीवति भाग्यहीनः ॥ १७ ॥

भृगुदेवपूज्यौ = शुक्रगुरू नीचारिभांशौ = नीचनवांशं शत्रुराशिनवांशं वोपगतौ, वासरनाथपुत्रे = शनैश्चरे तदंशके = शुक्रस्य गुरोर्वा नवांशे विद्यमाने जातो नरः सुदुःखभाक्, सुतदारहीनः = पुत्रकलत्ररहितश्च भवति तथा भाग्यहीनः सन् कृच्छ्रेणातीव कष्टेन सञ्जीवति ।

सर्वार्थचिन्तामणावत्र पाठभेदः—

नीचारिभांशे यदि देवपूज्ये
तदंशके वासरनाथपुत्रे ।
जातोऽतिदुःखी सुतदारहीनः
कृच्छ्रादसौ जीवति भाग्यहीनः ॥इति॥१७॥




शुक्र और गुरु नीचराशिके या शत्रुग्रहके नवांशमें हों, गुरु या शुक्रके नवांश में शनि हो तो जातक स्त्री पुत्रोंसे रहित और अभागा बन कर बड़े कष्टसे किसी तरह जीता है। ( सु० शा० कार ) ॥ १७ ॥

सर्वे पापाः केन्द्रनीचारिसंस्थाः सौम्यैर्दृष्टा रिःफरन्ध्रारियातः ।
निघ्नन्त्येते राजयोगं ग्रहेन्द्रा नीचारातिक्रूरषष्ठ्यंशकाश्च ॥ १८ ॥

सर्वे पापाः=सूर्यभौमशनैश्वरक्षीणेन्दुसपापबुधाः, केन्द्रनीचारिसंस्थाः = केन्द्रे ( १।४।७। १० ) वा स्वनीचे, वा शत्रुराशिगता भवेयुस्तथा रिःफरन्ध्रारियातैः = व्ययाष्टमषष्ठभावगतैः सौम्यैर्दृष्टा भवेयुस्तदैते ग्रहेन्द्रा ग्रहा राजयोगं निघ्नन्ति=नाशयन्ति । अपि च नीचारातिक्रूर-षष्ठ्यंशकाः = ये ग्रहाः नीचराशिगताः, शत्रुराशिगताः, क्रूरषष्ठ्यंशगता वा भवन्ति ते राजयोगं निहन्ति । ईदृग्योगे राजकुलोद्भूतोऽपि न राजफलं लभत इति भावः । उक्तञ्च सारावल्याम्-

सर्वे क्रूराः केन्द्रे नीचारिगता न सौम्ययुतदृष्टाः ।
शुभदा व्ययरिपुरन्ध्रे तदाऽपि भङ्गो भवेन्नृपतेः ॥ इति ॥ १८ ॥

सभी पापग्रह यदि केन्द्र, या नीच, या शत्रुगृहमें स्थित हों उन्हें १२, ८, ६ भावगत शुभग्रह देखते हों तो राजयोगका नाश कहना चाहिये । इसी तरह नीच, शत्रुराशि और पापषष्ठ्यंशवाले ग्रह राजयोगको नाश करते हैं । ( सु० शा० कार ) ॥ १८ ॥

केन्द्रस्थिता मन्दनिशाकरार्काः शुभैरदृष्टा यदि मद्यपायी ।
क्रूरारिषष्ठ्यंशकनीचभागा दुष्कर्मयुक्तोऽन्यकलत्रगामी ॥ १९ ॥

मन्दनिशाकरार्काः शनिचन्द्रसूर्याः केन्द्रस्थितास्तथा यदि शुभैः=शुभग्रहैरदृष्टा=अनव-लोकिताश्च भवेयुस्तदा जातो मद्यपायी = मद्योपभोक्ता ( सुरापः ) भवति । त एव मन्दनि-शाकरार्काः क्रूरारिषष्ठ्यंशकनीचभागयुक्ताश्चेद्भवेयुस्तदा जातो दुष्कर्मयुक्तो गर्हितकर्मा, अन्यकलत्रगामी = परवधूलोलुपश्च भवति ॥ १९ ॥

यदि शनि, चन्द्रमा और सूर्य केन्द्रमें स्थित हों शुभग्रहसे दृष्ट न हों तो जातक शराब पीनेवाला होवे । यदि वे तीनों ग्रह क्रूर और शत्रुके षष्ठ्यंश तथा नीच भागमें हों तो दुष्क-र्मसे युक्त, दूसरेकी स्त्रीका उपभोग करनेवाला हो ॥ १९ ॥

नीचे भृगौ धर्मगते सपापे द्विजप्रहर्ता यदि पापदृष्टे ।
व्यये शुभर्क्षेऽर्कसुतांशकस्थे भृगौ च दासीवरनन्दनः स्यात् ॥ २० ॥

नीचे=नीचराशिवर्त्तिनि भृगौ=शुक्रे धर्मगते=नवमभावगते सपापे=केनचित्पापग्रहेण युक्ते तथाभूते यदि पापदृष्टे=केनचित्पापग्रहेण दृष्टे जातो द्विजप्रहर्ता=ब्राह्मणघातको भवति । अथ च भृगौ=शुक्रे व्यये=द्वादशभावमुपगते शुभर्क्षे=शुभराशौ वर्त्तमानेऽर्कसुतस्य=शनैश्वरस्यां-शकस्थे = नवांशे च गतवति जातो नरो दासीवरनन्दनः स्यात् = प्रेष्यापुत्रो भवेत् । अत्रे-दमुक्तं भवति-द्वादशभावो हि शुभग्रहराशिस्तद्गतः शनिनवांशो भवेत्तस्मिञ्छुक्रे विलसति जातो दासीपुत्रो भवेदिति ॥ २० ॥

| | | |
|---|---|---|
| ११ मं. / १२ | १० | ९ / ८ |
| १ | द्विजप्रहर्त्ता | ७ |
| २ / ३ | ४ | ६ शु.श. / ५ |

| | | |
|---|---|---|
| ४ / ५ | ३ | २ शु.५ / १ |
| ६ | दासीपुत्रः | १२ |
| ७ / ८ | ९ | ११ / १० |

यदि नीचराशिस्थ शुक्र पापग्रहसे युक्त होकर नवमेंमें हो उसे पापग्रह देखता हो तो

ब्राह्मणको मारनेवाला होवे। बारहवां भाव शुभराशि हो उसमें शुक्र शनिके नवांशमें हो तो जातक दासीपुत्र होवे ॥ २० ॥

## अथ रेकायोगाः ॥

लग्नेशे बलवर्जिते परिभवस्थानाधिपेनेक्षिते
सूर्योच्छिन्नकरे पुरन्दरगुरौ रेकाख्ययोगो भवेत्।
बन्धुस्थानपसंयुतांशकपतौ तिग्मांशुलुप्तद्युतौ
रिःफेशेन निरीक्षिते सति यदा योगस्तु रेकाह्वयः ॥ २१ ॥

अधुना रेकायोगा उच्यन्ते। लग्नेशे=लग्नस्वामिनि बलवर्जिते=निर्बले परिभवस्थानाधिपे-नाष्टमभावेशेनेक्षितेऽवलोकिते पुरन्दरगुरौ=बृहस्पतौ सूर्योच्छिन्नकरे=सूर्येण सह लुप्तकिरणे ( अस्तङ्गते ) सति रेकाख्ययोगो भवेत्। ईदृग् योगो रेकानामको भवति। बन्धुस्थानपश्च-तुर्थभावेशस्तेन संयुतेऽशकपतौ = नवांशस्वामिनि अर्थात्तत्काले चतुर्थेशो यस्मिन् नवांशे स्यात्तदीशे, तिग्मांशुलुप्तद्युतौ-तिग्मांशुना = सूर्येण लुप्ता = नष्टा द्युतिर्यस्य तस्मिन्नस्तङ्गत इत्यर्थ, तथाभूते रिःफेशेन = द्वादशेशेन निरीक्षितेऽवलोकिते सति यदा जन्म भवति तदा रेकाह्वयो रेकानामको योगो भवति ॥ २१ ॥

| | | |
|---|---|---|
| ४ / ५ | ३ ल. | २ / १ |
| ६ श. | रेकायोगः १ | १२ बु. |
| ७ / ८ | ९ | ११र. बृ. / १० |

| | | |
|---|---|---|
| ४ / ५ | ३ ल. | २ / १ |
| ६ | रेकायोगः २ | १२ श. र. |
| ७ / ८ | ९ | ११ बु. / १० शु. |

बलहीन लग्नेशको अष्टमेश देखता हो और बृहस्पति सूर्यके साथ अस्तङ्गत हो तो 'रेका' नामका योग होता है।

चतुर्थेशसे युक्त नवांशपति ग्रह सूर्यके साथ अस्त हो और द्वादशेशसे देखा जाता है तो 'रेका' योग होता है ॥ २१ ॥

षष्ठस्वामिनिरीक्षिते सुखपतौ रन्ध्रेशयुक्ते तथा
मानेशे सुतगे विलग्नरमणे नीचं गते रेकभाक्।
रन्ध्रारिव्ययराशिगा यदि शुभाः केन्द्रत्रिकोणोपगाः
पापा लाभगृहाधिपे च विबले रेकाभिशस्तो भवेत् ॥ २२ ॥

सुखपतौ = चतुर्थेशे यत्र तत्र षष्ठस्वामिनिरीक्षिते = षष्ठेशेनावलोकिते, रन्ध्रेशेनाष्टमेशेन युक्ते = सहिते तथा मानेशे=दशमभावेशे सुतगे = पञ्चमभावगते, विलग्नरमणे=जन्मलग्नेशे नीचं=स्वनीचराशिं गते रेकभाक्=अस्मिन्योगे जातो रेकायोगवान्भवति। अथ यदि शुभाः= शुभग्रहा रन्ध्रारिव्ययगाः = अष्टम-षष्ठ-द्वादशभावगताः, पापाः= पापग्रहाः केन्द्रत्रिकोणो-( १।४।७।१०।५।९ ) पगा भवेयुः, लाभगृहाधिपे=एकादशभावस्वामिनि विबले च रेकाभि-शस्तो भवेदर्थादीदृग्योगो रेकानामतो व्याख्यायते लोकैरिति ॥ २२ ॥

| | | |
|---|---|---|
| ३ / ४ | २ | १ / १२ |
| ५ | रेका ३ | ११ |
| ६ श. शु. / ७ | ८ र. बृ. | १० / ९ |

| | | |
|---|---|---|
| २ / ३ | १ रा. | चं. १२ / ११ |
| ४ | रेका ४ | १० |
| र. श. ५ / शु. बु. ६ | ७ मं. के. | ९ / बृ. ८ |

चतुर्थेश अष्टमेशसे युक्त होकर षष्ठेशसे देखा जाता हो तो रेका योग होता है।

दशमेश ५ वें भावमें हो और लग्नेश नीचमें हो तो रेकायोग होता है। यदि शुभग्रह ८, ६, १२ भावोंमें हों, पापग्रह केन्द्र और त्रिकोणमें हों और लाभेश निर्बल हो तो भी रेका योग होता है ॥ २२ ॥

होरेशः खलसंयुतः सित गुरू चास्तं गतौ तद्वदेद्
बन्धुस्थानपतिः शुभेतरयुतश्चास्तं गतो रेकदः ॥
भाग्यस्थानपतौ विकर्तनकरच्छन्ने विलग्नाधिपे
नीचस्थे धनपे च नीचगृहगे रेकाभिधानो भवेत् ॥ २३ ॥

होरेशो=जन्मलग्नेशः खलेन = केनचित्पापग्रहेण संयुतो भवेत् , सितगुरू = शुक्रबृहस्पती वास्तंगतौ = सूर्ययुतौ भवेतां तदा तद्वदेदर्थात् रेकायोगं ब्रूयादिति ।

बन्धुस्थानपतिश्चतुर्थभावेशः शुभेतरयुतः = पापग्रहसंयुक्तोऽस्तंगतश्च यदि भवेत्तदा रेकदो भवति । ईदृग्योगोऽपि रेकाख्य इति ।

| | | |
|---|---|---|
| र. शु. ४ बृ. / ५ | बु. ३ श. | २ / १ |
| ६ | रेका ५ | १२ |
| ७ / ८ | ९ | ११ / १० |

अथ च भाग्यस्थानपतौ = नवमभावेशे = विकर्तनकरच्छन्नेऽर्थात्सूर्येण सहास्तं गते, विलग्नाधिपे = लग्नेशे नीचस्थे = स्वनीचराशिं गते, धनपे च = द्वितीयभावेशे च नीचगृहगे = स्वनीचराशिं गते रेकाभिधानो रेकानामको योगो भवेत् ॥२३॥

| | | |
|---|---|---|
| ४ / ५ | ३ | २ / १ |
| ६ | रेका ६ | १२ |
| ७ / ८ | ९ | ११ / बु. १० मं. र. |

| | | |
|---|---|---|
| ४ / ५ | ३ | २ / १ |
| ६ | रेका ७ | १२ बु. |
| ७ / ८ चं. | ९ र. श. | ११ / १० |

लग्नेश पापग्रहके साथ हो शुक्र और गुरु अस्त हों तो 'रेका' योग होता है।

चतुर्थभावका स्वामी पापग्रहके साथ होकर अस्त होवे तो 'रेका' योग होता है।

**भाग्य ( नवमभाव ) पति सूर्यके साथ अस्त हो, लग्नेश नीचमें हो और द्वितीयेश भी नीचमें हो तो 'रेका' योग होता है ॥ २३ ॥**

नीचस्था यदि वा दिनेशकिरणच्छन्नास्त्रयो लग्नपे
दुष्टस्थानगतेऽथवा गतबले योगस्तु रेकप्रदः ॥
होरावित्तनवास्पदायसुखधीकामानुजस्थाः खला-
स्तस्यायुर्नवभागरेकफलदा नीचारिपापेक्षिताः ॥ २४ ॥

केचित् त्रयो ग्रहा यदि नीचस्थाः = स्वस्वनीचराशिगता वा दिनेशस्य=सूर्यस्य किरणैश्छन्नाः = नष्टद्युतयः ( अस्तंगताः ) भवेयुः, लग्नपे = जन्मलग्नेशे दुष्टस्थानगते = षडष्टव्ययभावानामन्यतमं गते, अथवा गतवले = निर्बले सति रेकप्रदो योगो भवति ।

होरा = लग्नम् , वित्तं = द्वितीयः, नव = नवमः, आस्पदं = दशमः, सुखं = चतुर्थः, धीः=पञ्चमः, कामः=सप्तमः, अनुजस्तृतीय एतेषु स्थिताः खलाः=पापग्रहाः, नीचारिपापेक्षिताः=नीचराशिस्थाः, शत्रुराशिस्थाः, पापेक्षिता वा स्युस्तदा ते तस्य जातस्यायुषो नवमे भागे रेकफलदा रेकायोगफलकारका भवन्ति। अर्थात् ईदृग्योगो रेकाख्य इति । अत्र नीचारिपापेक्षिता इत्युक्तेरेव यदि उच्चस्वमित्रशुभेक्षिताः स्युस्तदा न रेकाफलदाः स्युरिति ॥ २४ ॥

**कोई भी तीन ग्रह नीचमें हों या अस्त हों और लग्नेश दुष्ट स्थानमें हो अथवा निर्बल हो तो 'रेका' योग होता है ।**

**पापग्रह १।२।९।१०।११।४।५।७।३ भावोंमें स्थित हों नीच या शत्रुगृहमें स्थित हों या पापग्रहसे दृष्ट हों तो उस जातककी आयुके ९ वें भागमें 'रेका' योगका फल देते हैं ॥ २४ ॥**

एकद्विकत्रिकखलद्युचरा नराणां कल्पस्वविक्रमगताः परतस्तथैव ।
आदौ तु मध्यवयसि क्रमशस्तदन्त्ये रेकप्रदा रिपुखलग्रहनीचदृष्टाः ॥ २५ ॥

एकः, द्विकः, त्रिकः खलद्युचराः=पापग्रहाः क्रमेण कल्पे=लग्ने, स्वे=द्वितीये, विक्रमे=तृतीये गताः स्युरर्थात् लग्ने एकः पापग्रहः, द्वितीये द्वौ पापौ, तृतीये त्रयः पापाः भवेयुः । परतस्तथैव = तेनैव प्रकारेण परतोऽपि = चतुर्थे एकः, पञ्चमे द्वौ, षष्ठे त्रयः ।सप्तमे एकः, अष्टमे द्वौ, नवमे त्रयः, एवमेव दशमे एकः, एकादशे द्वौ, द्वादशे त्रयः पापाः स्युस्तदा नराणां=जनिमतां क्रमेणादौ वयसि=वयसः प्रथमे त्र्यंशे, मध्यवयसि=द्वितीयत्र्यंशे, तदन्त्ये=वयसोऽन्त्ये रेकप्रदाः = रेकायोगफलप्रदा भवन्ति । इदमुक्तं भवति । यस्य जन्मकाले १,४, ७,१० भावेषु कस्मिन्नपि यद्येकः पापग्रहो भवेत्तदा तस्य प्रथमे वयसि रेकाफलदो भवेत् । ( २,५,८,११ ) पणफरे एकत्र द्वौ पापौ भवेतां तस्य मध्ये वयसि तथा च आपोक्लिमे ( ३।६।९।१२ ) एकत्र त्रयः पापाः भवेयुस्तदा तस्य चरमे वयसि रेकाफलदा भवेयुः । यदि ते रिपुखलग्रहनीचदृष्टाः=शत्रुणा, पापग्रहेण, नीचस्थेन वा दृष्टाः स्युस्तदैवार्थत एव मित्रशुभग्रहोच्चदृष्टा न रेकप्रदा इति। रेकाफलमग्रतो वक्ष्यति २।६।२७ श्लोकाभ्यामिति ॥२५॥

**१।४।७।१० भावोंमें १ पापग्रह यदि शत्रुग्रह, पापग्रह, या नीचगत ग्रहसे दृष्ट होवे तो प्रथम वयसमें 'रेका' फल देता है २।५।८।११ भावोंमें २ पापग्रह हों तो मध्यवयसमें, एवं ३।६।९।१२ भावोंमें ३ पापग्रह हों तो अन्त्य अवस्थामें 'रेका' योगका फल देते हैं ॥ २५ ॥**

**रेकायोगफलम् ।**

निर्विद्यो विधनो दरिद्रसहितो रेकोद्भवः कामुकः
क्रोधी दुःखितमानसो रुचिकरः सौभाग्यहीनः पटुः ॥
भिक्षाशी मलिनो विवादनिरतो मात्सर्यरोपान्वितो
देवब्राह्मणदूषकः प्रतिदिनं दारात्मजैर्निन्दितः ॥ २६ ॥

दुष्टात्मा कुनखी कुमार्गनिरतो दौर्भाग्ययोगान्वितो
बन्धूनामपकारदूषणपरः स्वल्पायुरभिक्षुकः ॥
मूकोऽन्धो बधिरः प्रमत्तहृदयः कामातुरो रोषवान् ।
पङ्गुर्नेत्रविकारभावसहितो रेकोद्भवः स्यान्नरः ॥ २७ ॥

इदानीं श्लोकद्वयेन सरलार्थेन पूर्वोक्तानां रेकायोगानां फलान्युच्यन्ते । सर्वे एव रेकायोगा दुष्फलाः पूर्वमुक्तात् 'केचिद्योगाः राजयोगस्य भङ्गाः केचिद्रेकाः' इति स्मरणात् ॥ २६-२७ ॥

रेकायोगमें उत्पन्न मनुष्य मूर्ख, धनरहित, दरिद्रतासे विकल, कामी, क्रोधी, दुःखी, दुष्कर, सौभाग्यहीन, चतुर, भिक्षुक, मलिन, विवादी, चुगलखोर, रोषवाला, प्रतिदिन देवता ब्राह्मणके निन्दक, स्त्री-पुत्रसे निन्दित होता है ॥ २६ ॥

दुष्ट आत्मवाला, कुनखी, कुमार्गी, अभागा, बन्धुवोंके अपकार और निन्दा करनेवाला अल्पायु, भिक्षुक, गूंगा, अन्धा, बहिर, मतवाला हृदयवाला, कामातुर, रोषवाला, लङ्गड़ा, नेत्ररोगयुक्त रेकायोगोत्पन्न मनुष्य होता है ॥ २७ ॥

## अथ दरिद्रयोगाः ।

भाग्येश्वरादतिबलो निधनेश्वरो वा लग्नाधिपस्त्रिदशनाथगुरुर्यदि स्यात् ।
केन्द्राद्बहिर्दिनकरस्य कराभितप्तो लाभाधिपो यदि विहीनबलो दरिद्रः ॥ २८ ॥

अधुना केचिद् दरिद्रयोगा उच्यन्ते । निधनेश्वरोऽष्टमेशो भाग्येश्वरान्नवमेशादतिबलो बलीयान् भवेदर्थादष्टमेशनवमेशयोर्मध्ये अष्टमेशो बली भवेत्, वा लग्नाधिपो जन्मलग्नेशस्त्रिदशनाथगुरुर्बृहस्पतिर्यदि केन्द्राद्बहिःस्थितो दिनकरस्य=सूर्यस्य कराभितप्तो लुप्तकिरणो ( अस्तङ्गतः ) भवेत्, तथा लाभाधिपो लाभभावेशो यदि विहीनबलो निर्बलो भवेत्तदा दरिद्रो दरिद्रयोगो भवति ॥ २८ ॥

यदि अष्टमेश ग्रह नवमेशके अपेक्षा अधिक बली हो अथवा बृहस्पति लग्नेश होकर केन्द्रके बाहर सूर्यके साथ अस्त हो और लाभेश निर्बल होवे तो जातक दरिद्र होता है ॥२८॥

लाभारिव्ययरन्ध्रपुत्रगृहगा जीवारमन्देन्दुजा
नीचस्थानगता यदा रविकरच्छन्नास्तदा भिक्षुकः ॥
भाग्यस्थानगतो दिनेशतनयः सौम्येतरैरीक्षितो
लग्नस्थः शशिनन्दनो रवियुतो नीचांशगो भिक्षुकः ॥ २९ ॥

यदा जीवारमन्देन्दुजाः = गुरुभौमचन्द्रबुधाः, यथासम्भवं लाभे=एकादशे, अरौ=षष्ठे, व्यये=द्वादशे, रन्ध्रेऽष्टमे, पुत्रे=पञ्चमे गृहे=भावे गता वा नीचस्थानगताः=स्वस्वनीचराशिं गताः, वा रविकरैः=सूर्यकिरणैश्छन्नाः=नष्टत्विषो भवेयुस्तथा भुतः सौम्येतरैः=पापग्रहैः ( बहुवचनत्वात् त्र्यादिभिः पापैः ) ईक्षितोऽवलोकितो भवेत् तथा शशिनन्दनः=बुधो लग्नस्थो जन्मलग्नगतो रवियुतो सूर्येण सहितो ( अस्तङ्गतः ) नीचांशगतोऽपि भवेत्तदा जातो भिक्षुकः स्यादिति ॥ २९ ॥

बृहस्पति, मङ्गल, शनि और बुध नीचस्थ होकर एकादश, षष्ठ, द्वादश, अष्टम, पञ्चम स्थानमें स्थित हों या सूर्यके किरणसे आक्रान्त हों तो भिक्षुक होवे । भाग्य ( ९ ) भवनमें शनि हो उसे पापग्रह देखते हों, लग्नमें सूर्ययुक्त बुध नीचांशमें हो तो भिक्षुक होवे ॥ २९ ॥

जीवज्ञशुक्ररविनन्दनभूमिपुत्रा रन्ध्रारिरिःफसुतकर्मगता यदि स्यात् ।
लग्नेश्वरादतिबली व्ययभावनाथो नीचस्थितो रविकराभिहितो दरिद्रः ॥३०॥

जीवज्ञशुक्ररविनन्दनभूमिपुत्राः = गुरुबुधशुक्रशनिभौमाः यथासम्भवं रन्ध्रारिरिःफसुतकर्मगताः = अष्टमषष्ठद्वादशपञ्चमदशमभावगता यदि भवेयुः, व्ययभावस्य नाथो व्ययेशो

लग्नेश्वरादतिबली, अर्थाल्लग्नेशापेक्षया द्वादशेशो बलीयान् स्यात् तथा नीचस्थितो रवि-कराभिहतोऽस्तङ्गतोऽपि भवेत्तदा जातो नरो दरिद्रो भवतीति ॥ ३० ॥

यदि अष्टम, षष्ठ, द्वादश, पञ्चम, और दशम स्थानमें यथासम्भव गुरु, बुध, शुक्र शनि और मङ्गल हों द्वादशेश लग्नेशसे विशेष बली होकर नीच राशिमें हो, सूर्यके किरणसे सन्तप्त हो तो दरिद्र होता है ॥ ३० ॥

शुक्रार्यद्विजराजभूमितनया नीचस्थिता जन्मनि
व्योमाये नवमे कलत्रतनये जातो दरिद्रो भवेत् ॥
लग्ने दानवपूजितेऽमरगुरौ पुत्रे धरानन्दने
लाभे रात्रिकरे तृतीयभवने नीचं गते भिक्षुकः ॥ ३१ ॥

शुक्रः, आर्यो गुरुः, द्विजराजश्चन्द्रमाः, भूमितनयो भौम एते जन्मनि=जन्मकाले नीच-स्थिताः=स्वस्वनीचराशिगताः, तथा यथासम्भवं व्योमे = दशमे, आये = एकादशे, नवमे, कलत्रे = सप्तमे, तनये = पञ्चमे स्थिताश्च भवेयुस्तदा जातो नरो दरिद्रो निर्धनो भवेत् । अथ च दानवपूजिते=शुक्रे लग्ने, अमरगुरौ=बृहस्पतौ पुत्रे=पञ्चमे, धरानन्दने=भौमे लाभे=एकादशे, रात्रिकरे = चन्द्रे तृतीयभवने गते, नीचङ्गते = स्वस्वनीचराशौ विद्यमाने जातो भिक्षुको भिक्षावृत्तिको भवेत् । एतदुक्तं भवति । उक्ताः सर्वे ग्रहा उक्तेषु भावेषु स्वस्वनीच-राशिगता भवेयुस्तदा भिक्षुको भवति जातक इति ॥ ३१ ॥

| | | |
|---|---|---|
| १ / २ | १२ ल. | ११ / १० वृ. |
| ३ | दरिद्रः | ९ |
| ४ मं. / ५ | शु. ६ | ८ चं. / ७ |

| | | |
|---|---|---|
| ७ / ८ चं. | ६ ल. शु. | ५ / ४ मं. |
| ९ | भिक्षुकः | ३ |
| १० वृ. / ११ | १२ | २ / १ |

जन्म समयमें शुक्र, बृहस्पति, चन्द्रमा और मङ्गल ये नीच राशिमें स्थित होकर लग्न, दशम, नवम, सप्तम और पञ्चम भावमें स्थित हों तो जातक दरिद्र हो ।

शुक्र लग्नमें बृहस्पति पञ्चममें, मङ्गल एकादश में, चन्द्रमा तृतीय भावमें होकर नीच राशिमें हो तो जातक भिक्षुक हो ॥ ३१ ॥

लग्ने चरे चरनवांशगतेऽसितेन दृष्टे च नीचगुरुणा यदि भिक्षुकः स्यात् ।
जातो विनाऽमरपुरोहितलग्नराशिं जीवे रिपुव्ययगते तु भवेद्दरिद्रः ॥ ३२ ॥

लग्ने=जन्मलग्ने चरे=चरराशौ ( मे० क० तु० म० ) चरनवांशगते=चरराशिनवांशे च गते तस्मिन्नसितेन=शनिना, नीचगुरुणा=मकरस्थेन गुरुणा च दृष्टे यदि जन्म स्यात्तदा जातो भिक्षुकः स्यात् ।

अथ अमरपुरोहितलग्नराशिं = गुरोर्लग्नराशि ( धनुर्मीनौ ) विहाय रिपुव्ययगते = षष्ठे द्वादशे वा गते जीवे=गुरौ जातस्तु दरिद्रो भवेत् । अर्थादेव धनुः, मीनं वोपगते जीवे रिपुव्ययगतेऽपि दरिद्रो न भवेदिति ॥ ३२ ॥

यदि चरराशि और चरनवांशमें लग्न हो उसे शनि और नीचगत गुरु देखते हों तो जातक भिक्षुक होवे । यदि बृहस्पति अपनी राशि न हो किन्तु छठे या १२ वें भावमें हो तो जातक दरिद्र होवे । यहां इतना विशेष जानना चाहिये कि यदि गुरु स्वगृहीका हो तो दोषावह नहीं होता । ( सु० शा० कार ) ॥ ३२ ॥

जातः स्थिरे लग्नगते तु पापाः केन्द्रत्रिकोणोपगताश्च सर्वे ।
केन्द्राद्बहिःस्थानगतास्तु सौम्या भिक्षाशनः स्यात्परपोषितश्च ॥ ३३ ॥

स्थिरे राशौ ( २।५।८।११ ) लग्नगते तु सर्वे पापाः = पापग्रहाः केन्द्रत्रिकोणोपगताः ( १।४।७।१०।५।९ भावगताः ) भवेयुस्तथा सौम्याः = सर्वे शुभग्रहाः केन्द्राद्बहिःस्थानगताः पणफरापोक्लिमगता भवेयुः तदा जातस्तु भिक्षाशनो याच्ञावृत्त्याजीविको भवेत्परपोषितोऽन्यपालितश्च भवेत् ॥ ३३ ॥

यदि स्थिर लग्नमें जन्म हो, समस्त पापग्रह केन्द्रत्रिकोणमें हों केन्द्रके बाहर शुभग्रह हों तो वह जातक भिक्षा मांगकर भोजन करे और दूसरेसे पाला जाय ॥ ३३ ॥

चरे विलग्ने निशि सौम्यखेटास्त्रिकोणकेन्द्रोपगता नवीर्याः ।
खलग्रहाः केन्द्रबहिःस्थिताश्चेद् भिक्षाशनं नित्यमुपैति जातः ॥ ३४ ॥

निशि=रात्रिसमये चरे विलग्ने=चरराशौ लग्ने, सौम्यखेटाः=शुभग्रहाः नवीर्या=निर्बलाः सन्तस्त्रिकोणकेन्द्रोपगताः ( ५।९।१।४।७।१० भावगताः ) भवेयुः, खलग्रहाः=पापाः केन्द्रबहिःस्थिताः=पणफरे आपोक्लिमे वा गताः स्युश्चेत्तदा जातो नित्यं=सर्वदा भिक्षाशनं उपैति । ईदृग्योगे जातो नरः सदैव भैक्ष्यमन्नमश्नातीति ॥ ३४ ॥

रातमें चरराशिका लग्न हो, शुभग्रह निर्बल होकर त्रिकोण या केन्द्रमें हों और पापग्रह केन्द्रमें न हों तो जातक प्रतिदिन भिक्षा मांगकर गुजर करे ॥ ३४ ॥

पापा नीचस्थानगाः पापकर्मा, सौम्या नीचस्थानगा गूढपापः ।
जीवे नीचस्थानगे कर्मराशौ, नीचे भौमे नन्दनस्थे तथैव ॥ ३५ ॥

यदि जन्मकाले पापाः पापग्रहाः = रविभौमशनिक्षीणचन्द्राः नीचस्थानगा भवेयुस्तदा जातः पापकर्मा भवति । चेत्सौम्याः = शुभग्रहा नीचस्थानगा भवेयुस्तदा जातो गूढपापो रहस्ये पापकृद्भवति । जीवे = गुरौ नीचस्थानगे कर्मराशौ = दशमभावगते ( मेषलग्ने सङ्घटतेऽयं योगः ), एवं नीचे भौमे = स्वनीच—( कर्क ) राशिगते भौमे नन्दनस्थे = पञ्चमभावगते ( मीनलग्ने योगोऽयं सङ्घटेत ) तथैव फलमर्थात्पापकर्मा भवति जातक इति ॥ ३५ ॥

यदि सभी पापग्रह नीचमें हों तो जातक पापी होवे । यदि शुभग्रह नीचमें हों तो गूढ पापी ( छिपकर पाप करनेवाला ) हो । यदि गुरु नीच—( मकर ) का हो कर १० वें भावमें हो वो, अथवा मङ्गल नीच ( कर्क ) का होकर ५ वें भावमें हो तो जातक पापी होवे ॥ ३५ ॥

नीचांशगास्तुङ्गगृहोपयाता जातस्य नीचं फलमाशु दद्युः ।
नीचङ्गतास्तुङ्गनवांशकस्थाः सौम्यं फलं व्योमचराः प्रकुर्युः ॥ ३६ ॥

तुङ्गगृहोपयाताः=स्वस्वोच्चराशिगता व्योमचराः=ग्रहाः (शुभाः पापाश्च) नीचांशगाः= स्वस्वनीचराशिनवांशगताश्च भवेयुरर्थादुच्चराशौ नीचनवांशका भवेयुस्तदा ते ग्रहा जातस्याशु = शीघ्रमेव नीचं फलमशुभं फलं दद्युः । अथ ते ग्रहा नीचं गताः = स्वस्वनीचराशिगतास्तुङ्गनवांशकस्थाः, अर्थान्नीचराशावुच्चराशेर्नवांशकमुपगता भवेयुस्तदा ते जातस्य सौम्यं = शुभं फलं प्रकुर्युरिति । तथोक्तमपि सर्वार्थचिन्तामणौ—

नीचस्थिता जन्मनि ये ग्रहेन्द्राः स्वोच्चांशगा राजसमानभाग्याः ।
उच्चस्थिताश्चेदपि नीचभागा ग्रहा न कुर्वन्ति तथैव भाग्यम् ॥ इति ॥

अत्र प्रसङ्गादन्येऽपि दरिद्रयोगा विलिख्यन्ते—

सक्रूरो धनपश्चैव धनभं सौम्यसंयुतम् । धनस्वामी चास्तगतो मानवो द्रव्यवर्जितः ॥
धनाधिपो यदा षष्ठे मृत्युभेऽप्यथवा व्यये । सक्रूरं धनभं चैव निर्धनः खलु मानवः ॥

लग्नाधीशो व्ययस्थो वै सक्रूरो वा विशेषतः । निर्बलोऽस्तं गताः सौम्या निर्द्रव्यो जायते नरः ॥
लग्नस्वामी हीनवीर्यो द्रव्यनाथोऽस्तगो यदा । केन्द्रगाः सबलाः क्रूरा दरिद्रो मानवो भवेत्॥
सक्रूरं धनभं चैव क्रूरेणैव निरीक्षितम् । धनपो रविसंयुक्तो दरिद्रो बहुतो भवेत् ॥
धनभं क्रूरसंयुक्तं क्रूरदृष्टं तथा पुनः । धनस्वामी तृतीये वै दरिद्रो नाम जायते ॥
पापाश्चतुर्षु केन्द्रेषु तथा पापो धने स्थितः । दरिद्रयोगं जानीयात् स्ववंशस्य क्षयं करः ॥
*रविणा सहितो मन्दः शुक्रेण च युतो भवेत् । तदा दरिद्रयोगोऽयं सद्रव्यमपि शोषयेत् ॥ २६॥

**उच्च राशिस्थ ग्रह नीच नवांशमें हों तो जातकको शीघ्र नीच फल देते हैं । नीच राशिमें होकर उच्च नवांशस्थ हों तो शुभ फल देते हैं ॥ ३६ ॥**

### अथ दरिद्रयोगफलम् ।

निर्भाग्यो विकलेन्द्रियो विषमधीर्दारात्मजैर्निन्दितो
भिक्षाशी विषमस्थितो विषमवाक् शिश्नोदरे तत्परः ॥
अन्यायार्जनतत्परस्त्वनुदिनं मात्सर्यवाक् कण्टकी
नित्यं स्यात्परदारसक्तहृदयो नीचोऽन्धमूको जडः ॥ ३७ ॥
दरिद्रयोगे कलहप्रियः स्यात् कुष्ठी परेषां हितहृत् कृतघ्नः ।
वाचालको भूसुरभक्तिहीनः कुदारयुक्तः कुनखी च जातः ॥ ३८ ॥

इदानीं श्लोकद्वयेन पूर्वोक्तानां दरिद्रयोगानां समासेन फलं प्रोच्यते । तत्र श्लोकौ स्पष्टार्थाविति ॥ ३७-३८ ॥

**दरिद्रयोगमें उत्पन्न मनुष्य भाग्यहीन, विकलेन्द्रिय, विषमबुद्धि, स्त्रीपुत्रसे निन्दित, भिक्षाशी, विषमस्थिति, विषम वचन, पेट भरने और लम्पट कार्यमें लीन, नित्य अन्यायका सञ्चय करनेवाला, उग्र वचन बोलने वाला, कटंक, परस्त्रीमें नित्य आसक्त हृदय, नीच, अन्धा, गूंगा, जड, कलहप्रिय, कुष्ठी, दूसरेके हितका नाशक, कृतघ्न, वाचाल, ब्राह्मणके भक्तिसे रहित, दुष्टस्त्री युत, तथा कुनखी होता है ॥ ३७-३८ ॥**

### अथ प्रेष्ययोगाः ।

माने रवौ मन्मथगे निशीशे गेहे शनौ सोदरगे धराजे ।
लग्ने चरे देवगुरौ धनस्थे जातो निशायां परकार्यकृत्स्यात् ॥ ३९ ॥
धर्मे भृगौ कामगते मृगाङ्के वाचस्पतौ वित्तविलग्नपे वा ।
रन्ध्रस्थिते भूतनये च कीर्त्यां लग्ने स्थिरे प्रेष्यभवा भवन्ति ॥ ४० ॥
प्रेष्यश्चरोदयपतौ निशि सन्धियाते केन्द्रस्थिते यदि खलद्युच तु जातः ।
मन्देन्दुजीवभृगुजा दिवि केन्द्रकोणे सन्धिस्थिताः स्थिरविलग्नयुते तथा स्यात् ॥
ऐरावतांशेन्द्रगुरौ ससन्धौ शीतद्युतौ चोत्तमवर्गयुक्ते ।
केन्द्राद् बहिःस्थे निशि कृष्णपक्षे शुक्रे विलग्ने परकर्मजीवी ॥ ४२ ॥
प्रेष्यो भवेदरिसुखास्पदसन्धियाता भूपुत्रदेवगुरुवासरनायकाश्चेत् ।
पापांशके शशिनि शोभनराशियुक्ते जीवे विलग्नपयुतेपरकार्यकृत्स्यात ॥ ४३ ॥
मृगाननस्थे पुरुहूतवन्द्ये सपत्नभावाष्टमरिःफराशौ ।
रसातलस्थे हिमगौ विलग्नाज्जातः परप्रेष्यमुपैति नित्यम् ॥ ४४ ॥

अधुना केचित् प्रेष्ययोगा उच्यन्ते । येषु योगेषु जातो नरः प्रेष्यत्वं ( दासत्वम् )

---

*** अस्य भङ्गः**—सिंहे मेषे यदा भानुः सितमन्दयुतो भवेत् ।
गुरुसौम्यसमालोकी सधनो भवति ध्रुवम् ॥

प्राप्नोति ते प्रेष्ययोगाः। रवौ=सूर्ये माने=दशमे भावे, निशीशे=चन्द्रे मन्मथगे=सप्तमभावगते, शनौ गेहे=चतुर्थे, धराजे=मङ्गले सोदरगे=तृतीयभावमुपगते, लग्ने चरे=चरराशौ (१।४।७।१० राशौ) देवगुरौ=बृहस्पतौ च धनस्थे निशायां=रात्रौ जन्मनि जातो नरः परकार्यकृत्=अन्यस्य कार्यकर्त्ता भृत्यो भवति ॥ ३९ ॥

भृगौ=शुक्रे धर्मे=नवमभावे, मृगाङ्के=चन्द्रे कामगते=सप्तमभावगते, वाचस्पतौ=बृहस्पतौ वित्तविलग्नपे=द्वितीयेशे लग्नेशे वा (लग्नेशो वा धनेशो गुरुर्भवेदित्यर्थः) भूतनये=मङ्गले रन्ध्रस्थितेऽष्टमभावगते च स्थिरे स्थिरराशौ लग्ने जाताः कीर्त्या प्रेष्यभवा भवन्ति, अस्मिन्प्रेष्ययोगे समुद्भूता नराः कीर्त्या=यशसाऽन्विता भवन्तीत्यर्थः।

अथात्र 'स्थिरे लग्ने वाचस्पतौ वित्तविलग्नपे वे'त्यत्र यदि वृश्चिकः कुम्भो वा लग्नं स्यात्तदा गुरुर्वित्तेशो भवितुमर्हति, परञ्च स्थिरे लग्ने गुरुर्विलग्नपतिर्न जातु भवितुमर्हो गुरोः राशिद्वयस्यैव (९।१२) द्वन्द्वत्वात्, इति विवेचनीयं विज्ञैरिति ॥ ४० ॥

निशि=रात्रौ जन्मनि चरोदयपतौ=चरराशिलग्नेशे सन्धियाते=ऋक्षसन्धि कटकालिमीनमान्तमुपयाते। एतदुक्तं भवति। रात्रौ चरराशिलग्नं स्यात्तदीशश्चर्क्षसन्धिगतो भवेत्। खलयुचरे पापग्रहे केन्द्रस्थिते जातस्तु प्रेष्यो भवेत्। अथ दिवि = दिने जन्मनि मन्देन्दुजीवभृगुजाः=शनिचन्द्रगुरुशुक्राः केन्द्रकोणे गताः (१।४।७।१०।५।९ भावगताः) सन्धिस्थिताश्च भवेयुस्तथा स्थिरविलग्नयुते = लग्नं स्थिरराशिः (२।५।८।११) भवेत्तदा जातस्तथा स्यादर्थात्प्रेष्यः स्यादिति ॥ ४१ ॥

ऐरावतांशेन्द्रगुरौ=बृहस्पतिरैरावतांशे=स्वकीये नवाधिकारे (१ अ० ४५-४८ श्लो०) ससन्धौ = सन्धिगतश्च भवेत्, शीतद्युतौ = चन्द्रे चोत्तमवर्गयुक्ते = स्वकीयेऽधिकारत्रितये (१ अ० श्लो ४५ द्रष्टव्यः) विद्यमाने केन्द्राद्बहिःस्थे केन्द्रतोऽन्यत्रस्थे निशि = रात्रौ कृष्णपक्षे तथा शुक्रे विलग्ने तत्कालीनलग्नगते यस्य जन्म भवति स जातः परकर्मजीवी = परस्य कर्मद्वारा जीवति। अन्यस्य भृत्यो (प्रेष्यः) भवतीत्यर्थः ॥ ४२ ॥

चेद्यदि भूपुत्रदेवगुरुवासरनायकाः = मङ्गलबृहस्पतिसूर्याः अरिसुखास्पदसन्धियाताः = षष्ठचतुर्थदशमभावानां सन्धौ प्राप्ताः स्युरर्थाद्भौमः षष्ठभावसन्धौ, गुरुश्चतुर्थभावसन्धौ, सूर्यो दशमभावसन्धौ स्थितो भवेत्। शशिनि=चन्द्रे शोभनराशियुक्ते शुभराशौ, पापांशके=पापनवांशे गतवति, जीवे=गुरौ विलग्नपेन=लग्नेशेन युते=सहिते यत्र तत्र गते जातः परकार्यकृत् = प्रेष्यः स्यादिति ॥ ४३ ॥

पुरुहूतवन्द्ये=बृहस्पतौ मृगाननस्थे = मकरस्थे (स्वनीचस्थे) तथा सति सपत्नभावाष्टमरिःफराशौ = षष्ठाष्टव्ययभावे गतवति। एतदुक्तं भवति। षष्ठेऽष्टमे द्वादशे वा भावे मकरराशिस्तद्गतो गुरुर्भवेदिति। तथा हिमगौ = चन्द्रे विलग्नाज्जन्मलग्नात् रसातलस्थे=चतुर्थभावगते जातो नरो नित्यमनवरतं परप्रेष्यं = दास्यमुपैति = आप्नोतीति ॥ ४४ ॥

यदि सूर्य १० वें, चन्द्रमा ७ वें शनि ४ थे, मङ्गल ३ रे बृहस्पति २ रे भावमें हों और लग्न चरराशि (१।४।७।१०) का हो तथा यदि रातमें जन्म हो तो वह जातक दूसरेका नौकर होवे याने इसे प्रेष्य योग कहते हैं ॥ ३९ ॥

यदि शुक्र ९ वें, चन्द्रमा ७ वें, और मङ्गल ८ वें हो बृहस्पति लग्नेश, या धनेश हो और लग्न स्थिर राशि-(२।५।८।११) का हो तो वह प्रेष्य योग कहलाता है, इसमें उत्पन्न होने वाला यशस्वी नौकर होता है ॥ ४० ॥

यदि रातमें जन्म हो वहां चर लग्न हो, तथा लग्नेश सन्धिमें गत हो और पापग्रह केन्द्रगत हों तो जातक प्रेष्य (दूसरे का नौकर) होवे। यदि दिनमें जन्म हो वहां शनि,

चन्द्रमा, गुरु और शुक्र केन्द्र या त्रिकोणस्थ होकर सन्धिगत होवें तथा लग्न स्थिर राशिका हो तो जातक प्रेष्य होता है ॥ ४१ ॥

सन्धिस्थ बृहस्पति ऐरावत अंशमें हो, चन्द्रमा उत्तम वर्गमें होकर केन्द्रके बाहर हो, कृष्णपक्षकी रात्रिमें जन्म हो, शुक्र लग्नमें हो तो दूसरेका कार्य करके जीवे ॥ ४२ ॥

मङ्गल, बृहस्पति और सूर्य षष्ठ, चतुर्थ और दशमभावकी सन्धिमें स्थित हों, चन्द्रमा पापांशकमें हो, शुभ राशिमें बृहस्पति लग्नेशसे युक्त हो तो दूसरेका कार्य करनेवाला होवे।

बृहस्पति मकरमें होकर शत्रुभाव, अष्टम या द्वादशमें हो, चन्द्रमा लग्नसे चतुर्थमें हो तो वह जातक नित्य दूसरेका कार्य करनेवाला होवे। ( सु० शा० कार ) ॥ ४४ ॥

## अथ प्रेष्ययोगफलम्।

पापात्मा कलहप्रियः कठिनवाग् भूदेवतादूषको
विद्याभाग्यविहीनदुष्टरसिको मात्सर्यकोपान्वितः।
मिथ्यावादविनोदवञ्चनरतः शिश्नोदरे तत्परः
कारुण्यास्थिरमानभङ्गिचतुरो योगे परप्रेष्यके ॥ ४५ ॥

इदानीं पूर्वोक्तानां प्रेष्ययोगानां सामान्येन फलमनेन श्लोकेन सरलार्थकेनोच्यते। पापात्मेति ॥ ४५ ॥

प्रेष्ययोगमें उत्पन्न मनुष्य पापात्मा, कलहप्रिय, कटुभाषी, ब्राह्मणनिन्दक, विद्या-भाग्य-हीन, दुष्ट, रसिक, डाह-क्रोधसे युक्त, मिथ्यावादी, ठगीमें लीन, पेट भरने और रंडीबाजी करनेमें तत्पर, कारुणीक, चल चित्त और अपमान सहनेमें चतुर होता है ॥ ४५ ॥

## अथ अङ्गहीनयोगाः।

मेषे वृषे चापधरे विलग्ने विकारदन्तो यदि पापदृष्टे।
मन्दे मदस्थेऽहियुते कुजे वा बलैर्विहीनेऽङ्गविहीनवान् स्यात् ॥ ४६ ॥

मेषे, वा वृषे, वा चापधरे=धनुषि विलग्ने = जन्मलग्ने, तस्मिन् यदि पापदृष्टे = पापग्रहेण केनचिदवलोकिते जातो विकारदन्तो विकृतदशनो भवेत्। अथ मन्दे=शनौ, वा अहियुते = राहुसहिते कुजे ( कुजराहू ) मदस्थे = सप्तमभावगते बलैर्विहीने = निर्बले च जातोऽङ्गविहीनवान् स्यात्। एतद्योगे जातस्य कश्चिदङ्गो हीनः स्यादित्यर्थः ॥ ४६ ॥

मेष, वृष या धनु लग्नमें जन्म हो उसे पापग्रह देखता हो तो जातकके दांतमें विकार हो। शनि सप्तममें हो या मङ्गल राहुके साथ निर्बल होकर ९ वें में हो तो अङ्गहीन होवे॥४६॥

लग्नाद्दशमगश्चन्द्रः सप्तमस्थो धरासुतः।
द्वितीयस्थानगो भानुरङ्गहीनो भवेन्नरः ॥ ४७ ॥

चन्द्रमा लग्नसे दशवेंमें हो, मङ्गल सप्तममें हो, सूर्य दूसरे भावमें हो तो मनुष्य अङ्ग हीन होवे ॥ ४७ ॥

उ. ४६ श्लो. ( १ )




उ. ४७ श्लो. ( २ )



त्रिकोणगे ज्ञे विबलैस्ततोऽपरैर्मुखाङ्घ्रिहस्तैर्द्विगुणैस्तदा भवेत् ।
अवाग्गवीन्दावशुभैर्भसन्धिगैः शुभेक्षिते चेत् कुरुते गिरं चिरात् ॥ ४८ ॥

इदानीं द्विगुणाङ्गयोगो मूकयोगश्चोच्यते । ज्ञे = बुधे त्रिकोणगे = जन्मलग्नान्नवमे पञ्चमे वा स्थिते, ततोऽपरैर्बुधादितरैः सर्वैर्ग्रहैर्विबलैर्यत्र कुत्रापि निर्बलैर्जातो मुखाङ्घ्रिहस्तैर्द्विगुणैर्युतो भवेत् । उक्तयोगे यस्य जन्म भवेदसौ द्विमुखश्चतुर्भुजश्चतुष्पाच्च भवेदित्यर्थः । इन्दौ= चन्द्रे गवि = वृषे गतवति, अशुभैः = पापग्रहैर्भसन्धिगैः = कटकालिमीनानामन्त्यगतैर्जातोऽवाक् = मूको भवति । चेद्यस्मिन्योगे चन्द्रः शुभेक्षितः = शुभग्रहैरवलोकितो भवेत्तदा जातस्य चिरादधिककालेन गिरं = वाचं कुरुते । अर्थादेव चन्द्रे पापेक्षिते मूक एव भवेत् । मिश्रग्रहेक्षिते बलवतो ग्रहणमिति । उक्तञ्च गर्गेण—

कुलीरालिझषान्तस्थैः पापैश्चन्द्रे वृषोपगैः । मूकः पापेक्षितैः सौम्यैश्चिरेण लभते गिरम् ॥
मिश्रग्रहैर्यथावीर्यं फलं बोध्यं मनीषिणा ॥ इति ॥ ४८ ॥

यदि बुध लग्नसे त्रिकोण ( ५।९ ) में हो और सब ग्रह जहां कहीं निर्बल हों तो जातक के मुख, पैर, हाथ दोगुने होते हैं, याने दो मुख, ४ पैर और ४ हाथ होते हैं । यदि चन्द्रमा वृष राशिमें हो और पापग्रह सब ऋक्ष सन्धिमें हों तो जातक गूंगा होवे । यदि इस योगमें चन्द्रमा शुभग्रहसे देखा जाता हो तो बहुत दिनोंपर वह जातक बोलता है ॥ ४८ ॥

सौम्यर्क्षांशे रविजरुधिरौ चेत् सदन्तोऽत्र जातः
कुब्जः स्वर्क्षे शशिनि तनुगे मन्दमाहेयदृष्टे ॥
पङ्गुर्मीने यमशशिकुजैर्वीक्षिते लग्नसंस्थे
सन्धौ पापे शशिनि च जडः स्यान्न चेत्सौम्यदृष्टिः ॥ ४९ ॥

इदानीं सदन्तकुब्जपङ्गुजडजन्मयोगा उच्यन्ते । रविजरुधिरौ=शनिभौमौ चेद्यदि सौम्यर्क्षांशे = यत्र तत्र बुधस्य राशौ ( मिथुने कन्यायां वा ) वा बुधस्य नवांशे ( मिथुनस्य कन्याया वा नवांशे ) स्थितौ भवेतां तदाऽत्र योगे जातः सदन्तो भवति, दन्तसहित एव प्रादुर्भवतीति । कुब्ज इति । शशिनि = चन्द्रे स्वर्क्षे=कर्कराशिस्थे तथासति तनुगे=लग्नगते मन्दमाहेयदृष्टे=शनिभौमाभ्यामवलोकिते च जातः कुब्जः (कूबर Dworf) भवति । पङ्गुरिति । मीने = मीनराशौ लग्नसंस्थे मीनराशिर्लग्नं भवेदित्यर्थः, तस्मिन् यमशशिकुजैः = शनिचन्द्रमङ्गलैर्वीक्षिते=दृष्टे जातः पङ्गुः=पद्विकलो ( लङ्गरा Cripple ) भवति । पापे= शनिभौमसूर्याणामन्यतमे, शशिनि = चन्द्रे च सन्धौऋक्षसन्धौ (कर्कालिमीनान्त्ये) विद्यमाने जातो जडः = श्रोत्रेन्द्रियहीनो वधिर इति यावत् ( Dull ) भवति । चेद्यस्मिन्योगचतुष्टये सौम्यदृष्टिः = शुभग्रहाणां दृष्टिर्न स्यात्तदैवोक्तं फलं पूर्णं परिणमति । शुभदृष्टिसत्वे पूर्वोक्तं योगचतुष्टयं व्यर्थमेवेत्युक्तमपि सारावल्याम्—

"........व्यर्था भवन्ति योगाः सौम्यग्रहवीक्षिताः सर्वे" इति ॥ ४९ ॥

शनि और मङ्गल किसी भी राशिमें बुधके नवांशमें ( ३ के या ६ के नवांशमें ) हों तो बालक दांतके सहित जन्म लेवे । चन्द्रमा अपनी राशि ( ४ ) का होकर लग्नमें हो उसपर शनि और मङ्गलकी दृष्टि हो तो जातक कुबड़ा होवे । यदि मीनराशि जन्मलग्न हो उसपर शनि, चन्द्रमा और मङ्गलकी दृष्टि होवे तो जातक लङ्गड़ा होवे । यदि चन्द्रमा और पापग्रह ऋक्षसन्धिमें हो तथा उसपर शुभग्रहकी दृष्टि नहीं हो तो जातक जड़ ( वधिर ) होवे ॥४९॥

सौरशशाङ्कदिवाकरदृष्टे वामनको मकरान्त्यविलग्ने ।
धीनवमोदयगैश्च दृगाणैः पापयुतैरभुजाङ्घ्रिशिराः स्यात् ॥ ५० ॥
लग्नद्रेकाणगो भौमः सौरसूर्येन्दुवीक्षितः ।
कुर्याद्विशिरसन्तद्वत् पञ्चमे बाहुवर्जितम् ॥ ५१ ॥

इदानीं वामनहीनाङ्गयोगौ कथ्येते । मकरान्त्यविलग्ने = मकरराशेरन्त्यो नवांशको लग्ने भवेत् तस्मिन् सौरशशाङ्कदिवाकरदृष्टे = शनिचन्द्रसूर्यैरवलोकिते जातो वामनको लघुकायो भवति । धीनवमेति । धीः पञ्चमः, नवमः, उदयो लग्नं एतत्त्रयगतैर्द्रेष्काणैः पापयुतैः, सौरशशाङ्कदिवाकरदृष्टैर्जातोऽभुजाङ्घ्रिशिराः स्यात् । अत्र पञ्चमे भावे यो द्रेष्काणस्तस्मिन्पापेनाङ्गारकेण युते सूर्यचन्द्रशनिभिर्दृष्टे जातोऽभुजो भुजहीनो भवेत् । नवमे भावे यो द्रेष्काणस्तस्मिन्नङ्गारकेण युते सूर्यचन्द्रशनिदृष्टे जातोऽङ्घ्रिहीनो विपदो भवेत् । लग्ने यो द्रेष्काणस्तस्मिन्भौमे गतवति सौरशशाङ्कदिवाकरदृष्टे जातोऽशिराः शिरोरहितो भवेदिति । तथोक्तं भगवता गार्गिणा—

"लग्नद्रेष्काणगो भौमः सौरसूर्येन्दुवीक्षितः । कुर्याद् विशिरस तद्वत्पञ्चमे बाहुवर्जितम् ।
विपदं नवमस्थाने यदि सौम्यैर्न वीक्षितः" इति ।

अत्रापि शुभदृष्टिसत्त्वे उक्तयोगानां भङ्ग एव भवति 'यदि सौम्यैर्न वीक्षितः' इति गार्गिवचनाद्बोध्यम् । अत्र ५१ श्लोकस्तु ५० श्लोकोक्तधीनवमोदयगैश्च दृगाणैरित्यस्य स्पष्टीकरणमेवेत्यलं विस्तरेण ॥ ५०–५१ ॥

**मकरके अन्त्यका ( ९।२७°–३०° ) लग्न हो उसे शनि, चन्द्र और सूर्य देखते हों तो वामन हो । पञ्चम, नवम और लग्नका द्रेष्काण पापग्रहसे युक्त हो तो जातक क्रमसे विना हाथ, पैर, शिरका होवे ॥ ५० ॥**

लग्नके द्रेष्काणमें मङ्गल हो शनि, सूर्य और चन्द्रमा उसे देखते हों तो विना शिरवाला हो और यही योग पञ्चममें हो तो हस्तहीन हो । ( सु शा. कार ) ॥ ५१ ॥

रविशशियुते सिंहे लग्ने कुजार्किनिरीक्षिते
नयनरहितः सौम्यासौम्यैः सबुद्बुदलोचनः ॥
व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रवि-
र्न शुभगदिता योगा याप्या भवन्ति शुभेक्षिताः ॥ ५२ ॥

इदानीं विकलनयनयोगा उच्यन्ते । सिंहे लग्ने रविशशियुते=सूर्याचन्द्रमसौ जन्मलग्नगतसिंहराशौ भवेतां तस्मिन्, कुजार्किनिरीक्षिते=भौमशनिभ्यामवलोकिते जातो नयनरहितोऽन्धो भवति । तस्मिन्नेव योगे सौम्यासौम्यैः = शुभग्रहैः पापग्रहैश्च निरीक्षिते जातः सुबुद्बुदलोचनः=पुष्पिताक्षः ( Blear eyed ) भवति=अत्रेदमवधेयम् । यदि सिंहलग्ने केवलं सूर्यः कुजार्किनिरीक्षितो भवेत्तदा दक्षिणाक्षिकाणः, मिश्रग्रहनिरीक्षितस्तदा दक्षिणबुद्बुदाक्षो भवति । केवलं चन्द्रः सिंहलग्ने कुजार्किनिरीक्षितो वामाक्षिकाणः, सौम्यासौम्यैर्निरीक्षितो वाम-बुद्बुदाक्षो भवति । व्ययगृहेति । चन्द्रो लग्नाद् व्ययगृहगतो द्वादशभावगतश्चेद् वामं नेत्रं हिनस्ति । तदानीं जातो वामाक्षिकाणो भवति । रविर्व्ययगृहगतोऽपरं = दक्षिणं नयनं हिनस्ति । न शुभगदितेति । पूर्वोक्ताः सर्वे योगा न शुभगदिताः = अशुभफलदास्ते चेच्छुभेक्षिताः=शुभग्रहदृष्टा भवेयुस्तदा याप्या भवन्ति । पूर्णं फलं न ददति किन्तु किञ्चिदेव फलं प्रयच्छन्तीत्यर्थः । तथैवाह सारावल्याम्—

स्यातां यद्याधाने रविशशिनौ सिंहराशिगौ लग्ने ।
दृष्टौ कुजसौरिभ्यां जात्यन्धः सम्भवति तत्र ॥
आग्नेयसौम्यदृष्टौ रविशशिनौ बुद्बुदेक्षणं कुरुतः ।
नयनविनाशोऽपि यथा तथाऽधुना सम्प्रवक्ष्यामि ॥
व्ययभवनगतश्चन्द्रो वामं चक्षुर्विनाशयति हीनः ।
सूर्यस्तथैव चान्यच्छुभदृष्टौ याप्यतां नयतः ॥ इति ॥

Notes-पूर्वोक्ता एते श्लोका बृहज्जातके सारावल्यां चाधानकालिकविचाराहाः, परञ्च तत्रैव 'जन्मन्याधाने प्रश्नकाले वे'त्यपि दर्शनाज्जन्मकालेऽपि विचारणीया इति ॥ ५२ ॥

सिंह लग्नमें सूर्य और चन्द्र हों उन्हें मङ्गल और शनि देखते हों तो वह बालक नेत्र-रहित हो। यदि शुभग्रह पापग्रह दोनों देखते हों तो बुद्बुद नेत्र हो। व्ययमें चन्द्रमा हो तो वाम नेत्रकी हानि करे और सूर्य हो तो दक्षिण नेत्रकी हानि करे। अशुभ ग्रहोंके देखने से ये योग होते हैं। यहां शुभ ग्रहके देखनेसे उससे न्यून फल होता है ॥ ५२ ॥

शूरः स्तब्धो मध्यदृष्टिर्विलग्ने मेषे स्वोच्चे रोगदृक् सिंहगेऽर्के ।
रात्रावन्धस्तौलिगे निर्द्धनी स्यात् कर्किण्यर्के लग्नगे बुद्बुदाक्षः ॥ ५३ ॥

इदानीं रवेः स्थितिवशेन नेत्रविकारयोगा उच्यन्ते। अर्के-सूर्ये विलग्नेजन्मकाले गते सति जातः शूरः=सङ्ग्रामी, स्तब्धश्चिरकार्यकृत्, मध्यदृष्टिस्तिर्यङ्नयनश्च भवेत्। एतत्किल सामान्येन लग्नगतसूर्यफलम्। मेष-सिंह-तुला-कर्कलग्नगतेऽर्के फले वैलक्षण्यं तदुच्यते। मेषे स्वोच्चे लग्ने गतेऽर्के रोगदृक्=नेत्ररोगी भवति। सिंहगेऽर्के=सिंहराशिगतलग्ने विलसति सूर्ये जातो रात्रावन्धो निशान्धो भवति। तौलिगे=तुलालग्ने (नीचे) गतेऽर्के जातो निर्धनी=दरिद्रो भवति। अर्के=सूर्ये कर्किणि लग्ने=कर्कराशिलग्ने गतवति जातो बुद्बुदाक्षः=पुष्पिताक्षो भवति। उक्तमपि बृहज्जातके—

"शूरस्तब्धो विकलनयनो निर्घृणोऽर्के तनुस्थे, मेषे सस्वस्तिमिरनयनः, सिंहसंस्थे निशान्धः नीचेऽन्धोऽस्वः, शशिगृहगते बुद्बुदाक्षः पतङ्गे, भूरिद्रव्यो नृपहृतधनो वक्त्ररोगी द्वितीये इति"॥

यदि सूर्य जन्मलग्नमें हो तो जातक शूर (संग्रामप्रिय), स्तब्ध (चिरकार्य कर्ता) और मध्यनेत्र होवे। सूर्य यदि मेष लग्नका हो तो नेत्रमें रोग हो। सिंह लग्नमें सूर्यके होनेसे राज्यन्ध हो। तुला लग्नस्थ सूर्य हो तो दरिद्र हो। कर्क लग्नमें सूर्य हो तो बहुत छोटी आंखें हों ॥ ५३ ॥

व्यये रवीन्दू युगपत् पृथक्स्थौ नेत्रे हरेतामपसव्यसव्ये ।
षट्छिद्रगाश्चाक्षि हरन्ति पापाः सव्यं रिपौ दक्षिणमष्टमस्थाः ॥ ५४ ॥

रवीन्दू=सूर्याचन्द्रमसौ युगपत्सम्मिलितौ व्यये=लग्नाद् द्वादशगतौ भवेतां तदा जातस्य नेत्रे=द्वे चक्षुषी हरेतां=विनाशयेताम्। तावेव सूर्येन्दू व्यये पृथक्स्थौ भवेतां तदा सव्यापसव्ये नेत्रे हरेतामर्थात् सूर्यो हि केवलं व्यये तदा दक्षिणं नेत्रं, चन्द्रः केवलं व्यये स्थितो वामं नेत्रं नाशयतीति। षट्छिद्रगा इति। पापाः=पापग्रहाः षट्छिद्रगाः षडष्टभावगताश्चाक्षि=नेत्रं हरन्ति=नाशयन्ति। तत्र रिपौ=षष्ठे स्थिताः पापाः सव्यं=वामनेत्रं हरन्ति, अष्टमस्थाः पापा दक्षिणं नेत्रं हरन्ति। तथोक्तमपि सर्वार्थचिन्तामणौ—

दिनेशचन्द्रौ व्ययगौ तदानीमन्धो भवेत्सौम्यदृशा विहीनौ ।
युक्ते तयोरन्यतरेण रिष्फे काणो भवेत्सौम्यदृशा विहीने ॥

उक्तयोगे शुभग्रहदृष्टिसत्त्वे न तद्योगफलमिति सर्वार्थचिन्तामण्युक्तवचनाद्बोध्यमिति ॥

यदि सूर्य और चन्द्रमा दोनों १२ वें भावमें हों तो दोनों आंखोंसे अन्धा हो। यदि केवल सूर्य १२ वें हो तो दाहिनी आँख और केवल चन्द्रमा १२ वें हो तो बांयी आंख अन्धी हो। या पापग्रह (मं० श० रा० के० सू०) छठे, आठवें भावोंमें हों तो आंखें अन्धी होती हैं। यहां भी छठेमें पापग्रह बांयी आंख और आठवेंमें दाहिनी आंखको नष्ट करते हैं ॥५४॥

विकर्तनो लग्नगतोऽस्तगो वा दिनेशपुत्राभियुतेक्षितश्चेत् ।
तस्येक्षणं दक्षिणमाशु हन्याद्दहिमासूनुयुतस्तु वामम् ॥ ५५ ॥

विकर्तनः=सूर्यो लग्नगतो वा अस्तगतः=सप्तमभावगतो दिनेशपुत्रेण=शनिनाऽभियुतेक्षितः=सहितोऽवलोकितो वा चेद्भवेत्तदा तस्य जातस्य दक्षिणमीक्षणं=चक्षुराशु=शीघ्रमेव

हन्यान्नाशयेत् । स एव लग्नगतो वा सप्तमस्थो रविराहिक्ष्मासूनुभ्यां = राहुभौमाभ्यां चेद्युतो भवेत्तदा तु वामं चक्षुर्हन्यादिति ॥ ५५ ॥

यदि सूर्य लग्न या ७ वें भावमें हो उसे शनि देखता हो या शनि सूर्यके साथ हो तो जातककी दाहिनी आंख नष्ट करता है। यदि लग्नस्थ या ७ मस्थ सूर्य राहु और मङ्गलसे युक्त हो तो बांयीं आंख नष्ट करता है। ( सु० शा० कार ) ॥ ५५ ॥

दिनेशचन्द्रौ यदि रिष्फयातौ सपत्नरन्ध्रव्ययगास्त्वसौम्याः ।
हन्यादरिस्थो नयनं हि वामं रन्ध्रस्थितो दक्षिणभागनेत्रम् ॥ ५६ ॥

दिनेशचन्द्राविति । सूर्यचन्द्रमसौ यदि जन्मलग्नात् रिष्फयातौ=द्वादशभावगतौ भवेतां तथैव चासौम्याः=पापग्रहाः सपत्नरन्ध्रव्ययगाः=षडष्टव्ययभावगतास्तु भवेयुः ( तुशब्दोऽत्र पक्षान्तरवाची ) तदा जातस्य नेत्रद्वयं विनश्यति । हन्यादिति । अरिस्थः षष्ठस्थो हि पापग्रहो वामं नेत्रं हन्यात् । तथा रन्ध्रस्थितोऽष्टमभावगतः पापो दक्षिणभागनेत्रं इत्यादीति । श्लोकोऽयं ५४ श्लोकतुल्यार्थ एवेति ॥ ५६ ॥

**वा यदि सूर्य और चन्द्र बारहवें हों, षष्ठ, अष्टम और द्वादशभावमें पाप हों तो षष्ठस्थानीय ग्रह वाम नेत्रका नाश करे और अष्टमस्थ ग्रह दक्षिण नेत्रका नाश करे ॥ ५६ ॥**

कुजे धनेशे निधने रवीन्द्वोः शत्रुव्ययस्थानगतेऽर्कजेऽन्धः ।
रन्ध्रावसानारिगते शशाङ्के शनौ सभौमे यदि नष्टनेत्रः ॥ ५७ ॥

कुज इति । धनेशे=द्वितीयभावपतौ कुजे रवीन्द्वोः = सूर्यचन्द्रमसोरेकस्थयोः सकाशान्निधनेऽष्टमे गते, अर्कजे = शनैश्चरे शत्रुव्ययस्थानगे=रवीन्द्वोः षष्ठे वा द्वादशे गते जातोऽन्धो भवति । रन्ध्रेति । शशाङ्के=चन्द्रे रन्ध्रावसानारिगते=लग्नात् षडष्टव्ययभावगते, शनौ सभौमे=कुजयुते च यदि जन्म भवेत्तदा जातो नष्टनेत्रो गलितनेत्रो (Sightless) भवति ।




**यदि मंगल द्वितीयेश होकर सूर्य और चन्द्रमासे ८ वें भावमें हो और शनि ६ ठे या १२ वें भावमें हो तो जातक अन्धा हो। यदि चन्द्रमा ८, १२, ६ भावमें हो और शनि मङ्गल के साथ हो तो ( नष्ट नेत्र ) हो। ( सु० शा० कार ) ॥ ५७ ॥**

षष्ठे चन्द्रेऽष्टमे भानौ लग्नादन्त्यगतेऽर्कजे ।
वित्तस्थानगते भौमे शक्रोऽप्यन्धो भवेद् ध्रुवम् ॥ ५८ ॥

षष्ठ इति । चन्द्रे लग्नात्षष्ठे, भानौ = सूर्ये लग्नादष्टमे, अर्कजे = शनौ लग्नादन्त्यगते, भौमे वित्तस्थानगते=द्वितीयभावगते चात्र योगे जातो नरः शक्रोऽपि=महेन्द्रसमोऽप्यन्धो ध्रुवं=निश्चयेन भवेदिति । तथा च बृहज्जातके—

निधनारिधनव्ययस्थिता
रविचन्द्रारयमा यथा तथा ।
बलवद्ग्रहदोषकारणै-
र्मनुजानां जनयन्त्यनेत्रताम् ॥ ५८ ॥

| | | |
|---|---|---|
| मं. | ल. | श. |
| | प्रबलान्ध-योगः | |
| चं. | | सू. |

चन्द्रमा छठे हो, सूर्य आठवें हो, लग्नसे १२ वें शनि हो और दूसरे मङ्गल हो तो इस योगमें इन्द्र भी निश्चय अन्धा हो ॥ ५८ ॥

लग्नेश्वरेण सहिते यदि वित्तनाथे दुःस्थेऽक्षिनाशनमथास्फुजिदिन्दुयुक्ते।
नेत्रेश्वरे तनुगते यदि नैशिकोऽन्धः स्वोच्चे शुभग्रहयुते न तथा वदन्ति ॥५९॥

लग्नेश्वरेणेति। यदि वित्तनाथे=द्वितीयभावेशे लग्नेश्वरेण=लग्नपतिना सहिते दुःस्थे=षष्ठाष्टव्ययगे जन्म भवेत्तदा जातस्याक्षिनाशनं=नेत्रविनाशं ब्रूयात्। अथेति। अथानन्तरं-नेत्रेश्वरे=द्वितीयभावेशे आस्फुजिदिन्दुयुक्ते=शुक्रचन्द्रसहिते तनुगते=लग्नगते यदि जायते तदा नैशिकोऽन्धो रात्र्यन्धो (Night blind) भवति। तस्मिन्नेत्रेश्वरे स्वोच्चे स्वकीयोच्चराशिगते शुभग्रहयुते च तथाऽन्धत्वं न वदन्ति विज्ञा इति ॥ ५९ ॥

यदि द्वितीयभावेश लग्नेशसे युक्त होकर ६, ८, १२ में हो तो आंखें अन्धी हो। यदि द्वितीयेश शुक्र और चन्द्रमाके साथ होकर लग्नमें हो तो जातक राज्यन्ध हो। यदि वह द्वितीयेश उच्चगत ग्रह और शुभग्रहसे युक्त हो तो वैसा न हो याने आंखें अच्छी हों। (सुधाशालिनीकार) ॥ ५९ ॥

अथ रोगयोगाः।

राहौ विलग्ने सकुजेऽर्कपुत्रे साहौ बृहद्बीजमिवाहुरार्याः।
लग्नेश्वरे मृत्युगते सराहौ रन्ध्रे समान्दौ च तथैव वाच्यम् ॥ ६० ॥
लग्ने सराहौ गुलिके त्रिकोणे रन्ध्रे कुजे मन्दयुते तथैव।
लग्नेश्वराक्रान्ततदंशनाथे राह्वारमान्द्यादियुते तथैव ॥ ६१ ॥

अथाधुना केचिद् रोगयोगा उच्यन्ते। राहाविति। सकुजे=मङ्गलयुक्ते राहौ विलग्ने गतवति, वा साहौ=राहुणा सहिते अर्कपुत्रे=शनौ विलग्ने सति जाते बृहद्बीजमिव=दीर्घवृषणमार्या विद्वांस आहुः। लग्नेश्वर इति। सराहौ=राहुसहिते लग्नेश्वरे मृत्युगतेऽष्टमभावगतेऽथवा समान्दौ=गुलिकयुक्ते लग्नेश्वरे रन्ध्रेऽष्टमभावगते, (च शब्दोऽत्र पक्षान्तरद्योतकः) तथैव वाच्यमर्थाज्जातं बृहद्बीजं वाच्यमिति ॥ ६० ॥

लग्न इति। लग्ने=जन्मलग्ने सराहौ=राहुणा युक्ते (राहुर्लग्नगतो भवेदित्यर्थः) गुलिके त्रिकोणे=लग्नात्पञ्चमे वा नवमे गते, मन्दयुते=शनिसहिते कुजे रन्ध्रेऽष्टमभावगते तथैवार्थाद्बृहद्बीजं वाच्यम्। लग्नेश्वरेति। लग्नेश्वराक्रान्ततदंशनाथे=लग्नेश्वरेणाक्रान्तस्तदंशो नवांशस्तस्य नाथे=पतौ (लग्नेशो यस्मिन्नवांशे भवेत्तत्पताविति) राह्वारमान्द्यादियुते=राहुभौमगुलिकादिना सहिते (केनचित्पापेन युत इत्यर्थः) तथैव=पूर्वोक्तमेव फलं (बृहद्बीजमिति) ज्ञेयम् ॥ ६१ ॥

मङ्गल या शनिके साथ राहु यदि लग्नमें हो तो जातक बृहद्बीज (बड़ा अण्डकोशवाला) होता है। यदि लग्नेश राहुके साथ या गुलिकके साथ ८ वें भावमें हो तो जातक बृहद्बीज होता है ॥ ६० ॥

लग्न राहुके सहित हो, गुलिक त्रिकोणमें हो, मङ्गल अष्टममें शनिसे युक्त हो तो बृहद्बीज होवे। लग्नसे आक्रान्त नवांशका पति राहु या मङ्गल या गुलिकसे युक्त हो तो बृहद्बीज हो ॥ ६१ ॥

लग्ने रवौ भूमिसुतेन दृष्टे गुल्मक्षयश्वासनिपीडितः स्यात्।
भौमे विलग्ने शनिसूर्यदृष्टे वसूरिरोगाभिहतो मनुष्यः ॥ ६२ ॥

इदानीं गुल्मक्षयश्वासवसूरिरोगयोगा उच्यन्ते-लग्न इति। रवौ=सूर्ये लग्ने=जन्मकालीन लग्ने गते तस्मिन् भूमिसुतेनाङ्गारकेण दृष्टे सति जातो गुल्मक्षयश्वासनिपीडितः स्यात्=गुल्म उदरे रक्तग्रन्थिः, क्षयो यक्ष्मा, श्वासः कासश्वासः इत्येतैः (Colic, Consump-

tion and asthma ) रोगैः व्यथितो भवति । भौम इति । भौमे=मङ्गले विलग्ने तस्मिन् शनिसूर्यदृष्टे=शनिना सूर्येण चावलोकिते जातो मनुष्यो वसूरिरोगेण=वसन्तरोगेण ( Smallpox ) अभिहतः पीडितो भवेदिति ॥ ६२ ॥

**सूर्य लग्नमें हो उसे मंगल देखता हो तो गुल्म, क्षय और श्वास रोगसे पीडित हो। मंगल लग्नमें हो उसे शनि और सूर्य देखते हों तो शीतला रोगसे मनुष्य हत हो ॥ ६२ ॥**

पापेक्षिते रविसुते धनराशियुक्ते पापान्विते शुनकभीतिमुपैति मर्त्यः ।
तद्भावनाथसहिते दिननाथपुत्रे दृष्टेऽथ वा शुनकभीतिमुपैति जातः ॥ ६३ ॥

इदानीं कुक्कुरकर्तृकरोग उच्यते । पापेक्षित इति । पापग्रहेण=रविणा भौमेन वेक्षिते=दृष्टे, रविसुते=शनैश्चरे पापेन=भौमेन सूर्येण वाऽन्विते=युक्ते तथाभूते धनराशियुक्ते=द्वितीयभावगते जातो मर्त्यो नरः शुनकेन = कुक्कुरेण भीतिं = भयमुपैति = प्राप्नोति । कुक्कुरेण दंश्यत इत्यर्थः । तदिति । दिननाथपुत्रे = शनैश्चरे तद्भावनाथेन=द्वितीयभावपतिना सहितेऽथवा दृष्टे जातो नरः शुनकभीतिमुपैति ॥ ६३ ॥

**द्वितीय भावमें शनि पापग्रहसे दृष्ट वा युत हो तो मनुष्यको कुत्तेका भय प्राप्त हो। यदि शनि २ रे भावके स्वामीसे युक्त हो वा दृष्ट हो तो मनुष्यको कुत्तेका भय होता है ॥६३॥**

वीर्यान्विते राहुसमेतराशिनाथान्विते राहुयुते विलग्ने ।
सर्पाद् भयं विक्रमराशिनाथे बुधेन युक्ते गलरोगमेति ॥ ६४ ॥

इदानीं सर्पाद्भययोगो गलरोगयोगश्चोच्यते । वीर्यान्वित इति । वीर्यान्विते = सबले तृतीयभावेशे राहुसमेतराशिनाथान्विते = राहुणा समेतो यो राशिस्तन्नाथेन सहिते, विलग्ने राहुयुते वा सर्पाद्भयमेति जातक इति । अथ-विक्रमराशिनाथे = तृतीयभावेशे बुधेन युक्ते जातो गलरोगं=कण्ठरोगं प्राप्नोति । अयमेव श्लोको द्वादशाध्याये ४२ तमे श्लोके 'वीर्यान्विते' इत्यत्र 'शौर्याधिपे' इति पाठान्तरं कृत्वा वक्ष्यते । अन्यत्सर्वं समानमेव ॥ ६४ ॥

**सहजेश राहुसे युत राशिके स्वामीसे युत हो, वा राहु लग्नमें प्राप्त हो तो सर्पसे भय होवे। तृतीयका पति बुधसे युक्त हो तो गल रोग होवे ॥ ६४ ॥**

| | | |
|---|---|---|
| २ / ३ | १ रा. | १२ / ११ |
| ४ | सर्पभयं | १० |
| ५ / ६ बु. मं. | ७ के. | ९ / ८ |

| | | |
|---|---|---|
| ३ / ४ | २ | १ / १२ |
| ५ | गलरोगः | ११ |
| ६ / ७ | ८ चं. बु. | १० / ९ |

नीचे तृतीयेऽरिगृहे विमूढे पापेक्षिते तद्गलरोगवान् स्यात् ।
विषप्रयोगाद्विषभक्षणाद्वा तेषामभावेऽर्थविनाशनार्थः ॥ ६५ ॥

तृतीये=तृतीयभावे नीचे=नीचवर्तिनि, अरिगृहे=शत्रुराशिके विमूढे=अस्तङ्गते वा ग्रहे पापेक्षिते = पापग्रहदृष्टे । एतदुक्तं भवति । लग्नात् तृतीयभावे यो ग्रहः स नीचवर्ती, शत्रुराशिकः, अस्तो वा भवेत्तस्मिन्नशुभग्रहेण दृष्टे, तद्गलरोगवान् = तस्मिन्योगे जातो नरः कण्ठरोगी भवति । तत्र गलरोगे हेतुरुच्यते । विषप्रयोगाद्विषभक्षणाद्वा । विषस्य प्रयोगाद्व्यवहाराद्वा विषस्य भक्षणाद्गलरोगी भवेत्, यथा नीलकण्ठः । तेषामुक्तप्रयोगानामभावे

अर्थविनाशनार्थः = सञ्चितानामर्थानां=धनानां विनाशनार्थोऽपव्ययकारको भवति ॥ ६५ ॥

३ रे भावमें नीचस्थ ग्रह, शत्रुराशिस्थ या अस्तग्रह यदि पापग्रहसे देखा जाता हो तो वह विषके प्रयोगसे, विषके खानेसे गलरोगवान् हो। इनके अभावमें धनका नाश होता है ॥

पापे तृतीये गलरोगमत्र वदन्ति मान्द्यादियुते विशेषात्।
भौमान्विते प्रेतपुरीशसूनौ तृतीयराशौ यदि कर्णरोगम् ॥ ६६ ॥

इदानीं गलरोगयोगान्तरं कर्णरोगयोगञ्चाह—पाप इति। तृतीये भावे पापे=रविभौमशनीनामन्यतमे विलसति, अत्र योगे जातस्य गलरोगं विज्ञा वदन्ति। तस्मिन् सपापे तृतीये मान्द्यादियुते=गुलिकाद्यप्रकाशग्रहयुते विशेषान्निश्चयेन गलरोगं ब्रूयात्। अथ तृतीयराशौ = सहजभावे भौमान्विते = समङ्गले प्रेतपुरीशसूनौ=प्रेतानां पुरीशो यमलोकेशो यमः शनिस्तत्सूनुर्मान्दिर्गुलिकस्तस्मिन्, अर्थात् तृतीयभावे मङ्गलगुलिकौ यदि भवेतां तदा जातस्य कर्णरोगं ब्रूयात्। अयं श्लोको द्वादशाध्याये ४३ तमे श्लोके वक्ष्यते। तत्रोत्तरार्द्धे "भौमान्विते भानुसुते बलाढ्ये तृतीयराशौ यदि कण्डुरोगम्" इति पाठान्तरमुपन्यस्तमिति। तत्र तृतीयभावे भौमशनी भवेतां तदा कण्डुरोगं (खुजली) इति व्याख्यानम् ॥ ६६ ॥

पापग्रह तीसरे हो तो गलरोग होता है। वह गुलिक आदिसे भी युक्त हो तो निश्चय गलरोग होता है। तीसरे भावमें मङ्गलसे युत गुलिक हो तो कर्णरोग होता है ॥ ६६ ॥

पापेक्षिते सोदरभे सपापे कर्णोद्भवं रोगमुपैति जातः।
क्रूरादिषष्ट्यंशयुते तदीशे कर्णस्य रोगं कथयन्ति तज्ज्ञाः ॥ ६७ ॥

इदानीं कर्णरोगयोगावुच्येते। पापेक्षित इति। सोदरभे = तृतीयभावे सपापे=पापग्रहयुक्ते पापेक्षिते=पापग्रहेण दृष्टे, अर्थात् तृतीये भावे कश्चित् पापः केनचित्पापेन दृष्टस्तिष्ठेत्तदा जातः कर्णोद्भवं रोगमुपैति=कर्णरोगं प्राप्नोति। क्रूरादिषष्ट्यंशयुत इति। तदीशे=तृतीयभावपतौ क्रूराद्यशुभषष्ट्यंशे विद्यमाने जातः कर्णस्य रोगं प्राप्नुयादिति तज्ज्ञा ज्योतिर्विदः कथयन्ति ॥ ६७ ॥

तृतीय भाव पापग्रहसे युत और पापदृष्ट हो तो जातकको कर्ण-रोग हो। यदि ३ रे भावका स्वामी क्रूरादि षष्ट्यंशसे युत हो तो कर्ण-रोग हो ऐसा पंडितोंने कहा है ॥ ६७ ॥

पैत्तोल्बणं याति रवौ रिपुस्थे पापेक्षिते पापसमन्विते च।
भानौ सरन्ध्रे विबले धराजे पापे धनस्थे तु तथैव वाच्यम् ॥ ६८ ॥

अधुना पित्तरोग उच्यते-पैत्तोल्बणमिति। रवौ=सूर्ये रिपुस्थे=षष्ठभावस्थे पापेक्षिते = केनचित्पापेन दृष्टे, पापेन केनचित्समन्विते च जातः पैत्तोल्बणं=पित्तव्रणं याति=प्राप्नोति। भानाविति। भानौ=सूर्ये सरन्ध्रेऽष्टमभावगते, धराजे = भौमे यत्र तत्र विबले=निर्बले, पापे=शनौ (सूर्यभौमयोरुक्तत्वात्) धनस्थे=द्वितीयगते तु तथैवार्थात् पैत्तोल्बणं याति जात इति वाच्यम्। तथोक्तं सर्वार्थचिन्तामणौ—

रोगस्थानगते सूर्ये तद्भावे पापसंयुते। पापदृष्टियुते नाभौ पैत्तिकाद्व्रणमादिशेत् ॥इति॥ ६८॥

सूर्य षष्ठ स्थानमें पापदृष्ट, पापयुत हो तो पित्तका विकार जाने। निर्बल सूर्य अष्टम स्थानमें, मङ्गल निर्बल, और पापग्रह द्वितीय भावमें हो तो भी वही फल कहे ॥ ६८ ॥

श्लेष्मामयं बुधयुतेऽवनिजे रिपुस्थे क्रूरांशके यदि सितेन्दुसमीक्षिते च।
पापेक्षितेऽवनिसुते निधनोपयाते केतौ धनाष्टमगते व्रणरोगमेति ॥ ६९ ॥

इदानीं श्लेष्मरोगयोगं व्रणयोगञ्चाह। श्लेष्मामयमिति। बुधयुतेऽवनिजे (बुधभौमौ) रिपुस्थे=षष्ठभावगते, क्रूरांशके=पापनवांशे विलसति, सितेन्दुभ्यां=शुक्रचन्द्राभ्यां यत्र तत्रगाभ्यां समीक्षिते=दृष्टे च जातः श्लेष्मामयं=क्षयरोगं प्राप्नोति। तथा च सर्वार्थचिन्तामणौ—

षष्ठे कुजे बुधयुते भृगुचन्द्रनिरीक्षिते । क्रूरांशकसमायुक्ते क्षयरोगं वदन्ति हि ॥

पाप इति । अवनिसुते=भौमे निधनोपयातेऽष्टमभावगते पापेन ( सूर्येण शनिना वा ) ईक्षिते = दृष्टे, वा केतौ धनाष्टमगते = द्वितीयेऽष्टमे वा स्थिते जातो व्रणरोगमेति ॥ ६९ ॥

बुधसे युक्त मङ्गल षष्ठ स्थानमें क्रूरांशकमें हो, उसे शुक्र और चन्द्रमा देखते हों तो श्लेष्म रोग होता है । मङ्गल अष्टम भावमें पापग्रहसे देखा जाता हो, केतु धन या अष्टममें हो तो व्रण ( घाव ) रोग होता है ॥ ६९ ॥

षष्ठेश्वरे पापयुते विलग्ने रन्ध्रस्थिते वा व्रणयुक्शरीरः ।
कर्मस्थिते तादृशखेचरेन्द्रे व्रणाङ्कितः स्याच्छुभदृग्विहीने ॥ ७० ॥

इदानीं व्रणयोगान्तरमाह षष्ठेश्वर इति । पापयुते=केनचित् पापग्रहेण सहिते षष्ठेश्वरे= षष्ठभावपतौ विलग्ने जन्मकालीनलग्ने=वारन्ध्रस्थितेऽष्टमभावगते जातो व्रणयुक्शरीरःस्यात् । व्रणेन ( घाव ) सहितं शरीरं जातस्य भवति । कर्मस्थित इति । तादृशखेचरेन्द्रेऽर्थात्पाप-युते षष्ठेश्वरे कर्मस्थिते=दशमभावगते तस्मिन् शुभदृग्विहीने शुभग्रहदृष्टिरहिते जातो व्रणा-ङ्कितो व्रणेनाङ्कितश्चिह्नितो भवति । उक्तयोगद्वयेऽपि शुभग्रहदृष्टे उक्तफलाभावो वाच्यः ॥७०॥

षष्ठेश्वर लग्नमें पापग्रहसे युक्त हो वा अष्टममें हो तो शरीरमें व्रण होवे। उसी प्रकारके पापयुत षष्ठेश ग्रह दशममें हो और शुभग्रह न देखते हों तो जातकका शरीर व्रणयुक्त हो ॥

लग्नेशभूपुत्रशशाङ्कपुत्राः सह स्थिताः सौम्यतरान्यभावाः ।
अपानरोगं त्वथवाऽपवित्रं पश्यन्ति षष्ठं मुनयो वदन्ति ॥ ७१ ॥

इदानीमपानरोगमाह—लग्नेश इति । लग्नेशभूपुत्रशशाङ्कपुत्राः=जन्मलग्नपतिभौम-बुधाः सहैकत्र स्थिताः सौम्यतरान्यभावाः=सौम्यतराः केन्द्रकोणास्तेभ्योऽन्ये इतरे ये भावा-स्तद्गता भवेयुः । अत्र सर्वार्थचिन्तामणौ 'सौम्यतरान्यभावाः' इत्यस्य स्थाने 'सौख्यगृहे व्यये वा' इति पाठान्तरम् । तथा सति लग्नेशभौमबुधा एकत्र सङ्गताः सौख्यगृहे=चतुर्थे, व्यये=द्वादशे वा गता भवेयुरिति व्याख्यानम् । अस्मिन्योगे जातो नरोऽपानरोगं=गुदारोगं ( बवासीर ) प्राप्नोति । तु अथवा पक्षान्तरेण—ते लग्नेशभूपुत्रबुधाः अपवित्रं=पापाक्रान्तं षष्ठं भावं पश्यन्ति चेत्तदा अपानरोगमेति जात इति मुनयो महर्षयो वदन्ति ॥ ७१ ॥

लग्नेश, मङ्गल और बुध एकत्र होकर अशुभ भावमें हों, या वे पापयुत ६ ठे भावको देखते हों तो अधोवायु हो ऐसा मुनि लोग कहते हैं ॥ ७१ ॥

लग्नेशषष्ठाधिपती दिनेशयुक्तौ ज्वरं चन्द्रसमन्वितौ चेत् ।
जलप्रमादं क्षितिसूनुयुक्तौ युद्धेन वा स्फोटकराशिभिर्वा ॥ ७२ ॥
पित्तात्प्रमादं यदि सौम्ययुक्तौ निर्व्याधिकः सूरसमन्वितौ चेत् ।
शुक्रेण भार्याविपदं वदन्ति मन्देन नीचानिलरोगमाहुः ॥ ७३ ॥
सराहुकेतू यदि सर्पपीडां चोरादिभिर्भीतिमुपैति जातः ।
केन्द्रत्रिकोणे यदि साहिकेतू वदन्ति तज्ज्ञा निगलं तदानीम् ॥ ७४ ॥

इदानीं ज्वररोगं जलप्रमादं स्फोटकरोगञ्चाह-लग्नेश इति । लग्नेशषष्ठाधिपती यत्र तत्र यदि दिनेशेन = सूर्येण युक्तौ भवेतां तदा ज्वरं=ज्वररोगं ब्रूयात् । तौ लग्नेशषष्ठेशौ चेत् चन्द्रेण समन्वितौ भवेतां तदा जले प्रमादं=अकस्माज्जले प्रब्रूडनं स्यात् । तावेव लग्नेशषष्ठेशौ क्षितिसूनुना = भौमेन युक्तौ भवेतां तदा युद्धेन=सङ्ग्रामेण वा स्फोटकराशि-भिरुष्णधातुप्रकोपात् ( गन्धक बारुदादि ) जातं रोगं ब्रूयात् जातकस्येति ॥ ७२ ॥

इदानीं पित्तप्रमादं निर्व्याधिं भार्याविपदमनिलरोगञ्चाह—पित्तादिति । तावेव लग्नेश षष्ठाधिपती सौम्येन=बुधेन युक्तौ भवेतां तदा पित्तात्प्रमादं=पित्तोन्मादं ब्रूयात् । तावेव चेत्सू-रिसमन्वितौ = गुरुयुक्तौ भवेतां तदा जातो निर्व्याधिको रोगरहितो भवति । तौ लग्नेशष-

ष्ठेशौ शुक्रेण समन्वितौ भवेतां तदा जातस्य भार्याविपदं=स्त्रीमरणं विज्ञा वदन्ति । मन्देन=शनिना युक्तौ लग्नेशषष्ठेशौ तदा जातस्य नीचानिलरोगं = नीचानिलमपानवायुः तज्जातरोगं = गुदारोगमाचार्या आहुरूचुरिति ॥ ७३ ॥

अथ सर्पपीडाचौरभीतिनिगलयोगानाह—सराहुकेत्विति । तावेव लग्नेशषष्ठेशौ यदि सराहुकेतू=राहुणा केतुना वा सहितौ भवेतां तदा जातस्य सर्पपीडां कुरुतोऽर्थादस्मिन्योगे जातः सर्पेण दंश्यते, तथा चौरादिभिस्तस्करादिभिर्भीतिं = भयमुपैति=प्राप्नोति । अथ तौ यदि केन्द्रत्रिकोणे साहिकेतू भवेतामर्थात् अहिना=राहुणा, केतुना वा सहितौ केन्द्रे वा त्रिकोणे भवेतां तदानीं जातं नरं निगलं=गलामययुक्तं तज्ज्ञा विद्वांसो वदन्ति ॥ ७४ ॥

लग्नेश और षष्ठेश सूर्यसे युक्त हों तो ज्वर हो। चन्द्रमासे युक्त यदि हों तो जलमें डूबने का भय हो। मङ्गलसे युक्त हों तो युद्धसे वा स्फोटक समूह ( गैश वगैरह ) से भय हो ॥७२॥

यदि बुधसे युक्त हो तो पित्तके प्रमादसे भय हो। गुरुसे युक्त हो तो व्याधिसे रहित हो। शुक्रसे युक्त हो तो स्त्रीका मरण हो। शनिसे युक्त हो तो अधोवायुका रोग मुनि लोग कहे हैं ॥ ७३ ॥

राहु या केतुसे युक्त हों तो सर्प की पीडा हो और जातकको चोरादिका भय प्राप्त हो। केन्द्र त्रिकोणमें राहु, या केतुसे युक्त हो तो निगल रोग पण्डित लोग कहते हैं ॥ ७४ ॥

इदानीं लिङ्गच्छेदनयोगो लिङ्गरोगयोगश्चोच्येते—

षष्ठेश्वरश्चन्द्रसुतेन युक्तः सागुर्विलग्ने स्वयमत्र शिश्नम् ।
छिनत्त्यसौ सौम्यदृशा विहीनः सभूमिपुत्रो यदि लिङ्गरोगी ॥ ७५ ॥

षष्ठेश्वर इति । षष्ठेश्वरः=षष्ठभावाधिपतिश्चन्द्रसुतेन=बुधेन युक्तः सागुः राहुयुक्तोऽपि यदि विलग्ने=जन्मलग्ने स्थितो भवेत्तदाऽत्र जातो नरः स्वयमेव शिश्नं = लिङ्गं छिनत्ति= कर्त्तयति । असौ=षष्ठेश्वरः सौम्यदृशा विहीनः=शुभदृष्टिरहितो भवेत्तथा सभूमिपुत्रो मङ्गलेन युक्तश्च भवेत्तदा जातो लिङ्गरोगी=मूत्रकृच्छ्रादि-( सूजाक ) रोगयुतो भवेदिति ॥७५॥

षष्ठ भावका स्वामी बुध और राहुसे युक्त होकर लग्नमें हो तो वह जातक अपने लिङ्ग को स्वयं कटादे। यदि मङ्गलसे युक्त हो, उसे शुभग्रह न देखते हों तो जातक लिङ्गरोगी हो ॥

इदानीं स्त्रीक्लीवयोगं बन्धनयोगञ्चाह—

कामेश्वरः शुक्रयुतो रिपुस्थः कलत्रषण्ढत्वमुदीरयन्ति ।
षष्ठेशलग्नाधिपती समन्दौ केन्द्रत्रिकोणे यदि बन्धनं स्यात् ॥ ७६ ॥

कामेश्वर इति । कामेश्वरः=सप्तमभावेशः शुक्रयुतो रिपुस्थः = षष्ठभावगतो भवेत्तदा जातस्य कलत्रषण्ढत्वं=स्त्रियाः क्लीबत्वं उदीरयन्त्यार्याः । अत्र योगे जातस्य स्त्री क्लीबत्वमाप्नुयादित्यर्थः । यदि षष्ठेशलग्नाधिपती = षष्ठेशलग्नेशौ समन्दौ = मन्देन शशिना युक्तौ केन्द्रे ( १।४।७।१० ) त्रिकोणे ( ५।९ ) वा भवेतां तदा जातस्य बन्धनं = कारागारादौ यातनं भवेदिति ॥ ७६ ॥

सप्तमेश शुक्रसे युक्त षष्ठ स्थानोंमें हो तो उसकी स्त्री नपुंसकी हो। षष्ठेश और लग्नेश शनिसे युक्त होकर केन्द्रमें या कोणमें हो तो बांधा जाय ॥ ७६ ॥

इदानीमभिचारकृतरोगयोगमाह—

चरे विलग्ने रिपुनाथदृष्टे कुजे च लाभे स्थिरगे च धर्मे ।
द्वन्द्वेऽस्तराशौ प्रवदेन्नराणां रोगं रिपूणां कृतमाभिचारम् ॥ ७७ ॥

चर इति । चरे=मेष-कर्क-तुला-मकराणामन्यतमे विलग्ने = जन्मलग्ने तस्मिन् रिपुनाथदृष्टे = षष्ठेशेन दृष्टे च, कुजे = मङ्गले लाभे = एकादशभावे, धर्मे=नवमभावे स्थिरगे=स्थिरराशि ( २।५।८।११ ) गते च, अस्तराशौ=सप्तमे भावे द्वन्द्वे=द्विस्वभावराशि (३।६।९।१२)

गते च ( च शब्दोऽत्र पक्षान्तरार्थे ) नराणां = तदानीं जातानां रिपूणां=द्विषदां कृतं सम्पादितमाभिचारं=कृत्या प्रयुक्तं रोगं ( मन्त्रादिप्रयोगोत्पादितं ) प्रवदेदिति ॥ ७७ ॥

चर राशिका लग्न हो षष्ठेश उसको देखता हो, या मङ्गल लाभमें हो, या धनमें स्थिर राशि हो, सप्तम द्विस्वभाव हो तो शत्रुओंके किये हुए अभिचार (प्रयोग) से रोग हो ॥७७॥

इदानीं वैकल्यं शरीरशोषणञ्चाह—

जीवे समन्दे दशमेऽर्धचन्द्रे वैकल्यमङ्गे क्षितिजे कलत्रे ।
दिनेशचन्द्रौ रविराशियुक्तौ चन्द्रर्क्षगौ वा यदि शोषणं स्यात् ॥ ७८ ॥

जीव इति । जीवे=गुरौ यत्र तत्र समन्दे = शनियुक्ते, अर्धचन्द्रे = सूर्यादुभयत्र त्रिराशिमितान्तरे विद्यमानश्चन्द्रोऽर्धो भवति तथा सार्द्धसप्तम्यां तिथौ भवतीति बोध्यम् । तस्मिन्नर्धचन्द्रे दशमे भावे गतवति, क्षितिजे=भौमे कलत्रे = सप्तमभावगते जातस्याङ्गे शरीरे वैकल्यं = दौर्बल्यं वाच्यम् । दिनेशचन्द्राविति । सूर्याचन्द्रमसौ रविराशियुक्तौ=रवेः राशिः=सिंहस्तद्गतौ वा चन्द्रर्क्षगौ=कर्कराशिगतौ यदि भवेतां तदा शोषणं जातस्य शरीरे शोषणम् अस्थिमात्रमेवावशेषं ब्रूयादिति ॥ ७८ ॥

| | | |
|---|---|---|
| २ ३ | १ सू. १०° | १२ |
| ४ | वैकल्यम् | १० चं. १०° |
| ५ ६ | ७ मं. | बृ.श. ८ |

| | | |
|---|---|---|
| | १ | |
| ४ सू. चं. | शोषणं | |
| ५सू.च. | | |

बृहस्पति शनिके साथ हो, अर्धचन्द्र दशममें हो सप्तममें मंगल हो तो जातक विकल हो । सूर्य और चन्द्रमा सूर्यकी राशि ( सिंह ) में हों वा चन्द्रराशि ( कर्क ) में हों तो शोषण ( सूखा ) रोग हो ॥ ७८ ॥

इदानीमनेन श्लोकेनोन्मादयोगमाह—

लग्ने रवौ भूमिसुते कलत्रे सून्मादभाक् तत्र नरो हि जातः ।
उन्मादवृद्धिं समुपैति लग्ने शनौ कलत्रे सकुजे त्रिकोणे ॥ ७९ ॥

लग्न इति । सरलार्थः ॥ ७९ ॥

| | | |
|---|---|---|
| | सू. | |
| | उन्माद | |
| | मं. | |

| | | |
|---|---|---|
| | श. | |
| | उ० बु० | |
| मं. | मं. | मं |

लग्नमें सूर्य हो, सप्तममें मंगल हो तो मनुष्य उन्माद भागी ( पागल ) होवे । लग्नमें शनि, सप्तम, या त्रिकोणमें मंगल हो तो मनुष्यकी उन्माद वृद्धि होती है ॥ ७९ ॥

इदानीमुन्मादबुद्धियोगमाह—

लग्नत्रिकोणे दिननाथचन्द्रौ शौर्ये गुरौ केन्द्रसमन्विते वा।
सोन्मादबुद्धिः स भवेत्तदानीं शरासनादौ यदि जन्मलग्ने ॥ ८० ॥

लग्नत्रिकोण इति। यदि शरासनादौ=धनूराश्यादौ जन्मलग्ने लग्नत्रिकोणे (१।५।९) दिननाथचन्द्रौ = सूर्यचन्द्रमसौ, गुरौ = बृहस्पतौ शौर्य = तृतीये वा केन्द्रे (१।४।७।१० भावे) समन्विते तदानीं=तस्मिन्काले यस्य जन्म भवेत्स उन्मादबुद्धिर्भवति। तत्काल-जातोऽगृहीतबुद्धिर्भवतीत्यर्थः।

अत्र चतुर्थचरणे 'शरासनादौ यदि जन्मलग्ने' इत्यस्य स्थाने 'शन्यारवारे यदि जन्मकाले' इति पाठान्तरं सर्वार्थ-चिन्तामणिकर्त्रा पठितम्। एवं जात-कादेशे—

| | | |
|---|---|---|
| बृ. | ल. ८।३°। | |
| | उन्मादबुद्धिः | |
| सू. चं. | | |

नवमोदयात्मजस्थौ रविचन्द्रौ भ्रातृकेन्द्रगे जीवे।
युक्ते शनिकुजवारे जातः सोन्माद इव चपलः स्यात् ॥

इति दृश्यते। अतस्तत्र 'शन्यारवारे यदि जन्मकाले' इति पाठे जन्मकाले यदि शनिर्वा भौमो भवेदिति व्याख्यानमन्यत्सर्वं समानमेव ॥ ८० ॥

लग्न या त्रिकोणमें सूर्य और चन्द्रमा हों, गुरु ३ रे, वा केन्द्रमें हो और यदि धनुके आदिमें लग्न हो तो जातककी उन्माद बुद्धि होती है ॥ ८० ॥

इदानीं बुद्धिभ्रम-जड-मद्यपायीयोगानाह—

केन्द्रस्थितौ सौम्यनिशाकरौ वा सौम्यांशहीनौ भ्रमसंयुतः स्यात्।
केन्द्रस्थिता मन्दनिशाकरार्का जडो भवेदत्र मधूपभोक्ता ॥ ८१ ॥

केन्द्रस्थिताविति। सौम्यनिशाकरौ=बुधचन्द्रौ केन्द्रस्थितौ, सौम्यांशहीनौ=शुभग्रहांश-रहितौ वा भवेतामर्थात्पापनवांशगतौ भवेतां तदा जातो नरो भ्रमसंयुतः Aberration of the mind स्यात्। मन्दनिशाकरार्काः=शनिचन्द्रसूर्याः केन्द्रस्थिता भवेयुस्तदाऽत्र योगे जातो जडो मतिरहितो भवेत्तथा मधूपभोक्ता =सुरापो भवेदिति ॥ ८१ ॥

बुध और चन्द्रमा केन्द्रमें हों वा सौम्यांश (शुभनवांश) से हीन हों तो वह मनुष्य भ्रमसे युक्त हो। शनि, चन्द्र और सूर्य केन्द्रमें स्थित हों तो जातक शराब पीने वाला और जड़ हो ॥ ८१ ॥

इदानीं गुह्यरोग-कण्ठरोगयोगावाह—

कुलीरकुम्भालिनवांशयुक्ते चन्द्रे समन्दे यदि गुह्यरोगी।
चन्द्रे सुखे तद्भवनांशयुक्ते पापान्विते स्याद्यदि कण्ठरोगी ॥ ८२ ॥

कुलीरेति। समन्दे चन्द्रे=शनियुक्तचन्द्रे कुलीरकुम्भालिनवांशयुक्ते=कर्ककुम्भवृश्चिका-नामन्यतमराशेर्नवांशे गतवति यदि जन्म भवेत्तदा जातो गुह्यरोगी = रहस्याङ्गदेशे रोगवान् भवति। चन्द्र इति। चन्द्रे सुखे = चतुर्थभावे तद्भवनांशेन = चतुर्थभावराशिनवांशेन युक्ते= सहिते तथा पापान्विते = पापग्रहसहिते यदि जन्म स्यात्तदा जातः कण्ठरोगी = गले रोग-वान् भवति ॥ ८२ ॥

यदि चन्द्रमा शनिके साथ कर्क, कुम्भ, वृश्चिकके नवांशमें स्थित हो तो गुह्यरोगी होता है। चन्द्रमा सुख में हो या सुख भाव के अंश में हो यदि पाप ग्रह से युक्त हो तो कण्ठ रोगी हो ॥ ८२ ॥

श्लोकेनानेनोन्मादभाक्कलहप्रिययोगमाह—

चन्द्रे सपापे फणिनाथयुक्ते रिःफे सुते रन्ध्रगतेऽथवाऽपि ।
उन्मादभाक् तत्र सरोषयुक्तो जातस्तु नित्यं कलहप्रियः स्यात् ॥ ८३ ॥




चन्द्र इति । सरलार्थः ॥ ८३ ॥

चन्द्रमा पापग्रहके साथ राहुसे युक्त होकर १२ वें, वा ५ वें, वा ८ वें हो तो वह उन्मादी, क्रोधी और नित्य कलहप्रिय होवे ॥ ८३ ॥

इदानीं दन्ताक्षिरोगमाह—

चन्द्रे व्यये वा यदि वाऽसुरेशे मन्दे त्रिकोणे मदरन्ध्रगेऽर्के ।
दन्ताक्षिरोगी च भवेत्तदानीं नीचारिपापांशगतास्तथैव ॥ ८४ ॥

चन्द्र इति । चन्द्रे वा असुरेशे = राहौ व्यये = लग्नाद् द्वादशभावगते, मन्दे = शनौ त्रिकोणे ( ५।९ ) गते अर्के=सूर्ये मदे=सप्तमे रन्ध्रेऽष्टमे वा भावे गते स जातो दन्ताक्षिरोगी = दन्तरोगी नेत्ररोगी च भवेत् । तदानीमिति । तदानीं = जन्मकाले ते = उक्ताः ( चन्द्रराहुशनिसूर्याः ) ग्रहा नीचारिपापांशगताः = यत्र कुत्र नीचे वा शत्रुभे वा पापनवांशे गताः स्युस्तदा तथैव ( दन्ताक्षिरोगी ) भवेत् ॥ ८४ ॥




यदि चन्द्रमा वा राहु व्ययमें हो, शनि त्रिकोणमें हो, सूर्य सातवें या आठवें हो तो दांत और नेत्रका रोगी होवे । वे ग्रह नीच, शत्रुराशिस्थ, पापांशकमें हों तो भी वही फल कहे ॥ ८४ ॥

इदानीमन्धयोगमाह—

सुताम्बुगौ पापखगौ विशेषाच्चेदष्टरिःफारिगतेऽन्धता स्यात् ।
शुभग्रहाणामवलोकहीने चान्धो भवत्येव शुभैर्न दोषः ॥ ८५ ॥

सुताम्बुगाविति । पापखगौ = द्वौ पापौ सुताम्बुगौ = सुते पञ्चमे अम्बुनि चतुर्थे वा गतौ भवेतां, चेच्चन्द्रे ( चन्द्र इति पूर्वस्मादनुवर्त्तते ) अष्टमे, रिःफे = द्वादशे, अरौ = षष्ठे भावे वा गते विशेषादतिशयेन (निश्चयेन) अन्धता स्यात् । उक्तयोगे शुभग्रहाणामवलोकहीने=दृष्टिरहिते चान्धो भवत्येव जातकः ( एवेति निश्चयार्थे ) । अर्थादेव शुभैः = शुभग्रहैरवलोकिते तस्मिन्योगे चन्द्रमसि दोषो न अर्थाच्छुभदृष्टिसत्त्वेऽन्धो न भवेदित्यर्थः ॥ ८५ ॥

**यदि पांचवें और चौथे भावमें पापग्रह हों और चन्द्रमा यदि ८ वें या १२ वें में हो तो निश्चय अन्धा होवे । इन योगोंमें शुभग्रहोंकी दृष्टि न होनेसे अन्धा होता ही है । किन्तु यदि यहां शुभग्रहोंकी दृष्टि और योग हो तो दोष नहीं होता याने अन्धा नहीं होता । (सु० जा० कार) ॥ ८५ ॥**

इदानीं कुष्ठयोगमाह—

हित्वा लग्नपतिं विलग्नसहितेष्वन्येषु कुष्ठं वदेत् ।
नीलं भानुसुते तु चण्डकिरणे रक्तं सितं भूमिजे ॥
मन्देन क्षितिजेन वा यदि युते कर्क्यन्त्यनक्रांशके ।
चन्द्रे शोभनयोगदृष्टिरहिते कुष्ठं वदेद् देहिनाम् ॥ ८६ ॥

हित्वेति । लग्नपतिं=लग्नेशग्रहं हित्वा=वर्जयित्वा अन्येषु ग्रहेषु विलग्नसहितेषु=जन्मकालीनलग्ने स्थितेषु जातस्य कुष्ठं वदेत् । लग्नेशो लग्नगतो यदि स्यात्तदा कुष्ठं नेति हित्वा लग्नपतिमित्यनेनावगम्यः । अन्येषु कुष्ठं वदेदित्यत्र कुष्ठविवरणमुच्यते । नीलं भानुसुते = शनौ लग्नगते, नीलं नीलकुष्ठं, चण्डकिरणे = सूर्ये लग्नगते तु रक्तं=लोहितवर्णं कुष्ठं, भूमिजे = मङ्गले लग्नगते सितं = श्वेतकुष्ठं, वदेत् । चन्द्रे, कर्क्यन्त्यनक्रांशके = कर्क-मीन-मकरराशीनामन्यतमस्य नवांशे विलसति यत्र तत्र मन्देन = शनिना, क्षितिजेन = भौमेन वा युते तथाभूते शोभनयोगदृष्टिरहिते = शुभग्रहाणां योगेन दृष्ट्या च रहिते यदि जन्म स्यात्तदा देहिनां = जनिमतां कुष्ठं = चर्मरोगविशेषं ( कोढ़—चरकादि ) वदेत् ॥ ८६ ॥

लग्नपतिको छोड़ कर अन्य पाप ग्रह लग्न में हो तो जातकके शरीरमें कुष्ठ होना कहे । यदि शनि हो तो नीलकुष्ठ, सूर्य हो तो रक्तकुष्ठ, मंगल हो तो श्वेत कुष्ठ कहे । शनि से वा मंगलसे युक्त चन्द्रमा कर्क, मीन, या मकरके नवांशमें हो उसमें शुभग्रहका योग या दृष्टि न हो तो मनुष्योंको कुष्ठ कहे ॥ ८६ ॥

इदानीं गुह्यरोगे योगान्तरावाह—

पापान्विते शशिनि रन्ध्रपलग्नराशौ सर्पेक्षिते निधनपे यदि गुह्यरोगी ।
रन्ध्रे चतुस्त्रितयपापयुते तथैव सौम्यग्रहेण सहिते यदि रोगहीनः ॥ ८७ ॥

पापान्वित इति । शशिनि = चन्द्रे पापान्विते=केनचित् पापग्रहेण युक्ते, रन्ध्रपलग्नराशौ = रन्ध्रपोऽष्टमेशस्तस्य यो लग्नराशिरात्मस्थानं तस्मिन् गतवति । अथ निधनपेऽष्टमभावेशे सर्पेण = राहुणेक्षिते=दृष्टे यदि जन्म स्यात्तदा जातो गुह्यरोग = रहस्याङ्गे रोगयुग्भवेत् । रन्ध्र इति । अष्टमे भावे चतुस्त्रितयपापयुते = पापचतुष्टयेन पापत्रितयेन वा युते तथैवार्थात् गुह्यरोगी भवेत् । उक्तयोगे यदि सौम्यग्रहेण=शुभग्रहेण सहिते सति रोगहीनः = स्वास्थ्यवान्भवेदिति ॥ ८७ ॥

पापग्रहयुक्त चन्द्रमा अष्टमेशकी राशिमें हो अष्टमेश को राहु देखता हो तो गुह्यरोगी ( बवासीर रोगवाला ) होय । अष्टम भवन चार या तीन पापग्रहोंसे युक्त हो तो भी यही फल होता है । यहां शुभग्रहके योग होनेसे रोग नहीं होता है ॥ ८७ ॥

इदानीं मूत्रकृच्छ्रशोणितरोगयोगौ कथ्येते—

जलचरगृहगेन्दौ तत्पतौ षष्ठयाते जलगृहगतखेटैरीक्षिते मूत्रकृच्छ्रम् ।
परिभवरिपुयाते शीतगौ भौमदृष्टे रविसुतयुतलग्ने शोणितं रोगमेति ॥ ८८ ॥

जलचरेति । जलचरराशिगत इन्दौ = चन्द्रे, तत्पतौ = जलचरराशीशे षष्ठयाते = षष्ठभावमुपगते तस्मिन् जलगृहगतैः ( मकरापरार्धकर्कमीनराशिगतैः ) खेटैर्ग्रहैरीक्षिते = दृष्टे जातो मूत्रकृच्छ्रं रोगमाप्नोति । परिभवेति । शीतगौ = चन्द्रे परिभवेऽष्टमे रिपौ = षष्ठे वा भावे गतवति तस्मिन् भौमदृष्टे=मङ्गलेनावलोकिते, रविसुतयुतलग्ने = शनिसहिते लग्ने सति जातः शोणितं रोगं = रक्तजातामयमेति = प्राप्नोतीति । सर्वार्थचिन्तामणौ—

"जलराशिगते चन्द्रे षष्ठे तद्भवनाधिपे ।
जलर्क्षस्थविदा दृष्टे मूत्रकृच्छ्रादिकं भवेत्" इति ॥ ८८ ॥

चन्द्रमा जलचर राशिमें हो, उस स्थानका स्वामी षष्ठ स्थानमें हो उसे जलचरराशिगत ग्रह देखते हों तो मूत्रकृच्छ्र ( सूजाक ) रोग होवे। चन्द्रमा अष्टमभाव या शत्रुभावमें हो उसे मंगल देखता हो और लग्नमें शनि हो तो रक्तरोग होवे ॥ ८८ ॥

इदानीं गुल्मरोगं दाहरोगञ्चाह—

क्षीणे मन्दगृहोदये हिमकरे पापग्रहैरन्विते
रन्ध्रारातिगतेऽथवा पवनकृद् गुल्मादिरोगं वदेत्।
चन्द्रे पापवियच्चरान्तरगते मन्दे मदस्थानगे
जातो विद्रधिजन्मशोषजनितैः सन्तप्तदेहो भवेत् ॥ ८९ ॥

क्षीणे इति। क्षीणे = क्षयिष्णौ हिमकरे=चन्द्रे पापग्रहैरन्विते=सहिते मन्दगृहोदये= मकरोदये वा कुम्भोदयेऽथवा रन्ध्रारातिगतेऽष्टमे षष्ठे वा भावे गतवति पवनकृत्=वायुजनितं गुल्मादिरोगं वदेत्। चन्द्र इति। चन्द्रे पापवियच्चरयोरन्तरे = मध्ये गते (चन्द्रादेको द्वितीयेऽपरो द्वादशे पापो भवेत्) मन्दे=शनौ मदस्थानगे=सप्तमभावमुपगते जातो नरो विद्रधिजन्मशोषजनितैः=विद्रधिरुदरव्याधिभेदः 'व्याधिभेदाः विद्रधिः स्त्री' इत्यमरः। जन्म-शोषो व्याधिभेदस्तैर्जनितैरामयैः आतः सन्तप्तदेहो भवेदिति ॥ ८९ ॥

शनिके गृहमें क्षीण चन्द्रमा पापग्रहोंसे युक्त हो, वा अष्टम या षष्ठ स्थानमें हो तो वायुकुपित गुल्मरोग कहे। चन्द्रमा पापग्रहके मध्यमें हो, शनि सप्तम हो तो जातक जन्मसे ही सूखा रोगसे सन्तप्त देह हो ॥ ८९ ॥

श्लोकेनानेनोदररोगभेदा उच्यन्ते—

अजीर्णगुल्मामयशूलमेति कुजे विलग्ने विबलेऽरिनाथे।
लग्ने सपापे फणिनायके वा मन्देऽष्टमे कुक्षिरुगर्दितः स्यात् ॥ ९० ॥

अजीर्णेति। सरलार्थः ॥ ९० ॥

मंगल लग्नमें हो और षष्ठेश निर्बल हो तो अजीर्ण और गुल्म रोगसे पीड़ा होती है। लग्न पापग्रहसे युक्त हो, वा राहुसे युक्त हो, शनि अष्टममें हो तो कुक्षि ( पेटके ) रोगसे पीड़ित हो ॥ ९० ॥

| | | |
|---|---|---|
| ३ / २ | १ मं. | १२ बु. / ११ |
| ४ | कुक्षिरोगः | १० |
| ५ / ६ | ७ | ८ श. / ९ |

इदानीं हृदयशूलरोगयोगं शूलयोगञ्चाह—

हृच्छूलरोगमुपयाति सुखे फणीशे पापेक्षिते गतबले यदि लग्ननाथे।
शूलामयं तनुपतौ रिपुनीचराशौ भौमे सुखे रविसुते यदि पापदृष्टे ॥ ९१ ॥

हृदिति। सरलार्थः ॥ ९१ ॥

यदि राहु सुख ( ४ ) में हो और लग्ननाथ पापदृष्ट और बलहीन हो तो हृदय-शूल रोग होता है। लग्नेश शत्रुगृहमें, वा नीच राशिमें हो और मंगल चौथे हो, शनि यदि पापग्रहसे देखा जाता हो तो शूलरोग होता है ॥ ९१ ॥

| | | |
|---|---|---|
| ३ ४ | २ | |
| ५ रा. | हृच्छूलं | मं. श. |
| ६ शु. | | |

| | | |
|---|---|---|
| २ ३ | १ | र. |
| ४ मं. | शूलामयं | |
| ५ ६ श. | ७ | |

इदानीमपरिपाकरोगं पाण्डुरोगं चाह—

जातो भुक्तिविरोधरोगनिहतो रन्ध्रेश्वरे दुर्बले
लग्ने पापनिरीक्षिते परिभवस्थाने समन्देक्षिते ।
वान्तिभ्रान्तिजपाण्डुमेति सकुजे चन्द्रे रिपुस्थानगे
जातः शूलविसर्पमेति दिनकृच्चन्द्रारयुक्ते यदा ॥ ९२ ॥

जात इति । रन्ध्रेश्वरेऽष्टमभावेशे दुर्बले = बलरहिते लग्ने = जन्मकालीनलग्ने पापग्रहेण निरीक्षिते = दृष्टे, परिभवस्थानेऽष्टमे भावे समन्देक्षिते = शनिदृष्टिसहिते जातो नरो भुक्तिविरोधरोगेणाशनावरोधामयेन ( भोजने गलावरोधेन ) निहतो भवेन्म्रियत इति । तथा प्रश्नमार्गे—

''पापग्रहेक्षितं लग्नं रन्ध्रं रविजवीक्षितम् ।
रन्ध्रेशो विबलो योग एष भुक्तिविरोधकृत्'' ॥ इति ।

वान्तिभ्रान्तिजेति । सकुजे = भौमयुक्ते चन्द्रे रिपुस्थानगे=षष्ठभावगते वान्तिभ्रान्तिजपाण्डुं ( कामलारोगं ) प्राप्नोति । दिनकृच्चन्द्रारयुक्ते=षष्ठे भावे सूर्यचन्द्रभौमैः सहिते च जातो नरः शूलविसर्पमेति = शूलभेदाद्विसर्पं प्रसरं ( व्रणप्रसारम् ) 'प्रसरस्तु विसर्पणम्' इत्यमरोक्तेः । एति=प्राप्नोतीति ॥ ९२ ॥

अष्टमेश निर्बल हो, लग्नमें पापग्रहों की दृष्टि हो, ८ वें भावमें शनिका योग या दृष्टि हो तो जातक भुक्तिविरोध ( गलेमें भोजनके रुकनेके ) रोगसे निहत हो ( मरे ) । यदि चन्द्रमा मङ्गलके साथ शत्रुभावमें हो तो वायुके विकारसे पाण्डुरोग हो । यदि सूर्य, चन्द्रमा और मङ्गल शत्रुभाव (६) में हों तो जातकको शूलरोग होवे । ( सुधाशालिनीकारः ) ॥ ९२ ॥

इदानीमभिचारजातं रोगमाह—

आरेक्षिते यदि विलग्नगृहेऽरिनाथे मानेऽथवाऽस्ततनुगे कृतमाभिचारम् ।
लग्नाधिपेन सहितेऽवनिजे विलग्ने केन्द्रेऽथवा रिपुपतौ तनुगे तथा स्यात् ॥ ९३ ॥

आरेक्षित इति । यदि आरेणाङ्गारकेणेक्षिते=दृष्टे विलग्नगृहे=जन्मलग्ने, अरिनाथे = षष्ठेशे माने=दशमे भावे, अथवाऽस्ततनुगे=सप्तमे लग्ने तिष्ठति सति आभिचारं=अभिचारसम्बन्धं ( कृत्योत्पादितं ) कृतं रोगं विजानीयात् । अथ लग्नाधिपेन=लग्नेशेन सहितेऽवनिजे = भौमे विलग्ने=जन्मलग्ने गते रिपुपतौ=षष्ठेशे केन्द्रे ( ७।४।१० ) अथवा तनुगे= लग्ने स्थिते सति तथा स्यादर्थादाभिचारं कृतं वाच्यम् ॥ ९३ ॥

यदि लग्नको मंगल देखता हो, षष्ठेश १०, वा ७ भावमें हो तो अभिचारसे ( जादू वगैरहसे ) रोग होवे । मंगल लग्नेशसे युक्त लग्नमें हो षष्ठेश केन्द्रमें वा लग्नमें हो तो अभिचारसे कष्ट होवे ॥ ९३ ॥

इदानीं देवदर्शनाद् भूतप्रेतपिशाचदर्शनाच्च जातं रोगमाह—

जातो निर्जरदर्शनेन जनितं रोगं सुखस्थानगे
माने लग्नगतेऽथवाऽमरगुरौ केन्द्रे समन्दात्मजे ।
मन्देऽस्ते चरलग्नगे यदि शुभे पापेक्षिते शीतगौ
भूतप्रेतपिशाचदर्शनवशाद् रोगं समेति ध्रुवम् ॥ ९४ ॥

जात इति । अमरगुरौ = बृहस्पतौ सुखस्थानगे = चतुर्थभावगते, माने = दशमभावे, लग्नगते=जन्मलग्ने स्थिते वा, केन्द्रे ( १।४।७।१० भावानामन्यतमे ) समन्दात्मजे=गुलिकयुक्ते च जातो नरो निर्जरदर्शनेन=देवदर्शनेन=देवदर्शनादेव जनितमुत्पन्नं=रोगमेति । मन्द-इति । मन्दे=शनैश्चरेऽस्ते=सप्तमे गते, शुभे=शुभग्रहे यदि चरलग्नगे=लग्नगतचरराशौ, शीतगौ = चन्द्रे यत्र तत्रस्थे पापेक्षिते जातो भूतप्रेतपिशाचानां दर्शनवशाद् ध्रुवं = निश्चयेन रोगं = व्याधिं समेति = प्राप्नोतीति ॥ ९४ ॥

**यदि बृहस्पति चौथे, या दशवें, या लग्नमें हो और गुलिक केन्द्रमें हो तो जातकको देवताके देखनेसे रोग उत्पन्न होवे । यदि शनि ७ वें, शुभग्रह चर लग्नमें हो और चन्द्रमा जहां कहीं पापग्रहसे दृष्ट होवे तो जातक को भूत-प्रेत-पिशाचके देखनेसे रोग होता है । ( सु० शा० कार ) ॥ ९४ ॥**

इदानीं केषांचिद्रोगयोगानां विवरणमाह—

चन्द्रे पापनिरीक्षिते रिपुगते पापान्विते वातजम्
जातः शोणितपित्तमेति वसुधापुत्रे तथाऽस्ते सति ।
सौम्ये वातकफामयं भृगुसुते मूलातिसारं तथा
मन्दे गुल्ममुपैति राहुशिखिनोः पैशाचरोगं वदेत् ॥ ९५ ॥

चन्द्र इति । चन्द्रे पापेन केनचिन्निरीक्षिते=दृष्टे, केनचित् पापेनान्विते=युक्ते, रिपुगते च जातो वातजं=वायुरोगं प्राप्नोति । वसुधापुत्रे=भौमेऽस्ते=सप्तमभावे तथा सति ( पापनिरीक्षिते पापान्विते च ) शोणितपित्तरोगमेति । सौम्ये=बुधेऽस्ते पापनिरीक्षिते पापान्विते च वातकफामयं=वायुकफजातं रोगं प्राप्नोति । भृगुसुते=शुक्रे तथोक्तवत् स्थिते मूलातिसारं ( Dysentery ) मन्दे=शनैश्चरे तथा सति गुल्मं ( Colic ) रोगमुपैति । एवं राहुशिखिनोः=राहुकेत्वोस्तथा स्थितयोः पैशाचरोगं जातकस्य वदेदिति ॥ ९५ ॥

**चन्द्रमा षष्ठस्थानमें पापग्रहसे देखा जाता हो वा युक्त हो तो वातरोग होता है । मंगल सातवेंमें हो तो रक्तपित्त रोग होवे । बुध सप्तममें हो तो वातकफका रोग होवे । शुक्र ७वेंमें हो तो मूलातिसार रोग हो । शनि ७ वेंमें हो तो गुल्म रोग हो । राहु या केतु हो तो पिशाच रोग कहे ॥ ९५ ॥**

इदानीं कासश्वासक्षयरोगं पीनसरोगञ्चाह—

कासश्वासक्षयजनिरुजं भानुभौमाहिदृष्टे
षष्ठे सौरे गुलिकसहिते सौम्यदृग्योगहीने ।
रिःफे पापे शशिनि रिपुगे भानुजे रन्ध्रयाते
पापांशस्थे तनुगृहपतौ पीनसं रोगमेति ॥ ९६ ॥

कासेति । सौरे = शनैश्चरे गुलिकेन सहिते षष्ठे = षष्ठभावङ्गते तस्मिन् भानुभौमाहिभिः=सूर्यमङ्गलराहुभिर्दृष्टे सौम्यदृग्योगहीने = शुभग्रहदृष्टियोगरहिते जातः कासश्वास-क्षयजनिरुजं=कासश्वासेन क्षयेन च जनितं रोगं ( Cough asthma and Consumption ) प्राप्नोति । **तस्मिन्नेव योगे शुभदृग्योगे सति न रोगमेति । रिःफ इति । पापे =**

सूर्ये भौमे वा रिःफे=द्वादशभावमुपगते शशिनि=चन्द्रे=ारेपुगे षष्ठगते, भानुजे=शनौ रन्ध्र-यातेऽष्टमभावगते, तनुगृहपतौ = लग्नेशे पापांशस्थे = पापग्रहनवांशगते च जातो नरः पीनसं रोगमेति। तथा सर्वार्थचिन्तामणौ—

चन्द्रे षष्टे, शनौ रन्ध्रे, व्यये पापे, विलग्नपे। पापांशकसमायुक्ते, पीनसं रोगमादिशेत् ॥

षष्ठ शनौ सगुलिके रव्यारफणिवीक्षिते। शुभैर्नदृष्टे युक्ते वा श्वासकासक्षयादियुक्। इति॥९६॥

यदि शनि गुलिकके साथ ६ ठे भावमें सूर्य, मङ्गल और राहुसे देखा जाता हो तथा शुभग्रहके योग और दृष्टिसे रहित हो तो जातकको कासश्वास, क्षय सम्बन्धी रोग होवे। बारहवें भावमें पापग्रह हो, चन्द्रमा ६ ठे और शनि ८ वें में हो लग्नेश पापग्रहके नवांशमें कहीं भी हो तो जातकको पीनस रोग होता है। ( सु० शा० कार ) ॥ ९६ ॥

इदानीं जलोदररोगदीर्घरोगरोगश्चाह—

मन्दे कुलीरभवनोपगते मृगस्थे चन्द्रे जलोदररुजं समुपैति जातः।
सारे शनौ रिपुगते रविराहुदृष्टे लग्नाधिपे च विबले सति दीर्घरोगी ॥ ९७ ॥

मन्द इति। मन्दे = शनैश्चरे कुलीरभवनोपगते=यत्र तत्र कर्कराशिस्थे, चन्द्रे मृगस्थे= मकरराशिगते जातो जलोदररुजं समुपैति। सार इति। सारे = भौमसहिते शनौ रिपुगते= षष्ठभावगते तस्मिन् रविराहुभ्यां दृष्टे, लग्नाधिपे=जन्मलग्नेशे विबले=निर्बले च सति जातो दीर्घरोगी=चिरं रोगयुग् भवतीति। तथा सर्वार्थचिन्तामणौ—

शन्यारसहिते षष्टे रविराहुनिरीक्षिते। लग्नेश्वरे हीनबले दीर्घरोगी भवेन्नरः ॥ इति ॥९७॥

शनि कर्कका हो, चन्द्रमा मकरका हो तो जातको जलोदर रोग हो। षष्ठस्थानमें मंगल-से युक्त शनिको सूर्य और राहु देखते हों लग्नेश निर्बल हो तो दीर्घरोगी होवे ॥ ९७ ॥

| | | |
|---|---|---|
| २ ३ | १ | |
| ४ श. | जलोदरम् | १० चं. |
| | | |

| | | |
|---|---|---|
| ३ ४ | २ | १ रा. १२ |
| ५ र. | दीर्घरोगः | ११ |
| ६ शु. मं. श. | ८ | १० ९ |

इदानीं जातस्य ह्रस्वयोगमाह—

ह्रस्वः कुजे निजगृहे सुखविक्रमस्थे चन्द्रात्मजे रविसुते यदि लग्नगे स्यात्।
स्वर्क्षे कुजे सुखसहोदरगेन्दुसूनौ होराधिपे शनियुते तु तथा वदन्ति ॥ ९८ ॥

ह्रस्व इति। कुजे = भौमे निजगृहे=मेषे वृश्चिके वा गते, चन्द्रात्मजे = बुधे सुखे ( ४ ) वा विक्रमे ( ३ ) स्थिते, रविसुते = शनैश्चरे यदि लग्नगे तदा जातो ह्रस्वो लघुकायः स्यात्। स्वर्क्षे इति। कुजे स्वर्क्षे ( १।८ गते ) इन्दुसूनौ=बुधे सुखसहोदरगे ( ४।३ भावगते ) होराधिपे=लग्नेशे शनियुते तु तथा=ह्रस्वः स्यादिति वदन्ति विज्ञाः ॥ ९८ ॥

४
२
५ बु.
३ श.
१
६
१२ चं. गु.
७
९
११
८ मं.
१०

यदि मङ्गल अपने राशि ( १।८ ) का हो, बुध ४ थे, या ३ रे भावमें हो और शनि लग्नमें हो तो जातक ह्रस्व (छोटे कदवाला) हो। यदि मङ्गल स्वगृहमें, बुध ३ रे, या ४ थे में हो और लग्नेश यदि शनिके साथ कहीं हो तो भी जातक ह्रस्व होवे। (सु० शा० कार) ॥९८॥

## अथ होरायाम्

इदानीं विकलनयनदारजन्मयोगमाह होरायां वराहः—

लग्नाद्व्ययारिगतयोः शशितिग्मरश्म्योः पत्न्या सहैकनयनस्य वदन्ति जन्म ॥
द्यूनस्थयोर्नवमपञ्चमसंस्थयोर्वा शुक्रार्कयोर्विकलदारमुशन्ति जातम् ॥ ९९ ॥

लग्नादिति। शशितिग्मरश्म्योश्चन्द्रसूर्ययोः लग्नाज्जन्मलग्नाद् व्ययारिगतयोरर्थात् लग्नाद् द्वादशे षष्ठे च यथासम्भवं चन्द्रः सूर्यश्चैकैको भवेत् तदा पत्न्या=स्त्रिया सहैकनयनस्यैकाक्षस्य जन्म भवति। अस्मिन्योगे समुद्भूतः सपत्नीकः काणत्वमाप्नुयात्। पुमान्स्वयं काणः तस्य स्त्री च काणीति। द्यूनस्थयोरिति। शुक्रार्कयोः=शुक्रसूर्ययोः लग्नाद् द्यूनस्थयोः=सप्तमगतयोः, वा नवमस्थयोः, वा पञ्चमस्थयोर्द्वयोरेव जातं विकलदारं = विकला हीनाङ्गा दाराः स्त्री यस्य तं विकलदारमुशन्ति=वदन्ति विज्ञाः। अस्मिन्योगे जातस्य स्त्री हीनाङ्गी भवतीति। तथा सारावल्याम्—

लग्नाद् व्ययरिपुगतयोः शशाङ्कभान्वोर्वदन्ति पुरुषस्य।
प्रभवं समस्तमुनयः क्रमेण पत्न्या सहैकनयनस्य॥
द्यूने कुजभार्गवयोर्जातः पुरुषो भवेद्विकलदारः।
धीधर्मस्थितयोर्वा परिकल्प्यं पण्डितैरेवम्॥ इति ॥ ९९ ॥

लग्नसे बारहवें या छठे स्थानमें चन्द्रमा और सूर्य हों तो जातक और उसकी स्त्रीको भी एक २ ही आंख होती है। शुक्र और सूर्यके सप्तमस्थ होनेसे वा नवम-पञ्चम स्थित होनेसे स्त्री विकलाङ्गी हो ऐसा फल आचार्यों ने कहा है। ( सु० शा० कार ) ॥ ९९ ॥

| | | | |
|---|---|---|---|
| | ल. | | च. र. |
| | एकाक्षः सदारः | | |
| चं. र. | | | |

| | | | |
|---|---|---|---|
| | ल. | | |
| | विकलदारः | | |
| र. शु. I. | र. शु. II. | | र. शु. III. |

इदानीं कर्णरोगं दन्तरोगयोगञ्चाह—

नवमायतृतीयधीयुता न च सौम्यैरशुभा निरीक्षिताः।
नियमाच्छ्रवणोपघातदा रदवैकृत्यकराश्च सप्तमे ॥ १०० ॥

नवमेति। अशुभाः=पापग्रहा नवमायतृतीयधीयुताः=यथासम्भवं नवमतृतीयैकादशपञ्चमभावेषु संस्थितास्ते च सौम्यैः=शुभग्रहैः निरीक्षिताः=दृष्टा न भवेयुस्तदा नियमात्=निश्चयेन जातस्य श्रवणोपघातदाः=कर्णेन्द्रियनाशका भवन्ति। त एव पापा लग्नात् सप्तमे भावे स्थिताः शुभग्रहैरदृष्टाश्च भवेयुस्तदा जातस्य रदवैकृत्यकराः=दन्तानां वैकृत्यकरा भवन्ति। उक्तञ्च सारावल्याम्—

धर्मायसहजसुतगाः पापाः सौम्यैर्न वीक्षिता जन्तोः ।

श्रवणविनाशं कुर्युः सप्तमसंस्थाश्च दन्तानाम् ॥ इति ॥ १०० ॥

नवम, एकादश, तृतीय, पंचम स्थानमें पापग्रह हों उन्हें शुभग्रह न देखते हों तो जातक अवश्य ही बहिरा होता है । यदि सप्तममें पापग्रह हों उन्हें शुभग्रह न देखते हों तो दाँतमें विकार हो ॥ १०० ॥

इदानीं जातस्य सुखयोगमाह—

वर्गोत्तमादिशुभवर्गयुतेऽमरेज्ये लग्ने रसातलगते यदि वा बलाढ्ये ।

वित्तायवृद्धिगृहगेषु वियच्चरेषु लग्नाधिपे बलयुते सुखमेति जातः ॥ १०१ ॥

वर्गोत्तमेति । अमरेज्ये=गुरौ वर्गोत्तमादिशुभवर्गयुते=वर्गोत्तमाः 'चरगृहादिषु पूर्व-मध्यपर्यन्ततः शुभफला नवभागसञ्ज्ञाः' इत्युक्ताः, आदिशब्देन मूलत्रिकोणोच्चस्ववर्गा ग्राह्याः ते च शुभवर्गाश्च तेषु सहिते, लग्ने = जन्मलग्ने, रसातले=चतुर्थभावे वा गते, यदि वा बलाढ्ये=बलयुक्ते गुरौ सति, अन्येषु वियच्चरेषु=ग्रहेषु वित्तायवृद्धिगृहगेषु=द्वितीयैका-दशचतुर्थभावेषु गतेषु, लग्नाधिपे=जन्मलग्नेशे, बलयुते=सबले च जातः सुखमेति ॥१०१॥

यदि बृहस्पति वर्गोत्तम आदि शुभ वर्गमें होकर लग्नमें, या ४ थेमें हो, वा बलवान् हो और ग्रह सब द्वितीय, एकादश, चतुर्थ गृहमें प्राप्त हों और लग्नाधिप बलवान् हो तो जातकको अनेक प्रकारका सुख हो ॥ १०१ ॥

ये जातभङ्गा नृपयोगभङ्गाः प्रेष्या दरिद्राङ्गविहीनरेकाः ।

ये रोगभेदाः परिकीर्तितास्ते सूर्यादिसर्वद्युचरप्रसादात् ॥ १०२ ॥

श्लोकेनानेन सरलार्थकेनाध्यायमुपसंहरति ॥ १०२ ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता । षष्ठे जातकभङ्गेऽस्मिन्नध्याये पूर्णतां गता ॥ ६ ॥

इस छठे अध्यायमें जितने जातकभङ्गयोग, राजभङ्ग योग, प्रेष्ययोग, द रिद्रयोग, हीनाङ्गयोग, रेकायोग और रोगोंके अनेकभेद कहे गये हैं वे सब श्री सूर्य आदि नवग्रहोंकी कृपासे ही कहे गये हैं । ( सु० शा० कार ) ॥ १०२ ॥

इति श्रीवैद्यनाथदैवज्ञविरचिते जातकपारिजाते जातकभङ्गाख्ये षष्ठाध्याये
'विमला' हिन्दी टीका समाप्ता ॥ ६ ॥

---

## अथ राजयोगाध्यायः ॥ ७ ॥

इदानीं राजयोगाध्यायो व्याख्यायते । तत्र येषु योगेषु समुद्भूता नरा राजानो भवन्ति ते योगाः समुच्यन्ते—

कन्यामीननृयुग्मगोहरिधनुः कुम्भस्थितैः खेचरैः

सेनामत्तमतङ्गवाजिविपुलो राजा यशस्वी भवेत् ॥

तौलिच्छागवृषावसानगृहगैर्जातोऽखिलक्ष्मापति-

र्गोचापान्त्यमकेन्द्रगैः पृथुयशाः पृथ्वीश्वरो जायते ॥ १ ॥

कन्यामीनेत्यादि । कन्यामीनौ प्रसिद्धौ, नृयुग्मं = मिथुनं, गौ = वृषः, हरिः = सिंहः, धनुःकुम्भौ प्रसिद्धौ एतेषु सप्तसु राशिषु स्थितैः खेचरैर्ग्रहैर्यदि सर्व एव ग्रहा यथा सम्भवमुक्तेषु सप्तराशिषु स्थिता भवेयुस्तदा जातो नरो हि सेनाभिः, मत्तमतङ्गैर्दन्तावलैः, वाजिभिस्तुरगैश्च सङ्कुलोऽतो विपुलो विशालो ( महान् ), यशस्वी कीर्तिमान् ( ख्यातः ) राजा भवेत् । तौलिच्छागवृषावसानगृहगैस्तुलामेषवृषमीनराशिगतैर्निखिलैर्ग्रहैर्जातो नरोऽखि-

लक्ष्मीपतिः = समस्ताया भुवोऽधिपतिर्भवेत् । अथ गोचापान्त्यभकेन्द्रगैः=गौः वृषः, चापं धनुः, अन्त्यो मीन एतेषु मेषु राशिषु तथा केन्द्र—( १।४।७।१० ) गतैश्च सकलैर्ग्रहैर्वी-यमानो नरः पृथुयशाः = अतीव यशस्वी पृथ्वीश्वरो राजा जायते भवति ॥ १ ॥

कन्या, मीन, मिथुन, वृष, सिंह, धनु और कुम्भराशिमें सब ग्रह स्थित हों तो वह मनुष्य सेना, मतवाले हाथी, घोड़ेके समूहसे युक्त यशस्वी राजा होवे । तुला, मेष, वृष, मीन, राशिमें सभी ग्रह जिसके जन्म समयमें हों वह सम्पूर्ण भूमण्डलका स्वामी हो । जिसके जन्म समयमें वृष, धनु, मीन राशिमें सब ग्रह स्थित हों, और केन्द्रमें हों वह राजा होता है ॥ १ ॥

कन्यामेषतुलामृगेन्द्रघटगैर्जातो महीपालको
दुश्चिक्यप्रतिभारसातलगतैर्बह्वर्थदेशाधिपः ॥
खेटा विक्रमबन्धुपुत्रगृहगा द्वौ वित्तधर्मस्थितौ
शेषौ लग्नकलत्रराशिसहितौ राजा भवेद्धार्मिकः ॥ २ ॥

कन्यामेषतुलामृगेन्द्रघटगैर्निखिलग्रहैर्जातो महीपालको नृपो भवति । दुश्चिक्यं=तृतीयं, प्रतिभा=पञ्चमं, रसातलं = चतुर्थं, तेषु गतैर्ग्रहै बह्वर्थदेशाधिपः=बहूनामर्थानां देशानाञ्चाधिपो भवति । अथ खेटाः = त्रयो ग्रहा विक्रमबन्धुपुत्रगृहगास्तृतीयचतुर्थपञ्चमभावगता भवेयुः । अथ च द्वौ ग्रहौ वित्तधर्मस्थितौ=द्वितीयनवमभावगतौ भवेतां । शेषौ=द्वौ लग्नकलत्रराशिस-हितौ=लग्नसप्तमभावगतौ भवेतां तदा जातो धार्मिको राजा भवेत् । अत्रेदमवधेयम् । सर्वे एव (७) ग्रहा यथासम्भवं प्रथम-द्वितीय-तृतीय-चतुर्थ-पञ्चम-सप्तम-नवमभावे-ष्वेकैकशः स्थिता भवेयुस्तदा धर्मशीलो राजा भवेदिति । तथा च भावकुतूहले—

एकैकेन खगेन जन्मसमये सैकावली कीर्तिता मुक्तालीव समस्तभूपमुकुटालङ्कारचूडामणिः । तज्जातो रिपुपुञ्जभञ्जनकरो गन्धर्वदिव्याङ्गनावृन्दानन्दपरो गुणव्रजधरो विद्याकरो मानवः ॥ इति ।

जिसके जन्म समयमें सभी ग्रह कन्या, मेष, तुला, सिंह और कुम्भमें स्थित हों वह राजा हो । जिसके जन्म समय ३।५।४ भावोंमें सब ग्रह हों वह बहुत धन और देशका मा-लिक हो । जिस मनुष्यके जन्म समय ३ ग्रह ३।४।५ भावों में हों २ ग्रह २।९ में हों शेष दो ग्रह लग्न और सप्तममें हों ( १।२।३।४।५।७।९ में सब ग्रह हों ) वह धार्मिक राजा होवे ॥ २ ॥

तारेशहोरासहिता नभोगा जातो यशस्वी मनुजाधिपः स्यात् ।
सौम्यास्तपोलाभगृहोपयाताः पापा रिपुव्योमगता नरेशः ॥ ३ ॥

नभोगाः=सर्वे ग्रहास्तारेशहोरासहिताश्चन्द्रस्य होरायां गता भवेयुः । 'होरा राश्यर्द्धे-मोजे दिनकरशशिनोरिन्दुमार्त्तण्डहोरे युग्मे राशौ' इत्युक्तत्वात् १,३,५,७,९,११ राशीना-मुत्तरार्द्धे २,४,६,८,१०,१२ राशीनामाद्यर्धे चन्द्रस्य होरा भवन्ति तासु यथासम्भवं सर्वे ग्रहा भवेयु ( समराशीनामाद्यर्द्धे विषमराशीनामपरार्द्धे चेत्यर्थः ) तदा जातो नरो यशस्वी= कीर्तिमान् मनुजाधिपो राजा स्यात् । सौम्या इति । सौम्याः = बुधगुरुशुक्रशुक्लचन्द्राः तपोलाभगृहोपयाताः=नवमैकादशभावगताः, पापाः=क्षीणेन्द्वर्कमहीसुतार्कतनयाः रिपुव्योम-गताः = षष्ठदशमभावगता भवेयुस्तदा जातो नरेशो राजा भवेत् ॥ ३ ॥

सभी ग्रह चन्द्रमाकी होरामें होवें ऐसे समय जिस मनुष्यका जन्म हो वह यशस्वी राजा होता है । शुभग्रह नवमें और ११ वें भावमें हों पाप ग्रह छठे और दशवें हों तो बालक राजा होता है ॥ ३ ॥

लग्नास्पदानङ्गगृहोपयाता बलान्विताः शोभनखेचरेन्द्राः ।
कुजार्कपुत्रौ नवमायसंस्थौ नृपो भवेत्सर्वगुणाभिरामः ॥ ४ ॥




बलिनः शुभग्रहाः लग्न-दशम-सप्तमभावगताः, भौमो नवमे, शनिरेकादशे स्थितो भवेत्तदा जातः सर्वगुणसम्पन्नो राजा भवेत् ॥४॥

जिसके जन्म समयमें बलवान् शुभ ग्रह लग्न दशम और सप्तम भावमें प्राप्त हों, मङ्गल और शनि नववें और ग्यारहवें हों तो वह सर्वगुणोंसे सुशोभित राजा होवे ॥ ४ ॥

वर्गोत्तमांशोपगते विलग्ने चन्द्रेऽथवा चन्द्रविमुक्तखेटैः ।
सुखास्पदानङ्गगृहोपयातैर्विलोकितैर्मानवनायकः स्यात् ॥ ५ ॥

वर्गोत्तमेति । विलग्ने=जन्मलग्ने वर्गोत्तमांशोपगते=स्वकीयवर्गोत्तमनवांशे गतेऽथवा चन्द्रे वर्गोत्तमांशोपगते तस्मिन् सुखास्पदानङ्गगृहोपयातैश्चतुर्थदशमसप्तमस्थैश्चन्द्रविमुक्तखेटैश्चन्द्रं विहायापरैर्ग्रहैर्विलोकिते = दृष्टे जातो मानवनायको राजा स्यात् । तथा च बृहज्जातके—

वर्गोत्तमगते लग्ने चन्द्रे वा चन्द्रवर्जितैः । चतुराद्यैर्ग्रहैर्दृष्टे नृपा द्वाविंशतिः स्मृताः ॥ इति ॥

अत्र लग्नं चन्द्रः पश्येत्तवा पश्येत्परञ्च स द्रष्टृत्वेन न गण्यत इति चन्द्रविमुक्तखेटैरित्युक्तं, चन्द्रः पश्यतु कामं स द्रष्टृत्वेन न गण्यते' इति प्राजापत्यवचनात् ॥ ५ ॥

जिसके जन्म समयमें लग्न वा चन्द्रमा वर्गोत्तमांशमें हो उसे चन्द्रमा को छोड़ कर चतुर्थ, दशम, सप्तम, स्थानमें प्राप्त सब ग्रह देखते हों तो वह राजा होता है ॥ ५ ॥

अश्विन्यामुदयस्थिते भृगुसुते सर्वग्रहैरीक्षिते
जातो राजकुलाग्रजो रिपुकुलध्वंसी बहुस्त्रीरतः ॥
हित्वा नीचनवांशमम्बरचरैस्त्र्याद्यैः स्वभागान्वितै-
रेको लग्नगतो यदि क्षितिपतिः पञ्चादिकैर्वित्तवान् ॥ ६ ॥

अश्विन्यामिति । भृगुसुते=शुक्रे अश्विन्यामुदयेऽश्विनीनक्षत्रे जन्मलग्ने स्थिते सति सर्वग्रहैः = षड्भिः ( र. चं. मं. बु. बृ. श. ) ईक्षिते = दृष्टे जातो राजकुलाग्रजः=महाराजः. रिपुकुलानां = द्विषतां ध्वंसी = विनाशको बहुस्त्रीरतश्च भवति । तथा जातकादेशे—

अश्विन्यां लग्नगः शुक्रः सर्वग्रहनिरीक्षितः । करोति पृथिवीपालं निर्जितारातिमण्डलम् ॥इति॥

हित्वेति । नीचनवांशकं=यत्र कुत्रापि नीचराशिनवांशकं परित्यज्य त्र्याद्यैस्त्रिप्रभृतिभिरम्बरचरैः=ग्रहैः स्वभागान्वितैरात्मीयनवांशे समवस्थितैस्तेषां कश्चिदेको ग्रहो लग्नगतो भवेत्तदा जातः क्षितिपती राजा भवति । पञ्चादिकैर्ग्रहैः स्वभागान्वितैर्वित्तवान्=पञ्च षट् सप्त वा ग्रहाः स्वनवांशगाः स्युस्तदा जातो वित्तवान् नृपो भवेत् । तथा हि—

नीचांशकान् परित्यज्य त्र्यादिकेत्रोञ्चसंस्थिताः । तेषामेको विलग्नस्थः कुर्वन्ति पृथिवीपतिम् ।
पञ्चादिभिस्तथा भूतैर्ग्रहैरन्योऽपि नान्यथा । द्वाभ्यां चतुर्भिरेते स्युरुभये धनिनः परम् ॥इति॥

जिस मनुष्यके जन्म समय शुक्र अश्विनी नक्षत्रमें होकर लग्नमें स्थित हो उसे सभी ग्रह देखते हों तो वह राजा-कुलमें अग्रज, शत्रु-कुलका संहारक, बहुत स्त्रियोंसे विलास करने वाला होता है ।

नीच नवांशको छोड़कर तीन आदि ग्रह स्वभागमें स्थित हों उसमें एक भी लग्नमें यदि हो तो राजा हो । पांच आदि ग्रह स्वभावमें हों तो वित्तवान् राजा हो ॥ ६ ॥

शुक्रेऽरिनीचमपहाय कुटुम्बसंस्थे लग्नेश्वरे बलयुते पृथिवीपतिः स्यात् ।
चन्द्रेऽतिमित्रनिजभागगते निशायां शुक्रेक्षिते नृपतिरन्यविलोकहीने ।।७।।

शुक्र इति । अरिनीचं=शत्रुराशिं नीचराशिञ्चापहाय=त्यक्त्वा कुटुम्बसंस्थे = द्वितीयभावगते शुक्रे ( द्वितीयो भावः शुक्रस्य नीचं शत्रुगृहं वा न भवेत्तत्र शुक्रः स्थितः स्यादिति ) लग्नेश्वरे तत्र बलयुक्ते सति जातः पृथिवीपती राजा भवेत् । तथा जातकादेशे—

शत्रुनीचगृहं त्यक्त्वा कुटुम्बस्थः सभार्गवः ।
लग्नेश्वरो बली यत्र स नरः पृथिवीपतिः । इति॥




चन्द्र इति । अतिमित्रस्य=तत्काले नैसर्गिके च मित्रस्य वा निजस्यात्मनोभागगते निशायां=रात्रौ च चन्द्रे शुक्रेक्षिते, अन्यविलोकहीनेऽन्येषां दृष्टिरहिते जातो नृपतिः = राजा भवति ।

तथा सारावल्याम्—

अधिमित्रांशगश्चन्द्रो दृष्टो दानवमन्त्रिणा ।
अनिशं कुरुते लक्ष्मीस्वामिनं भूपतिं नरम् ॥




जिस मनुष्यके जन्म समय शुक्र अपने शत्रु राशि ( ४।५ ) नीचराशि (६) के अतिरिक्त राशिमें स्थित होकर द्वितीय स्थानमें हो और लग्नेश बली हो तो वह मनुष्य भूमिपति ( राजा ) होवे । रात्रिमें चन्द्रमा अपने अतिमित्रके या अपने भाग ( नवांश ) में प्राप्त हो उसे शुक्र देखता हो अन्य कोई भी ग्रह न देखता हो तो राजा होता है ॥ ७ ॥

मीने मीननवांशके भृगुसुते लग्नस्थिते भूपतिः
स्वोच्चे लग्नगृहाधिपे बलयुते राजा शशाङ्केक्षिते ।
लग्नस्वामिनि तुङ्गमन्दिरगते नीचारिभागं विना
केन्द्रस्थानगते नभोगवियुते जातो महीपालकः ॥ ८ ॥

मीन इति । मीने मीननवांशके च लग्नस्थिते भृगुसुते=शुक्रे सति । एतदुक्तं भवति । जन्मकाले मीनराशिर्लग्नं तस्मिन्मीनराशेर्नवांशो भवेदर्थान्मीनराशेर्नवमे नवांशे लग्नं तत्र शुक्रो भवेत्तदा जातो भूपतिर्नृपो भवति । तथा हि जातकादेशे—

'मीने मीनांशके लग्ने शुक्रे जातो नृपो भवेत्' इति ।

स्वोच्च इति । लग्नगृहाधिपे=लग्नेशे स्वोच्चे=स्वकीयोच्चराशौ बलयुते=सबले च शशाङ्केन=चन्द्रेणेक्षिते=दृष्टे जातो राजा स्यात् । लग्नस्वामिनि=जन्मलग्नपतौ नीचारिभागं विना=नीचराशिनवांशं शत्रुराशिनवांशं चापहाय, तुङ्गमन्दिरगते=स्वोच्चराशिस्थेऽर्थाल्लग्नेशो निजोच्चराशौ नीचस्य शत्रोर्वा नवांशो न भवेदिति, केन्द्रस्थानगते राशौ नभोगवियुते=ग्रहैः रहिते सति जातो महीपालको राजा भवेत् ॥ ८ ॥

जिसके जन्म समयमें लग्नमें मीनराशिमें मीन हीके नवांशमें शुक्र स्थित हो वह राजा होता है । लग्नेश अपने उच्च राशिमें स्थित बलवान् हो उसे चन्द्रमा देखता हो तो राजा होता है । जिसके जन्मसमय लग्नेश अपने उच्च राशिका हो अपने नीच और शत्रुके

नवांशका न हो और केन्द्रमें कोई भी ग्रह न हों तो वह महीपाल ( राजा ) होता है ॥ ८॥

भाग्यस्थे निजतुङ्गमित्रभवने सम्पूर्णगात्रे विधौ
लग्नादास्पदवित्तराशिगतयोः शन्यारयोर्भूपतिः ।
चन्द्रे पूर्णकलान्विते बलयुते लग्नं विना केन्द्रगे
दृष्टे दानवमन्त्रिणा च गुरुणा राजा महीदानकृत् ॥ ९ ॥

भाग्यस्थे इति । सम्पूर्णगात्रे=पूर्णबिम्बे विधौ=चन्द्रे निजतुङ्गमित्रभवने=स्वोच्चे (वृषे) मित्रराशौ वा स्थिते, भाग्यस्थे=नवमभावे विलसति, लग्नाज्जन्मकालीनलग्नाद्दशमद्वितीय-भावगतयोः शन्यारयोः=शनिभौमयोः जातो भूपतिर्नृपो भवेत् । चन्द्र इति । पूर्णकलान्विते बलयुते च चन्द्रे लग्नं विना केन्द्रगेऽर्थात्सप्तमचतुर्थदशमभावानामन्यतमस्थे तस्मिन् दानवमन्त्रिणा=शुक्रेण, गुरुणा = जीवेन च दृष्टे महीदानकृत्=भूमिदानकर्त्ता राजा भवेत् । तथा च सारावल्याम्—

लग्नं विहाय केन्द्रे सकलकलापूरितो निशानाथः ।
विदधाति महीपालं विक्रमधनवाहनोपेतम् ॥ इति ।

जातकादेशे च—लग्नं विहाय केन्द्रे सकलकलापूरितो निशानाथः ।
भार्गवदेवगुरुभ्यां दृष्टो राजा भवेन्नियतम् ॥ ९ ॥

जिस मनुष्यके जन्मसमयमें पूर्ण चन्द्रमा अपने उच्च या मित्रके राशिका होकर भाग्य स्थानमें हो लग्नसे दशम-द्वितीय स्थानमें शनि और मङ्गल हों तो वह राजा होता है। पूर्ण चन्द्रमा बलवान् होकर लग्नको छोड़ अन्य केन्द्र ( ४।७।१० ) में हो, शुक्रसे और बृहस्पतिसे देखा जाता हो ऐसे योगमें जायमान मनुष्य भूमि दान करनेवाला राजा होता है ॥ ९ ॥

| | | |
|---|---|---|
| ७ श. / र. ८ | ६ | ५ / ४ |
| ९ | (१) | ३ मं. |
| १० / ११ | १२ | २ चं. / १ |

| | | |
|---|---|---|
| २ / ३ | १ | १२ बृ. / ११ |
| चं. ४ | (२) | सू. १० |
| ५ / ६ | ७ | ९ शु. / ८ |

एकस्मिन्परमोच्चगेऽतिसुहृदा दृष्टे यदि क्ष्मापति-
स्तत्तुल्यो भृगुनन्दने बलयुते लाभेऽथवा रिःफगे ।
द्वित्रिव्योमचरेषु तुङ्गगृहगेष्विन्दौ कुलीरे स्थिते
लग्ने पूर्णकलान्विते नरपतिः सर्वत्र पूज्यो भवेत् ॥ १० ॥

एकस्मिन्निति । परमोच्चगे=स्वकीयपठितपरमोच्चभागे गतवत्येकस्मिन्कस्मिन्नपि ग्रहेऽतिसुहृदाऽतिमित्रग्रहेण दृष्टे यदि जन्म भवेत्तदा जातः क्ष्मापतिर्नृपो भवेत् । तथा हि सारावल्याम्—एक एव खगः स्वोच्चे वर्गोत्तमगतो यदि ।

बलवान् मित्रसन्दृष्टः करोति पृथ्वीपतिम् ॥




तत्तुल्य इति। बलयुते भृगुनन्दने=सबले शुक्रे लाभेऽथवा रिःफगे = लग्नादेकादशे द्वादशे वा गते जातस्तत्तुल्यो नृपसमो धनवान्भवतीत्यर्थः। द्वित्रीति। द्वित्रिव्योमचरेषु तुङ्गगृहगेषु = द्वौ वा त्रयो ग्रहा निजोच्चराशिगता भवेयुरिति। इन्दौ=चन्द्रे कुलीरे=कर्कटे ( स्वराशौ ) स्थिते, लग्ने=जन्मलग्ने पूर्णबलान्विते स्वामिगुरुज्ञवीक्षितयुते च जातः सर्वत्र पूज्यः = सर्वजनमान्यो नरपती राजा भवति ॥ १० ॥

जिसके जन्मसमयमें एक भी ग्रह परमोच्च राशिमें स्थित हो उसको यदि उसका अतिमित्र ग्रह देखता हो तो भूमिपति ( राजा ) होता है। बलवान् शुक्र यदि ग्यारहवें वा बारहवें हो तो भी पूर्ववत् फल जाने। दो या तीन ग्रह उच्चमें हों, चन्द्रमा कर्कराशिमें हो और लग्न पूर्णबली हो तो सर्वत्र पूज्य राजा होवे ॥ १० ॥

सर्वे चोपचयस्थिताः शुभखगाः पापा विलग्नस्थिता
मानस्था यदि वा जितारिनिचयः क्रूरो महीपालकः।
भानौ सप्तमगे निशाकरयुते तुङ्गादिवर्गस्थिते।
सौम्यासौम्यनिरीक्षितेऽतिचपलो राजाऽथवा तत्समः ॥ ११ ॥




सर्व इति। सर्वे च शुभखगाः=बुधगुरुशुक्रशुक्लचन्द्रा उपचयस्थितास्त्रिषडेकादशदशमेषु भावेषु स्थिताः, सर्वे पापाः=रविभौमशनिकृष्णचन्द्रा विलग्ने = जन्मलग्ने स्थिता वा माने=दशमे भावे गता यदि भवेयुस्तदा जातो जितारिनिचयः=शत्रुकुलोन्मूलको महीपालको राजा, क्रूरः=कलुषमतिश्च भवति। उक्तेऽस्मिन्योगे जातो नरः पराक्रमी पापमतिश्च राजा भवतीत्यर्थः।




भानाविति। भानौ=सूर्ये निशाकरेण चन्द्रेण युते सप्तमगे, तुङ्गादिवर्गस्थिते स्वोच्चत्रिकोणगृहादिनिजाधिकारगते तस्मिन् सौम्यासौम्यैः=शुभैरशुभैश्च निरीक्षिते=दृष्टे जातश्चपलश्चपलमती राजा तत्तुल्यो वा भवतीति ॥ ११ ॥

जिसके जन्म समयमें सभी शुभग्रह उपचय ( ३।६।१०।११ ) में हों पापग्रह लग्नमें हों वा दशममें हों तो वह सम्पूर्ण शत्रुसमूह को जीतनेवाला क्रूर स्वभावका राजा होता है। उच्चादि वर्गमें स्थित सूर्य चन्द्रमासे युत सप्तम भावमें हो, शुभाशुभ ग्रहोंसे देखा जाता हो तो अति चंचल राजा हो, या राजाके समान हो ॥ ११ ॥

चापाजसिंहभवनोदयगे धराजे मित्रेक्षिते निजबलार्जितराज्यकर्ता।
दुश्चिक्यधर्मसुतगा रविचन्द्रजीवा वीर्यान्विता यदि कुबेरसमो नृपालः ॥ १२ ॥

चापेति। चापाजसिंहभवनोदयगे = धनुर्मेषसिंहराशीनामन्यतमे लग्ने धराजे=भौमे

स्थिते तस्मिन् मित्रग्रहेणेक्षिते = दृष्टे जातो निजबलार्जितराज्यकर्ता=स्वपराक्रमेणोपार्जितस्य राज्यस्य भोक्ता भवेत्। अस्मिन् योगे जातो राजकुलादन्योऽपि स्वपराक्रमेण राज्यमुपार्जयति। तथा फलदीपिकायाम्—

भौमश्चेदजहरिचापलग्नसंस्थः पृथ्वीशं कलयति मित्रखेटदृष्टः। इति।

दुश्चिक्येति। वीर्यान्विताः=बलशालिनो रविचन्द्रजीवाः=सूर्यचन्द्रगुरवः लग्नाद्वा भौमाद् दुश्चिक्यधर्मसुतगा यथाक्रमं तृतीय-नवम-पञ्चमभावगता यदि भवेयुस्तदा जातः कुबेरसमो नृपालोऽक्षयकोषवान् राजा भवेत्। तथा चोक्तं सारावल्याम्—

जीवनिशाकरसूर्याः पञ्चमनवमतृतीयगा वक्रात्।
यदि भवति तदा राजा कुबेरतुल्यो धनैर्वाऽसौ ॥ १२ ॥

वनु, मेष या सिंह राशिके लग्नमें मङ्गल स्थित हो अपने मित्रसे देखा जाता हो उस समय जिस मनुष्यका जन्म हो वह अपने बलसे उत्पन्न किये हुए राज्यको भोगनेवाला होता है। तृतीय, नवम और पञ्चम भावमें यदि बलवान् सूर्य, चन्द्रमा और गुरु हों तो कुबेरके सदृश राजा होवे। ( सु. शा. कार ) ॥ १२ ॥







नीचङ्गतो जन्मनि यो ग्रहः स्यात्तद्राशिनाथोऽपि तदुच्चनाथः।
स चन्द्रलग्नाद्यदि केन्द्रवर्ती राजा भवेद्धार्मिकचक्रवर्ती ॥ १३ ॥

नीचमिति। जन्मनि=नरस्य जन्मकाले यो ग्रहो नीचमात्मीयनीचराशिंगतो भवति तद्राशिनाथस्तस्य नीचराशेरधिपः=स्वामी, तथा तदुच्चनाथस्तस्य नीचस्थग्रहस्य यदुच्चं तद्राशिपतिरपि द्वावुच्चनीचपती वैकः कश्चिच्चन्द्राल्लग्नाद्वा यदि केन्द्रवर्त्ती=केन्द्रस्थान-( १।४।७।१० ) गतो भवति तदा जातो धार्मिकश्चक्रवर्त्ती च ( पुण्यात्मा सार्वभौमश्च ) राजा भवेदिति।




फलदीपिकायामपि—नीचे तिष्ठति यस्तदाश्रितगृहाधीशो विलग्नाद्यदा चन्द्राद्वा यदि नीचगस्य विहगस्योच्चर्क्षनाथोऽथवा। केन्द्रे तिष्ठति चेत् प्रपूर्णविभवः स्याच्चक्रवर्ती नृपो धर्मिष्ठोऽन्यमहीशवन्दितपदस्तेजोयशोभाग्यवान्॥

जिसके जन्मके समय जो ग्रह नीच राशि में प्राप्त हो उस नीच राशिका स्वामी वा उस ग्रह के उच्चस्थानका स्वामी लग्न से वा चन्द्रमासे केन्द्रमें स्थित हो तो वह धर्मात्मा और चक्रवर्ती राजा होता है। ( सु. शा कार ) ॥

नीचस्थितग्रहनवांशपतौ त्रिकोणे केन्द्रेऽथवा चरगृहे यदि जन्मलग्ने।
तद्वाधिपे चरगृहांशसमन्विते वा जातो महीपतिरतिप्रबलोऽथवा स्यात् ॥ १४ ॥

नीचेति । जन्मकाले नीचस्थितो ग्रहो यस्मिन्नवांशे भवेत् तन्नवांशराशिपतौ ग्रहे त्रिकोणे ( ५।९ ) अथवा केन्द्रे ( १।४।७।१० ) गतवति, यदि चरगृहे=मेषकर्कतुला-मकराणामन्यतमे राशौ, जन्मलग्ने, तद्भावपे=लग्नराशीशे, चरगृहांशसमन्विते = चरराशिनवांशे गते, वा ( वा पक्षान्तरे बोध्यः ) जातो नरो महीपती राजा, अथवाऽतिप्रबलो बहुधनवान्पुरुषो भवेदिति । तथा सर्वार्थचिन्तामणौ—

नीचस्थितांशनाथस्तु खेटः केन्द्रत्रिकोणगः । चरलग्ने तदीशे तु चरांशादौ नृपो भवेत् ॥ इति ।

जिसके जन्मकालमें नीच राशिगत ग्रहका नवांश स्वामी त्रिकोणमें हो अथवा केन्द्रमें हो, चर राशिका जन्म-लग्न हो वा लग्नेश चरगृहके नवांशमें हो तो वह मनुष्य राजा हो वा अत्यन्त प्रभावशाली हो ॥ १४ ॥

मानस्थानपतौ पराभवगते पारावतांशेऽथवा
स्वोच्चस्वर्क्षसुहृन्नवांशकगते राजाधिराजो भवेत् ॥
लग्ने नीचगृहे पुरन्दरगुरौ रन्ध्रे सपापग्रहे
तद्राश्यंशसमन्विते यदि तदा राजाधिराजो भवेत् ॥ १५ ॥

मानेति । मानस्थानपतौ = दशमभावेशे, पराभवगते = अष्टमभावमुपस्थिते, पारावतांशे = स्वकीयषडधिकारेषु गते अथवा स्वोच्च-स्वर्क्ष-सुहृन्नवांशकगते=स्वकीयोच्च=स्वकीयराशि-स्वमित्रराशीनामन्यतमस्य नवांशके प्राप्ते, जातो राजाधिराजो राज्ञामपि राजा ( King of Kings ) भवेत् । लग्न इति । पुरन्दरगुरौ=बृहस्पतौ, नीचगृहे=मकरराशौ स्थिते लग्ने गतवति, अर्थान्मकरराशिजन्मलग्नगतो गुरुः स्यादिति । रन्ध्रे = अष्टमे भावे ( सिंहराशौ ) सपापग्रहेण = केनचित्पापग्रहेण सहिते, तद्राश्यंशसमन्विते=तस्याष्टमभावस्य नवांशे ( लग्नगतनवांशाच्चतुःषष्टितमे नवांशे ) गतवति पापग्रहे च यदि कस्यचिज्जन्म स्यात्तदाऽसौ राजाधिराजो ( King of Kings ) भवेत् । अत्रोदाहरणे—प्रथमे योगे दशमेशः शनिरष्टमे भावे तुला-( स्वोच्च- ) राशिनवांशगतो योगकारकः । द्वितीये योगे मकरलग्ने तृतीयनवांशे गुरुः, अष्टमे भावे तृतीयनवांशगतः सूर्यश्च योगं कुरुतः ॥ १५ ॥







दशमभावका स्वामी ८ वें भावमें प्राप्त हो, पारावतांशमें हो वा उच्च, स्वराशि, मित्रराशिके नवांशका हो उस समय जो मनुष्य उत्पन्न हो वह राजाओंका राजा (चक्रवर्ती) होवे।

लग्नमें नीच गृहका ( मकरका ) गुरु हो, अष्टम भाव पापग्रहसे युत हो और उस ( ८ भाव ) के नवांशसे यदि युक्त हो तो वह राजाधिराज हो ॥ १५ ॥

जीवस्य व्ययगे शनौ सहजपे लाभेऽथवा भास्करे
रिःफे लग्नपतौ तु निर्जरगुरावुर्वीशराजो भवेत् ॥
भाग्येशस्थनवांशपे तनयगे बन्धुस्थिते वा नृपो
दृष्टे वा शशिजे सुरेन्द्रगुरुणा युक्ते स राजप्रियः ॥ १६ ॥

जीवस्येति । जीवस्य = गुरोः, व्ययगे = द्वादशे भावे स्थिते, सहजपे = तृतीयभावपतौ शनौ लाभे = एकादशगते, अथवा भास्करे=सूर्ये लाभगते । अत्र जीवस्य व्यये स्थितिरुक्ता तत्र कथं भूतस्य जीवस्येति ? उच्यते । रिःफे लग्नपतौ तु निर्जरगुरौ । लग्नपतौ=लग्नेशे, निर्जरगुरौ = बृहस्पतौ तु, रिष्फे = द्वादशगते, जातो नरः, उर्वीशराजः=राजराजो (King of Kings) भवेत् । तथा च सर्वार्थचिन्तामणौ—

गुरौ व्यये रवौ लाभे शनौ वा विक्रमाधिपे । गुरौ व्यये विलग्नेशे राजराजो भवेन्नरः ॥

अत्र लग्नपतौ गुरौ सहजेशः शनिस्तदैव भवितुमर्हो यदा लग्नं धनूराशिः स्यादिति चिन्त्यम् । भाग्येशेति । भाग्येशः = नवमभावेशः, यत्र नवांशे तिष्ठति तद्राशिपतौ, तनयगे = लग्नात्पञ्चमभावगे, वा बन्धुस्थिते = चतुर्थभावगते, जातो नृपो भवति । तत्र च सुरेन्द्रगुरुणा = बृहस्पतिना, दृष्टे वा युक्ते, शशिजे = बुधे स जातो राजप्रियो (Kings favorite) भवति । तथा च—

भाग्याधिपसमायुक्तनवांशाधिपतौ सुखे । पुत्रस्थानं गते वाऽपि नृपश्रेष्ठो भवेन्नरः ॥
इति सर्वार्थचि० ॥ १६ ॥

(१)

१० बृ. ८ श. ७ र. ११ १२ ६ ३ १ ५ २ ४

| | | |
|---|---|---|
| | | |
| ४ बृ. ३ चं. | २ | १० बु. ९ |
| | | |

जिस मनुष्यके जन्म समयमें बृहस्पति बारहवें हो, शनि तीसरे भावका मालिक होकर ग्यारहवें हो, या सूर्य ११ वें हो और बृहस्पति लग्नेश होकर १२ वें हो तो वह भूमिपाल (राजा) होता है । नवमेश जहां स्थित हो उसका नवांशेश पांचवें वा चौथे हो तो वह राजा होता है । बुधको बृहस्पति देखता हो वा दोनों युक्त हों तो वह राजाका प्रिय हो ॥ १६ ॥

भाग्येशेन निरीक्षिते शशिसुते केन्द्रस्थिते भूभुजाम्
तुल्यत्वं समुपैति जातमनुजो लग्नस्थिते वाक्पतौ ॥
केन्द्रे वा यदि कोणगे रविसुते मूलत्रिकोणोच्चगे
लाभेशेन निरीक्षिते बलयुते भूपालतुल्यो भवेत् ॥ १७ ॥

भाग्येशेनेति । केन्द्रस्थिते=लग्नचतुर्थसप्तमदशमानामन्यतमे भावे स्थिते, शशिसुतेन्बुधे, भाग्येशेन = नवमेशेन यत्र तत्रगेन, निरीक्षिते=दृष्टे, वाक्पतौ=गुरौ, लग्नस्थिते = जन्मलग्नमुपगते सति, जातमनुजो = जायमानो नरः, भूभुजां = राज्ञाम् , तुल्यत्वं = सादृश्यं समुपैति । अस्मिन् योगे जातो राजतुल्यो भवतीति ।

| | | |
|---|---|---|
| १ २ | १२ बृ. | ११ १० |
| ३ मं. | नृपतुल्यः | ९ बु. |
| ४ ५ | ६ | ८ ७ |

केन्द्र इति । रविसुते = शनैश्चरे, केन्द्रे=(१।४।७।१०), वा कोण-(५।९) गे सति

मूलत्रिकोणोच्चगे=मूलत्रिकोणे कुम्भे, वा स्वोच्चे ( तुलायाम् ) गतवति, लाभेशेन=एकादशेशेन, निरीक्षते=दृष्टे, बलयुते च जातो भूपालतुल्यो नृपसमो भवेत् ॥ १७ ॥

जिसके जन्म-समय लग्नमें गुरु हो, केन्द्रमें बुध स्थित हो, उसको नवमेश देखता हो तो वह मनुष्य राजाओंके समान धनी होता है। यदि शनि केन्द्र या कोणमें मूलत्रिकोण या उच्चका हो, बली हो, उसको लाभेश देखता हो तो वह राजाके सदृश धनाढ्य होता है॥

लग्ने शीतकरे गुरौ सुखगते कर्मस्थिते भार्गवे
तुङ्गस्वर्क्षगते दिवाकरसुते राजाऽथवा तत्समः।
अन्त्योपान्त्यविलग्नवित्तसहजव्यापारगेहेषु वा
सौम्यव्योमचरेषु भूपतिसमो राजाधिराजप्रियः॥ १८ ॥

लग्न इति । स्पष्टार्थः श्लोकः ॥

उक्तयोगद्वये सर्वार्थचिन्तामणिकारः—

( १ ) लग्ने चन्द्रे गुरौ सौख्ये कर्मस्थे भृगुनन्दने ।
स्वोच्चस्वर्क्षस्थिते मन्दे नृपतुल्यो भवेन्नरः ॥
( २ ) दशमैकादशे रिःफलग्नवित्तसहोत्थगे ।
ग्रहास्तिष्ठन्ति चेत्सौम्या नृपतुल्यो भवेन्नरः ॥ इति ॥ १८ ॥

जिस मनुष्यके जन्म समयमें लग्नमें चन्द्रमा हो, बृहस्पति सुख (४) में हो, दशवें शुक्र हो, शनि अपनी उच्चराशिमें (७) वा अपने गृह ( १०।११) में हो तो वह राजा हो, वा राजाके समान हो। १२, ११, १, २, ३, १०, भावोंमें यदि शुभ ग्रह हों तो राजाधिराजका प्रिय, या राजाके समान होवे। ( सु० शा० कार ) ॥ १८ ॥

| | | |
|---|---|---|
| | चं. १ | |
| बृ. | । | शु. |
| | श. ७ | |

| | | |
|---|---|---|
| चं. | ल. बृ. | शु. |
| | ॥ | बु. |
| | | |

मन्दे चोत्तमवर्गके बलयुते नीचांशवर्ज्ये गुरौ
भानौ शोभनदृष्टिभागसहिते राजप्रियस्तत्समः।
राहौ कर्मणि लाभगे रविसुते भाग्याधिपेनेक्षिते
लग्नेशे यदि नीचखेटरहिते पृथ्वीशतुल्यो भवेत् ॥ १६ ॥

मन्द इति । बलयुते=स्ववर्गादिगते मन्दे = शनैश्चरे यत्र तत्र उत्तमवर्गगे = स्वकीयाधिकारत्रये ( उत्तमं तु त्रिवर्गैक्यमित्युक्तेः ) च गतवति, गुरौ = बृहस्पतौ, नीचांशवर्ज्ये= यत्र कुत्रापि भावे नीचराशेः ( मकरस्य ) नवांशरहिते स्थिते, भानौ = सूर्ये, शोभनदृष्टिभागसहिते = शुभग्रहदृष्टया शुभग्रहनवांशेन च सहिते सति जातो राजप्रियो वा तत्समः = राजतुल्यो भवेत् । राहाविति । राहौ, कर्मणि = दशमे भावे, रविसुते = शनौ, लाभगे = एकादशभावे, तस्मिन् , भाग्याधिपेन = नवमेशेन, ईक्षिते = दृष्टे, लग्नेशे = जन्मलग्नपतौ,

नीचखेटरहिते = नीचगतग्रहेण वियुते यदि जन्म स्यात्तदा जातः पृथ्वीशतुल्यः = नृपसमो भवेदिति । अत्र द्वितीययोगे सर्वार्थचिन्तामणौ सादृश्यं यथा—

माने राहौ भवे मन्दे भाग्यनाथेन वीक्षिते । लग्नेशे नीचखेटेनायुते नृपसमो भवेत् ॥ इति ॥ १९ ॥

जिसके जन्म समयमें शनि बलवान् होकर उत्तम वर्गमें हो और गुरु नीच नवांशमें न हो, सूर्य शुभग्रहसे दृष्ट हो वा शुभग्रहके नवांशमें हो तो वह मनुष्य राजाका प्रिय तथा राजाके सदृश होवे। राहु कर्म भावमें हो, शनि लाभमें हो, भाग्येश उसकोदे खता हो और लग्नेश नीचस्थ ग्रहसे युत न हो तो राजाके तुल्य होवे। ( सु० शा० कार ) ॥ १९ ॥

नीचं गता द्वित्रिचतुर्ग्रहेन्द्राः षष्ठ्यंशके शोभनभागयुक्ताः ।
स्वतुङ्गराश्यंशसमन्विता वा धरापतिर्धार्मिकचक्रवर्ती ॥ २० ॥




नीचमिति । द्वित्रिचतुर्ग्रहेन्द्राः=द्वौ वा त्रयो वा चत्वारो ग्रहाः ( न पञ्चादयः, सीमितत्वात् ) नीचङ्गताः = स्वस्वनीचराशिगताः सन्तः षष्ठ्यंशके शोभनभागयुक्ताः = शुभषष्ठ्यंशगता भवेयुः, वा स्वतुङ्गराश्यंशसमन्विताः=निजोच्चराशिनवांशगता भवेयुः । इदमुक्तं भवति । द्वौ, त्रयो वा चत्वारो ग्रहा यत्र तत्र भावे नीचराशिषु भूत्वा यदि स्वकीयोच्चराशीनां नवांशेषु वा शुभषष्ठ्यंशेषु गता भवेयुः, तदा जातो नरो धार्मिकचक्रवर्त्ती = पुण्यात्मा, सार्वभौमश्च धरापतिर्नृपो भवतीति । तथा च सर्वार्थचिन्तामणौ—

त्रयो वा द्वौ खगौ वाऽपि चत्वारो नीचसंयुताः ।
शुभषष्ठ्यंशसंयुक्ताः स्वोच्चांशे वा धरापतिः ॥ २० ॥

जिसके जन्म समय दो, तीन वा चार ग्रह नीचमें हों और शुभ-षष्ठ्यंशमें हों वा अपनी उच्चराशिके नवांशमें हों तो धार्मिक चक्रवर्ती भूमिपाल ( राजा ) हो ॥ २० ॥

लग्नात्कर्मशुभाधिपौ शुभगृहाद्व्यापारधर्मेश्वरौ
मानादास्पदभाग्यपौ च सहितावन्योन्यराशिस्थितौ ।
अन्योन्येक्षणकेन्द्रगौ धनपतेः सम्बन्धिनौ चेद्धनी
जातो यानपकाय्यपेक्षितयुतौ बह्वर्थयानाधिपः ॥ २१ ॥

लग्नादिति । १. लग्नाज्जन्मकालीनलग्नात्, कर्मशुभाधिपौ=दशमनवमभावपती ( नवमेशदशमेशौ ), २. शुभगृहात् = नवमभावात्, व्यापारधर्मेश्वरौ=दशमेशनवमेशौ, लग्नात्षष्ठेशपञ्चमेशौ, इत्यर्थः । ३. मानात् = दशमभावात् = आस्पदभाग्यपौ=दशमेशनवमेशौ, लग्नात्षष्ठेशसप्तमेशौ, इत्यर्थः । च शब्दो विकल्पार्थे । उक्तौ तौ, सहितौ = यत्र तत्रैकत्र संयुक्तौ, वा अन्योन्यराशिस्थितौ = नवमेशो दशमे, दशमेशो नवमे च स्थितौ भवेताम्, वा अन्योन्येक्षणकेन्द्रगौ = परस्परं दृष्टियुतौ परस्परं केन्द्रगतौ च भवेतां, तथा भूतौ धनपतेः= द्वितीयभावेशस्य सम्बन्धिनौ चेद्भवेतां, तथा यानपकाय्यपेक्षितयुतौ = यानपेन चतुर्थेशेन काय्यपेन लग्नेशेन चेक्षितौ दृष्टौ युतौ वा भवेतां तदा जातो नरो धनी = धनवान्, बह्वर्थयानाधिपः = बहुधनवाहनानामधीशो भवेत् ॥

अत्र प्रसङ्गात् सम्बन्धः प्रदर्श्यते—

प्रथमः स्थानसम्बन्धो दृष्टिजस्तु द्वितीयकः । तृतीयस्त्वेकतो दृष्टिः स्थितस्त्वेकत्र चतुर्थकः ॥

अन्योन्यगौ तथा स्वे स्वे संयुतावन्यभे स्थितौ । पूर्णेक्षितौ मिथो वाऽपि चैकवर्गगतौ यदा ॥ पराशरः ।

अपि च द्वयोर्द्वयोः सम्बन्धायोगा उदाहृताः पराशरेण—

१. लग्नवित्तौ, २. स्वदुश्चिक्यौ, ३. त्रितुर्यौ, ४. तुर्यपञ्चमौ ।
५. द्विषात्मजौ, ६. षष्ठमारौ, ७. स्त्रीरन्ध्रौ, ८. मृतिभाग्यकौ ॥
९. धर्मकर्मौ, १०. खलाभौ च, ११. रिःफलाभौ, १२. तनुव्ययौ ।
पुष्कलाः, १. लाभयोगाद्यं, २. राजभृत्यं ३. चमूपकम् ।
४. अमात्यं, ५. दारुणं कर्म, ६. राजयोगं, ७. प्रियामृतिम् ॥
८. भाग्यव्ययं, ९. राजयोगं, १०. भूमिद्रव्यं, ११. ऋणव्ययम् ।
१२. वित्तहानिः द्वादशैते योगा वै सर्वदा स्मृताः ॥ इति २१ ॥

जिसके जन्मसमयमें लग्नसे कर्म और धर्मके ( १०।९ ) स्वामी, या धर्मसे दशमेश-नवमेश, या दशवेंसे नवमेश-दशमेश युक्त हों और अन्योन्य राशिमें स्थित हों, वा परस्पर केन्द्रमें प्राप्त हों, वा परस्पर देखते हों, धनेशके सम्बन्धी हों तो वह धनी होता है । यदि वे चतुर्थेश और लग्नेशसे युक्त दृष्ट हों तो बहुत धन-वाहनोंका स्वामी हो ॥ २१ ॥

षट्सु ग्रहेषूच्चगृहस्थितेषु राजाधिराजोऽखिलभूपतिः स्यात् ।
उच्चं गतैः पञ्चभिरिन्द्रवन्द्ये लग्नस्थिते सर्वजनावनीशः ॥ २२ ॥

षडिति । केऽपि षड् ग्रहा यत्र तत्र किल स्वस्वोच्चगता भवेयुस्तदा राजाधिराजोऽखिलभूपतिश्चक्रवर्त्ती राजा स्यात् । चेत्पञ्च ग्रहाः स्वोच्चगता भवेयुः गुरुश्च लग्नेभ वेत्तदा जातः सर्वजनावनीशः = सर्वमान्यो राजा भवेत् । अत्राधिकसङ्ख्यके पापग्रहे उच्चगते फले न्यूनता भवति । तथा बृहज्जातके—

प्राहुर्यवनाः स्वतुङ्गगैः क्रूरैः क्रूरमतिर्महीपतिः । क्रूरैस्तु न जीवशर्मणः पक्षे क्षित्यधिपः प्रजायते ॥

अत्र पापाश्चेदुच्चस्थाः स्युस्तदा जातो राजा न किन्तु धनी स्यादिति जीवशर्ममतम् । तथा तद्वचनम्—

पापैरुच्चगतैर्जाता न भवन्ति नृपा नराः । किन्तु वित्तान्वितास्ते स्युः क्रोधिनः कलहप्रियाः ॥

अथात्र वराहेण तु सामान्यवचनमेवोक्तं न तत्र पापशुभभेदः उक्तः । तथा च—

"त्रिप्रभृतिभिरुच्चस्थैर्नृपवंशभवा भवन्ति राजानः ।
पञ्चादिभिरन्यकुलोद्भवाश्च तद्वत् त्रिकोणगतैः ॥" इति ॥

अत्र वराहवचने त्रयो वा चत्वारो ग्रहा उच्चगता नृपपुत्रमेव राजानं कुर्वन्ति । पञ्च, षट्, सप्त चान्यकुलोत्पन्नमपि राजानं कुर्वन्ति किमुत राजपुत्रमिति ज्ञेयम् ॥ २२ ॥

जिसके जन्मसमयमें छः ग्रह उच्च राशिमें हों वह सब राजोंका राजाधिराज ( सम्राट् ) हो । यदि पांच ग्रह उच्चके हों, बृहस्पति लग्नमें हो तो समस्त जन समुदायका राजा हो ॥ २२ ॥

कुम्भोदयस्थे रविजे चतुर्भिः स्वोच्चंगतैः सर्वमहीपतिः स्यात् ।
मेषोदयस्थे यदि चन्द्रपुत्रे स्वोच्चं गते देवगुरौ नृपालः ॥ २३ ॥

कुम्भेति । कुम्भराशिलग्ने शनिर्भवेत्, केऽपि चत्वारो ग्रहाः स्वोच्चगता भवेयुस्तदा जातः सर्वमहीपतिश्चक्रवर्त्ती राजा भवेत् । अत्र 'कुटुम्बसंस्थे रविजे' इत्यपि पाठान्तरं तदा शनौ द्वितीये गतवति, व्याख्येयम् । अथ मेषलग्ने बुधे सति गुरौ स्वोच्चंगते ( कर्कस्थे ) च जातो नृपालः = राजा स्यात् ॥ २३ ॥

शनि कुम्भ लग्नमें हो और चार ग्रह उच्चके हों तो समस्त पृथ्वीका राजा हो । यदि मेष लग्नमें बुध हो, बृहस्पति उच्च ( कर्क ) का हो तो राजा हो ॥ २३ ॥

| | | |
|---|---|---|
| बु. शु. १२ र. १ | ११ श. | १० ९ |
| २ चं. | १ | ८ |
| ३ बृ. ४ | ५ | ७ ६ |

| | | |
|---|---|---|
| २ ३ | १ बु. | |
| ४ बृ. | ॥ | |
| | | |

चन्द्रे वृषोदयगते यदि षड्भिरन्यैर्दृष्टेऽतिबाल्यवयसि क्षितिनायकः स्यात् ।
तुङ्गस्थितैकखचरे निजमित्रयातैरन्यैः समेति नरपालसमानभोग्यम् ॥ २४ ॥

चन्द्र इति । वृषोदयगते = वृषराशिलग्ने ( स्वोच्च इति यावत् ), चन्द्रे विलसति, अन्यैः = स्वेतरैः ( सू. मं. बु. गु. शु. श. ) षड्भिर्ग्रहैर्दृष्टे जातोऽतिबाल्यवयसि ( कौमार एव ) क्षितिनायकः = राजा स्यात् । तुङ्गेति । तुङ्गस्थितैकखचरे = स्वोच्चंगत एकस्मिन् ग्रहे, निजमित्रयातैः = स्वराशिगतैर्वा मित्रराशिस्थितैरन्यैः षड्भिर्ग्रहैः । इदमुक्तं भवति । कश्चिदेको ग्रह उच्चं गतो भवेत्तस्योच्चगतस्येतरे ये षड् ग्रहाः स्वराशिगता वा मित्रराशिगता भवेयुस्तदा जातो नरपालस्य=राज्ञः समानभाग्यं समेति राजसमो भवेदित्यर्थः ॥ २४ ॥

जिस मनुष्यके जन्म-समयमें वृषलग्नमें चन्द्रमा हो उसे अन्य छः ग्रह देखते हों तो अत्यन्त बचपनमें ही राजा होवे । एक ग्रह उच्च का हो और अन्य सब ग्रह निज या मित्र-गृहमें प्राप्त हों तो उसका भाग्य राजाके समान हो ॥ २४ ॥

वर्गोत्तमे वा यदि पुष्करांशे सारेन्दुदेवेन्द्रगुरौ नृपालः ।
कर्मस्थिते शोभनदृष्टियुक्ते सम्पूर्णगात्रे शशिनि क्षितीशः ॥ २५ ॥

वर्गोत्तम इति । सारेन्दुदेवेन्द्रगुरौ=भौमचन्द्राभ्यां सहिते गुरौ ( मं. चं. बृ. ) वर्गोत्तमे=स्ववर्गोत्तमनवांशे पूर्वोक्ते, यदि वा पुष्करांशे=प्रति राशि केचिदंशाः पुष्करांशाः शुभदाः पठिताः ( १ अ० ५८ श्लो० द्रष्टव्यः ) तस्मिन्पुष्करांशे गतेऽपि, जातो नृपालः = राजा भवति । कर्मस्थिते इति । सम्पूर्णगात्रे = पूर्णबिम्बे (पूर्णिमायां) शशिनि चन्द्रे, कर्मस्थिते= दशमभावगते, शोभनदृष्टियुक्ते=शुभग्रहावलोकिते च जातः क्षितीशो राजा भवतीति ॥२५॥

जिस मनुष्यके जन्मसमयमें वर्गोत्तम वा पुष्करांशमें बृहस्पति मङ्गल और चन्द्रमाके साथ हो वह राजा हो । पूर्ण चन्द्रमा शुभग्रहसे दृष्ट युत होकर कर्ममें स्थित हो तो राजा होवे॥२५॥

गुरुसितयुतचन्द्रे चापगे चन्द्रसूनौ यदि तनुगृहयाते भूमिजे कन्यकायाम् ।
मृगसुखभवनस्थे भानुपुत्रे नृपः स्यादतिशयबलयुक्तः सर्वभूपालपूज्यः ॥ २६ ॥

गुर्विति । गुरुसिताभ्यां युक्ते चन्द्रे ( बृ. शु. चं. ) चापगे = धनूराशिगे, चन्द्र-सूनौ = बुधे, यदि तनुगृहयाते=लग्नमुपगते, भूमिजे=मङ्गले कन्यकायां=कन्याराशिं गते, भानुपुत्रे=शनैश्चरे, मृगसुखभवनस्थे = मृगो मकर एव सुखभवनं चतुर्थो भावस्तस्मिन् स्थिते (मकरश्चतुर्थभावमुपगत इत्यर्थः) ।

| | | |
|---|---|---|
| ८ बृ.९शु.चं. | ७ बु. | ६ मं. ५ |
| १० श. | | ४ |
| ११ १२ | १ | ३ २ |

अत्रेदमुक्तं भवति । चतुर्थो भावो मकरराशिस्तत्र शनिर्भवेत्तदा धनूराशिस्तृतीयो भावस्तत्र गुरुशुक्रचन्द्रा भवेयुः, तदानीं लग्नं तुलाराशिस्तत्र बुधो भवेत्तथा कन्या द्वादशो भावस्तत्र कुज इति । तदानीं जातोऽतिशयबलयुक्तः = महाबलशाली, सर्वभूपालपूज्योऽखिलनृपतिवन्द्यो नृपः = राजाधिराजो भवेदिति ॥ २६ ॥

जिसके जन्मसमयमें गुरु और शुक्रसे युक्त चन्द्रमा धनुमें हो, बुध लग्नमें हो, मंगल कन्यामें हो, मकरका शनि सुख(४)में हो तो वह अत्यन्त बलसे युक्त सब राजाओंका पूज्य राजा होवे ॥ २६ ॥

कन्यावसानयुगचापमृगाननस्थैः सौम्येन्दुभौमगुरुभानुसुतैर्नृपालः ।
मीनोदये शशिनि पूर्णतनौ बलाढ्ये स्वोच्चे कुजे रविसुते घटगे नरेशः ॥२७॥

कन्येति । कन्यावसानयुगचापमृगाननस्थैः=कन्या-मीन-मिथुन-धनुर्धर-मकरराशिगतैः, सौम्येन्दुभौमगुरुभानुसुतैः=बुध-चन्द्र-मङ्गल-बृहस्पति-शनैश्चरैः । एतदुक्तं भवति । बुधः कन्यायां, चन्द्रो मीने, मङ्गलो मिथुने, गुरुर्धनुषि, शनिर्मकरे स्थितो भवेत्तदा जातो नृपालो राजा भवति । अत्र केवलं राशिनिर्देश एव कृतो न भावनिर्देशः । किन्तु बृहज्जातके वराहेण तेष्वेव राशिषु तेषामेव ग्रहाणां भावपरत्वेन स्थितिरुक्ता । तद्यथा—

मृगे मन्दे लग्ने सहजरिपुधर्मव्ययगतैः
शशाङ्काद्यैः ख्यातः पृथुगुणयशाः पुङ्गलपतिः ।

इति ॥ एवं सारावल्याम्—

मृगे मन्दे लग्ने कुमुदवनबन्धुश्च तिमिगः
तथा कन्यां त्यक्त्वा बुधभवनसंस्थः कुतनयः ।
स्थितो नार्यां सौम्यो धनुषि सुरमन्त्री यदि भवेत्
तदा जातो भूपः सुरपतिसमः प्राप्तमहिमा ।इति॥

| | | |
|---|---|---|
| ११ / चं. १२ | १० श. | ९ बृ. / ८ |
| १ | नृपयोगः | ७ |
| २ / ३ मं. | ४ | ६ बु. / ५ |

तथाऽत्र लग्ने मकरगतः शनिः । कन्यागतो नवमे बुधः । मीने तृतीये चन्द्रः । मिथुने षष्ठे भौमः । धनुषि द्वादशे गुरुश्च भवेदिति ।

मीनोदय इति । पूर्णतनौ = सकलकले, बलाढ्ये=सबले च, शशिनि=चन्द्रे, मीनोदये= मीनराशिगतलग्ने विलसति, कुजे = मङ्गले, स्वोच्चे=मकरराशौ,(लाभगते) रविसुते=शनौ, घटगे = कुम्भराशिगते ( व्ययगते ) जातो नरेशो भवति । तथा सारावल्याम्—

| | | |
|---|---|---|
| १ | १२ चं. | ११ श |
| २ | | १० मं. |
| ३ | | ९ |
| ४ | ६ | ८ |
| ५ इ. | | ७ |

उदयति मीने शशिनि नरेन्द्रः सकलकलाढ्यः, क्षितिसुत उच्चे ।
मृगपतिसंस्थे दशशतरश्मौ घटधरगे स्याद्दिनकरपुत्रे ॥ इति ॥ २७ ॥

जिसके जन्मसमय बुध, चन्द्रमा, मंगल और शनि यदि कन्या, मीन, कर्क, धनु और मकरमें क्रमशः स्थित हों तो वह राजा हो । यदि मीन लग्न हो उसमें पूर्ण बली चन्द्रमा हो मंगल उच्च ( मकर ) में हो शनि कुम्भमें हो तो राजा होता है ॥ २७ ॥

मृगोदयस्थे यदि भूकुमारे कुलीरगे चन्द्रमसि क्षितीशः।
धराजपूषामरवन्द्यमाना मृगाजकुम्भोपगता नरेशः॥ २८॥

मृगेति। यदि भूकुमारे = मङ्गले, मृगोदयस्थे = मकरराशिलग्ने गतवति, चन्द्रमसि, कुलीरगे=कर्कराशिगते (सप्तमभाव इति) तदा जातः क्षितीशो राजा, भवति। धराजेति। धराजपूषामरवन्द्यमानाः = भौमसूर्यगुरवः, मृगाजकुम्भोपगताः = मकरमेषकुम्भगताः अर्थायत्र तत्र भौमो मकरे, सूर्यो, मेषे, गुरुः कुम्भे स्थितो भवेत्तदा जातो नरेशः = राजा भवति॥ २८॥

**जिस मनुष्यके जन्म-कालमें मंगल मकर लग्नमें हो, कर्कका चन्द्रमा हो तो वह राजा होता है। यदि मंगल, सूर्य और बृहस्पति मकर, मेष, कुम्भमें क्रमशः स्थित हों तो राजा होता है॥ २८॥**

लग्नाधिपेतरयुते यदि पूर्णचन्द्रे शुक्रज्ञदेवगुरुदृष्टियुते तु राजा।
वर्गोत्तमांशसहिता गुरुशुक्रभौमाः पापा न केन्द्रभवनोपगता नरेशः॥ २९॥

लग्नेति। यदि पूर्णचन्द्रे=सकलकलान्विते चन्द्रे, लग्नाधिपेतरयुते=लग्नपतिं विहायान्येन केनचिद् ग्रहेण युते, तथाभूते शुक्रज्ञदेवगुरुदृष्टियुते = शुक्रबुधगुरूणामन्यतमेन सर्वैर्वा निरीक्षिते तु जातो राजा भवति। अथ च गुरुशुक्रभौमाः वर्गोत्तमांशसहिताः = स्वस्ववर्गोत्तमनवांशगताः स्युः, पापाः (सूर्यशनिक्षीणचन्द्राः) केन्द्रभवनोपगताः (१।४।७।१० भावगताः) न भवेयुस्तदा जायमानो नरो नरेशः = राजा भवेदिति॥ २९॥

**जिसके जन्मसमय चन्द्रमा लग्नाधिपके अतिरिक्त ग्रहसे युक्त और शुक्र-बुध-बृहस्पतिसे दृष्ट हो तो वह राजा हो यदि गुरु, शुक्र और मंगल वर्गोत्तमांशमें हों और पापग्रह केन्द्रमें न हों तो राजा होता है॥ २९॥**

शीर्षोदयेषु निखिलद्युचरेषु चन्द्रे सौम्यग्रहेक्षणयुते कटके महीपः।
लग्नाधिपे नवमगे दशमस्थिते वा लग्ने सुधाकरयुते पृथिवीपतिः स्यात्॥३०॥

शीर्षेति। निखिलद्युचरेषु = सकलग्रहेषु चन्द्रवर्जितेषु, शीर्षोदयेषु = सिंहकन्यातुलावृश्चिकमिथुनकुम्भेषु राशिषु गतेषु, चन्द्रे सौम्यग्रहेक्षणयुते=शुभग्रहदृष्टिसहिते, कटके=कर्कराशिलग्ने विलसति जातो महीपः=राजा भवति। तथा हि सारावल्याम्—

शीर्षोदयर्क्षेषु गताः समस्ता नीचारिवर्गे स्वगृहे शशाङ्कः।
सौम्येक्षितोऽन्यूनकलो विलग्ने दद्यान्महीं रत्नगजाश्वपूर्णाम्॥ इति।

लग्नाधिप इति। लग्नाधिपे=लग्नेशे, नवमगे वा दशमस्थिते, लग्ने च सुधाकरेण चन्द्रेण युते (चन्द्रे लग्नगत इत्यर्थः) जातः पृथिवीपतिः = राजा स्यादिति॥ ३०॥

**जिसके जन्मसमय शीर्षोदयराशि (मि० सिं० क० तु० वृ० कु०) में सभी ग्रह हों और चन्द्रमा शुभ ग्रहसे दृष्ट वा युत होकर कर्कमें हो तो वह राजा होता है। लग्नेश नवम वा दशम हो और लग्नमें चन्द्रमा हो तो राजा होता है॥ ३०॥**

चापार्द्धं गतवान् सहस्रकिरणस्तत्रैव ताराधिपो
लग्ने भानुसुतेऽतिवीर्यसहिते स्वोच्चे च भूनन्दनः।
यद्येवं भवति क्षितेरधिपतिः सन्त्यज्य शौर्यं भयाद्
दूरादेव नमन्ति तस्य रिपवो दग्धाः प्रतापाग्निना॥ ३१॥




चापार्द्धमिति। सहस्रकिरणः=सूर्यः, चापार्द्धं=धनुषः प्राग्दलं गतवान् भवेत् , तत्रैव = चापार्द्ध एव (रविणा सह) ताराधिपः=चन्द्रो भवेत्, अतिवीर्यसहिते = स्वस्थानं गतवति, भानुसुते=शनौ लग्ने=मकरराशिलग्ने प्राप्ते, भूनन्दनः=मङ्गलः, स्वोच्चे=मकरराशौ (शनिना सह लग्नगत इत्यर्थः ) यद्येवं स्यात् तदा जातः क्षितेः=भुवः, अधिपतिः=स्वामी ( राजा ) भवति। तस्य रिपवः = शत्रवः, स्वीयं शौर्यं=बलं, सन्त्यज्य, भयात्=साध्वसात् , दूरादेव नमन्ति=प्रणमन्ति तमिति। यतस्ते रिपवस्तस्योक्तयोगसमुद्भूतस्य प्रतापाग्निना = पराक्रमरूपानलेन दग्धा निस्तेजस्का भवन्ति। उक्तयोगे जातस्य बलीयांसोऽपि शत्रवो वश्यमेवोपगच्छन्तीति भावः। तथा च माण्डव्यः—

आदित्यश्च निशाकरश्च भवतो वागीशराशौ यदा
सार्द्धं भास्करिणा स्ववीर्यसहितः प्राप्तो मृगे मङ्गलः।
प्राप्नोति प्रभवं तदा स सुकृती क्ष्मापालचूडामणिः
त्रस्यन्ति प्रतिपन्थिनो रणमुखे यस्मात् कृतान्तादिव ॥

एवं वराहोऽपि—

'कुजे तुङ्गेऽर्केन्द्वोर्धनुषि यमलग्ने च कुपतिः' इति ॥ ३१ ॥

धनुराशिके आधे ( १५° ) पर सूर्य हो, वहां ही चन्द्रमा भी हो और मकर लग्नमें अति बलवान् शनि हो तथा मंगल उच्च ( मकर ) का यदि हो तो उसके प्रतापाग्निके भयसे जलकर शत्रु पराक्रम त्यागकर भयसे दूरसे ही नमस्कार करते हैं। (सु. शा. कार) ॥३१॥

उपचयगृहसंस्थो जन्मपो यस्य चन्द्रात्
शुभगृहनवमांशे केन्द्रयाताश्च सौम्याः।
सकलबलवियुक्ता ये च पापाभिधानाः
स भवति नरनाथः शक्रतुल्यो बलेन ॥ ३२ ॥

उपचयेति। यस्य नरस्य जन्मपः = जन्मलग्नेशः, चन्द्रात्, उपचयगृहसंस्थः=त्रिषडेकादशदशमानामन्यतमगृहं गतो भवेत्, सौम्याः=शुभग्रहाः ( बुधगुरुशुक्रशुक्लचन्द्राः ) केन्द्रयाताः=प्रथम-चतुर्थ-सप्तम-दशमभावोपगताः, शुभगृहनवमांशे = शुभग्रहराशिनवांशे चोपगता भवेयुः। ये च पापाभिधानाः=पापग्रहाः ( रविभौमशनिकृष्णचन्द्राः ) ते, सकलबलवियुक्ताः = सकलैः स्थानादिबलैः वियुक्ताः, ( अतिनिर्बलाः ) भवेयुः स जातो नरः, बलेनात्मपराक्रमेण, शक्रतुल्यः = इन्द्रसमः, नरनाथः = नृपो भवति ॥ ३२ ॥

जिसके जन्मकालमें चन्द्रमासे उपचय ( ३।६।१०।११ ) स्थानमें लग्नेश हो शुभग्रह शुभराशिके नवांशका होकर केन्द्रमें स्थित हों और पापग्रह हर एक प्रकारसे बल रहित हों तो वह मनुष्य बलसे इन्द्रके समान राजा होता है। ( सु. शा. कार ) ॥ ३२ ॥

उच्चाभिलाषी सविता त्रिकोणे स्वर्क्षे शशी जन्मनि यस्य जन्तोः।
स शास्ति पृथ्वीं बहुरत्नपूर्णां बृहस्पतिः कर्कटकोपगश्चेत् ॥ ३३ ॥

उच्चाभिलाषीति। यस्य जन्तोः=मनुष्यस्य, जन्मनि=जन्मकाले, उच्चाभिलाषी = स्वकीयोच्चराशिं गन्तुकामः ( मेषं गन्तुमिच्छुः, मीनान्ते विद्यमान इत्यर्थः ) सविता = सूर्यः, त्रिकोणे=लग्नात् पञ्चमे नवमे वा भावे विद्यमानः स्यात् ( कर्के वा वृश्चिके लग्ने

'उच्चाभिलाषी सविता त्रिकोणे' सम्भाव्यते ) तदानीं शशी=चन्द्रः, स्वर्क्षे=कर्के स्थितो भवेत्, चेद्यदि बृहस्पतिः, कर्कटकोपगः=कर्कराशौ ( स्वोच्चे चन्द्रयुक्तश्च ) स्थितो भवेत्तदा स जातः बहुरत्नपूर्णां=विविधरत्नपूरितां पृथ्वीं शास्ति = राजा भवतीत्यर्थः ॥ ३३ ॥

जिस मनुष्यके जन्मसमय उच्चराशि (मेष) में जानेवाला सूर्य त्रिकोणमें हो, चन्द्रमा कर्कका हो और गुरु भी कर्कका हो तो वह बहुत रत्नोंसे परिपूर्ण भूमिका राजा होता है॥३३॥

| | | |
|---|---|---|
| ५ / ६ | गु. ४ चं. | ३ / २ |
| ७ | | १ |
| ८ / ९ | १० | १२ र. ३०° / ११ |

| | | |
|---|---|---|
| ९ / १० | ८ | ७ / ६ |
| ११ | | ५ |
| सू. ३०° / १२ / १ | २ | ४ चं. / ३ / गु. |

स्वस्य त्रिकोणे रविरुच्चगोऽपि वा स्वस्वांशकस्था रविशुक्रसोमजाः ।
तृतीयषष्ठाष्टमगा निशाकरात् कुर्वन्ति गोपालमिव क्षितीश्वरम् ॥ ३४ ॥

स्वस्येति । रविः=सूर्यः, स्वस्य=आत्मनः, त्रिकोणे = मूलत्रिकोणे ( सिंहे ) अपि वा उच्चगः = मेषगतो भवेत् । रविशुक्रसोमजाः=सूर्यशुक्रबुधाः, स्वस्वांशकस्थाः=निजनिजनवांशगताः, सूर्यः सिंहनवांशे, शुक्रो वृषस्य तुलाया वा नवांशे, बुधो मिथुनस्य कन्याया वा नवांशे स्यादिति । तथाभूतास्ते त्रयः, निशाकरात्=चन्द्रात्, तृतीयषष्ठाष्टमगाः, सूर्यश्चन्द्रात्तृतीये, शुक्रश्चन्द्रात्षष्ठे, बुधश्चन्द्रादष्टमे भवेत्तदा जातं गोपालं ( गोपालकुलोत्पन्नमपि ) क्षितीश्वरमिव = नृपतुल्यं कुर्वन्ति । किम्पुना राजकुलोत्पन्नमिति ॥ ३४ ॥

जिसके जन्मसमय सूर्य अपने मूल-त्रिकोणमें वा उच्च राशिमें हो, रवि शुक्र और बुध अपने २ नवांशका होकर चन्द्रमासे तृतीय षष्ठ और अष्टममें हों तो वे गोपालको भी राजाके समान बनाते हैं ॥ ३४ ॥

रविशशिबुधशुक्रैर्व्योम्नि मित्रांशकस्थैर्न च रिपुभवनस्थैर्नाप्यदृश्यैर्न नीचैः ।
स भवति नरपुत्रो भूपतिर्यत् प्रयाणे गजमदजलसेकैः सिच्यते यस्य रेणुः ॥३५॥

रविशशीति । रविशशिबुधशुक्रैः=सूर्य-चन्द-बुध-शुक्रैः, व्योम्नि=दशमे भावे, मित्रांशकस्थैः=प्रत्येकं स्वमित्रग्रहनवांशगतैः, न च रिपुभवनस्थैः=ते चत्वारो ग्रहाः शत्रुग्रहस्थानगता न भवेयुः । चतुर्णां रिपवः शुक्रशनिचन्द्रसूर्यास्तेषां गृहाणि २,७,१०,११, ४,५ एतेषु ते चत्वारो ग्रहा न भवेयुः । नाप्यदृश्यैः = ते रविशशिबुधशुक्रा अदृश्या अस्तङ्गता न भवेयुः । अत्र सूर्येण सह ग्रहा अस्तं यान्ति, परं कालांशाल्पान्तरेणान्तरिताः । अत एव शशिबुधशुक्राणां सूर्येण सह कालांशाधिकं अन्तरं भवेदिति । रविश्च रात्रावस्तं गच्छतीति दिने जन्म भवेद् । न नीचैः । ते रविशशिबुधशुक्रा नीचं गताः ७,८,१२,६ राशिगता न भवेयुः । अत्रेदमवधेयम् । दशमे भावे २।४।५।६।७।८।१०।११।१२ राशिचक्रे न कश्चिद्राशिर्भवेत्तत्र मेषो मिथुनं धनूराशिर्वा दशमे भवेदिति । तत्र रविशशिबुधशुक्राः स्वमित्रनवांशगता भवेयुस्तदा स नरपुत्रः = मनुष्यजातः, भूपतिः = राजा भवति । यस्य राज्ञः, प्रयाणे=प्रस्थानकाले, गजमदजलसेकैः=गजानां दन्तिनां यानि मदजलानि

तेषां सेकैः सीकरैः, रेणुः=पांशुः ( धूलिः ) सिच्यते=आर्द्रत्वं नीयते । अस्मिन्योगे जातो नरः गजाश्वसङ्कुलश्चलतीति भावः ॥ ३५ ॥

जिसके जन्म-समय रवि, चन्द्र, बुध और शुक्र मित्रांशकमें होकर दशम स्थानमें हों, शत्रुकी राशिमें न हों, अस्तङ्गत न हों, न नीच राशिमें हों तो वह मनुष्य राजा होता है, उसकी यात्रामें धूलियोंको मतवाले गजराज अपने मदसे सींचते हैं ॥ ३५ ॥

क्षमासुतः स्वोच्चमुपाश्रितो बली रवीन्दुवाचस्पतिभिर्निरीक्षितः ।
भवेन्नरेन्द्रो यदि कुत्सितस्तदा समस्तपृथ्वीपरिरक्षणक्षमः ॥ ३६ ॥

क्षमासुत इति । बली = दिगादिवीर्यसहितः, क्षमासुतः = भौमः, स्वोच्चं = मकरराशिं, उपाश्रितः = प्राप्तो भवेत् । तथा भूतः, रवीन्दुवाचस्पतिभिः=सूर्येन्दुगुरुभिः, निरीक्षितः= दृष्टो यदि भवेत्तदा कुत्सितः = नीचकुलजातोऽपि, समस्तपृथ्वीपरिरक्षणक्षमः=निखिलाया भुवः शासने दक्षो नरेन्द्रः = राजा भवेदिति ॥ ३६ ॥

जिस मनुष्यके जन्म-समय मङ्गल उच्च राशिका हो, बली हो, उसको सूर्य, चन्द्र और बृहस्पति देखते हों तो वह यदि कुल-हीन भी हो तो भी समस्त भूमण्डलका पालन करने में समर्थ राजा होवे ॥ ३६ ॥

बुधोदये सप्तमगे बृहस्पतौ चन्द्रे कुलीरे सुखराशिगेऽमले ।
वियद्गते भार्गवनन्दने ग्रहे प्रशास्ति पृथ्वीमगदो निराकुलः ॥ ३७ ॥

बुधोदय इति । बुधोदये=बुधे उदयो लग्नमिति बुधोदयस्तस्मिन् ( लग्नगते बुध इत्यर्थः ) बृहस्पतौ सप्तमराशिगे = लग्नात्सप्तमे भावे गते, अमले चन्द्रे=शुक्लचन्द्रे, कुलीरे सुखराशिगे = कर्कराशिगतचतुर्थभावगते, भार्गवनन्दने=शुक्रे, वियद्गते=दशमे भावे गतवति । एतदुक्तं भवति । 'कुलीरे सुखराशिगे' इत्यनेन वाक्येन कर्कराशिश्चतुर्थो भावस्तत्र चन्द्रस्तदा लग्नं मेषराशिस्तत्र बुधः, सप्तमस्तुलाराशिः तत्र गुरुः, दशमो मकरस्तत्र शुक्रो भवेत्तदा जातो नरोऽगदः=रोगरहितः, निराकुलः = सुखेन, पृथ्वीं प्रशास्ति । चिरामयो निर्भयश्च राज्यं करोतीति भावः ॥ ३७ ॥

बुध लग्नमें, गुरु सप्तममें, पूर्ण चन्द्रमा कर्क और सुखमें, शुक्र दशम गृहमें हों तो वह मनुष्य निराकुल पृथिवीका राज्य करता है ॥ ३७ ॥

प्रधानबलसंयुक्तः सम्पूर्णः शशलाञ्छनः ।
एकोऽपि कुरुते जातं नराधिपमरिन्दमम् ॥ ३८ ॥

प्रधानेति । सम्पूर्णः=सकलकलान्वितः, शशलाञ्छनः=चन्द्रः, प्रधानबलेन=उच्चबलेन स्थानबलेन वा संयुक्तः एकोऽपि तथाभूतश्चन्द्रो जातं नरम् , अरिन्दमं=विद्विषोन्मूलकं, नराधिपं=नृपालं कुरुते । अत्रेदमवधेयम् । इकाकी अपि चन्द्रः शुभभावस्थ उच्चे स्वभे वा विद्यमानो राज्यं ददातीति ॥३८॥

जिसके जन्म-समय एकभी पूर्ण चन्द्रमा प्रधान बलसे युक्त हो तो बालकको शत्रुओंका दमन करनेवाला राजा बनाता है ॥ ३८ ॥

बृ. शु.
ल.

देवमन्त्री कुटुम्बस्थो
भार्गवेण समन्वितः ।
करोति वसुधानाथं
निर्जिताऽरातिमण्डलम् ॥ ३९ ॥

देवमन्त्रीति । स्पष्टार्थः ॥ ३९ ॥

जिस मनुष्यके जन्म-समय बृहस्पति शुक्रसे युक्त होकर दूसरे स्थानमें स्थित हो,

वह उस बालकको शत्रु-मण्डलको जीतनेवाला भूपति बनाता है ॥ ३९ ॥

लग्नेशे केन्द्रराशिस्थे
कर्मेशे वृद्धिराशिगे ।
भाग्येशे लाभगे जात-
श्चिरञ्जीवी महीपतिः ॥ ४० ॥

लग्नेशे इति । सरलार्थः ॥ ४० ॥

जिस मनुष्यके जन्म-समय लग्नेश केन्द्र-में हो, कर्मेश ४ थे में हो, भाग्येश लाभमें हो वह दीर्घजीवी राजा होवे ॥ ४० ॥

| | | |
|---|---|---|
| २ / ३ | १ ल. | १२ / बृ. ११ |
| ४ श. | दीर्घायू राजा | १० मं. |
| ५ / ६ | ७ | ९ / ८ |

रविलुप्तकरः सौम्यः
स्वस्थो मूलत्रिकोणगः ।
सर्वविद्याधिको राजा
नेतरेषां खचारिणाम् ॥ ४१ ॥

रविलुप्तकर इति । सरलार्थः ॥ ४१ ॥

जिसके जन्मकालमें बुध सूर्यके साथ अस्त होकर भी यदि स्वस्थ (अपनेगृह ३ का) हो वा अपने मूलत्रिकोण (६) में हो तो वह बालक हर एक विद्याको जाननेवाला राजा होवे। यहां दूसरे ग्रहोंकी आवश्यकता नहीं है ॥ ४१ ॥

२
र.बु. ३
१
४
५
६ र.बु.

अर्कज्ञौ सुखराशिस्थौ
मन्देन्दू दशमस्थितौ ।
कुजोदये च सञ्जातो
यदि राजा न संशयः ॥ ४२ ॥

अर्कज्ञाविति । स्पष्टार्थः ॥ ४२ ॥

जिसके जन्म-समय सूर्य और बुध सुखमें हों, शनि और चन्द्रमा दशवेंमें स्थित हों और यदि मङ्गल लग्नमें हो वह राजा हो इसमें सन्देह नहीं है ॥ ४२ ॥

मं.
र. बु.
श. चं.

दिवाकरोदये सिंहे शुक्रांशकविवर्जिते ।
कन्यागते बुधे जातो नीचोऽपि पृथिवीपतिः ॥ ४३ ॥

दिवाकरोदये इति । सिंहे=सिंहराशौ, दिवाकरोदये=सूर्यगतलग्ने, अर्थात् सिंहराशिगते जन्मलग्ने सूर्यो भवेत्। तस्मिन् शुक्रांशकविवर्जिते, सिंहराशौ द्वितीयसप्तमौ (वृषतुलयोः) शुक्रस्य नवांशौ, ताभ्यां रहिते सिंहलग्न इत्यर्थः । बुधे, कन्यागते = कन्याराशौ (द्वितीयभाव इत्यर्थः) गतवति, जातः नीचोऽपि= नीचकुले समुद्भूतोऽपि, पृथिवीपतिः = राजा भवति । किम्पुनः उच्चकुले जात इति ॥ ४३ ॥

| | | |
|---|---|---|
| ६ बु. | ५ र. १५° | |
| | | |
| | | |
| | | |

Notes—सूर्यः सिंहोदये भाद्रमास एव भवितुमर्हतीति ज्ञेयम् ।

जिसके जन्म-समय शुक्रके नवांशसे रहित सिंहका सूर्य लग्नमें हो, कन्यामें बुध हो तो वह नीच कुलमें उत्पन्न हो तो भी राजा होता है। भाद्रमासमें इसकी सम्भावना है। (सु. शा. कार) ॥ ४३ ॥

मानपुत्रोदयस्थौ वा मन्दावनिसुतौ यदि ।
पूर्णेन्दौ गुरुराशिस्थे जातो राजा भविष्यति ॥ ४४ ॥

मानेति । यदि, मन्दावनिसुतौ=शनिमङ्गलौ, मानपुत्रोदयस्थौ=माने ( दशमे ) पुत्रे ( पञ्चमे ) उदये ( लग्ने ) वा गतौ भवेताम् । पूर्णेन्दौ=पूर्णकलान्विते चन्द्रे, गुरुराशिस्थे= धनुषि मीने वा विलसति जातो नरो राजा भविष्यति ॥ ४४ ॥

यदि शनि और मङ्गल १० वें, ५ वें, या लग्नमें हों और पूर्ण चन्द्रमा गुरुके (९।१२) राशिमें हो ऐसे समयमें जो बालक उत्पन्न हो वह राजा हो। (सु. शा. कार) ॥ ४४ ॥

बली विलग्नाधिपतिश्च केन्द्रे
भूपालयोगं कुरुते नराणाम् ।
तन्मित्रदृष्टे यदि नीचवंशे
जातोऽपि राजा नृपवन्दितो वा ॥

बलीति । सरलार्थः ॥ ४५ ॥

लग्नेश बली होकर केन्द्रमें हो तो मनुष्योंका राजयोग करता है। वह मित्रसे दृष्ट हो तो नीच वंशमें जन्म हो तो भी राजा हो, वा राजासे पुजानेवाला हो ॥ ४५ ॥

| | | |
|---|---|---|
| २ ३ | १ | १२ ११ |
| ४ चं. बृ. | | १० मं. |
| ५ ६ | ७ | ९ ८ |

जन्माधिपः स्वोच्चगृहे मृगाङ्कं पश्यत्यवश्यं यदि भूमिपालः ।
गजादिसेनातुरगादिसङ्घैर्जितारिकोटिर्जगति प्रजातः ॥ ४६ ॥

जन्माधिप इति । जन्माधिपः = लग्नेशः, स्वोच्चगृहे विद्यमानः, मृगाङ्कं=चन्द्रं पश्यति, ( यत्र तत्रस्थमिति ) अन्यत्स्पष्टमेवेत्यलम् । उदाहरणं ४५ श्लोके चक्रं विलोक्यम् ॥४६॥

यदि उच्चगत लग्नेश चन्द्रमाको देखता हो तो अवश्य ही वह जातक हाथी, घोड़े, सेनाओंसे परिपूर्ण होकर करोड़ों शत्रुओंको जीतनेवाला प्रसिद्ध राजा होवे ॥ ४६ ॥

लग्नं विहाय केन्द्रस्थे चन्द्रे पूर्णकलान्विते ।
गुरुभार्गवसन्दृष्टे जातो राजा भवेन्नरः ॥ ४७ ॥

लग्नमिति । स्पष्टमेव ॥ ४७ ॥

लग्नके अतिरिक्त केन्द्र (४।७।१०) में चन्द्रमा पूर्ण बली हो उसको बृहस्पति और शुक्र देखते हों ऐसे समयमें जायमान बालक राजा हो ॥ ४७ ॥

लग्नेशे केन्द्रभावस्थे नीचमूढारिभं विना ।
नान्यग्रहयुते राजा सार्वभौमो भविष्यति ॥ ४८ ॥

लग्नेश इति । लग्नेशे=जन्मलग्नपतौ, नीचमूढारिभं विना = स्वनीचराशिं, सूर्येण संयोगं, शत्रुराशिं च त्यक्त्वा केन्द्रभावस्थे अर्थात् केन्द्रराशिः लग्नेशस्य नीचं, सूर्यसहितः, लग्नेशस्य शत्रुगृहं च न भवेदिति । तथा नान्यग्रहयुते=केनाप्यन्येन ग्रहेण न युक्ते, जातो सार्वभौमः = चक्रवर्ती राजा Emperor, भविष्यति ॥ ४८ ॥

जिस मनुष्य के जन्म समयमें लग्नेश नीच, अस्त, और शत्रु राशिके अतिरिक्त केन्द्रमें हो अन्यग्रहसे युत न हो तो वह सार्वभौम राजा होता है ॥ ४८ ॥

गुरुचन्द्रदिवानाथाः
सुत[५]विक्रम[३]धर्म[९]गाः ।
जातो यदि महीपालः
कुबेरसमवित्तवान् ॥ ४९ ॥

गुर्विति । सरलार्थः ॥ ४९ ॥

जिस मनुष्यके जन्म-समयमें गुरु, चन्द्र और सूर्य पञ्चम, तृतीय और धर्म भावमें स्थित हों तो वह बालक कुबेरके सदृश धनवाला राजा हो ॥ ४९ ॥

ल.
चं.
कुबेरसमः
बृ.
सू.

चापोदयस्थे बलिनि प्रभाकरे
महीसुते कर्मगते सशीतगौ ।
उपान्त्यगे वा भृगुजे व्ययस्थिते
सुरेन्द्रतुल्यो नृपतिः प्रजायते ॥५०॥

चापेति । सरलार्थः ॥ ५० ॥

धनु लग्नमें बलवान् सूर्य हो, चन्द्रमाके साथ मङ्गल दशवें हो, ग्यारहवें वा बारहवें शुक्र हो ऐसे योगमें जायमान बालक इन्द्रके समान राजा होता है । पूस महीनेमें इस योगकी सम्भावना है। ( सु. शा. कारः ) ॥ ५० ॥

९ सू.
८ शु.
शु. ७
इन्द्रतुल्यः
६ मं. चं.

विक्रमायारिगाः पापा
जन्मपः शुभवीक्षितः ।
राजा भवति तेजस्वी
समस्तजनवन्दितः ॥ ५१ ॥

विक्रमेति । सरलार्थः । जन्मपः=लग्नेश इति ॥ ५१ ॥

जिस मनुष्यके जन्मके समय पापग्रह तृतीय, एकादश और षष्ठस्थ हों, लग्नेश शुभ ग्रहसे दृष्ट हो तो वह सब जनोंसे पूजनीय तेजस्वी राजा हो ॥ ५१ ॥

२
१
१२
३ मं.
११
४
तेजस्वी राजा
१०
५
९ बृ.
७ शु. बु.
६ र.
८

मृगोदयस्थे बलिनि क्षमासुते
शनौ तपःस्थानगतेऽथवाऽन्त्यगे ।
दिवाकरे सप्तमगे सशीतगौ
महीपतिश्चञ्चलमानसो भवेत् ॥५२॥

मृगोदयस्थ इति । स्पष्टार्थः ॥५२॥

जिस मनुष्यके जन्म-समय बलवान् मङ्गल मकर राशिमें हो, शनि नववें वा १२ वें हो, सूर्य चन्द्रमाके साथ ७ वें हो तो वह चञ्चल चित्तवाला राजा होता है ॥ ५२ ॥

११
९ श.
१० मं.
१२
८
१
चञ्चलो राजा
७
२
६ श.
र. चं. ४
३
५

लाभे सुखे वा दशमे
समन्दश्चन्द्रमा यदि ।
जातो नृपकुले राजा
तत्समो वा धनी भवेत् ॥५३॥

लाभ इति । स्पष्टम् ॥ ५३ ॥

यदि शनिके सहित चन्द्रमा लाभमें, वा सुखमें, अथवा दशवेंमें हो तो राजकुलमें उत्पन्न होने वाला राजा हो, अन्य राजाके सदृश धनी हो ॥ ५३ ॥

| | | |
|---|---|---|
| | ल. | ॥। चं. श. |
| ।. चं. श. | राजा वा धनी | चं. श. ॥. |
| | | |

जातश्चोपचयस्थिते तनुपतौ चन्द्रे तपःस्थानगे
केन्द्रस्थाः शुभवर्गगा यदि शुभा वीर्यान्विता भूपतिः ।
जीवेन्दू वृषभस्थितौ बलयुतः कोणस्थितो लग्नपः
शन्यारेक्षणवर्जितो यदि तदा जातोऽवनीशो भवेत् ॥ ५४ ॥

जातश्चेति । तनुपतौ=जन्मलग्नेशे, उपचयस्थिते=३।६।११।१० भावानामन्यतमगते, चन्द्रे तपःस्थानगे=नवमभावगते, वीर्यान्विताः = स्थानादिबलयुताः शुभाः=शुभग्रहाः, शुभवर्गगाः=शुभग्रहवर्गगता यदि केन्द्रस्थाः=( १।४।७।१० भावगताः ) भवेयुस्तदा च जातो नरो भूपतिः=राजा भवति । जीवेन्द्विति । जीवेन्दू=गुरुचन्द्रौ वृषभस्थितौ भवेतां, बलयुतो लग्नपः = लग्नेशः कोण-( ९।५ भावे ) स्थितो भवेत्, तथाभूतः शन्यारेक्षणवर्जितः = शनिभौमयोर्दृष्ट्या रहितो यदि भवेत्तदा जातो नरः, अवनीशः = भूपतिः भवेत् । तथा चात्रोत्तरार्द्धसमानार्थकः सारावल्याम्—

| | | |
|---|---|---|
| ३ / ४ | २ बृ. चं | १ / १२ |
| ५ र. | राजा ॥. | ११ |
| ६ बु. ९° / ७ श. | मं. ८ | १० / ९ |

सुरपतिगुरुः सेन्दुर्लग्ने वृषे समवस्थितो यदि बलयुतो लग्नेशश्च त्रिकोणगृहं गतः ।
रविशनिकुजैर्वीर्योपेतैर्न युक्तनिरीक्षितो भवति स नृपः कीर्त्या युक्तो हताखिलकण्टकः ॥इति॥५४॥

जिस मनुष्यके जन्म-समय लग्नेश उपचय स्थानमें हो, चन्द्रमा नववें हो और शुभ वर्ग में प्राप्त केन्द्रमें बलवान् शुभग्रह हों तो वह राजा होता है । जिसके जन्म-समय बृहस्पति और चन्द्रमा वृषमें स्थित हों और बलयुक्त लग्नेश कोणमें होकर यदि शनि और मङ्गलसे दृष्ट न हो तो वह राजा हो ॥ ५४ ॥

दिवाकरे मीनगृहोपयाते कुलीरलग्ने शशिनि क्षितीशः ।
अरातिनीचग्रहदृष्टियुक्ता भूपालयोगं न दिशन्ति सर्वे ॥ ५५ ॥

दिवाकर इति । कुलीरलग्नेः = कर्कराशिलग्ने, शशिनि=चन्द्रे विद्यमाने, दिवाकरे=सूर्ये, मीनगृहोपयाते = मीनराशौ ( नवमे भाव इति कर्कलग्नत्वात् ) जातः क्षितीशः = राजा भवति । चैत्रशुक्ले सम्भाव्यतेऽयं योगः । अरातीति । सर्वे = पूर्वोक्ता योगाः अरातिनीचग्रहदृष्टियुक्ताः=अरातयः शत्रुग्रहाः, नीचग्रहा नीचराशिगतास्तेषां दृष्ट्या युक्ताश्चेद्भवेयुस्तदा ते भूपालयोगं=राजयोगं ( राज्यं ) न दिशन्ति न प्रयच्छन्ति । अर्थात्तदानीमुक्तानां राजयोगानां भङ्गो भवति ॥ ५५ ॥

सूर्य मीन राशिका हो, कर्क लग्नमें चन्द्रमा हो ऐसे योगमें जायमान नर राजा होता है। उपर्युक्त जितने राजयोग कारक ग्रह हैं वे अपने शत्रु और नीचगत ग्रहसे देखे जावें तो राजयोग नहीं करते। ( सु० शा० कार ) ॥ ५५ ॥

जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः प्रचुरगुणसमेतं मित्रयोगाच्च सिद्धम् ।
विवसुविसुखमूढव्याधितो बन्धुतप्तो वधदुरितसमेतः शत्रुनिम्नर्क्षगेषु ॥ ५६ ॥

जनयतीति । एकः अपि उच्चगः = स्वकीयोच्चराशिस्थो ग्रहो मित्रदृष्टः = मित्रग्रहेणावलोकितश्च यदि भवेत्तदा एकोऽप्यसौ ग्रहो जातं प्रचुरगुणसमेतं नृपं = भूपतिं जनयति करोति । मित्रयोगाच्च = उच्चस्थ एकोऽपि ग्रहो मित्रग्रहेण युक्तो भवेत्तदा सिद्धं = सिद्धियुक्तं नृपं जनयति । विवसु-इति । उक्तयोगकारकेषु ग्रहेषु, शत्रुनिम्नर्क्षगेषु = शत्रुराशिगतेषु, नीचराशिगतेषु च जातो विवसुः = धनहीनः 'वसु तोये धने मणौ' इति मेदिनी । विसुखः= सुखहीनः ( दुःखी ), मूढो मूर्खः, व्याधितः = रुग्णः, बन्धुतप्तः = कुटुम्बैः पीडितः, वधदुरितसमेतः = वधपापयुक्तश्च भवति ॥ ५६ ॥

एक भी ग्रह मित्रसे दृष्ट उच्च राशिमें स्थित हो और अपने मित्र ग्रहसे युक्त हो तो प्रचुर गुण संपन्न राजाको उत्पन्न करता है। शत्रु स्थान, नीच स्थानमें प्राप्त ग्रह धन-सुख रहित, व्याधिमान्, बंधुओंसे संतप्त, वधादि पापयुत दुश्चरित्रोंको उत्पन्न करते हैं ॥ ५६ ॥

धनुर्मीनतुलामेषमृगकुम्भोदये शनौ ।
चार्वङ्गो नृपतिर्विद्वान् पुरग्रामाग्रणीर्भवेत् ॥ ५७ ॥

धनुरिति । स्पष्टार्थः । अत्र कुम्भे वैमत्यं, तथाहि—

कुम्भद्वादशभागो लग्नगतो न प्रशस्यते यवनैः ।
यद्येवं सर्वेषां लग्नगतानामनिष्टफलता स्यात् ॥
घटयोगाद्राशीनां न मतं तत्सर्वशास्त्रकाराणाम् ।
तस्मात् कुम्भविलग्नं जन्मन्यशुभं न तद्भागः ॥ इति ॥ ५७ ॥

धनु, मीन, तुला, मेष, मकर या कुम्भ लग्नमें शनि हो तो जातक सुन्दर शरीरवाला राजा, विद्वान् और पुर ग्राममें मुखिया होता है ॥ ५७ ॥

इदानीमनेन श्लोकेन ग्रहशुभाशुभफलदानविवरणमाह—

स्वोच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः ।
शुभं सम्पूर्णपादोनदलपादाल्पनिष्फलम् ॥ ५८ ॥

स्वोच्चेति । स्वोच्चगतो ग्रहः शुभं फलं सम्पूर्णं ददाति । स्वमूलत्रिकोणगतः पादोनं = $\frac{3}{4}$ फलं, स्वगृहस्थो दलं = $\frac{1}{2}$ फलं, मित्रराशिगतः पादमितं $\frac{1}{4}$ फलं, शत्रुगृहगतः पादाल्पं $\frac{1}{4}$ > फलं, नीचगतः वा अर्कगः (सूर्येण सहास्तङ्गतः) निष्फलमर्थाच्च किञ्चिदपि शुभफलं ददाति । अत्र शुभमिति ग्रहणादशुभफले व्युत्क्रमो ज्ञेयः । उच्चगतोऽशुभं फलं न किमपि, त्रिकोणस्थः पादाल्पं, एवं क्रमेण नीचास्तगतः पूर्णमशुभं फलं ददातीति वाच्यम् ॥ ५८ ॥

सूर्यादि ग्रह उच्च राशिमें हों तो पूर्ण शुभफल देते हैं। मूलत्रिकोणमें तीन चरण, स्वराशिमें आधा, मित्रगृह में $\frac{1}{4}$, शत्रुगृहमें पादाल्प, नीचमें और अस्तङ्गत ग्रह निष्फल होते हैं॥

अथ पञ्च महापुरुषयोगाः ।

मूलत्रिकोणनिजतुङ्गगृहोपयाता भौमज्ञजीवसितभानुसुता बलिष्ठाः ।
केन्द्रस्थिता यदि तदा रुचभद्रहंसमालव्यचारुशशयोगकरा भवन्ति ॥ ५९ ॥

मूलेति । बलिष्ठाः = बलयुक्ताः, भौम-ज्ञ-जीव-सित-भानुसुताः, स्वमूलत्रिकोणं, निजतुङ्गं ( उच्चं ) स्वगृहं वोपयाताः सन्तो यदि केन्द्रस्थिता भवेयुस्तदा क्रमेण रुच-भद्र-हंस-

मालव्य–चारुशशेतियोगकरा भवन्ति । अर्थाद् बलवान् भौमो मूलत्रिकोणोच्चगृहं गतः केन्द्रवर्ती स्यात्तदा रुचको योगः स्यात् । तथाभूतेन बुधेन भद्रयोगः । एवं गुरुणा हंसयोगः । शुक्रेण मालव्ययोगः । शनिना चारुशशयोगो वाच्य इति । तथा च जातकाभरणे—

"स्वगेहतुङ्गाश्रयकेन्द्रसंस्थैरुच्चोपगैर्वाऽवनिसूनुमुख्यैः ।
क्रमेण योगा रुचकाख्य-भद्र-हंसाख्य-मालव्य-शशाभिधानाः ॥ इति ॥५९॥

यदि बलवान् मंगल मूलत्रिकोण, स्वगृह, उच्चगृहमें प्राप्त होकर केन्द्रमें स्थित हो तो "रुचक" योग होता है। बुध हो तो "भद्र" योग होता है। बृहस्पति हो तो "हंस" योग होता है। शुक्र हो तो "मालव्य" योग होता है और शनि हो तो "शश" योग होता है ॥५९॥

अथ रुचक-योगफलम् ।

जातः श्रीरुचके बलान्वितवपुः श्रीकीर्तिशीलान्वितः
शास्त्री मन्त्रजपाभिचारकुशलो राजाऽथवा तत्समः ।
लावण्यारुणकान्तिकोमलतनुस्त्यागी जितारिर्धनी
सप्तत्यब्दमितायुषा सह सुखी सेनातुरङ्गाधिपः ॥ ६० ॥

श्लोकेनानेन रुचकयोगे जातानां फलमुच्यते—जात इति । सरलार्थः ॥ ६० ॥

रुचक योगमें उत्पन्न होने वाला मनुष्य बलयुक्त शरीरवाला, कीर्ति और शीलसे युक्त, शास्त्री, मंत्रके जप और अभिचारमें कुशल, राजा, वा उसके सदृश धनी, सौन्दर्ययुक्त लाल कान्ति, कोमल शरीर, त्यागी, शत्रुजित्, धनी और ७० वर्षकी आयु तक सुखी, सेना और घोड़ोंसे युक्त होता है ॥ ६० ॥

१० मं. ल.
१.
रुचकयोगः

धर्मेशलाभेशधनेश्वराणामेकोऽपि शीतद्युतिकेन्द्रवर्ती ।
स्वयं च लाभाधिपतिर्गुरुश्चेदखण्डसाम्राज्यपतित्वमेति ॥ ६१ ॥

धर्मेशेति । धर्मेश–लाभेश–धनेश्वराणां=नवमेशैकादशेशद्वितीयेशग्रहाणां मध्ये एकः अपि कश्चित्, शीतद्युतेश्चन्द्रात् केन्द्रवर्ती (चन्द्रतः १।४।७।१० भवने) भवेत्, गुरुः=बृहस्पतिश्चेद्यदि लाभाधिपतिः=एकादशभावेशो भवेत्तदा जातः स्वयं स्वपराक्रमेणाखण्डसाम्राज्यपतित्वमेति=चक्रवर्त्तित्वं प्राप्नोति॥

१२ ल. चं. ११ १०
१ ९
२ बृ. अखण्ड-साम्राज्यपतिः ८
३ ७
४ ५ ६

नवमेश, लाभेश, धनेश, उनमें एक भी चन्द्रमासे केन्द्रमें हो और लाभाधिपति खास बृहस्पति हो तो जातकको अखंड राज्यका पति बनावे ॥ ६१ ॥

अथ भद्रयोगफलम् ।

शार्दूलप्रतिमाननो गजगतिः पीनोरुवक्षस्स्थलो
लम्बापीनसुवृत्तबाहुयुगलस्तत्तुल्यमानोच्छ्रयः ।
मानी बन्धुजनोपकारनिपुणः श्रीभद्रयोगोद्भवो
राजाऽशीतिमितायुरेति विपुलप्रज्ञायशोवित्तवान् ॥ ६२ ॥

इदानीं भद्रयोगे जातस्य फलमाह—शार्दूलेति । स्पष्टम् ॥ ६२ ॥

भद्र योगमें जायमान मनुष्य शेरके समान मुख, मतवाले हाथीके सदृश गति, मोटे जंघा, छाती, लम्बा-मोटा और गोला दोनों बाहु उसीके समान ऊंचा, मानी, बन्धु-जनोंके उपकारमें निपुण, विशेष बुद्धिवाला, तथा यश-धन-वाला और ८० वर्षकी आयु प्राप्त करनेवाला राजा होता है ॥ ६२ ॥

४ | ५ | ३ ल. | ६ बु. | II. भद्रयोगः

## अथ हंसयोगफलम् ।

रक्तास्योन्नतनासिकः सुचरणो हंसस्वरः श्लेष्मको
गौराङ्गः सुकुमारदारसहितः कन्दर्पतुल्यः सुखी ।
शास्त्रज्ञानपरायणोऽतिनिपुणः श्रीहंसयोगे गुणी
जातोऽशीतिकमायुरेति सयुगं ८४ साधुक्रियाचारवान् ॥ ६३ ॥

इदानीं हंसयोगफलमाह-रक्तास्येति सरलार्थः ॥ ६३ ॥

हंस योगमें उत्पन्न होनेवाला मनुष्य लाल मुख, ऊंची नासिका, सुन्दर चरण, हंस स्वर, कफ प्रकृति, गौरांग, सुकुमार स्त्रीयुत, कामदेवके तुल्य सुन्दर, सुखी, शास्त्रज्ञानमें परायण, अत्यन्त निपुण, गुणी, अच्छी क्रियाका आचारवाला और ८४ वर्षकी आयुवाला होता है ॥ ६३ ॥

२ | ३ | १ ल. | ४ बृ. | III. हंसयोगः

## अथ मालव्ययोगफलम् ।

स्त्रीचेष्टो ललिताङ्गसन्धिनयनः सौन्दर्यशाली गुणी
तेजस्वी सुतदारवाहनधनी शास्त्रार्थवित्पण्डितः ।
उत्साहप्रभुशक्तिमन्त्रचतुरस्त्यागी परस्त्रीरतः
सप्तत्यब्दमुपैति सप्तसहितं (७७) मालव्ययोगोद्भवः ॥ ६४ ॥

इदानीं मालव्ययोगफलमाह-स्त्रीति । स्पष्टम् ॥ ६४ ॥

मालव्य योगमें जायमान प्राणी स्त्री-की तरह स्वभाववाला, सुन्दर शरीरकी सन्धि और नेत्रवाला, सुन्दर, गुणी, तेजस्वी, पुत्र-स्त्री-वाहन-वाला, धनी, शास्त्रार्थज्ञ पंडित, उत्साही, प्रभुशक्तिवान्, मन्त्रज्ञ, चतुर, त्यागी, परस्त्रीरत और ७७ वर्षकी आयुवाला होता है ॥ ६४ ॥

ल. १ | IV. मालव्ययोगः | शु. ७

## अथ शशयोगफलम् ।

भूपो वा सचिवो वनाचलरतः सेनापतिः क्रूरधी-
र्धातोर्वादविनोदवञ्चनपरो दाता सरोषेक्षणः ॥

तेजस्वी निजमातृभक्तिनिरतः शूरोऽसिताङ्गः सुखी
जातः सप्ततिरायुरेति शशके जारक्रियाशीलवान् ॥ ६५ ॥

इदानीं शशयोगफलमाह—भूपो नेति। स्पष्टार्थकम् ॥ ६५ ॥

९
८ ल.
१०
११ श.
४.
शशकयोगः

**शशक योगमें उत्पन्न होनेवाला पुरुष राजा वा राजमंत्री हो, वन और पर्वत में रत, सेनानायक, क्रूरबुद्धि, धातुके वादमें विनोदी, ठगहारीमें निरत, दानी, रोषान्वित दृष्टि–वाला, तेजस्वी, अपनी मातृभक्तिमें निरत, पराक्रमी, श्यामाङ्ग, सुखी, जारक्रिया (छिनारी) में तत्पर होता है और ७० वर्ष आयु पाता है ॥ ६५ ॥**

### गर्गहोरायाम्।

श्लोकेनानेनोक्तानां वक्ष्यमाणानाञ्च योगानां फलप्राप्तिकालमाह—

यस्य योगस्य यः कर्ता बलवान् जितदृग्युतः।
अधियोगादियोगेषु स्वदशायां फलप्रदः ॥ ६६ ॥

यस्येति। बलवान् = स्वस्थानादिबलयुक्तो, वा जितदृग्युतः=जितेन ग्रहेण दृष्टो युतश्चार्थात् क्षीणबलो भवेत्। अत्र जितलक्षणम्—

"दक्षिणदिक्स्थः पुरुषो वेपथुरप्राप्य सन्निवृत्तोऽणुः।
अधिरूढो विकृतो निष्प्रभो विवर्णश्च यः स जितः" इति ॥

एतादृशो यो ग्रहो यस्य योगस्य कर्ता = कारको भवति, तथा चाधियोगादियोगेषु वक्ष्यमाणचन्द्रलग्नाधियोगेषु ( अस्यैवाध्यायस्य ११२–११५ श्लोका द्रष्टव्याः ) यो ग्रहः कर्ता भवति स स्वदशायां फलप्रदो भवति। बलवतो ग्रहस्य दशायां तदधिष्ठितयोगस्य। प्राप्तिरेवं जितदृग्युतस्य नीचारिगृहगतस्य च दशायां तदधिष्ठितभावस्य ( यद्भावस्यासौ कारकस्तस्येति ) हानिश्च भवतीति वाच्यम् ॥ ६६ ॥

**किसी भी योगका जो ग्रह कारक होवे वह यदि बली और बली ग्रहसे दृष्ट या युत हो तो वह ग्रह अपनी दशामें उस उस विशिष्ट योगका फल देता है। एवं वह कारक ग्रह यदि निर्बल हो, नीचमें या शत्रुगृहमें प्राप्त और निर्बल ग्रहसे दृष्ट हो तो वह अपनी दशामें अपने भाव और योगको नष्ट करता है। (सु० शा० कार) ॥ ६६ ॥**

### अथ भास्करादियोगाः।

भानोरर्थगते बुधे शशिसुताल्लाभस्थितश्चन्द्रमा-
श्चन्द्रात्कोणगतः पुरन्दरगुरुर्योगस्तदा भास्करः ॥
शूरो भास्करयोगजः प्रभुसमः शास्त्रार्थविद्रूपवान्
गान्धर्वश्रुतिवित्तवान् गणितविद्धीरः समर्थो भवेत् ॥ ६७ ॥

इदानीं भास्करादीन् कांश्चियोगान् विवक्षुरादौ सफलं भास्करयोगमाह—भानोरिति। श्लोकः सरलार्थ एवेति। स्पष्टार्थं चक्रे द्रष्टव्यम् ॥ ६७ ॥

Notes–अत्रेदं फलितं–सूर्याद् द्वितीये बुधो द्वादशे चन्द्रश्चतुर्थेऽष्टमे वा गुरुर्भवेत्तदा भास्करयोगः स्यादिति।

चं.
बृ.
सू.
भास्करयोगः
बु.
बृ.

दूवेंमें चन्द्रमा हो, चन्द्रमासे कोणमें बृहस्पति हो तो भास्कर योग होता है।

भास्कर योग में उत्पन्न होनेवाला मनुष्य पराक्रमी, प्रभुके सदृश, शास्त्रार्थवित्, रूपवान्, गान्धर्व विद्याका ज्ञाता, धनी, गणितज्ञ, धीर और समर्थ होता है ॥ ६७ ॥

## अथ इन्द्रयोगः।

चन्द्राद्विक्रमगः कुजोऽवनिसुतादस्ते शनिः सूर्यजा-
दस्ते दैत्यगुरुः सितान्मदनगो जीवो यदीन्द्राह्वयः।
ख्यातस्तत्रभवः सशीलगुणवान् भूपोऽथवा तत्समो
वाग्मी वित्तविचित्रभूषणयशोरूपप्रतापान्वितः॥ ६८ ॥

इदानीं सफलमिन्द्रयोगमाह—चन्द्रादिति। स्पष्टार्थः श्लोकः॥ ६८॥

Notes—अत्रेदं फलितम्—चन्द्रात् तृतीये मङ्गलशुक्रौ, नवमे शनिगुरू च भवेतां तदा इन्द्रयोगो भवतीति।

| | | |
|---|---|---|
| मं. शु. | चं. | |
| | इन्द्रयोगः | |
| | | बृ. श. |

यदि चन्द्रमासे तीसरेमें मंगल हो, और मंगलसे सातवेंमें शनि हो, शनिसे सातवें शुक्र हो और शुक्रसे सातवें गुरु हो तो "इन्द्र" सञ्ज्ञक योग होता है।

इन्द्र योगमें उत्पन्न होनेवाला मनुष्य विख्यात, शीलवान्, गुणवान्, राजा वा राजा के तुल्य धनी, वाचाल, अनेक प्रकारके धन-भूषण-यश-रूप-प्रतापसे युत होता है ॥ ६८ ॥

## अथ मरुद्योगः।

शुक्रात् कोणगतो गुरुः सुरगुरोः पुत्रे शशी शीतगोः
केन्द्रस्थानसमाश्रितो दिनकरो योगो मरुत्संज्ञकः।
वाग्मी वायुभवो विशालहृदयः स्थूलोदरः शास्त्रवित्
सम्पन्नः क्रयविक्रयेषु कुशलो राजाऽथवा तत्समः॥ ६९ ॥

इदानीं सफलं मरुत्- योगमाह-शुक्रादिति। स्पष्टार्थ एव ॥ ६९ ॥

Notes—अत्रेदं फलितम्-शुक्रात्-नवमे वा प्रथमे चन्द्रः, १।३।४।६।७।९।१० १२ भावान्यतमे सूर्यः, पञ्चमे वा नवमे गुरुर्भवेत्तदा मरुन्नामको योगो भवतीति।

| | | |
|---|---|---|
| सू. | शु. चं. | |
| सू. | मरुद्योगः | १० बु. |
| बृ. | | चं. बृ. |

यदि शुक्रसे कोणमें गुरु हो, गुरुसे पांचवें चन्द्रमा हो, चन्द्रमासे केन्द्रमें सूर्य हो तो "मरुत" योग होता है।

इस मरुत ( वायु ) योगमें उत्पन्न होने वाला मनुष्य वाचाल, विशाल हृदयवाला, स्थूल उदरवाला, शास्त्रका ज्ञाता, धन सम्पन्न, क्रय-विक्रयमें निपुण, राजा वा राजाके सदृश धनी होता है ॥ ६९ ॥

## अथ बुधयोगः।

लग्नेड्यो गुरुकेन्द्रगो हिमकरश्चन्द्रादहिर्वित्तगः
सौर्यस्थानगतौ च भानुरुधिरौ योगो बुधः कीर्तितः।

राजश्रीबुधयोगजोऽतुलबलप्रख्यातनामा विदुः
शास्त्रज्ञानकरक्रियासु चतुरो धीमानशत्रुर्भवेत् ॥ ७० ॥

इदानीं सफलं बुधयोगमाह-लग्नेज्य इति । स्पष्टम् ॥ ७० ॥

Notes-गुरुर्लग्ने, चन्द्रः लग्नात् १।४।७।१० एतदन्यतमे, राहुः लग्नात् २।५।८।११ एतदन्यतमे, सूर्यभौमौ लग्नात् ३।६।९।१२ एतदन्यतमे भावे सति बुधनामको योगो भवतीति ।

| | | |
|---|---|---|
| | बृ. ल. | १ / १२ |
| | बुधयोगः | ११ |
| | चं. | मं. सू. / रा. |

यदि लग्नमें गुरु, गुरुसे केन्द्रमें चन्द्रमा हो, चन्द्रमासे दूसरे राहु हो, पराक्रमके ३ रे स्थानमें सूर्य और मंगल हों तो बुधयोग होता है ।

इस बुध योगमें उत्पन्न होनेवाला मनुष्य राजश्रीसे युक्त, विशेष बली, बड़ा नामी, शास्त्रज्ञाता, व्यापारमें चतुर, बुद्धिमान् और शत्रुरहित होता है ॥ ७० ॥

**अथ सुनफा-ऽनफा-धुरन्धुरा-केमद्रुमयोगाः ।**

लग्नस्थिते हिमकरे यदि वा मदस्थे केमद्रुमो भवति जीवदृशा विहीने ।
अत्यल्पबिन्दुसहिता यदि खेचरेन्द्राः केमद्रुयोगफलदा विबलाश्च सर्वे ॥ ७१ ॥

द्वितीये द्वादशे पार्श्वे द्वये खेचरसंयुते ।
शीतांशोः सुनफायोगस्त्वनफानाम कीर्तितः ॥ ७२ ॥
योगो धुरन्धुराख्यः स्याद्विना सर्वत्र भास्करम् ।
एतद्योगत्रयाभावे केमद्रुमफलं वदेत् ॥ ७३ ॥

इदानीं केमद्रुमयोगमाह—लग्नस्थित इति । लग्नस्थिते, यदि वा मदस्थे = सप्तमस्थे हिमकरे = चन्द्रे, जीवदृशा = गुरुदृष्ट्या विहीने सति केमद्रुमो योगो भवति । अथ च यदि सर्वे ग्रहाः, अत्यल्पबिन्दुसहिताः = अष्टकवर्गेऽल्पशुभचिह्नकास्तथा विबलाः = बलहीनाश्च भवेयुस्तेऽपि केमद्रुमयोगफलदा भवन्ति । केमद्रुमयोगफलं वक्ष्यते ८२ तमे श्लोके ॥ ७१ ॥

अथ सुनफाऽनफाधुरन्धुराकेमद्रुमयोगानाह—द्वितीयेतिश्लोकयुग्मेन । शीतांशोः = चन्द्रात्, द्वितीये स्थाने, खेचरसंयुते = सूर्येतरग्रहयुक्ते ( विना सर्वत्र भास्करमित्युक्तेः ) सुनफा नाम योगो भवति । चन्द्राद् द्वादशे स्थाने सूर्येतरग्रहयुते अनफा नाम योगः सुधीभिः कीर्तितः । चन्द्राद् द्वये पार्श्वे = द्वितीये द्वादशे च भावे सूर्येतरखेचरसंयुते धुरन्धुराख्यः ( दुरधुरेति ग्रन्थान्तरे ) योगो भवति । एतत्पूर्वोक्तयोगत्रयाभावे = चन्द्राद् द्वितीये द्वादशे च स्थाने शून्ये सति केमद्रुमयोगस्य फलं वदेदर्थात्तदानीं केमद्रुमो योगो भवति । तथा च लघुजातके वराहः—

रविवर्ज्यं द्वादशगैरनफा चन्द्राद् द्वितीयगैः सुनफा ।
उभयस्थितैर्दुरधुरा केमद्रुमसञ्ज्ञकोऽतोऽन्यः । इति ॥

इदमप्यवधेयम् । चन्द्राद् द्वितीये वा द्वादशे सूर्यो भवतु न वा भवतु किन्तु न स योगकारको भवति । भौमादयः पञ्च ( मं. बु. बृ. शु. श. ) ग्रहाः एकैकाः सम्मिलिता वा चन्द्राद् द्वितीये सुनफायोगकराः, द्वादशे अनफायोगकरा भवन्ति । एवं पञ्चभिर्ग्रहैः ३१ भेदाः अनफाः सुनफाश्च भवन्ति । एवमेव चन्द्राद् द्वितीयद्वादशगतैः पञ्चभिर्ग्रहैः एकाकिभिः सम्मिलितैश्चाशीत्यधिकशत ( १८० ) भेदा दुरधुराः ज्ञेयाः । तेषां विवरणं बृहज्जातके उत्पलकृतटीकायां द्रष्टव्यम् । भुवस्त्वभयादत्र न लिखितमिति । बृहज्जातके तद्वचनम्—

त्रिंशत्सरूपाः ( ३१ ) सुनफानफाख्याः षष्टित्रयं ( १८० ) दौरुधरे प्रभेदाः ।
इच्छाविकल्पैः क्रमशोऽभिनीय नीते निवृत्तिः पुनरन्यनीतिः ॥ इति ॥ ७३ ॥

Notes—अत्रोक्तसुनफादियोगभेदानां विवरणं अग्रे ( ८३ श्लोके, भाषाचक्रेषु ) द्रष्टव्यम् ।

सुनफा: मं., चं., ०

अनफा: ०, चं., बु.

दुरधुरा: मं., चं., बु.

केमद्रुमः: चं., ०, ०

यदि लग्नमें या सप्तममें चन्द्रमा हो उसे बृहस्पति न देखता हो तो 'केमद्रुम' योग होता है । ग्रह यदि अष्टक वर्गमें अल्प बिंदुके हों और विबल हों तो केमद्रुम योगके फल देनेवाले होते हैं ॥ ७१ ॥

सूर्यके अतिरिक्त ग्रह चन्द्रमाके दूसरे और बारहवें स्थानोंमें हो तो "सुनफा" "अनफा" 'धुरन्धरा' योग होते हैं । ये तीनों योग न हों तो केमद्रुम योग होता है, अर्थात् चन्द्रमासे दूसरे सूर्यके अतिरिक्त ग्रह हों तो सुनफा, बारहवें हों तो अनफा, दोनों जगह ( २।१२ ) ग्रह हों तो धुरन्धरा योग होते हैं । यदि चन्द्रमासे दूसरे, बारहवें कोई ग्रह न हो तो केमद्रुम ( दरिद्र फलद ) योग होता है ॥ ७२-७३ ॥

इदानीमन्येऽपि केमद्रुमफलदा दरिद्रयोगा उच्यन्ते—

चन्द्रे सभानौ यदि नीचदृष्टे पापांशके याति दरिद्रयोगम् ।
क्षीणेन्दुलग्नान्निधने निशायां पापेक्षिते पापयुते तथा स्यात् ॥ ७४ ॥

चन्द्रेति । सभानौ = सूर्यसहिते, चन्द्रे नीचगतग्रहेण दृष्टे, पापांशके = पापग्रहनवांशे विद्यमाने सति दरिद्रयोगं ( केमद्रुमतुल्यं ) याति = प्राप्नोति जातक इति । क्षीणेन्द्विति । निशायां = रात्रिसमये जन्मनि क्षीणेन्दुलग्नात्-क्षयिष्णु-( कृष्णपक्षीय ) चन्द्रगतलग्नात्, निधने = अष्टमे भावे, पापेक्षिते = पापग्रहेण दृष्टे, पापग्रहेण युते च तथा स्यादर्थाद् दरिद्रयोगः स्यादिति ॥ ७४ ॥

चन्द्रमा सूर्यके साथ नीच गत ग्रहसे दृष्ट पापांशक में हो तो दरिद्र योग होता है । रातके जन्ममें लग्नगत क्षीण चन्द्रमासे ८ वें पापग्रहकी दृष्टि हो, या पापग्रह बैठा हो तो दरिद्रयोग होता है ॥ ७४ ॥

विधुन्तुदादिग्रहपीडितेन्दौ पापेक्षिते चाशु दरिद्रमेति ।
लग्नाच्चतुष्केन्द्रगृहे सपापे निशाकराद्वाऽऽशु दरिद्रमेति ॥ ७५ ॥

विधुन्तुदादीति । विधुन्तुदादिभिर्ग्रहैः = राह्वादिपापग्रहैः पीडिते, इन्दौ=चन्द्रे पापेक्षिते च जात आशु = शीघ्रमेव दरिद्रयोगमेति । लग्नादिति । लग्नात् चतुष्केन्द्र-( १।४।७।१० ) गृहे, वा निशाकरात् = चन्द्रात् चतुष्केन्द्रगृहे = चतुर्षु केन्द्रेषु सपापे = पापग्रहयुक्ते जातो नर आशु दरिद्रमेति ॥ ७५ ॥

राहु आदि उपग्रहसे निपीडित चन्द्रमा पापग्रहसे देखा जाता हो तो जल्द दरिद्र बनता है। लग्नसे वा चन्द्रसे चारों केन्द्रोंमें पापग्रह हों तो भी जल्द दरिद्र बनावें ॥ ७५ ॥

चन्द्रे पराजितशुभग्रहदृष्टियुक्ते राह्वादिपीडिततनौ तु दरिद्र एव ।
नीचारिवीक्षणयुते रिपुराशिवर्गे चन्द्रे तुलाधरगते तु तथा वदन्ति ॥७६॥

चन्द्र इति । चन्द्रे राह्वाद्यशुभग्रहेण पीडिततनौ=दूषितबिम्बे, पराजितस्य ( युद्धे जितस्य ) शुभग्रहस्य=बुधगुरुशुक्राणामन्यतमस्य दृष्ट्या युक्ते च सति जातो दरिद्र एव भवति । अथ च तुलाधरगते=तुलराशिगते चन्द्रे, रिपुराशिवर्गे=शत्रुराशिवर्गे गतवति, नीचगेन, शत्रुगृहगतेन वा ग्रहेण वीक्षिते युते च तथा वदन्तीति । दरिद्रयोगः स्यादित्यर्थः॥

चन्द्रमा युद्धमें पराजित शुभग्रह से देखा जाता हो, राहु आदिसे पीडित हो तो जातक दरिद्र होवे। यदि चन्द्रमा नीचगत या शत्रुग्रहसे दृष्ट युत हो, या शत्रु की राशि या वर्ग में हो, तुलामें हो तो दरिद्र होवे ॥ ७६ ॥

केन्द्रे वा यदि कोणगे हिमकरे नीचारिवर्गस्थिते,
चन्द्रादन्त्यसपत्नरन्ध्रगृहगे जीवे दरिद्रो भवेत् ॥
पापांशे रिपुवीक्षिते चरगृहे चन्द्रे चरांशेऽथवा ।
जातो याति दरिद्रयोगमतुलं देवेज्यदृग्वर्जिते ॥ ७७ ॥

केन्द्र इति । नीचराशेर्वा शत्रुराशेर्वर्गगते हिमकरे = चन्द्रे यदि केन्द्रे वा कोणगे = लग्नात् १।४।७।१०।५।९ एतदन्यतमभावमुपगते । तस्माच्चन्द्रात् अन्त्यसपत्नरन्ध्रगृहे = ६।८।१२ एषामन्यतमे भावे गतवति जीवे = गुरौ दरिद्रो योगो भवेत् । पापांश इति । चन्द्रे चरगृहे = मेष-कर्क-तुला-मकराणामन्यतमराशौ पापांशे = पापग्रहनवांशे विद्यमाने रिपुणा वीक्षिते, अथवा चरांशे विद्यमाने शत्रुणा वीक्षिते, तस्मिन् देवेज्यस्य = गुरोः दृष्ट्या वर्जिते जातोऽतुलं दरिद्रयोगं याति = प्राप्नोति ॥ ७७ ॥

नीच या शत्रुके वर्गका चन्द्रमा, लग्नसे केन्द्र वा कोणमें हो और चन्द्रमासे द्वादश, षष्ठ वा अष्टम गृहमें गुरु हो तो दरिद्र होवे। पापग्रहके नवांशमें शत्रुदृष्ट, चर राशिस्थ वा चरांशमें चन्द्रमा हो उसे गुरु न देखता हो ऐसे योगमें उत्पन्न हो तो बहुत दरिद्र होता है ॥७७॥

अन्योन्यदृष्टौ शनिदानवेज्यौ नीचारिपापग्रहवर्गयातौ ।
एकर्क्षगौ वा यदि राजवंशे जातोऽपि केमद्रुमयोगमेति ॥ ७८ ॥

अन्योन्येति । शनिदानवेज्यौ=शनिशुक्रौ, नीचराशेर्वा शत्रुराशेर्वा पापग्रहस्य वर्गे यातौ, अन्योन्यदृष्टौ ( शनिना शुक्रः, शुक्रेण शनिश्च दृष्टो भवेत् ) वा तौ द्वावेवैकर्क्षगतौ= एकराशिगतौ भवेतां तदा राजवंशे जातोऽपि=राजपुत्रोऽपि केमद्रुमयोगं=दरिद्रयोगमेति॥७८॥

नीचमें, या शत्रुगृहमें, वा पापग्रहके वर्गमें प्राप्त शनि और शुक्र इन दोनोंमें परस्पर दृष्टि हो या दोनों एक राशिमें हों तो राजकुलमें उत्पन्न होनेपर भी दरिद्रताको प्राप्त होवे॥७८॥

चन्द्रे पापयुते तु पापभवने पापांशके वा निशि
व्योमेशेन निरीक्षिते गतबले केमद्रुयोगो भवेत् ॥
भाग्यस्थानपवीक्षिते खलयुते नीचांशकेऽब्जे तथा
चन्द्रे नीचयुते निशि क्षयतनौ जातस्य केमद्रुमः ॥ ७९ ॥

चन्द्र इति । गतबले = निर्बले, चन्द्रे पापग्रहेण युक्ते, तु ( तु पक्षान्तरे ) पापग्रहस्य भवने वा पापग्रहस्य नवांशे स्थिते, निशि=रात्रौ, व्योमेशेन दशमेशेन=निरीक्षिते सति केमद्रुयोगो भवेत् । अथ खलेन = पापग्रहेण युते, अब्जे = चन्द्रे, नीचराशिनवमांशके गतवति भाग्यस्थानपेन = नवमेशेन वीक्षिते = दृष्टे सति तथाऽर्थात्केमद्रुमो भवेत् । अथ च क्षयतनौ क्षयिष्णौ ( कृष्णपक्षीये ) चन्द्रे निशि = रात्रौ जन्मनि नीचयुते = स्वनीचराशिं गते जातस्य केमद्रुमो योगो भवेदिति ॥ ७९ ॥

यदि चन्द्रमा पापग्रहसे युक्त हो, पापग्रहकी राशिमें हो, वा पाप-नवांशमें हो, रात्रिके जन्ममें दशमेशसे देखा जाता हो, निर्बल हो तो केमद्रुम योग होता है ।

चन्द्रमा खल ग्रहसे युत नीचांशकमें हो, भाग्येश उसे देखता हो, वा रात्रिमें क्षीण चन्द्रमा नीचगत हो, उस समय उत्पन्न होनेवालोंका केमद्रुम योग होता है ॥ ७९ ॥

## अथ केमद्रुमयोगापवादः ।

निशाकरे केन्द्रगते भृगौ वा जीवेक्षिते नैव दरिद्रयोगः ।
शुभान्विते वाऽशुभमध्यगेन्दौ जीवेक्षिते नैव दरिद्रयोगः ॥ ८० ॥
चन्द्रेऽतिमित्रनिजतुङ्गगृहांशकस्थे जीवेक्षिते यदि दरिद्रतया विहीनः ।
पूर्णे तनौ शुभयुते दिवि तुङ्गयाते जीवेक्षिते हिमकरे न भवेद्दरिद्रः ॥ ८१ ॥

इदानीमुक्तानां केमद्रुमयोगानां कदा भङ्गो भवतीत्याह—निशाकरे, चन्द्र इति श्लोकद्वयेन । निशाकरे = चन्द्रे, वा भृगौ = शुक्रे, केन्द्र-( १।४।७।१० भाव-) गते तस्मिन् जीवने=गुरुणा, ईक्षिते = दृष्टे सति दरिद्रयोगो नैव भवति । अथ च शुभान्विते = शुभग्रहेण सहिते, शुभमध्यगेन्दौ = शुभग्रहद्वयस्यैकर्क्षगस्य मध्ये विद्यमाने चन्द्रे, जीवेक्षिते = गुरुणा दृष्टे दरिद्रयोगो नैव भवति । ईदृगलक्षणे पूर्वोक्तलक्षणव्याप्तावपि केमद्रुमयोगो न भवति॥८०॥

अतिमित्र-निजतुङ्गगृहे वा तन्नवांशे गतवति चन्द्रे जीवेक्षिते यदि पूर्वोक्तलक्षणं स्यादपि तथापि दरिद्रतया = केमद्रुमफलेन विहीनो भवति जातकः । पूर्णबिम्बे चन्द्रमसि शुभग्रहेण संयुक्ते दिवि = दशमे भावे निजोच्च-( वृष ) गते जीवेक्षिते च दरिद्रो केमद्रुमफलवान् न भवेज्जातक इति ॥ ८१ ॥

केमद्रुम योगके लक्षण होनेपर भी यदि चन्द्रमा वा शुक्र केन्द्रमें हो बृहस्पतिसे देखा जाता हो तो दरिद्र ( केमद्रुम ) योग नहीं होता है । चन्द्रमा शुभ ग्रहसे युक्त हो वा शुभग्रहोंके मध्यमें हो उसको बृहस्पति देखता हो तो दरिद्र योग नहीं होता है ॥ ८० ॥

चन्द्रमा अतिमित्रके गृहमें, अपनी उच्चराशिमें, अपने गृह या नवांश में हो उसे बृहस्पति देखता हो तो दरिद्रतासे हीन होता है अर्थात् केमद्रुमका भङ्ग होता है । पूर्ण चन्द्रमा

लग्नमें हो शुभ ग्रहसे युत हो, या १० वें भावमें उच्चका हो उसे गुरु देखता हो तो दरिद्र नहीं होता है। ( सु. शा. कार ) ॥ ८१ ॥

इदानीमनेन श्लोकेन पूर्वोक्तेषु केमद्रुमयोगेषु जातस्य फलमाह—

योगे केमद्रुमे प्राप्ते यस्मिन् कस्मिंश्च जातके ।
राजयोगा विनश्यन्ति हरिं दृष्ट्वा यथा द्विपाः ॥ ८२ ॥

योग इति । जातके पूर्वोक्ते यस्मिन् कस्मिन् केमद्रुमे योगे प्राप्ते सति राजयोगा विनश्यन्ति । यस्य कस्यापि जन्मकाले राजयोगाश्चेत्तथा तस्मिन् कश्चित् केमद्रुमोऽपि भवेत्तदा ते राजयोगाः केमद्रुमदोषान्नश्यन्त्येव । तदानीं दरिद्र एव भवेन्न राजेति भावः । अत्रोपमा—'हरिं दृष्ट्वा यथा द्विपाः' द्विपाः = हस्तिनः, हरिं = सिंहं दृष्ट्वा यथा पलायन्ते, तथैव केमद्रुमं दृष्ट्वा राजयोगा निष्फला भवन्तीति ॥ ८२ ॥

किसीके जन्म समयमें यदि केमद्रुम योग होवे तो उसके राजयोग भी अगर हों तो विफल हो जाते हैं। तात्पर्य यह है कि केमद्रुम योग राजयोगको भी नाश कर देता है। जैसे सिंह हाथियोंको नाश करता है। ( सु० शा० कार ) ॥ ८२ ॥

## होरायाम् ।

वराहेण बृहज्जातके यदुक्तं सुनफादि योगचतुष्टयं तदन्यमतपुरस्सरमिदानीमाह—

हित्वाऽर्कं सुनफाऽनफादुरुधुरा स्वान्त्योभयस्थैर्ग्रहैः
शीतांशोः कथितोऽन्यथा तु बलिभिः केमद्रुमोऽन्यैस्त्वसौ ।
केन्द्रे शीतकरेऽथवा ग्रहयुते केमद्रुमो नेष्यते
केचित् केन्द्रनवांशकेषु च वदन्त्युक्तिप्रसिद्धा न ते ॥ ८३ ॥

हित्वेति । शीतांशोः=चन्द्रात्, अर्कं=सूर्यं, हित्वा, स्वान्त्योभयस्थितैः=द्वितीये, द्वादशे, उभये ( द्वितीये द्वादशे च ) स्थितैः, ग्रहैः कुजादिभिः क्रमेण सुनफा, अनफा, दुरुधुरा इति त्रयो योगा जायन्ते । अन्यथा तु चन्द्रादुभयत्र द्वितीये द्वादशे च शून्ये सति बहुभिरन्यैराचार्यैः केमद्रुमो योगः कथितः । एतदुक्तं भवति । चन्द्राद् द्वितीये द्वादशे च स्थाने ग्रहशून्ये सति केमद्रुमो भवति । केमद्रुमस्य भङ्गमाह—केन्द्रे इति । केन्द्रे = लग्नात् केन्द्रे ( १।४।७।१० ) शीतकरे = चन्द्रे, अथवा ग्रहैर्भौमादिभिर्युते केमद्रुमो योगो नेष्यते= न भवतीति । परमतमाह—केचिदिति । केचिच्छ्रुतकीर्तिप्रमुखाः केन्द्रेषु, नवांशकेषु चैते योगा भवन्तीति वदन्ति । अर्थात् चन्द्राच्चतुर्थे भौमादिग्रहे सुनफा, दशमे अनफा । चतुर्थे दशमे च दुरुधुरा । उभयत्र शून्ये केमद्रुमः । तथा श्रुतकीर्तिः—

चन्द्राच्चतुर्थैः सुनफा, दशमस्थितैः कीर्तितोऽनफा विहगैः ।
उभयस्थितैः दुरुधुरा, केमद्रुमसंज्ञितोऽन्यथा योगः ॥

एवं नवांशकेषु । अर्थाच्चन्द्रो यत्र तत्र यद्राशिनवांशे भवेत् तस्माद्राशेर्द्वितीये राशौ भौमादिग्रहे सुनफा, द्वादशेऽनफा, उभयत्र दुरुधुरा, तयोः शून्यत्वे केमद्रुम इति । तथा हि जीवशर्मा—

यद्राशिसंज्ञे शीतांशुर्नवांशे जन्मनि स्थितः । तद्द्वितीयस्थितैर्योगः सुनफाख्यः प्रकीर्तितः ।
द्वादशैरनफा ज्ञेयो ग्रहैर्द्विर्द्वादशस्थितैः । प्रोक्तो दुरुधुरा योगोऽन्यथा केमद्रुमः स्मृतः ॥

परश्चैतन्मतं नाचार्याभिमतम् । अत एवाह—उक्तिप्रसिद्धा न ते । येषामिदमभिमतं 'केन्द्रनवांशकेष्विति' ते आचार्याः, उक्तिप्रसिद्धाः=उक्तावादेशे प्रसिद्धा मान्या न सन्तीति॥८३॥

सूर्यको छोड़कर भौमादिकोंमें से कोई ग्रह चन्द्रमासे दूसरे हो तो सुनफा योग होता है। सूर्यके अतिरिक्त चन्द्रमासे १२ वें कोई ग्रह हो तो अनफा योग होता है । चन्द्रमासे दूसरे और बारहवें सूर्यको छोड़कर कोई ग्रह हों तो दुरुधुरा योग होता है। यदि चन्द्रमासे २ रे और १२ वें कोई भी ग्रह न हो तो केमद्रुम योग होता है।

यदि केन्द्रमें चन्द्रमा हो वा अन्य कोई ग्रह हो तो केमद्रुम योगका भंग हो जाता है। किसी का मत है कि चन्द्रमासे केन्द्र और नवांशमें भी वे योग होते हैं । परन्तु यह मत प्रसिद्ध नहीं है। संस्कृत टीका देखिये ॥ ८३ ॥

यहां प्रसङ्गवश बृहज्जातकोक्त—

"त्रिंशत् सरूपाः सुनफानफाख्याः षष्टित्रयं दौरुधरे प्रभेदाः ।
इच्छाविकल्पैः क्रमशोऽभिनीय नीते निवृत्तिः पुनरन्यनीतिः ।।"

इस वचनका स्पष्टीकरण दिखलाता हूं—सुनफा, और अनफा योगके ३१ भेद हैं। दुरुधुरा योगके १८० भेद हैं । इच्छाविकल्पसे उन विकल्पोंके बनानेसे निवृत्ति होती है और रीति स्थानान्तर चालानकी होती है । यथा-सुनफा और अनफा योग मङ्गल-बुध-बृहस्पति-शुक्र-शनि इन पाँच ग्रहों से होते हैं। अतः इच्छा विकल्प पांच हुए । अतः प्रस्तारकी रीतिसे ५।४।३।२।१ इन अङ्कोंके भेद प्रथम विकल्प ५, द्वितीय १०, तृतीय १०, चतुर्थ ५, पञ्चम १, इस प्रकारसे योग ३१ हुए।

| | | | | |
|---|---|---|---|---|
| ५ | ४ | ३ | २ | १ |
| १ | २ | ३ | ४ | ५ |

प्रथम विकल्प—चन्द्रमासे २ रे—मं. बु. बृ. शु. श. ये ग्रह एक १ हों तो प्रथम विकल्पके पांच भेद हैं। द्वितीय विकल्प—मं. बु., मं. बृ., मं. शु., मं. श. । बु. बृ., बु. शु., बु. श. । बृ. शु., बृ. श. । शु. श. । इस प्रकार दूसरा विकल्प १० प्रकारके हुए । तृतीय विकल्प—मं. बु. बृ., मं. बु. शु., मं. बु. श., मं. बृ. शु., मं. बृ. श., मं. शु. श. । बु. बृ. शु., बु. बृ. श., बु. शु. श. । बृ. शु. श. इस प्रकार तीसरा विकल्प १० प्रकारके हुए। चतुर्थ विकल्प—मं. बु. बृ. शु., मं. बु. बृ. श., मं. बृ. शु. श., मं. बु. शु. श., बु. बृ. शु. श. इस प्रकार चौथे विकल्पके पाँच भेद हुए । पञ्चम विकल्प—मं. बु. बृ. शु. श. इस प्रकार पांचवें विकल्पका १ भेद हुआ । इन पांच विकल्पोंसे सुनफा योगके ३१ भेद हुए । इसी प्रकार ३१ भेद अनफा योगके भी होते हैं।

दुरुधुरा योगके २० भेद एक स्थानमें एक ग्रह रहनेसे—

| चन्द्रसे २रे स्थानमें | चन्द्रसे १२ वें स्थानमें | भेद संख्या | चन्द्रसे २रे स्थानमें | चन्द्रसे १२ वें स्थानमें | भेद संख्या |
|---|---|---|---|---|---|
| मं. | बु. | १ | बु. | शु. | ११ |
| बु. | मं. | २ | शु. | बु. | १२ |
| मं. | बृ. | ३ | बु. | श. | १३ |
| बृ. | मं. | ४ | श. | बु. | १४ |
| मं. | शु. | ५ | बृ. | शु. | १५ |
| शु. | मं. | ६ | शु. | बृ. | १६ |
| मं. | श. | ७ | बृ. | श. | १७ |
| श. | मं. | ८ | श. | बृ. | १८ |
| बु. | बृ. | ९ | शु. | श. | १९ |
| बृ. | बु. | १० | श. | शु. | २० |

एक ग्रह दूसरेमें दो ग्रह १२ वें, दो ग्रह दूसरे और एक ग्रह १२ वें के ६० भेद—

| चन्द्रसे २रे स्थान में | चन्द्रसे १२ वें स्थान में | भेद सं. | चन्द्रसे २रे स्थान में | चन्द्रसे १२ वें स्थान में | भेद सं. | चन्द्रसे २रे स्थान में | चन्द्रसे १२ वें स्थान में | भेद सं. |
|---|---|---|---|---|---|---|---|---|
| मं. | बु. बृ. | १ | बु. | बृ. श. | २१ | शु. | मं. श. | ४१ |
| मं. बृ. | बु. | २ | बु. श. | बृ. | २२ | शु. श. | मं. | ४२ |
| बृ. | बु. शु. | ३ | बु. | शु. श. | २३ | शु. | बु. बृ. | ४३ |
| मं. शु. | बु. | ४ | बु. श. | शु. | २४ | बृ. शु. | बु. | ४४ |
| मं. | बु. श. | ५ | बृ. | मं. बु | २५ | शु. | बु. श. | ४५ |
| मं. श. | बु. | ६ | बु. बृ. | मं. | २६ | शु. श. | बु. | ४६ |
| मं. | बृ. शु. | ७ | बृ. | मं. शु. | २७ | शु. | बृ. श. | ४७ |
| मं. शु. | बृ. | ८ | बृ. शु. | मं. | २८ | शु. श. | बृ. | ४८ |
| मं. | बृ. श. | ९ | बृ. | मं. श. | २९ | श. | मं. बु. | ४९ |
| मं. श. | बृ. | १० | बृ. श. | मं. | ३० | बु. श. | मं. | ५० |
| मं. | शु. श. | ११ | बृ. | बु. शु. | ३१ | श. | मं. बृ. | ५१ |
| मं. श. | शु. | १२ | बृ. शु. | बु. | ३२ | बृ. श. | मं. | ५२ |
| बु. | मं. बृ. | १३ | बृ. | बु. श. | ३३ | श. | मं. शु. | ५३ |
| मं. बु. | बृ. | १४ | बृ. श. | बु. | ३४ | शु. श. | मं. | ५४ |
| बु. | मं. शु. | १५ | बृ. | शु. श. | ३५ | श. | बु. बृ. | ५५ |
| बु. शु. | मं. | १६ | बृ. श. | शु. | ३६ | बृ. श. | बु. | ५६ |
| बु. | मं. श. | १७ | शु. | मं. बु. | ३७ | श. | बु. शु. | ५७ |
| बु. श. | मं. | १८ | बु. शु. | मं. | ३८ | शु. श. | बु. | ५८ |
| बु. | बृ. शु. | १९ | शु. | मं. बृ. | ३९ | श. | बृ. शु. | ५९ |
| बु. शु. | बृ. | २० | बृ. शु. | मं. | ४० | शु. श. | बृ. | ६० |

एक ग्रह दूसरे तीन ग्रह १२ वें, तीन ग्रह दूसरे एक ग्रह बारहवेंके ४० भेद—

| चन्द्रमासे २ रे | चन्द्रमासे १२ वें | भे. सं. | चन्द्रमासे २ रे | चन्द्रमासे १२ वें | भे. सं. | चन्द्रमासे २ रे स्था. | चन्द्रमासे १२वें स्था. | भे. सं. |
|---|---|---|---|---|---|---|---|---|
| मं. | बु. बृ. शु. | १ | बु. | बृ. शु. श. | १५ | शु. | मं. बृ. श. | २९ |
| बु. बृ. शु. | मं. | २ | बृ. शु. श. | बु. | १६ | मं. बृ. श. | शु. | ३० |
| मं. | बु. बृ. श. | ३ | बृ. | मं. बु. शु. | १७ | शु. | बु. बृ. श. | ३१ |
| बु. बृ. श. | मं. | ४ | मं. बु. शु. | बृ. | १८ | बु. बृ. शु. | श. | ३२ |
| मं. | बु. शु. श. | ५ | बृ. | मं. बु. श. | १९ | श. | मं. बु. बृ. | ३३ |
| बु. शु. श. | मं. | ६ | मं. बु. श. | बृ. | २० | मं. बु. बृ. | श. | ३४ |
| मं. | श. बृ. शु. | ७ | बृ. | मं. शु. श. | २१ | श. | मं. बु. शु. | ३५ |
| बृ. शु. श. | मं. | ८ | मं. शु. श. | बृ. | २२ | मं. बु. शु. | श. | ३६ |
| बु. | मं. बृ. शु. | ९ | बृ. | बु. शु. श. | २३ | श. | मं. बृ. शु. | ३७ |
| मं. बृ. शु. | बु. | १० | बु. शु. श. | बृ. | २४ | मं. बृ. शु. | श. | ३८ |
| बु. | मं. बृ. श. | ११ | शु. | मं. बु. बृ. | २५ | श. | बु. बृ. शु. | ३९ |
| मं. बृ. श. | बु. | १२ | मं. बु. बृ. | शु. | २६ | बु. बृ. शु. | श. | ४० |
| बु. | मं. शु. श. | १३ | शु. | मं. बु. श. | २७ | | | |
| मं. शु. श. | बु. | १४ | मं. बु. श. | शु. | २८ | | | |

**एक ग्रह २ रे, चार ग्रह १२ वें, चार ग्रह २ रे एक ग्रह १२ वेंके भेद १०—**

| चन्द्रमासे २ रे स्था. | चन्द्रसे १२ वें स्थानमें | भे. सं. | चन्द्रमासे २ रे स्था. | चन्द्रमासे १२ वें | भे. स. | चन्द्रमासे २ रे स्था. | चन्द्रमासे १२वें स्था. | भे. सं. |
|---|---|---|---|---|---|---|---|---|
| मं. | बु. बृ. शु. श. | १ | बृ. | मं. बु. शु. श. | ५ | श. | मं. बु. बृ. शु. | ९ |
| बु. बृ. शु. श. | मं. | २ | मं. बु. शु. श. | बृ. | ६ | मं. बु. बृ. शु. | श. | १० |
| बु. | मं. बृ. शु. श. | ३ | शु. | मं. बु. बृ. श. | ७ | | | |
| मं. बृ. शु. श. | बु. | ४ | मं. बु. बृ. श. | शु. | ८ | | | |

**दो ग्रह दूसरे, दो ग्रह बारहवेंके भेद ३० हैं—**

| चन्द्र से २ रे स्था. | चन्द्र से १२वें स्था. | यो. सं. | चन्द्र से २ रे स्था. | चन्द्र से १२ वें स्था. | यो. सं. | चन्द्र से २ रे स्था. | चन्द्र से १२वें स्था. | यो. सं. |
|---|---|---|---|---|---|---|---|---|
| मं. बु. | बृ. शु. | १ | मं. बृ. | शु. श. | ११ | मं. श. | बु. शु. | २१ |
| बृ. शु. | मं. बु. | २ | शु. श. | मं. बृ. | १२ | बु. शु. | मं. श. | २२ |
| मं. बु. | बृ. श. | ३ | मं. शु. | बु. बृ. | १३ | मं. श. | बृ. शु. | २३ |
| बृ. श. | मं. बु. | ४ | बु. बृ. | मं. शु. | १४ | बृ. शु. | मं. श. | २४ |
| मं. बु. | शु. श. | ५ | मं. शु. | बु. श. | १५ | बु. बृ. | शु. श. | २५ |
| शु. श. | मं. बु. | ६ | बु. श. | मं. शु. | १६ | शु. श. | बु. बृ. | २६ |
| मं. बृ. | शु. बु. | ७ | मं. बु. | बृ. श. | १७ | बु. शु. | बृ. श. | २७ |
| शु. बु. | मं. बृ. | ८ | बृ. श. | मं. बु. | १८ | बृ. श. | बु. शु. | २८ |
| मं. बृ. | बु. श. | ९ | बु. बृ. | मं. श. | १९ | बृ. शु. | बु. श. | २९ |
| बु. श. | मं. बृ. | १० | मं. श. | बु. बृ. | २० | बु. श. | बृ. शु. | ३० |

**दूसरे २ ग्रह, १२ वें तीन ग्रह, दूसरे तीन ग्रह १२ वें दो ग्रहके भेद २० हैं—**

| चन्द्रसे २ रे स्थान में | चन्द्रसे १२ वें स्थान में | यो. सं. | चन्द्रसे २ रे स्थान में | चन्द्रसे १२ वें स्थान में | यो. सं. | चन्द्रसे २ रे स्थान में | चन्द्रसे २ रे स्थान में | यो. सं. |
|---|---|---|---|---|---|---|---|---|
| मं. बु. | बृ. शु. श. | १ | बु. बृ. शु. | मं. श. | ८ | बृ. शु. | मं. बु. श. | १५ |
| बृ. शु. श. | मं. बु. | २ | बु. बृ. | मं. शु. श. | ९ | मं. बु. श. | बृ. शु. | १६ |
| मं. बृ. | बु. शु. श. | ३ | मं. शु. श. | बु. बृ. | १० | बृ. श. | मं. बु. शु. | १७ |
| बु. शु. श. | मं. बृ. | ४ | बु. शु. | मं. बृ. श. | ११ | मं. बु. शु. | बृ. श. | १८ |
| मं. शु. | बु. बृ. श. | ५ | मं. बृ. श. | बु. शु. | १२ | शु. श. | मं. बु. बृ. | १९ |
| बु. बृ. श. | मं. शु. | ६ | बु. श. | मं. बृ. शु. | १३ | मं. बु. बृ. | शु. श. | २० |
| मं. श. | बु. बृ. शु. | ७ | मं. बृ. शु. | बु. श. | १४ | | | |

इस प्रकार सब भेदों का योग २०+६०+४०+१०+३०+२०=१८०, ये दुरुधुराके १८० भेद हुये। ( सु० शा० कार ) ॥ ८३ ॥

## अथ सुनफादियोगफलम् ।

स्वयमधिगतवित्तः पार्थिवस्तत्समो वा भवति हि सुनफायां धीधनख्यातिमांश्च ।
प्रभुरगदशरीरः शीलवान् ख्यातकीर्तिर्विषयसुखसुवेषो निर्वृतश्चानफायाम् ॥८४॥
उत्पन्नभोगसुखभाग्धनवाहनाढ्यस्त्यागान्वितो दुरुधुराप्रभवः सुभृत्यः ।
केमद्रुमे मलिनदुःखितनीचनिःस्वाः प्रेष्याः खलाश्च नृपतेरपि वंशजाताः ॥८५॥

इदानीं श्लोकद्वयेन वराहोक्तेन सुनफादियोगचतुष्टयस्य फलमाह । श्लोकौ सरलार्थौ । तत्र सुनफानफादुरुधुराणां फलं शुभमेव । केमद्रुमस्य फलमशुभमिति सारार्थः ॥ ८४-८५ ॥

सुनफा योगमें उत्पन्न मनुष्य अपने हाथसे कमाये हुये धनसे राजा होता है, वा राजा के सदृश धनी, विख्यात, यशवाला होता है । अनफा योगमें उत्पन्न होनेवाले मनुष्यकी आज्ञाका सब पालन करते हैं, और रोग रहित, शीलवान्, विख्यात कीर्ति, शब्द, स्पर्श, रूप, रस, गन्ध इन विषयोंका भोगनेवाला, सुन्दर शरीरवाला और मानसिक दुःखोंसे रहित होता है ॥ ८४ ॥

दुरुधुरा योगमें उत्पन्न मनुष्य विविध भोग और सुखका भागी, धन-वाहनसे युत, त्यागी, और सुन्दर भृत्यवाला होता है । केमद्रुम योगमें उत्पन्न मनुष्य राजाके कुलमें पैदा हुआ हो तो भी मलिन, दुःखित, नीच, निर्धन, नौकर और खल होता है ॥ ८५ ॥

### अथ कुजादिकृतसुनफायोगफलानि ।

जातश्च भूपतिश्चण्डो हिंस्रो डिम्भः सुधीरधीः ।
धनविक्रमवान् कोपी चन्द्राद्धनगते कुजे ॥ ८६ ॥
वेदशास्त्रकलागेयकुशलः सुशरीरवान् ।
मनस्वी हितवाग् धर्मी चन्द्राद्वित्तगते बुधे ॥ ८७ ॥
सर्वविद्याधिकः श्रीमान् कुटुम्बी नृपवल्लभः ।
राजतुल्ययशस्वी च चन्द्राद्वित्तगते गुरौ ॥ ८८ ॥
विक्रमस्त्रीधनक्षेत्रकर्मवान् बहुवित्तवान् ।
चतुष्पदाढ्या राजश्रीः सिते चन्द्रात् कुटुम्बगे ॥ ८९ ॥
पुरग्रामस्थिताशेषैः पूजितो धनवान् सुधीः ।
निपुणः सर्वकार्येषु चन्द्राद्वित्तगते शनौ ॥ ९० ॥

इदानीं कुजादिग्रहजनितसुनफायोगफलान्युच्यन्ते-जातश्चेत्यादिश्लोकपञ्चकेन । चन्द्रात्केवलं द्वितीये स्थाने भौमादिग्रहे एतानि पृथक् पृथक् फलानि भवन्ति । यदि द्वितीये द्वित्र्यादयो ग्रहा भवेयुस्तदा तत्समिश्रणं फलं वाच्यम् । श्लोकाः सरलार्था एव ॥८६-९०॥

चन्द्रमासे धन(२)भावमें मंगल हो ऐसे समयका उत्पन्न मनुष्य उग्र बुद्धिवाला, हिंसा करनेवाला, साहसी, धनी, पराक्रमी, और कोपी राजा होता है ॥ ८६ ॥

चन्द्रमासे दूसरे बुध हो तो वेदशास्त्रके कलामें-गान करनेमें चतुर, सुन्दर शरीरवाला, मनस्वी, हित बोलनेवाला और धर्मात्मा होता है ॥ ८७ ॥

चन्द्रमासे दूसरे गुरु हो तो विद्यामें प्रवीण, श्रीमान्, कुटुम्बवाला, राजाका प्रिय और राजाके सदृश यशस्वी होता है ॥ ८८ ॥

चन्द्रमासे दूसरे शुक्र हो तो पराक्रमी, स्त्री-धन और जगह-जमीनवाला, कर्मवान्, खूब धनी, चतुष्पद ( बैल, गाय, घोड़ा, हाथी आदि ) से युक्त और राजलक्ष्मी-युत होता है ॥ ८९ ॥

चन्द्रमासे द्वितीय शनि हो तो पुर-ग्राममें रहनेवाले सब मनुष्योंसे पूजित, धनवान्, बुद्धिमान् और सब कार्योंमें निपुण होता है ॥ ९० ॥

### अथ कुजादिग्रहकृतानफायोगफलानि ।

मानी रणोत्सुकः क्रोधी धृष्टश्चोरजनप्रभुः ।
धीरः स्वतनुलोभी स्याच्चन्द्राद्व्ययगते कुजे ॥ ९१ ॥
गान्धर्वलेख्यपटुवाक् कविर्वक्ता सुदेहवान् ।
यशस्वी राजपूज्यः स्यात् चन्द्राद्व्ययगते बुधे ॥ ९२ ॥

राजपूज्योऽतिमेधावी गाम्भीर्यगुणसत्त्ववान् ।
शुचिः स्थानधनाढ्यः स्याद् चन्द्राद् द्वादशगे गुरौ ॥ ९३ ॥
युवतीजनकन्दर्पः पश्वादिधनवान् सुधीः ।
धनधान्याधिकश्चन्द्रादन्त्यस्थानगते भृगौ ॥ ९४ ॥
विस्तीर्णबाहुर्गुणवान् नेता पश्वादिवित्तवान् ।
गृहीतवाक्यो दुस्त्रीकश्चन्द्रादन्त्यङ्गते शनौ ॥ ९५ ॥

इदानीं चन्द्राद् द्वादशे स्थाने गते भौमादिग्रहे (अनफायोग-) फलान्युच्यन्ते। मानीत्यादिश्लोकपञ्चकेन। तत्र प्रत्येकस्य ग्रहस्य पृथक् पृथगुक्तं फलं वाच्यम्। द्वित्र्यादिग्रहसंयोगे तन्मिश्रं फलं वाच्यम्। श्लोकाः स्पष्टार्थकाः इति ॥ ९१-९५ ॥

चन्द्रमासे १२ वें मंगल हो तो मानी, युद्धमें साहसी, क्रोधी, दुष्ट-चोरोंका मालिक, धीर और अपने शरीरकी रक्षा करनेवाला हो ॥ ९१ ॥

चन्द्रमासे बारहवें बुध हो तो गान्धर्व विद्या (संगीत) का ज्ञाता, लेखक, चतुर, कवि, वक्ता, सुन्दर देहवाला, यशस्वी और राजपूज्य हो ॥ ९२ ॥

चन्द्रमासे व्ययमें गुरु हों तो राजपूज्य, विशष बुद्धिमान्, गंभीर गुणवाला, सत्वगुणी, पवित्र, उत्तम स्थानवाला और धनाढ्य होवे ॥ ९३ ॥

चन्द्रमासे १२ वें शुक्र हो तो युवतियोंके साथ विलास करनेवाला, पशु आदि धनोंसे युक्त, बुद्धिमान् और धन-धान्यसे पूर्ण होवे ॥ ९४ ॥

जिसके चन्द्रमासे व्यय स्थानमें शनि हो वह बडे बाहुवाला, गुणवान्, नेता, पशु आदि धनवाला, वचनग्राही तथा दुष्टा स्त्रीवाला होवे ॥ ९५ ॥

### अथ धुरन्धरायोगफलानि ।

असत्यवादी गुणवान् निपुणोऽतिशठो गुणी ।
लुब्धो वृद्धोऽसतीसक्तश्चन्द्रे सौम्यारमध्यगे ॥ ९६ ॥
स्वकर्मविभवो दृष्टो यशस्वी रिपुपीडितः ।
स्वगेहशीलकृच्चन्द्रे मध्यगे कुजजीवयोः ॥ ९७ ॥
व्यायामी सुभगः क्रूरो हृष्टः सत्कामवित्तवान् ।
भयादशीलः शीतांशौ मध्यगे कुजशुक्रयोः ॥ ९८ ॥
कुत्सितस्त्रीरतः क्रोधी धनवान् पिशुनोऽरिमान् ।
असन्तृप्तो निशानाथे मध्यगे कुजमन्दयोः ॥ ९९ ॥
धर्मात्मा शास्त्रविद्वाग्मी सत्कविः सज्जनान्वितः ।
यशस्वी च निशानाथे मध्यगे बुधजीवयोः ॥ १०० ॥
नृत्यगानरतः कान्तः प्रियवाक् सुभगः सुधीः ।
शूरप्रकृतिकश्चन्द्रे मध्यगे बुधशुक्रयोः ॥ १०१ ॥
देशाद्देशं गतः पूज्यो नातिविद्याधनान्वितः ।
स्वबन्धुजनविद्वेषी चन्द्रे मन्दज्ञमध्यगे ॥ १०२ ॥
नृपतुल्यकरः श्रीमान् नीतिज्ञो विक्रमान्वितः ।
ख्यातोऽदुष्टमतिश्चन्द्रे मध्यगे गुरुशुक्रयोः ॥ १०३ ॥
सुखी विनयविज्ञानविद्यारूपगुणान्वितः ।
धनी शान्तिकरश्चन्द्रे मध्यगे शनिजीवयोः ॥ १०४ ॥
वृद्धाचारः कुलाढ्यश्च निपुणस्त्रीजनप्रभुः ।
धनी नृपप्रियश्चन्द्रे सितादित्यसुतान्तरे ॥ १०५ ॥

स्वोच्चस्वमित्रभवनोपगतेषु सर्वं प्राप्नोति जातमनुजो नियतं यदुक्तम् ।
स्वांशेषु वा निजसुहृद्गृहसंयुतेषु प्राहुस्तथैव फलमस्ति पराशराद्याः ॥ १०६ ॥
चन्द्रः सराहुर्यदि वा सकेतुश्चन्द्राद्दहिर्वा यदि रिःफयातः ।
नीचास्तगो वा यदि योगकर्ता जातस्य मिश्रं फलमाहुरार्याः ॥ १०७ ॥

इदानीं द्वादशभिः श्लोकैः दुरुधुरायोगफलान्युच्यन्ते । अत्रोक्ताद्विशेषग्रहयोगेऽपि तारतम्येन फलं वाच्यम् । श्लोकाश्च स्पष्टार्था एवेति ॥ ९६-१०७ ॥

जिसके जन्म-समय बुध और मंगलके मध्यमें चन्द्रमा हो वह असत्यवादी, गुणवान्, निपुण, भारी शठ, दयायुक्त, लोभी और वृद्धा स्त्रीमें आसक्त होता है ॥ ९६ ॥

जिसके जन्मसमय मंगल और बृहस्पतिके मध्यमें चन्द्रमा हो वह स्वकर्मसे धनी, यशस्वी, शत्रुओंसे पीड़ित, और सदा अपने घरमें रहनेवाला होता है ॥ ९७ ॥

जिसके जन्म-समय मंगल और शुक्रके मध्यमें चन्द्रमा हो वह व्यायामी, देखनेमें सुन्दर, कामुक, क्रूर-स्वभाव, हृष्ट, धनी, और भयसे शीलरहित (पागल की तरह) होता है ॥ ९७ ॥

जिसके जन्म-समय मंगल और शनिके मध्यमें चन्द्रमा हो वह निन्दित-स्त्रीरत, क्रोधी, धनवान्, चुगुलखोर, शत्रुवाला और अधीर होता है ॥ ९९ ॥

जिस मनुष्यके जन्म-समय बुध और बृहस्पतिके मध्यमें चन्द्रमा हो वह धर्मात्मा, शास्त्र जाननेवाला, वाचाल, श्रेष्ठकवि, सज्जनोंसे युक्त और यशस्वी होता है ॥ १०० ॥

जिस मनुष्यके जन्म-समय बुध और शुक्रके मध्यमें चन्द्रमा हो वह नाच गानमें मग्न, सुन्दर रूपवाला, प्रियवक्ता, सुन्दर शरीर, सुन्दरबुद्धि और साहसी प्रकृतिवाला होता है ॥

जिस मनुष्यके जन्मके समय शनि और बुधके बीचमें चन्द्रमा हो वह अनेक देश में जाकर पूज्य हो, विशेष विद्या तथा धनसे युक्त न हो और अपने बन्धुजनोंका बैरी हो ॥१०२॥

जिस मनुष्यके जन्म-समय गुरु और शुक्रके बीचमें चन्द्रमा हो वह राजाके सदृश होता है और वह मनुष्य श्रीमान्, नीतिज्ञ, पराक्रमी, विख्यात और शुद्ध चित्तवाला होता है ॥

जिस मनुष्यके जन्म-समय शनि और बृहस्पतिके बीचमें चन्द्रमा हो वह सुखी, विनयविज्ञान-विद्या-रूप और गुणोंसे युक्त, धनी और दूसरोंको शान्ति करनेवाला होता है ॥

जिस मनुष्यके जन्म-समय शुक्र और शनिके मध्यमें चन्द्रमा हो वह वृद्धोंके आचारों से युक्त, कुलीन, गुणहीन-स्त्रीका स्वामी, धनी, और राजप्रिय होता है ॥ १०५ ॥

जो ये फल कहे हैं वे योगकारक ग्रह यदि उच्चके हों, स्वगृहमें हों, अपने नवांश या अपने मित्रगृह के हों तो नियत सब फल होते हैं, यह पराशरादि ऋषियोंने कहा है ॥१०६॥

चन्द्रमा राहु वा केतुसे युक्त हो, वा चन्द्रमासे १२ वें राहु हो या दुरुधुरा योग कारक ग्रह नीच या अस्तङ्गत हों तो मिश्र फल होता है ऐसा श्रेष्ठ विद्वानोंने कहा है ॥ १०७ ॥

## अथ शकटयोगः ।

षष्ठाष्टमगतश्चन्द्रात्सुरराजपुरोहितः। केन्द्राद्न्यगतो लग्नाद्योगः शकटसंज्ञितः॥१०८॥

इदानीं शकटयोगमाह-षष्ठेति । चन्द्रात्षष्ठे वा अष्टमे गुरुश्चेद्भवेत्तथाऽसौ गुरुः लग्नात् केन्द्रेतरेऽर्थात् केन्द्रे न भवेत् तदा शकटसंज्ञो योगो भवति ।

तथा फलदीपिकायाम्—

"जीवादष्टारिसंस्थे शशिनि तु शकटः केन्द्रगे नास्ति लग्नात्" इति ॥१०८॥

चन्द्रमासे छठे वा आठवें बृहस्पति हो, लग्नसे केन्द्रमें न हो तो 'शकट' संज्ञक योग होता है ॥ १०८ ॥

| | | |
|---|---|---|
| चं. | ल. | |
| | शकट-योगः | |
| | | बृ. |

### अथ शकटयोगफलम्।

अपि राजकुले जातो निःस्वः शकटयोगजः।
क्लेशायासवशान्नित्यं सन्तप्तो नृपविप्रियः॥ १०९॥

अनेन श्लोकेन सरलार्थेन शकटयोगफलमुच्यते॥ १०९॥

शकट योगमें उत्पन्न होनेवाला राजकुलका भी हो तो भी दरिद्र, अनेक कष्ट और प्रयास से नित्य सन्तप्त और राजाका अप्रिय होता है॥ १०९॥

### अथ पारिजातादियोगफलानि।

सपारिजातद्युचरः सुखानि नीरोगतामुत्तमवर्गयातः।
सगोपुरांशो यदि गोधनानि सिंहासनस्थः कुरुते विभूतिम्॥ ११०॥
करोति पारावतभागयुक्तो विद्यायशःश्रीविपुलं नराणाम्।
सदेवलोको बहुयानसेनामैरावतस्थो यदि भूपतित्वम्।

प्रथमाध्याये ४५।४६ तमे श्लोके उक्ता ये पारिजातादिवर्गास्तेषां फलान्यत्रोच्यन्ते श्लोकद्वयेन सरलार्थेनेति॥ ११०-१११॥

अपने पारिजात भागमें ( १ अ० ४५-४७ श्लो० ) रहनेवाला ग्रह सुख देता है। उत्तम वर्गवाला ग्रह निरोग करता है। यदि गोपुरांशमें ग्रह हो तो गौ और धन देता है। सिंहासन वाला ग्रह विभूति ( सम्पत्ति ) को देता है। पारावत भागमें युक्त ग्रह मनुष्यों को विद्या, यश और विपुल लक्ष्मीको प्राप्त कराता है। देवलोकसे युक्त ग्रह बहुत सवारी और सेनाको देता है और यदि ऐरावत अंशमें स्थित हो तो राजा बनाता है॥ ११०-१११॥

### अथ अधमादि योगाः।

अधमसमवरिष्ठान्यर्ककेन्द्रादिसंस्थे
शशिनि विनयवित्तज्ञानधीनैपुणानि।
अहनि निशि च चन्द्रे स्वाधिमित्रांशके वा
सुरगुरुसितदृष्टे वित्तवान् स्यात् सुखी च॥ ११२॥

इदानीं सूर्याचन्द्रमसोः स्थितिवशेनाधममध्यवरिष्ठयोगानाह—अधमेति। शशिनि = चन्द्रे, अर्ककेन्द्रादिसंस्थे = सूर्यात् केन्द्रादौ गतवति अधमसमवरिष्ठानि विनयवित्तज्ञानधीनैपुणानि भवन्ति। एतदुक्तं भवति। सूर्यात् केन्द्रगते चन्द्रे अधमो योगस्तस्मिन् विनयवित्तज्ञानधीनैपुणानि अधमानि भवन्ति। सूर्यात् पणफरे गतवति चन्द्रे समो योगस्तस्मिन् विनयादि समं वाच्यम्। सूर्यात् आपोक्लिमे गते चन्द्रे वरिष्ठो योगस्तस्मिन् विनयादि वरिष्ठं वाच्यमिति। तथोक्तञ्च—

"सहस्ररश्मितश्चन्द्रे कण्टकादिगते सति।
न्यूनमध्यवरिष्ठानि धनधीनैपुणानि च" इति। पाराशरीये।

अहनीति। अहनि = दिने, निशि = रात्रौ च स्वांशे, वा अधिमित्रग्रहनवांशे गतवति चन्द्रे क्रमेण गुरुणा, शुक्रेण दृष्टे। दिने स्वांशे वाऽधिमित्रांशे चन्द्रे गुरुणा दृष्टे, रात्रौ भृगुणा दृष्टे सति जातो वित्तवान् सुखी च स्यात्। तथा हि—

स्वांशेऽधिमित्रस्यांशे वा स्थिते वा दिवसे शशी। गुरुणा दृश्यते तत्र जातो वित्तसुखान्वितः॥
स्वाधिमित्रांशगश्चन्द्रो दृष्टो दानवमन्त्रिणा।
निशासु कुरुते लक्ष्मीं धनधान्यसमाकुलाम्॥ इति पाराशरीये॥ ११२॥

यदि सूर्यसे चन्द्रमा केन्द्र ( १।४।७।१० ) में हो तो अधम, पणफर ( २।५।८।११ ) में हो तो मध्यम, आपोक्लिम ( ३।६।९।१२ ) में हो तो वरिष्ठ ( उत्तम ) योग होते हैं। उक्त

अधम आदि योगोंमें विनय, वित्त, ज्ञान, बुद्धि और निपुणता योगोंके नामानुसार ही होती हैं । दिनमें या रात्रिमें चन्द्रमा अपने या अधिमित्रके नवांशमें हो उसे क्रमसे बृहस्पति और शुक्र देखता हो तो धनवान् और सुखी हो । ( सु० शा० कार ) ॥ ११२ ॥

## अथ चन्द्राधियोगः ।

सौम्यैः स्मरारिनिधनेष्वधियोग इन्दोस्तस्मिश्चमूपसचिवक्षितिपालजन्म ।
सम्पत्तिसौख्यविभवा हतशत्रवश्च दीर्घायुषो विगतरोगभयाश्च जाताः ॥ ११३ ॥

इदानीं चन्द्राधियोगमाह—सौम्यैरिति । इन्दोः = चन्द्रस्थानात्, स्मरारिनिधनेषु = सप्तमषष्ठाष्टमभावेषु, सौम्यैः = शुभग्रहैः ( बुधगुरुशुक्रैः ) यथासम्भवमुपगतैः, अधियोगः स्यात् । योगोऽयमधियोगसञ्ज्ञको भवति । तत्फलमाह । तस्मिन्नधियोगे चमूपस्य = सेनाधिपतेः ( Commander's ) सचिवस्य = राजमन्त्रिणः ( Minister's ) क्षितिपालस्य = राज्ञः, जन्म भवति । अधियोगे जातो राजा, मन्त्री, चमूपो वा भवति । तथा तत्र जाताः सम्पत्तिसौख्यवन्तो हतशत्रवः दीर्घायुषो विगतरोगभयाश्च भवन्ति । तथाहि—

"शशिनः सौम्याः षष्ठे
द्यूने वा निधनसंस्थिता वा स्युः ।
जातो नृपतिर्ज्ञेयो
मन्त्री वा सैन्यनायको वाऽपि ॥
स्यादधियोगे जातः सौम्यैः सबलैर्धराधीशः ।
मध्यबलैर्मन्त्री स्यादधमबलैः सैन्यनायकः स्यात्" इति बादरायणः ॥११॥

चं.
चन्द्रात् अधियोगः
बु. शु. बृ.

Notes—चन्द्रात्षष्ठसप्ताष्टमभावेषु पापैः पापाधियोगः, मिश्रग्रहैः ( पापैः शुभैश्च ) मिश्रयोगो भवति । 'पापः पापैरेवं मिश्रैर्मिश्रस्तथैवोक्तः' इति वचनात् ।

यदि चन्द्रमासे छठे, सातवें या आठवें भवनमें शुभग्रह हों तो 'अधियोग' होता है । इस योगमें सेनापति, राजमंत्री और राजाका जन्म होता है । इसमें जन्म लेनेवाले सम्पत्ति-सौख्य-विभव युत, शत्रु रहित, रोगरहित और भयरहित होते हैं ॥ ११३ ॥

## अथ लग्नाधियोगः ।

लग्नादरिद्यूनगृहाष्टमस्थैः शुभैर्न पापग्रहयोगदृष्टैः ।
लग्नाधियोगो भवति प्रसिद्धः पापः सुखस्थानविवर्जितैश्च ॥ ११४ ॥
लग्नाधियोगे बहुशास्त्रकर्ता विद्याविनीतश्च बलाधिकारी ।
मुख्यस्तु निष्कापटिको महात्मा लोके यशोवित्तगुणान्वितः स्यात् ॥११५॥

इदानीं लग्नाधियोगमाह—लग्नादिति । जन्मलग्नात्, अरिद्यूनगृहाष्टमस्थैः = षष्ठ-सप्तमाष्टमभावेषु व्यवस्थितैः शुभैः = शुभग्रहैः ( बुधगुरुशुक्रैः ) न पापग्रहयुक्तैः, न पापग्रहदृष्टैश्च, तथा पापैः = पापग्रहैः, सुखस्थानविवर्जितैः = चतुर्थस्थानरहितैः । एतदुक्तं भवति । लग्नात् ६, ७, ८ भावेषु यथासम्भवं सर्वे शुभग्रहा भवेयुस्तेषु कश्चित्

ल.
०
लग्नाधियोगः
चं. बृ.
बु. शु.

पापग्रहो न भवेत्तथा पापग्रहस्य दृष्टिरपि न भवेत्तथा चतुर्थभावे पापग्रहा न भवेयुरिति। तदा प्रसिद्धः लग्नाधियोगो भवति। तथा च—

बद्सप्ताष्टमसंस्थैर्लग्नात्सौम्यैरपापदृष्टियुतैः।
लग्नाधियोगश्चायं पापैः सुखवर्जितो भवति॥ जातकादेशे।

लग्नाधियोगफलमाह—लग्नाधियोगे इत्यादिना सरलार्थेन श्लोकेन॥११४-११५॥

Notes—लग्नात् ६, ७, ८ इति भावत्रयेऽपि पापग्रहाणां योगो दृष्टिश्च न स्यादित्यसम्भवम्। कस्मिन्नपि भावे पापानां स्थितिः कल्प्यते तदा कश्चिदेको भावः पापदृष्टः पापयुतो वा स्यादेवेति विविच्यम्। अत एव ६, ७, ८ भावेषु पापग्रहयोगरहितेषु, इत्येवं मदभिप्रेतमिति।

लग्नसे षष्ठ, सप्तम और अष्टम स्थानमें शुभग्रह हों उन्हें पापग्रह न देखते हों न युक्त हों और सुख ४ स्थानमें पापग्रह न हो तो "लग्नाधियोग" होता है॥ ११४॥

जिस मनुष्यका जन्म लग्नाधियोगमें हो वह बहुत शास्त्रोंका रचनेवाला, विद्यासे विनीत, बहुत बलका अधिकारी, मुख्य, निष्कपट, महात्मा और लोकमें यश-वित्त-गुणसे युक्त होवे॥ ११५॥

अथ गजकेसरीयोगः।

केन्द्रस्थिते देवगुरौ मृगाङ्काद्योगस्तदाहुर्गजकेसरीति।
दृष्टे सितार्येन्दुसुतैः शशाङ्के नीचास्तहीनैर्गजकेसरी स्यात्॥ ११६॥
गजकेसरिसञ्जातस्तेजस्वी धनधान्यवान्।
मेधावी गुणसम्पन्नो राजप्रियकरो भवेत्॥ ११७॥

इदानीं गजकेसरीयोगमाह—केन्द्रस्थिते इति। यत्र तत्रस्थात् मृगाङ्कात् = चन्द्रात्, केन्द्रस्थिते देवगुरौ = बृहस्पतौ सति गजकेसरी योगो भवतीत्याहुरार्याः इति।

अथ च शशाङ्के=चन्द्रे, नीचास्तहीनैः सितार्येन्दुसुतैः = शुक्रगुरुबुधा नीचं गता अस्तमिताश्च न भवेयुस्तैः दृष्टे सति गजकेसरी योगः स्यात्। तत्फलमाह—गजकेसरिसञ्जात इति सरलार्थेन पदेन॥११६-११७॥

चं. २
१ ल.
गजकेसरी
र.
शु. ७
बु. ६
बृ. ८

चन्द्रमासे केन्द्रमें बृहस्पति हो तो "गजकेसरी" योग होता है। शुक्र-गुरु-बुध नीच राशिमें तथा अस्त न हों इनसे चन्द्रमा देखा जाता हो तो "गजकेसरी" योग होता है॥११६॥

जिस मनुष्यका जन्म गजकेसरी योगमें हो वह तेजस्वी, धन-धान्य वाला, मेधावी, गुणसम्पन्न और राजाका प्रियकर होता है॥ ११७॥

अथ अमलायोगः।

यस्य जन्मसमये शशिलग्नात् सद्ग्रहो यदि च कर्मणि संस्थः।
तस्य कीर्तिरमला भुवि तिष्ठेदायुषोऽन्तमविनाशनसम्पत्॥ ११८॥
लग्नाद्वा चन्द्रलग्नाद्वा दशमे शुभसंयुते।
योगोऽयममला नाम कीर्तिराचन्द्रतारकी॥ ११९॥
राजपूज्यो महाभोगी दाता बन्धुजनप्रियः।
परोपकारी गुणवान् अमलायोगसम्भवः॥ १२०॥

इदानीं सफलममलायोगमाह—यस्येत्यादिश्लोकत्रयेण । यस्य नरस्य जन्मसमये शशिलग्नात् = चन्द्रलग्नात् (चन्द्राल्लग्नाद्वा) दशमे भावे यदि कश्चिच्छुभग्रहः (बुधो गुरुः शुक्रो वा) व्यवस्थितो भवेत्तदा अमला नाम योगो भवति । तस्मिन् काले जातस्य तस्यायुषोऽन्तं=यावज्जीवनं भुवि = पृथिव्याममला कीर्तिरक्षया समम्पन्न तिष्ठेत् ।

| | | |
|---|---|---|
| | ल. बु. | |
| चं. | अमला योगः | शु. |
| | | |

कीर्तिराचन्द्रतारकी = यावत् कालं चन्द्रस्तारकाश्च भवन्ति तावत्कालं (आकल्पमित्यर्थः) तस्य कीर्तिर्जगति तिष्ठतीति भावः । अन्यत्स्पष्टमेव ॥ ११८–१२० ॥

जिसके जन्म-समय चन्द्रमासे दसवें शुभग्रहहो उसकी स्वच्छ कीर्ति, भूमिमें विद्यमान रहती है और जीवन भर उसे अविनाशी धन रहता है ॥ ११८ ॥

लग्नसे वा चन्द्रमासे दशवां स्थान शुभग्रहसे युक्त हो तो 'अमला' नामक योग होता है । इस योगमें उत्पन्न हुवे मनुष्यकी किर्ति जब तक चन्द्रमा और तारे रहें तब तक अचल रहती है । वह राजपूज्य, महाभोगी, दाता, बन्धुवर्गोंका प्रिय, परोपकारी और गुणवान् होता है ॥ ११९–१२० ॥

## अथ वास्यादियोगाः ।

व्ययधनयुतखेटैर्वासिवेशी दिनेशादुभयचरिकयोगश्चोभयस्थानसंस्थैः ।
निजगृहसुहृदुच्चस्थानयातैश्च जाता बहुधनसुखयुक्ता राजतुल्या भवन्ति ॥ १२१ ॥

इदानीं वासि-वेशि-उभयचरिकयोगानाह—व्ययेति । दिनेशात् = सूर्यात्, व्ययधनयुतखेटैः वासिवेशी योगौ भवतः । सूर्याद् द्वादशे भावे ग्रहे द्वितीये च ग्रहरहिते सति वासियोगः, सूर्याद् द्वितीये स्थाने सग्रहे व्यये शून्ये च वेशियोगः । उभयस्थानसंस्थैः = सूर्याद् द्वितीये द्वादशे च स्थाने सग्रहे सति उभयचरिको योगो ज्ञेयः । योगत्रयेऽपि ग्रहा निजगृहे, सुहृद्गृहे, उच्चस्थाने वा गताः स्युस्तदा जाताः = जायमाना नराः बहुधनसुखयुक्ता राजतुल्याश्च भवन्ति ॥ १२१ ॥

सूर्यसे बारहवें ग्रह हो तो 'वासी' योग, दूसरे हो तो 'वेसि'योग, एवं बारहवें और दूसरे दोनों स्थानोंमें ग्रह हों तो उभयचरिक योग होता है । वे ग्रह यदि स्वगृहीके, मित्र-गृहीके या उच्चस्थानीय हों तो इनमें उत्पन्न हुवे व्यक्ति बहुत धन और सुखसे युक्त राजाके तुल्य होते हैं ॥ १२१ ॥

## वास्यादियोगफलानि—

जातः सुशीलः शुभवेसियोगे वाग्मी धनी वीतभयो जितारिः ।
पापग्रहे दुष्टजनानुरक्तः पापात्मको वित्तसुखादिहीनः ॥ १२२ ॥
वासौ शुभग्रहयुते निपुणः प्रदाता विद्याविनोदसुखवित्तयशोबलाढ्यः ।
पापान्विते यदि विदेशगतोऽतिमूर्खः कामातुरो वधरुचिर्विकृताननः स्यात् ॥ १२३ ॥
सौम्यान्वितोभयचरिप्रभवा नरेन्द्रास्तत्तुल्यवित्तसुखशीलदयानुरक्ताः ।
पापान्वितोभयचरौ यदि पापकृत्या रोगाभिभूतपरकर्मरता दरिद्राः ॥ १२४ ॥

इदानीं वास्यादियोगानां फलमाह—जात इत्यादिश्लोकत्रयेण । तत्र शुभपापादिभेदेनार्थाद् योगत्रये योगकारकः शुभग्रहः पापग्रहो वा भवेत्तदा तत्तदुक्तं फलं पृथक् पृथग् वाच्यम् । श्लोकाश्चैते स्पष्टार्थाः ।

Notes—चन्द्राद् द्वितीये, व्यये, उभयत्र च सग्रहे सुनफाऽनफा दुरुधरा यथा

केन्द्र-त्रिकोणमें सब शुभग्रह बलवान् होते हैं। यदि तीसरे-छठे-ग्यारहवें पाप हों तो शुभ होते हैं ॥ ११७ ॥

छः, पांच, चार, तीन, दो ग्रहोंके मेलका अर्थात् द्विग्रह त्रिग्रहादि योगोंका और ग्रहों का भाव फल तथा उच्चादिकमें स्थित ग्रहोंके फलको सूर्यादि ग्रहोंके प्रसादसे इस ८ वें अध्यायमें वर्णन किया है ॥ ११८ ॥

इति जातकपारिजाते द्वयादिग्रहयोगाख्येऽष्टमेऽध्याये 'विमला' हिन्दी टीका समाप्ता ॥८॥

---

## अथ मान्द्यब्दादिफलाध्यायः ॥ ९ ॥

अथाधुना मान्द्यब्दादिफलाध्यायो व्याख्यायते। तत्र प्रथमं मान्दिस्थितद्वादशभावफलानि ततोऽब्दादिफलानि च कथयिष्यन्ते—

मान्द्यब्दादिफलानि वच्मि गुलिके लग्नस्थिते मन्दधी
रोगी पापयुते तु वञ्चनपरः कामी दुराचारवान्।
वित्तस्थे विषयातुरोऽटनपरः क्रोधी दुरालापवान्
पापव्योमचरान्विते गतधनो विद्याविहीनोऽथवा ॥ १ ॥
विरहगर्वमदादिगुणैर्युतः प्रचुरकोपधनार्जनसम्भ्रमः।
विगतशोकभयश्च विसोदरः सहजधामनि मन्दसुते यदा ॥ २ ॥
हिबुकभवनसंस्थे मन्दजे वीतविद्याधनगृहसुखबन्धुक्षेत्रयातोऽटनः स्यात्।
तनयभवनयाते मन्दसूनौ विशीलश्चलमतिरघबुद्धिः स्वल्पपुत्रोऽल्पजीवी ॥ ३ ॥
बहुरिपुगणहन्ता भूतविद्याविनोदी यदि रिपुगृहयाते मन्दपुत्रे तु शूरः।
कलहकृदिनपौत्रे कामयाते कुदारः सकलजनविरोधी मन्दबुद्धिः कृतघ्नः ॥ ४ ॥
विकलनयनवक्त्रः स्वल्पदेहोऽष्टमस्थे गुरुजनपितृहन्ता नीचकृत्यो गुरुस्थे।
अशुभशतसमेतः कर्मगे मन्दसूनौ निजकुलहितकर्माचारहीनो विमानः ॥ ५ ॥
अतिसुखधनतेजोरूपवान् लाभयाते दिनकरसुतपुत्रे चाग्रजं हन्ति जातः।
विषयरहितवेषो दीनवाक्यः प्रवीणो निखिलधनहरः स्यान्मन्दजेरिःफयाते ॥ ६ ॥

मान्द्यब्दादिफलानीति। अस्मिन्नध्याये मान्द्यब्दादिफलानि वच्मि, अहं कर्त्तेति शेषः। गुलिके लग्नस्थिते जातो मन्दधी रोगी च भवति। तत्र पापग्रहेण युते गुलिके जातो वञ्चनपरः, कामी, दुराचारवांश्च भवति। वित्तस्थे = द्वितीयभावगते गुलिके जातो विषयेष्वातुरोऽटनपरो भ्रमणशीलः, क्रोधी, दुरालापवान् = कुत्सितभाषी च भवति। तत्र गुलिके पापव्योमचरान्विते = पापग्रहयुक्ते जातो गतधनो धनहीनः, अथवा विद्याविहीनो भवति। एवमपरे स्पष्टार्थाः ॥ १-६ ॥

गुलिकका भावफल कहते हैं—गुलिक लग्नमें हो तो जातक मन्द बुद्धिवाला, रोगी हो। गुलिक वहां पापग्रहसे युक्त हो तो ठग, क्रोधी और दुराचारी हो। गुलिक धन भावमें हो तो विषयातुर, घूमनेवाला, क्रोधी, खराब बकवाद करनेवाला हो। यदि गुलिक वहां पापग्रहसे युक्त हो तो दरिद्र या मूर्ख होवे ॥ १ ॥

यदि गुलिक तृतीय भावमें हो तो विरह, अहंकार आदि दुर्गुणसे युक्त, विशेष कोपवाला धनके एकत्र करनेमें व्यग्र चित्त, शोक भयसे रहित, तथा भ्रातृ रहित होता है ॥ २ ॥

चतुर्थ स्थानमें गुलिक हो तो विद्यासे रहित, धन-गृह-सुख-परिवारसे रहित हो। तथा परदेशमें रहनेवाला होता है। पञ्चम स्थानमें गुलिक हो तो शील-रहित, चञ्चल-मति, पापबुद्धि, थोड़े पुत्र और थोड़ी आयु वाला होवे ॥ ३ ॥

यदि शत्रुस्थानमें गुलिक हो तो बहुत शत्रुओंके मारनेवाला, भूतविद्यामें विनोदी और पराक्रमी हो। सप्तम स्थानमें गुलिक हो तो कलह करनेवाला, दुष्टा स्त्रीवाला, सब जनों का विरोधी, मन्द बुद्धि और कृतघ्न होता है ॥ ४ ॥

अष्टम स्थानमें गुलिक हो तो विकल नेत्र और मुखवाला तथा छोटा देहवाला हो। नवममें हो तो गुरुजन तथा पितरोंको मारनेवाला नीचकर्मा हो। दशम स्थानमें गुलिक हो तो सैकड़ों अशुभ कर्म से युक्त, निजकुलके हितकारी-आचरणसे रहित, बिना मानवाला होवे ॥ ५ ॥

यदि गुलिक ११ वें भावमें हो तो जातक बहुत सुखी, धनी, तेजस्वी, सुन्दर हो तथा अपने ज्येष्ठ भाईको मारनेवाला होवे। यदि द्वादश स्थानमें गुलिक हो तो विषयसे रहित वेष, दीन वचनमें प्रवीण और सबका धन हरनेवाला होता है ॥ ६ ॥

मान्दित्रिकोणोपगते विलग्ने तद्द्वादशांशे यदि वा नवांशे।
मान्द्यन्विता मान्दियुतर्क्षनाथाः सर्वे सदाऽनिष्टकरा भवन्ति ॥ ७ ॥

मान्दिर्गुलिको यत्र तिष्ठति तस्मात् त्रिकोणे ( ५।९ ) उपगते विलग्ने = जन्मलग्ने, अथवा तद्द्वादशांशे मान्दिद्वादशांशे वा नवांशे स्थिता ग्रहाः, मान्द्यन्विता गुलिकसहिता ग्रहाः, मान्दियुतर्क्षनाथाः = मान्दिर्यस्मिन् राशौ भवति तद्राशिपतिश्चैते सर्वे सदा जातस्या-निष्टकरा भवन्ति ॥ ७ ॥

गुलिकसे त्रिकोण गत लग्नमें जो ग्रह हों, उसके द्वादशांश वा नवांशमें जो ग्रह हों, गुलिकसे युक्त ग्रह, गुलिक स्थित राशिका स्वामी ये सब सदा अनिष्ट करनेवाले होते हैं॥७॥

## अथ ग्रहयुक्तमान्दिफलम्।

संयुक्ते यदि भास्करेण गुलिके जातः पितृद्वेषको
मातृक्लेशकरस्तु शीतरुचिना भौमेन वीतानुजः ॥
सोन्मादः शशिजेन देवगुरुणा पाखण्डको दूषकः
शुक्रेण प्रमदाकृतामयहतो नीचाङ्गनावल्लभः ॥ ८ ॥
जातः सौख्यरतस्तु मन्दतनये मन्देन युक्ते यदा
सर्पेणैव विषप्रदस्तु शिखिना वह्निप्रदो जायते।
भिक्षुः स्याद्विषनाडियुक्तगृहगे भूपालकोऽपि ध्रुवं
जातस्योपखगान्विता गगनगाः कुर्वन्त्यनिष्टं फलम् ॥ ९ ॥

इदानीं ग्रहयोगान्मान्दिफलान्युच्यन्ते—संयुक्त इति। भास्करेण-सूर्येण संयुक्ते गुलिके यदि जन्म स्यात्तदा जातः पितृद्वेषकः-पित्रा सह द्वेषकरो भवति। शीतरुचिना = चन्द्रेण संयुक्ते गुलिके मातृक्लेशकरो भवति। भौमेन=मङ्गलेन संयुक्ते वीतानुजो भ्रातृहीनो भवति। शशिजेन = बुधेन संयुक्ते सोन्मादः=उन्मादेन सहितो ( पागलः ) भवति। देवगुरुणा जीवेन संयुक्ते पाखण्डको नास्तिको दूषकोऽन्यदोषदर्शी च भवति। शुक्रेण संयुक्ते प्रमदा-कृतेन=स्त्रीकृतेनामयेन=रोगेण ( प्रमेहादिना ) हतो भवति, तथा नीचाङ्गनायाः=कुलहीनायाः स्त्रिया वल्लभो भवति ॥ ८ ॥

मन्देन = शनिना युक्ते मन्दतनये = गुलिके जातो नरः सौख्यरतो भवति। सर्पेणैव = राहुणा युक्ते विषप्रदोऽन्येषां गरलदाता भवति। शिखिना = केतुना युक्ते वह्निप्रदोऽन्येषां वेश्मप्रदीपको भवति। अथ विषनाडियुक्तगृहगे गुलिके भूपालकोऽपि = नृपवंशजातोऽपि ध्रुवं=निश्चयेन भिक्षुर्भिक्षाशी भवति ( विषनाडिकाविवरणं ५ अ. १२ श्लोकटीकायां द्रष्टव्यम् ) उपखगैरुपग्रहैर्धूमादिभिरन्विताः सहिता गगनगाः = ग्रहा जातस्यानिष्टं = प्रतिकूलं फलं कुर्वन्ति। गुलिकयुक्ताः सर्वे एव भावाः खेटाश्चानिष्टकरा एव भवन्ति। तथोक्तञ्च—

गुलिकस्य तु संयोगे दोषान् सर्वत्र निर्दिशेत् । यमकण्टकसंयोगे सर्वत्र कथयेच्छुभम् ॥
दोषप्रदाने गुलिको बलीयान् शुभप्रदाने यमकण्टकः स्यात् ।
अन्ये च सर्वे व्यसनप्रदाने मान्धुक्तवीर्यार्द्धबलान्विताः स्युः ।' इति ॥ ९ ॥

यदि सूर्यसे युक्त गुलिक हो तो पितासे विरोध करनेवाला हो । चन्द्रमासे युक्त हो तो माताको क्लेश देनेवाला हो । मंगलसे युक्त हो तो छोटे भाईसे रहित हो । बुधसे युक्त हो तो उन्मादी हो । बृहस्पतिसे युक्त हो तो पाखण्डी और दूसरोंका दूषक हो । शुक्रसे युत हो तो स्त्रीजनित रोगसे निहत हो और नीच स्त्रीका स्वामी हो । शनि से युक्त यदि शनितनय ( गुलिक ) हो तो सौख्यसे युक्त हो । राहुसे युक्त हो तो जहर खिलानेवाला हो । केतुसे युक्त हो तो गृहादिके जलानेवाला होता है । विष नाडीसे युक्त गृहमें गुलिक हो तो राजा भी निश्चय भिक्षुक होवे । जन्म कालमें उपग्रहसे युक्त ग्रह जातकके अनिष्ट फलको करते हैं ॥ ८–९ ॥

## अथ संवत्सरफलम् ।

प्रभवशरदि जातः साहसी सत्यवादी सकलगुणसमेतः कालविद्धर्मशाली ।
विभवशरदि कामी निर्मलो नित्यतुष्टः प्रबलधनसमेतो बन्धुविद्यायशस्वी ॥१०॥

शुक्लाब्दे परदारको गतबलस्त्यागी मनस्वी भवे-
न्मन्त्री कार्यपरोऽतिभाषणपटुर्जातः प्रमोदाभिधे ।
धर्मी दानपरायणः सुतधनः शान्तः प्रजोत्पत्तिजो
नीतिज्ञो निपुणः कृपालुरनिशं चाङ्गीरसाब्दे धनी ॥ ११ ॥

जातः श्रीमुखवत्सरे परवधूलोलः शुचिर्वित्तवान्
योगी राजकरो महाधनबलख्यातो भवाब्दे भवः ॥
लुब्धश्चञ्चलधीः कृशामयतनुः क्रोधी युवाब्दे भिषक्
जातो धातृभवोऽन्यदारनिरतः कार्यार्थवादी शठः ॥ १२ ॥

श्रीमानीश्वरवत्सरे बलमतिर्जातो गुणग्राहकः
सत्कर्मा बहुधान्यवत्सरभवो भोगी वणिग्वृत्तिमान् ।
क्रूरः पापरतः प्रमाथिशरदि क्रोधी विबन्धुः सुखी
जातो विक्रमवत्सरे यदि धनी सेनापतिः शौर्यवान् ॥ १३ ॥

वृषशरदि दरिद्रो वीतलज्जो विकर्मा दिनकरसमतेजोरूपवान् चित्रभानौ ।
यदि निजकुलविद्याचारधर्मः सुभानौ बहुधनबलशाली तारणाब्दे विवेकी ॥१४॥

जातः पार्थिववत्सरे नरपतिः श्रीमानतुल्यः सुखी
कामी भीरुरशीलवित्तगुणवान् पापी व्ययाब्दे यदि ।
वाग्मी सर्वजिदब्दकेऽतिबलवान् शास्त्री गुणी तत्त्ववित्
सम्पन्नो यदि सर्वधारिजनितः शिल्पी नृपालप्रियः ॥ १५ ॥

शोकी दुष्टपरोऽतिपापनिरतः क्रूरो विरोध्यब्दके
मायावी मदनातुरो विकृतिजो मन्त्रक्रियातन्त्रधीः ।
निर्मोही विगुणोऽतिदीनवचनः पापी खराब्दे खलः,
सर्वानन्दकरो नृपप्रियनरो मन्त्रार्थविन्नन्दने ॥ १६ ॥

विजयशरदि धर्मो सत्यसम्पन्नशाली,
यदि जयशरदि स्याद्राजतुल्यो नृपो वा ।
मदनरतिविलोलो मन्मथाब्दे जितारि-
गुणधनरहितः स्याद्दुर्मुखाब्दे विशीलः ॥ १७ ॥

दुष्टात्मा यदि हेमल[३१]म्बिजनितः कृष्यादिकर्मोत्सुकः,
श्रीमान्विप्रजनाश्रितः फलपरित्यागी विल[३२]म्ब्यब्दके ।
रोगी भीरुरवित्तवान् चलमतिर्नीचो विका[३३]र्यब्दके-
ऽशा[३४]र्वर्यामतिवित्तभोगसुमनाः सत्यव्रताचारवान् ॥ १८ ॥
शान्तोदारकृपाकरः प्लवभ[३५]वः शूरः स्वधर्माश्रितो,
जातः स्त्रीजनवञ्चितः शुभकृ[३६]ति प्राज्ञः शुभाङ्गः सुधीः ।
ज्ञानी शोभकृ[३७]ति क्षितीशगुणवान् विद्याविनोदप्रियो
दुर्भोगी परदारकः शठमतिः क्रोध्य[३८]ब्दजः क्रोधयुक् ॥ १९ ॥
मानी हास्यरसप्रियो गुणघनश्लाघी च विश्वा[३९]वसौ,
दुष्टाचारपरः पराभ[४०]वशरज्जातः कुलध्वंसकः ।
कामी बन्धुरतः प्लवङ्ग[४१]जनितो बालप्रियो मन्दधी-
र्देवाराधनतत्परोऽतिसुभगः शौर्यान्वितः कील[४२]के ॥ २० ॥
शान्तः सर्वजनप्रियोऽतिधनिकः सौम्याब्द[४३]जो धैर्यवान्,
नानाशास्त्रविशारदो विकलधीः साधा[४४]रणाब्दे नरः ।
आशालुश्च विरोधकृद्[४५]भवनरः क्रोधी दरिद्रोऽटनो,
दुशीलः परिधा[४६]विवत्सरभवः पारुष्यवाग्वित्तवान् ॥ २१ ॥
जातो बन्धुविरागकृत् परवधूलोलः प्रमा[४७]दीजनि-
र्मोदात्मा निखिलागमश्रुतिपरश्चानन्द[४८]जस्तत्त्ववित् ।
पापी राक्ष[४९]संवत्सरे यदि वृथालापोऽपकारी सतां,
दाता दानगुणान्वितोऽनल[५०]भवः शान्तः सदाचारवान् ॥ २२ ॥
योगी पिङ्गल[५१]वत्सरे जितमना जातस्तपस्वी भवेत्,
कालज्ञो यदि काल[५२]युक्तशरदि श्रीभोगसत्कर्मवान् ।
सिद्धार्थो गुरुदेवभक्तिनिरतः सिद्धा[५३]र्थिजातः सुधी-
र्जारो रौद्र[५४]समुद्भवः कुटिलधीर्मानी दुराचारवान् ॥ २३ ॥
कामी दुर्गतिव[५५]त्सरे जडमतिः शोकाभितप्तः खलः
स्थूलोरूदरबाहुमस्तकतनुः स्याद्दुन्दु[५६]भौ भोगवान् ।
प्राज्ञः सत्यरतः सुखी च रु[५७]धिरोद्गार्यब्दजो वित्तवान्,
शान्तो बन्धुजनप्रियोऽतिसुभगो रक्ता[५८]क्षिजः शीलवान् ॥ २४ ॥
जातो जारः क्रोधनाब्[५९]दे कुमार्गी बन्धुद्वेषी चोरनिष्ठारतः स्यात् ।
शिष्टाचारः सुप्रसन्नः सुरूपो मानी वीताराातिरोगः क्षया[६०]ब्दे ॥ २५ ॥

अधुना संवत्सरफलान्युच्यन्ते । तत्र प्रथमं प्रसङ्गाद्वर्षाणां नामानि तेषामानयनप्रकारश्च लिख्यन्ते—

प्रभवो[१] विभवः[२] शुक्लः[३] प्रमोदो[४]ऽथ प्रजापतिः[५] । अङ्गिराः[६] श्रीमुखो[७] भावो[८] युवा[९] धाता[१०] तथैव च ।
ईश्वरो[११] बहुधान्यश्च[१२] प्रमाथी[१३] विक्रमो[१४] वृषः[१५] । चित्रभानुः[१६] सुभानुश्च[१७] तारणः[१८] पार्थिवो[१९] व्ययः[२०] ॥
सर्वजित्[२१] सर्वधारी[२२] च विरोधी[२३] विकृतिः[२४] खरः[२५] । नन्दनो[२६] विजयश्चैव[२७] जयो[२८] मन्मथ[२९]दुर्मुखौ[३०] ।
हेमलम्बी[३१] विलम्बी[३२] च विकारी[३३] शार्वरी[३४] प्लवः[३५] । शुभकृत्[३६] शोभकृत्[३७] क्रोधी[३८] विश्वावसु[३९]पराभवौ[४०] ॥
प्लवङ्गः[४१] कीलकः[४२] सौम्यः[४३] साधारण[४४]-विरोधकृत्[४५] । परिधावी[४६] प्रमादी[४७] च आनन्दो[४८] राक्षसो[४९]ऽनलः[५०] ॥

५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६०
पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्रदुर्मती । दुन्दुभी रुधिरोद्‌गारी रक्ताक्षी क्रोधनः क्षयः ॥

इत्येते षष्टिसँवत्सरा मध्यमगुरुराशिभोगेनोत्पन्ना भवन्ति । "बृहस्पतेर्मध्यमराशिभोगात्सँवत्सरं सांहितिका वदन्तीति" भास्करादिवचनप्रमाणात् । तेषामानयनार्थं वर्त्तमानदिने गुरोर्भगणान् द्वादशगुणितान् कृत्वा तत्र गुरोर्वर्त्तमानराशीन् संयोज्य षष्टिभिर्भागमपहरेत्, शेषाङ्कतुल्या विजयादिगणनया सँवत्सरा जायन्ते "द्वादशघ्ना गुरोर्याता भगणा वर्त्तमानकैः । राशिभिः सहिताः शुद्धाः षष्ट्या स्युर्विजयादयः" इति सूर्यसिद्धान्तवचनात् । अधुना तु शकाब्दमानं षष्टिभक्तं शेषमिताः प्रभवादिगणनया सँवत्सरा उच्यन्ते, शकादौ प्रभवनामाब्दत्वात् । तेषु षष्टिसँवत्सरेषु जातस्य फलान्यत्रोक्तानि । श्लोकाश्च सरलार्थाः । इति ॥ १०–२५ ॥

अब वर्ष—( प्रभवादि वर्ष ) फल कहते हैं—

प्रभव संवत्में उत्पन्न हो तो साहसी, सत्य बोलनेवाला, समस्त गुणसे युक्त, कालज्ञ और धर्मशाली होता है। विभव संवत्में जायमान हो तो कामी, निर्मल, नित्य सन्तुष्ट, प्रबल धनसे युत, बन्धु-विद्या-यशवाला होता है ॥ १० ॥

शुक्ल संवत्में उत्पन्न हो तो परस्त्रीगामी, बलरहित, त्यागी और मनस्वी होता है। प्रमोद संवत्में उत्पन्न हो तो मन्त्री, कार्यमें लीन, बोलनेमें चतुर होता है। प्रजापति संवत्में उत्पन्न होनेवाला धर्म करनेवाला, दानमें तत्पर, पुत्रवान्, धनवान् और शान्त होता है। अंगिरा संवत्में उत्पन्न होनेवाला नीतिज्ञ, निपुण, निरन्तर कृपालु और धनी होता है॥ ११॥

श्रीमुख संवत्में उत्पन्न हो तो परस्त्रीमें लोल ( चंचल ), पवित्र और धनवान् हो। भव संवत्में उत्पन्न हो तो योगी, राज्य करनेवाला, महाधनी, महाबली, विख्यात हो। युवा संवत्में उत्पन्न हो तो लोभी, चंचल बुद्धि, कृश, रोग युक्त शरीर, क्रोधी और वैद्य हो। धाता संवत्में जन्म हो तो दूसरोंकी स्त्रीमें रत, कार्य-अर्थवादी और शठ हो ॥ १२ ॥

ईश्वर संवत्में जायमान हो तो श्रीमान्, बलवान्, बुद्धिमान् और गुणग्राही हो। बहुधान्य संवत्में उत्पन्न हो तो सत्कर्मी, भोगी, वाणिज्य करनेवाला हो। प्रमाथि संवत्में जन्म हो तो क्रूर, पापी, क्रोधी, बिना बन्धुका और सुखी हो। यदि विक्रम संवत्में जन्म हो तो धनी, सेनापति और पराक्रमी हो ॥ १३ ॥

वृष संवत्में उत्पन्न हो तो दरिद्र, निर्लज्ज और कर्महीन हो। चित्रभानु संवत्में उत्पन्न हो तो सूर्यके तुल्य तेजवान् और रूपवान् हो। यदि सुभानुमें जन्म हो तो निज कुलकी विद्या और आचारसे युक्त हो। तारण संवत्में जन्म हो तो बहुत धनी, बली और विवेकी हो ॥ १४ ॥

पार्थिव संवत्में उत्पन्न हो तो राजा, श्रीमान्, अतुल्य सुखी हो। यदि व्यय संवत्में जन्म हो तो कामी, डरपोक, शील-धन-गुण रहित और पापी हो।

सर्वजित् संवत्में उत्पन्न हो तो वाचाल, अत्यन्त बलवान्, शास्त्री, गुणी, तत्त्ववेत्ता हो। सर्वधारी संवत्में उत्पन्न हो तो सम्पन्न, कारीगर और राजप्रिय होता है ॥ १५ ॥

विरोधी संवत् में उत्पन्न हो तो शोकी, दुष्ट परायण, विशेष पापकर्म करनेवाला, क्रूर हो। विकृत संवत्में उत्पन्न हो तो मायावी, कामातुर, मन्त्र-क्रिया-तन्त्र-बुद्धि वाला हो। खर संवत्में पैदा हुआ निर्मोही, निर्गुण, अति दीन वचन बोलनेवाला और पापी तथा खल हो। नन्दन संवत्में उत्पन्न मनुष्य सब आनन्द करनेवाला, राजाका प्रिय, मन्त्रके अर्थका ज्ञाता होता है ॥ १६ ॥

विजय संवत्में जन्म हो तो धार्मिक, सत्यवक्ता, सम्पत्तिवाला हो। यदि जय संवत् में उत्पन्न हो तो राजाके सदृश हो या राजा हो। मन्मथ संवत्में जायमान हो तो काम के लिये चंचल और शत्रुजित् हो। दुर्मुख संवत्में जन्म हो तो गुणसे रहित और शील से रहित हो ॥ १७ ॥

यदि हेमलंबि संवत्में पैदा हो तो दुरात्मा, कृषि आदि कर्ममें उत्सुक हो। विलम्बी

संवत्में उत्पन्न हो तो श्रीमान्, विप्रजनका आश्रित, फलका परित्यागी हो। विकारी संवत्में जन्म हो तो रोगी, डरपोक, गरीब, चलबुद्धि वाला हो। शर्वरी संवत्में जन्म हो तो विशेष धनी, अतिभोगी, सुन्दरचित्त, सत्यव्रत और आचारवान् हो ॥ १८ ॥

प्लव संवत्में जायमान शान्त, उदार, कृपालु, पराक्रमी और धर्मात्मा हो, शुभकृत् संवत् में उत्पन्न हो तो स्त्रीजनोंसे वंचित, प्राज्ञ, शुभांग, पंडित हो। शोभकृत् संवत्में उत्पन्न हो तो ज्ञानी, राजा, गुणवान्, विद्याविनोदका प्रिय हो। क्रोधी संवत्में पैदा हो तो दुर्भोगी, परस्त्रीगामी, शठबुद्धि और क्रोधी हो ॥ १९ ॥

विश्वावसु संवत्में उत्पन्न हो तो मानी, हास्यरसका प्रिय, गुणधनकी श्लाघा करने वाला हो। पराभव संवत्में उत्पन्न हो तो दुष्ट आचरणवाला, कुलनाशक हो। प्लवंग संवत्में जायमान कामी, बन्धुरत, बालकप्रिय और मंदबुद्धि हो। कील संवत्में पैदा हो तो देवताकी पूजा करनेमें तत्पर, अतिसुन्दर पराक्रमसे युक्त हो ॥ २० ॥

सौम्य संवत्में जायमान हो तो शान्त, सर्वजनका प्रिय, विशेष धनवान् और धैर्य धारण करनेवाला हो। साधारण संवत्में उत्पन्न हो तो मनुष्य नाना प्रकारके शास्त्रका ज्ञाता, विकल बुद्धि हो। विरोधी संवत्का उत्पन्न मनुष्य आशापर रहने वाला, क्रोधी, दरिद्र, भ्रमणशील हो। परिधावी संवत्का जन्मा बालक दुःशील, कडुआ वचन बोलने वाला धनवान् हो ॥ २१ ॥

प्रमादीसंवत् का पैदा हुआ मनुष्य बन्धुवोंसे विराग करनेवाला, पराई स्त्रीको भोगने वाला होवे। आनन्द संवत्का जायमान नर प्रसन्नचित्त, सब शास्त्र-वेदमें युक्त, तत्त्वज्ञानी होवे। राक्षस संवत्में उत्पन्न मनुष्य पापी, वृथा बकवादी, अच्छे लोगों का अपकारी होता है। अनल संवत्का उत्पन्न मनुष्य दानी, गुणी, शान्त और सदाचारी होता है ॥ २२ ॥

पिंगल संवत्में उत्पन्न हो तो योगी, मनको जीतने वाला और तपस्वी हो। काल संवत् में जन्म हो तो कालज्ञ, लक्ष्मी ( धन ) का उपयोगी, सत्कर्मी हो। सिद्धार्थी संवत्में उत्पन्न हो तो सिद्धार्थी, गुरुका-देवताका भक्त, और विद्वान् हो। रौद्र संवत्में उत्पन्न हो तो परस्त्रीगामी, कुटिल, मानी और दुराचारी हो ॥ २३ ॥

दुर्मति संवत्में उत्पन्न हो तो कामी, जडबुद्धि, शोकसे संतप्त और खल हो। दुंदुभि संवत्में जायमान हो तो स्थूल जंघा, स्थूल बाहु, स्थूल मस्तक, स्थूल शरीर हो तथा भोगवान् हो। रुधिरोद्गारी संवत्में पैदा हुआ हो तो बुद्धिमान्, सत्यवक्ता, सुखी, और धनवान् हो। रक्ताक्षि संवत्में उत्पन्न हो तो शान्त, बन्धुजनका प्रिय, अतिसुन्दर और शीलवान् हो ॥ २४ ॥

क्रोध संवत्में उत्पन्न हो तो परस्त्रीगामी, कुमार्गी, बन्धुवैरी, चोरीमें निरत हो। क्षयसंवत्में जायमान हो तो शिष्टाचारवाला, सुन्दर, प्रसन्न, स्वरूपवान्, मानी, शत्रु तथा रोग से रहित होवे ॥ २५ ॥

## अथायनफलम्।

उत्तरायणसमुद्भवः पुमान् ज्ञानयोगनिरतश्च नैष्ठिकः।
दक्षिणायनभवः प्रगल्भवाग् भेदबुद्धिरभिमानतत्परः ॥ २६ ॥

इदानीमयनफलमुच्यते। तत्र प्रथमं विज्ञानायनमित्यत्रोच्यते। "......सौम्ययाम्यायनं मकरकर्कयोर्निरूपणम्" इति रामाचार्यवचनात्, "मकरकर्कटसङ्क्रमतोऽयनम्" इति भास्करवचनाच्च मकरादिराशिषट्के सञ्चरति सूर्ये सौम्यायनं, कर्कादिराशिषट्के च याम्यायनमिति सिद्धम्। तस्मिन्सौम्यायने ( उत्तरायणे ) याम्यायने ( दक्षिणायने ) च जातस्य फलमत्रोक्तम्। श्लोकस्तु सरलार्थ एवेति ॥ २६ ॥

उत्तरायणमें उत्पन्न होनेवाला मनुष्य ज्ञान योगमें निरत और नैष्ठिक होता है। दक्षिणायनमें उत्पन्न होनेवाला बोलनेमें चतुर, भेदबुद्धि और अभिमानी होता है ॥ २६ ॥

## अथर्तुफलम् ।

दीर्घायुर्धनिको वसन्तसमये जातः सुगन्धप्रियो,
ग्रीष्मर्तौ घनतोयसेव्यचतुरो भोगी कृशाङ्गः सुधीः ।
क्षारक्षीरकटुप्रियः सुवचनो वर्षर्तुजः स्वच्छधीः,
पुण्यात्मा सुमुखः सुखी यदि शरत्कालोद्भवः कामुकः ॥ २७ ॥
योगी कृशाङ्गः कृषकश्च भोगी हेमन्तकालप्रभवः समर्थः ।
स्नानक्रियादानरतः स्वधर्मी मानी यशस्वी शिशिरर्तुजः स्यात् ॥ २८ ॥

इदानीमृतुफलमुच्यते । तत्र 'मृगादिराशिद्वयभानुभोगात् षडर्त्तवः स्युः शिशिरो वसन्त' इत्याद्युक्तेः, मकरकुम्भयोः सञ्चरति भास्वति शिशिरर्त्तुः । मीनमेषयोर्वसन्तः । वृषमिथुनयोर्ग्रीष्मः । कर्कसिंहयोर्वर्षा । कन्यातुलयोः शरत् । वृश्चिकधनुषोर्हेमन्त इति षड् ऋतवो भवन्ति । तेषु ऋतुषु जातानां फलान्यत्रोक्तानि । दीर्घायुरित्यादयः । स्पष्टार्थौ श्लोकौ ॥ २७–२८ ॥

वसन्त ऋतुमें बालक उत्पन्न हो तो दीर्घायु, धनिक, सुगन्धप्रिय होवे । ग्रीष्म ऋतुमें पैदा हो तो अगाध जलका सेवी, चतुर, भोगी, कृशतनु और पण्डित होवे । वर्षा ऋतुका जायमान मनुष्य क्षार-दूध-कटु-पदार्थका प्रेमी, सुवचन, स्वच्छ, बुद्धिवाला होवे । शरद् ऋतुका जन्मा हुआ बालक पुण्यात्मा, सुमुख, सुखी, कामी हो । हेमन्त ऋतुका जायमान जातक योगी, कृशशरीर, कृषक, भोगी और समर्थ होवे । शिशिर ऋतुका जायमान मनुष्य स्नान-क्रिया-दानमें रत, स्वधर्मी मानी और यशस्वी होवे ॥ २७–२८ ॥

## अथ मासफलम् ।

चैत्रे सर्वकलागमश्रुतिपरो नित्योत्सवः श्रीरतो
वैशाखे यदि सर्वशास्त्रकुशलः स्वातन्त्रिको भूपतिः ।
ज्येष्ठे मासि चिरायुरर्थतनयी मन्त्रक्रियाकोविद-
श्चाषाढेऽतिधनी कृपालुरनिशं भोगी परद्वेषकः ॥ २९ ॥
जातः श्रावणमासि देवधरणीदेवार्चने तत्परो
नानादेशरतश्च भाद्रपदजस्तन्त्री मनोराज्यवान् ।
मासे चाश्वयुजि स्वकीयजनविद्वेषी दरिद्रश्चलः
पुष्टाङ्गः कृषको विशालनयनो वित्ताधिकः कार्तिके ॥ ३० ॥
सुरगुरुपितृभक्तो मार्गशीर्षे च धर्मी धनगुणबलशाली तुङ्गनासस्तु पुष्ये ।
खलमतिरतिधर्माचारवान् माघमासि प्रतिदिनमुपकर्ता फाल्गुने गानलोलः ॥३१॥

अधुना मासफलान्युच्यन्ते । तत्र 'मासास्तथा च तिथयस्तुहिनांशुमानात्' इत्युक्तेः, मासाश्चान्द्रा एव ग्राह्याः । चान्द्रो मासस्तु दर्शान्तद्वयान्तर्वर्त्ती कालः 'दर्शावधिश्चान्द्रमसस्तु मासः' इति प्रमाणात् । अत्रेदमवधेयम्—चैत्रामान्तकालाद्वैशाखामान्तावधिरेकश्चान्द्रमासः । तस्मिन् सूर्ये मेषराशौ सञ्चरति स चान्द्रमासश्चैत्राह्वयः । एवं वैशाखामान्ताज्ज्येष्ठामान्तपर्यन्तं वृषे सञ्चरति सूर्ये वैशाखो मास इत्येवमपरेऽपि मासाः ।

'मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः ।
चैत्राद्यः स ज्ञेयः' इति वचनस्वरसात् ।

तेषु चैत्रादिद्वादशमासेषु जातानां फलान्यत्रोक्तानि । श्लोकास्तु स्पष्टार्था एवेति २९-३१

चैत्र मासमें जन्म हो तो सभी कला-आगम और वेदका ज्ञाता हो, नित्य उत्सव तथा लक्ष्मीमें रत रहे । यदि वैशाखमें जन्म हो तो सब शास्त्रमें कुशल तथा स्वतन्त्र रहे और

राजा होवे। ज्येष्ठ मासमें उत्पन्न हो तो बड़ी आयु वाला हो, धनवान् तथा पुत्रवान् हो मन्त्र क्रियाका ज्ञाता हो। आषाढ़ मासमें जन्म हो तो विशेष धनी, कृपालु, अहर्निश भोगी और परायेसे वैर करनेवाला हो ॥ २९ ॥

श्रावण मासमें जन्म हो तो भूमिदेव (ब्राह्मण) तथा देवता की पूजा करनेमें तत्पर हो। भाद्रपदमें जन्म हो तो नाना प्रकारके देशमें लीन, तन्त्री, मनोराज्यवान् होवे। आश्विन मासमें जन्म हो तो अपने जनोंका वैरी, दरिद्र, चंचल हो। कार्तिक मासमें हो तो पुष्टांग, कृषक, विशालनेत्र तथा अधिक धनवाला हो ॥ ३० ॥

मार्गशीर्ष ( अगहन ) मासमें जन्म हो तो देवता-गुरु-पितरका भक्त और धर्मात्मा हो। पौषमें जन्म हो तो धन-गुण-बलमें प्रबल और ऊंची नासिकावाला हो। माघमें जन्म हो तो खलबुद्धि, विशेष धर्म करनेवाला हो। फाल्गुन मासमें जन्म हो तो प्रतिदिन उपकार करनेवाला और गानमें चतुर होवे ॥ ३१ ॥

## अथ पक्षफलम्।

वलक्षपक्षे यदि पुत्रपौत्रधनाधिको धर्मरतः कृपालुः ॥
स्वकार्यवादी निजमातृभक्तः स्वबन्धुवैरी यदि कृष्णपक्षे ॥ ३२ ॥

इदानीं पक्षफलमुच्यते। प्रतिमासं शुक्लकृष्णभेदेन द्वौ पक्षौ भवतः। दर्शान्तात्पूर्णिमान्तं यावदेकः शुक्लपक्षः। पूर्णिमान्ताद्दर्शान्तं यावद् द्वितीयः कृष्णपक्षः। तस्मिन्पक्षद्वितये जातस्य फलमत्रोक्तम्। वलक्षेति। शुक्लपक्षे 'वलक्षो धवलोऽर्जुनः' इत्यमरोक्तेः। शेषं स्पष्टमिति ॥ ३२ ॥

शुक्ल पक्षमें जन्म हो तो अधिक पुत्र-पौत्र-धनसे युक्त, धर्ममें लीन और कृपालु हो। कृष्ण पक्षमें जन्म हो तो अपने कार्यमें वाद-विवाद करनेवाला, अपनी माताका भक्त और अपने परिवारका शत्रु हो ॥ ३२ ॥

## अथ कालफलम्।

जातः प्रत्युषसि स्वधर्मनिरतः सत्कर्मजीवी सुखी
मध्याह्ने यदि राजतुल्यगुणवान् जातोऽपराह्णे धनी।
सायंकालभवः सुगन्धवनितालोलः खलात्माऽटनो
रात्रौ तत्फलमेव सौख्यबहुलः सूर्योदये जायते ॥ ३३ ॥

इदानीं कालफलमुच्यते। प्रत्युषसि = दिनमुखे ( प्रातः काले ) जातः स्वधर्मनिरत इत्यादि सर्वं स्पष्टमेवेत्यलम् ॥ ३३ ॥

प्रातः काल जन्म हो तो अपने धर्ममें युक्त, सत्कर्म से जीवन रखनेवाला और सुखी होवे। मध्याह्नमें जन्म हो तो राजाके तुल्य, गुणवान् होवे। अपराह्णमें जन्म हो तो धनी होवे। सायंकालका उत्पन्न मनुष्य सुगंध और स्त्रीमें प्रीति रखनेवाला, खल, घूमने-फिरने वाला होता है। रात्रिमें उत्पन्न नरको सायंकालके सदृश ही फल होता है और सूर्योदयके समय उत्पन्न हो तो बहुत सौख्य वाला होवे ॥ ३३ ॥

## अथ तिथिफलम्।

महोद्योगी जातः प्रतिपदि तिथौ पुण्यचरितो-
द्वितीयायां तेजःपशुबलयशोवित्तविपुलः।
तृतीयायां पुण्यप्रबलभयशीलश्च पटुवाक्
चतुर्थ्यामाशालुस्त्वटनचतुरो मन्त्रनिपुणः ॥ ३४ ॥
पञ्चम्यामखिलागमश्रुतिरतः कामी कृशाङ्गश्चलः
षष्ठ्यामल्पबलो महीपतिसमः प्राज्ञोऽतिकोपान्वितः।
सप्तम्यां कठिनोरुवाग् जनपतिः श्लेष्मप्रधानो बली
चाष्टम्यामतिकामुकः सुतवधूलोलः कफात्मा भवेत् ॥ ३५ ॥

ख्यातो दिव्यतनुः कुदारतनयः कामी नवम्यां तिथौ
धर्मात्मा पटुवाक्कलत्रतनयः श्रीमान् दशम्यां धनी ।
देवब्राह्मणपूजको हरितिथौ दासान्वितो वित्तवान्
द्वादश्यामतिपुण्यकर्मनिरतस्त्यागी धनी पण्डितः ॥ ३६ ॥
त्रयोदश्यां लुब्धप्रकृतिरतिकामी च धनवान्
चतुर्दश्यां कोपी परधनवधूको गतमनाः ।
अमायामाशालुः पितृसुरसमाराधनपरो
धनी राकाचन्द्रे यदि कुलयशस्वी च सुमनाः ॥ ३७ ॥

इदानीं तिथिफलान्युच्यन्ते । एकस्मिन्पक्षे पञ्चदश तिथयः । ताश्च सूर्याचन्द्रमसोरन्तरद्वादशांशतुल्या भवन्ति । यतोऽमान्ते सूर्याचन्द्रमसोरन्तराभावः 'दर्शः सूर्येन्दुसङ्गमः' इत्युक्तेः । पूर्णान्ते तयोरन्तरं षड्राशिमितम् । राशिषट्के शताधिकाशीतिभागाः (१८०°) । अतः १ तिथिः= $\frac{१८०°}{१५}$ = १२ । तासु पञ्चदशतिथिषु जातानां फलान्यत्रोक्तानि । महोद्योगीत्यादिभिः । स्पष्टार्थश्चैते श्लोकाः ॥ ३४-३७ ॥

प्रतिपदा तिथिमें जन्म हो तो महा उद्योगी, धर्माचरणवाला हो । द्वितीया तिथिमें पैदा हो तो तेजस्वी, विपुल पशु-बल-यश-वाला हो । तृतीया तिथिमें जन्म हो तो पुण्यमें प्रबल, दराकू और बुद्धिपूर्वक वाक्य बोलनेवाला हो । चतुर्थी तिथिमें जन्म हो तो दूसरे की आज्ञा रखनेवाला, घूमता, चतुर और मंत्रनिष्ठ हो ॥ ३४ ॥

पंचमी तिथिमें उत्पन्न हो तो समस्त आगम-शास्त्र-वेदमें तत्पर हो, कामी तथा दुर्बल हो । षष्ठी तिथिमें पैदा हो तो अल्पबली, राजाके तुल्य, बुद्धिमान् और क्रोधी हो । सप्तमी तिथिमें उत्पन्न हो तो कठिन जंघा और कड़ी वचन बोलनेवाला, मनुष्योंका स्वामी, कफप्रकृति और प्रधान बली होवे । अष्टमी तिथिमें जायमान हो तो विशेष कामी, पुत्र-स्त्रीमें लीन, कफ-प्रकृतिवाला हो ॥ ३५ ॥

नवमी तिथिमें उत्पन्न हो तो विख्यात, दिव्यशरीर, दुष्ट स्त्री-पुत्रवाला और कामी हो । दशमी तिथिमें उत्पन्न हो तो धर्मात्मा, चतुर-वचन, स्त्री-पुत्रसे सम्पन्न, श्रीमान् और धनी हो । एकादशी तिथिमें देव-ब्राह्मणका पूजन करनेवाला, दासयुक्त और धनवान् हो । द्वादशी तिथिमें अत्यन्त पुण्य कर्ममें युक्त, त्यागी, धनी और पंडित हो ॥ ३६ ॥

त्रयोदशी तिथिमें उत्पन्न हो तो लोभी, अतिकामी और धनी होवे । चतुर्दशी तिथिमें जायमान हो तो पर-धनग्राही, परस्त्रीग्राही और हीनबुद्धि हो । अमावास्या तिथिमें उत्पन्न हो तो आशा रखनेवाला, पितर-देवकी पूजामें तत्पर रहे । यदि पूर्णिमा तिथिमें उत्पन्न हो तो धनी, कुलमें यशस्वी और प्रसन्न चित्त हो ॥ ३७ ॥

अथ वारफलम् ।

मानी पिङ्गलकेशलोचनतनुश्चादित्यवारे विभुः
कामी कान्तवपुर्दयालुरनिशं शीतांशुवारोद्भवः ।
क्रूरः साहसवादकार्यनिरतो भूसूनुवारे सदा
देवब्राह्मणपूजकः सुवचनः सौम्यस्य वारोदये ॥ ३८ ॥
यज्वा भूपतिवल्लभश्च गुणवान् ख्यातो गुरोर्वासरे
धान्यक्षेत्रधनाश्रितः सितदिने सर्वप्रियः कामधीः ।
मन्दप्रायमतिः परान्नधनभुग् वादप्रवादान्वितो
द्वेषी बन्धुजनावरोधकुशलो मन्दस्य वारोद्भवः ॥ ३९ ॥

इदानीं वारफलमुच्यते । तत्र सूर्यादिसप्तग्रहाणां स्वस्वनाम्ना सप्त वाराः सूर्योदयद्वय-

न्तर्गतकालप्रमाणा भवन्ति 'इनोदयद्वयान्तरं तदर्कसावनं दिनमित्युक्तेः'। ते च रवि-सोम-मङ्गल-बुध-बृहस्पति-शुक्र-शनय इति सप्त वारा यथाक्रमं भवन्ति, 'मन्दादधः क्रमेण स्युश्चतुर्था दिवसाधिपाः' इति सूर्यसिद्धान्तवचनस्वरसात्। तेषु सप्तवारेषु जातस्य फलान्यत्रोक्तानि। श्लोकौ स्पष्टार्थाविति॥ ३८-३९॥

रविवारमें जन्म हो तो मानी, पिंगल बाल-नेत्र-शरीर हो और समर्थ हो। चन्द्रवार में जायमान हो तो कामी, कान्तशरीर और अहर्निश दयालु हो। मंगलवारमें उत्पन्न होने से क्रूर, सदा साहसवादी और कार्यपरायण हो। बुधवारमें उत्पन्न हो तो देव-ब्राह्मण को पूजनेवाला और सुवचन बोलनेवाला हो॥ ३८॥

गुरुवारमें उत्पन्न हो तो यज्ञ करनेवाला राजवल्लभ, गुणवान् और विख्यात हो। शुक्रवारमें उत्पन्न हो तो धान्य-क्षेत्र-धनाश्रित, सर्वप्रिय, कामबुद्धिवाला हो। शनिवार में उत्पन्न हो तो प्रायः मंदबुद्धि पराम्न-धनयुक्, वाद प्रवादसे युक्त, वैरी, बन्धुजनोंके रोकनेमें कुशल होता है॥ ३९॥

## अथ नक्षत्रनामानि।

तुरङ्गदस्राश्वियुगश्विनीहया यमः कृतान्तो भरणी च याम्यभम्।
हुताशनोऽग्निर्बहुला च कृत्तिका विधिर्विरिञ्चिः शकटं च रोहिणी॥ ४०॥

सौम्यश्चान्द्राग्रहायण्युडुपमृगशिरस्तारका रौद्रमार्द्रा
चादित्यं तत्पुनर्वस्विति सुरजननी तिष्यपुष्यामरेज्याः।
आश्लेषाहिर्भुजङ्गः पितृजनकमघाः फल्गुनी भाग्यभं स्या-
दर्यम्णश्चोत्तराख्यं भगमिति कथितं भानुहस्तारुणार्काः॥ ४१॥

त्वष्टा च चित्रासुरवर्द्धकी तु स्वाती मरुद्वातसमीरणाख्याः।
वायुः समीरः परतो विशाखा द्विदैवतेन्द्राग्निकशूर्पभानि॥ ४२॥

अनूराधा मैत्रं त्वथ कुलिशतारा: शतमखः
सुरस्वामी ज्येष्ठा परमसुरमूलक्रतुभुजः।
पयःपूर्वाषाढा सलिलजलतोयानि च समु-
त्तराषाढा विश्वं परमभिजिदाहुर्मुनिगणाः॥ ४३॥

श्रोणाविष्णुहरिश्रुतिश्रवणभान्याहुः श्रविष्ठा वसु
प्राचेताः शततारका वरुणभं चाजैकपादोऽजपात्।
पूर्वप्रोष्ठपदर्क्षकं परमहिर्बुध्न्योत्तरा प्रोष्ठपात्
पूषारेवतिपौष्णभानि मुनिभिः सङ्कीर्तितानि क्रमात्॥ ४४॥

इदानीं नक्षत्राणां नामान्युच्यन्ते। तत्र प्रथमं किन्नाम नक्षत्रमित्युच्यते। न क्षरति न गच्छतीति नक्षत्रम्। एतदुक्तं भवति। यथा सूर्यादयो ग्रहाः स्वस्वमार्गे व्रजन्तो दृश्यन्ते तथा नक्षत्राणां चलनं नेति। तानि स्थिराण्येव। षट्शताधिकैकविंशतिसहस्र-(२१६००) कलात्मकस्य क्रान्तिमण्डलस्य तुल्यानि सप्तविंशतिखण्डान्यष्टशत-(८००) कलामानकानि कृत्वा प्रत्येकस्य फलादेशार्थं ग्रहगतिमानार्थं च नक्षत्रमिति नामाकारि प्राक्तनैः। तान्येव क्रान्तिवृत्तस्य सप्तविंशति खण्डानि सप्तविंशति नक्षत्राण्युच्यन्ते। तानि च पूर्वपूर्वक्रमेण स्थापितानि ज्ञेयानि। यथा-१ अश्विनी, २ भरणी, ३ कृत्तिका, ४ रोहिणी, ५ मृगशिराः, ६ आर्द्रा, ७ पुनर्वसुः, ८ पुष्यः, ९ श्लेषा, १० मघा, ११ पूर्वफल्गुनी, १२ उत्तरफल्गुनी, १३ हस्तः, १४ चित्रा, १५ स्वाती, १६ विशाखा, १७ अनुराधा, १८ ज्येष्ठा, १९ मूलम्, २० पूर्वाषाढः, २१ उत्तराषाढः, २२ श्रवणः, २३ धनिष्ठा, २४ शतभिषा, २५ पूर्वभाद्रः,

२६ उत्तरभाद्रः, २७ रेवती । अत्रोत्तराषाढस्यान्तिमं चतुर्थांशं तथा श्रवणस्यादिमं पञ्चदशांशं ( २५२ ) शतद्वयाधिकद्विपञ्चाशत्कलामानकमभिजिन्नाम नक्षत्रमुच्यते । तत्केवलं फलादेशार्थमेव । 'वैश्वप्रान्त्याङ्घ्रिश्रुतितिथिभागतोऽभिजित्स्यादिति, रामाचार्योक्तेः । तेषां नक्षत्राणां नामान्तराण्यत्रोक्तानि ।

१ अश्विनी = तुरङ्गः, दस्रः, अश्वियुक्, अश्विनी, हयः । २ भरणी = यमः, कृतान्तः, भरणी, याम्यभम् । ३ कृत्तिका = हुताशनः, अग्निः, बहुला, कृत्तिका । ४ रोहिणी = विधिः, विरिञ्चिः, शकटं, रोहिणी । ५ मृगशिराः = सौम्यः, चान्द्रः, अग्रहायणी, उडुपः, मृगशिरः । ६ आर्द्रा = तारकाः, रौद्रम्, आर्द्रा । ७ पुनर्वसुः = आदित्यम्, पुनर्वसु, सुरजननी । ८ पुष्यः = तिष्यः, पुष्यः, अमरेज्यः । ९ श्लेषा = आश्लेषा, अहिः, भुजङ्गः । १० मघा = पितृ, जनकः, मघा । ११ पू. फ. = फल्गुनी, भाग्यभम् । १२ उ. फ. = अर्यमा, उत्तरभगम् । १३ हस्तः = भानुः, हस्तः, अरुणः अर्कः, । १४ चित्रा = त्वष्टा, चित्रा, सुरवर्द्धकिः । १५ स्वाती = मरुत्, वातः, समीरणः, वायुः, समीरः । १६ विशाखा = द्विदैवतम्, इन्द्राग्निकम्, शूर्पभम् । १७ अनुराधा = अनूराधा, मैत्रम् । १८ ज्येष्ठा = कुलिशतारा, शतमखः, सुरस्वामी, ज्येष्ठा । १९ मूलम् = असुरः, मूलम्, क्रतुभुक् । २० पू. षा. = पूर्वाषाढा, पयः, सलिलम्, जलम्, तोयम् । २१ उ. षा. = उत्तराषाढा, विश्वम् ( चतुर्थ—चरणमभिजित् ) । २२ श्रवणा = श्रोणा, विष्णुः, हरिः, श्रुतिः, श्रवणः । २३ धनिष्ठा = श्रविष्ठा, वसु, धनिष्ठा । २४ शतभिषा = प्रचेताः, शततारकाः, वरुणभम् । २५ पू. भा. = अजैकपादः, अजपात्, पूर्वप्रोष्ठपदम् ।। २६ उ. भा. = अहिर्बुध्न्यम्, उत्तराप्रोष्ठपात् । २७ रेवती=पूषा, रेवती, पौष्णभम् ।

इत्येतानि नक्षत्राणां नामान्तराणि मुनिभिः क्रमात् सङ्कीर्तितानि । अन्यान्यपि नामान्तराणि ग्रन्थान्तरेभ्यो ज्ञेयानि ॥ ४०—४४ ॥

**तुरङ्ग, दस्र, अश्वियुग्, अश्विनी, हय ये अश्विनीके नाम हैं१ । यम, कृतान्त, भरणी, याम्य ये भरणीके नाम हैं २ । हुताशन, अग्नि, बहुला, कृत्तिका ये कृतिकाके नाम हैं ३ । विधि, विरिञ्चि, शकट, ये रोहिणीके नाम हैं ४ ॥ ४० ॥**

**सौम्य, चान्द्र, अग्रहायणी, उडुप, मृगशिर ये मृगशिराके नाम हैं ५ । तारका, रौद्र, आर्द्रा ये आर्द्राके नाम हैं ६ । अदिति, पुनर्वसु, सुरजननी ये पुनर्वसुके नाम हैं ७ । तिष्य पुष्य ,अमरेज्य ये पुष्यके नाम हैं ८ । आश्लेषा, अहि, भुजङ्ग ये श्लेषाके नाम हैं ९ । पितृ, जनक, मघा, ये मघा के नाम हैं १० । फल्गुनी, भाग्य ये पूर्वाफाल्गुनीके नाम हैं ११ । अर्यमा, उत्तरभग, ये उत्तराफाल्गुनीके नाम हैं १२ । भानु, हस्त, अरुण, अर्क ये हस्तके नाम हैं १३ ॥ ४१ ॥**

**त्वष्टा, चित्रा, सुरवर्धकि ये चित्राके नाम हैं १४ । स्वाती, मरुत्, वात, समीरण, वायु, समीर ये स्वातीके नाम हैं १५ । विशाखा, द्विदैवत, इन्द्राग्निक, शूर्पभ ये विशाखाके नाम हैं १६ ॥ ४२ ॥**

**अनुराधा, मैत्र ये अनुराधाके नाम हैं १७ । कुलिशतारा, शतमख, सुरस्वामी, ज्येष्ठा, ये ज्येष्ठाके नाम हैं १८ । असुर, मूल, क्रतुभुज् ये मूलके नाम हैं १९ । पयः, पूर्वाषाढ, सलिल, जल, तोय ये पूर्वाषाढके नाम हैं २० । उत्तराषाढके विश्व उसके ४ थें चरणके नाम अभिजित् मुनिगणों ने कहा है २१ ॥ ४३ ॥**

**श्रोणा, विष्णु, हरि, श्रुति, श्रवण ये नाम श्रवणके हैं २२ । श्रविष्ठा, वसु ये नाम धनिष्ठाके हैं२३।प्रचेताः, शततारका,वरुण शतभिषके नाम हैं २४। अजैकपाद, अजपात, पूर्वप्रोष्ठपद, पूर्वभाद्रके नाम हैं २५ । अहिर्बुध्न्य, उत्तरा, प्रोष्ठपात , उत्तराभाद्र पदके नामहैं २६ । पूषा, रेवती, पौष्ण ये रेवतीके नाम हैं २७ । ये नक्षत्रोंके नाम मुनि लोग क्रमसे कहे हैं ॥४४॥**

अथ गण्डान्ततारा:।

मूलावासवयोर्मघाभुजगयोः पौष्णाश्वयोः सन्धिजं
गण्डान्तं प्रहरप्रमाणमधिकानिष्टप्रदं प्राणिनाम् ॥
ज्येष्ठादानवतारसन्धिघटिका चाभुक्तसंज्ञा भवेत्
तन्नाडीप्रभवाङ्गनासुतपशुप्रेष्याः कुलध्वंसकाः ॥ ४५ ॥

उक्तेषु केषुचिन्नक्षत्रेषु केचिद्भागा गण्डान्तशब्देनोच्यन्ते। तेऽत्रोच्यन्ते। मूलावासवयोर्मूलज्येष्ठयोः, मघाभुजगयोर्मघाश्लेषयोः, पौष्णाश्वयोः = रेवत्यश्विन्योः नक्षत्रयोः सन्धिर्गं प्रहरप्रमाणं सार्द्धसप्तघटीप्रमाणम्। एतदुक्तं भवति। ज्येष्ठान्ते पादोनं घटिकाचतुष्टयं मूलादौ घटिकाचतुष्टयं पादोनञ्चेति संमिश्रणेन प्रहरप्रमाणं सार्द्धसप्तघटीमितं (७।३०) गण्डान्तं= गण्डान्ताख्यः कालः स्यात्। तद्गण्डान्तं प्राणिनामधिकानिष्टप्रदमत्यशुभदं भवतीति। तथोक्तं गण्डान्तं रामाचार्येण, परं घटिकाचतुष्टयमेव—"ज्येष्ठापौष्णभसार्पभान्त्यघटिकायुग्मं च मूलाश्विनीपित्र्यादौ घटिकाद्वयं निगदितं तद्भस्य गण्डान्तकम्" इति।

अथाभुक्तघटिकोच्यते—ज्येष्ठादानवतारयोः = ज्येष्ठामूलनक्षत्रयोः सन्धिघटिका (ज्येष्ठान्त्यमूलादिभवमेकघटिकात्मकमिति) अभुक्तसंज्ञा भवेत्। तस्यामभुक्तसंज्ञनाड्यां प्रभवाः = जायमानाः अङ्गनाः = कन्याः, सुताः पुत्राः, पशवश्चतुष्पदाः, प्रेष्याः भृत्याश्च कुलध्वंसकाः, अर्थाद्यस्मिन्कुले जायन्ते तत्कुलस्य नाशका भवन्तीति। अत्राभुक्तघटीविषये मुहूर्तचिन्तामणौ रामाचार्यः—

अभुक्तमूलं घटिकाचतुष्टयं ज्येष्ठान्त्यमूलादिभवं हि नारदः।
वशिष्ठ एकद्विघटीमितं जगौ बृहस्पतिस्त्वेकघटीप्रमाणकम् ॥
अथोचुरन्ये प्रथमाष्टघट्यो मूलस्य शाकान्तिमपञ्चनाड्यः।
जातं शिशुं तत्र परित्यजेद्वा मुखं पिताऽस्याष्टसमा न पश्येत् ॥

तत्राभुक्ते जातस्य दोषशान्त्यै तस्य परित्याग एवोत्कृष्टः पक्षः। अशक्तौ पिता तस्य पुत्रस्य वा कन्याया मुखमष्टवर्षपर्यन्तन्नावलोकयेत्। तथाह नारदः—

अभुक्तमूलजं पुत्रं पुत्रीमपि परित्यजेत्। अथवाऽष्टाब्दकं तातस्तन्मुखं न विलोकयेत् ॥ इति॥

मूल-ज्येष्ठाकी, मघा-श्लेषाकी, रेवती-अश्विनीकी सन्धिमें प्रहर प्रमाण पर्यन्त गण्डान्त होता है, वह प्राणियोंको अधिक अनिष्टकारक होता है। ज्येष्ठा-मूलकी सन्धिकी १ घटिका अभुक्तसंज्ञक है। उस अभुक्त नाडीमें उत्पन्न कन्या, पुत्र, पशु और नौकर कुलका नाश करते हैं ॥ ४५ ॥

अथ ज्येष्ठाफलानि।

विभक्ता दशभिर्ज्येष्ठानक्षत्राखिलनाडिकाः।
आद्यंशे जननीमाता द्वितीये जननीपिता ॥ ४६ ॥
तृतीये जननीभ्राता यदि माता चतुर्थके।
पञ्चमे जाततनयः षष्ठे गोत्रविनाशकः ॥ ४७ ॥
सप्तमे चोभयकुलं त्वष्टमे वंशनाशनम्।
नवमे श्वशुरं हन्ति सर्वं हन्ति दशांशके ॥ ४८ ॥
भौमवासरयोगेन ज्येष्ठाजा ज्येष्ठसोदरम्।
भानुवासरयोगेन मूलजा श्वशुरं हरेत् ॥ ४९ ॥
ज्येष्ठाद्यपादेऽग्रजमाशु हन्याद् द्वितीयपादे यदि तत्कनिष्ठम्।
तृतीयपादे पितरं निहन्ति स्वयं चतुर्थे मृतिमेति जातः ॥ ५० ॥

इदानीं ज्येष्ठानक्षत्रे जातस्यांशभेदेन फलान्युच्यन्ते। ज्येष्ठानक्षत्रस्याखिलनाडिकाः (भभोगकालमितिः) दशभिर्भक्ताः कार्याः। एवं भभोगमानस्य तुल्यदश-खण्डानि जायन्ते। तेषु आद्यंशे = प्रथमे दशांशे जातस्य जाताया वा जननीमाता = मातामही नाशमुपयाति। द्वितीये दशांशे जननीपिता = मातामहः। तृतीये जननीभ्राता=मातुलः। यदि चतुर्थे दशांशे जन्म भवेत्तदा जातस्य माता नाशमियात्। पञ्चमे दशांशे जाततनयो यस्य जन्म भवति स स्वयमेव म्रियते। षष्ठे दशांशे जातो गोत्रविनाशकः=स्ववंशच्छेदको भवति। न तस्मात्पुनः सन्ततिरुत्पद्यते। सप्तमे दशांशे जात उभयकुलं = मातृकुलं पितृकुलं च नाशयति। अष्टमे दशांशे तु वंशनाशनं = स्वकीयवंशस्य नाशं कुरुते। नवमे दशांशे जातो हि स्वश्वशुरं हन्ति। दशमे दशांशके जायमानः सर्वं = स्वकीयं यत्किञ्चिज्जगद्व्यावहारिकं तत्सर्वमेव हन्ति। तथोक्तं भगवता भरद्वाजेन—

ज्येष्ठादौ मातृजननीं मातामहं द्वितीयके। तृतीये मातुलं हन्ति चतुर्थे जननीं तथा॥
आत्मानं पञ्चमे हन्ति षष्ठे गोत्रक्षयो भवेत्। सप्तमे कुलनाशः स्यादष्टमे ज्येष्ठसोदरम्॥
नवमे श्वशुरं हन्ति सर्वस्वं दशमे तथा॥ इति॥

अत्रोक्तं फलं पुत्रकन्ययोर्द्वयोरेव जन्मनि विज्ञेयम्। अथ भौमवासरयोगेन ज्येष्ठाजा = मङ्गलवासरे ज्येष्ठानक्षत्रं स्यात्तस्मिन्यदि कन्या जायेत तदा ज्येष्ठसोदरं हरेत्। तथा भानुवासरयोगेन मूलजा = रविवासरसहिते मूलनक्षत्रे जाता श्वशुरं हरेत्। अत्र ज्येष्ठसोदरेण पतिज्येष्ठसोदरमपि विजानीयात्।

'मूलजा श्वशुरं हन्ति व्यालजा च तदङ्गनाम्।
ऐन्द्री पत्यग्रजं हन्ति देवरं तु द्विदैवजा'॥ इति नारदवचनात्॥

अथ ज्येष्ठानक्षत्रे चरणवशेन जातस्य फलम्। ज्येष्ठानक्षत्रमानं (भभोगः) चतुर्भक्तं चत्वारः पादास्तस्य भवन्ति। तेषु आद्यपादे=प्रथमचरणे जातोऽग्रजं = स्वज्येष्ठमाशु = शीघ्रमेव हन्यात्। यदि ज्येष्ठाद्वितीयपादे जन्म स्यात्तदा तत्कनिष्ठं = जातः स्वकनिष्ठं पश्चाज्जातं हन्यात्। तृतीयपादे जातः स्वपितरं निहन्ति। चतुर्थे तु जातः स्वयमेव मृतिमेति = म्रियते॥ ४६–५०॥

ज्येष्ठाकी सम्पूर्ण नाडी दश भागोंमें विभक्त करे, पहले अंशमें उत्पन्न हो तो माताकी माता (नानी) का, द्वितीय भागमें माताका पिता (नाना) का, तृतीय अंशमें माताका भाई (मामा) का, चौथे अंशमें माताका, पञ्चममें अपना, छठेमें कुलका नाश करे। सातवां अंश दोनों कुलका नाश करता है। आठवां वंश नाश करता है। नवम अंश श्वशुरका संहार करता है, और दशवां अंश सबका संहार करता है॥ ४६–४८॥

ज्येष्ठा नक्षत्र और मङ्गलवारके योगमें उत्पन्न कन्या ज्येष्ठ भाईका नाश करती है। मूल नक्षत्र और सूर्यवार दोनोंके योगमें कन्या श्वशुरका नाश करती है॥ ४९॥

ज्येष्ठाके आदि चरणमें उत्पन्न ज्येष्ठ भाईका नाश करता है। यदि दूसरे चरणमें पैदा हो तो छोटे भाईका संहार करता है। तीसरे चरणमें उत्पन्न हो तो पिताका नाश करता है, और चौथे चरणमें उत्पन्न हो तो जातक स्वयं मरता है॥ ५०॥

अथ मूलफलानि।

मूलाद्यपादे पितरं निहन्याद् द्वितीयके मातरमाशु हन्ति।
तृतीयजो वित्तविनाशकः स्याच्चतुर्थपादे समुपैति सौख्यम्॥ ५१॥
मूलर्क्षनिखिला नाड्यस्तिथिसङ्ख्याविभाजिताः।
आद्ये पिता पितृभ्राता तृतीये भगिनीपतिः॥ ५२॥

पितामहश्चतुर्थे तु माता नश्यति पञ्चमे ।
षष्ठे तु मातृभगिनी सप्तमे मातुलस्तथा ॥ ५३ ॥
अष्टमांशे पितृव्यस्त्री निखिलं तु नवांशके ।
दशमे पशुसंघातो भृत्यस्त्वेकादशांशके ॥ ५४ ॥
द्वादशे तु स्वयं जातस्तज्ज्येष्ठस्तु त्रयोदशे ।
चतुर्दशे तद्भगिनी त्वन्ते मातामहस्तथा ॥ ५५ ॥

अथ मूलनक्षत्रे जातस्य चरणपरत्वेन फलम् । मूलनक्षत्रमानं ( भभोगः ) चतुर्धा विभजेत् । तत्र प्रथमे पादे जातः पितरं निहन्यात् । द्वितीये जातो मातरमाशु=त्वरितमेव निहन्यात् । तृतीयचरणजो वित्तानां=स्वधनानां विनाशको भवति । तथाऽस्य मूलस्य चतुर्थे पादे जायमानः सौख्यं समुपैति । चतुर्थपादो न दोषावह इति । तथा रामाचार्यः—

आद्ये पिता नाशमुपैति मूलपादे, द्वितीये जननी, तृतीये ।
धनं, चतुर्थोऽस्य शुभोऽथ शान्त्या सर्वत्र तत्स्यादहिभे विलोमम् ॥ इति ॥

अथ च मूलर्क्षस्य=मूलनक्षत्रस्य निखिलाः ( भभोग- ) नाड्यः तिथिसंख्यया(१५) पञ्चदशसंख्यया विभाजिताः कार्याः । तदा पञ्चदश खण्डानि जायन्ते । तेषु क्रमेण जातस्य फलान्यत्रोक्तानि । श्लोकाः स्पष्टार्था इति ॥ ५१-५५ ॥

मूलके प्रथमचरणमें पिताका, २ रेमें माताका, ३ रेमें धनका नाश होता है और ४ था चरण शुभ है ॥ ५१ ॥

मूल नक्षत्रकी सम्पूर्ण नाड़ीमें १५ का भाग देकर १५ खण्ड बनावे, उसके एक २ अंशका फल कहते हैं-प्रथम अंशमें पिताका नाश, दूसरेमें चाचाका, तीसरेमें भगिनीपति(बहनोई)का, चौथेमें पितामहका, पांचवें अंशमें माताका नाश होता है, छठे अंशमें मौसीका, सातवे अंशमें मामाका, आठवें अंशमें चाचीका, नववें अंशमें सबका, दसवें अंशमें पशुका, ग्यारहवें अंशमें नौकरका नाश होता है । बारहवें अंशमें स्वयं जातकका नाश होता है । तेरहवें अंशमें उसके ज्येष्ठ भाईका संहार होता है । चौदहवें अंशमें उस जातककी बहिन का नाश होता है और १५ वें अंशमें नानाका नाश होता है ॥ ५२-५५ ॥

| अंश | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| फल | पिता का नाश | पितृव्य (चचा) का नाश | बहनोईका नाश | मातामह का नाश | माता का नाश | मौसीका नाश | मामाका नाश | चाचीका नाश | सर्वनाश | पशुका नाश | नौकरका नाश | स्वयं नष्ट होय | ज्येष्ठ भाई का नाश | बहिनका नाश | नानाका नाश |

उदाहरण-मूलका सर्व भोग ६४ दं० १५ प० है इसमें १५ का भाग देनेसे लब्ध १ खंड में ४ दण्ड १७ पल हुआ । जन्म कालमें भयात ३५।९ है, भयातमें ८ वां अंश ३४ दं० १६ पल तक है नववां अंश ३८ दं० ३२ प० पर्यन्त है इसी बीचका भयात ३५। घ० ५ पल होता है । इससे निश्चय हुआ कि ९ वें अंशमें जन्म है । ९ वें अंशका फल-सर्व नाश है ।

इदानीं श्लेषानक्षत्रे गण्डान्तमुच्यते—

आश्लेषाद्ये न गण्डं स्याद्धनगण्डं द्वितीयके ।
तृतीये मातृगण्डं तु पितृगण्डं चतुर्थके ॥ ५६ ॥

आश्लेषाद्ये = श्लेषानक्षत्रस्य प्रथमे चरणे गण्डं न स्यात् । तस्य प्रथमपादं शुभम् । द्वितीयके = श्लेषाद्वितीयचरणे धनगण्डं, तत्र जातस्य धननाशं ब्रूयात् । तृतीये चरणे

मातृगण्डमर्थात्तृतीये चरणे जातस्य माता म्रियते । चतुर्थके चरणे पितृगण्डं पिता नाशमुपैतीति । उक्तञ्च—

सार्पाद्ये प्रथमे राज्यं द्वितीये तु धनक्षयः ।
तृतीये जननीनाशश्चतुर्थे मरणं पितुः ॥ इति ॥ ५६ ॥

श्लेषा नक्षत्रके प्रथम चरणमें गण्ड नहीं है । दूसरा चरण धनगण्ड है । तीसरा चरण मातृगण्ड है और चौथा चरण पितृगण्ड है ( चौथा पिताके, तीसरा माताके, दूसरा चरण धनके लिये अनिष्टकारक है, प्रथम चरण शुभ ) ॥ ५६ ॥

इदानीं श्लेषामघाज्येष्ठामूलरेवत्यश्विषु गण्डान्तमुच्यते—

मूलामघाश्विचरणे प्रथमे पितुश्च पौष्णेन्द्रयोश्च फणिनस्तु चतुर्थपादे ।
मातुः पितुः स्ववपुषोऽपि करोति नाशं जातो यथा निशि दिनेऽप्यथ सन्ध्ययोश्च॥
दिवा जातस्तु पितरं रात्रिजो जननीं तथा ।
आत्मानं संध्ययोर्हन्ति नास्ति गण्डे विपर्ययः ॥ ५८ ॥

मूलमघाश्विनीनक्षत्राणां प्रथमे चरणे जातः पितुर्नाशं करोति । पौष्णेन्द्रयोश्च=रेवतीज्येष्ठयोः, फणिनः=श्लेषायाश्च चतुर्थपादे जातः क्रमेण मातुः, पितुः, स्ववपुषोऽपि नाशं करोति । रेवतीचतुर्थचरणे जातो मातुर्नाशं, ज्येष्ठाचतुर्थचरणे जातः पितृनाशं, श्लेषाचतुर्थपादे आत्मनो नाशं करोति । अत्र न केवलं रेवतीज्येष्ठाश्लेषाचतुर्थचरणे जातोऽपितु यथा क्रमं निशि = रात्रौ, दिने, सन्ध्ययोर्द्वयोश्चेति । रात्रौ रेवतीचतुर्थचरणे, दिने ज्येष्ठाचतुर्थचरणे प्रातःसायंसन्ध्ययोः श्लेषाचतुर्थचरणे, जातः क्रमेण मातुः, पितुः, स्वस्य च नाशं कुरुते इति भावः ॥ ५७ ॥

पूर्वोक्तमनेन श्लोकेन दृढं करोति । अत्र गण्डे जातस्योक्तफले विपर्ययो न भवति, तत्फलं भवत्येवेति भावः । उक्तदोषपरिहारार्थं शान्तिः प्रकर्त्तव्या । "............शुभाः शान्तितः" इति श्रवणात् ॥ ५८ ॥

मूल, मघा, अश्विनी इनके प्रथम चरणमें पिताको कष्ट कहे और रेवती, ज्येष्ठा, श्लेषा इनके चतुर्थ चरणमें पिताको अनिष्ट कहे । रातमें रेवती ४ चरणमें, दिनमें ज्ये० ४ चरणमें और संध्याओंमें श्लेषा ४ चरणमें जन्म होनेसे क्रमसे माता, पिता और अपना नाश कहे ५७

उक्त गण्डमें दिनका जन्मा हुआ बालक पिताको, रात्रिका जन्मा हुआ माताको और दोनों संध्याका जन्मा हुआ अपनेको नाश करता है । गंड दोषमें विपर्यय नहीं होता है ५८

ऋक्षस्यान्ते भवेद्रात्रावादौ यदि दिने तथा ॥
संध्यासु ऋक्षसन्धौ तु तदेतद् गण्डलक्षणम् ॥ ५६ ॥

यदि रात्रौ ऋक्षस्यान्ते जन्म भवेत्तथा दिने नक्षत्रस्यादौ जन्म भवेत् एवं सन्ध्यासु ऋक्षसन्धौ ( कर्कटकालिमीनभान्ते ) जन्म भवेत्तदैतद् गण्डस्य लक्षणमर्थात्पूर्वोक्ताशुभफलदं भवतीति ॥ ५९ ॥

नक्षत्रके अन्तमें रात्रिमें, दिनमें आदिमें, दोनों संध्यामें ऋक्षसंधिमें यह भी गण्डका लक्षण है, याने वहां भी अशुभ फल कहे ॥ ५९ ॥

पूर्वाषाढे धनुर्लग्ने जातः पितृविनाशकः ।
पुष्ये कर्कटके लग्ने पितृमृत्युकरो भवेत् ॥ ६० ॥
पूर्वाषाढे तु पुष्ये च पितरं मातरं सुतम् ।
मातुलं च शिशुर्हन्यात्प्रथमांशकतः क्रमात् ॥ ६१ ॥
उत्तराफाल्गुनीताराप्रथमे चरणे यदि ।
तिष्यनक्षत्रमध्यस्थपादयोरुभयोर्यदि ॥ ६२ ॥

पादे तृतीये चित्रायाः पूर्वार्द्धे यमभस्य च ।
तृतीयांशेऽर्कतारायाश्चतुर्थांशेऽन्त्यभस्य च ॥
जातस्तु पितरं हन्ति जाता चेन्मातरन्तथा ॥ ६३ ॥

पूर्वाषाढे नक्षत्रे धनुर्धरराशिलग्ने जातः पितृविनाशको भवति । तत्र जातस्य पिता म्रियते इति । पुष्ये नक्षत्रे कर्कटके लग्ने च जातस्तथैव पितृमृत्युकरो भवेत् ॥ ६० ॥

पूर्वाषाढे पुष्ये च नक्षत्रे प्रथमांशकतः = प्रथमचरणक्रमात् पितरं, मातरं, सुतं, मातुलं च जातः शिशुः हन्यात् । पूर्वाषाढस्य पुष्यस्य च प्रथमे चरणे जातो बालकः पितृनाशको भवति । द्वितीयचरणे मातरं नाशयति । तृतीयचरणे बालकमेवं चतुर्थचरणे मातुलं नाशयति ॥ ६१ ॥

उत्तराफल्गुनीनक्षत्रस्य प्रथमे चरणे, तिष्य-(पुष्य-) नक्षत्रस्य मध्यस्थपादयोरुभयोः द्वितीयतृतीयचरणयोः, चित्रायास्तृतीये पादे, यमभस्य = भरणीनक्षत्रस्य पूर्वार्द्धे च, अर्कतारायाः = हस्तनक्षत्रस्य तृतीयांशे = तृतीयपादे तथाऽन्त्यभस्य = रेवतीनक्षत्रस्य चतुर्थांशे = चतुर्थचरणे जातस्तत्पक्षो बालकस्तु पितरं हन्ति तथा यदि चेत्तत्र जाताऽर्थात्तत्र कन्या जायते तदा मातरं हन्ति ॥ ६२-६३ ॥

**पूर्वाषाढमें धनु लग्नमें उत्पन्न हुआ बालक पिताका नाश करे । पुष्यमें कर्क लग्नमें उत्पन्न हो तो पिताकी मृत्यु करनेवाला होवे ॥ ६० ॥**

**पूर्वाषाढ और पुष्यमें बालक प्रथमांशकके क्रमसे पिता, माता, बालक तथा मामाका नाश करता है ॥ ६१ ॥**

**उत्तराफल्गुनीके प्रथम चरणमें, पुष्य नक्षत्रके मध्यके दोनों चरणोंमें, चित्राके तीसरे चरण में भरणीके पूर्वार्द्धमें, हस्तके तृतीय पादमें और रेवती नक्षत्रके अन्त्य चरणमें पुत्रके जन्मसे पिताको, कन्याके जन्मसे माताको अनिष्ट होता है ॥ ६२-६३ ॥**

### अथ गण्डकालः ।

षोडशाब्दास्तुरङ्गाद्ये मघाद्ये चाष्टवत्सराः ॥ ६४ ॥
एकाब्दः शक्रतारायां चत्वारस्त्वाष्ट्रमूलयोः ।
सार्पे वर्षद्वयं चैव रेवत्यामेकवत्सरः ॥ ६५ ॥
द्वौ मासौ चोत्तरादोषः पुष्यर्क्षे तु त्रिमासकम् ।
नवमे मासि पितरं पूर्वाषाढोद्भवं हरेत् ॥ ६६ ॥
हस्तर्क्षे यदि जातस्तु पितरं द्वादशाब्दके ।
अभुक्तमूलजः पुत्रः पितरं हन्ति तत्क्षणात् ॥ ६७ ॥
अभुक्तमूलजनितो यदि जीवति मानवः ।
निजवंशकरः श्रीमान् बहुसेनाधिपोऽथवा ॥ ६८ ॥

गण्डान्ते यान्युक्तान्यशुभफलानि तानि कियद्भिर्दिनैः फलन्तीत्यत्रोच्यते । स्पष्टार्थाश्चैते श्लोकाः । एतेषां दोषाणां परिहारार्थं प्रत्येकस्य शान्तिः प्रकर्त्तव्या । शान्तिविधिः शान्तिपद्धतौ द्रष्टव्यः । इति ॥ ६४-६८ ॥

**अश्विनीके आदि चरणमें जायमान गण्डदोष १६ वर्षमें । मघाके आदिचरणोत्पन्न ८ वर्षमें, ज्येष्ठामें उत्पन्न एक वर्षमें, चित्रा और मूलमें उत्पन्न ४ वर्षमें, श्लेषामें उत्पन्न २ वर्षमें । रेवतीमें उत्पन्न १ वर्षमें, उत्तराका दोष २ मासमें, पुष्यका दोष ३ मासमें होता है । पूर्वाषाढमें उत्पन्न ९ वें मासमें पिताको अनिष्टकारक होता है । हस्तके गण्डमें यदि बालक उत्पन्न हो तो १२ वें वर्षमें पिताका संहार करे । अभुक्त मूलका उत्पन्न बालक उसी क्षण पिताका नाश करता है ॥ ६४-६७ ॥**

यदि अभुक्त मूलका बालक जीवे तो अपने वंशका कर्ता, श्रीमान् और बहुत सेनाका मालिक होवे ॥ ६८ ॥

### अथ तिथिदोषः ।

कृष्णपक्षे चतुर्दश्यां षडंशे प्रथमे शुभम् ।
द्वितीये पितरं हन्ति तृतीये मातरं तथा ॥ ६९ ॥
चतुर्थे मातुलं हन्ति पञ्चमे भ्रातृनाशनम् ।
षष्ठे यदि शिशुं हन्ति गण्डदोष इतीरितः ॥ ७० ॥
अमायां तु प्रजातानां गजानां वाजिनां तथा ।
गवां च महिषादीनां मनुष्याणां विशेषतः ॥ ७१ ॥
सिनीवालीप्रजातानां त्याग एव हि सर्वदा ।
विशेषाच्च कुहूत्थानां शान्तिं कुर्याद्विधानतः ॥
नारीं विनाऽवशेषाणां परित्यागो विधीयते ॥ ७२ ॥

इदानीं तिथिगण्डमुच्यते । कृष्णपक्षे चतुर्दशीतिथिमानं षड्भक्तं कार्यं तत्र प्रथमे षडंशे जातस्य शुभम् । तत्र प्रथमे षडंशे गण्डदोषो न भवतीति भावः । अन्यत्स्पष्टमेव । अथामायां तिथौ जायमानानां गजानां = हस्तिनां, वाजिनामश्वानां, गवां, महीषादीनां च तथा मनुष्याणां विशेषतो निश्चयेन त्याग एव कर्त्तव्यः । यदि साऽमा सिनीवाली भवति । अथ कुहूसंज्ञकामायां तिथौ जातानामेतेषां दोषपरिहारार्थं विधानतः = पद्धतिक्रमेण शान्तिं प्रकुर्यात् । एतदुक्तं भवति । सिनीवाल्यामुत्पन्नानां गजादीनां त्यागः प्रकर्त्तव्यः, कुहूजातानां विशेषेण त्यागः कर्त्तव्यः । अत्र सिनीवालीकुहूदर्शयोर्विवरणमुच्यते । यस्याममायां चन्द्रस्य काचित्कला दृश्यते सा सिनीवाली भवति, अर्थात्साऽमा चतुर्दशीयुक्ता भवति । यस्याममायां चन्द्रस्य कलाः पूर्णतया परिक्षीणा भवन्ति, सा कुहूनाम्नी भवति । अर्थात्सा शुद्धाऽमेति ।

"सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः" ।

इत्यमरसिंहवचनात् । तत्र त्यागाशक्तौ तद्दोषप्रशमनार्थं शान्तिः प्रकर्त्तव्या । अत्र मनुष्यस्य परित्यागे मोहसम्भवान्नरयोनिं विनाऽवशेषाणां गजादिपशुजातीनां परित्याग एवोत्तमः पक्षो विधीयते ॥ ६९-७२ ॥

कृष्णपक्षकी चतुर्दशीके पहला षडंश (तिथिमानका छठवां हिस्सा) शुभ है, दूसरे अंशका गण्डदोष पिताका, तीसरे अंशका माताका, चौथे अंशमें जायमान मामाका, पांचवें अंशमें उत्पन्न भाईका नाश करता है । छठे अंशका गंड बालकका नाश करता है ॥६९-७० ॥

अमावस्यामें उत्पन्न होनेवाले हाथी-घोड़ा-गाय-भैसोंको और विशेषतः मनुष्योंको अनिष्ट होता है । सिनीवाली अमावसमें उत्पन्न हो तो सर्वदा त्याग करे, कुहू अमावसके जायमानोंका विशेषतः त्याग करे । यदि त्यागमें मोह हो तो विधानसे शान्ति करे । नरयोनिको छोड़ और सबका परित्याग करे ॥ ७१-७२ ॥

### अथ योगदोषः ।

पितृजन्मर्क्षकर्मर्क्षजातः पितृविनाशकः ॥ ७३ ॥
जन्मर्क्षांशकतल्लग्नजातः सद्यो मृतिप्रदः ।
मुसले मुद्गरे योगे जातः शोभननाशकृत् ॥ ७४ ॥
विष्ट्यां दरिद्रमाचष्टे गुलिकेऽङ्गविहीनवान् ।
रिक्ताय पण्ढतां याति पङ्गुः स्याद्यमकण्टके ॥ ७५ ॥

ग्रहपीडितनक्षत्रे जातो रोगनिपीडितः ।
ग्रहमुक्ते काङ्क्षितर्क्षे दत्तपुत्रो भवेत्सुतः ॥ ७६ ॥
व्यतीपातेऽङ्गहीनः स्यात् परिघे मृत्युमाप्नुयात् ।
वैधृतौ पितरं हन्ति विष्कम्भे चार्थहानिकृत् ।
शूले तु शूलरोगी स्याद् गण्डे गण्डमवाप्नुयात् ॥ ७७ ॥

इदानीं योगजातगण्डमुच्यते । यस्मिन्नक्षत्रे पितुर्जन्म वरीवर्त्ति तन्नक्षत्रे तथा कर्मर्क्षे = दशमनक्षत्रे च जातो जायमानो बालकः पितृविनाशको भवति । तथा पितुर्जन्मराशेर्नवांशे तल्लग्ने च जातः सद्य एव पितुर्मृतिप्रदो भवति । अन्यत्स्पष्टार्थकमेव ॥ ७३-७७ ॥

पिताके जन्म-नक्षत्र या १० वें नक्षत्रमें उत्पन्न बालक पिताका नाश करता है। पिताके जन्म राशिके नवांशमें जायमान तथा उस लग्नमें उत्पन्न जातक तुरन्त पिताको मृत्यु देता है। मुसल और मुद्गर योगमें उत्पन्न जातक शुभनाशक होता है । भद्रामें जायमान बालक दरिद्र होता है। गुलिकमें उत्पन्न अङ्गहीन होता है । रिक्ताका पैदा हुआ बच्चा नपुंसक होता है। यमघंट योगोत्पन्न कुमार लङ्गड़ा होता है। ग्रहपीडित नक्षत्रमें जायमान बालक रोगसे पीडित रहता है। ग्रहमुक्त और काङ्क्षितर्क्षमें दत्तक पुत्र होता है । व्यतीपातमें अङ्गहीन होता है । परिघमें मृत्यु होती है । वैधृतियोगका उत्पन्न पिताका नाश करता है । विष्कम्भका जायमान धननाश करता है । शूलोत्पन्न शूल रोगी होता है । गण्डवालेको गंड रोग होता है ॥ ७३-७७ ॥

### अथ दन्तोद्गमफलम् ।

सदन्तजातः कुलनाशकारी द्वितीयमासादिचतुष्टयान्ते ।
दन्तोद्भवो मृत्युकरः पितुः स्यात् षष्ठे शिशोस्तत्परतः शुभं स्यात् ॥ ७८ ॥

अथ जातकस्य दन्तोद्गमे फलमुच्यते । यदि बालो दन्तयुक्तो जायते तदाऽसौ कुलनाशकारी भवति । जन्मानन्तरं द्वितीयमासादिचतुष्टयान्ते = द्वितीयमारभ्य पञ्चममासं यावच्छिशोर्दन्तोद्भवः पितृमृत्युकरः स्यात् । षष्ठे मासे दन्तोद्भवः शिशोरेव मृत्युकरो भवति । परतः = सप्तमादिमासेषु दन्तोद्भवश्चेत्तदा शुभं वाच्यमिति । परश्चात्र दन्तजनने फलवैषम्यं दृश्यते—

"मासे चेत्प्रथमे भवेत्सदशनो बालो विनश्येत्स्वयं
हन्यात्स क्रमतोऽनुजातभगिनीमातृग्रजान् द्व्यादिके ॥
षष्ठादौ लभते हि भोगमतुलं तातात्सुखं पुष्टतां
लक्ष्मीं सौख्यमथो जनौ सदशनो चोर्ध्वं स्वपित्रादिहा" ॥

इति रामाचार्यवचनात्, तथा—

प्रथमे दन्तजननात्स्वयमेव विनश्यति । द्वितीये भ्रातरं हन्ति तृतीये भगिनीं तथा ॥
चतुर्थे मातरं हन्ति पञ्चमे चात्मनोऽग्रजम् । षष्ठे च मन्त्रजीवी स्यात्सप्तमे पितृसौख्यदः ॥
अष्टमे पुष्टिजनको नवमे लभते धनम् । लभते दशमे मासि सौख्यमेकादशेऽपि वा ॥
द्वादशे धनसम्पत्तिर्दन्तानां जनने फलम् ॥ इति चण्डेश्वरवचनाच्चेति ॥ ७८ ॥

दाँतके सहित उत्पन्न बालक कुलका नाशक होता है। दूसरे माससे ४ मास तक दांत होनेसे बालक पिताका, षष्ठमें शिशुका नाश करेगा। सप्तम आदि मासोंमें दन्त उत्पन्न होनेसे शुभ होगा ॥ ७८ ॥

### अथ जन्मतारादयः ।

जन्मर्क्षमाद्यं दशमन्तु कर्म साङ्घातिकं षोडशभं वदन्ति ।
अष्टादशं स्यात् समुदायसंज्ञमाधानमेकोनितविंशतिः स्यात् ॥ ७९ ॥

त्रयोविंशतिनक्षत्रं वैनाशिकमिति स्मृतम् ।
जातिदेशाभिषेकाख्याः पञ्चविंशादितारकाः ॥ ८० ॥
जन्मतारादयो यस्य विद्धाः पापवियच्चरैः ।
सद्यो मृत्युकरास्तस्य शुभैः शुभफलप्रदाः ॥ ८१ ॥

अधुना ताराऽपरनामकानि कानिचिन्नक्षत्राणि कथ्यन्ते । यस्मिन्नक्षत्रे जन्म भवति तदाद्यं ( जन्मर्क्षम् ) प्रथममिति । जन्मर्क्षाद्दशमं नक्षत्रं कर्मसंज्ञकम् । षोडशकं साङ्घातिकमार्या वदन्ति । अष्टादशं नक्षत्रं समुदायसंज्ञकम् । एकोनविंशतितमम् (१९) नक्षत्रं आधानसंज्ञकम् । त्रयोविंशतितमं नक्षत्रं जातिसंज्ञम् । षड्विंशं देशाख्यम् । सप्तविंशं च अभिषेकसंज्ञकमुक्तम् । प्रयोजनमुच्यते । जन्मतारादय इति । यस्य जातस्य जन्मतारादयः परिभाषितास्ताराः पापवियच्चरैः = पापग्रहैः विद्धाः = सप्तशलाकाचक्रे विद्धाः स्युस्तस्य जातस्य सद्यः = शीघ्रमेव मृत्युकरा भवन्ति । यदि तास्ताराः शुभग्रहैर्विद्धा भवेयुस्तदा जातस्य शुभफलप्रदा भवन्तीति ॥ ७९–८१ ॥

जन्म नक्षत्र की "आद्य" दशमकी "कर्म" सोलहवें की "सांघातिक" अट्ठारहवें की "समुदाय" उनइसवेंकी "आधान" और तेइसवेंकी "वैनाशिक" संज्ञा कही है। पचीसवें आदि की "जाति–देश–अभिषेक" संज्ञा है ॥ ७९–८० ॥

जिसके जन्म तारादिका पाप ग्रहसे वेध हो उसकी तुरन्त मृत्यु होती है और शुभ ग्रहसे वेध हो तो जन्मादि तारा शुभफल देनेवाली होती है ॥ ८१ ॥

## अथ गण्डदोषापवादः ।

वैशाखे श्रावणे माघे फाल्गुन्यां व्योमसम्भवम् ।
आषाढपुष्यसौम्येषु ज्येष्ठे मासि च मानुषम् ॥ ८२ ॥
अश्वयुक्चैत्रकार्तिक्यां भाद्रे च बिलसम्भवम् ।
मर्त्ये मृत्युर्गण्डदोषः पाताले नास्ति पुष्करे ॥ ८३ ॥
जातमात्रे कुमारस्य मुखमालोकयेत्पिता ।
पितृणात्स विमुच्येत पुत्रस्य मुखदर्शनात् ॥ ८४ ॥

पूर्वमुक्ता ये गण्डदोषास्तेषामपवाद उच्यते । वैशाखे, श्रावणे, माघे, फाल्गुन्यां ( फल्गुनीयुक्तायाम् ) फाल्गुने चेति मासचतुष्टये व्योमसम्भवमाकाशसञ्जातं गण्डमुक्तम् । आषाढः प्रसिद्धः, पुष्यः = पौषमासः, सौम्यो मार्गमासस्तेषु, ज्येष्ठे च मासि मानुषं = मनुष्यलोकोद्भवं गण्डान्तं ज्ञेयम् । अश्वयुगाश्विनो मासः । चैत्रः प्रसिद्धः, कार्तिकी = कार्तिकमासः । भाद्रो भाद्रमास इति मासचतुष्टये बिलसम्भवं=पाताललोकोद्भवं गण्डान्तं ज्ञेयम् । अभिप्राय उच्यते । मर्त्ये ( ज्येष्ठाषाढमार्गपौषेतिमासचतुष्टये ) जातस्य गण्डदोषो मृत्युर्भवति । पाताले ( चैत्रभाद्राश्विनकार्त्तिकेषु ) पुष्करे=आकाशे "व्योमपुष्करमम्बरमित्यमरः" ( वैशाखश्रावणमाघफाल्गुनेषु ) च जातस्य गण्डदोषो न भवतीति । यत्रोद्भवं गण्डं तत्रैवानिष्टं करोतीति भावः ।

अथ पितृकर्त्तव्यमुच्यते । पिता जातमात्रे=त्वरितं जायमाने कुमारे तस्य कुमारस्य मुखमालोकयेत् । तत्र कुमारमुखसन्दर्शने हेतुरुच्यते । सः पिता पुत्रस्य मुखदर्शनात् पितृणात्=पितॄणां ऋणात् पितृयज्ञात् (पितृश्राद्धतर्पणादिरूपात्) विमुच्येत । पुन्नाम्नो नरकात्त्रायत इति पुत्रशब्दव्युत्पत्त्या यस्य पुत्रोद्गमो न भवत्यसौ पितृणग्रस्तो नरकं व्रजति ।

'अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च, इति वचनाच्च पुत्रोदयादेव पितुर्नरकात्परित्राणमिति जातमात्रे पुत्राननमालोकनीयमिति ॥ ८२–८४ ॥

वैशाख, श्रावण, माघ, फाल्गुन मासमें गण्डान्त स्वर्गमें रहता है। आषाढ, पौष, मार्गशीर्ष, ज्येष्ठ मासमें गण्डान्त मर्त्यलोक में रहता है। आश्विन, चैत्र, कार्तिक, भाद्रपद, इन मासोंमें गण्डान्त पातालमें निवास करता है। मर्त्यलोकमें गण्डदोष रहे तो मृत्यु होती है। पाताल और आकाशमें गण्डके रहनेपर दोष नहीं है ॥ ८१-८३ ॥

पिता पुत्रके उत्पन्न होनपर शीघ्र ही उसके मुख को देखे, क्योंकि पुत्रके मुखको देखने से ही पितरोंके ऋणसे वह छूट जाता है ॥ ८४ ॥

अथ नक्षत्रफलम् ।

अश्विन्यामतिबुद्धिवित्तविनयप्रज्ञायशस्वी सुखी
याम्यर्क्षे विकलोऽन्यदारनिरतः क्रूरः कृतघ्नो धनी ।
तेजस्वी बहुलोद्भवः प्रभुसमोऽमूर्खश्च विद्याधनी
रोहिण्यां पररन्ध्रवित्कृशतनुर्बोधी परस्त्रीरतः ॥ ८५ ॥
चान्द्रे सौम्यमनोऽटनः कुटिलदृक् कामातुरो रोगवान्
आर्द्रायामधनश्चलोऽधिकबलः क्षुद्रक्रियाशीलवान्
मूढात्मा च पुनर्वसौ धनबलख्यातः कविः कामुक-
स्तिष्ये विप्रसुरप्रियः सधनधी राजप्रियो बन्धुमान् ॥ ८६ ॥
सार्पे मूढमतिः कृतघ्नवचनः कोपी दुराचारवान्
गर्वी पुण्यरतः कलत्रवशगो मानी मघायां धनी ।
फल्गुन्यां चपलः कुकर्मचरितस्त्यागी दृढः कामुको
भोगी चोत्तरफल्गुनीभजनितो मानी कृतज्ञः सुधीः ॥ ८७ ॥
हस्तर्क्षे यदि कामधर्मनिरतः प्राज्ञोपकर्ता धनी
चित्रायामतिगुप्तशीलनिरतो मानी परस्त्रीरतः ।
स्वात्यां देवमहीसुरप्रियकरो भोगी धनी मन्दधी-
र्गर्वी दारवशो जितारिरधिकक्रोधी विशाखोद्भवः ॥ ८८ ॥
मैत्रे सुप्रियवाग् धनी सुखरतः पूज्यो यशस्वी विभु-
र्ज्येष्ठायामतिकोपवान् परवधूसक्तो विभुर्धार्मिकः ।
मूलर्क्षे पटुवाग्विधूतकुशलो धूर्तः कृतघ्नो धनी ।
पूर्वाषाढभवो विकारचरितो मानी सुखी शान्तधीः ॥ ८९ ॥
मान्यः शान्तगुणः सुखी च धनवान् विश्वर्क्षजः पण्डितः
श्रोणायां द्विजदेवभक्तिनिरतो राजा धनी धर्मवान् ।
आशालुर्वसुमान् वसूड्जनितः पीनोरुकण्ठः सुखी
कालज्ञः शततारकोद्भवनरः शान्तोऽल्पभुक् साहसी ॥ ९० ॥
पूर्वप्रोष्ठपदि प्रगल्भवचनो धूर्तो भयार्तो मृदु-
श्चाहिर्बुध्न्यजमानवो मृदुगुणस्त्यागी धनी पण्डितः ।
रेवत्यामुरुलाञ्छनोपगततनुः कामातुरः सुन्दरो
मन्त्री पुत्रकलत्रमित्रसहितो जातः स्थिरः श्रीरतः ॥ ९१ ॥

इदानीं सरलार्थैः सप्तभिः श्लोकैर्नक्षत्रफलान्युच्यन्ते । तेषु जन्मदिने यन्नक्षत्रमथास्मिन् चान्द्रनक्षत्रे जन्म जायेत तस्य फलमूहनीयमिति ॥ ८५-९१ ॥

अश्विनी नक्षत्रमें बालक उत्पन्न हो तो अति बुद्धि-धन-विनय-ज्ञान यश वाला, और सुखी होवे। भरणी नक्षत्रमें उत्पन्न हो तो विकल, परस्त्रीगामी, क्रूर, कृतघ्न और धनी होवे,

कृत्तिकामें जन्म हो तो तेजवान्, प्रभुसदृश, ज्ञानी और विद्याधनी हो। रोहिणीमें जन्म होवे तो परच्छिद्रान्वेषी, कृशाङ्ग, ज्ञानी और परस्त्रीगामी होवे ॥ ८५ ॥

मृगशिरामें उत्पन्न हो तो सौम्यमन, यात्री, कुटिलदृष्टि, कामातुर और रोगी हो। आर्द्रामें जन्म होनेसे दरिद्र, घूमनेवाला, विशेषबली, क्षुद्रकर्मी और शीलवान् हो। पुनर्वसुमें जन्म हो तो मूढ, धन-बलमें मशहूर, कवि और कामी हो। पुष्य नक्षत्रमें जन्म हो तो ब्राह्मण-देवताका प्रिय, धन-बुद्धि-वाला, राजाका प्रिय और बन्धु (परिवार) वाला हो ॥ ८६ ॥

श्लेषा नक्षत्रमें जन्म हो तो मोटी बुद्धि, कृतघ्नवचन, कोपी, आचारवान् हो। मघानक्षत्रमें जन्म हो तो अहङ्कारी, पुण्यमें लीन, स्त्रीके वश, मानी और धनी हो। पूर्वाफाल्गुनीमें जन्म हो तो चपल, कुकर्म चरित्र, त्यागी और दृढ कामी हो। उत्तराफाल्गुनीमें जन्म लेने वाला भोगी, मानी, कृतज्ञ और पण्डित होवे ॥ ८७ ॥

हस्त नक्षत्रमें जिसका जन्म हो वह काम-धर्ममें रत, प्राज्ञ, उपकारी और धनी होवे। चित्रा जन्मर्क्ष हो तो अत्यन्त गुप्त शीलमें रत, मानी और स्त्री-रत हो। स्वातीमें जन्म हो तो देव-ब्राह्मणका प्रिय करनेवाला, भोगी, धनी और मन्द बुद्धि हो। विशाखामें जन्म हो तो अहङ्कारी, स्त्रीके वशीभूत, शत्रुजित् और विशेष क्रोधी होवे ॥ ८८ ॥

अनुराधा नक्षत्रमें जन्म हो तो सुन्दर-प्रिय वचन बोलनेवाला, धनी, सुखमें रत, पूज्य, यशस्वी और विभु होवे। ज्येष्ठामें जन्म हो तो विशेष कोप करनेवाला, परस्त्रीगामी, विभु, और धर्मात्मा होवे। मूल नक्षत्रमें जन्म हो तो चतुर वचन बोलनेवाला, खूब कुशल, धूर्त, कृतघ्न और धनी होवे। पूर्वाषाढमें जन्म हो तो वह बालक विकारी, मानी, सुखी और शांत बुद्धिवाला होवे ॥ ८९ ॥

उत्तराषाढमें जन्म हो तो मान्य, शान्तगुण, सुखी, धनवान् और पण्डित हो। श्रवणमें जन्म हो तो द्विज-देवकी भक्तिमें निरत, राजा, धनी और धर्मवान् हो। धनिष्ठामें उत्पन्न हो तो आशावान्, धनवान्, मोटे ऊरु-कण्ठवाला और सुखी हो। शतभिषका उत्पन्न बालक कालज्ञ, शान्त, अल्पभोजी और साहसी हो ॥ ९० ॥

पूर्वभाद्रपद नक्षत्रका उत्पन्न बालक तेज वचन बोलनेवाला, धूर्त, भयार्त और कोमल होता है। उत्तराभाद्रपद नक्षत्रका जायमान कोमलगुणी, त्यागी, धनी और पण्डित होवे। रेवतीमें उत्पन्न मनुष्य ऊरुमें चिह्नवान्, कामातुर, मन्त्री, पुत्र-स्त्री-मित्रसे युक्त, स्थिर और श्रीरत होवे ॥ ९१ ॥

## अथ राशिफलम्।

मेषस्थे यदि शीतगौ च लघुभुक् कामी महोत्थाग्रजो
दाता कान्तयशोधनोरुचरणः कन्याप्रजो गोगते।
दीर्घायुः सुरतोपचारकुशलो हास्यप्रियो युग्मके
कामासक्तमनोऽटनः सुवचनश्चन्द्रे कुलीरस्थिते ॥ ९२ ॥
सिंहस्थे पृथुलोचनः सुवदनो गम्भीरदृष्टिः सुखी
कन्यास्थे विषयातुरो ललितवाग्विद्याधिको भोगवान्।
तौलिस्थेऽमरविप्रभक्तिनिरतो बन्धुप्रियो वित्तवान्
कीटस्थे शशिनि प्रमत्तहृदयो रोगी च लुब्धोऽटनः ॥ ९३ ॥
सौम्याङ्गो रुचिरेक्षणः कुलवरः शिल्पी धनुःस्थे विधौ
गीतज्ञः पृथुमस्तको मृगगते शास्त्री परस्त्रीरतः।
कुम्भस्थे गतशीलवान् बुधजनद्वेषी च विद्याधिको
मीनस्थे मृगलाञ्छने वरतनुर्विद्वान् बहुस्त्रीपतिः ॥ ९४ ॥

अधुना चतुर्भिः श्लोकैः राशिफलान्युच्यन्ते । जन्मकाले चन्द्रो यस्मिन् राशौ भवति तद्राशिफलं जातकस्य वाच्यमिति । श्लोकाः स्पष्टार्थाः ॥ ९२-९४ ॥

यदि मेष राशिमें चन्द्रमा हो तो जातक अल्प भोजन करनेवाला, कामी, भाइयोंमें श्रेष्ठ हो। वृषमें हो तो दाता, सुन्दर, यशस्वी, दृढ़ अङ्ग तथा पर वाला और स्त्री सन्तान-वाला हो। मिथुन राशिमें हो तो दीर्घायु, कामके उपचारमें कुशल और हास्यप्रिय हो। कर्क राशिमें चन्द्रमा हो तो कामासक्त, घूमनेवाला, सुन्दर वचन बोलनेवाला हो ॥९२॥

सिंह राशिमें चन्द्रमा जन्म समयमें हो तो सुन्दर मुख, गम्भीर दृष्टि और मूर्ख हो। चन्द्रमा कन्या राशिके होनेपर जन्म हो तो विषयोंमें आतुर, ललित वचन, अधिक विद्या-वाला और भोगवान् हो। जन्म समय तुलाराशिमें चन्द्रमा हो तो देव-ब्राह्मण-भक्तिमें लीन, बन्धुप्रिय और धनवान् हो। जन्म-समय वृश्चिक राशिस्थ चन्द्रमा हो तो प्रमत्त हृदय, रोगी, लोभी और घूमनेवाला हो ॥ ९३ ॥

धनु राशिके चन्द्रमामें जन्म हो तो शुभाङ्ग, रुचिर दृष्टि, कुलश्रेष्ठ और शिल्पकर्म जाननेवाला हो। मकर राशिके चन्द्रमामें गीत जाननेवाला, बड़े मस्तक वाला, शास्त्री और परस्त्रीगामी हो। कुम्भ राशिके चन्द्रमामें जातक शीलहीन, पण्डितोंका वैरी और अधिक विद्यावाला हो। मीन राशिका चन्द्रमा हो तो श्रेष्ठ शरीर, विद्वान् और बहुत स्त्रियोंका स्वामी होवे ॥ ९४ ॥

## अथ राश्यंशकफलम् ।

सेनानीर्धनवान् पिशङ्गनयनश्चोरश्च मेषांशके
पीनस्कन्धमुखांसकोऽसितवपुर्जातो वृषांशे विधौ ।
चार्वङ्गः प्रभुसेवको लिपिकरो युग्मांशके पण्डितः
श्यामाङ्गः पितृपुत्रसौख्यरहितश्चन्द्रे कुलीरांशके ॥ ९५ ॥
पीनाङ्गोन्नतनासिको धनबलख्यातश्च सिंहांशके
कन्यांशे मृदुभाषणः कृशतनुर्द्यूतक्रियाकोविदः ।
कामी भूपतिसेवकः सुनयनश्चन्द्रे तुलांशे स्थिते
कीटांशे विकलोऽधनः कृशतनुः सेवाऽटनो रोगवान् ॥ ९६ ॥
चापांशे कृशदीर्घबाहुतनुगस्त्यागी तपस्वी धनी
लुब्धः कृष्णतनुः सदारतनयश्चन्द्रे मृगांशे यदि ।
मिथ्यावादरतः स्वदारवशगः कुम्भांशगे शीतगौ
मीनांशे मृदुवागदीनवचनस्तीर्थाटनः पुत्रवान् ॥ ९७ ॥

अत्र सुखावबोधैस्त्रिभिः श्लोकैर्नवांशफलान्युच्यन्ते । जन्मकाले चन्द्रो यत्र कुत्रापि राशौ यस्मिन् नवांशे स्थितो भवेत्तत्फलमादेश्यं जातस्येति ॥ ९५-९७ ॥

मेष राशिके नवांशमें जन्म हो तो सेनापति, धनवान्, पीले नेत्रवाला और चोर होवे। वृष राशिके नवांशमें जन्म हो तो मोटे कंधे और मुखवाला हो और श्यामवर्ण होवे। मिथुन राशिके अंशमें चन्द्रमा हो तो चार्वङ्ग ( सुन्दराङ्ग ), प्रभुकी सेवा करनेवाला, लेखक और पंडित होवे। कर्कके अंशमें चन्द्रमाके होनेपर पैदा हो तो श्यामशरीर, पितृ-पुत्र-सुखसे रहित होवे ॥ ९५ ॥

सिंह राशिके अंशमें चन्द्रमाके होनेपर बालक पैदा हो तो स्थूल शरीर, ऊंची नासिका, धन-बलमें विख्यात हो। कन्यांशकमें चन्द्रमाके रहनेपर बच्चा पैदा हो तो कोमलवचन, दुर्बल शरीर, द्यूत ( जूवा ) में निपुण होवे। तुला राश्यंशमें चन्द्रमाके स्थित होनेपर यदि मनुष्यका जन्म हो तो कामी, राजाका सेवक, सुन्दर नेत्र वाला हो। वृश्चिकके अंशमें चन्द्रमाके होनेपर बालकका जन्म हो तो वह विकल, दरिद्र, दुर्बल शरीर, त्यागी, तपस्वी और धनी होवे ॥ ९६ ॥

धनुके नवांशमें चन्द्रमाके रहनेपर उत्पन्न हो तो दुर्बल, बड़ीबाहुवाला, त्यागी, तपस्वी और धनी होवे। मकरके नवांशमें चन्द्रमाके होनेपर बालक उत्पन्न हो तो लोभी, दुर्बल शरीर, स्त्री-पुत्रसे युत हो। कुम्भके नवांशमें चन्द्रमाके रहनेपर जन्म हो तो झूठ बोलनेमें युक्त, अपनी स्त्रीके वशीभूत हो। मीनांशकमें चन्द्रमाके प्राप्त होनेपर यदि जन्म हो तो वह कोमल वचन बोलनेवाला, दीन वचन कभी भी न बोलनेवाला, तीर्थयात्री और पुत्रवान् होवे ॥ ९७ ॥

## अथ योगफलम् ।

विष्कम्भे जितशत्रुरर्थपशुमान् प्रीतौ परस्त्रीवशः
आयुष्मत्प्रभवश्चिरायुरगदः सौभाग्यजातः सुखी ॥
भोगी शोभनयोगजो वधरुचिर्जातोऽतिगण्डे धनी
धर्माचाररतः सुकर्मजनितो धृत्यां परस्त्रीधनः ॥ ९८ ॥
शूले कोपवशानुगः कलहकृद्गण्डे दुराचारवान्
वृद्धौ पण्डितवाग् ध्रुवेऽतिधनवान् व्याघातजो घातकः ।
ज्ञानी हर्षणयोगजः पृथुयशा वज्रे धनी कामुकः
सिद्धौ सर्वजनाश्रितः प्रभुसमो मायी व्यतीपातजः ॥ ९९ ॥
दुष्कामी च वरीयजस्तु परिघे विद्वेषको वित्तवान्
शास्त्रज्ञः शिवयोगजश्च धनवान् शान्तोऽवनीशप्रियः ॥
सिद्धे धर्मपरायणः क्रतुपरः साध्ये शुभाचारवान्
चार्वङ्गः शुभयोगजश्च धनवान् कामातुरः श्लेष्मकः ॥ १०० ॥
शुक्ले धर्मरतः पटुत्ववचनः कोपी चलः पण्डितो
मानी ब्रह्मभवोऽतिगुप्तधनिकस्त्यागी विवेकप्रभुः ॥
ऐन्द्रे सर्वजनोपकारचरितः सर्वज्ञवीर्वित्तवान्
मायावी परदूषकश्च बलवान् त्यागी धनी वैधृतौ ॥ १०१ ॥

इदानीं चतुर्भिः श्लोकैः स्पष्टार्थकैर्योगफलान्युच्यन्ते। तत्र प्रथमं को नाम योगः? इत्युच्यते। सूर्याचन्द्रमसोर्योगकलिका अष्टशतभक्ता लब्धमिता योगा भवन्ति 'विधोश्च सार्कसितगोर्लिप्ताः खखाष्टो—८०० दृधृताः, याते स्तो भयुती क्रमात्' इति गणेशोक्तेन। ते योगाः फलादेशार्थम्—

[1] विष्कुम्भः [2] प्रीतिरायुष्मान् [3] सौभाग्यः [4] शोभनस्तथा। [5] अतिगण्डः [6] सुकर्मा च [7] धृतिः [8] शूलस्तथैव च ॥
[9] गण्डो [10] वृद्धिर्ध्रुवश्चैव [11] व्याघातो [12] हर्षणस्तथा। [13] वज्रः [14] सिद्धिर्व्यतीपातो [15] वरीयान् [16] परिघः [17] शिवः ॥
[18] सिद्धः [19] साध्यः [20] शुभः [21] शुक्लः [22] ब्रह्म [23] ऐन्द्रश्च [24] वैधृतिः ॥

इति सप्तविंशतिनामभिर्व्यवहृताः। तेषु जन्मकाले यो योगस्तदुक्तफलं ज्ञातव्यादेश्यमिति ॥ ९८–१०१ ॥

विष्कम्भ योगमें जन्म हो तो शत्रुओंको जीतनेवाला, धनवान् और पशुमान् होवे। प्रीति योगोत्पन्न बालक पर स्त्रीके वशमें रहै। आयुष्मान् योगमें उत्पन्न बालक दीर्घायु, रोगरहित होवे। सौभाग्य योगमें उत्पन्न होनेवाला सुखी होवे। शोभन योगमें उत्पन्न बालक भोगी, वध करनेमें रुचि रखनेवाला हो। अतिगण्डोत्पन्न बालक धनी होता है। सुकर्म योगका उत्पन्न बालक धर्म-आचारमें रत होवे। धृति योगोत्पन्न परस्त्रीके धनसे धनी हो ॥ ९८ ॥

शूल योगमें उत्पन्न हो तो कोपके वशमें रहनेवाला और कलह करनेवाला होवे। गण्ड-योगमें पैदा हो तो दुराचारी होवे। वृद्धियोगमें उत्पन्न बालक पण्डितके सदृश बोलनेवाला हो। ध्रुवयोगोत्पन्न विशेष धनी हो। व्याघात योगोत्पन्न घातक हो। हर्षण योगोत्पन्न ज्ञानी और बड़े यशवाला होवे। वज्रयोगोद्भव धनी और कामी होवे। सिद्धि योगोत्पन्न सर्वजनका आश्रित, प्रभुके सदृश हो, व्यतीपातका बालक मायावी हो ॥ ९९ ॥

वरीयान् योगका उत्पन्न दुष्कामी हो। परिघयोगवाला विद्वेषी तथा धनी हो। शिव योगमें उत्पन्न बालक शास्त्रज्ञ, धनी, शान्त और राजाका प्रिय हो। सिद्धयोगका जन्मा हुआ बालक धर्ममें और यज्ञ करनेमें तत्पर हो। साध्ययोगोत्पन्न शुभ आचरण-वाला हो। शुभयोगका बालक चञ्चलाङ्ग, धनवान्, कामातुर और कफ-प्रकृति वाला हो ॥ १०० ॥

शुक्ल योगमें पैदा हुआ बालक धर्ममें तत्पर, चतुर वचन बोलनेवाला, क्रोधी, चञ्चल, और पण्डित हो। ब्रह्मयोगका उत्पन्न बालक मानी, छिपा हुआ विशेष धनवाला, त्यागी, विवेकियोंमें श्रेष्ठ हो। ऐन्द्र योगमें उत्पन्न हुआ बालक सर्वजनका उपकार करने वाला, सर्वज्ञ, बुद्धिमान् और धनी हो। वैधृति योगमें उत्पन्न होनेवाला बालक माया करनेवाला, परका निन्दक, बलवान्, त्यागी और धनी होवे ॥ १०१ ॥

## अथ करणफलम्।

बवकरणभवः स्याद्बालकृत्यः प्रतापी-विनयचरितवेषो बालवे राजपूज्यः।
गजतुरगसमेतः कौलवे चारुकर्मा-मृदुपटुवचनः स्यात्तैतिले पुण्यशीलः ॥१०२॥
गरजकरणजातो वीतशत्रुः प्रतापी-वणिजि निपुणवक्ता जारकान्ताविलोलः।
निखिलजनविरोधी पापकर्माऽपवादी-परिजनपरिपूज्यो विष्टिजातः स्वतन्त्रः १०३

कालज्ञः शकुनीभवः स्थिरसुखी जातस्त्वनिष्टाकरः
सर्वज्ञश्च चतुष्पदे तु ललितप्रज्ञायशोवित्तवान्।
तेजस्वी वसुमानतीव बलवान् वाचालको नागके
किंस्तुघ्ने परकार्यकृच्चपलधीर्हास्यप्रियो जायते ॥ १०४ ॥

इदानीं श्लोकत्रयेण करणफलान्युच्यन्ते। तत्र किन्नाम करणम्? इत्युच्यते। तिथेर्दलं करणमर्थादेकस्यां तिथौ करणद्वयं भवति। तच्च सूर्याचन्द्रमसोरन्तरांशमानं षड्भक्तं सञ्जायते। तेषु बव-बालव-कौलव-तैतिल-गर-वणिज्-विष्टय इति सप्त चलकरणानि। तथा शकुनि-चतुष्पद-नाग-किंस्तुघ्नानीति चत्वारि स्थिरकरणानि विज्ञेयानि।

"रविरसैर्विरवीन्दुलवा हृताः फलमितास्तिथयः करणानि च।
कुहितानि च तानि बवादितः शकुनितोऽसितभूतदलादनु॥"

इति भास्करोक्तेः कृष्णे पक्षे चतुर्दशीपरार्द्धे शकुनिः। अमायाः पूर्वार्द्धे चतुष्पदुत्तरार्द्धे नागः। शुक्लपक्षस्य प्रतिपदः पूर्वार्द्धे किंस्तुघ्नः। अतः सूर्याचन्द्रमसोरन्तरांशमानं षड्भक्तं सचक्लब्धं तदेकोनं बवादितः करणमानं स्यात्। प्रतिपदुत्तरार्द्धे बवकरणत्वादिति। जन्मकाले यत्करणं तस्योक्तं फलं जातकस्योदाहर्त्तव्यमिति। श्लोकाः स्पष्टार्था एव १०२-१०४

बव करणमें उत्पन्न बालक बालकवत् कार्य करनेवाला और प्रतापी होता है। बालव करणमें बालक विनय चरित वाला और राजपूज्य होता है। कौलव करणवाला हाथी घोड़ोंसे युक्त और सुन्दर चरित्र होवे। तैतिल करणवाला कोमल-चतुरतापूर्वक वचन बोलने वाला और पुण्यात्मा हो ॥ १०२ ॥

गर करणका उत्पन्न बालक शत्रुरहित और प्रतापी हो। वणिज करणोत्पन्न बालक वक्ता, विनयी और चञ्चल हो। विष्टि करणमें उत्पन्न बालक सबका विरोधी, पापकर्मा, अपवादी, सब जनोंसे पुजानेवाला और स्वतन्त्र होवे ॥ १०३ ॥

शकुनि करणका उत्पन्न बालक कालज्ञ, स्थिर सुखवाला और अनिष्टका भण्डार होवे। चतुष्पद करणमें उत्पन्न बालक सर्वज्ञ, अच्छी बुद्धि-यश-धनवाला हो। नाग करणका उत्पन्न मनुष्य तेजवान्, धनवान्, विशेष बलवान् तथा बोलनेवाला हो। किंस्तुघ्न करणमें उत्पन्न मनुष्य परकार्य करनेवाला, चपलबुद्धि और हास्यप्रिय होता है॥ १०४॥

अथ लग्नफलम्।

बन्धुद्वेषकरोऽटनः कृशतनुः क्रोधी त्रिवादप्रियो
मानी दुर्बलजानुरस्थिरधनः शूरश्च मेषोदये॥
गोमान् देवगुरुद्विजार्चनरतः स्वल्पात्मजः शान्तधी-
विद्यावादरतोऽटनश्च सुभगो गोलग्नजः कामुकः॥ १०५॥
भोगी बन्धुरतो दयालुरधिकः श्रीमान् गुणी तत्त्ववित्
योगात्मा सुजनप्रियोऽतिसुभगो रोगी च युग्मोदये॥
मिष्टान्नाम्बरभूषणो ललितवाक्कापट्यधीर्धर्मवान्
जातः स्थूलकलेवरोऽन्यभवनप्रीतः कुलीरोदये॥ १०६॥
जातः सिंहविलग्नकेऽल्पतनयः सन्तुष्टधीर्हिंसकः
शूरो राजवशीकरो जितरिपुः कामी विदेशं गतः॥
कन्यालग्नभवः क्रियासुनिपुणः श्रीमान् सुधीः पण्डितः
मेधावी वनिताविलासरसिको बन्धुप्रियः सात्त्विकः॥ १०७॥
ललितवदननेत्रो राजपूज्यश्च विद्वान्-मदनरतिविलोलः श्रीधनक्षेत्रशाली।
विरलदशनमुख्यः शान्तबुद्धिर्विषादी-चलमतिरतिभीरुर्जायते तौलिलग्ने॥१०८॥
मूर्खः क्रूरविलोचनोऽतिचपलो मानी चिरायुर्धनी
विद्वान् वृश्चिकलग्नजश्च सुजनद्वेषी विवादप्रियः॥
प्राज्ञश्चापविलग्नजः कुलवरः श्रीमान् यशोवित्तवा-
न्मा कुम्भीरसमुद्भवश्च रमणीलोलः शठो दीनवाक्॥ १०९॥
अन्तःशठः परवधूरतिकेलिलोलः-कार्पण्यशीलधनवान् घटलग्नजातः
मीनोदयेऽल्परतिरिष्टजनानुकूल-स्तेजोबलप्रचुरधान्यधनश्च विद्वान्॥ ११०॥

इदानीं लग्नफलान्युच्यन्ते। तत्र प्रथमं किन्नाम लग्नम्? इत्युच्यते। 'राशीनामुदयो लग्नं ते तु मेषवृषादयः' इत्यमरसिंहवचनस्वरसात् वर्त्तमानकाले राशिमण्डलस्य (क्रान्तिवृत्तस्य) यो राश्यात्मकः प्रदेश उदेति (उदयक्षितिजे सँल्लग्नो भवति) तदेव लग्नं तात्कालिकं भवति, अहोरात्रे समस्तस्य राशिमण्डलस्य भ्रमणात्। तस्य लग्नस्यानयनप्रकारो ग्रन्थान्ते परिशिष्टे द्रष्टव्यः। जन्मकाले यल्लग्नं भवति तदुक्तफलं तस्य जनिमत ऊहनीयमिति। श्लोकास्तु स्पष्टार्था एवेत्यलं पल्लवितेन॥ १०५-११०॥

जिस मनुष्यका जन्म मेष लग्नमें हो वह बन्धुओंका द्वेषी, घूमनेवाला, दुर्बल शरीर, क्रोधी, विवादप्रिय, मानी, दुर्बलजानु, अस्थिर धनवाला और पराक्रमी हो। जिस मनुष्य का जन्म वृष लग्नमें हो वह गोमान् (पशु आदिसे युत), देव-गुरु-द्विज-पूजन में तत्पर, स्वल्पतनय, शान्त बुद्धि, विद्यावादरत, घूमनेवाला, सुन्दर और कामी होवे॥ १०५॥

जिस मनुष्यका जन्म मिथुन लग्नमें हो वह भोगी, बन्धुवोंमें रत, अधिक दयावान्, श्रीमान्, गुणी, तत्त्वज्ञ, योगात्मा, सुजनप्रिय, अतिसुन्दर और रोगी हो। जिस मनुष्यका जन्म कर्क लग्नमें हो वह मिष्टान्नभोजी, वस्त्र-भूषणयुक्त, सुन्दरवचन, कपटबुद्धि धर्मवान स्थूलशरीर और अन्यके गृहमें प्रीति रखनेवाला हो॥ १०६॥

जिस मनुष्यका जन्म सिंह लग्नमें हो उसकी थोड़ी सन्तान होवें, सन्तुष्ट, हिंसा करने वाला, वीर, राजाको वशमें करनेवाला, शत्रुओंको जीतनेवाला, कामी और परदेशमें जाने वाला होवे। जिस मनुष्यका कन्या लग्न हो वह क्रियामें निपुण, श्रीमान्, पण्डित, बुद्धिमान्, स्त्रीविलास का रसिक, बन्धुप्रिय और सात्त्विक होवे ॥ १०७ ॥

जिस मनुष्यका तुला लग्न हो वह ललित वदन-नेत्र, राजपूज्य, विद्वान्, कामके प्रसंगमें चञ्चल, स्त्री-धन-क्षेत्रका अधिष्ठाता, विरल दाँत, मुख्य, शान्तबुद्धि, विषादी, चञ्चल प्रकृति, अत्यन्त डरपोक होता है ॥ १०८ ॥

जिस मनुष्यका जन्म वृश्चिक लग्नमें हो वह मूर्ख, क्रूर नेत्र, विशेष चञ्चल, मानी, दीर्घायु, धनी, विद्वान्, सुजनोंका वैरी और विवादप्रिय होता है। जिस मनुष्यका जन्म धनु लग्नमें हो वह बुद्धिमान्, यशस्वी, धनवान् हो। मकरलग्नमें उत्पन्न हो तो स्त्री प्रसंग में चञ्चल, शठ और हीनवचन बोलने वाला होता है ॥ १०९ ॥

जिस मनुष्यका जन्म कुम्भ लग्नमें हो वह भीतरी शठ, पर-स्त्रीसे रति करनेको चञ्चल, कृपण-शील और धनी होता है। जिस मनुष्यका जन्म मीन लग्नमें हो वह अल्परति, इष्टजनोंके अनुकूल, विशेष तेज-बल-धनधान्यवाला तथा विद्वान् होता है ॥ ११० ॥

अथ होराफलम्।

ओजे राशौ भानुहोराप्रजातः-क्रूरः कामी वित्तवान् राजपूज्यः।
वाग्मी दाता चारुदेहो दयालु-र्जारस्त्रीकश्चन्द्रहोरा यदि स्यात् ॥ १११ ॥
मार्तण्डहोराजनितः समर्क्षे-मन्त्री कृतज्ञश्चपलोऽतिभीरुः।
चन्द्रस्य होराप्रभवः प्रगल्भ-वाक्योऽलसः पुण्यवधूरतः स्यात् ॥ ११२ ॥

अत्र श्लोकद्वयेन स्पष्टार्थकेन होराफलमुच्यते। राश्यर्द्धं होरेति प्रतिराशिं होराद्वयं भवति। तत्रायुग्मे ( १।३।५।७।९।११ ) राशौ प्रथमं सूर्यस्य होरा १५ अंशपर्यन्तं ततश्चन्द्रस्य। समे ( २।४।६।८।१०।१२ ) राशौ प्रथमं चन्द्रस्य ततः सूर्यस्य होरा सम्भवति। जन्मकाले प्रोक्तानुसारेण विविच्य फलमादिशेदिति ॥ १११-११२ ॥

विषम राशिमें सूर्यकी होरामें जन्म हो तो क्रूर, कामी, धनवान् और राजपूज्य हो, और यदि विषम राशिमें चन्द्रमाकी होरामें जन्म हो तो वाग्मी, दाता, चारुशरीर, दयालु जार ( लम्पट ) और स्त्री-प्रकृतिवाला होवे ॥ १११ ॥

सम राशिमें सूर्यकी होरामें जन्म हो तो मन्त्री, कृतज्ञ, चपल और अति डरपोक हो। सम राशिमें यदि चन्द्रमाकी होरा हो तो उसमें उत्पन्न बालक बोलनेमें दक्ष, आलसी और सती स्त्रीमें रत होवे ॥ ११२ ॥

अथ द्रेष्काणफलम्।

कण्ठीरवाजघटकीटमृगाननाद्या-मीनालिसिंहवणिगन्त्यगता दृकाणाः।
क्रूरा भवन्ति कटकस्य सरीसृपस्य-मध्यस्थितश्च बहुशः प्रवदन्ति सन्तः ॥ ११३ ॥
कुलीरमीनादिगतौ दृकाणौ-मीनाङ्गनामन्दिरमध्यगौ च।
गोयुग्मयोरन्त्यगतत्रिभागौ-भवन्ति षट् तोयचरा दृकाणाः ॥ ११४ ॥
मेषाश्विगोकुम्भमृगाद्वितीय-स्तुलाधरस्त्रीयुगपूर्वभागः।
चापाङ्गनातोयधरान्त्ययाता-दृकाणसंज्ञाः प्रभवन्ति सौम्याः ॥ ११५ ॥
मृगाजकर्क्यन्त्यगता दृकाणा-वृषस्य चापस्य च पूर्वयातौ।
नृयुग्मतौलीहरिमध्यगास्ते-विमिश्रसंज्ञा इति संवदन्ति ॥ ११६ ॥
क्रूरद्रेष्काणजातः खलमतिरटनः पापकर्माऽपवादी
दाता भोगी दयालुः कृषिसलिलधनस्तोयभागे विशीलः।
सौम्यद्रेष्काणजो यः सुखधनतनयश्चारुरूपो दयालु-
र्जातो मिश्रे कुशीलः परयुवतिरतः क्रूरदृष्टिश्चलात्मा ॥ ११७ ॥

अधुना द्रेष्काणफलानि विवक्षुरादौ द्रेष्काणसंज्ञा उच्यन्ते। कण्ठीरवाजघटकीटमृगानन गाः=सिंह-मेष-कुम्भ-वृश्चिक-मकरराशीनां प्रथमद्रेष्काणाः, मीनालिसिंहवणिगन्त्यगताः =मीन-वृश्चिक-सिंह-तुलाराशीनां तृतीयद्रेष्काणाः, कटकस्य=कर्कराशेः, सरीसृपस्य=वृश्चिकस्य च मध्यस्थितो द्वितीयद्रेष्काणश्चैते एकादश क्रूराः=क्रूरसंज्ञका द्रेष्काणा भवन्तीति बहुराः सन्तः प्रवदन्ति। कुलीरमीनादिगतौ=कर्क-मीनराश्योः प्रथमद्रेष्काणौ, मीनाङ्गनामन्दिरमध्यगौ-मीनकन्याराश्योर्द्वितीयद्रेष्काणौ, गोयुग्मयोरन्त्यगतत्रिभागौ=वृषमिथुनयोरतृतीयद्रेष्काणौ चेत् षट् तोयचराः=जलचराख्या द्रेष्काणा उच्यन्ते विज्ञैः। मेषाश्विगोकुम्भमृगद्वितीयः=मेषधनुर्वृषकुम्भमकरराशीनां द्वितीयद्रेष्काणाः, तुलाधरस्त्रीयुगपूर्वभागाः=तुलाकन्यामिथुनराशीनां प्रथमद्रेष्काणाः, चापाङ्गनातोयधरान्त्ययाताः=धनुःकन्याकुम्भराशीनां तृतीयद्रेष्काणाश्चैते एकादश सौम्याः=सौम्यसंज्ञका द्रेष्काणा प्रभवन्ति। मृगाजकर्कान्त्यगताः=मकरमेषकर्कराशीनां तृतीयाः, वृषस्य, चापस्य ( धनुषः ) च राशेः पूर्वयातौ प्रथमद्रेष्काणौ, नृयुग्मतौलीहरिमध्यगाः=मिथुनतुलासिंहानां द्वितीयाश्चैतेऽष्टौ विमिश्रसंज्ञा द्रेष्काणा भवन्तीति मनीषिणः संवदन्ति। द्रेष्काणजातफलमुच्यते। क्रूरद्रेष्काणजात इति स्पष्टार्थः। जन्मलग्ने यो द्रेष्काणस्तत्फलं वाच्यमिति ॥ ११३–११७ ॥

**द्रेष्काणानां संज्ञाचक्रम्**

| राशयः | द्रेष्काणाः | संज्ञा |
|---|---|---|
| ५।१।११।८।१० | १ | क्रूराः ११ |
| १२।८।५।७ | ३ | |
| ४।८ | २ | |
| ४।१२ | १ | जलचराः ६ |
| १२।६ | २ | |
| २।३ | ३ | |
| १।९।२।११।१० | २ | सौम्याः ११ |
| ७।६।३ | १ | |
| ९।६।११ | ३ | |
| १०।१।४ | ३ | विमिश्राः ८ |
| २।९ | १ | |
| ३।७।५ | २ | |

सिंह, मेष, कुम्भ, वृश्चिक, मकर, इन राशियोंका पहला द्रेष्काण, मीन, वृश्चिक, सिंह तुला इन राशियों के अन्तिम द्रेष्काण और कर्क-वृश्चिक का मध्य द्रेष्काण क्रूर संज्ञक होते हैं ॥ ११३ ॥

कर्क-मीनके आदि द्रेष्काण, मीन-कन्याका मध्य द्रेष्काण, वृष-मिथुनके अन्त्यक त्रिभाग ( द्रेष्काण ) ये छै तोयचर द्रेष्काण होते हैं ॥ ११४ ॥

मेष-धनु-वृष-कुम्भ-मकर इन राशियोंका द्वितीय; तुला, कन्या, मिथुनका प्रथम द्रेष्काण और धनु-कन्या, कुम्भके अन्त्य द्रेष्काण सौम्य संज्ञक होते हैं ॥ ११५ ॥

मकर, मेष, कर्क इन राशियोंके अन्त्य द्रेष्काण, वृष-धनका पहला द्रेष्काण; मिथुन-तुला-सिंहके मध्य द्रेष्काणकी विमिश्र संज्ञा कहते हैं ॥ ११६ ॥

जिस मनुष्यका जन्म क्रूर द्रेष्काणमें हो वह खल बुद्धि, घूमनेवाला, पापकर्मा, अपवादी होता है। तोय भागमें उत्पन्न जो बालक है वह दाता, भोगी, दयालु, कृषि तथा जलचर वस्तुसे धनवान् और शील रहित होता है।

जिस मनुष्यका जन्म सौम्य द्रेष्काणमें हो वह सुख-धन-पुत्र-युत हो और रमणीय शरीर तथा दयालु होता है। जिस मनुष्यका जन्म मिश्रसंज्ञक द्रेष्काणमें हो वह कुशील, परस्त्रीसे रमण करनेवाला, क्रूरदृष्टि और चंचलात्मा होता है ॥ ११७ ॥

## अथ नवांशफलम् ।

मार्तण्डांशे खलात्मा बलसुतधनवान् पिङ्गलाक्षश्च कामी
चन्द्रांशे भोगशाली परयुवतिरतः पण्डितो गोधनाढ्यः ।
भौमांशे क्रूरकर्मा चलमतिरटनः पित्तरोगी च लुब्ध-
स्त्यागी रोगी बुधांशे ललिततनुरतिख्यातविद्यायशस्वी ॥ ११८ ॥
जीवांशे यदि हेमकेशतनुगः श्रेष्ठः सुधी रूपवान्
मन्त्री पण्डितवाक् प्रसन्नवदनो राजाधिराजप्रियः ।
शुक्रांशे परकामिनीजनरतस्त्यागी सुखी पण्डितो
मन्दांशे यदि पापबुद्धिरधनः स्थूलद्विजो रोगवान् ॥ ११९ ॥

इदानीं श्लोकद्वयेन ग्रहाणां नवांशफलान्युच्यन्ते । लग्नराशौ यस्य ग्रहस्य नवांशे जन्म भवति तत्फलमत्र जातस्योह्यमिति श्लोकौ सरलार्थौ ॥ ११८-११९ ॥

सूर्यके नवांशमें जिस मनुष्यका जन्म हो वह दुष्टात्मा, बलवान्, पुत्रवान्, धनवान्, पीले नेत्रवाला और कामी होता है। जिसका जन्म चन्द्रमाके नवांशमें हो वह भोगकरनेमें दक्ष, परस्त्रीसे विलास करनेवाला, पण्डित, गोवंशसे और धनसे पूर्ण होता है। जिसका जन्म मङ्गलके नवांशमें हो वह क्रूरकर्मा, चञ्चलबुद्धि, घूमनेवाला, पित्तरोगी और लोभी होता है। जिसका जन्म बुधके नवांशमें हो वह त्यागी, रोगी ललित शरीर, विशेषनामी, विद्वान् और यशस्वी होता है ॥ ११८ ॥

जिसका जन्म गुरुके नवांश में हो वह सुवर्णके सदृश बाल और शरीरवाला, श्रेष्ठ, सुधी, रूपवान्, मंत्री, पण्डितके सदृशवचनवाला, प्रसन्नवदन, राजाधिराजों का प्रिय होता है। जिस मनुष्यका जन्म शुक्रके नवांशमें हो वह परस्त्री-गामी, त्यागी, सुखी और पण्डित होता है। जिसका जन्म शनिके नवांशमें हो वह पापबुद्धि, दरिद्र, स्थूलदन्त और रोगवान् होता है ॥ ११९ ॥

## अथ द्वादशांशफलम् ।

जाती मेषद्वादशांशे खलात्मा-चोरः पापाचारधर्मानुरक्तः ।
स्त्रीवित्ताढ्यो रोगवानुक्षभांशे-युग्मांशे तु द्यूतकृत्यः सुशीलः ॥ १२० ॥
दुष्टाचारः कर्कटांशे तपस्वी-सिंहे भागे राजकृत्यः सुशूरः ।
द्यूताचारः स्त्रीरतः कन्यकांशे-व्यापारी स्यात् तौलिभांशे धनाढ्यः ॥ १२१ ॥
कीटांशके धनरुचिर्विटचारनाथ-श्चापांशके पितृमहीसुरदेवभक्तः ।
सस्याधिपो मृगमुखांशभवः सभृत्यः-कुम्भे खलस्त्वनिमिषे वनिकश्च विद्वान् ॥ १२२ ॥

इदानीं त्रिभिः श्लोकैर्द्वादशांशफलान्युच्यन्ते । जन्मलग्ने यस्य राशेर्द्वादशांशो भवेत्तदुक्तफलमादेश्यं जातकस्य । श्लोकाः स्पष्टार्था एवेति ॥ १२०-१२२ ॥

जो मनुष्य मेषके द्वादशांशमें उत्पन्न हो वह खलात्मा, चोर, पाप आचरणमें अनुरक्त होता है। वृषके द्वादशांशमें उत्पन्न मनुष्य स्त्रीके धनसे धनी और रोगवान् होता है। मिथुनके द्वादशांशमें उत्पन्न नर जुआड़ी और सुशील होता है ॥ १२० ॥

कर्कके द्वादशांशवाला दुष्ट आचरणवाला और तपस्वी होता है। सिंहके द्वादशांशवाला राजकार्यपरायण और सुशील होता है। कन्याके द्वादशांशमें उत्पन्न बालक जुआड़ी, स्त्रीमें लीन हो। तुलाके द्वादशांशमें उत्पन्न हुआ बालक व्यापारी और धनी हो ॥ १२१ ॥

जिसका वृश्चिकके द्वादशांशमें जन्म हो वह मारनेकी इच्छा रखनेवाला, धूर्त-चोरोंका स्वामी हो। धनुके द्वादशांशमें उत्पन्न हो तो पिता-देवता-ब्राह्मणका भक्त हो। मकरके द्वादशांशमें जन्म हो तो सस्यादि युक्त और द्यूतवाला हो। कुम्भके द्वादशांशवाला खल हो। मीनके द्वादशांशवाला धनी, और पण्डित होवे ॥ १२२ ॥

## अथ त्रिंशांशफलम्।

त्रिंशांशे धरणीसुतस्य चपलः काठिन्यवाक् क्रूरधी-

र्मन्दस्याटनतत्परो मलिनधीर्जीवांशके वित्तवान्।

सौम्यांशे गुरुदेवभक्तिनिरतः साधुप्रियो बन्धुमान्

कामी कान्तवपुः सुखी च भृगुजस्त्रिंशांशके जायते ॥ १२३ ॥

इदानीं त्रिंशांशफलमुच्यते। तत्काललग्ने यस्य ग्रहस्य त्रिंशांशे जन्म भवेत्तदुक्तं फलं तस्य जातकस्य वाच्यमिति। श्लोकः स्पष्टार्थ एव। होरा-द्रेष्काण नवांश-द्वादशांश-त्रिंशांशानां ज्ञानप्रकारस्तु पूर्वमेव दशवर्गनिरूपणे प्रोक्त इति ॥ १२३ ॥

मङ्गलके त्रिंशांशमें जन्म हो तो चपल, कठिन वचन बोलनेवाला, क्रूरबुद्धि हो। शनिके त्रिंशांशमें घूमनेवाला और मलिनबुद्धि हो। बृहस्पतिके त्रिंशांशवाला धनी हो। बुधके त्रिंशांशवाला गुरु-देवभक्तिमें निरत, साधुप्रिय और बन्धुमान् हो। शुक्रके त्रिंशांशमें उत्पन्न हो तो कामी, सुन्दरशरीर और सुखी होवे ॥ १२३ ॥

## अथ वेलाफलम्।

वाग्मी शिष्टाचारधर्मस्तपस्वी नित्योत्साही निर्मलो दानशीलः।

तेजोविद्यारूपवान् सत्यवादी वीतारातिः सत्त्ववेलाप्रजातः ॥ १२४ ॥

रजोवेलाजातः सुखधनयशोरूपबलवान्

जिताराातिः कामातुरमतिरबन्धुप्रियमनाः।

तमोवेलाजातः परधनवधूको गतसुखः

शठस्वामी बन्धुर्द्विजगुरुविरोधी चपलधीः ॥ १२५ ॥

तमः सत्त्वरजोवेलास्तमः सत्त्वं रजस्तमः।

भवन्त्यर्कदिनादीनामर्धयामैरनुक्रमात् ॥ १२६ ॥

इदानीं वेलाफलान्युच्यन्ते। तत्र का नाम वेलेत्युच्यते। अर्कदिनादीनां=सूर्यादिवासराणामर्द्धयामैरर्द्धप्रहरप्रमितैरनुक्रमात्=क्रमेण तमः, सत्त्वं, रजः, तमः, सत्त्वं, रजः, तमः इति वेला भवन्ति। प्रतिदिनं षोडश षोडश। रविवासरे तम आरभ्य तमः, सत्त्वं, रजः, तमः, सत्त्वं, रज इत्येवं प्रकारेण षोडश। चन्द्रवासरे सत्त्वं, रजः, तमः, सत्त्वमेवं क्रमेण षोडश। एवं प्रतिवारमुक्तक्रमेण ज्ञेयाः। प्रतिखण्डं प्रहरार्द्धमितमेवमष्टप्रहरेषु षोडश भवन्ति। यथा चक्रम्—

| वाराः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| रविः | तमः | सत्त्व | रजः | त. | स. | र. | त. | स. | र. | त | स. | र. | त. | स. | र. | त. |
| चन्द्रः | सत्त्वं | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. |
| मङ्गलः | रजः | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. |
| बुधः | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. |
| बृह. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स |
| शु. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. |
| श. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. | स. | र. | त. |

जन्मकाले या वेला भवेत्तदुक्तं फलं तस्य वाच्यमिति। फलं सर्वं स्पष्टमेव॥१२४-१२६॥

सत्व वेलामें उत्पन्न होनेवाला धार्मी, शिष्टाचारवाला, धर्मी, तपस्वी, नित्य उत्साह करनेवाला, निर्मल, दानी, तेजस्वी, विद्वान् , पुण्यवान् , सत्यवक्ता, शत्रुरहित होता है ॥

रजोवेलामें उत्पन्न होनेवाला मनुष्य धन-सुख-यश-रूपवान् , बलवान् , शत्रुओंको जीतनेवाला कामातुरबुद्धि, विनापरिवार-मित्रवाला होवे । तमोवेलामें उत्पन्न होनेवाला, पराया धन-परस्त्रीको ग्रहण करनेवाला, सुख रहित, शठोंका स्वामी, बन्धु-द्विज-गुरुका विरोधी, चंचल बुद्धिवाला होवे ॥ १२५ ॥

सूर्यादि दिनमें तम, सत्व, रज, तम, सत्व, रज, तम इस प्रकार आधा २ प्रहर तक एक २ वेला क्रमसे रहती है ॥ १२६ ॥

## अथ कालहोराफलम् ।

मन्त्रिमङ्गलमार्तण्डशुक्रेन्दुशनैश्चराः ।
आरभ्य वारतो होरा रात्रौ पञ्चमवारतः ॥ १२७ ॥
क्लेशायासः संपदः शोकरोगं विद्यावित्तं सर्वसम्पत् प्रभुत्वम् ।
जायासौख्यं वित्तनाशं दिनेशाज्जातस्यैतत्कालहोराफलं स्यात् ॥ १२८ ॥
मार्तण्डसूनुतनयाश्रयभावजानि संवत्सरायनमुखप्रभवाखिलानि ।
होरादिवर्गजनितानि फलानि यानि संकीर्तितानि रविमुख्यवरप्रसादात् ॥ १२९ ॥

इदानीं कालहोराफलानि विवक्षुः प्रथमं कालहोरा उच्यन्ते । ततः कालहोराफलानि च । एकस्मिन्नहोरात्रे षष्टिदण्डात्मके चतुर्विंशतिः कालहोरा भवन्ति । दिने द्वादश रात्रौ च द्वादश । प्रतिखण्डं सार्द्धघटीद्वयम् । वसिष्ठेन—

'वारप्रवृत्तेर्मदिता दिनेशात्कालाख्यहोरापतयः क्रमेण ।
सार्द्धेन नाडीद्वितयेन तेष्टः षष्ठश्च षष्ठश्च पुनः पुनः स्यात्' ॥

इत्युक्तत्वात् । रामाचार्येण च—

'वारादेर्घटिका द्विघ्नाः स्वाक्षहृच्छेषवर्जिताः ।
सैकास्तष्ठ क्ष्मोः कालहोरेशा दिनपात् क्रमात्' ॥

इत्युक्तवशाद् वारमारभ्य षष्ठः षष्ठः कालहोरेशा भवन्ति । यथा गुरुदिने प्रथमा कालहोरा गुरोर्द्वितीया तस्मात्षष्ठस्य भौमस्य, तृतीयाऽपि तस्मात्षष्ठस्य सूर्यस्यैवं श्लोकोक्तं विज्ञेयम् । एवं रात्रौ वारेशात्पञ्चमादितो भवति । यथा रविरात्रौ प्रथमा गुरोः, द्वितीया भौमस्यैवं चन्द्ररात्रौ प्रथमा शुक्रस्य, द्वितीया बुधस्यैवं सर्वत्र विज्ञेयम् । स्पष्टार्थं चक्रं * द्रष्टव्यम् । कालहोराफलं स्पष्टार्थकमिति ॥ १२७-१२९ ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता ।
वर्षादिफलसंज्ञेऽस्मिन्नध्याये ( ९ ) पूर्णतां गता ॥ ९ ॥

बृहस्पति, मङ्गल, सूर्य, शुक्र, बुध, चन्द्र, शनि ये होरेश आरम्यवारसे छठे २ होते हैं और रात्रिमें अपने पञ्चम वारसे होते हैं । जैसे सूर्य वारमें पहले सूर्यकी फिर शुक्रकी फिर बुधकी इत्यादि क्रमसे, चन्द्रवारमें पहले चन्द्रकी फिर शनिकी फिर गुरुकी इत्यादि क्रमसे सबकी जाने ॥ १२७ ॥

सूर्यादिकी कालहोरामें जायमानका फल इस प्रकार है कि—सूर्यकी कालहोरामें उत्पन्न हो तो क्लेशसे समय व्यतीत हो । चन्द्रमाकी कालहोरामें जन्म हो तो धनवान् हो । मङ्गलकी कालहोरामें पैदा हो तो शोक और रोग हो । बुधकी कालहोरामें जायमान हो तो विद्या, और धन हो । बृहस्पतिकी कालहोरामें पैदा हो तो सब संपत्ति, और प्रभुता

* चक्रं ३१५ पृष्ठे वर्तते ।

हो । शुक्रकी कालहोरामें उत्पन्न हो तो स्त्रीका सुख हो । शनिकी कालहोरामें जन्म हो तो धनका नाश हो ॥ १२८ ॥

गुलिकाश्रित भावफल, संवत्सर-अयनप्रभृति सभीके फल एवं होरा प्रभृति जितने वर्ग हैं उनके फल श्री सूर्य आदि नव ग्रहोंकी कृपासे हम ९ वें अध्यायमें कहे हैं ॥ १२९ ॥

इति जातकपारिजाते नवमेऽध्याये विमला हिन्दी टीका समाप्ता ॥ ९ ॥

सूर्यादिवारेषु कालहोराज्ञानचक्रम् ।

| सं. | घट्यः | रविदिने | चं दि. | मं. दि. | बु दि. | बृ. दि. | शु. दि. | श दि. |
|---|---|---|---|---|---|---|---|---|
| १ | २।३० | र. | चं. | मं. | बु. | बृ. | शु. | श. |
| २ | ५।० | शु. | श. | र. | चं. | मं. | बु. | बृ. |
| ३ | ७।३० | बु. | बृ. | शु. | श. | र. | चं. | मं. |
| ४ | १०।० | चं. | मं. | बु. | बृ. | शु. | श. | र. |
| ५ | १२।३० | श. | र. | चं. | मं. | बु. | बृ. | शु. |
| ६ | १५।० | बृ. | शु. | श. | र. | चं. | मं. | बु. |
| ७ | १७।३० | मं. | बु. | बृ. | शु. | श. | र. | चं. |
| ८ | २०।० | र. | चं. | मं. | बु. | बृ. | शु. | श. |
| ९ | २२।३० | शु. | श. | र. | चं. | मं. | बु. | बृ. |
| १० | २५।० | बु. | बृ. | शु. | श. | र. | चं | मं. |
| ११ | २७।३० | चं. | मं. | बु. | बृ. | शु. | श. | र. |
| १२ | ३०।० | श. | र. | चं. | मं. | बु. | बृ. | शु. |
| १३ | ३२।३० | बृ. | शु. | श. | र. | चं. | मं. | बु. |
| १४ | ३५।० | मं. | बु. | बृ. | शु. | श. | र. | चं. |
| १५ | ३७।३० | र. | चं. | मं. | बु. | बृ. | शु. | श. |
| १६ | ४०।० | शु. | श. | र. | चं. | मं. | बु. | बृ. |
| १७ | ४२।३० | बु. | बृ. | शु. | श. | र. | चं. | मं. |
| १८ | ४५।० | चं. | मं. | बु. | बृ | शु. | श. | र. |
| १९ | ४७।३० | श. | र. | चं. | मं. | बु. | बृ. | शु. |
| २० | ५०।० | बृ. | शु. | श. | र. | चं. | मं. | बु. |
| २१ | ५२।३० | मं. | बु. | बृ. | शु. | श. | र. | चं. |
| २२ | ५५।० | र. | चं. | मं. | बु. | बृ. | शु. | श. |
| २३ | ५७।३० | शु. | श. | र. | चं. | मं. | बु. | बृ. |
| २४ | ६०।०० | बु. | बृ. | शु. | श. | र. | चं. | मं. |

इति नवमोऽध्यायः ॥ ९ ॥



## अथाष्टकवर्गाध्यायः ॥ १० ॥

चक्रं विलिख्य सह लग्नदिवाकराद्यैः सूर्यादिलग्नभवनान्तनिजस्वराणाम् ।
वाक्याष्टकोपगतवर्गनियोजिताक्षैरुद्धृत्य वर्गजनितास्खिलबिन्दवः स्युः ॥ १ ॥
देवो धवो भीगवशक्तिमो रमा धूलिः क्रमादुष्णकरादिबिन्दवः ।
सालोलसंख्याः समुदायबिन्दवः सर्वाष्टवर्गः समुदायसंज्ञकः ॥ २ ॥

अथाधुनाऽष्टकवर्गाध्यायो व्याख्यायते । तत्र 'अष्टवर्गेण ये शुद्धाः [illegible] दशाऽविलक-

मेषु' इति वृद्धवाक्यमनुस्मरन् स्थिराष्टकवर्गस्यावसरप्राप्तौ सलग्नाखिलखेटेभ्यो गोचरेण प्रतिराशि विचरत एकैकस्य गगनेचरस्य सदसत्फलनिरूपणार्थमष्टकवर्गा निरूप्यन्ते। तेषु चाष्टकवर्गेषु सर्वेभ्यो ग्रहेभ्य एकैकस्य शुभस्थानानि पठितानि। यानि चापठितानि तान्यशुभानि। शुभस्थानानि बिन्दूपलक्षितानि, अशुभानि च रेखोपलक्षितानि क्रियन्ते। तानि शुभचिह्नानि (बिन्दुरूपाणि) प्रत्येकस्य ग्रहस्य कियन्ति कियन्तीति प्रोच्यते-चक्रमिति श्लोकयुगलेन। लग्नदिवाकराद्यैः = सूर्यादयः सप्त ग्रहा लग्नञ्चेत्यष्टौ भवन्ति तैः, सह = सहितं, चक्रं विलिख्यार्थाज्जन्मकालिकचक्रे यथावस्थानं सलग्नं ग्रहमण्डलं विलिख्य तस्मिन्, सूर्यादिलग्नभवनान्तवियच्चराणामष्टानां, वाक्याष्टकोपगताः = प्रत्येकग्रहवशादुत्पन्नाः, ये वर्णा-(शुभचिह्नानि) स्ते नियोजिताः = सङ्कलिताश्चेद्भवेयुस्तदा भिन्नाष्टवर्गजनिताखिलबिन्दवः स्युः। ते सङ्कलिताः बिन्दवः पृथक् पृथक् प्रत्येकस्य ग्रहस्योच्यन्ते-देवो धव इत्यादयः। सूर्यस्य देवः = ४८ अष्टचत्वारिंशत्। (अत्र कटपयवर्गभवैरिहेत्यादिसङ्ख्यावगमनसंकेतेनावगम्या अङ्काः)। चन्द्रस्य, धवः = ४९ ऊनपञ्चाशत्। कुजस्य धीगः = ३९ ऊनचत्वारिंशत्। बुधस्य वशः = ५४ चतुःपञ्चाशत्। गुरोः तमः = ५६ षट्पञ्चाशत्। शुक्रस्य रमाः = ५२ द्विपञ्चाशत्। शनेः धूलिः = ३९ ऊनचत्वारिंशत्। एते किल सूर्यादिसप्तखेटानां सङ्कलिताः शुभबिन्दवः पृथक् पृथगुक्तास्तेषामपि संयोगेन समुदायबिन्दवः सालोल-(३३७) सङ्ख्याः = सप्तत्रिंशदधिकशतत्रयमिता भवन्ति। प्रतीत्यर्थं तद्गणितं, ४८ + ४९ + ३९ + ५४ + ५६ + ५२ + ३९ = ३३७। अत्र यदुक्तं 'समुदायबिन्दवः' इति तत्को नाम समुदायस्तदुच्यते, सर्वाष्टवर्गः समुदायसंज्ञ इति। अथात्र प्रसङ्गात् प्रत्येकस्य ग्रहस्याष्टकवर्गा वराहोक्ता विलिख्यन्ते—

(१ ११ ८ २ १० ९ ७)
सूर्याष्टकवर्गः—स्वादर्कः प्रथमायबन्धुनिधनाद्व्याज्ञातपोद्यूनगो
(७ १२ ६)
वक्रात् स्वादिव, तद्वदेव रविजात्, शुक्रात् स्मरान्त्यारिषु।
(९ ५ ११ ६ १० ३ ११ ६)
जीवात् धर्मसुतायशत्रुषु, दशत्र्यायारिगः शीतगोः
(१२ ९ ५ ४ १२)
एष्वेवान्त्यतपःसुतेषु च बुधात्, लग्नात् सबन्ध्वन्त्यगः॥ १॥

(६ ३ १० ११ २ ५ ९)
चन्द्राष्टकवर्गः—लग्नात् षट्त्रिदशायगः, सधनधीधर्मेषु चाराच्छशी
(७ १ ८ ७ ६ ३ ११ ५)
स्वात् सास्तादिषु, साष्टसप्तसु रवेः, षट्त्र्यायधीस्थो यमात्।
धीत्र्यायाष्टमकण्टकेषु शशिजात्, जीवाद् व्ययायाष्टगः,
केन्द्रस्थश्च, सितात्तु धर्मसुखधीत्र्यायास्पदानङ्गगः॥ २॥

भौमाष्टकवर्गः—वक्रस्तूपचयेष्विनात्, सतनयेष्वाद्याधिकेषूदयात्,
चन्द्राद् दिग्विफलेषु, केन्द्रनिधनप्राप्त्यर्थगः स्वाच्छुभः।
धर्मायाष्टमकेन्द्रगोऽर्कतनयात् ज्ञात् षट्त्रिधीलाभगः,
शुक्रात् षड्व्ययलाभमृत्युषु, गुरोः कर्मान्त्यलाभारिषु॥ ३॥

बुधाष्टकवर्गः—द्व्याद्यायाष्टतपःसुखेषु भृगुजात् सत्र्यात्मजेष्विन्दुजः,
साज्ञास्तेषु यमारयोः व्ययरिपुप्राप्त्यष्टगो वाक्पतेः।
धर्मायारिसुतव्ययेषु सवितुः, स्वात् साद्यकर्मत्रिगः
षट्स्वायाष्टसुखास्पदेषु हिमगोः, साद्येषु लग्नाच्छुभः॥ ४॥

गुरोरष्टकवर्गः—दिक्स्वाद्याष्टमदायबन्धुषु कुजात्, स्वात् सत्रिकेष्वङ्गिराः,
सूर्यात् सत्रिनवेषु, धीस्वनवदिग्लाभारिगो भार्गवात्।

आयायार्यभवात्मजेषु हिमगोः, मन्दात् त्रिषड्धीव्यये,
दिग्धीषट्स्वसुखायपूर्वनवगो ज्ञात्, स्वस्मरश्चोदयात् ॥ ५ ॥

शुक्राष्टकवर्गः—लग्नादासुतलाभरन्ध्रनवगः, सान्त्यः शशाङ्कात् सितः,
स्वात् साङ्गेषु, सुखत्रिधीनवदशच्छिद्राप्तिगः सूर्यजात् ।
रन्ध्रायव्ययगो रवेर्नवदशप्राप्त्यष्टधीस्थो गुरोः,
ज्ञाद् धीत्र्यायनवारिगस्त्रिनवषट्पुत्रायसान्त्यः कुजात् ॥ ६ ॥

शनेरष्टकवर्गः—मन्दः स्वात् त्रिसुतायशत्रुषु शुभः त्वाङ्गान्त्यगो भूमिजात्,
केन्द्रायाष्टधनेष्विनादुपचयेष्वाद्ये सुखे चोदयात् ॥
धर्मायारिदशान्त्यमृत्युषु बुधात्, चन्द्रात् त्रिषड्लाभगः,
षष्ठायान्त्यगतः सितात्, सुरगुरोः प्राप्त्यन्त्यधीशत्रुषु ॥ ७ ॥

इति निगदितमिष्टं नेष्टमन्यद् विशेषादधिकफलविपाकं जन्मभात्तत्र दद्युः ।
उपचयगृहमित्रस्वोच्चगैः पुष्टमिष्टं त्वपचयगृहनीचरातिगैर्नेष्टसम्पत् ॥ इति १-२ ॥

**अब अष्टक वर्गका विचार करते हैं—लग्नके सहित सूर्य आदि ७ ग्रहोंके चक्र लिखकर आगेके २ रे श्लोकके अनुसार बिन्दुओंके न्याससे भिन्नाष्टकवर्ग सम्बन्धी बिन्दु होते हैं ॥१॥**

**सूर्यादि ग्रहोंके बिन्दु क्रमसे ४८।४९।३९।५४।५६।५२।३९ होते हैं। अर्थात् सूर्यके ४८, चन्द्रमाके ४९, मङ्गलके ३९, बुधके ५४, बृहस्पतिके ५६, शुक्रके ५२, और शनिके ३९, बिन्दु हैं। सबकी संख्या ३३७ होती हैं। यह सर्वाष्टक समुदाय संज्ञक है ॥ २ ॥**

१ सूर्याष्टकवर्गाङ्काः ॥४८॥

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| १ | १० | १ | १० | ९ | ७ | १ | १० |
| ११ | ३ | ११ | ३ | ५ | १२ | ११ | ३ |
| ४ | ११ | ४ | ११ | ११ | ६ | ४ | ११ |
| ८ | ६ | ८ | ६ | ६ | ० | ८ | ६ |
| २ | ० | २ | १२ | ० | ० | २ | ४ |
| १० | ० | १० | ९ | ० | ० | १० | १२ |
| ९ | ० | ९ | ५ | ० | ० | ९ | ० |
| ७ | ० | ७ | ० | ० | ० | ७ | ० |

| | | |
|---|---|---|
| ००००० २ बु. \|\|\| / ल. ३ शु. श. \|\|\|\|\|\|० | १ सू. ०००००० \|\| | १२ बृ. ०००० \|\|\|\| / ११ \|\|\|\| ०००० |
| म. ४ चं. के. ००००० \|\|\| | सूर्याष्टवर्गस्योदाहर० ४८ | १० ००००० रा. \|\|\| |
| ००० \|\|\|\| ५ / ६ \|\|\|\| ०००० | ७ ००० \|\|\|\| | ८ \|\|\|\| ०००० / ०००० \|\|\|\| ९ |

२ चन्द्राष्टकवर्गाङ्काः ॥४९॥

| चं. | मं. | बु. | बृ. | शु. | श. | सू. | ल. |
|---|---|---|---|---|---|---|---|
| १ | ६ | १ | १ | ३ | ३ | ३ | ६ |
| ३ | ३ | ३ | ४ | ४ | ५ | ६ | ३ |
| ६ | १० | ४ | ७ | ५ | ६ | ७ | १० |
| ७ | ११ | ५ | ८ | ७ | ११ | ८ | ११ |
| १० | २ | ७ | १० | ९ | ० | १० | ० |
| ११ | ५ | ८ | ११ | १० | ० | ११ | ० |
| ० | ९ | १० | १२ | ११ | ० | ० | ० |
| ० | ० | ११ | ० | ० | ० | ० | ० |

| | | |
|---|---|---|
| ०००००० ६ \|\| / ००००० ५ \|\|\| | चं. ४ मं. के ०० \|\|\|\| | ३ शु. श. \|\|\|\|\| ०० ल / बु. २ ००० \|\|\|\| |
| १० रा. ०००० \|\|\|\| | चन्द्राष्टकवर्गस्योदाहरणम् ४७ | १ सू. \|\|\|\|\| ००० |
| ००००० ८ \|\|\| / ९ \|\|\| ००००० | १० रा. ००० \|\|\|\| | ००००० १२ बृ. \|\|\| / ११ \|\|\|\| ०००० |

### ३ भौमाष्टकवर्गाङ्काः ॥ ३९ ॥

| मं. | बु. | बृ. | शु. | श. | सू. | चं. | ल. |
|---|---|---|---|---|---|---|---|
| १ | ३ | ६ | ६ | १ | ३ | ३ | १ |
| २ | ५ | १० | ८ | ४ | ५ | ६ | ३ |
| ४ | ६ | ११ | ११ | ७ | ६ | ११ | ६ |
| ७ | ११ | १२ | १२ | ८ | १० | ० | १० |
| ८ | ० | ० | ० | ९ | ११ | ० | ११ |
| १० | ० | ० | ० | १० | ० | ० | ० |
| ११ | ० | ० | ० | ११ | ० | ० | ० |

| | | |
|---|---|---|
| ०००० ।।।।<br>६ ५<br>।।।।<br>०००० | ४<br>के. चं. मं.<br>००<br>।।।।। | ३ शु. श.<br>।।।।।<br>०० २<br>ल बु.<br>।।।।।<br>००० |
| ७<br>००<br>।।।।।। | ३९<br>भौमाष्टक-<br>वर्गस्यो-<br>दाहरणम् | १ सू.<br>०००००<br>।।। |
| ।।।।।।<br>०० ९<br>८ ।।।।<br>००० | १० रा.<br>०००००<br>।।। | बृ. १२<br>०००<br>११ ।।।।।<br>।।।।<br>०००० |

### ४ बुधाष्टकवर्गाङ्काः ॥ ५४ ॥

| बु. | बृ. | शु. | श. | र. | चं. | मं. | ल. |
|---|---|---|---|---|---|---|---|
| १ | ६ | १ | १ | ५ | २ | १ | १ |
| ३ | ८ | २ | २ | ६ | ४ | २ | २ |
| ५ | ११ | ३ | ० | ९ | ६ | ० | ४ |
| ६ | १२ | ४ | ४ | ११ | ८ | ४ | ६ |
| ९ | ० | ५ | ७ | १२ | १० | ७ | ८ |
| १० | ० | ८ | ८ | ० | ११ | ८ | १० |
| ११ | ० | ९ | ९ | ० | ० | ९ | ११ |
| १२ | ० | ११ | १० | ० | ० | १० | ० |
| ० | ० | ० | ११ | ० | ० | ११ | ० |

| | | |
|---|---|---|
| शु.श.ल.<br>चं. ०००<br>।।।।।<br>।।। के.<br>००००० | २ बु.<br>०००<br>।।।।। | ००००००<br>सू. ।।।<br>।। १२ बृ.<br>००००० |
| ५<br>०००००<br>।।। | बुधाष्टक-<br>वर्गोदा-<br>हरणम्<br>५४ | ११<br>०००००००<br>। |
| ०००००<br>६ ७<br>।।। ।।।<br>००००० | ८<br>०<br>।।।।।।। | श.<br>१०<br>९ ।।<br>।।।।।<br>०००<br>००००००० |

### ५ जीवाष्टकवर्गाङ्काः ॥ ५६ ॥

| बृ. | शु. | श. | र. | चं. | मं. | बु. | ल. |
|---|---|---|---|---|---|---|---|
| १ | २ | ३ | १ | २ | १ | १ | १ |
| २ | ५ | ५ | २ | ५ | २ | २ | २ |
| ३ | ६ | ६ | ३ | ७ | ४ | ४ | ४ |
| ४ | ९ | १२ | ४ | ९ | ७ | ५ | ५ |
| ७ | १० | ० | ७ | ११ | ८ | ६ | ६ |
| ८ | ११ | ० | ८ | ० | १० | ९ | ७ |
| १० | ० | ० | ९ | ० | ११ | १० | ९ |
| ११ | ० | ० | १० | ० | ० | ११ | १० |
| ० | ० | ० | ११ | ० | ० | ० | ११ |

| | | |
|---|---|---|
| ०००००<br>सू. १<br>।। ।।।<br>बु. २<br>०००००० | बृ. १२<br>।।।<br>००००० | ०००००<br>११<br>।।। ।।।<br>रा १०<br>००००० |
| ल.शु.श. ३<br>००००<br>।।।। | जीवाष्टक-<br>वर्गोदा-<br>हरणम्<br>५६ | ९<br>०००<br>।।।।। |
| चं.मं.के.<br>०००० ४<br>।।।। ।।०<br>५ ००० | ६<br>०००<br>।।।।। | ०००००<br>८<br>।।।<br>।<br>७<br>००००००० |

६ शुक्राष्टकवर्गाङ्काः ॥ ५२ ॥

| शु. | श. | र. | चं. | मं. | बु. | बृ. | ल. |
|---|---|---|---|---|---|---|---|
| १ | ३ | ८ | १ | ३ | ३ | ५ | १ |
| २ | ४ | ११ | २ | ५ | ५ | ८ | २ |
| ३ | ५ | १२ | ३ | ६ | ६ | ९ | ३ |
| ४ | ८ | ० | ४ | ९ | ९ | १० | ४ |
| ५ | ९ | ० | ५ | ११ | ११ | ११ | ५ |
| ८ | १० | ० | ८ | १२ | ० | ० | ८ |
| ९ | ११ | ० | ९ | ० | ० | ० | ९ |
| १० | ० | ० | ११ | ० | ० | ० | ११ |
| ११ | ० | ० | १२ | ० | ० | ० | ० |

००००० मंचंके ५ ॥। ॥॥ ००००
शु.ल.श.३ ०००० ॥॥
२ बु. ॥॥॥ ०० सू. १ ॥॥।०००
६ ०००००० ॥
शुक्राष्टकवर्गोदाहरणम् ५२
बृ. १२ ०००००० ॥
००००० ७ ॥ ८ ॥॥ ००००
९ ०० ॥॥॥
००००० ११ ॥ रा. १०॥॥ ०००००

७ शनैश्चराष्टकवर्गाङ्काः ॥३९॥

| श. | र. | चं. | मं. | बु. | बृ. | शु. | ल. |
|---|---|---|---|---|---|---|---|
| ३ | १ | ३ | ३ | ६ | ५ | ६ | १ |
| ५ | २ | ६ | ५ | ८ | ६ | ११ | ३ |
| ६ | ४ | ११ | ६ | ९ | ११ | १२ | ४ |
| ११ | ७ | ० | १० | १० | १२ | ० | ६ |
| ० | ८ | ० | ११ | ११ | ० | ० | १० |
| ० | १० | ० | १२ | १२ | ० | ० | ११ |
| ० | ११ | ० | ० | ० | ० | ० | ० |

४चं.मं. के.०० ५ ॥॥ ॥॥॥ ॥ ०००
॥॥॥ शु.३श.ल. ००
०००० २ बु. ॥॥ ॥ ००००० सू.१
६ ००० ॥॥॥
शन्यष्टकवर्गोदाहरणम् ३९
बृ. १२ ०० ॥॥॥
००० ॥॥॥ ७ ८ ॥॥ ००००००
९ ००० ॥॥॥
००० ॥॥॥ १० ११ ॥॥॥ ०००

लग्नस्याष्टवर्गाङ्काः ४३

| ल. | सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|---|
| १ | ३ | ३ | १ | १ | १ | १ | १ |
| ३ | ४ | ६ | ३ | २ | २ | २ | ३ |
| ४ | ६ | १० | ६ | ४ | ४ | ३ | ४ |
| ५ | १० | ११ | १० | ६ | ५ | ४ | ६ |
| ७ | ११ | | ११ | ८ | ६ | ५ | १० |
| ९ | १२ | | | १० | ७ | ८ | ११ |
| १० | | | | ११ | ९ | ९ | |
| ११ | | | | | १० | ११ | |
| | | | | | ११ | | |

४चं.मं. ०००० ॥॥ ॥॥ ५ ०००००
ल.शु.श.३ ००००० ॥
२ बु. ००० ॥॥ ॥० सू.१ ०००००
६ ००००००० ।
लग्नाष्टवर्गोदाहरणम्
॥। १२ बृ. ०००००
० ००० ॥॥ ७ ८ ॥॥ ००
९ ००००० ॥॥
०००० ॥॥ १० ११ रा. ॥॥०००

मेषादियद्गृहगता वसुसङ्ख्ययातास्तद्भावपुष्टिबलवृद्धिकरा भवन्ति ।
षट्पञ्चसप्तसंहितानि शुभप्रदानि त्रिद्व्येकबिन्दुयुतभानि न शोभनानि ॥ ३ ॥
मिश्रं फलं भवति सागरबिन्दुयोगे रोगापवादभयदा यदि शून्यभावाः ।
एकादिबिन्दुयुतभानुमुखग्रहाणां भिन्नाष्टवर्गजनि सर्वफलं प्रवच्मि ॥ ४ ॥
करोति नानाविधरोगदुःखभयाटनादीनि च सैकबिन्दुः ।

द्विको मनस्तापनृपालचोरकृतापवादाशननाशनानि ॥ ५ ॥
त्रिकस्त्वसञ्चारकृशाङ्गलम्बकलेवरव्याकुलमानसानि ।
सुखासुखार्थव्ययवित्तलाभफलप्रदः सागरबिन्दुकः स्यात् ॥ ६ ॥
सद्वस्त्रलाभसुतलालनसाधुसङ्गविद्याधनानि कुरुते च सपञ्चबिन्दुः ।
षड्बिन्दुकस्तु नवमोहनरूपशीलसङ्ग्रामजिद्धनयशोबलवाहनानि ॥ ७ ॥
ससप्तबिन्दुस्तुरगादियानसेनाधनप्राभवशोभनानि ।
बिन्द्वष्टकः सप्तगुणाभिरामराजप्रतापं प्रकटीकरोति ॥ ८ ॥

इदानीमिष्टकालाष्टकवर्गे बिन्दुसङ्ख्यापरत्वेन भावग्रहफलान्युच्यन्ते । मेषादीति षड्भिः लोकैः मेषादिके यस्मिन् गृहे पूर्वोक्तविचारेणाष्टौ बिन्दवः ( शुभचिह्नानि ) भवेयुस्तद्भावस्य ते ग्रहबिन्दवः पुष्टिकरा भवन्ति । एतदुक्तं ज्ञेयम् । यस्य ग्रहस्याष्टकवर्गो विचार्यते तस्य ग्रहस्य यस्मिन् भावे सर्वेभ्य एव ग्रहेभ्यः शुभत्वं ( अष्टावपि बिन्दवो भवेयुः ) स्यात्सदा तस्य भावस्य तद्ग्रहवशात्पुष्टिर्भवति, अर्थाच्चारवशात्तद्भावे समागते तस्मिन् ग्रहे तद्दशायां च तद्भावफलस्य वृद्धिर्वाच्येति । एवं षट्पञ्चसप्तबिन्दुयुतानि भानि शुभफलदानि भवन्ति । यस्मिन् यस्मिन् भावे पञ्च, षट् , सप्त वा बिन्दवो भवन्ति तस्मिन् तस्मिन् शुभं फलं वाच्यमिति । सागरबिन्दुयोगे = यत्र भावे चत्वारो बिन्दवः स्युस्तस्मिन् , मिश्रं फलं = शुभमशुभं च फलं भवति । ये च शून्यभावा अर्थात् येषु भावेषु नैकोऽपि शुभबिन्दुः स्यात् किन्तु सर्वा ( अष्टौ ) रेखा एव भवेयुस्ते भावा रोगापवादभयदा भवन्ति । अत एकादिबिन्दुयुतानां सूर्यादिग्रहाणां भिन्नाष्टवर्गजनितं = तत्कालेऽष्टकवर्गात् समुद्भूतं सर्वफलं = शुभाशुभं, प्रवच्मि = कथयाम्यहं ग्रन्थकार इति । स्पष्टमन्यत्सर्वमित्यलं पल्लवितेन । अत्र किल यदुक्तं बिन्दुपरत्वेन शुभाशुभं फलं तत्र बिन्दूनामवगमप्रकार उच्यते । यत्र तत्र भावे वर्तमानो यः कश्चिद् ग्रहो यावद्भ्यो ग्रहेभ्यः शुभस्तावन्तस्तस्य तत्र बिन्दवो लेख्याः । यावद्भ्यो ग्रहेभ्योऽशुभस्तावत्यो रेखा लेख्याः । एवं बिन्दूनां रेखाणाञ्चान्तरे कृते यदवशिष्येत तद्वशात् उक्तं शुभाशुभं वाच्यम् । तत्र शुभफले रेखापेक्षया बिन्दुभिरधिकैर्भवितव्यमिति । उदाहरणार्थं भौमाष्टकवर्गचक्रं विलिख्यते—

सू. ||||०००
१
११ ||||:००
चं.बु.
ल. १२ शु.
मं. १०
|||||:००
००||||
|||०००००
२
३
९
|||:००
|||||००
४
८
||||००००
०:||||
०||||||
बृ.
६
श. ७
|||०००००
|||:००००

अत्रोदाहरणे—'वक्रस्तूपचयेष्विनादित्यादि'-बृहज्जातकोक्तश्लोकवशात् मेषे त्रयो बिन्दवः पञ्च रेखाश्च विद्यन्ते तत्रान्तरेण रेखाद्वयमवशिष्यते । तेन गोचरवशाद्यदा भौमो मेषस्थो भवेत्तदाऽष्टभागद्वयेनाशुभः स्यादिति । वृषे बिन्दुत्रयं रेखापञ्चकं च विद्यते, तत्रान्तरेण रेखाद्वयमवशिष्टमिति वृषेऽपि चारवशादागते भौमेऽष्टभागयुगलेनाशुभं फलं वाच्यम् । मिथुनेऽपि तथैव । कर्के बिन्दुचतुष्कं रेखाचतुष्कं च, तत्रान्तरेण किमपि नावशिष्टमिति तत्र नापि शुभं नाप्यशुभं चेति । सिंहे बिन्दुपञ्चकं रेखात्रयं चास्ति, तत्रान्तरेण बिन्दुद्वयमवशिष्टमिति सिंहस्थो गोचरीयो भौमोऽष्टमभागद्वयेन शुभो भवेत् । एवं किल कन्यायामष्टभागचतुष्केनाशुभः । तुलायामष्टभागद्वयेन शुभः । वृश्चिके षड्गुणितेनाष्टमभागेनाशुभः । धनुषि अष्टभागचतुष्टयेनाशुभः । मकरेऽष्टभागद्वयेन शुभः । कुम्भेऽष्टभागेनैकेनाशुभः । मीनेऽष्टभागयुगलेनाशुभ इति ॥ ३-८ ॥

मेषादि राशिके जिस गृहमें ८ बिन्दु हों वह भाव पुष्टि-बल-वृद्धि करनेवाला होता है। जो भाव ६ बिन्दु ५ बिन्दु ७ बिन्दुसे युक्त हों वे भी शुभ फल देनेवाले होते हैं। जो भाव ३ बिन्दु २ बिन्दु से युक्त हों वे शुभ नहीं हैं ॥ ३ ॥

जो भाव चार बिन्दुसे युक्त हों वे मिश्र फल देते हैं। जो भाव बिन्दुसे रहित हो वह रोग-अपवाद-भयको देता है। एक आदि बिन्दुसे युक्त सूर्यादि ग्रहोंके भिन्नाष्टक वर्गसे उत्पन्न सम्पूर्ण फलको कहता हूं ॥ ४ ॥

एक बिन्दु नाना प्रकारका रोग-दुःख-भय और भ्रमण कराता है। दो बिंदु मनमें ताप, राजा और चोरसे दुःख, अपवाद, तथा भोजनमें कष्ट देते हैं। तीन बिन्दु अच्छे प्रकारसे चलनेमें रोक, कृश शरीर तथा मनको व्याकुल करते हैं। चार बिन्दु सुख-दुःख, धन आदि-का आय-व्यय-प्रद हैं याने अच्छा बुरा दोनों ही समान होते हैं ॥ ५-६ ॥

पांच बिन्दु उत्तम वस्त्रका लाभ, पुत्रका लालन, साधु सङ्ग और विद्या धनको देते हैं। छः बिन्दु नवीन तथा मोहित करने वाला रूप, शील, युद्धमें विजय, धन-यश-बल-वाहन देते हैं ॥ ७ ॥

सात बिन्दु घोड़ा आदिकी सवारी, सेना, धन, विभव, शोभा आदिको देते हैं। आठ बिन्दु सतगुण में श्रेष्ठ राज प्रतापको प्रकाश करते हैं ( देते हैं ) ॥ ८ ॥

शरादिबिन्दुस्थितराशियातः स्वकीयवर्गे शुभदस्तु नित्यम्।
अतोऽन्यथा चेदफलप्रदाता गोचारतः शून्यफले प्रमादी ॥ ९ ॥
स्वोच्चमित्रादिवर्गस्थाः केन्द्रादिबलसंयुताः।
अनिष्टफलदाः सर्वे स्वल्पबिन्दुयुता यदि ॥ १० ॥
दुष्टस्थानस्थिता ये च ये च नीचारिभांशगाः।
ते सर्वे शुभदा नित्यमधिबिन्दुयुता यदि ॥ ११ ॥
दिनेशमुख्यग्रहवर्गकेषु यदा शनिः शून्यगृहं प्रयातः।
करोति पित्रादिकभावजानामतीव रोगारिभयाकुलानि ॥ १२ ॥

इदानीमष्टकवर्गे स्थितिवशेन बिन्दुपरत्वेन च फलान्युच्यन्ते। स्वकीयवर्गे विद्यमानो ग्रहः, शरादिबिन्दुस्थितराशियातः = शरादयः ( पञ्च, षट्, सप्त, अष्टौ वा ) बिन्दवो यत्र यत्र विद्यन्ते तत्र राशौ व्यवस्थितः स्यात्तदाऽसौ ग्रहस्तत्तद्भावे नित्यं = यदा यदा चारवशाद्गच्छेत्तदा सदैव शुभदो भवेत्। अतोऽन्यथा चेत् = यदि पञ्चाल्पबिन्दुयुतराशिषु स्ववर्गहीनो ग्रहो व्यवस्थितः स्यात्तदा अफलप्रदाता = निष्फलः स्यादिति। शून्यफले = बिन्दुरहिते राशौ गोचारतः समागते ग्रहे प्रमादी = भ्रमशीलो भवति नर इति।

अधिकारयुक्ता अपि ग्रहा यद्यल्पबिन्दुकाः स्युस्तदा विफला एव स्युरित्याह—स्वोच्चेत्यादि। ये ग्रहा स्वकीयोच्च--मित्रादि--वर्गस्था भवेयुः, केन्द्रादिभिर्बलैः संयुक्ता अपि भवेयुस्ते यदि अष्टकवर्गे स्वल्पबिन्दुयुताः = अर्द्धाल्पबिन्दुकाः स्युस्तदा तथाभूताः सर्व एव ग्रहा अनिष्टफलदा भवन्ति। अथ ये च ग्रहा दुष्टस्थानस्थिताः = षष्ठादिगर्हितभावगताः, ये च नीचारिभांशगताश्च भवेयुस्ते यदि, अधिबिन्दुयुताः = अर्द्धाधिकबिन्दुसहिता भवेयुस्तदा ते सर्वे नित्यं शुभदा एव भवन्ति। नाधिकबिन्दुकाः कदाचिद्दोषावहा भवन्तीति भावः। अथ शनेः वैशिष्ट्यमुच्यते। दिनेशमुख्यग्रहवर्गकेषु = सूर्यादिषड्ग्रहाणां वर्गगतः शनिः यदा अष्टकवर्गे शून्यगृहं = बिन्दुरहितं भावं चारवशात्प्रयाति तदा पित्रादिकभावजानां = पितृमातृप्रभृतीनां अतीव रोगारिभयाकुलानि करोति ॥ ९-१२ ॥

पांच आदि बिन्दु जिस राशिमें स्थित हों उस राशिमें अपने वर्गमें जो ग्रह हो वह सदा शुभप्रद है। इससे अन्यथा हो तो गोचरसे दुष्ट फल देता है। शून्य बिन्दुवाला ग्रह प्रमाद फल देनेवाला है ॥ ९ ॥

अपने उच्च मित्रादि वर्गमें स्थित केन्द्रादि बलसे संयुक्त ग्रह भी यदि थोड़े बिन्दुसे युक्त हों तो अनिष्ट फल देनेवाले होते हैं ॥ १० ॥

दुष्टस्थानमें जो ग्रह स्थित हों जो नीच या शत्रुके राश्यंशमें हों वे सब यदि अधिक बिन्दुसे युक्त हों तो सदा शुभप्रद हैं ॥ ११ ॥

सूर्यादि ग्रहके वर्गमें यदि शनि शून्य गृहमें प्राप्त हो तो पित्रादिक भावसे जायमानोंको रोग शत्रुभय व्याकुल आदि फल करता है ॥ १२ ॥

## अथ रविफलम् ।

लग्नं गते दिनकरे रिपुनीचभागे जातः कृशानुयुगबिन्दुयुते च रोगी ।
बाणादिबिन्दुसहितोदयगे दिनेशे स्वोच्चेऽथवा निजगृहे नृपतिश्चिरायुः ॥ १३ ॥
केन्द्रत्रिकोणोपगते दिनेशे षट्पञ्चसप्ताष्टकबिन्दुवर्गे ।
रुद्रामलानीलचलाब्दकेषु जातस्य वा तज्जनकस्य मृत्युः ॥ १४ ॥
शोध्यावशिष्टद्वयबिन्दुयाते केन्द्रस्थिते सेन्दुशनीन्दुसूनौ ।
भानौ दशाब्दात्परतः समृद्धां तातस्य राज्यश्रियमाहुरार्याः ॥ १५ ॥

इदानीं स्थितिपरत्वेन सूर्याष्टकवर्गफलमाह—लग्नमिति । दिनकरो लग्ने विद्यमानः शत्रुराशेः वा नीचराशेर्नवांशगतो बिन्दुत्रयेण बिन्दुद्वयेन वा सहितो भवेत्तदा जातो रोगी भवति । यदा यदा लग्नराशिमेति गोचरेण तदा तदेति । अथ दिनेशो बाणादि-( पञ्चषट्सप्ताष्ट-) बिन्दुसहितः सन्नुदये ( लग्ने ) स्थितः स्वोच्चराशि-( मेष ) गतः, अथवा निजगृह-( सिंह ) गतो भवेत्तदा जातश्चिरायुः ( दीर्घजीवी ) नृपतिः स्यादिति । अथ केन्द्र-( १।४।७।१० ) त्रिकोणो-( ९।५ ) पगतो रविर्यदि षट्पञ्चसप्ताष्टक-( ६।५।७।८ ) बिन्दुयुतो भवेत्तदा क्रमेण रुद्रामलानीलचलाब्दकेषु जातस्य वा जातस्य पितुः मृत्युर्भवति । एतदुक्तं भवति । षड्बिन्दुयुतो रविः केन्द्रत्रिकोणगो भवेत्तदा रुद्रा-( २२ ) ब्दे, पञ्चबिन्दुयुतः स्यात्तदा मला-( ३५ ) ब्दे, सप्तबिन्दुयुक्तः स्यात्तदा नील-( ३० ) वर्षे, अष्टबिन्दुयुतश्चेत्तदा चला-( ३६ ) ब्दे तस्य जातस्य वा तज्जनकस्य मरणं स्यादिति । चारवशात्तद्राशिगते सूर्ये सतीति । अथ भानौ सेन्दुशनीन्दुसूनौ = चन्द्रशनिबुधैः सहिते सूर्ये केन्द्रस्थिते तस्मिन्, शोध्यावशिष्टद्वयबिन्दुयाते = त्रिकोणैकाधिपत्यशोधनावशिष्टेन बिन्दुद्वयेन सहिते च दशाब्दात् = दशवर्षात् परतः तातस्य = जातकस्य पितुः, समृद्धां राजश्रियमार्या आहुः ॥ १३–१५ ॥

सूर्य शत्रु राशि या नीचराशिके नवांशमें स्थित होकर लग्नमें हो और तीन चार बिन्दुसे युक्त हो तो रोगी हो । अपनी उच्च राशि का वा अपने गृहमें स्थित लग्नमें सूर्य पांच आदि बिन्दुसे युक्त हो तो दीर्घायु राजा हो ॥ १३ ॥

सूर्य केन्द्र या कोणमें प्राप्त छः पांच सात आठ बिन्दुसे युक्त हो तो क्रमसे २२, ३५, ३०, ३६ वर्षोंमें उस जातकके पिताकी मृत्यु हो ॥ १४ ॥

शोधनेपर शेष दो बिन्दुसे युक्त केन्द्रमें चन्द्रमा शनि बुध और सूर्य हों तो दश वर्ष के बाद उस जातकके पिताको सम्यक् प्रकार ऋद्धिसे युक्त राजलक्ष्मीको देते हैं, यह श्रेष्ठ विद्वान् कहते हैं ॥ १५ ॥

## अथ चन्द्रफलम् ।

शून्यागारं तरणिशशिनोरष्टवर्गे तदीयो
मासो राशिः सकलशुभदे कर्मणि त्याज्य आहुः ।
यद्मालस्थं शशिनि तनुगे सैकलोकाग्निबिन्दौ
सप्तत्रिंशाच्छरदि मरणं द्वित्रिखेटान्विते च ॥ १६ ॥

केन्द्रत्रिकोणायगते शशाङ्के नीचारिगे वृद्धिकलाविहीने ।
बिन्दुद्विके वा यदि सत्रिबिन्दौ तद्भावनाशं कथयन्ति तज्ज्ञाः ॥१७॥
वेदादिबिन्दुयुतकोणचतुष्टये वा लाभे विधौ बलयुते यदि भाववृद्धिः ।
बिन्द्वष्टके शशिनि केन्द्रगते तु जाता विद्यायशोधनबलप्रबला नरेन्द्राः ॥ १८ ॥

इदानीं चन्द्राष्टवर्गफलं स्थितिवशेनाह—शून्यागारमिति । तरणिशशिनोः = सूर्यचन्द्रमसोः, अष्टवर्गे, शून्यागारं = शून्यराशिं ( यत्र यत्र राशौ नैकोऽपि बिन्दुर्भवेत् ) विज्ञाय, तदीयो मासो राशिः = सूर्यस्य तद्राशिमासः, चन्द्रस्य तद्राशिश्च सकलशुभदे कर्मणि त्याज्यः इत्यार्या आहुः । एतदुक्तमवधेयम्—सूर्यस्याष्टकवर्गे यो राशिः बिन्दु-( शुभचिह्न- ) रहितो भवति तस्मिन् राशौ ( सौरमासे ) चारादागते सूर्ये शुभकर्म न कुर्यात् । एवं चन्द्राष्टकवर्गे यो राशिः बिन्दुशून्यः स्यात् तस्मिन् राशौ सञ्चारादागते चन्द्रमसि शुभं कर्म न कर्तव्यमिति । अथ तनुगे=लग्नगते, शशिनि=चन्द्रे, सैकलोकाश्विबिन्दौ=एकेन, त्रयेण, द्वाभ्यां वा बिन्दुभ्यां सहिते सति यक्ष्मालस्यं=क्षयरोगान्वितं मान्द्यं वाच्यम् । तथा भूते चन्द्रे द्वाभ्यां त्रिभिः वा खेटैरन्विते सति सप्तत्रिंशच्छरदि=३७ तमे वर्षे तस्य जातस्य मरणं च वाच्यम् । केन्द्रत्रिकोणायगत इति । स्वनीचराशिगतः, शत्रुराशिगतः, वृद्धिकलारहितो ( कृष्णपक्षीयः ) वा शशाङ्कः केन्द्रत्रिकोणाय-( १।४।७।१०।५।९।११ एतदन्यतमभावं ) गतो भवेत्, तथा च बिन्दुद्वययुतो वा बिन्दुत्रययुतो यदि स्यात्तदा तद्भावस्य ( उक्तलक्षणोपलक्षितस्य भावस्य ) नाशं तज्ज्ञाः=ज्योतिर्विदः कथयन्ति । वेदादीति । बलयुते विधौ=स्थानादिवीर्यसहिते चन्द्रे यदि चतुः-पञ्च-षट्-सप्ताष्ट-बिन्दुयुते, कोणे ( ५।९ ) चतुष्टये ( १।४।७।१० ) वा लाभे ( ११ ) व्यवस्थिते सति जन्म भवेत् तदा अनिमतः भाववृद्धिः ( उक्तलक्षणलक्षितस्य भावस्य वृद्धिः ) भवति । अथाष्टबिन्दुकस्य विशेषफलमाह-बिन्द्वष्टके शशिनि केन्द्रगते=अष्टबिन्दुयुतश्चन्द्रो यदि केन्द्रवर्ती स्यात्तदा जाता नरास्तु विद्यायशोधनबलप्रबला नरेन्द्रा भवन्ति ॥ १६–१८ ॥

सूर्यके अष्टकवर्गमें जिस राशिमें बिन्दु नहीं हो वह मास ( सौरमास ) और चन्द्रमाके अष्टवर्गमें शून्य राशि सभी शुभकर्ममें त्याग करे । यदि १, ३ या २, बिन्दुयुत लग्नमें चन्द्रमा हो तो यक्ष्माजनित आलस्य हो । यदि वही चन्द्रमा २ या ३ ग्रहोंके साथ हो तो ३७ वें वर्षमें मरण हो ॥ १६ ॥

त्रिकोण या केन्द्रमें चन्द्रमा नीचराशिस्थ, शत्रु-राशिस्थ या वृद्धि-कलासे हीन हो, दो बिन्दु या तीन बिन्दुसे युक्त हो तो उस भावका नाश होता है, ऐसा विज्ञोंने कहा है ॥१७॥

यदि कोण या चतुष्टय ( केन्द्र ) में या लाभमें ४-५-६-७-८ बिन्दुसे युक्त बलवान् चन्द्रमा हो तो ( कोण केन्द्र लाभ सब ७ भाव हैं, जिसमें हो ) उस भावकी वृद्धि करता है । ८ बिन्दुसे युक्त चन्द्रमा केन्द्रमें हो तो विद्या-यश-धन-बलसे प्रबल राजा होता है ॥ १८ ॥

## अथ भौमफलम् ।

स्वोच्चस्वके गुरुसुखोदयमानयाते बिन्द्वष्टके च यदि कोटिधनप्रभुः स्यात् ।
चापाजसिंहमृगकीटविलग्नसंस्थे भौमे चतुष्टयफलोपगते च राजा ॥ १९ ॥
बिन्द्वष्टके धरणिजेऽतिलघुक्षितीशो मानेऽथवा तनुगते च महीपतिः स्यात् ।
जातोऽवनीशकुलजो यदि देशनाथः स्वोच्चस्वराशिसहिते नृपचक्रवर्ती ॥ २० ॥

श्लोकद्वयेन सरलार्थेन भौमाष्टकवर्गफलमाह—स्वोच्चेति ॥ १९–२० ॥

यदि मङ्गल अपनी उच्च राशिमें या अपने गृहमें ८ बिन्दुसे युत नवम चतुर्थ लग्न या दशममें होवे तो करोड़पति बनाता है । मङ्गल धनु मेष सिंह मकर कर्क राशिके लग्नमें ४ बिन्दु युत हो तो राजा होता है ॥ १९ ॥

मङ्गल आठ बिन्दुयुत दशम या लग्नमें हो तो छोटा राजा हो। उच्चमें या स्वराशिमें हो ऐसे योगमें उत्पन्न जातक राजकुलका हो तो देशका नाथ तथा चक्रवर्ती राजा हो ॥२०॥

अथ बुधफलम्।

केन्द्रत्रिकोणे वसुबिन्दुके ज्ञे जातीयविद्याधिकभोगशाली।
स्वोच्चादिकैकद्वितयत्रिबिन्दौ तद्भाववृद्धिर्नच भावहानिः ॥ २१ ॥
बिन्द्वाधिक्यं यत्तदागारमासे विद्यारम्भः सर्वविद्याकरः स्यात्।
गोचारेण ज्ञस्य शून्यालयस्थे मन्दे बन्धुज्ञातिसम्पद्विनाशः ॥ २२ ॥

अधुना बुधाष्टकवर्गफलमुच्यते–केन्द्रेति। वसुबिन्दुके ज्ञे = अष्टबिन्दुयुते बुधे केन्द्र- ( १।४।७।१० ) त्रिकोणे ( ५।९ ) विद्यमाने जातो नरो जातीयविद्याधिकभोगशाली = कौलिकविद्यायुतो बहुभोगयुतश्च भवति। स्वोच्चादिके = स्वकीयोच्चे, मूलत्रिकोणे, स्वराशौ वा गतवति बुधे एकद्वितयत्रिबिन्दुसहिते सति तद्भाववृद्धिः ( उक्तलक्षणयुतस्य भावस्य वृद्धिः ) भवति, न च तथा लक्षणे भावहानिर्भवति। अर्थादेव स्वनीचे शत्रुराश्यादौ वा गते बुधे एकद्वित्रिबिन्दुयुते तद्भावहानिर्भवतीति। बिन्द्वाधिक्यमिति। अष्टकवर्गे बुधस्य यद्भवनं बिन्द्वाधिक्यं भवेत् तदागारमासे = तद्राशिसम्बन्धिको यो मासः ( सौरमासः ) तस्मिन्मासे विद्यारम्भश्चेत्तदा जातः सर्वासां विद्यानामाकरः भवति। अथ बुधस्य यो राशिर्बिन्दुरहितो भवेत् तस्मिन् शून्यालये गोचारेण मन्दे ( शनौ ) समागते सति जातस्य बन्धुज्ञातिसम्पदां विनाशो वाच्य इति ॥ २१–२२ ॥

बुध आठ बिन्दुसे युक्त केन्द्र या त्रिकोणमें हो तो जातीय विद्या और अधिक भोगवाला हो। अपने उच्चादिमें एक दो तीन बिन्दुसे युक्त हो तो उस भावकी वृद्धि हो, हानि न हो ॥ २१ ॥

बिन्दु अधिक हो तो उस गृहके मासमें विद्यारम्भ करे तो वह सर्व विद्याका अधिकारी हो। गोचरसे बुधके शून्य गृहमें शनि हो तो भाई परिवार धनका नाश हो ॥ २२ ॥

अथ गुरुफलम्।

जीवाष्टवर्गाधिकबिन्दुराशौ लग्ने निषेकं कुरुते सुतार्थी।
तद्राशिदिग्भागगृहस्थितानि गोवित्तयानानि बहूनि च स्युः ॥ २३ ॥
जीवाष्टवर्गलघुबिन्दुगृहोपयाते भानौ कृताखिलशुभानि विनाशितानि।
पञ्चादिबिन्दुकरिपुण्यरन्ध्रगेज्ये जातश्चिरायुरतिवित्तजितारिकः स्यात् ॥ २४ ॥
स्वोच्चेऽथवा निजगृहे वसुबिन्दुयुक्ते केन्द्रस्थिते सुरगुरौ गुरुभावगे वा।
नीचारिभावमपहाय विमूढराशौ जातः स्वकीययशसा पृथिवीपतिः स्यात् ॥२५॥
यदा महीदेवकुलप्रजाता तदीययोगे नरपालतुल्याः।
कृतानि पुण्यप्रभवप्रसिद्धबुद्धिप्रतापानि गुणाभिरामाः ॥ २६ ॥
ससप्तबिन्दौ सह लक्ष्मणेन जीवे बहुस्त्रीधनपुत्रवन्तः।
षड्बिन्दुके वाहनवित्तवन्तः सपञ्चबिन्दौ जयशीलवन्तः ॥ २७ ॥

इदानीं गुरोरष्टकवर्गफलमाह—जीवेति श्लोकपञ्चकेन। जीवस्याष्टकवर्गेऽधिकबिन्दुयुते राशौ लग्ने चारादागते जीवे सुतार्थी नरः निषेकं कुरुते। एतदुक्तं भवति। अष्टवर्गे अधिकबिन्दुयुतराशिलग्ने जन्मनि विद्यमाने गुरौ सति यदा चारवशात्पुनः पुनस्तद्राशिमेति गुरुस्तदा तदा जातस्य पुत्रोदयसम्भवो भवति। तदिति। तस्य ( उक्तलक्षणयुतस्य ) राशेर्यो दिग्भागस्तस्मिन् भागे यद्गृहं तस्मिन् गृहे बहूनि गोवित्तयानानि स्थितानि स्युः। यथा—उक्तलक्षणो राशिः मेषः स्यात् तदा मेषस्य दिग्भागः पूर्वः, अतः पूर्वभागके गृहे

जातस्योक्तं फलं वाच्यम् । अथ जीवाष्टवर्गे लघुबिन्दु-( अर्धाल्पबिन्दु ) युते गृहे ( राशौ ) व्यवस्थिते सूर्ये सति जातस्य कृताखिलशुभानि विनाशितानि वाच्यानि । तथा च पञ्चादि ( ५।६।७।८ ) बिन्दुके रिपौ ( षष्ठे ) व्यये ( द्वादशे ) रन्ध्रे ( अष्टमे ) वा भावे गतवतीज्ये ( गुरौ ) जातो नरः चिरायुः = दीर्घायुः, अतिवित्तः = बहुधनयुक्तः, जितारिकः = जितशत्रुकश्च भवेदिति । अन्ये त्रयः श्लोकाः स्पष्टा एवेत्यलं पल्लवितेन ॥ २३-२७ ॥

बृहस्पतिके अष्टवर्गमें अधिक बिन्दु राशिके लग्नमें पुत्रार्थी गर्भाधान करे । उस राशिके दिशाके गृहमें स्थित बहुत गाय, धन, सवारी होंगे ॥ २३ ॥

बृहस्पतिके अष्टवर्गमें थोड़े बिन्दुसे युक्त गृहमें सूर्य हो तो किया हुआ समस्त कार्य विनष्ट हो । पाँच आदि बिन्दुका बृहस्पति षष्ठ, द्वादश, अष्टम हो तो जातक दीर्घायु, विशेष धनी और शत्रुजित हो ॥ २४ ॥

उच्चमें अथवा अपने गृहमें आठ बिन्दुसे युक्त बृहस्पति केन्द्रमें या नवम भावमें नीच राशि, शत्रुगृह तथा अस्तंगत छोड़के हो तो अपने यशसे राजा हो ॥ २५ ॥

यदि राजाके कुलमें उत्पन्न हो तो उस योगमें नरपाल ( राजा ) तुल्य हो । किये हुए पुण्यके प्रभावसे प्रसिद्धबुद्धि, प्रतापी और श्रेष्ठगुणी हो ॥ २६ ॥

वह बृहस्पति सात बिन्दुयुत चन्द्रमासे युत हो तो जातक बहुत स्त्री-धन-पुत्र वाला हो । छः बिन्दु हो तो वाहन धनवाला हो । वह पाँच बिन्दुसे युक्त हो तो जीतने वाला हो ॥

## अथ शुक्रफलम् ।

साष्टबिन्दुफलकोणकेन्द्रगे भार्गवे तु बलवाहनाधिपः ।
आयुरन्तमविनाशभोगवान् वित्तरत्नविभुरद्रिबिन्दुके ॥ २८ ॥
नीचास्तरिष्फनिधनोपगते तु काव्ये पूर्वोदितक्षितिपयोगविनाशनं स्यात् ।
शुक्रोऽल्पबिन्दुयुतमन्दिरदिग्विभागे स्त्रीवश्यहेतुशयनीयगृहं प्रशस्तम् ॥ २९ ॥

इदानीं सरलार्थेन श्लोकयुगलेन शुक्राष्टकवर्गफलमाह—साष्टेति ॥ २८-२९ ॥

शुक्र आठ बिन्दुसे युत कोण या केन्द्रमें हो तो बल, वाहनका स्वामी हो । पूर्वादि बिन्दुमें जीवनभर अविनाश भोगी हो । ७ बिन्दु होनेपर धन-रत्नका स्वामी होता है ॥२८॥

शुक्र नीच राशिमें, अस्त, द्वादश, अष्टम स्थानमें हो तो पहलेका कहा हुआ जो राज योग है उसका विनाशक हो ( राजयोग भंग हो ) । शुक्र थोड़े बिन्दुसे युत जिस मन्दिर ( गृह ) में हो उस राशिकी दिशामें स्त्रीके लिये प्रशस्त शयनीय गृहका निर्माण करे ॥२९॥

## अथ शनिफलम् ।

कोणस्य शून्यतरराशिगते तु मन्दे, जातस्य मृत्युफलमाशुधनक्षयो वा ।
एकद्वित्रिलोकयुगबिन्दुयुते च केन्द्रे मुक्ते स्वतुङ्गभवने रविजेऽल्पमायुः ॥ ३० ॥
षट्पञ्चबिन्दुसहिते तनुगे बलाढ्ये जन्मादिदुःखबहुलं धननाशमेति ।
मन्दे शरादिफलनीचसपत्नभावे जातश्चिरायुरतिशोभनवर्गकेन्द्रौ ॥ ३१ ॥
मूढारिनीचगृहगे शरवेदबिन्दौ दास्युष्ट्रवित्तसहितास्तनये तनुस्थे ।
सौरेऽष्टबिन्दुगणिते परमन्त्रतन्त्रग्रामाधिपास्तु गिरिबिन्दुगृहे धनाढ्यः ॥ ३२ ॥

श्लोकत्रयेण शनिफलमुक्तम् । कोणस्येत्यादिना सरलार्थेनेति ॥ ३०-३२ ॥

शनि अपने अष्टवर्गमें शून्य राशिमें हो तो जातककी शीघ्र मृत्यु और धन नाश हो । एक, दो, तीन, चार बिन्दुसे युक्त केन्द्रमें शनि हो और अपने उच्च राशि ( तुला ) में न हो तो अल्पायु हो ॥ ३० ॥

शनि बलवान् हो लग्नमें ६-५ बिन्दुसे युक्त हो तो जन्मसे ही बहुत दुःख और धन नाश हो । शनि पाँच आदि बिन्दु युत नीच या शत्रु भावमें हो अति शोभनवर्गमें चन्द्रमा हो तो जातक दीर्घायु हो ॥ ३१ ॥

अस्तु, शत्रुराशि या नीच गृहमें ५-४ बिन्दु हो तो दासी, उष्ट्र, वित्त युक्त हो। यदि शनि ८ बिन्दु युक्त ५ वें या लग्नमें हो तो पर मन्त्र तन्त्र ग्रामका स्वामी हो। सात बिन्दुके गृहमें हो तो धनाढ्य होवे ॥ ३२ ॥

अथ प्रस्तारकम्।

आलिख्य चक्रं नवपूर्वरेखा याम्योत्तरस्था दश च त्रिरेखाः।
प्रस्तारकं षण्णवतिप्रकोष्ठं पङ्क्त्यष्टकं चाष्टकवर्गजं स्यात् ॥ ३३ ॥
होराशशीबोधनशुक्रसूर्यभौमामरेन्द्रार्चितभानुपुत्राः।
याम्यादिपङ्क्त्यष्टकराशिनाथाः क्रमेण तद्बिन्दुफलप्रदाः स्युः ॥ ३४ ॥
सबिन्दुगः सर्वफलप्रदः स्यादबिन्दुको व्यर्थफलप्रदः स्यात्।
अरातिनीचास्तगतो नभोगः सबिन्दुकोऽपि प्रविलोपकर्ता ॥ ३५ ॥

अथाधुना अष्टवर्गे प्रस्तारविधिरुच्यते—आलिख्येति। सलग्नसप्तग्रहाणामष्टसङ्ख्यत्वादष्टकोष्ठप्रयोजनीभूताः पूर्वापरा नव रेखास्तथा मेषादिद्वादशराशीनां द्वादशकोष्ठप्रयोजनिकास्त्रयोदश रेखा लेख्याः, तथा सति षण्णवतिप्रकोष्ठकं चक्रं विलिखितं स्यादिति। यथा हि—

कोष्ठकम्

| | मे. | वृ. | मि. | क. | सिं. | कं. | तु. | वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शनिः | | | | | | | | | | | | |
| गुरुः | | | | | | | | | | | | |
| कुजः | | | | | | | | | | | | |
| सूर्यः | | | | | | | | | | | | |
| शुक्रः | | | | | | | | | | | | |
| बुधः | | | | | | | | | | | | |
| चन्द्रः | | | | | | | | | | | | |
| लग्नम् | | | | | | | | | | | | |

अस्मिन् चक्रे होरा-शशी-बोधन-शुक्र-सूर्य-भौमा-मरेज्यार्चित-भानुपुत्राः क्रमेण याम्यादिपङ्क्त्यष्टकराशिनाथाः स्युः। अत्रैतदुक्तं भवति। प्रतिराशिमष्टधा विभज्य अष्टानां खण्डानामेकैकस्य शून्यादयः कक्षाक्रमगताः सलग्ना ग्रहा अधिपतयो भवन्ति। राशेरष्टमो भागः = ३°।४५′ पादोनांशचतुष्टयमितः। तेन प्रतिराशिं ३°।४५′यावच्छनिः। ततः। ७°।३०′ यावद्गुरुः। ततः ११°।१५′ यावद्भौमः। ततः १५°।०′ यावत्सूर्यः। ततः १८°।४५′ यावच्छुक्रः। ततः २२°।३०′ यावद् बुधः। ततः २६°।१५′ यावच्चन्द्रमाः। ततः ३०°।०′ यावल्लग्नं नाथत्वेन (फलदत्वेन) गण्यते। एते किल तत्र तत्र यथासम्भवोपगतबिन्दुफलदाश्च भवन्ति। निर्दिष्टभागे सबिन्दुको ग्रहस्तदुक्तफलदो भवति। बिन्दुरहितो ग्रहो विफल इत्यर्थादेव सिद्धम्। अथ सबिन्दुकोऽपि ग्रहो यदि शत्रुराशौ, नीचराशौ, सूर्यसहितो वा भवेत्तदा स ग्रहो विफल एव भवति। अथ चास्मिन् प्रस्तारे सर्वग्रहमिलितबिन्दवोऽर्द्धाधिकाः शुभायापेक्षिता भवन्ति। अर्धाल्पे सति न शुभमिति। तथा च फलदीपिकायाम्—

बिन्दौ स्थिते तत्फलसिद्धिकालविनिर्णयाय ग्रहितेऽष्टवर्गे।
भान्यष्टधा तत्र विभज्य कक्षाक्रमेण तेषां फलमाहुरन्ये ॥

राश्यष्टभागप्रथमांशकाले शनिर्द्वितीये तु गुरुः फलाय ।
कक्षाक्रमेणैवमिहान्त्यभागकाले विलग्नं फलदं प्रदिष्टम् ॥
सर्वग्रहाणां ग्रहितेऽष्टवर्गे तत्कालराशिस्थितबिन्दुयोगे ।
अष्टाक्षि २८ संख्याधिकबिन्दवश्चेच्छुभं तदूने व्यसनं क्रमेण ॥ इति ॥३३-३५॥

पूर्व पश्चिम नव रेखा और उत्तर दक्षिण १२ रेखा लिखकर ८ पंक्तिके अष्टवर्गके ९६ कोष्ठका प्रस्तार चक्र बनावे ॥ ३३ ॥

दक्षिणादि पंक्तिके लग्न-चन्द्रमा-बुध-शुक्र-सूर्य-मङ्गल-गुरु और शनि क्रमसे स्वामी और उनके बिन्दुफलको देनेवाले होते हैं ॥ ३४ ॥

बिन्दुसे युक्त सब फल देते हैं। यदि बिन्दु-रहित हों तो अफल (अनिष्ट फल) देते हैं। शत्रुगृहीका और अस्त ग्रह बिन्दुसे युक्त होनेपर भी विशेष फल विलोप करते हैं ॥ ३५ ॥

## अथ त्रिकोणशोधनम्।

पञ्च प्राचीरालिखेद्वाणसंख्यास्तिर्यग्रेखा वर्जितान्तश्चतुष्काः ।
प्रागादीशा द्वादश व्योमवासा ज्योतिश्चक्रस्वामिनस्तूबराद्याः ॥ ३६ ॥
अजहरितुरगाङ्गैरुक्षकन्यामृगास्यैर्युगघटघटरूपैः कर्किकीटावसानैः ।
दिनकरमुखवर्गे तत्त्रिकोणोपयाता लघुतरसमशून्या बिन्दवः शोधिताः स्युः ॥३७॥
त्रिकोणभावेषु यदल्पबिन्दवस्तदीयबिन्दू भवतस्तु तावुभौ ।
न बिन्दुको यस्तु न शोधितेतरौ समानसंख्या यदि सर्वमुत्सृजेत् ॥ ३८ ॥

इदानीमष्टकवर्गे त्रिकोणशोधनमाह—पञ्चेति त्रिभिः श्लोकैः । त्रयः कोणाः ( द्वादशराशिषु त्रयः प्रथम-पञ्चम-नवमास्तत्तद्भावास्त्रिकोणा उच्यन्ते ) तेषां परस्परं शोधनं त्रिकोणशोधनमिति । तदर्थं प्रथमं चक्रनिर्माणमावश्यकमिति-पञ्च प्राचीः = पूर्वापराः, बाणसङ्ख्याः = पञ्च तिर्यग्रेखाः = याम्योत्तरा रेखाः, वर्जितान्तश्चतुष्काः = मध्ये चतुष्खण्डवर्जिताः कुर्यात्। तथा सति द्वादशकोष्टकं चक्रमुत्पद्यते, तस्मिन् प्रागादित ईशत्वमुपगता द्वादश व्योमवासा आकाशचारिणस्तूबराद्या मेषमुखा ज्योतिश्चक्रस्वामिनो राशयो विज्ञेयाः । स्पष्टार्थं चक्रमवलोकनीयम् ।

| | | | |
|---|---|---|---|
| वृष ००० २ | मेष ००० १ | मीन ००० १२ | कुम्भ ००० ११ |
| मिथुन ००० ३ | वर्जितान्तश्चतुष्काः | | ००००० मकर १० |
| कर्क ०००० ४ | | | धनुः ०० ९ |
| सिंह ००००० ५ | ०० कन्या ६ | ००००० तुला ७ | वृश्चिक ० ८ |

अत्र चक्रे एकस्मात्पञ्चमं पञ्चमं त्रिकोणमतः अजहरितुरगाङ्गैः = मेष-सिंह-धनुर्धरैः, उक्षकन्यामृगास्यैः = वृष-कन्या- मकरैः, युगघटघटरूपैः = मिथुन-तुला-कुम्भैः, कर्किकीटावसानैः = कर्क-वृश्चिक-मीनैः राशिभिः, दिनकरमुखवर्गे = सूर्यादिग्रहाणामष्टकवर्गे, तत्त्रिकोणोपयाताः = यो यत्र भवति तस्माद्ये राशयस्त्रिकोणगतास्तेषु सञ्जाता

लघुतरसमशून्याः प्रत्येकत्रिकोणगतबिन्दुभ्यः शोधिता बिन्दवः भवन्ति एतदुक्तं भवति। प्रत्येकस्य ग्रहस्याष्टकवर्गे कथितेषु चतुर्ष्वपि त्रिकोणेषु प्रत्येकराशित्रये यः सर्वाल्पबिन्दुकः स राशित्रयस्थबिन्दुभ्यः शोध्यः। शेषमिता बिन्दवस्त्रिकोणशोधनजाता भवन्ति। यथा कल्पितोदाहरणे भौमाष्टकवर्गे (३-८ श्लो० टी० चक्रं विलोक्यम्) मेषे बिन्दुत्रयं, सिंहे बिन्दुपञ्चकम्, धनुषि बिन्दुद्वयं वर्त्तते। अत्र स्थानत्रये सर्वाल्पबिन्दुर्धनुर्गतो द्वितय इति स्थानत्रये शोधिते मेषे एकम्, सिंहे त्रयम्, धनुषि शून्यं चावशिष्टम्। अथ वृषे बिन्दुत्रयं, कन्यायां बिन्दुद्वयं, मकरे बिन्दुपञ्चकं विद्यते, अत्र सर्वाल्पं त्रिषु शोधितं तदा वृषे एकम्, कन्यायां शून्यं मकरे बिन्दुत्रयमवशिष्टम्। एवं मिथुने बिन्दुत्रयं, तुलायां पञ्च, कुम्भे त्रयमिति। सर्वाल्पं त्रयं त्रिषु शोधितं मिथुने शून्यं, तुलायां द्वयं, कुम्भे च शून्यमवशिष्टम्। एवमेव-कर्कटे बिन्दुचतुष्टयं वृश्चिके एकः मीने त्रयमिति सर्वाल्पं-त्रिषु संशोध्य कर्के त्रयं, वृश्चिके शून्यं, मीने बिन्दुद्वयमवशिष्टमिति। एवं भौमाष्टकवर्गे त्रिकोणशोधनेन द्वादशराशौ बिन्दुफलं जातम्—

| मे. | वृ. | मि. | क. | सिं. | कं. | तु. | वृ. | ध. | म. | कुं. | मी. | राशयः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | ४ | ५ | २ | ५ | १ | २ | ५ | ३ | ३ | बिन्दवः |
| १ | १ | ० | ३ | ३ | ० | २ | ० | ० | ३ | ० | २ | त्रिकोणशुद्धाबिन्दवः |

अथ त्रिकोणशोधने विशेषमाह—प्रत्येकत्रिकोणे सर्वाल्पबिन्दुकं त्रिषु शोधितं सत्सर्वाल्पबिन्दुको बिन्दुरहितो भवति तस्मादितरौ (५।१) अल्पबिन्दुरहितौ शेषबिन्दुकौ भवतः। त्रिकोणे (भावत्रये) कश्चिदेको यदि शून्यबिन्दुको भवेत्तदा तत्रेतरावपि यथास्थावेवार्थात् तत्र शून्यमिते सर्वाल्पशोधनेऽविकृत एव भवति, न तदानीं शोधनं कार्यमिति भावः। यदि स्थानत्रयेऽपि तुल्यसङ्ख्या बिन्दवः स्युस्तदा सर्वं संशोधयेत्। तदानीं स्थानत्रयेऽपि शून्यमेव भवति, सर्वत्र तुल्यशोधनादिति। तथा पाराशरीये—

त्रिकोणेषु च यन्न्यूनं तत्तुल्यं त्रिषु शोधयेत्।
एकस्मिन् भवने शून्ये तत् त्रिकोणं न शोधयेत्॥
समत्वं सर्वगेहेषु सर्वं संशोधयेत्तदा॥ इति॥ ३६-३८॥

पूर्व पश्चिम ५ रेखा और ५ तिरछी रेखा बनावे इससे १६ कोष्ठ होंगे, उसमें बीच का ४ त्याग दे, शेष १२ कोष्ठोंमें पूर्वसे बारह मेषादि ज्योतिष चक्र है॥ ३६॥

मेष सिंह धनुमें, वृष कन्या मकरमें, मिथुन तुला कुम्भमें और कर्क वृश्चिक मीनमें सूर्यादि अष्टवर्गमें कोणमें प्राप्त सर्वाल्प बिन्दु शोधित होता है॥ ३७॥

त्रिकोण भावमें जिसमें थोड़े बिन्दु हों उससे दोनों भावोंको न्यून करे, जो विना बिन्दु का है वह अन्यसे न शोधे, यदि समान संख्या हो तो सबको त्याग दे॥ ३८॥

## अथैकाधिपत्यशोधनम्।

कण्ठीरवं कटकभं च विना कुजादिकावासराशियुगलोपगबिन्दुसङ्ख्याः।
तत्तुल्यशून्यविषमाभसहग्रहाद्यास्त्वेकाधिपत्यपरिशोधितशेषिताः स्युः॥ ३९॥
राशिद्वयं सद्युचरं न शोधयेदेकं द्वयोः शून्यभमप्यशोधयेत्।
फलाधिके खेटयुते परं त्यजेत् तुल्यानभोगद्वितयं परित्यजेत्॥ ४०॥
सखेचराखेचरबिन्दुसाम्ये विशोधयेदग्रहबिन्दुसङ्ख्याम्।
विखेटराशिद्वयबिन्दवो ये न्यूनाधिका न्यूनसमा विधेयाः॥ ४१॥

खेटोपयाते लघुबिन्दुराशौ तत्तुल्यमायान्ति तदन्यसंख्याः ।
पूर्वं त्रिकोणं परिशोध्य पश्चादेकाधिपत्यस्य ततः प्रकल्प्याः ॥ ४२ ॥

अधुना एकाधिपत्यशोधनविधिमाह—कण्ठीरवमित्यादिभिः । तत्र सूर्याचन्द्रमसावेकैकराशीशौ । सूर्यः सिंहस्य, चन्द्रः कर्कस्य । अन्ये भौमादयः पञ्च ग्रहा द्विराशिका इति विदां स्फुटमेव । तेषां पञ्च-( कुजादिक ) ग्रहाणां स्वस्वराशियुगले त्रिकोणशोधनानन्तरं यद्यत्फलमवशिष्टं तत्तदेकाधिपत्यशोधनेन शुद्धं कुर्यात् । तत्कथमित्युच्यते । कण्ठीरवं = सिंहं ( सूर्यगृहम् ), कटकभं = कर्कं ( चन्द्रभवनम् ), विना, एतद्राशिद्वयं विहाय, कुजादिकानां पञ्चग्रहाणामावासराशियुगलं ( आत्मभवनद्वयम् ) उपगता यास्त्रिकोणशोधनावशिष्टबिन्दुसङ्ख्यास्तत्तुल्यशून्याः, विषमाः = वैषम्यमुपगताः, अग्रहाः = ग्रहरहिताः, सग्रहाः = ग्रहसहिताः, इत्याद्या-( बिन्दुसङ्ख्याः ) स्तु एकाधिपत्यपरिशोधितशेषिताः स्युः । एतदुक्तं भवति-भौमादेः प्रत्येकग्रहस्य स्वं स्वं राशिद्वयं तुल्यबिन्दुकं विषमबिन्दुकं, सग्रहं ग्रहरहितं वा सर्वं वक्ष्यमाणविधिना शोधनेन शेषितं स्यादिति ॥

शोधनप्रकारमाह—राशिद्वयमिति । राशिद्वयं यदि सखेचरं = ग्रहयुक्तं स्यात् तदा न शोधयेत्, तत्रैकाधिपत्यशोधनं न कुर्यादिति । यथा पूर्वोदाहरणे वृष-तुले सग्रहेऽतस्तत्र त्रिकोणशोधनफलमेव क्रमेण १, २ स्थाप्यम् । द्वयोः राश्योर्मध्ये एकं यदि शून्यभं = त्रिकोणशोधनफलरहितं स्यात् तदा तदप्यशोधयेत् । तत्रापि शोधनं न कार्यमुत यथास्थितमेव भवतीति । यथा मकरकुम्भयोः, कुम्भः फलहीन इति, तत्रापि मकरे ३, कुम्भे शून्यमेव स्थाप्यम् । फलाधिके खेटयुते परं त्यजेत् । एकत्र राशौ फलमधिकं ग्रहोऽपि भवेदन्यत्तु न्यूनफलं ग्रहरहितं स्यात्तदा तन्न्यूनफलमेव परित्यजेत् । यथा कल्प्यते—मेषवृश्चिकयोः मेषः सग्रहस्तत्र फलं च ४, वृश्चिको ग्रहरहितस्तत्र फलं १, अतस्तत्र वृश्चिकफलं त्याज्यमिति, मेषाधः ४ यथावदेव, वृश्चिकाधः ० स्थाप्यमिति । तुल्यानभोगद्वितयं परित्यजेत् । स्थानद्वयं तुल्यफलकं ग्रहरहितं च भवेत्तदा द्वयमपि परित्यजेदर्थादुभयत्रापि शून्यमेव स्थाप्यम् । यथा मिथुनकन्ये ग्रहरहिते, उभयत्र फलं ०, ० अत उभयत्र शून्यमेव रक्षितं स्यात् । यदि उभयत्र फलं ३, ३, वा ४, ४, वा २, २, भवेत्तदाऽपि ०, ० एव स्थाप्यमिति ॥

सखेचराखेचरबिन्दुसाम्ये = एको राशिः सग्रहोऽन्यो ग्रहहीन उभयत्र त्रिकोणशोधनफलं तुल्यं च स्यात्तदा अग्रहबिन्दुसङ्ख्यां विशोधयेत् । सग्रहराशौ यथास्थितं फलं, ग्रहरहिते राशौ शून्यं स्थाप्यमित्यर्थः । विखेटराशिद्वयबिन्दवो ये न्यूनाधिकाः । एको राशिर्न्यूनफलः, अन्योऽधिकफलः, उभयत्र ग्रहाभावश्च भवेत्तदा, न्यूनसमा विधेयाः = अधिकफलबिन्दुतो न्यूनफलबिन्दवो विशोध्याः । यथा धनुषि फलं ४, मीने फलं १, उभयत्र ग्रहाभावोऽतो धनुषि ३, मीने १, स्थाप्यम् ।

खेटोपयाते लघुबिन्दुराशौ = एको राशिर्ग्रहयुक्तो लघुबिन्दुकश्च भवेत्तस्मिन्, तदन्यसङ्ख्याः = अन्यराशिसङ्ख्याः = अन्यो राशिः फलाधिको ग्रहहीनश्च स्यात्तदा तत्सङ्ख्याः, तत्तुल्यमायान्ति = लघुबिन्दुसङ्ख्यातुल्यमूनत्वं यान्ति । यथा कल्प्यते वृषो ग्रहयुक्त ऊन २ फलकश्च, तुला ग्रहरहिता फलाधिका ५ चातो विशोधनेन वृषाधः २, तुलाधः ३, फलं स्थाप्यमिति ।

अथैतदेकाधिपत्यशोधनं त्रिकोणशोधनानन्तरं कुर्यादित्याह—पूर्वमिति । प्रथमं त्रिकोणं परिशोध्य ततः पश्चात् एकाधिपत्यस्य शोधनाः प्रकल्प्याः । एतत्त्रिकोणैकाधि-

पत्यशोधनानन्तरमष्टकवर्गः शुद्धो भवतीति चिन्त्यम् । एवमेवाह पराशर एकाधिपत्य-शोधनम्—

एवं त्रिकोणं संशोध्य पश्चादेकाधिपत्यता । क्षेत्रद्वयं फलानि स्युस्तदा संशोधयेद् बुधः ॥
क्षीणेन सह चान्यस्मिन् शोधयेद्ग्रहवर्जिते । ग्रहयुक्ते फले हीने ग्रहाभावे फलाधिके ॥
अनेन सह चान्यस्मिन् शोधयेद्ग्रहवर्जिते । फलाधिके ग्रहैर्युक्ते चान्यस्मिन् सर्वमुत्सृजेत् ॥
उभयोर्ग्रहसंयुक्ते न संशोध्यः कदाचन । उभयोर्ग्रहहीनाभ्यां समत्वे सकलं त्यजेत् ॥
सग्रहाग्रहतुल्यत्वात् सर्वं संशोध्यमग्रहात् । कुलीरसिंहयो राश्योः पृथक्क्षेत्रं पृथक् फलम् ॥

बारह राशिमें सिंह और कर्क राशिके एक २ स्वामी है, अन्य १० राशियोंमें दो दो राशिके एक २ स्वामी हैं। अतः सिंह कर्कके अतिरिक्त राशि मंगलादि ग्रहोंकी राशि हैं। एक ग्रह की दो दो जो राशि हैं उन में दोनों राशिकी बिन्दुसंख्या उसके समान शून्य विषम अग्रह सहग्रहादि को एकाधिपत्य संशोधनकर शेषित करे ॥ ३९ ॥

दोनों राशिमें ग्रह हों तो शोधन नहीं करे। यदि दोनोंमें एक राशि फलरहित हो तो भी शोधन न करे। यदि एकराशिमें अधिक फल और ग्रह भी हो तो दूसरेका फल उसमें घटावे। यदि दोनोंमें फल बराबर और ग्रह नहीं हों तो दोनोंको घटावे, दोनोंको शून्य कर दे ॥ ४० ॥

एक राशिमें ग्रह हो दूसरी राशि ग्रहहीन हो दोनोंमें फल बराबर हो तो ग्रहहीन राशिको शून्य बनावे। यदि दोनों राशि ग्रह हीन और न्यूनाधिक बिन्दुवाली हों तो न्यूनके समान अधिकमें से घटावे ॥ ४१ ॥

एकराशिमें थोड़े फल और ग्रह भी हो दूसरीमें अधिक फल और ग्रह न हो तो थोड़े फलके बराबर अधिक फलमें घटावे। पहले त्रिकोण शोधन करके पीछे एकाधिपत्य शोधन करे ॥ ४२ ॥

Notes-पूर्वोदाहृतभौमाष्टकवर्गे त्रिकोणशोधनावशेषमेव फलमेकाधिपत्यशोधनादपि भवतीति विविच्य प्रतीतिः कर्त्तव्या ॥ ३९–४२ ॥

भौमाष्टकवर्गोदाहरणम् ।

११
ooo|||||
मं. १०
ooooo|||
९
oo||||||
१२ ल.
ooo|||||
८
o|||||||
शु.
१ सू.
ooo|||||
७ श.
ooooo|||
२ बु. चं.
ooo|||||
४ वृ.
oooo||||
६
oo||||||
३
ooo|||||
५
ooooo|||

त्रिकोणैकाधिपत्यशोधनोदाहरणम् ।

| राशयः | मे. | वृ. | मि. | क. | सिं. | कं. | तु. | वृ. | ध. | म. | कु. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | सू. | बु. चं. | • | वृ. | • | • | श. | • | • | मं. | • | ल. शु. |
| बिन्दवः | ३ | ३ | २ | ४ | ५ | २ | ५ | १ | २ | ५ | ३ | ३ |
| त्रि. शो. बि. | १ | १ | ० | ३ | ३ | ० | २ | ० | ० | ३ | ० | २ |
| ए.श.शो.बि. | १ | १ | ० | ३ | ३ | ० | २ | ० | ० | ३ | ० | २ |

शोध्यावशिष्टानि गुणीकृतानि मेषादिमानैर्गुणकं हि भानाम् ।
सूर्यादिकास्ते गुणिताः स्वमानैरेषां ग्रहाणां गुणकं वदन्ति ॥ ४३ ॥
शैलाशावसुसागराम्बरशरैः शैलाहिगोसायकै-
रीशद्वादशभिश्च राशिगुणकैर्मेषादिभानां क्रमात् ।
बाणैः पञ्चभिरष्टकैः शरनभःशैलेषुभिर्भास्वरा-
देवं व्योमतलाधिवासगुणकैरायुर्विधानोदितैः ॥ ४४ ॥

इदानीं गुणकपिण्डं गुणकाङ्कांश्चाह—शोध्यावशिष्टानीति । त्रिकोणैकाधिपत्यशोधनाच्छेषफलानि, मेषादिमानैः = मेषादिराशीनां यानि पृथक्पृथक् मानानि ( गुणकाङ्काः ) पठितानि तैः, गुणीकृतानि = गुणितानि, तदा तद्गुणनफलैक्यं, भानां = राशीनां हि गुणकं वदन्ति । एवं प्रत्येकस्य ग्रहस्याष्टकवर्गे राशीनां गुणकपिण्ड उत्पद्यते । ग्रहगुणकपिण्डमाह—सूर्यादिका ग्रहास्ते स्वमानैः गुणिताः । अत्रेदं चिन्त्यम् । सूर्यादयो ग्रहा यत्र यत्र राशौ भवेयुस्तत्तद्राशेरधःस्था ये शोध्यावशेषाङ्कास्ते सूर्यादीनां स्वस्वगुणकमानैर्गुणिताः कार्याः । तेषां योगो ग्रहगुणकपिण्डो जायते ।

अथ राशीनां गुणकाङ्काः—मे० = ७ । वृ० = १० । मि० = ८ । क० = ४ । सिं० = १० । कं० = ५ । तु० = ७ । वृ० = ८ । ध० = ९ । म० = ५ । कुं० = ११ । मी० = १२ ।

ग्रहाणां गुणकाङ्काः—सू० = ५ । चं० = ५ । मं० = ८ । बु० = ५ । बृ० = १० । शु० = ७ । श० = ५ ।

एवमाह पाराशरः—

शोध्यावशेषं संस्थाप्य राशिमानेन वर्द्धयेत् । ग्रहयुक्तेऽपि तद्राशौ ग्रहमानेन वर्द्धयेत् ॥
गोसिंहौ दशगुणितौ वसुभिर्मिथुनालिनौ । वणिङ्मेषौ तु मुनिभिः कन्यकामकरौ शरैः ॥
शेषाः स्वमानगुणिता राशिमाना इमे क्रमात् ।
जीवारशुक्रसौम्यानां दशवसुमुनीन्द्रियैः क्रमाद् गुणकाः ।
बुधस्य सङ्ख्या शेषाणां ग्रहगुणैर्गुणयेत् पृथक् कार्याः ॥

अथ राशिगुणकोदाहरणम्—प्रदर्शितोदाहृतौ मेषाधःफलं १, मेषगुणेन ७ गुणितं जातं = ७ । वृषाधः फलं १, वृषगुण–१० गुणितं जातं = १० । एवं कर्के ३ × ४ = १२ । सिंहे ३ × १० = ३० । तुलायां २ × ७ = १४ । मकरे ३ × ५ = १५ । मीने २ × १२ = २४ । एषामैक्यं ( ७ + १० + १२ + ३० + १४ + १५ + २४ = ) राशिगुणकपिण्डः = ११२ ।

एवं सूर्यो मेषे, मेषस्य फलं १, सूर्यगुणेन ५ गुणितं जातम् = ५ । चन्द्रो वृषे, वृषफलं १, चन्द्रगुणेन ५ गुणितं = ५ । भौमो मकरे, मकरफलं ३, भौमगुणेन ८ गुणितं = २४ । बुधो वृषे वृषफलं १ बुधगुणेन ५ गुणितं = ५ । गुरुः कर्कटे, कर्कफलं ३, गुरुगुणेन १० गुणितं = ३० । शुक्रो मीने, मीनफलं २, शुक्रगुणेन ७ गुणितं = १४ । शनिस्तुलायां, तुलाफलं २, शनिगुणेन ५ गुणितं = १० । एषां योगः ( ५ + ५ + २४ + ५ + ३० + १४ + १० = ) ग्रहगुणकपिण्डः = ९३ । अथ राशिग्रहगुणकैक्यम् = ११२ + ९३ = २०५ = योगपिण्ड इति भौमाष्टकवर्गे जातं पिण्डमानम् = २०५ । एवमेव सर्वेषामष्टकवर्गे पिण्डानयनं कार्यमिति ॥ ४३–४४ ॥

शोधन करने पर जो शेष फल हों उन्हें मेष आदि राशिके गुणकसे गुणे, उनका योग

**राशिगुणक पिण्ड होता है। एवं ग्रहोंको भी अपने २ गुणकसे गुणे उनका योग ग्रहगुणक पिण्ड होता है। यहां गुणकांकों को कहते हैं—**

**मेषादि राशियोंके गुणक क्रमसे ७।१०।८।४।१०।५।७।८।९।५।११।१२ हैं। सूर्यादि ग्रहोंके ५।५।८।५।१०।७।५ ये क्रमसे आयु साधनार्थ गुणक हैं॥ ४४॥**

तद्राशिखेटगुणकैक्यफलानि हृत्वा त्रिंशद्भिरब्दचयमासदिनादिकाः स्युः।
तद्द्वादशाधिकसमा यदि राशिमानैराहृत्य तत्समतयाऽनुहरेत्तदायुः॥ ४५॥

इदानीं ग्रहाणामष्टकवर्गशुद्धायुरानयनमाह—तदिति। तद्राशिखेटगुणकैक्यफलानि = पूर्वप्रदर्शितानां राशिगुणपिण्डानां ग्रहगुणपिण्डानाञ्चैक्यफलानि (योगपिण्डमानानीति यावत्) त्रिंशद्भिः (३०) हृत्वा = भक्त्वा, फलम् अब्दचयमासदिनादिकाः = वर्ष-मास-दिन-नाडी-प्रभृतयो भवेयुः। तत्र वर्षमाने द्वादशाधिके सति राशिमानैर्द्वादशभिराहृत्य विभज्य, तत्समतया = लब्धमितवर्षैस्तत्तद्ग्रहाणामष्टकवर्गजनितमायुर्व्यवह्रियते।

यथा हि—प्रदर्शितोदाहरणे योगपिण्डः २०५, त्रिंशद्भक्तो जातं वर्षादिकमायुः = २०५÷३० = ६ व., १० मा.। एवं सर्वेषां पिण्डमानादायुरानेयमिति॥ ४५॥

**राशि गुणपिण्ड-ग्रहगुणपिण्डोंके योगमें ३० से भाग देनेसे वर्ष, मास, दिन होंगे। वर्ष १२ से अधिक हो तो १२ से भाग देकर शेष वर्ष ग्रहण करने चाहियें। वही उस ग्रहकी आयु होगी॥ ४५॥**

उच्चं गतस्य द्विगुणं तदीयं नीचं गतस्यास्तगतस्य चार्द्धम्।
अतोऽन्तराले त्वनुपात्यमायुरारस्य वक्रे द्विगुणीकृतं स्यात्॥ ४६॥
मूलत्रिकोणनिजमित्रगृहोपगानां तुङ्गादिवर्गशुभयोगनिरीक्षितानाम्।
उक्तप्रकारगणितागममायुरेव पापारिवर्गसहितस्य त्रिपादमायुः॥ ४७॥

इदानीं गणितागतायुषि वैशिष्ट्यमाह—उच्चमिति। उच्चं = स्वकीयोच्चराशिं गतस्य ग्रहस्य, तदीयं = तस्य गणितागतं यदायुस्तद् द्विगुणं कुर्यादिति शेषः। नीचं गतस्य सूर्येण सहास्तं गतस्य च ग्रहस्य अर्द्धमायुः क्षीयतेऽर्द्धमेवावशिष्टं भवति। अतोऽन्तराले त्वनुपात्यमायुरिति। उच्चे द्विगुणं नीचेऽर्द्धमिति राशिषट्के आयुषोऽर्द्धस्य त्रिगुणितस्य चयापचयौ भवतस्तदा नीचादुच्चाद्वाऽभीष्टान्तरे विद्यमाने ग्रहे आयुषः कियानुपचयोऽपचयो वा भवेदित्यनुपातेनायुषः स्पष्टीकरणं स्यादिति। आरस्य = भौमस्य, वक्रे = विलोमगमने, द्विगुणीकृतं तदायुः प्राह्यमिति।

ये ग्रहाः स्वकीयमूलत्रिकोणे, स्वमित्रगृहे, स्वोच्चादिवर्गे वा स्थिता भवेयुस्तथा शुभग्रहेण युक्ता निरीक्षिताश्च भवेयुस्तेषामुक्तप्रकारगणितागतमेवायुर्ग्राह्यम्। न तेषामायुषि चयापचयौ कुर्यादित्यर्थः। अथ च यो ग्रहः पापग्रहस्य शत्रुग्रहस्य वा वर्गगतो भवति तस्य त्रिपादमायुः=पादेन (चतुर्थांशेन) रहितं=चतुर्थांशोनं गणितागतायुर्ग्राह्यमिति॥४६-४७॥

**उच्च राशिमें ग्रह हो तो दूनी, नीचराशिमें हो वा अस्त हो तो आधी आयु होती है। इसके बीच में अनुपात द्वारा आयु निश्चय करे, मंगल वक्री हो तो आयु को दूनी करे॥४६॥**

**मूल त्रिकोण, अपनी उच्च राशि, अपने गृहमें प्राप्त ग्रहोंकी और उच्चादि वर्ग शुभ इष्ट ग्रहोंकी उक्त प्रकारसे गणित की हुई आयु होती है। पापादि वर्गमें स्थित ग्रहकी चतुर्थांशोन आयु होती है॥ ४७॥**

रविमुख्यनभोगदत्तसंख्याः परमायुः शरदस्तु मानवानाम्॥
सविलग्नसमाश्च केचिदाहुर्गुरुमूलात्समुपैति तुल्यमायुः॥ ४८॥

इदानीमष्टवर्गसिद्धं परमायुःप्रमाणमाह—रवीति। रविमुख्याः सूर्यादयो ये नभोगा ग्रहास्तैर्दत्तसंख्याः, शरदः = वर्षाणि, मानवानां परमायुर्भवति। अष्टकवर्गवशात्सूर्यादिस-

ग्रहाणां यदायुःप्रमाणं सिद्धयति तदेव परमायुर्भवति जातकस्येति । अत्र केचिदाचार्याः ( पराशरादयः ) अखिलमसमाः = लमायुर्वर्षसहिताः सूर्यादिग्रहायुर्वर्षसङ्ख्याः परमायुर्भवतीत्याहुः । तदुक्तं ( पराशरोक्तं ) लग्नशुभस्थानम्—

१. आर्किज्ञशुक्रगुर्वाराः, २. सौम्यदेवेज्यभार्गवाः ।
३. हित्वा सौम्यगुरू शेषाः, ४. सूर्येज्यभृगुसूर्यजाः ॥
५. तथा जीवभृगू वृद्धौ, ६. सर्वे शुक्रं विना क्षते ।
७. जीव एकस्तथा द्यूने, ८. मृतौ सौम्यभृगू तथा ॥
९. धर्मे गुरुसितौ, सर्वे १०. खे चाये, ११. शुक्रमन्तरा ।
१२. सूर्यचन्द्रौ तथा रिष्फे स्थानं लग्नस्य कीर्त्तितम् ॥

प्रथमादिद्वादशभावे उक्तानां ग्रहाणामवस्थितौ लग्नस्य बिन्दवो ( शुभचिह्नानि ) जायन्ते । तत् उक्तवल्लग्नायुरप्यानेयमिति । तल्लग्नायुर्वर्षसहितं सूर्यादिसप्तग्रहायुर्मानं परमायुरुक्तम् । अथ सर्वत्रैव गुरुमूलात् = गुरु महन्मूलमानयनप्रकारो यस्य तस्माद् बृहद् ( सूक्ष्म ) गणितप्रकारेणेति यावत्, यदायुः सिद्धयति तत्तुल्यमायुः जातः समुपैतीति ॥४८॥

अथ लग्नाष्टवर्गस्थानचक्रम्

| भावाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | | | ० | ● | | ० | | | | ० | ० | ० |
| चं. | | | ० | | | ● | | | | ० | ० | ● |
| मं. | ० | | ० | | | ० | | | | ० | ० | |
| बु. | ० | ● | | ● | | ० | | ० | | ● | ● | |
| बृ. | ० | ० | | ● | ० | ० | ● | | ० | ● | ० | |
| शु. | ● | ० | ० | ० | ० | | | ● | ० | | | |
| श. | ● | | ० | ● | | ० | | | | ० | ० | |
| ल. | | | ● | | | ● | | | | ० | ० | |

**सूर्यादि ग्रहोंकी आयुःसंख्याके योग तुल्य मनुष्योंकी परमायु होती है। किसीका मत है कि उसमें लग्नायुको भी जोड़नी चाहिये। यहां निष्कर्ष यह है कि सूक्ष्म गणितसे जो आयु हो वही लेनी चाहिये ॥ ४८ ॥**

केन्द्रादन्यगते चन्द्रे सखेटे चाष्टवर्गजम् ।
आयुरेव नभःस्थाने शुभपापयुतेऽथवा ॥ ४९ ॥

इदानीमष्टवर्गायुर्ग्रहणस्थितिमाह—केन्द्रादिति । चन्द्रे केन्द्रा ( १।४।७।१० ) दन्यगते सखेटे = केनचित्कैश्चिद्वा ग्रहेण ग्रहैर्वा सहिते च अष्टवर्गवशाज्जातमेवायुर्ग्राह्यम् । एतदुक्तं भवति । यस्य जन्मकाले चन्द्रः केन्द्रगतो न भवेद्ग्रहयुक्तश्चान्यत्र स्थितः स्यात्तदा तस्य जातस्याष्टकवर्गायुरेव ग्रहीतव्यम् । अथवा नभः स्थाने = लग्नाद्दशमे गृहे शुभपापयुते = शुभपापग्रहाभ्यां सहिते अष्टवर्गजमेवायुः साध्यम् । उक्तलक्षणद्वयेऽन्यतरस्य प्राप्तौ अष्टवर्गजमायुरेव ग्राह्यमर्थादेवैतयोरभावेऽन्यदायुः साधनप्रकारोक्तमायुः ग्राह्यमिति ॥ ४९ ॥

**ग्रह सहित चन्द्रमा केन्द्रातिरिक्त स्थानमें हो, अथवा दशम भाव पापग्रह शुभ ग्रहसे युक्त हो तो वही ( अष्टवर्गायु ) आयु ग्राह्य है ॥ ४९ ॥**

रव्यादिखेटस्थितराशियाताः स्वकीयवर्गोपगबिन्दुसंख्याः ।
वेधाष्टवर्गप्रभवायुरब्दा भवन्ति सर्वे हरणक्रियाश्च ॥ ५० ॥

रव्यादयो ग्रहा यत्र यत्र स्थिता भवन्ति तत्तद्राशियातास्तेषां स्वस्वाष्टवर्गोपगता बिन्दुसङ्ख्याः यास्ताभ्यः सर्वे वेधाष्टवर्गप्रभवायुरब्दाः ( भिन्नाष्टवर्गजनितायुर्वर्षाणि ) हरणक्रियाश्च पूर्ववद्भवन्ति ॥ ५० ॥

सूर्य आदि ग्रह जिस २ राशिमें हों उस २ राशिमें उसके अष्टवर्ग वाले जितने बिन्दु हों उनसे भिन्नाष्टवर्गोत्पन्न आयु और सभी हरण क्रियायें पूर्ववत् होती हैं ॥ ५० ॥

तत्तत्कारकभावबिन्दुगुणितं शोध्यावशिष्टं फलं
विंशत्या सह सप्तभिश्च विहृतं तच्छेषताराशनौ ।
तातस्तज्जननी सहोदरजनो बन्धुः सुतः स्त्री स्वयं
तत्तुल्या विलयं प्रयान्ति विपुलश्रीनाशहेतुश्च वा ॥ ५१ ॥

इति भिन्नाष्टवर्गः ।

इदानीम् अष्टकवर्गवशाच्छनिकर्तृकानिष्टनक्षत्राण्याह—तत्तदिति । शोध्यावशिष्टम्=अष्टवर्गे त्रिकोणैकाधिपत्यशोधनाच्छेषं फलं तत्तत्कारकभावबिन्दुगुणितं = यस्य यस्य भावस्य विचारः क्रियते तत्तद्भावस्य यो यो ग्रहः कारकस्ततस्तावन्मिते भावे यद्बिन्दुफलं तेन गुणितं कार्यम् । यथा पितृभावस्य विचारे समुपस्थिते पितृकारकः सूर्यः, अतः सूर्याष्टकवर्गे शोध्यावशेषं यत् फलं तत् सूर्यान्नवमभावगतबिन्दुमानेन गुणितं कार्यमिति । तत् विंशत्या सह सप्तभिश्चार्थात्सप्तविंशति(२७)भिः विहृतं = भक्तं, तच्छेषताराशनौ = शेषमिते नक्षत्रे गतवति शनैश्चरे-तातः, तज्जननी, सहोदरजनः, बन्धुः, सुतः, स्त्री, स्वयञ्च विलयं प्रयान्ति = म्रियन्ते । अर्थात्सूर्यात्तातः = जातस्य पिता । चन्द्राज्जननी = जातस्य माता । भौमात्सहोदरः । बुधाद्बन्धुः = मित्रम् । गुरोः सुतः । शुक्रात्स्त्री । शनेः जातः स्वयमेव नाशमियात् । अथवा तत्तुल्याः = पितृतुल्यः, मातृतुल्यः, भ्रातृतुल्य इत्यादिः म्रियते । वा तेषां मरणाभावे विपुलश्रीनाशहेतुर्भवति ।

उदाहरणम्—उक्तोदाहरणे भ्रातृविचारे कर्त्तव्ये भ्रातृकारको भौमो मकरे विद्यते तस्य शोध्यावशिष्टं फलम्=१५ । भौमात्तृतीये मीने फलं = २ । अतः तयोः १५, २ गुणनफले- ३० अस्मिन्सप्तविंशतिभक्ते शेषं=३ कृत्तिकानक्षत्रमतः कृत्तिकागते शनैश्चरे तस्य भ्रातुर्भ्रातृतुल्यस्य वा नाशं ब्रूयादेवं सर्वत्र विचिन्त्यमिति ॥ ५१ ॥

जिसका विचार करना हो उसके कारकसे उतनी राशिमें जो बिन्दु हो उससे उस कारकके शोधनावशेष बिन्दुको गुणकर २७ से भाग लेने पर जो शेष हो उसमें जब शनि हो तो क्रमसे उसके पिता-माता-भाई-बन्धु-पुत्र-स्त्री और स्वयं नाशको प्राप्त होते हैं, विपुल लक्ष्मीका भी वही नाश होनेका कारण है ॥ ५१ ॥

इति भिन्नाष्टकवर्गः ।



## अथ समुदायाष्टकवर्गः ।

ततः समालिख्य भगोलचक्रं समस्तबिन्दुस्थितराशिकोष्ठम् ।
रव्यादिकानामजपूर्वकाणां बिन्दूपगस्थानफलं वदामि ॥ ५२ ॥
आपञ्चविंशति फलान्यफलान्यसत्यमात्रिंशदत्तसहितानि समध्यमानि ।
त्रिंशत्पराणि सुखवित्तयशस्कराणि तद्भाववृद्धिफलदानि च सामुदाये ॥ ५३ ॥

इदानीं समुदायाष्टकवर्गं सफलमाह—तत इत्यादिभिरेकविंशतिभिः श्लोकैः । तत्र तावत् पूर्वोक्तप्रकारैः प्रतिराशिं प्रत्येकस्य ग्रहस्याष्टकवर्गं प्रसाध्य शुभाशुभबिन्दुरेखात्मकं ज्ञानं कृत्वा तत्सकलमेव पृथक् पृथक् ग्रहस्य सर्वाष्टकवर्गजातं ( समुदायाष्टकवर्गोत्पन्नम् )

शुभमशुभं वा विजानीयादिति । तदेव तावदुच्यते । सर्वेषामेव ग्रहाणां पृथक् पृथक् भगोलचक्रं = अष्टकवर्गविचारणीयकोष्ठकं समालिख्य ततोऽनन्तरं समस्तबिन्दुस्थितराशि-कोष्ठं = प्रत्येकग्रहस्य प्रतिराशि बिन्दुसङ्ख्यामवगम्य च तेषां पृथक् पृथक्स्वस्वभावं फलं विजानीयात् । अथ च रव्यादिकानां = सूर्यादिसप्तग्रहाणां ( सलग्नानाम् ) अजपूर्वकाणां = मेषादीनां द्वादशराशीनां बिन्दूपलब्धानफलं = सर्वेषां ग्रहाणां द्वादशसु राशिषु ये बिन्दवस्तेषां फलं वदामि ।

समुदाये = समुदायाष्टकवर्गे आपञ्चविंशतिफलानि = सर्वाष्टकवर्गजाता बिन्दवो यदि पञ्चविंशतिमिताः स्युस्तदा तानि अफलानि = असत्फलानीति । त्रिंशत्समूहितानि = पञ्चविंशतिमारभ्य त्रिंशद्यावत् बिन्दवः, समध्यमानि = मध्यफलानीति । त्रिंशत्पराणि = त्रिंशद्भ्योऽधिका बिन्दवश्चेत् तदा तानि सुखवित्तयशस्कराणि = उत्तमफलानि भवन्ति, तद्भाववृद्धिफलदानि च = यद्भावसम्बन्धिनस्ते बिन्दवस्तद्भावस्य पोषकाश्च भवन्तीति ।

Notes—जन्मकाले यो ग्रहो यद्भावे स्थितो यद्भावकारको वा भवति तस्य भावस्य शुभाशुभं फलमुक्तप्रकारेण ग्रहाष्टकवर्गोत्पन्नबलाबलवशाद्विचिन्त्यं तदैव सूक्ष्मं स्यादिति॥५२-५३

फिर भगोल चक्रको अच्छे प्रकारसे लिखकर सूर्यादि ग्रहोंका, मेषादि राशियोंका समस्त बिन्दुस्थिति राशि कोष्ठ बिन्दु प्राप्त फलको कहता हूं ॥ ५२ ॥

समुदायाष्टवर्गमें एकसे २५ तक बिन्दु फलक असत्य हैं २५ से ३० पर्यन्त ५ मध्यम हैं, ३० के बाद सुख-वित्त-यश करने वाले उस भावका वृद्धि फल देते हैं ॥ ५३ ॥

इदानीमष्टकवर्गवशाच्छुभस्थानस्थिता ग्रहा अशुभफलदायकाः अपि शुभदाः भवन्तीत्याह—

ये तुङ्गराशिस्वसुहृद्गृहस्था ये कोणकेन्द्रोपचयस्थिताश्च ।
ये सौम्यवर्गादिबलोपयातास्ते नाशदा लाघवबिन्दुकाश्चेत् ॥ ५४ ॥
ये चावसानरिपुरन्ध्रतुरङ्गभावे ये नीचपापरिपुखेचरवर्गयुक्ताः ।
ये मान्दिराशिपतिना सह बोधकाश्च
ते सर्वमुख्यफलदास्त्वधिबिन्दुकाश्चेत् ॥ ५५ ॥

ये तुङ्गराशीति । ये ग्रहाः, स्वस्वतुङ्गराशिगताः, स्वमित्रराशिगताः केन्द्रे ( १।४।७। १० ) वा कोणे ( ५।९ ) स्थिताश्च भवेयुः, अपि च शुभवर्गादिगता बलशालिनश्च भवेयुस्तेऽपि चेद्यदि अष्टकवर्गे लाघवबिन्दुकाः = अल्पशुभचिह्नकाः स्युस्तदा ते नाशदाः = अशुभफलदा एव भवन्ति । अथ ये ग्रहाः अवसाने = द्वादशे, रिपौ = षष्ठे, रन्ध्रे = अष्टमे, तुरङ्गे = सप्तमे भावे वा स्थिता भवेयुः, ये च नीचराशौ, पापग्रहस्य—शत्रुग्रहस्य च वर्गगता भवेयुरपि च ये गुलिकराशीशेन सह स्थिताः तत्सम्बन्धिनश्च भवेयुस्तेऽपि यदि अष्टकवर्गे अधिबिन्दुकाः = अधिकशुभचिह्नकाः स्युस्तदा ते सर्वमुख्यफलदाः = निखिलशुभफलसूचका भवन्ति । अत्रैतदुक्तं भवति । अष्टकवर्गे शुभा अशुभा अपि ग्रहा यदि अधिकबिन्दुयुक्ताः स्युस्तदा शुभफलदा लघुबिन्दुका अशुभफलदा भवन्ति । न तत्र केवलं शुभाशुभपरत्वेन शुभाशुभं फलं भवतीति विज्ञेयम् ॥ ५४–५५ ॥

जो उच्च राशि-मित्रगृही और जो केन्द्र, कोण, उपचयमें स्थित हैं जो शुभवर्गमें हैं बलवान् हैं वे भी थोड़ी बिन्दुओंसे नाशक हैं ॥ ५४ ॥

जो ग्रह नीच पापग्रहके वर्गमें युक्त हों जो गुलिक राशिके स्वामीके साथ हों वे विशेष बिन्दुके हों तो सब कालमें फलके देनेवाले हैं ॥ ५५ ॥

इदानीं सर्वाष्टकवर्गे केषुचिद् भावेषु शुभस्थितिमाह—

मानस्थिताल्लाभगृहे बहुत्वे लाभाल्लघुत्वे यदि रिष्फराशौ।
रिष्फोपयातादधिके विलग्ने जातः सुखी वित्तयशोबलाढ्यः ॥ ५६ ॥

मानस्थितादिति। मानस्थितात्=दशमभावस्थबिन्दुमानात् लाभगृहे=एकादशे भावे बहुत्वे (दशमभावापेक्षया लाभभावे यद्यधिका बिन्दुसङ्ख्या भवेत्तदेति), लाभात्=एकादशभावतः रिष्फराशौ = द्वादशे भावे लघुत्वे = अल्पमानके, तथा च रिष्फोपयातात् = द्वादशभावगतबिन्दुमानात् विलग्ने अधिके सति जातः सदा सुखी, वित्तवान्, यशस्वी, बली च भवेदिति। तथोक्तमपि बलभद्रेण—

"मध्यात् फलाधिके लाभे लाभात् क्षीणतरे व्यये।
यस्य व्ययाधिके लग्ने भोगवानर्थवान् भवेत्" इति ॥ ५६ ॥

**दशममें स्थित बिन्दुसे लाभगृहमें बहुत हो, लाभसे बारहवेंमें कम हों, बारहवेंसे विशेष लग्नमें हो तो जातक सुखी, यश-धनसे बली हो ॥ ५६ ॥**

इदानीं भावानां खण्डत्रयपरिकल्पनया वयसः प्रथमे-मध्ये-चरमे त्र्यंशे शुभाशुभफलमाह—

खण्डत्रयं शफरकर्कटकीटकाद्यं तत्तच्चतुष्टयगृहोपगबिन्दुयुक्तम्।
आद्यं च मध्यमवसानमिति प्रयुक्तं केचिद्व्ययादिकमिति प्रवदन्ति लोके ॥५७॥

खण्डत्रयमिति। शफरकर्कटकीटकाद्यं = मीन-कर्क-वृश्चिकाद्यं खण्डत्रयं कृत्वा तत्तच्चतुष्टयगृहोपगबिन्दुयुक्तं = तत्तद्राशिचतुष्कमुपगता ये समुदायाष्टकवर्गबिन्दवस्तत्सङ्कलनं, क्रमेण आद्यम्, मध्यम्, अवसानं च खण्डमाद्यैः प्रयुक्तम्। एतदुक्तं भवति। मीनादिराशिचतुष्के (मी. मे. वृष. मि.) प्रथमखण्डोपगबिन्दुसंख्याम् आद्यसंज्ञाम्। कर्कादिराशिचतुष्के (क. सिं. कं. तु.) द्वितीयखण्डोपगबिन्दुसङ्ख्यां मध्यसंज्ञाम्। वृश्चिकादिराशिचतुष्के (वृश्चि. ध. म. कु.) तृतीयखण्डोपगबिन्दुसंख्याम् अन्त्यसंज्ञां प्रकल्प्य तस्माद्वयसः प्रथमादित्र्यंशे शुभाशुभफलं निर्दिशेत्। यस्मिन्भागेऽधिकबिन्दवो भवन्ति तत्र वयसि सुखादिकमधिकमेवं यस्मिन् भागेऽल्पबिन्दवस्तत्र वयसि दुःखादिकं वाच्यमिति। तथाहि जातकादर्शे—

मीनेन्द्वालयवृश्चिकप्रभृतिकं खण्डत्रयं कल्पये-
दाद्येऽक्षाधिकतादिमे तु वयसस्त्र्यंशे विदध्यात्सुखम्।
मध्ये मध्यवयस्यथान्तिमवयस्त्र्यंशेऽन्त्यखण्डे हि सा
हीनाक्षस्तु वयस्त्रिभाग इह योऽत्र व्याधिदुःखोद्भवः ॥ इति।

केचिदिति। व्ययादिकम् = द्वादशभावादिकमुक्तक्रमेण खण्डत्रयं भवतीति केचिदपरे आचार्याः लोके प्रवदन्ति। अर्थात् द्वादश-प्रथम-द्वितीय-तृतीयेति प्रथमम्, चतुर्थ-पञ्चम-षष्ठ-सप्तमेति द्वितीयम्, अष्टम-नवम-दशम-लाभेति तृतीयं खण्डं केषांचिन्मते विज्ञेयमिति ॥ ५७ ॥

**तीन खण्ड हैं मीनसे चार राशिका एक खण्ड, कर्कसे चार राशिका दूसरा खण्ड और वृश्चिकसे चार राशिका तीसरा खण्ड। एक खण्डका बिन्दु योग करे। उन खण्डोंको आदि, मध्य, अन्त्य खण्ड कहते हैं। कोई व्ययादिक खण्ड कहते हैं ॥ ५७ ॥**

इदानीं पूर्वोक्त-खण्डत्रये केषांचिन्मते भेदमाह—

बिन्दुं त्यक्त्वा रिष्फरन्ध्रोपयातं शिष्टं खण्डं केचिदिच्छन्ति सन्तः।
तुल्यस्वल्पाधिक्यबिन्दुक्रमेण मिश्रं दुःखं संपदः स्युर्नराणाम् ॥ ५८ ॥

विन्दुमिति। केचिदपरे सन्तः=विद्वांसः पूर्वं-(५७ तमश्लोके) परिभाषितखण्डत्रये रिष्फरन्ध्रोपयातं=द्वादशेऽष्टमे च भावे स्थितं बिन्दुं त्यक्त्वा शिष्टम्=उर्वरितं खण्डं प्रथमं, द्वितीयं, तृतीयं च इच्छन्ति = स्वीकुर्वन्ति। इदं विचिन्त्यम्। केचिद् व्ययादिकमित्युक्तप्रकारे अष्टमो द्वादशो भावो यत्र यत्र खण्डे निपतति तत्र तत्राष्टमोपगता द्वादशोपगताश्च बिन्दवो न ग्राह्या इति। परमेतन्न वैद्यनाथाभिमतं केचिदिति पदोपादानात्।

अथ सिद्धबिन्दुवशात्फलमाह—तुल्येति। प्रथमादि-खण्डत्रये यदि तुल्या एव बिन्दवो भवेयुस्तदा निखिले वयसि मिश्रं (सुखदुःखादिकं) फलं वाच्यम्। यत्र खण्डे स्वल्पाः=अत्यल्पा बिन्दवो भवेयुस्तत्र वयसि दुःखं=कष्टादिकं विनिर्दिशेत्। यत्र खण्डे अधिका बिन्दवो भवेयुस्तत्र वयसि नराणां=जनिमतां सम्पदः=सुखैश्वर्याणि विनिर्दिशेत्॥५८॥

**बारहवें आठवेंमें प्राप्त बिन्दुका त्याग करे ऐसा कोई २ सन्त कहे हैं, तुल्य, स्वल्प, अधिक बिन्दुके क्रमसे मिश्रफल, दुःख तथा धन होते हैं। तुल्य बिन्दुमें मिश्र फल, अल्प-बिन्दुमें दुःख, अधिक बिन्दुमें धन ॥ ५८ ॥**

इदानीं पूर्वोक्तखण्डत्रये ग्रहयोगफलमाह—

सौम्याक्रान्तं यदि सुखकरं मिश्रदं मिश्रयोगं
खण्डं पापद्युचरसहितं क्लेशयोगाकरं स्यात्।
बिन्दुस्वल्पे यदि निजमनस्तापवान् पापवादी
बिन्द्वाधिक्ये वयसि विपुलः श्रीसमेतः प्रजातः॥ ५९॥

सौम्याक्रान्तमिति। सौम्याक्रान्तं=शुभग्रहसंयुक्तं खण्डं यदि स्यात्तदा जातस्य खण्डसमे वयसि सुखकरं भवति। मिश्रयोगं=पापेन शुभेन च संयुक्तं खण्डं मिश्रदं=शुभं, अशुभं च फलं करोति तत्तुल्ये वयसि। पापद्युचरसहितं=केवलं पापग्रहेण युक्तं खण्डं तत्तुल्ये वयसि जातस्य क्लेशयोगाकरं=अतीव दुःखजनकं भवति।

अथ बिन्दुपरत्वेन खण्डफलमाह—बिन्दुस्वल्प इति। यदि खण्डे बिन्दुस्वल्पे=अत्यल्पबिन्दुयुक्ते सति तत्तुल्ये वयस्त्रिभागे जातो निजमनस्तापवान्, पापवादी च भवेत्। बिन्द्वाधिक्ये वयसि=यत्र खण्डे अधिकबिन्दवः स्युस्तत्तुल्ये वयसि प्रजातो विपुलश्रीसमेतः =अतीव सम्पदादियुक्तो भवेदिति॥ ५९॥

**यदि शुभग्रहसे आक्रान्त (युक्त) हो तो शुभफल देनेवाला, मिश्रित ग्रहसे आक्रान्त हो तो मिश्र फल देनेवाला, पापग्रहसे युक्त हो तो क्लेशप्रद होवे। यदि थोड़ी बिन्दु हो तो अपने मनको ताप पहुँचाने वाला पापी हो, अधिक बिन्दुमें अधिक अवस्थामें विद्वान्, अधिक लक्ष्मीवान् होवे ॥ ५९ ॥**

इदानीं कस्मिंश्चिद्विशिष्टयोगे सति लग्नगतबिन्दुसंख्याफलमाह—

यावद्बिन्दुर्लग्नगस्तावदीयसङ्ख्यातीते वत्सरे राजयानम्।
वित्तं पुत्रं चातिविद्यामुपैति जातः सम्पद्योगशाली नरश्चेत्॥ ६०॥

यावदिति। लग्नराशौ यावन्तः सर्वाष्टकवर्गजाता बिन्दवो भवेयुस्तत्तुल्येऽतीते वत्सरे=बिन्दुसङ्ख्यामितगताब्दे जातो नरो राजयानम्, वित्तम्, पुत्रम्, अतिविद्यां च उपैति प्राप्नोति। चेद्यदि स जातः सम्पद्योगशाली नरः स्यात्=तस्य जन्मकाले यदि कश्चित् सुखादिविशिष्टो योगः स्यात्तदैव। नान्यथा केवलं लग्नगतबिन्दुवशाद्वक्तव्यमिति भावः॥६०॥

**जितने बिन्दु लग्नमें हों उतने उसके वर्ष बीतने पर राज यान (सवारी) प्राप्त हो। धन, पुत्र, विशेष विद्या प्राप्त होती है यदि वह मनुष्य संपत्ति योग वाला हो तो ॥ ६० ॥**

इदानीं योगविशिष्टे आयुःप्रमाणमाह—

रिःफाधीशे मन्दगेहोदयस्थे होरारन्ध्रस्वामिनौ दुर्बलौ च।
लग्ने यावद्बिन्दुसंख्यास्तदीया जातस्यायुर्वत्सराः सम्भवन्ति ॥ ६१ ॥

रिःफाधीश इति । रिःफाधीशो द्वादशेशस्तस्मिन् मन्दगेहोदयस्थे = मकरकुम्भान्यतरराशिलग्ने व्यवस्थिते ( मकरः कुम्भो वा लग्नं तस्मिन् द्वादशेशः स्यादिति ) होरारन्ध्रस्वामिनौ = लग्नेशाष्टमेशौ च दुर्बलौ भवेतां तदाऽस्मिन् योगे लग्ने यावन्तः सर्वाष्टकवर्गजा बिन्दवः स्युस्तत्सङ्ख्यास्तस्य जातस्यायुर्वत्सराः सम्भवन्ति । उक्तलक्षणे योगे लग्ने यावन्तो बिन्दवस्तावन्ति वर्षाणि जातको जीवतीति भावः ।

Notes—अत्र मन्दगेहोदये रिःफाधीशो गुरुः शनिरपि भवितुमर्हः । मकरलग्ने गुरू रिःफेशः, कुम्भोदये शनिरेव रिःफेशः । तथा लग्नेशो हि शनिरेव । अष्टमेशः सूर्यः, बुधश्च भवितुमर्ह इति विविच्यम् । परञ्च कुम्भो राशि शनेर्मूलत्रिकोणमतो मन्मते 'मन्दगेहोदये' इत्यत्र मकरराशिलग्नमेव ग्राह्यम् । तदा लग्नेशः शनिः, अष्टमेशः सूर्यः, रिःफेशो गुरुः स्यादिति ॥ ६१ ॥

**द्वादश भावका स्वामी शनिकी राशिमें हो, और लग्न अष्टमका स्वामी निर्बल हों तो लग्नमें जितनी बिन्दु हों उतने वर्षकी जातककी आयु होती है ॥ ६१ ॥**

इदानीं ग्रहयोगवशाद्बिन्दुफलान्याह—

यानाधीशे लग्नगे वाहनस्थे लग्नाधीशे तद्ग्रहोपेतराश्योः ।
त्रिंशत्संख्या बिन्दवः सत्रयश्चेज्जाता राजश्रीनिदाना नरेशाः ॥ ६२ ॥

यानाधीश इति । यानाधीशे = चतुर्थभावेशे लग्नगे, लग्नाधीशे = लग्नस्वामिनि वाहनस्थे = चतुर्थभावमुपगते सति तद्ग्रहोपेतराश्योः = लग्नचतुर्थभावयोः यदि सत्रयस्त्रिंशत्सङ्ख्याः ३३ बिन्दवश्चेद्भवेयुस्तदा ते जाता नरा राजश्रीनिदानाः = राजैश्वर्यप्रधाना नरेशाः = भूपाला भवन्ति । अत्रेदमुक्तं भवति । लग्नेशश्चतुर्थे, चतुर्थेशो लग्ने च भवेत्तथा लग्नचतुर्थभावयोर्योगबिन्दवस्त्रयस्त्रिंश ३३ न्मिताः स्युस्तदा जातो विविधसम्पद्युतो भवतीति ॥ ६२ ॥

**चतुर्थका स्वामी लग्नमें और लग्नेश चतुर्थमें हो तो उन दोनों राशिमें यदि ३३ बिन्दु हों तो राजलक्ष्मीयुत राजा होवे ॥ ६२ ॥**

होराबन्धुप्राप्तिभावत्रयेषु त्रिंशन्मानाधिक्यबिन्दूपगेषु ।
जातस्तेजःश्रीबहुत्वं च राज्यं चत्वारिंशद्वत्सरादूर्ध्वमेति ॥ ६३ ॥

होरेति । होरा = लग्नम्, बन्धुः = चतुर्थभावः, प्राप्तिः = एकादशभावः इत्येषु भावत्रयेषु त्रिंशन्मानाधिक्यबिन्दूपगेषु = प्रथम—चतुर्थ—लाभभावानां समुदायाष्टकवर्गबिन्दवो मिलिता यदि त्रिंशदधिकाः स्युस्तदा जातो नरः चत्वारिंशद्वत्सरादूर्ध्वं तेजः, श्रीबहुत्वं राज्यं च एति = प्राप्नोति । अस्मिंल्लक्षणे जातो ४० चत्वारिंशद्वर्षादूर्ध्वं भाग्यवान् भवतीति भावः ॥ ६३ ॥

**लग्न चतुर्थ लाभ इन तीन स्थानमें तीससे अधिक बिन्दु हों तो जातक तेजस्वी, बहुत बड़ा धनी हो और उसको ४० वर्षके ऊपर राज्य मिले ॥ ६३ ॥**

यत्पञ्चविंशतिमुखास्त्रिदशान्तसंख्या बन्धुस्थिता नवमराशिकबिन्दवश्च ।
यद्यष्टकेन सह विंशतिवत्सराणामन्ते परे शरदि वा नरवाहनाढ्यः ॥ ६४ ॥

यदिति । यदि बन्धुस्थिताः = चतुर्थभावगताः, नवमराशिकबिन्दवश्च सम्मिलिता पञ्चविंशतिमुखाः = पञ्चविंशतिमारभ्य त्रिदशान्तसङ्ख्याः = त्रिः दश त्रिगुणिता दश अन्त-

सङ्ख्या येषां, त्रिंशदित्यर्थः । एतदुक्तं भवति । चतुर्थनवमभावयोः समुदायकबिन्दवो यदि षड्विंशति–त्रिंशदन्तर्गता भवेयुस्तदा अष्टौ च विंशतिवर्षाणामष्टाविंशतिवर्षा-गमन्ते वा ततः परे शरदि = वर्षे जातो नरः नरवाहनाढ्यो भवेत् ॥ ६४ ॥

यदि २६ से ३० तक बिन्दु संख्या चतुर्थ और नवम राशिमें हों तो २८ वर्षके बाद वह मनुष्य नरवाहन ( तामदान या पालकी ) से युक्त हो अर्थात् यात्रा करे ॥ ६४ ॥

देवाचार्ये वाहनस्थे स्वतुङ्गे चत्वारिंशद्बिन्दुसङ्ख्यान्विते ।
मेषागारे लग्नगे वासरेशे जातो राजा लक्षसंख्याश्वनाथः ॥ ६५ ॥

देवाचार्ये इति । देवाचार्यो गुरुस्तस्मिन् वाहनस्थे = चतुर्थभावमुपगते स्वतुङ्गे = निजोच्चराशौ ( कर्के ) विद्यमाने, तत्र च चत्वारिंशद्बिन्दुसङ्ख्या–४० समेते, यदि च वासरेशे = सूर्ये मेषागारे लग्नगे = मेषराशिलग्ने व्यवस्थिते सति जातो राजा, लक्षसङ्ख्याश्वनाथः = लक्षघोटकपतिश्च भवेत् ॥ ६५ ॥

अपनी उच्च ३ राशिके बृहस्पति चतुर्थ स्थानमें ४० बिन्दुसे युक्त हो, सूर्य मेष राशिमें लग्न पर हो तो वह मनुष्य राजा हो तथा लक्ष घोड़ोंको अपने पास रक्खे ॥ ६५ ॥

चत्वारिंशद्बिन्दुयुक्ते विलग्ने चापे जीवे भार्गवे मीनराशौ ।
स्वोच्चे भौमे कुम्भगे भानुपुत्रे जातः सर्वश्रीधरः सार्वभौमः ॥ ६६ ॥

चत्वारिंशदिति । विलग्ने=जन्मकालीनलग्ने ( यत्तद्राशिलग्ने ) चत्वारिंशद्बिन्दुयुक्ते, जीवे = बृहस्पतौ चापे = धनूराशौ ( स्वमूलत्रिकोणे ) भार्गवे=शुक्रे मीनराशौ ( स्वोच्चे ), भौमे = मङ्गले स्वोच्चे = मकरराशौ, भानुपुत्रे = शनैश्चरे कुम्भगे = स्वमूलत्रिकोणे च गतवति जातः सर्वश्रीधरः = विविधसम्पदैश्वर्ययुक्तः सार्वभौमः = चक्रवर्त्ती राजा स्यात् ॥ ६६ ॥

चालिश बिन्दुसे युक्त लग्न हो, धनुमें गुरु, मीनमें शुक्र हो, अपने उच्च स्थानमें मङ्गल और कुम्भ राशिमें शनि हो तो जातक सर्व लक्ष्मीसे युक्त सार्वभौम राजा होवे ॥ ६६ ॥

क्रियादिराशित्रितयोपयाता भवन्ति पूर्वादिचतुर्दिशश्च ।
फलाधिकं यद्दिशि तत्प्रदेशे धनादिवृद्धिं समुपैति जातः ॥ ६७ ॥

क्रियादीति । क्रियो मेषस्तदादिराशित्रितयमुपगता पूर्वादिचतुर्दिशो भवन्ति । एवदुक्तं भवति । मेष–वृष–मिथुनाः पूर्वे, कर्क–सिंह–कन्या याम्ये, तुला–वृश्चिक–धनुर्धराः प्रतीच्यां, मकर–कुम्भ–मीना उदीच्यामवगम्याः । प्रयोजनमुच्यते फलाधिकमिति । यद्दिशि फलाधिकं भवेदर्थात् समुदायाष्टकवर्गवशादुक्तचतुर्दिशां मध्ये यद्दिशि सर्वाधिकबिन्दवो भवेयुस्तत्प्रदेशे = तद्दिग्भागे धनादिवृद्धिं जातो नरः समुपैति । एतदुक्तविधिना दिक्फलं विविच्य धनादिवृद्धिमिच्छता पुरुषेण तद्दिशि प्रयतितव्यम् ॥ ६७ ॥

मेषादि तीन ३ राशिमें पूर्वादि चारो दिशामें ( मे० वृ० मि० में पूर्व, कर्क सिंह कन्यामें दक्षिण, तु० वृ० ध० में पश्चिम, म० कु० मी० में उत्तर ) अधिक बिन्दुवाली राशिकी दिशामें धनादिकी वृद्धि होती है ॥ ६७ ॥

इदानीं रोगज्ञानमाह—

लग्नादिशन्यन्तगतं तुरङ्गैः सङ्गुण्य ताराहृतलब्धयाते ।
रव्यादिपापे यदि कोणगे वा रोगादिपीडाविपुलं नराणाम् ॥ ६८ ॥
मन्दादिलग्नान्तफलं च तद्वल्लग्नान्तमारादुदयात्कुजान्तम् ।
शुभैक्यसंख्यागततारकायां शुभग्रहे सौख्यफलं वदन्ति ॥ ६९ ॥

लग्नादीति । लग्नादिशन्यन्तगतं = लग्नराशिमारभ्य शनिस्थितराशिपर्यन्तं ये सर्वाष्टकवर्गजातबिन्दवस्तान् तुरङ्गैः = सप्तभिः सङ्गुण्य ततस्ताराहृतलब्धयाते = तारा नक्षत्राणि ( सप्तविंशतिः ) तैर्हृते यल्लब्धं तावन्मिते नक्षत्रमुपयाते रव्यादिपापे = रविभौ-

मशनीनामन्यतमे वा कोण--( ५।९ ) गे ग्रहे सति अत्रेदं विचिन्त्यम्। लग्नमारभ्य शनिपर्यन्तेषु राशिषु यावन्तो बिन्दवस्तान् सप्तभिः सङ्गुण्य सप्तविंशतिभिर्भागमहरेत्तदा यल्लब्धं तावन्मिते नक्षत्रे यदि रविर्भौमो वा शनिः ( पापग्रहः ) अथवा कोणस्थितः कश्चिद्ग्रहो भवेत्तदा, नराणां विपुला = महती रोगादिपीडा स्यादिति मूलशब्दार्थः। अथात्र मन्त्रेश्वरेण लब्धतुल्यगताब्दे तथोक्तम्—

लग्नात्प्रभृतिमन्दान्तमेकीकृत्य फलानि वै। सप्तभिर्गुणयेत्पश्चात् सप्तविंशहृतात्फलम्॥
तत्समानगते वर्षे दुःखं वा रोगमाप्नुयात्
एवं मन्दादिलग्नान्तं भौमराह्वोस्तथा फलम् ॥ इति ॥६८॥

मन्दादीति। मन्दं=शनिमारभ्य लग्नान्तं यावद्राशिषु फलं=समुदायाष्टकबिन्दु-सङ्ख्या, वा आरात् = मङ्गलात् लग्नान्तमथवा, उदयात् = लग्नात् कुजान्तं फलं तद्वत् सप्तभिः सङ्गुण्य सप्तविंशतिभिः २७ भक्तं कृत्वा लब्धमिते नक्षत्रे रव्यादिपापे गतवति तद्वत्=रोगादिपीडा वाच्या।

अथ च शुभैक्यसङ्ख्यागततारकायां—शुभग्रहाणां यावन्तो बिन्दवस्तेषामैक्यवशादु-क्तवद्या तारा, अर्थात् लग्नादितो मन्दान्तगतं मन्दादितो लग्नान्तगतमित्यादि यथा प्रदर्शितं तथैव लग्नादिशुभग्रहान्तं फलं सप्तभिः सङ्गुण्य सप्तविंशतिभिः भक्तं कुर्यात्, लब्धमिते नक्षत्रे गतवति शुभग्रहे सौख्यफलं ब्रूयादिति।

अत्रापि लब्धतुल्ये वर्षे तत्तदुक्तं फलमुक्तं जातकादेशकारेण। तथा तद्वचनम्—

लग्नादारभ्य सूर्यात्मजगतभवनाक्षान्तमेकत्र युक्त्वा
मुध्ने तस्मिन् सुखाप्ते गतवति फलतुल्याब्दके रोगशोकाः।
मन्दादालग्नमेवं क्षितिसुतगभाद्यादिलग्नं विलग्ना-
दाभौमं त्वेति कृत्वा विधिमशुभमलिर्वादिशेच्चोदिताब्दे ॥ इति ॥

अत एव श्लोकद्वयेऽपि तदुक्तलक्षणे लब्धसंख्यामिते गताब्दे तत्तदुक्तं शुभाशुभ-फलं वाच्यमिति सिद्धान्तः ॥ ६९ ॥

लग्नसे शनि पर्यन्तकी बिन्दुसंख्याको ७ से गुणाकर २७ के भाग देनेसे जो लब्धि प्राप्त हो उसमें सूर्यादि पापग्रह या कोणस्थ ग्रह प्राप्त हो तो मनुष्योंको बड़ी रोगादि पीड़ा हो ॥६८॥

शनिसे लग्नान्त जो फल उसी प्रकार मङ्गलसे लग्न पर्यन्त तथा लग्नसे मङ्गल पर्यन्त विचारे। शुभ संख्याकी एकत्रताकी संख्यामें शुभग्रह सौख्य फल देनेवाले हैं, ऐसा आचार्य कहते हैं ॥ ६९ ॥

शोध्यं राशिद्युचरणगुणकैः संगुणय्यैतदैक्यं
हत्वा शैलैरुडुगणहृतं लब्धमब्दादिकं स्यात्।
मानाधिक्ये विशतमशते तारकायुर्वराङ्कैः
सगुण्याप्तं दिवसनिचयैर्मातुलैः शुद्धमायुः ॥ ७० ॥

शोध्यमिति। शोध्यं = त्रिकोणैकाधिपत्यशोधनजातं फलं राशेद्युचरस्य ( ग्रहस्य ) च गुणकैः ४४ श्लोकोक्तैः सङ्गुण्य ( तत्तद्ग्रहस्य पृथक् पृथगिति ) एतेषामैक्यं विधाय तच्छैलैः ७ हत्वा ( संगुण्य ) उडुगणैः २७ हृतं = भक्तं सद्यल्लब्धं तदब्दादिकं = वर्षा-दिकं स्यात्। तस्मिन् वर्षादौ मानाधिक्ये = शताधिक्ये समागते सति तद्विशतं = शतोनितं कार्यं, अशते = शताल्पे सति तदेव ग्राह्यं, तदेत्तारकायुः = नक्षत्रायुः कथ्यते। अथ तदायु-र्वराङ्कैः = ३२४ भिः हत्वा = सङ्गुण्य, दिवसनिचयैः दिनसमूहैः ( वर्षान्तःपातिभिः )

मातङ्गैः = ३६५ प्रमितैः भक्तं कुर्यात् तदा लब्धं शुद्धं आयुः स्यात् । एतद्धि शुद्धाष्टकवर्गजनितं ज्ञेयमिति ।

अत्र यदुक्तं मानाधिक्ये विशतमिति तदाह जातकादेशकारः—

अष्टवर्गं समुद्धृत्य ग्रहाणां राशिमण्डले ।
प्राग्वत् त्रिकोणं संशोध्य पश्चादेकाधिपत्यताम् ॥
एकस्मिन् मण्डलाधिक्यं शोधयेच्चक्रमण्डलम् ।
द्वादशैव तु गृह्णीयादेवं सर्वेषु राशिषु ॥

पूर्वोक्तं गुणकारैस्तु वर्धयेच्च पृथक् पृथक् । एकीकृत्य ततः सर्वं सप्तभिर्गुणयेत् पुनः ।
सप्तविंशतिहृल्लब्धं आयुःपिण्डं प्रदृश्यते । द्वादशादिगुणाल्लब्धं मासादिघटिकास्ततः ॥
शतादूर्ध्वं तु तत्पिण्डं मण्डलं शोधयेच्च तम् । शतमेव तु गृह्णीयाद्दीर्घायुर्योगसम्भवे ॥

तद्विधं सकलं कृत्वा वराङ्गेण ३२४ विवर्धितम् ।
मातङ्ग–३६५ हृतलब्धायुर्मातङ्गाब्दं प्रदृश्यते ॥

अत्राष्टकवर्गे शतमेवोत्तमायुर्गृहीतमित्यवगन्तव्यम् ॥ ७० ॥

शुद्धावशेष बिन्दुको राशि ग्रहके गुणकसे गुणाकरके ७ से गुणे फिर २७ का भाग देने से जो फल मिले वह वर्षादि होता है। शताधिक्य होने पर १०० में शोधकर वरांग ३२४ से गुणाकर मातंग ३६५ से भाग देने पर शुद्ध आयु होती है ॥ ७० ॥

इदानीं साधितमायुः कदा यथात्वमुपयातीत्याह—

स्वल्पमध्यबहुमानवत्सरा मण्डलोनयुतकर्मकल्पिताः ।
तुल्यकालमुपयान्ति सर्वतः सद्गुणोदयकटाक्षवीक्षणात् ॥ ७१ ॥

स्वल्पेति । उक्तप्रकारैः साधिताः स्वल्पमध्यबहुमानवत्सराः = अल्पायुर्मध्यायुर्दीर्घायुषां वर्षभेदाः मण्डलोनयुतकर्मकल्पिताः ( मानाधिक्येत्यादिकर्मकृताः ) सद्गुणोदयकटाक्षवीक्षणात्=सद्गुणविशिष्टानां ग्रहाणामुदये लग्ने यत् कटाक्षवीक्षणम्=सदवलोकनं तस्मादर्थात् यदि लग्ने सद्गुणयुक्तानां ग्रहाणां दृष्टिः स्यात्तदा सर्वतो भावेन तुल्यकालमुपयान्ति । यदि लग्ने सद्ग्रहाणां दृष्टिर्न स्यात्तदा तदागतमायुर्न याथातथ्येन परिणमतीति भावः ॥ ७१ ॥

लग्नमें सद्गुण ग्रहकी कटाक्षदृष्टिसे स्वल्प मध्य बहुवत्सर मण्डलमें हीन युत कर्मकल्पनासे सब तरहसे समान समय आते हैं ॥ ७१ ॥

श्रीवैद्यनाथकृतजातकपारिजाते पराशरादिफलसाररसोपयाते ।
प्रस्तारभिन्नसमुदायकबिन्दुशीलः संकीर्तितस्तु सकलद्युचरप्रसादात् ॥ ७२ ॥

इति दशमोऽध्यायः ।

सरलार्थेन श्लोकेनानेनाध्यायमुपसंहरतीति ॥ ७२ ॥

पारिजाते सुधा टीका कपिलेश्वरनिर्मिता ।
दशमे चाष्टवर्गाख्येऽध्यायेऽस्मिन् पूर्णतां गता ॥ १० ॥

पराशर आदि मुनियोंके ग्रन्थके फलके सार भागसे उत्पन्न श्रीवैद्यनाथजी कृत जातकपारिजातमें सब ग्रहोंकी कृपासे अष्टवर्गके प्रस्तारके भेदोंका वर्णन किया ॥ ७२ ॥

इति जातकपारिजाते दशमेऽध्याये 'विमला' हिन्दी टीका समाप्ता ॥ १० ॥

## अथ [illegible]भावफलाध्यायः ॥ ११ ॥

अथातो भावफलानि वैकल्यादौ भावानां ग्रहस्थितिवशाच्छुभाशुभत्वं निरूपयति द्वादशभिः श्लोकैः—

होरालङ्कारमुख्यप्रभवशुभफलादीनि सर्वाणि पुंसां
तत्तद्भावोद्भवानि द्युचरबलवशाद्यानि तानि प्रवच्मि ।
ये ये भावाः सितज्ञामरगुरुपतिभिः संयुता वीक्षिता वा
नान्यैर्दृष्टा न युक्ता यदि शुभफलदा मूर्तिभावादिकेषु ॥ १ ॥

होरेति । द्युचराणां द्युचरबलवशात् = ग्रहाणां बलाबलवशात् यानि शरीरादीनां शुभाशुभफलादीनि तत्तद्भावोद्भवानि = लग्नादिद्वादशभावजातानि तानि अधुना अहं ग्रन्थकारः प्रवच्मि । अत्रेदमुक्तं भवति । जनिमतां यत् किञ्चित् शरीर-धन-भ्रातृ-मित्र-पुत्र-शत्रु-स्त्री-मृत्यु-धर्म-राज्य-लाभ-व्यय-सम्बन्धि फलं विचार्यते तत्सर्वं तत्तद्भावात् ( तनु-धन-सहज-सुहृदित्यादितः ) एव जातं तथा तत्र तत्रोपस्थितग्रहबलवशादुद्भूतमेव भवति । तान्यत्र कथयामि । ये ये भावाः लग्नादयः, सितज्ञामरगुरुपतिभिः = शुक्र-बुध-बृहस्पति-स्वस्वामिभिः, संयुताः = सहिताः, वा वीक्षिताः = दृष्टाः सन्तः अन्यैः = उक्तेभ्य इतरैः ग्रहैः युता न, तथा दृष्टा न भवेयुस्तदा ते मूर्तिभावादिकेषु=लग्नादिभावेषु शुभफलदा भवन्ति । यस्मिन् भावे बुध-गुरु-शुक्राणामन्यतमस्य सकलस्य वा तथा तद्भावपतेर्वा स्थितिरथवा दृष्टिर्भवति, तथा तत्र यदि कस्यचिदन्यस्य ग्रहस्य स्थितिर्दृष्टिर्वा न भवति तदा तद्भावजन्यं फलं शुभं भवतीति भावः । तथा चाह पराशरः—

यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्याभिवृद्धिः ।
पापैरेवं तस्य भावस्य हानिर्निर्दिष्टव्या जन्मतः प्रश्नतो वा । इति ॥ १ ॥

अब ग्रहोंके बलानुसार लग्नादि भावोंसे उत्पन्न मनुष्योंके शुभाशुभ फलोंको कह रहा हूँ लग्नादि भावोंमें जो जो भाव शुक्र बुध बृहस्पति और अपने पतिसे युक्त वा दृष्ट हों, और यदि पाप ग्रहसे दृष्ट युत न हों तो वे शुभफल देते हैं ॥ १ ॥

तन्वादिभावेषु शुभोदयेषु तद्भावनाथोपगतेक्षितेषु ।
तदुक्तभावस्य समृद्धिरुक्ता नपापखेटेक्षितसंयुतेषु ॥ २ ॥

तन्वादीति । लग्नादयो भावाः शुभराशिकाः स्वस्वपतिना संयुक्ता वीक्षिता वा भवेयुस्तथा केनचित्पापग्रहेण युक्ता वीक्षिता वा न भवे स्तदा तत्तद्भावे यद्यद्वस्तुनो विचारः क्रियते तस्य तस्य समृद्धिरुक्ता आर्यैरिति ॥ २ ॥

शुभोदय राशिवाले लग्नादि भावोंके स्वामी उन भावोंमें प्राप्त हों और वे भाव पापग्रहोंसे दृष्ट युत न हों तो उस २ भावकी वृद्धि होती है ॥ २ ॥

नीचस्थो रिपुराशिस्थः खेटो भावविनाशकः ।
मूलस्वतुङ्गमित्रस्थो भाववृद्धिकरो भवेत् ॥ ३ ॥

नीचेति । स्वनीचराशौ शत्रुराशौ वा स्थितो ग्रहो यस्मिन् भावे विद्यमानः स्यात् स ग्रहस्तस्य भावस्य विनाशको भवति । एवं स्वमूलत्रिकोणे, स्वराशौ, स्वकीयोच्चे, स्वमित्रगृहे वा स्थितः सन् यस्मिन्भावे स्थितो भवति तस्य भावस्यासौ ग्रहो वृद्धिकरो भवति ॥

नीच राशिगत तथा शत्रुराशिस्थ ग्रह जिस भावमें हो उस भावका नाश करता है, अपने मूल त्रिकोणमें, अपने उच्च स्थानमें, मित्रराशिमें पापग्रह जहां हो उस भाव ( स्थान ) की वृद्धि करता है ॥ ३ ॥

यद्भावनाथो रिपुरिःफरन्ध्रे दुःस्थानपो यद्भवनस्थितस्तु ।
तद्भावनाशं कथयन्ति तज्ज्ञाः शुभेक्षितश्चेत् फलमन्यथा स्यात् ॥४॥

यदिति । यस्य भावस्य स्वामी रिपुरिःफरन्ध्रे = षष्ठद्वादशाष्टमान्यतमे भवति, वा दुःस्थानपः = षडष्टव्ययेशानामन्यतमो ग्रहो यस्मिन् भवने ( भावे ) स्थितो भवति, तस्य भावस्य नाशं तज्ज्ञाः = तद्विदः ( भावफलवेत्तारः ) कथयन्ति अथ यदीदृशौ भावः केनचित् कैश्चिद्वा शुभग्रहेण शुभग्रहैर्वा ईक्षितः = निरीक्षितः स्यात् तदा फलं अन्यथाऽर्थात् तद्भावनाशो न स्यात्तत तद्भाववृद्धिरेव वाच्येति ॥ ४ ॥

जिस भावका स्वामी षष्ठ, द्वादश या अष्टम स्थानमें प्राप्त हो, एवं दुःस्थान ( ६।८।१२ ) का स्वामी जिस भावमें हो उस भावका नाश होता है ऐसा विद्वान् लोग कहते हैं। यदि उसे शुभग्रह देखते हों तो अन्यथा फल होता है अर्थात् उस भावका नाश नहीं होता है ॥ ४ ॥

यद्भावपे केन्द्रगते विलग्नात्त्रिकोणगे वा यदि सौम्यदृष्टे ।
तुङ्गादिवर्गोपगते बलाढ्ये तद्भावपुष्टिं फलमाहुरार्याः ॥ ५ ॥

यद्भावप इति । यस्य भावस्य स्वामी विलग्नात् = जन्मलग्नतः, केन्द्रे (१।४।७।१०) वा कोणे ( ५।९ ) स्थितः यदि सौम्येन ( शुभग्रहेण ) दृष्टो भवेत्तथा तुङ्गादिवर्गोपगतः = स्वकीयोच्चादिराशौ स्ववर्गे च स्थितः बलाढ्यः = पूर्वोक्तैर्बलैर्युक्तो वा भवेत् तदा तद्भावपुष्टिफलं तद्भावस्य वृद्धिरेव फलम् आर्या आहुः ॥ ५ ॥

लग्नसे जिस भावका पति केन्द्रमें हो वा त्रिकोणमें हो उसे शुभग्रह देखते हों उच्चादि वर्गमें प्राप्त होकर बलवान् हो तो श्रेष्ठ विद्वानोंके मतसे उस भावकी पुष्टि होती है ॥ ५ ॥

तत्तद्भावत्रिकोणे सुखमदनगृहे वाऽऽस्पदे सौम्ययुक्ते
पापानां दृष्टिहीने भवनपसहिते पापखेटैरयुक्ते ।
भावानां पुष्टिमाहुः सकलशुभकरं चान्यथा चेत्प्रणाशं
मिश्रं मिश्रग्रहेन्द्रैरखिलमपि तथा मूर्तिभावादिकानाम् ॥ ६ ॥

तत्तदिति । तत्तद्भावात् = विचारणीयभावतः, त्रिकोणे ( ५।९ ) सुखमदनगृहे (४।७), वा आस्पदे (१०) सौम्ययुक्ते = शुभग्रहेण शुभग्रहैर्वा सहिते, तस्मिन् पापानां दृष्टिहीने = पापग्रहैरनवलोकित इति, भवनपसहिते स्वराशिपतिना युक्ते, तथा पापखेटैरयुक्ते, ईदृग्लक्षणलक्षितानां भावानां पुष्टिं = वृद्धिं विद्वांस आहुः । यस्मिंस्तस्मिन् भावे ईदृग्लक्षणं तद्भावजातं सकलशुभकरं भवति । अस्मादन्यथा चेद्भवति तदा तद्भावस्य प्रणाशं करोति । अथ मिश्रग्रहेन्द्रैः = तत्तद्भावात्त्रिकोणे सुखमदने आस्पदे वा पापैः शुभैश्च सहिते, पापैः शुभैश्चावलोकिते सति, मूर्तिभावादिकानां = लग्नादिद्वादशभावानाम् अखिलमपि फलं=सकलमेव तत्तद्भावजातं फलं मिश्रं साधारणं ( शुभमशुभञ्च ) वाच्यमिति ॥ ६ ॥

लग्नादि प्रत्येक भावोंके उस २ भावसे त्रिकोण, चतुर्थ, सप्तम या दशम गृहमें शुभग्रह या उसका पति युक्त हो वहां पापग्रहोंकी दृष्टि तथा योग न हो तो भावोंका समस्त शुभफल तथा पुष्टि कहे। यदि ऐसा न हो तो उस २ भावका नाश होता है। यदि उक्त स्थान मिश्रग्रहसे युक्त हों तो सब मिश्रफल होते हैं ॥ ६ ॥

नाशस्थानगतो दिवाकरकरच्छन्नस्तु यद्राशिपो
नीचारातिगतोऽथवा यदि शुभैः खेटैरयुक्तेक्षितः ।
तद्भावस्य विनाशनं मुनिगणाः शंसन्ति खेटैर्युतो
यद्यत्रापि फलप्रदो नहि तथा मूर्त्यादिभानां क्रमात् ॥ ७ ॥

नाशस्थानगत इति । यद्राशिपः=यस्य भावस्य पतिः, नाशस्थानगतः = अष्टमभावगतः, दिवाकरकरच्छन्नः = सूर्यस्य किरणैर्लुप्तद्युतिरस्तङ्गत इत्यर्थः, अथवा नीचारातिगतः = स्वकीयनीचराशौ, शत्रुगृहे च स्थितः, यदि शुभैः खेटैः = बुधगुरुशुक्रैः, अयुतेक्षितः=युक्तो दृष्टश्च न भवति, तदा तद्भावस्य = यद्भावपतिरीदृग्लक्षणयुतो भवति तस्य भावस्य विनाशनं मुनिगणाः = गर्गपराशरादयो महर्षयः, शंसन्ति = कथयन्ति । अथ यदि अत्रोक्तसंस्थायां यद्राशिपः खेटैरितरग्रहैर्युतोऽपि भवेत्तदा मूर्तिप्रभृतिभावानां क्रमात् तथा फलप्रदो नहि भवति ॥ ७ ॥

लग्नादि जिस भावका स्वामी सूर्यके किरणसे आक्रान्त हो, अष्टम स्थानमें प्राप्त हो, नीच वा शत्रु गृहमें प्राप्त हो, यदि शुभग्रहसे युक्त न हो उस भावका विनाश मुनि लोग कहते हैं । अर्थात् ये भाव फलप्रद नहीं होते हैं ॥ ७ ॥

दुःस्थाने वाऽरिगे मूढे दुर्बले भावनायके ।
भावस्य सम्पदं कर्तुं न शक्ता भावमाश्रिताः ॥ ८ ॥

दुःस्थान इति । भावनायके = विचारणीयभावपतौ, दुःस्थाने = षडष्टव्ययानामन्यतमे भावे वा अरिगे = शत्रुगृहे विद्यमाने, मूढे = सूर्येण सहास्तङ्गते, दुर्बले=निर्वीर्ये सति भावमाश्रिताः = तद्भावमुपगता अन्ये ग्रहा अपि तस्य भावस्य सम्पदं=वृद्धिं, कर्तुं, शक्ताः=दक्षा न भवन्ति । भावस्य शुभफलहेतवे भावेशेन शुभभावगतेन बलिना चावश्यमेव भवितव्यमिति ॥ ८ ॥

यदि भावका स्वामी दुःस्थानमें शत्रुभवनमें हो अस्त हो या दुर्बल हो तो भावाश्रित ग्रह भावको सम्पन्न करनेमें समर्थ नहीं होते हैं ॥ ८ ॥

दुष्टस्थितो वापि यदा नभोगः पापोऽरिनीचांशकसंयुतो यः ।
स्वतुङ्गमित्रांशकराशियुक्तः शुभेक्षितो वा यदि शोभनः स्यात् ॥ ९ ॥

दुष्टस्थित इति । यः कश्चित्, नभोगः = ग्रहः, यदा दुष्टस्थितः = असद्भावगतः, अपि वा अरिनीचांशकसंयुतः = शत्रुराशेर्नीचस्य वा नवांशे स्थितो भवति, स पापः = पापफलदो भवति । अथ स्वतुङ्गस्य, मित्रस्य च नवांशे राशौ च युक्तो ग्रहः, शुभग्रहेक्षितो वा यदि भवेत्तदा शोभनः शुभफलदः स्यात् ॥ ९ ॥

यदि जो कोई ग्रह दुष्ट स्थानमें स्थित हो वा शत्रुगृह या नीचांशसे संयुक्त हो वह अशुभ फल देता है । यदि अपने उच्च या मित्रके नवांश या राशिमें शुभग्रहसे दृष्ट हो तो शुभ होता है ॥ ९ ॥

भावेशाक्रान्तराशीशे दुःस्थे भावस्य दुर्बलम् ।
स्वोच्चमित्रस्वराशिस्थे भावपुष्टिं वदेद् बुधः ॥ १० ॥

भावेशेति । भावेशाक्रान्तराशीशे = यस्य भावस्य फलं विचार्यते तद्भावेशेनाक्रान्तो यो राशिस्तदीशे ( विचारणीयभावेशाधिष्ठितराशिपताविस्यर्थः ) दुःस्थे = षडष्टव्ययानामन्यतमे गते भावस्य दुर्बलं फलं वाच्यम् । अथ च तस्मिन् भावेशाक्रान्तराशीशे ग्रहे स्वोच्चे, स्वमित्रराशौ, स्वकीयराशौ वा स्थिते सति भावपुष्टिं बुधो वदेदिति ॥ १० ॥

जिस किसी भावका स्वामी जहाँ बैठा हो उसका पति दुष्टस्थानमें हो तो उस मूल भावको दुर्बल करता है । यदि वह अपने उच्च, मित्र राशि, स्वराशिमें स्थित हो तो उस भावकी पुष्टि करता है, ऐसा पंडित लोग कहते हैं । सु० शा० कार० ॥ १० ॥

यद्भावलाभधनविक्रमराशियाता यद्भावनाथसुहृदश्च तदुच्चनाथाः ।
तद्भावपुष्टिबलमम्बरचारिणस्ते कुर्वन्ति मूढरिपुनीचविवर्जिताश्चेत् ॥ ११ ॥

यदिति । यस्य तस्य भावस्याधिपतेः मित्रग्रहाः, तदुच्चनाथाः = भावपतीनां ये उच्चराशयस्तत्पतयश्च यत्तद्भावात् लाभ-( ११ ) धन-( २ ) विक्रम-( ३ ) राशियाता भवेयुस्तदा तद्भावस्य पुष्टिफलं तेऽम्बरचारिणो ग्रहाः कुर्वन्ति । चेद्यदि ते ग्रहा मूढरिपुनीचविवर्जिताः = अस्तं गताः, शत्रुराशिगताः, नीचराशिगता वा न भवेयुस्तदेति । एतदुक्तं भवति । यस्य तस्य विचारणीयराशेर्योऽधिपस्तस्य मित्राणि तदुच्चपतिश्चैतेषामन्यतमो ग्रहो मूढशत्रुनीचराशिवर्जितः सन् तत्तद्भावात् लाभधनविक्रमान्यतमगतो भवति तदा तद्भावस्य पुष्टिं कुरुते ॥ ११ ॥

जिस भावसे ११।२।३ स्थानमें गत ग्रह उस भावेशके मित्र या उसके उच्च स्थानके स्वामी हों और यदि वे ग्रह अस्तङ्गत, शत्रुराशिगत या नीचगत न हों तो वे ग्रह उस भावको पुष्ट और बलवान् बनाते हैं। ( सु० शा० कारः ) ॥ ११ ॥

भावांशतुल्यः खलु वर्तमानो भावोद्भवं पूर्णफलं विधत्ते ।
भावोनके चाप्यधिके च खेटे त्रैराशिकेनात्र फलं विचार्यम् ॥ १२ ॥

भावांशतुल्य इति । भावांशतुल्यः = राश्यादिमानेन यावत्प्रमाणको भावस्तावन्मित एव वर्त्तमानो ग्रहः तद्भावोद्भवं पूर्णं फलं खलु = निश्चयेन, विधत्ते = कुरुत इति । भावोनके = भावप्रमाणान्न्यूने, अधिके चापि ग्रहे सति त्रैराशिकेनानुपातद्वारा फलमत्र विचार्यम् । अत्रेदं विचिन्त्यम् । पूर्णे भावे विद्यमानो ग्रहस्तद्भावजन्यं पूर्णं फलं ददाति । पूर्णभावप्रमाणादूने ग्रहे यावदनुपातागतं फलं तत्र न्यूनं कथनीयम् । तथा पूर्णभावमानादधिकेऽग्रे विद्यमाने ग्रहे स ग्रहस्तद्भावसन्ध्युन्मुखो भवतीति तत्रापि न्यूनमेव फलं वाच्यम् । परमनुपातलब्धमितमिति ॥ १२ ॥

जो ग्रह भावके अंशके बराबर होकर जिस भावमें हो उस भावके पूर्ण फलको देता है भावसे अल्प वा अधिक ग्रह हो तो त्रैराशिकसे यहां फलका अनुमान करना चाहिये ॥१२॥

## अथ तनुभावफलम् ।

शरीरवर्णाकृतिलक्षणानि यशोगुणस्थानसुखासुखानि ।
प्रवासतेजोबलदुर्बलानि फलानि लग्नस्य वदन्ति सन्तः ॥ १३ ॥

अथाधुना तनु-( लग्न ) भावफलं विवक्षुः तत्र लग्ने किं किं फलं विचारणीयमित्युच्यते । शरीरेति । श्लोकस्तु स्पष्टार्थ एवेत्यलम् ॥ १३ ॥

अब प्रथम भावका फल कहते हैं-लग्नसे शरीरका वर्ण, आकृति, लक्षण, यश, गुण, स्थान, सुख, दुःख, प्रवास, तेज और बलका विचार करना पण्डितोंका मत है। ( सु० शा० कार ) ॥ १३ ॥

नरश्चिरायुर्नृपपूजितः सुखी लग्ने भवेत्सौम्यगृहं यदा तथा ।
लग्ने यदा स्वामिनिरीक्षिते धनी कुशाग्रबुद्धिः कुलकीर्तिवर्द्धनः ॥ १४ ॥

नर इति । सरलार्थोऽयं श्लोक इति ॥ १४ ॥

यदि लग्न शुभराशि हो तो मनुष्य दीर्घायु, राजपूजित और सुखी होवे। लग्नको यदि लग्नेश देखता हो तो धनी, तीक्ष्णबुद्धि और कुलकी कीर्तिकी वृद्धि करनेवाला होवे ॥१४॥

लग्नांशपाद्वीर्ययुतग्रहाद्वा तनुस्वरूपाकृतिलक्षणानि ।
वर्णं वदेच्चान्द्रनवांशनाथाद्विलग्नभात्सर्वशुभाशुभानि ॥ १५ ॥

पूर्वं १३ श्लोके यदुक्तं 'शरीरवर्णाकृतिलक्षणानि' तदाह—लग्नांशपादिति । लग्ने = जन्मकालीनलग्ने योंऽशको नवांशकस्तस्य यः पतिस्तस्माद् वा तत्काले सर्वग्रहापेक्षया यो ग्रहो बलीयान् भवति तस्मात् जातस्य तनुस्वरूपाकृतिलक्षणानि वाच्यानि । यस्य

ग्रहस्य यादृक्तनुः, यत्स्वरूपं, यादृगाकृतिश्च वर्तते तथैव तस्य जातस्यापि वाच्यमित्यर्थः। अथ वर्णमाह—वर्णमिति। चान्द्रनवांशनाथात् = चन्द्रो यस्मिन्नवांशे स्थितो भवेत्तन्नवांशराशिपतेः वर्णं जातस्य वदेदिति। यस्य ग्रहस्य यो वर्णः (२ अ० १९ श्लो०) उक्तः स एव वर्णो जातकस्येति। विलग्नभावत् सर्वशुभाशुभानि = लग्नादिद्वादशभावराशयः कालपुरुषाङ्गे यत्र यत्रावस्थितो विद्यते (१ अ० ८ श्लो०) तत्र तत्राङ्गे जातस्य शुभाशुभग्रहपरत्वेन शुभाशुभानि फलानि वाच्यानि। अत्र ३ अ० ७६ श्लोको द्रष्टव्यः ॥१५॥

शरीरके स्वरूप-आकृति लक्षणोंको लग्नके नवांशपतिसे वा तत्कालमें सर्वाधिक बलवान् ग्रहसे कहे। चन्द्रमाके नवांशके स्वामीसे शरीरका वर्ण कहे, और समस्त शुभ अशुभको लग्नसे कहे ॥ १५ ॥

त्रिकोणकेन्द्रे यदि लग्ननाथे शुभान्विते शोभनवीक्षिते वा।
शुभग्रहागारगते बलाढ्ये चतुःसमुद्रान्तयशः समेति ॥ १६ ॥

त्रिकोणेति। शुभग्रहेण युक्तो दृष्टो वा लग्नेशः, त्रिकोणे केन्द्रे (५।९।१।४।७।१०) वा गतः स्यात्, एवं शुभग्रहाणां राशिगतो बलाढ्यदा भवेत्तदा जातो नरः चतुस्समुद्रान्तं यशः = प्रतिष्ठां समेति प्राप्नोति ॥ १६ ॥

यदि लग्नेश त्रिकोण वा केन्द्रमें स्थित हो शुभग्रहसे युक्त हो, वा शुभग्रहसे देखा जाता हो, वा बलवान् होकर शुभग्रहकी राशिमें हो तो चारो समुद्र पर्यन्त (भूमंडल) में उसका यश होवे ॥ १६ ॥

होराधिनाथे रिपुरन्ध्ररिष्फे पापान्विते पापनिरीक्षिते वा।
पापग्रहाणां भवनोपयाते जातोऽप्रकाशो भवतीह मर्त्यः ॥ १७ ॥

होराधिनाथ इति। होराधिनाथे = जन्मलग्नपतौ। अन्यत्सुगममेवेति ॥ १७ ॥

यदि लग्नेश छठे, आठवें या बारहवें स्थानमें हो पापग्रहसे युक्त हो या देखा जाता हो, वा पापग्रहके गृहमें हो तो इस योगमें मनुष्य यहां नामी नहीं होता है ॥ १७ ॥

कीर्तिस्थानपतौ विलग्नभवने जातः स्वयं कीर्तिमान्।
वित्तस्थे तु विशेषकीर्तिसहितः स्वोच्चादिवर्गान्विते।
दुःस्थे चञ्चलयात्रया हततनुर्जातोऽथवा दुर्जनः
केन्द्रे कोणगते शुभग्रहयुते यात्रासुखं जायते ॥ १८ ॥

कीर्तिस्थानपताविति। कीर्तिस्थानपतौ = नवमभावाधिपतौ ग्रहे, विलग्नभवने = जन्मकालीनलग्ने गते सति जातो नरः स्वयं कीर्तिमान् भवति। तस्मिन् कीर्तिस्थानपतौ, वित्तस्थे = द्वितीयभावमुपगते स्वकीयोच्चादिवर्गयुते च जातो विशेषकीर्तिसहितः = तडागारामदेवालयपुस्तकादिचिरस्थायिकीर्तिमान् भवति। तस्मिन्नेव कीर्तिपतौ दुःस्थे = षडष्टव्ययगते सति जातः चञ्चलयात्रया (तीव्रगतियानादिनिपाततः) हततनुः = नष्टशरीरः, अथवा दुर्जनः दुश्शीलो भवति। तस्मिन्नेव कीर्तिपतौ केन्द्रे कोणे वा गते शुभग्रहयुते च जातस्य यात्रासुखं जायते ॥ १८ ॥

कीर्तिभावेश (नवमेश) लग्नमें हो तो जातक स्वयं कीर्तिमान् हो। यदि वही उच्चादिवर्गसे युक्त धन भावमें हो तो विशेष कीर्ति वाला हो। यदि दुष्ट स्थानमें हो तो चंचल यात्रासे शरीरका नाश हो, वा दुर्जन हो। यदि वही केन्द्र वा कोणमें हो शुभग्रहसे युक्त हो तो यात्रामें सुख प्राप्त होवे ॥ १८ ॥

होरास्वामिनि पञ्चमे यदि सुतस्थानेशयुक्तेऽथवा
भाग्ये वा यदि भाग्यपेन सहिते लग्ने यशस्वी पिता।
मातृस्थानपतौ विलग्नगृहगे तत्कारकभ्रातृपाचेकस्थौ बलशालिनौ च यदि वा तत्सोदरः कीर्तिमान् ॥ १९ ॥

होरास्वामिनीति । होरास्वामिनि = जन्मलग्नेशे यदि पञ्चमे गते, अथवा सुतस्थानेश-युक्ते = पञ्चमेशेन सहिते भाग्ये = नवमे भावे गतवति, यदि वा भाग्यपेन = नवमेशेन सहिते लग्ने विद्यमाने सति जातस्य पिता यशस्वी = कीर्तिमान् भवति । भ्रातृस्थानपतौ = तृतीयभावेशे, विलग्नगृहगे = जन्मलग्नमुपगते, तत्कारकभ्रातृपौ = भ्रातृकारकः ( भौमः ) भ्रातृपः ( तृतीयेशः ) चैकस्थौ ( यत्र तत्रैकराशिगतौ ) बलशालिनौ च यदि भवेतां तदा तत्सोदरः = तस्य जातस्य सोदरो भ्राता कीर्तिमान् भवतीति ॥ १९ ॥

**यदि पंचमेशसे युक्त लग्नेश पंचम भावमें हो वा नवममें हों, वा नवमेशके साथ लग्नमें हो तो जातकका पिता यशस्वी होवे ।**

**यदि तृतीय भावका स्वामी लग्नमें हो अथवा उसका कारक और तृतीयेश दोनों एक राशिमें हों बलवान् हों तो उसका सहोदर भाई कीर्तिमान होवे ॥ १९ ॥**

विद्याधिपे वा यदि चन्द्रसूनौ लग्ने सुखे लग्नपसंयुते वा ।
बलान्विते पापदृशा विहीने विद्यायशस्वी भवति प्रजातः ॥ २० ॥

विद्याधिप इति । विद्याधिपे = विद्यास्थानपतौ = द्वितीयेशे ( द्वितीयभावाद् विद्याविचारः क्रियते, ४९ श्लोको द्रष्टव्यः ) वा चन्द्रसूनौ = बुधे, लग्ने = जन्मलग्ने, वा लग्नपसंयुते = लग्नेशेन समन्विते, बलान्विते, सुखे = चतुर्थभावे, पापदृशा विहीने च सति प्रजातः = ईदृग्लक्षणोपलक्षिते काले जायमानो नरः, विद्यायशस्वी भवति ॥ २० ॥

**यदि द्वितीयेश, वा बुध लग्नमें वा लग्नेशके साथ चौथेमें हो बलवान् हो पाप ग्रहकी दृष्टिसे रहित हो तो जातक विद्यामें यशस्वी हो ॥ २० ॥**

धर्मोदयेशौ नवमोदयस्थौ धर्मोदयेशौ तनुधर्मगौ वा ।
सुरेन्द्रवन्द्येक्षितसंयुतौ चेत् समेति जातश्चिरकालभाग्यम् ॥ २१ ॥

धर्मोदयेशाविति । धर्मोदयेशौ = नवमेशलग्नेशौ क्रमेण नवमोदयस्थौ ( नवमेशो नवमगतो लग्नेशो लग्नगतश्च ) भवेताम्, वा धर्मोदयेशौ तनुधर्मगौ ( धर्मेशो लग्ने, लग्नेशो धर्मे च गतः ) भवेतां तथा भूतौ चेद्यदि सुरेन्द्रवन्द्येन = गुरुणा, ईक्षितौ संयुक्तौ वा भवेतां तदा जातो नरः चिरकालभाग्यं समेति यावज्जीवनं भाग्यवान् भवतीत्यर्थः ॥ २१ ॥

**धर्मेश और लग्नेश क्रमसे नवम और लग्नमें हों ( नवमेश ९ वें, लग्नेश लग्नमें ) वा लग्नेश और नवमेश क्रमसे ९ वें और लग्नमें हों ( नवमेश लग्नमें लग्नेश ९ वें ) दोनों बृहस्पतिसे देखे जाते हों या युक्त हों तो जातक बहुत समय तक भाग्यवान् रहे ॥ २१ ॥**

लग्नाधिपस्य व्ययगे तदुच्चमित्रे सुहृत्तुङ्गखगेक्षिते वा ।
तद्राशिगे वा यदि मित्रखेटे तस्य स्थितिर्जन्मवसुन्धरायाम् ॥ २२ ॥

लग्नाधिपस्येति । लग्नाधिपस्य = जन्मलग्नपतेः, व्ययगे = द्वादशे भावे, तदुच्चमित्रे = तस्य लग्नाधिपस्योच्चे मित्रगृहे वा सति तस्मिन् सुहृत्तुङ्गखगेक्षिते लग्नेशस्य मित्रग्रहेण तुङ्गगतग्रहेण चेक्षिते. वा तद्राशिगे = लग्न इत्यर्थः, मित्रखेटे = लग्नेशस्य मित्रग्रहे सति तस्य जातस्य स्थितिः, जन्मवसुन्धरायां = यत्र भूमौ जन्म जातं तस्यां ( जन्मभूमावेव तस्यावस्थानं ) भवतीत्यर्थः ॥ २२ ॥

**लग्नेशसे १२ वें उसके उच्च स्थान या मित्र राशि हो मित्र या उच्च ग्रहसे देखा जाता हो वा लग्नेशका मित्रग्रह उसके राशिमें हो तो उसकी स्थिति जन्म-भूमिमें हो ॥ २२ ॥**

लग्नेशाद्व्ययपे विलग्नपरिपौ नीचेऽथवा दुर्बले
जातो याति विदेशमिष्टदनुजाचार्येण दृष्टे यदि ।
तत्रैव स्थितिरन्त्यपे रविकरच्छन्ने विलग्नाधिपा-
दल्पग्रामचरो बलिन्यपि धनग्रामाधिवासो भवेत् ॥ २३ ॥

लग्नेशादिति । लग्नेशाद्व्ययपे = लग्नपतिर्यत्र तिष्ठति तस्माद्यो द्वादशो भावस्तदीशे ( लग्नेशाधिष्ठितराशेर्व्ययेश इत्यर्थः ) विलग्नपरिपौ = लग्नेशस्य शत्रुग्रहे सति, नीचे = नीचराशिगते, अथवा दुर्बले बलहीने सति, तस्मिन्यदि इष्टदनुजाचार्येण = मित्रत्वमुपगतेन शुक्रेण दृष्टे सति जातो नरो विदेशमन्यदेशं याति । अथ तस्मिन्नेव विलग्नाधिपाल्लग्नेशाद्व्ययपे = द्वादशेशग्रहे, रविकरच्छन्ने = सूर्येण सहास्तङ्गते सति तत्रैव जन्मभूमावेव स्थितिर्भवति, तथा अल्पग्रामचरः—लघुग्रामवासी भवति । अथ तस्मिन्नेव विलग्नाधिपाद्व्ययपे बलिनि = सबले सति धनग्रामाधिवासः = विविधधनधान्ययुक्तस्य ग्रामस्य ( नगरस्य ) निवासी भवतीति ॥ २३ ॥

**लग्नेशसे बारहवें स्थानका स्वामी लग्नेशका शत्रु हो और यदि वह नीचमें हो या दुर्बल हो और यदि उसे शुक्र देखता हो तो जातक विदेशमें जाय। यदि लग्नाधिपसे द्वादश स्थानका स्वामी सूर्यके किरणोंसे छन्न हो तो उसी जगह स्थित हो और छोटे ग्रामोंमें निवास करे। यदि वह बलवान् हो तो शहरोंमें उसका निवास होवे ॥ २३ ॥**

होरेशाद्व्ययपे विलग्नभवनात् केन्द्रत्रिकोणस्थिते
मित्रस्वोच्चगृहोपगे शुभयुते पार्श्वद्वये मानवः ।
चेतोरम्यमहीचरो दिविचराचार्येन्दुशुक्रेक्षिते
दिव्यक्षेत्रमुपैति जन्मधरणीवासस्तदर्थे रिपौ ॥ २४ ॥

होरेशादिति । होरेशाद् व्ययपे=लग्नेशो यत्र तिष्ठति तस्माद् व्ययभावस्य पतिस्तस्मिन्, विलग्नभवनात् = जन्मलग्नराशेः केन्द्रत्रिकोणे (१।४।७।१०।५।९) स्थिते, तथा सति स्वकीयमित्रराशिस्वराशिस्वकीयोच्चराशीनामन्यतममुपगते पार्श्वद्वये = तस्मादुभयत्र द्वितीये द्वादशे च शुभयुते शुभग्रहे विद्यमाने सति जातो मानवः चेतोरम्यमहीचरः=मनोरमभूमिचरो (अतीवसुन्दरस्थलवासी ) भवति ।

उदाहरणम्—

४
३ ल.
२
५
१ बृ.
६
मं. १२
७
११
९ बु.
८
१०

अत्रोदाहरणे—कल्प्यते मिथुनलग्नपतिर्बुधो धनुषि सप्तमे भावे विद्यते, तस्माद् व्ययो वृश्चिकस्तत्पतिर्भौमो मीने लग्नाद् दशमे ( केन्द्रे ) मित्रराशिस्थो वरीवर्ति, तस्मादुभयत्र गुरुशुक्रौ मेषकुम्भस्थौ विद्येते इति उक्तयोगलक्षणं घटत इति । अथ तस्मिन्नेव लग्नेशाद् व्ययपे, दिविचराचार्येन्दुशुक्रेक्षिते = गुरुचन्द्रशुक्रदृष्टे सति, दिव्यक्षेत्रं = देवादितीर्थस्थानं प्राप्नोति ( तीर्थादौ वासं करोतीत्यर्थः ) । अथ तदर्थे = लग्नेशाद् व्ययेशग्रहाद् द्वितीयभावे रिपौ = तस्य शत्रुग्रहे विद्यमाने सति जन्मधरणीवासः = यत्र जातस्य जन्म भवति तस्यामेव भूमौ वासकृद्भवति ॥ २४ ॥

**लग्नेशसे व्ययाधीश लग्नसे केन्द्र या कोणमें हो, मित्र गृहमें या अपने उच्च भवनमें हो उसके दोनों तरफ शुभग्रह हों तो मनुष्य रमणीय भूमिमें वास करे। यदि उसके दूसरे तथा छठे स्थान पर बृहस्पति, चन्द्रमा और शुक्र की दृष्टि हो तो जातक जन्म भूमिमें वास करे और दिव्य स्थानको प्राप्त हो ॥ २४ ॥**

विदेशभाग्यं चरभे विलग्ने चरे तदीशे चरखेटदृष्टे ।
स्थिते स्वदेशे बहुभाग्ययुक्तः स्थिरग्रहैर्भूरिधनान्वितः स्यात् ॥ २५ ॥

विदेशेति । चरभे = मेषकर्कतुलामकराणामन्यतमे राशौ, लग्ने, तदीशे = लग्नेशे, चरे = चरराशौ विद्यमाने, तस्मिन्, चरखेटदृष्टे = चरराशिगतखेटेन दृष्टे जातस्य, विदेशभाग्यं = विदेशे भाग्योदयं ब्रूयात् । अथ स्थिरे विलग्ने, स्थिरे लग्नेशे च स्वदेश एव बहुभाग्ययुक्तो भवेत् । तस्मिन् स्थिरग्रहैः = स्थिरराशिगतग्रहैर्दृष्टे सति जातो भूरिधनान्वितो बहुविधधनयुतो भवतीति ॥ २५ ॥

जन्मलग्न चर राशि हो, लग्नेश चर राशिमें हो, उसे चर राशिस्थ ग्रह देखते हों तो जातक का भाग्योदय विदेशमें होवे । जन्मलग्न स्थिर राशि हो, लग्नेश स्थिर राशिमें हो, स्थिरग्रह से युक्त हो या दृष्ट हो तो अपने देशमें ही बहुत भाग्यसे तथा धनसे युक्त होवे ॥२५॥

| | | |
|---|---|---|
| ५ / ६ | ४ गु. | ३ / २ |
| शु. ७ बु. | विदेशभाग्यम् | १ मं. |
| ८ / ९ | चं. १० | १२ / ११ |

| | | |
|---|---|---|
| ३ / ४ | २ शु. | १ / १२ |
| बु. ५ बृ. | स्वदेशभाग्यम् | ११ चं. |
| ६ / ७ | ८ | १० / ९ |

होराधीशे पापखेटे रिपुस्थे पापक्षेत्रे भानुपुत्रेण युक्ते ।
शूद्रप्रायो राहुणा केतुना वा जातश्चाण्डालोऽथवा नीचतुल्यः ॥ २६ ॥

होराधीश इति । लग्नेशे पापग्रहे, रिपुस्थे = षष्ठभावगते च, वा भानुपुत्रेण = शनिना सहिते पापक्षेत्रे = पापग्रहराशौ विद्यमाने सति जातो नरः शूद्रप्रायो भवति । ईदृग्योगे उच्चकुले जातोऽपि शूद्रवदाचरणयुक्तो भवति । तस्मिन्नेव तथाभूते लग्नेशे राहुणा केतुना वा युते सति जातो नरः चाण्डालो भवति, अथवा नीचतुल्यः=दलितजातिसमो भवतीति॥२६॥

पापग्रह लग्नेश होकर शत्रु(६)स्थानमें हो या पापग्रहकी राशिमें शनिके साथ हो तो प्रायः शूद्र प्रकृति हो । यदि राहुसे वा केतुसे युक्त पाप लग्नेश हो तो चाण्डाल हो वा नीचके तुल्य हो ॥ २६ ॥

लग्नाधिपे शोभनराशियुक्ते बलोपयाते तनुपुष्टिमेति ।
लग्नस्थखेटे रिपुनीचभागे दुःस्थानपे देहसुखं न याति ॥ २७ ॥

लग्नाधिप इति सरलार्थ एवायं श्लोक इति ॥ २७ ॥

लग्नेश बलवान् होकर शुभग्रहकी राशिमें हो तो उस जातकका शरीर पुष्ट हो । लग्नमें स्थित ग्रह शत्रु राशि या नीचराशिके भागमें हो अथवा वह लग्नस्थ ग्रह दुःस्थानका पति हो तो उसे देह सुख नहीं होता है ॥ २७ ॥

विलग्नदर्शी तनुपो विलग्नगस्त्रयोऽपि षष्ठाष्टमरिष्फराशिपाः ।
सपत्ननीचोपगताश्च दुर्बला यदि स्वपाके न फलं प्रकुर्युः ॥ २८ ॥

विलग्नदर्शीति = विलग्नदर्शी = जन्मलग्नद्रष्टा, तनुपः=जन्मलग्नपतिः, विलग्नगः = जन्मलग्नगतश्चेति त्रयोऽपि ग्रहाः यदि यथासम्भवं षष्ठाष्टमरिष्फराशिपाः = षष्ठाष्टमद्वादशभावपतयो भवेयुस्ते चेत्सपत्ननीचोपगताः = शत्रुगृहगता नीचराशिगताश्च भवेयुस्तथा दुर्बला वा भवेयुस्तदा ते त्रयोऽपि स्वपाके = स्वस्वदशायां, फलं = स्वं स्वं फलं न प्रकुर्युः इत्थम्भूता ग्रहा विफला भवन्तीति भावः ॥ २८ ॥

लग्नको देखनेवाला, लग्नेश और लग्नमें स्थित ये तीनों ग्रह यदि छठे आठवें, और बारहवें भावके स्वामी हों, शत्रुगृह-नीचस्थ या दुर्बल हों तो वे ग्रह अपनी दशामें अपने अपने फलको नहीं देते।

यहां लग्नको देखनेवाले तथा लग्नमें रहनेवाले अधिक ग्रह हों तो उनमें बलीका ही ग्रहण करना चाहिये। सु० शा० कारः ॥ २८ ॥

लग्ने जलर्क्षे शुभखेचरेन्द्रैर्युक्ते तनोः स्थौल्यमुदाहरन्ति।
लग्नाधिपे तोयखगे बलाढ्ये सौम्यान्विते तत्तनुपुष्टिमाहुः ॥ २६ ॥

लग्न इति। जलर्क्षे=जलचरराशिके, ( १ अ. १७ श्लोक. द्र. ) लग्ने तस्मिन् शुभखेचरेन्द्रैः = बुधगुरुभृगुभिर्युक्ते जातस्य तनोः = शरीरस्य, स्थौल्यं = पीनत्वम्, उदाहरन्ति = कथयन्त्याचार्याः। अथ लग्नाधिपे = जन्मलग्नेशे तोयखगे = जलचरर्क्षगतग्रहे, बलाढ्ये= पूर्वोक्तैर्बलैर्युक्ते, सौम्यान्विते = शुभग्रहयुक्ते च तत्तनुपुष्टिं=जातस्य देहपुष्टिम् आहुरिति ॥२९॥

लग्न जलचर राशिका हो, शुभग्रहोंसे युक्त हो तो जातकका शरीर स्थूल होवे। यदि लग्नेश बली होकर जलचर राशिमें हो शुभग्रहसे युक्त हो तो उस जातकका शरीर पुष्ट हो॥२९॥

लग्नाधिपे नाशगते तु शुष्कराशौ तनोः कष्टमतीव कृच्छ्रम्।
लग्नांशपस्थांशपराशिनाथः शुष्कग्रहः स्यात्तनुशुष्कमाहुः ॥ ३० ॥

लग्नाधिष इति। जन्मलग्नेशे, नाशगते = अष्टमभावगते तु=तथा, शुष्कराशौ=मेष-धनुः-तुला-सिंहानामन्यतमे गते सति, तनोः = शरीरस्य, अतीव कष्टं, कृच्छ्रं = व्याधियुक्तं-फलं वाच्यम्। लग्नांशपस्थांशपराशिनाथः = जन्मकालीनलग्ने यो नवांश उदितस्तन्नवांशपतिर्ग्रहस्तिष्ठति यस्मिन्नवांशे तदीशाधिष्ठितराशिपतिर्ग्रहो यदि शुष्कग्रहः = निस्तोयभूतलचरराशिगतग्रहो भवेत्तदा जातस्य तनुशुष्कं = अस्थिमात्रावशेषशरीरं वाच्यम्।

अत्र 'लग्नाधिपस्थांशपराशिनाथः' इत्यपि पाठान्तरम्। तथा सति लग्नेशाधिष्ठितनवांशपतिः यत्र राशौ भवेत्तद्राशिपतिर्ग्रह इति व्याख्येयम्।

Notes—शुष्कग्रहः = शुष्कराशिगतो ग्रहः, शुष्कराशयस्तु निस्तोयभूतलचराः क्रियचापतौलिकण्ठीरवा इति ( १ अ० १५ श्लो० द्र० ) ॥ ३० ॥

लग्नेश अष्टमभावमें शुष्क राशिमें हो तो उसका शरीर अत्यन्त क्लेश युक्त हो। लग्नांश पति जहां हो उसका नवांशपति या उस राशिका स्वामी शुष्क ग्रह हो तो शरीर शुष्क होना कहा है ॥ ३० ॥

मध्यस्थे रिपुखेटयोस्तनुपतौ जातोऽरिभीतो भवेत्
केतौ लग्नगतेऽथवा फणिपतौ दुःस्थे विलग्नाधिपे ॥
तत्पाके तदरीशभुक्तिसमये वैकल्यमङ्गे वदेत्
लग्ने शत्रुपतौ फणिध्वजयुते देहव्रणं देहिनाम् ॥ ३१ ॥

मध्यस्थ इति। तनुपतौ = जन्मलग्नेशे, रिपुखेटयोः = शत्रुग्रहयोः, मध्यस्थे सति। एतदुक्तं भवति। लग्नपतिर्यत्र भवेत्तस्मादुभयत्र ( द्वितीये द्वादशे च ) लग्नेशस्य शत्रू ग्रहौ भवेतां, तदा जातो नरोऽरिभीतः = शत्रुभिः शङ्कितमना भवति। केतौ, फणिपतौ = राहौ वा, लग्नगते, विलग्नाधिपे = लग्नेशे, दुःस्थे=षष्ठाष्टव्ययानामन्यतमस्थे सति, तत्पाके= लग्नेशदशायां, तदरीशभुक्तिसमये = लग्नेशात्षष्ठभावेशग्रहान्तर्दशाकाले जातस्याङ्गे, वैकल्यं = विकलताम् ( अस्वास्थ्यम् ) वदेत्। अथ लग्ने, शत्रुपतौ = षष्ठभावेशे, तस्मिन् फणिध्वजयुते = राहुकेत्वोरन्यतरेण युक्ते सति देहिनां देहव्रणं = शरीरे व्रणादिरोगो जायते॥

लग्नेश अपने दो शत्रुग्रहोंके मध्यमें हो तो जातकको शत्रुका भय होवे। केतु वा राहु लग्नमें हो लग्नेश दुष्ट स्थानमें हो तो उसकी दशामें जब उसके ६ स्थानके स्वामीकी

लग्नदृष्टा प्राप्त हो तो जातकके अङ्ग (शरीर) में विकलता कहे। शत्रु (६) स्थानका स्वामी लग्नमें राहु वा केतुसे युक्त हो तो मनुष्यके शरीरमें व्रण कहे ॥ ३१ ॥

बलैर्विहीने यदि लग्ननाथे केन्द्रत्रिकोणे सति लग्नभाक् स्यात्।
लग्नेश्वराधिष्ठितराशिनाथे दुःस्थानगे दुर्बलदेहवान् स्यात् ॥ ३२ ॥

बलैरिति। सरलार्थ एवायं श्लोक इति ॥ ३२ ॥

यदि बलसे हीन लग्नेश केन्द्र या त्रिकोणमें हो तो शरीर कुछ रोगी होवे। लग्नेश जिस राशिमें हो उस राशिका स्वामी दुष्ट स्थानमें हो तो दुर्बल शरीरवाला हो ॥ ३२ ॥

सक्रूरो देहपो देहसौख्यहाऽन्त्यारिरन्ध्रगः।
सारीशे देहपे दुःस्थे लग्नस्थे वाऽथ रोगवान् ॥ ३३ ॥

सक्रूर इति। क्रूरग्रहेण सहितो देहपः = लग्नपतिः, अन्त्यारिरन्ध्रगः = द्वादशषष्ठाष्टमानामन्यतमगतः स्यात्तदा देहसौख्यहा=शरीरसुखनाशकरो भवति। लग्नेशे, सारीशे= षष्ठेशेन सहिते, दुःस्थे = षष्ठेऽष्टमे व्यये वा स्थिते, अथवा लग्नस्थे सति जातो रोगवान् भवति ॥ ३३ ॥

क्रूरग्रहसे युक्त लग्नेश द्वादश, षष्ठ या अष्टममें हो तो देहसौख्यकी हानि होवे। लग्नेश षष्ठेशके साथ दुष्ट स्थानमें हो वा लग्नमें हो तो जातक रोगी हो ॥ ३३ ॥

लग्ने सपापे लग्नेशे बलहीनोऽपि रोगवान्।
लग्नेशे दुर्बले कोपी निर्व्याधिः केन्द्रकोणगे ॥ ३४ ॥

लग्न इति। स्पष्टार्थः ॥ ३४ ॥

लग्नमें पापग्रह हो, लग्नेश निर्बल हो तो भी रोगवान् हो। लग्नेश दुर्बल हो तो कोपी हो। वहां यदि दुर्बल लग्नेश केन्द्र, कोणमें स्थित हो तो व्याधि रहित होवे ॥ ३४ ॥

देहेशस्थितराशीशे नाशगे दुर्बलो भवेत्।
भावेशाक्रान्तराशीशैर्दुःस्थैर्भावाश्च दुर्बलाः ॥ ३५ ॥

देहेशेति। देहेशः = लग्नेशः, यत्र राशौ स्थितो भवेत्तद्राशीशे ग्रहे नाशगे = लग्नादष्टमभावगते सति जातो दुर्बलः = बलहीनो भवेत्। भावेशाक्रान्तराशीशैः = तत्तद्भावपतयो ग्रहा यद्यद्राशिगता भवन्ति तत्तद्राशिपतिभिर्ग्रहैः, दुःस्थैः = षडष्टव्ययभावगतैः तत्तद्भावा दुर्बला भवन्ति ॥ ३५ ॥

लग्नेश जिस राशिमें हो उसका स्वामी अष्टम स्थानमें हो तो जातक दुर्बल होवे। जिस किसी भावका स्वामी जिस राशिमें हो उस राशि का स्वामी दुःस्थमें हो तो वह भाव दुर्बल होवे ॥ ३५ ॥

सर्पारयोर्बृहद्बीजो योगे वा सर्पमन्दयोः।
लग्ने कुजे नाभिगुल्फव्रणस्थौल्यं समादिशेत् ॥ ३६ ॥

सर्पारयोरिति। राहुभौमयोर्योगे ( एकत्र स्थिते ) सति, अथवा सर्पमन्दयोः=राहुशनैश्चरयोर्योगे सति जातो बृहद्बीजः = महावृषणः स्यात्। कुजे=भौमे लग्नगते सति नाभिगुल्फव्रणस्थौल्यं=नाभिदेशे गुल्फनामाघातेन स्थूलत्वं समादिशेदिति ॥ ३६ ॥

राहु-मङ्गलके योगमें बृहद्बीज होता है, या राहु और शनिके योगमें बृहद्बीज होता है। लग्नमें मङ्गल हो तो नाभिमें गुल्म रोग तथा फोतेकी बिमारी होती है ॥ ३६ ॥

लग्नेशे यदि रिष्फगे दिनकरस्थारातिनाथान्विते
जायावान् बहुरोगवान् कृशतनुः संरक्तगौरद्युतिः।
लग्नर्क्षादरिनाथपेन च युते जातोऽसिताङ्गो यदा
साहौ लग्नपतौ तु बन्धनविषाद्भीतिं समेति ध्रुवम् ॥ ३७ ॥

लग्नेश इति । लग्नेशे यदि रिष्फगे = द्वादशभावगते, तथाभूते दिनकरस्यारातिनाथान्विते = दिनकरः ( सूर्यः ) यत्र तिष्ठति, तस्मादरातिनाथेन ( षष्ठेशेन ) सहिते सति, जातो जायावान् = स्त्रीभिर्युक्तः, बहुरोगवान् = विविधरोगैर्युक्तः, कृशतनुः = क्षीणाङ्गः, संरक्तगौरद्युतिः = रक्तान्वितगौरवर्णः भवति । लग्नेशे, लग्नर्क्षादरिनाथपेन=जन्मलग्नात् षष्ठभावपतिना च युते जातो नरः, असिताङ्गः = कृष्णवर्णः स्यात् । अथ लग्नपतौ, साहौ = राहुणा सहिते तु जातः, वञ्चनविषात् = वञ्चनया ( प्रतारणेन ) दीयमानाद् गरलात्, भीतिं = भयं, ध्रुवं=निश्चयेन, समेति=प्राप्नोति ॥ ३७ ॥

यदि लग्नेश द्वादश स्थानमें हो, सूर्यसे छठे भावके स्वामीसे युक्त हो तो वह जातक स्त्रीयुक्त, बहुत रोगवाला, कृशाङ्ग और लाल युत गौर कान्तिवाला होवे । यदि लग्नेश लग्नसे शत्रु भावके पतिसे युक्त हो तो जातक श्यामवर्ण होवे । यदि राहुसे युत लग्नेश हो तो निश्चय उसे ठगैतीसे विषका भय हो ॥ ३७ ॥

लग्ने शुभे शोभनदृष्टियुक्ते बाल्यात् सुखं तन्नहि पापयोगात् ।
दुःखी भवेत्पापबहुत्वयोगे लग्ने तु बाल्यान्मरणान्तमाहुः ॥ ३८ ॥

लग्न इति । शुभे = शुभराशिके, लग्ने, तस्मिन्, शोभनदृष्टियुक्ते = शुभग्रहेण शुभग्रहैर्वाऽवलोकिते, बाल्यात् = बालावस्थात एव सुखं प्राप्नोति जातकः । तस्मिन् लग्ने, पापयोगात् = पापग्रहस्य योगतः, तन्नहि = सुखं न भवतीति । अथ लग्ने पापबहुत्वयोगे = बहूनां पापानां संयोगे सति जातो बाल्यान्मरणकालपर्यन्तं दुःखी भवेदित्याचार्या आहुः । एतेनेदं फलितं यच्छुभफलाय शुभलग्ने शुभग्रहस्य दृष्टया योगेन चावश्यमेव भवितव्यमिति ॥ ३८ ॥

लग्नमें शुभग्रह हो और उस पर शुभग्रहकी दृष्टि भी हो तो बाल अवस्थासे ही जातक सुखी होवे । यदि पापग्रहका योग और दृष्टि हो तो दुःखी होवे । लग्नमें बहुत पापग्रहोंका योग हो तो लड़कपनसे मरण पर्यन्त दुःखी रहै, ऐसा आचार्योंने कहा है ॥ ३८ ॥

देवलोकांशके शुक्रे लग्नेशे गोपुरांशके ।
लग्ने शुभग्रहैर्दृष्टे मध्येऽन्ते सौख्यमाप्नुयात् ॥ ३९ ॥

देवलोकांशक इति । शुक्रे यत्र तत्र देवलोकांशके गतवति, लग्नेशे यत्र तत्र गोपुरांशके विद्यमाने, लग्ने शुभग्रहैः = बुधगुरुशुक्रैर्दृष्टे जातो मध्ये वयसि अन्त्ये च सौख्यमाप्नुयात् ।

Notes—देवलोकांशगोपुरांशलक्षणं १. अ. ४५।४६. श्लो. द्रष्टव्यम् ॥ ३९ ॥

शुक्र देवलोकांशमें हो, लग्नेश गोपुरांशमें हो और लग्नमें शुभग्रहकी दृष्टि हो तो मध्य और अन्त्य अवस्थामें सुख होवे ॥ ३९ ॥

लग्ने शुभे धने पापे केन्द्रे पापसमन्विते ।
लग्नेश्वरोत्तमांशस्थे चादौ दुःखमतः सुखम् ॥ ४० ॥
लग्नेशे शुभराशिस्थे शुभग्रहनिरीक्षिते ।
गोपुरांशगते वापि षोडशाब्दात्परं सुखम् ॥ ४१ ॥
लग्नेशस्थांशनाथे तु केन्द्रकोणोच्चसंयुते ।
लाभे वा बलसंयुक्ते त्रिंशद्वर्षात्परं सुखम् ॥ ४२ ॥

लग्न इति, लग्नेश इति, लग्नेशस्थांशेति श्लोकत्रयं सरलार्थकमेवेत्यलं विस्तरेण ॥

लग्नमें शुभग्रह हो, द्वितीयमें पापग्रह हो, केन्द्र पापग्रहसे युक्त हो और लग्नेश उत्तमांशमें स्थित हो तो प्रथम अवस्थामें दुःख हो उसके बाद सुख होवे ॥ ४० ॥

लग्नेश शुभ राशिमें हो, शुभग्रह उसको देखता हो वा लग्नेश गोपुरांशमें हो तो उसे १६ वर्षके बाद सुख होवे ॥ ४१ ॥

लग्नेश जिस नवांशमें स्थित हो उसका स्वामी केन्द्र या कोणमें या अपने उच्चका वा बली होकर लाभमें हो तो ३० वर्षके बाद सुखी होवे ॥ ४२ ॥

लग्ने रव्यादिसंदृष्टे पादशः फलमुच्यते ।
राजसेवी पितृधनो जलपण्यो महाधनः ॥ ४३ ॥
धार्मिकः स्थूलशिश्नः स्याद्विद्याशिल्पयशोऽन्वितः ।
राजपूज्यो व्रतयुतो वेश्यासक्तो धनी सुखी ॥ ४४ ॥
मन्ददृष्टे विलग्ने तु वृद्धस्त्रीको मली खलः ।
केनाप्यदृष्टं लग्नं चेद्राशिग्रहवशाद्वदेत् ॥ ४५ ॥

लग्न इति । रव्यादिग्रहेण संदृष्टे लग्ने सति पादशः = श्लोकैकचरणक्रमेण फलमुच्यते । तद्यथा रविणा संदृष्टे लग्ने–राजसेवी पितृधनश्च ( राज्ञोऽमात्यः पैत्रिकधनयुक्तश्च ) भवति । चन्द्रसंदृष्टे लग्ने—जलपण्यो महाधनश्च = जलजन्तूनां ( मीनादीनां ) विक्रेता, बहुधनयुक्तश्च भवति । मङ्गलेन दृष्टे लग्ने–धार्मिकः, स्थूलशिश्नश्च भवति । बुधेन दृष्टे लग्ने–विद्याशिल्पयशोऽन्वितः स्यात् । गुरुणा दृष्टे लग्ने–राजपूज्यः व्रतयुतश्च भवति । शुक्रदृष्टे लग्ने–वेश्यासक्तः, धनी, सुखी च भवति । मन्देन ( शनिना ) दृष्टे विलग्ने तु जातो वृद्धस्त्रीकः = वृद्धभार्यावान्, मली = मलिनशरीरः, खलः = पापात्मा च भवति । अथ चेल्लग्नं , केनाप्यदृष्टं = न केनचिद् ग्रहेण दृष्टं स्यात्तदा राशिग्रहवशात् = लग्नराशौ यो ग्रहस्तिष्ठति तद्वशात्तदुक्तं फलं वदेत् । तत्रापि ( लग्नेऽपि ) ग्रहाभावे चन्द्राधिष्ठितराशौ ग्रहदृष्टिवशात्तत्तदुक्तं फलं वाच्यमिति ॥ ४३–४५ ॥

लग्नमें सूर्यादि ग्रहकी दृष्टि हो तो उनका फल क्रमशः श्लोकके चरणके अनुसार कहते हैं । सूर्यकी दृष्टि हो तो राजसेवी, पितृधनसे धनी होवे । चन्द्रमा की दृष्टि हो तो जलचरोंके व्यवहारसे वा जलसे और रोजगारसे धनी होवे । मङ्गलकी दृष्टि हो तो धर्मात्मा और स्थूल लिंगवाला होवे । बुधकी दृष्टि हो तो विद्वान् , शिल्पज्ञ तथा यशस्वी हो । बृहस्पतिकी दृष्टि हो तो राजाका पूज्य और व्रतयुक्त होवे । शुक्रकी दृष्टि हो तो वेश्यामें आसक्त, सुखी और धनी हो । शनि लग्नको देखता हो तो वृद्धा स्त्रीवाला मलिन और खल होवे । यदि कोई भी लग्नको न देखता हो तो लग्नस्थ ग्रहके वशसे फल कहे ॥ ४३–४५ ॥

लग्ने स्वामीक्षिते राजा तत्प्रियो वा धनी सुखी ।
सौम्येक्षितेऽखिलं सौम्यं पापदृष्टे त्वशोभनम् ॥ ४६ ॥
सुखी लग्ने द्व्यादिदृष्टे सर्वदृष्टे नृपो भवेत् ॥
लग्ने त्रयः शुभा राजा दुःखी पापग्रहत्रयम् ॥ ४७ ॥

लग्न इति । लग्नेशेनावलोकिते लग्ने जातो राजा वा राजप्रियः, धनी सुखी च भवति । लग्ने शुभग्रहेक्षिते सर्वं लग्नजातं फलं शुभं भवति । पापदृष्टे तु सर्वमशुभमेव फलं वाच्यमिति ।

लग्ने द्विप्रभृतिभिर्ग्रहैर्दृष्टे जातः सुखी भवति । ( अत्र द्व्यादिशुभैर्दृष्टे सति शुभतरं फलमिति ) सर्वैर्ग्रहैर्दृष्टे लग्ने जातो नृपः = राजा भवेत् । अथ लग्ने त्रयः शुभाः ( बुधगुरुशुक्राः ) चेद्भवेयुस्तदा जातो राजा भवति । एवं यदि लग्ने पापत्रयं ( मं. श. र. ) स्यात्तदा जातो दुःखी भवतीति ॥ ४६–४७ ॥

लग्नको लग्नेश देखता हो तो राजा हो, वा राजाका प्रिय, धनी तथा सुखी होवे

लग्नको शुभग्रह देखता हो तो समस्त शुभ फल होते हैं। यदि पापग्रह देखता हो तो अशुभ फल होते हैं ॥ ४६ ॥

लग्नको दो आदि ग्रह देखते हों तो सुखी होवे, सब ग्रह देखते हों तो राजा हो। लग्नमें तीन शुभग्रह हों तो राजा हो, और तीन पापग्रह हों तो दुःखी हो ॥ ४७ ॥

लग्नाधिपोऽतिबलवानशुभैरदृष्टः केन्द्रस्थितः शुभखगैरवलोक्यमानः ।
मृत्युं विधूय विदधाति सुदीर्घमायुः सार्द्धं गुणैर्बहुभिरूर्जितया च लक्ष्म्या ॥४८॥

लग्नाधिप इति । अतिबलवान् = पूर्वोक्तसकलबलैर्युक्तो लग्नाधिपः = जन्मलग्नपतिः, केन्द्रस्थितः, अशुभग्रहैरदृष्टः शुभखगैः = बुधगुरुशुक्रपूर्णचन्द्रैः, अवलोक्यमानो यदि भवेत्तदा मृत्युं = बालाद्यरिष्टसूचितं मरणं विधूय = उन्मूल्य सुदीर्घमायुः = चिरायुष्यं विदधाति = करोति । न केवलमसौ दीर्घायुः करोति अपितु बहुभिर्दानजपहोमादिगुणैरूर्जितयोपार्जितया लक्ष्म्या श्रिया सार्द्धं सुदीर्घमायुः विदधातीति ॥ ४८ ॥

इति तनुभावफलम् ।

लग्नेश विशेष बली होकर केन्द्रमें हो उसे केन्द्रगत शुभग्रह देखते हों और पापग्रह न देखते हों तो वह अरिष्टका संहार कर बहुत गुणसे उपार्जित राजलक्ष्मी के साथ दीर्घायु करता है ॥ ४८ ॥

## अथ द्वितीयभावफलम् ।

तत्रादौ धनविचारः ।

वित्तं नेत्रं मुखं विद्या वाक्कुटुम्बाशनानि च ।
द्वितीयस्थानजन्यानि क्रमाज्ज्योतिर्विदो विदुः ॥ ४९ ॥

अथाधुना द्वितीयभावफलं विवक्षुरनेन श्लोकेन द्वितीयभावे विचारणीयान्याह । वित्तं ( धनं ), नेत्रं, मुखं, विद्या, वाक् ( वचन ) कुटुम्बाशनानि च ( परिवाराः, भोजनञ्च ) द्वितीयस्थानजन्यानि = द्वितीयभावे चिन्तनीयानि भवन्ति इति ज्योतिर्विदो विदुः । एतेषां विचारो द्वितीयभावात्कर्त्तव्य इत्यर्थः ॥ ४९ ॥

धन, नेत्र, मुख, विद्या, वचन, कुटुम्ब और भोजनका विचार द्वितीयस्थानसे करना ज्योतिषियोंने कहा है ॥ ४९ ॥

वित्तायोदयराशयः पतियुता वित्ताधिको जायते
लाभस्थौ धनलाभपौ निजसुहृत्तुङ्गादिगौ चेत्तथा ।
तद्वल्लाभधनाधिपौ तनुगतावन्योन्यमिष्टग्रहौ
लग्नेशे धनलाभराशिपयुते लग्ने बहुद्रव्यवान् ॥ ५० ॥

इदानीं द्वितीयभावफलान्यारभ्यन्ते । वित्तायोदयराशयः = द्वितीयैकादशप्रथमभावाः, चेत् जन्मकाले, पतियुताः=स्वस्वस्वामियुता भवेयुस्तदा जातो वित्ताधिकः = धनैरधिकः ( बहुधनयुतः ) जायते । धनलाभपौ=द्वितीयेशैकादशेशौ, लाभस्थौ = एकादशभावगतौ, निजसुहृत्तुङ्गादिगौ = स्वराशि-मित्रगृह-स्वकीयोच्चराश्यादिगतौ ( आदिशब्देन तत्तद्द्रेष्काणनवांशादयो ज्ञेयाः ) भवेतां चेत्तदा, तथा = वित्ताधिको भवति । तद्वदिति । लाभधनाधिपौ=लाभेशधनेशौ, तनुगतौ=जन्मलग्नगतौ, तौ चान्योन्यं=परस्परम्, इष्टग्रहौ = मित्रग्रहौ भवेतां तदा तद्वदर्थाद् वित्ताधिकः जायते । अथ लग्नेशे, धनलाभराशिपयुते = द्वितीयैकादशभावपतिसहिते, लग्ने गतवति सति ( लग्ने लग्नेश-द्वितीयेश-लाभेशानां संयोग इत्यर्थः ) जातो बहुद्रव्यवान् भवति । अत्र योगचतुष्कमिति ॥ ५० ॥

द्वितीय-लग्न और लाभ भाव अपने २ पतिसे युक्त हों तो जातक खूब धनवान होवे। धनेश और लाभेश मित्र मित्र स्वक्षेत्र या उच्चस्थानीय होकर लाभ स्थानमें हों तो अधिक

धनवान् होवे। उसी प्रकार लाभेश और धनेश लग्नमें हों दोनों परस्पर मित्र हों तो अधिक धनी होवे। लग्नेश-धनेश और लाभेशके साथ होकर लग्नमें स्थित हो तो बहुत धनवाला होवे ॥ ५० ॥

धनोपयातः प्रथमोऽथ दर्शी ग्रहो द्वितीयो धनपस्तृतीयः।
तत्पाकभुक्तौ धनलाभमेति क्रमेण तत्कारकवर्गमूलात् ॥ ५१ ॥

धनोपयात इति। प्रथमः धनोपयातः = द्वितीयभावगतो ग्रहः, द्वितीयः अर्थदर्शी = द्वितीयभावद्रष्टा ग्रहः, तृतीयः धनपः = धनभाव-( द्वितीयभाव- ) स्वामी ग्रहः, इति त्रयो ग्रहा धनदातृत्वेन गृह्यन्ते। तत्पाकभुक्तौ = एतद्ग्रहत्रयस्य दशाऽन्तर्दशाकाले तत्कारकवर्गमूलात् = धनकारको ग्रहो यत्र वर्गे स्थितो भवति तद्राशिमूलात् ( तद्वर्गराशिसञ्चारदेशात्, १ अ०, १०-१२ श्लो० ) क्रमेण धनलाभमेति जातक इति ॥ ५१ ॥

द्वितीय भावमें जो ग्रह हो १, जो ग्रह द्वितीय भावको देखता हो २, जो ग्रह द्वितीय भाव का स्वामी हो ३ इन तीनों ग्रहों की दशा और अन्तर्दशामें वे ग्रह जिस भावके कारक हों उसके द्वारा धनका लाभ होता है ॥ ५१ ॥

धनस्थे यदि लग्नेशे निधिमान् बलसंयुते।
दुर्बले पापसंयुक्ते वञ्चनादिफलं वदेत् ॥ ५२ ॥
धनस्थितः पापदृशा समेतः सपत्ननीचार्करामितग्नः।
तत्पाकभुक्तौ धननाशमाहुः स गोचरे दुष्टबलान्विते वा ॥ ५३ ॥
कुटुम्बभावे बहुखेटयुक्ते धनप्रदव्योमचरे बलाढ्ये।
स्वतुङ्गमित्रस्वगृहोपगे वा धनं समेत्यामरणान्तमाहुः ॥ ५४ ॥

धनस्थ इति। स्पष्टार्थाः ॥ ५२-५४ ॥

बलवान् लग्नेश यदि धन भावमें होतो धनी होवे। और वह यदि निर्बल और पापग्रहसे युक्त हो तो ठगैती आदि फल कहे ॥ ५२ ॥

जो ग्रह धन राशिमें स्थित हो उसे पापग्रह देखता हो और वह शत्रु राशिमें नीच भवनमें हो, या अस्त होतो उसकी दशा अन्तर्दशामें धनका नाश कहे, वा गोचरीय बलवान् दुष्ट ग्रहसे युक्त धनभाव होनेपर धनका नाश कहे ॥ ५३ ॥

धनभाव बहुत ग्रहोंसे युक्त हो, धनप्रद (कारक) ग्रह बलवान् हो, वा अपने उच्चस्थान, मित्रगृहमें प्राप्त हो तो वह जातक मरण पर्यन्त धनसे परिपूर्ण रहे ॥ ५४ ॥

वित्ताधीशे सोदरेशेन युक्ते लग्नस्थे च भ्रातृवित्तं समेति।
मातृस्थानस्वामिना मातृवित्तं यद्भावेशेनान्वितस्तद्धनं स्यात् ॥ ५५ ॥
वित्ताधीशे लग्नगे लग्ननाथे वित्तस्थानेऽयत्नतो वित्तमेव।
यद्भावस्थौ लग्नवित्तेश्वरौ चेत्तन्मूला तु द्रव्यवृत्तिर्नराणाम् ॥ ५६ ॥

वित्ताधीश इति। धनभावेशे, सोदरेशेन = तृतीयभावेशेन युक्ते लग्नस्थे च सति जातो भ्रातृवित्तं=सोदरधनं समेति = प्राप्नोति। धनेशे, मातृस्थानस्वामिना = चतुर्थेशेन संयुक्ते, लग्ने च गते सति, मातृवित्तं = मातृसम्पत्तिं प्राप्नोति। एवं किल धनभावपतिः यद्भावेशेन युतो भवेत्तद्धनं जातस्य भवतीति सिद्धान्तः। धनेशे लग्नगते, लग्नेशे धनभावगते जातस्यायत्नतः=प्रयासं विनैव ( अनायासात् ) वित्तं = धनं भवति। लग्नवित्तेश्वरौ = लग्नेशधनेशौ चेदेकत्र संयुक्तौ यद्भावस्थौ भवेतां, तन्मूला नराणां द्रव्यवृत्तिः = धनप्राप्तिर्भवति लग्नेशधनेशौ लभगतौ तदाऽऽत्ममूलादेव धनाप्तिः। तृतीयगतौ चेत्तदा भ्रातृमूलाद्धनाप्तिः। चतुर्थगतौ चेत्तदा मित्रतो मातृतो वा धनाप्तिरेवं सर्वत्रैवोह्यमिति ॥ ५५-५६ ॥

धनेश तृतीयेशके साथ लग्नमें स्थित हो तो वह जातक भाई का धन प्राप्त करे। यदि

धनेश मातृस्थानेश ( सुखेश ) के साथ लग्नमें हो तो माताका धन पावे। एवं धनेश जिस भाव पतिके साथ होकर लग्नमें हों उसका धन जातक प्राप्त करे ॥ ५५ ॥

यदि लग्नेश धन भावमें हो और धनेश लग्नमें हो तो अनायास ही धन प्राप्त हो। लग्नेश और धनेश जिस भावमें हों उसीके द्वारा मनुष्योंको धन मिले। जैसे तृतीयमें हो तो भाईसे, चतुर्थमें हो तो मातासे इत्यादि प्रकारसे जाने ॥ ५६ ॥

चन्द्रः कुटुम्बभवने शुक्रेण निरीक्षितः प्रदाता च।
सौम्ये शुभसंदृष्टे स एव धनवान् सदा ज्ञेयः ॥ ५७ ॥

चन्द्र इति। कुटुम्बभवने=द्वितीयभावे स्थितश्चन्द्रो यदि शुक्रेण निरीक्षितः=दृष्टो भवेत्तदा जातः प्रदाता = अन्येभ्योऽर्थदाता भवति। अत्र चकारात् कारकेनापि शुक्रदृष्टेन भवितव्यम्। तत्र कुटुम्बभवने स्थिते सौम्ये=बुधे, शुभसंदृष्टे = गुरुशुक्रयोरन्यतरेण द्वाभ्यां वा दृष्टे स जातः सदैव धनवान् भवेदिति ज्ञेयः। स यावज्जीवनं धनी स्यादित्यर्थः।

Notes—उक्तयोगयुगले चन्द्रो बुधश्च यदि स्वराशिमूलत्रिकोणोच्चादिगतौ भवेतां तदोक्तं फलं विशेषेण फलतीति चिन्त्यम् ॥ ५७ ॥

चन्द्रमा द्वितीय स्थानमें हो शुक्रसे देखा जाता हो तथा धन-कारक भी शुक्रदृष्ट हो तो धनी होवे। यदि धनभावगत बुध शुभदृष्ट हो तो वह सदा धनवान् रहे ॥ ५७ ॥

अर्थाधीशो यत्र संस्थो नराणां तस्मिन् काले तत्र वृद्धिर्विशेषात्।
तद्भागे च द्रव्यलाभं करोति वक्रोऽसौ चेद्दिक्षु सर्वार्थसिद्धिः ॥ ५८ ॥

अर्थाधीश इति। अर्थाधीशः = द्वितीयेशः, जन्मकाले यत्र = यस्मिन्भावे, तिष्ठति, तस्मिन् काले धनेशस्य दशासमये तत्र=तद्भावदिशि, विशेषाद् वृद्धिः भवति। तद्भागे=तद्भावदिग्भागे द्रव्यलाभं च करोति। अथासौ धनेशो वक्रगतिश्चेत्तदा दिक्षु = सर्वासु दिक्षु जातस्य सर्वार्थसिद्धिर्वाच्येति।

Notes—अत्र भावानां दिक् चक्रानुसारेण ज्ञेया। लग्नादित्रयाणां पूर्वा दिक्। चतुर्थादित्रयाणामुत्तरा, सप्तमादित्रयाणां वारुणी, कर्मादित्रयाणां याम्या दिगिति ज्ञातव्यम् ॥५८॥

जन्मकालमें धनेश जहां स्थित हो उस भाव राशिकी जगहमें मनुष्यों की विशेष वृद्धि होती है। वह राशि जिस दिशाकी हो उस भागमें उसे द्रव्यलाभ होता है। वह यदि वक्री हो तो सब दिशाओंमें अर्थसिद्धि हो ॥ ५८ ॥

धनेशे लाभसंयुक्ते लाभेशे धनलाभगे।
तावुभौ केन्द्रगौ वाऽपि धनवान् ख्यातिमान् भवेत् ॥ ५९ ॥
धनेशे व्ययषष्ठस्थे व्ययेशे वित्तगेऽथवा।
लाभेशे रिपुरन्ध्रस्थे व्यये वा धननाशनम् ॥ ६० ॥
व्ययभावगते जीवे वित्तेशे बलवर्जिते।
शुभैरनीक्षिते लग्ने वित्तनाशं वदेद् बुधः ॥ ६१ ॥
लग्नेशे धनराशिस्थे धनेशे लाभराशिगे।
लाभेशे वा विलग्नस्थे निध्यादिधनमाप्नुयात् ॥ ६२ ॥
लग्नायधनभाग्येशाः परमोच्चांशसंयुताः।
वैशेषिकांशगा वापि तदा कोटीश्वरो भवेत् ॥ ६३ ॥
दिनेश्वरकरच्छन्ने धनेशे नीचराशिगे।
पापषष्ठ्यंशसंयुक्ते ऋणग्रस्तो भवेन्नरः ॥ ६४ ॥

स्पष्टार्थाः किलैते श्लोका इति ॥ ५९–६४ ॥

धनेश लाभ स्थानमें हो और लाभेश धन स्थान में या लाभमें हो या दोनों केन्द्रमें हों तो धनवान् और विख्यात होवे ॥ ५९ ॥

धनेश द्वादश या षष्ठ स्थानमें हो, व्ययेश धनमें हो, अथवा लाभेश षष्ठ वा अष्टम स्थानमें हो, व्ययमें हो तो तीनों स्थितिमें जातकके धनका नाश कहे ॥ ६० ॥

गुरु व्यय भावमें हो, धनेश निर्बल हो और शुभग्रह लग्नको न देखता हो तो जातकके धनका नाश कहे ॥ ६१ ॥

लग्नेश धन भावमें हो, धनेश लाभ स्थानमें हो, वा लाभेश लग्नमें हो तो निधि आदि धन उस जातकको प्राप्त हो ॥ ६२ ॥

लग्न-एकादश-द्वितीय-नवमके स्वामी परम उच्चांशमें प्राप्त हों वा अपने २ वैशेषिकांशमें प्राप्त हों तो-करोड़ पति होवे ॥ ६३ ॥

धनेश नीचराशिमें अस्त होवे और पाप षष्ट्यंश में हो तो मनुष्य ऋणसे ग्रस्त होवे ॥६४॥

## अथ नेत्रविचारः ।

शुक्रेन्दुनयनाधीशैरेकस्थैस्तु निशान्धकः ।
सूर्यशुक्रविलग्नेशैरदृश्यैर्मध्यलोचनः ॥ ६५ ॥

इदानीं नेत्रविचारमाह—शुक्रेन्द्विति । शुक्रेन्दुनयनाधीशैः = शुक्र-चन्द्र-द्वितीयभावेशैः, एकस्थैः यत्र तत्रैकस्थानगतैः, जातो निशान्धकः = रात्र्यन्धो भवति ( अस्मिन्योगे जातो नरो रात्रौ विलोकनाक्षमो भवतीत्यर्थः ) । अथ सूर्यशुक्रविलग्नेशैः त्रिभिर्ग्रहैरदृश्यैः = अदृश्यभावगतैः ( लग्नस्य यावन्तो भागा भोग्यास्तावन्त एव सप्तमभावस्य भुक्तभागाः एतदन्तर्गतेषु भावेषु गता अदृश्या भवन्तीति ) जातो मध्यलोचनः = साधारणनेत्रवान् भवति । एवं जातकालङ्कारे निशान्धमध्यदृशोर्लक्षणम्—

"शुक्रेन्दुभ्यां संयुते नेत्रनाथे निश्यन्धः स्यात् पापदृष्टे शुभैर्न ।
शुक्रार्कौ वा लग्नपेनैव युक्तौ पाताले वा रन्ध्रगे मध्यदृक् स्यात्" इति ॥ ६५ ॥

शुक्र, चन्द्रमा और धनेश तीनों एकत्र हों तो निशांध ( रातमें उसे न सूझे ) हो; सूर्य, शुक्र और लग्नेश अस्त हों तो मध्यम दृष्टिवाला हो ॥ ६५ ॥

विलग्नवित्तास्ततपःसुतेशा रिपुव्ययच्छिद्रगृहोपयाताः ।
विलग्नसम्बन्धकरः सितश्चेद्विलोचनाभावमुपैति जातः ॥ ६६ ॥

इदानीं नेत्राभावयोगमाह—विलग्नेति । लग्नेश-धनेश-सप्तमेश-नवमेश-पञ्चमेशाः, यथासम्भवं षड्व्ययभावगता भवेयुः, तथा सितः = शुक्रः, चेद्यदि, विलग्नसम्बन्धकरः = लग्नस्य सम्बन्धी ( लग्नगतो लग्नदर्शी वा ) भवेत्तदा जातो विलोचनाभावं = नेत्राहित्यमन्धत्वमितियावद्, उपैति प्राप्नोति । अस्मिन् योगे जातोऽन्धो भवतीत्यर्थः ॥ ६६ ॥

लग्नेश, धनेश, सप्तमेश, नवमेश और पंचमेश षष्ठ, द्वादश या अष्टम भावमें प्राप्त हों और शुक्र लग्नसे सम्बन्ध करता हो तो जातक नेत्रसे हीन होवे ॥ ६६ ॥

सितः सुतारीशयुतो विलग्ने नरेशकोपान्नयनप्रमादः ।
धनेशभौमौ यदि लग्नयातौ कर्णस्य रोगं कथयन्ति तज्ज्ञाः ॥ ६७ ॥

सित इति । सितः = शुक्रः, सुतारीशयुतः = पञ्चमेशषष्ठेशाभ्यां सहितः, विलग्ने = जन्मलग्ने, स्थितो भवेत्तदा, नरेशकोपात् = राज्ञः क्रोधात् , नयनप्रमादः = नयनयोर्विकृतत्वं जायते । अस्मिन् योगे जातस्य नरस्य कश्चिद्राजा क्रोधवशान्नेत्रे विनाशयतीति भावः । कर्णरोगमाह । धनेशभौमौ = द्वितीयभावेश-मङ्गलौ यदि लग्नयातौ = जन्मलग्नगतौ भवेतां तदा तस्य जातस्य, कर्णस्य रोगं = बधिरत्वादि, तज्ज्ञाः तद्विदो विद्वांसः कथयन्ति ॥ ६७ ॥

शुक्र पञ्चमेश और षष्ठेशके साथ लग्नमें हो तो राजाके कोपसे नेत्रमें विकार हो । यदि धनेश और मङ्गल दोनों लग्नमें हों तो जातकको पण्डित लोग कर्णरोग कहते हैं ॥ ६७ ॥

शन्यारयोगे गुलिकेन युक्ते नेत्रेश्वरे तत्र तु नेत्ररोगः ।
नेत्रे यदा पापबहुत्वयोगे यमेन दृष्टे सति रुग्णनेत्रः ॥ ६८ ॥

इदानीं नेत्ररोगमाह—शन्यारेति । नेत्रेश्वरे = द्वितीयभावेशे, गुलिकेन युक्ते, तत्र शन्यारयोगे = शनिभौमयोर्योगे सति । एतदुक्तं भवति । यत्र गुलिको भवति तत्रैव द्वितीयेश-शनि-भौमा भवेयुरिति । तदा जातस्य नेत्ररोगः स्यात् । अथ नेत्रे = द्वितीयभावे, पापबहुत्वयोगे = बहूनां पापग्रहाणामवस्थितौ, यमेन = शनिना दृष्टे च सति जातो रुग्ण-नेत्रः = नेत्ररोगी भवति ॥ ६८ ॥

**द्वितीयेश शनि, मङ्गल तथा गुलिकसे युक्त हो तो जातकको नेत्ररोग हो, धन (२) स्थानमें बहुत पापग्रहोंका योग हो उनको शनि देखता हो तो जातक नेत्रका रोगी होवे ॥ ६८ ॥**

नेत्रेश्वरे शुभयुते शुभदृष्टियुतेऽथवा ।
शुभांशकस्थिते वाऽपि शुभदृक् स नरो भवेत् ॥ ६९ ॥

सुनेत्रयोगमाह–नेत्रेश्वर इति । द्वितीयेशः शुभग्रहेण युतो वा दृष्टो वा शुभग्रहनवांशगतो भवेत् तदा स नरः शुभदृक् = सुनेत्रो भवेत् । एवं जातकरत्ने सुनेत्रयोगः—

"लग्नाधिपे सौम्यखगेन युक्ते बलान्विते कारकखेचरेन्द्रे ।
नेत्रे शुभे तद्भवनेश्वरो वा सौम्यान्वितः सौम्यदृशा समेतः ॥ इति ॥ ६९ ॥

**धनेश शुभग्रहसे युक्त हो, वा उसे शुभग्रह देखते हों, वा शुभांशकमें हो तो उस जातक की सुन्दर दृष्टि हो ॥ ६९ ॥**

## अथ मुखविचारः ।

जातोऽसौ सुमुखः शुभे धनगते तुङ्गादिवर्गान्विते
तद्भावे यदि सौम्यवर्गसहिते वाक्सिद्धिमेति ध्रुवम् ।
आज्यस्पर्शमुपैति वित्तगृहगे भौमे दिनेशेक्षिते
जातः कोद्रवमुख्यभुग् धनगते राहौ च पापेक्षिते ॥ ७० ॥

इदानीं मुखविचारमारभते—जात इति । शुभे = शुभग्रहे ( बुधगुरुशुक्रशुक्लचन्द्रान्यतमे ) धनगते = द्वितीयभावमुपगते तस्मिँस्तुङ्गादिवर्गान्विते = स्वकीयोच्चराशिप्रभृति-वर्गगते सति, असौ = ईदृग्योगे जातः, सुमुखः = सुन्दरमुखो भवति । यदि तद्भावे = द्वितीयभावे सौम्यवर्गसहिते = शुभग्रहसम्बन्धिवर्गेण ( राश्यादिना ) सहिते, असौ जातः, ध्रुवं = निश्चयेन, वाक्सिद्धिं = स्ववचनप्राशस्त्यम्, एति = प्राप्नोति । अस्मिन्योगे जातस्य वचनं ( यत्किञ्चित् भाषितम् ) सत्यं भवतीत्यर्थः । भौमे = मङ्गले, वित्तगृहगे = द्वितीय-भावगते, तस्मिन् दिनेशेन ( सूर्येण ) दृष्टे सति जातः, आज्यस्पर्शं = घृतस्पर्शं, मुखं प्राप्नोति । अर्थादत्र योगे जातो नरः सर्वदा स्वमुखं घृताक्तं करोति । यतस्तन्मुखं रुधिरादिविकारयुक्तं भवतीत्यर्थः । अथ राहौ धनभावगते तस्मिन् पापग्रहेक्षिते च जातो नरः कोद्रवमुख्यभुक् कोद्रवादिकदन्नभोक्ता भवति ॥ ७० ॥

**धन भावमें शुभग्रह यदि उच्चादि वर्गमें हो तो जातकका सुन्दर मुख हो । यदि धन भावमें शुभग्रहोंका वर्ग हो तो जातक वाक्सिद्धि प्राप्त करे । धनभावमें मङ्गलको सूर्य देखता हो तो आज्यस्पर्श रोग हो । धन भावगत राहुको पापग्रह देखता हो तो वह जातक कोदो ( कदन्न ) आदि अन्न का खानेवाला होवे ॥ ७० ॥**

लग्नास्तार्थाष्टमस्थेऽर्के भौमे वाऽन्यतरेक्षिते ।
आज्यस्पर्शोऽग्निभीतिर्वा सम्भवन्ति मसूरिकाः ॥ ७१ ॥

लग्नास्तेति । अर्के = सूर्ये, वा भौमे = मङ्गले, लग्नास्तार्थाष्टमस्थे = लग्न-सप्तम-

द्वितीयाष्टमभावानामन्यतमगते, अन्यतरेक्षिते=उक्तभावगतः सूर्यो भौमेन, वा भौमः सूर्येणा-वलोकिते सति, आज्यस्पर्शः = घृतस्पर्शसुखः, अग्निभीतिः, = अनलभययुक्तः, वा मसू-रिकाः = वसन्तरोगचिह्नानि (Smallpox) जातस्य मुखे सम्भवन्तीति । तथा जातकरत्ने-

"विलग्नसप्ताष्टमवित्तराशौ दिनेशयुक्ते क्षितिसूनुयुक्ते ।
भौमेन वा वासरनाथदृष्टे स्फोटाग्निभीतिं प्रवदेद् व्रणाद्वा" इति ॥७१॥

लग्न, सप्तम, द्वितीय या अष्टममें सूर्य हो, वा मङ्गल हो इन्हीं दोनोंमें एक दूसरेको देखता हो तो मुंहमें आज्यस्पर्श रोग, अथवा अग्निभय वा मसूरिका रोग होवे ॥ ७१ ॥

पापैर्युते मुखस्थाने दुर्मुखः पापवीक्षिते ।
क्रोधाननो नरः पापी तदीशे गुलिकान्विते ॥ ७२ ॥

पापैरिति । मुखस्थाने = द्वितीयभावे, पापैर्युते = पापग्रहैः (अत्र बहुवचननिर्देशाद् द्वय-धिकैः पापैः ) युते, तस्मिन् केनचित्पापेन, वीक्षिते = दृष्टे च सति, जातो नरो दुर्मुखः=कु-त्सितमुखो भवति । अथ तदीशे = द्वितीयेशे ग्रहे गुलिकेन सहिते जातो नरः, क्रोधाननः = कुपितवदनः, पापी = दुष्कर्मकृच्च भवति ॥ ७६ ॥

मुख ( धन ) स्थानमें पापग्रह हो तो जातक दुर्मुख होवे । धनभावगत पापको पापग्रह देखते हों तो क्रोधान्वित मुखवाला हो और उस स्थानका स्वामी गुलिकसे युक्त हो तो मनुष्य पापी हो ॥ ७२ ॥

प्रफुल्लवदनः श्रीमान् केन्द्रे मुखपतौ यदा ।
स्वोच्चस्वमित्रवर्गस्थे सुमुखः शुभवीक्षिते ॥ ७३ ॥

श्लोकोऽयं सरलार्थ इत्यलम् ॥ ७३ ॥

धन स्थानका मालिक यदि केन्द्रमें हो तो विकसित मुख ( हँसमुख ), सौन्दर्य युत जातक होवे, अपने उच्च स्थान में, अपने मित्र के वर्गमें हो, शुभग्रहसे देखा जाता हो तो सुमुख होवे ॥ ७३ ॥

वाग्भावेशे राहुयुक्ते च दुःस्थे राहुक्रान्तस्थाननाथान्विते च ॥
पाके भुक्तौ तस्य दन्तामयः स्याद् जिह्वारोगं तारकासूनुभुक्तौ ॥ ७४ ॥

वागिति । वाग्भावेशे = द्वितीयभावपतौ, राहुयुक्ते, च = अथवा, दुःस्थे = षष्ठव्यय-गते राहुक्रान्तस्थाननाथान्विते, च = अथवा राह्वधिष्ठितराशीशेन सहिते सति तस्य = द्वितीयेशस्य, पाके = दशायाम्, भुक्तौ = अन्तर्दशायाञ्च, दन्तामयः = दन्तरोगः, स्यात् । तथा चास्मिन्नेव योगे जातस्य द्वितीयेशपाके तारकासूनोर्बुधस्य, भुक्तौ = अन्तर्दशायां जिह्वारोगं ब्रूयादिति । जातकरत्नेऽपि—

'वाग्भावपे षष्ठगते सराहौ राहुस्थितर्क्षाधिपसंयुते वा ।
दन्तादिरोगः पतनं च तेषां भुक्तौ तयोर्वा प्रवदन्ति तज्ज्ञाः' इति ॥

Notes—अत्र द्वितीयेशदशायां तथा द्वितीयेशो येन ( राहुणा, राह्वधिष्ठितराशि-पतिना वा ) संयुतो भवेत्सदन्तर्दशायाञ्च दन्तादिरोगो वाच्यः इति ॥ ७४ ॥

द्वितीयेश राहुसे युक्त होकर दुष्ट स्थानमें हो वा राहुसे युक्त स्थानके स्वामीके साथ हो तो उन दोनोंकी दशा, अन्तर्दशामें उस जातकको दन्तरोग हो और बुधकी अन्तर्दशामें जीभमें रोग हो ॥ ७४ ॥

राहुद्वितीयगृहपौ सहजेशयुक्तौ जातः समेति गलरोगमतीव कष्टम् ।
दारिद्र्यदौ शशिरवी धनराशियातौ भौमार्कजौ सकलरोगकरौ भवेताम् ॥७५॥

राह्विति । राहुद्वितीयगृहपौ सहजेशेन युक्तौ भवेतामर्थाद् राहुः, द्वितीयभावेशः, तृती-यभावेशश्चेति त्रयो ग्रहा एकत्रगता भवेयुस्तदा जातो नरः, गलरोगं = कण्ठव्याधिं, समेति =

प्राप्नोति, येन तस्यातीव कष्टं = दुःखम्, स्यादिति। शशिरवी = चन्द्रसूर्यौ, धनराशियातौ = द्वितीयभावगतौ भवेतां तदा, दारिद्र्यदौ प्रोक्तौ ) अत्र योगे जातो नरो दरिद्रो भवतीत्यर्थः। अथ भौमार्कजौ=कुजशनी द्वितीयगतौ भवेतां तदा जातस्य सकलरोगकरौ= विविधव्याधिदायकौ भवेतामिति।

Notes—अत्रोक्तयोगे यदि योगकरा ग्रहाः स्वोच्च-स्वराश्यादिगताः स्युस्तदा न तावद्दोषकरा भवन्तीति चिन्त्यम्। 'दोषकृन्नतु सर्वत्र स्वोच्च-स्वर्क्षगतो ग्रहः' इति वक्ष्यमाणवचनात्॥ ७५॥

राहु और द्वितीयेश दोनों तृतीयेशसे युक्त हों तो जातक विशेष गलरोगके कष्टसे युक्त हो। शनि और सूर्य दोनों धनभावमें प्राप्त हों तो दरिद्रता को देवें। मंगल और शनि हों तो सब रोगोंके करनेवाले होवें॥ ७५॥

## अथ विद्या-वाग्विचारः।

वाग्भावेशे गुरुयुते नाशस्थे मूकता भवेत्।
दोषकृन्नतु सर्वत्र स्वोच्चस्वर्क्षगतो ग्रहः॥ ७६॥
वागीशबुधजीवेषु निर्विद्यो नाशगेषु च।
केन्द्रेषु ते त्रिकोणे वा स्वर्क्षे वा विद्ययाऽन्वितः॥ ७७॥

अधुना वाग्विचारमाह—वागिति। वाग्भावेशे = द्वितीयभावपतौ, गुरुयुते=बृहस्पतिना सहिते, नाशस्थे = अष्टमभावमुपगते जातस्य मूकता = अवाक्त्वं = वचनराहित्यं भवति। अस्मिन्योगे जातो नरो मूको भवतीत्यर्थः। अत्रापवादमाह—सर्वत्र = कथितेषु, वक्ष्यमाणेषु च दुर्योगेषु यदि तत्तद्योगकरो ग्रहः स्वोच्च-स्वर्क्षगतो भवेत्तदा दोषकृन्न भवति। अपि तु तदुक्तदोषापहारक एव स्यादिति।

वागीशबुधजीवेषु = द्वितीयभावेश-बुध-गुरुषु, नाशगेषु = अष्टमभावमुपगतेषु, जातो नरः, निर्विद्यः = विद्यया रहितो ( मूर्ख इति ) भवति। ते त्रयः ( वागीशबुधजीवाः ) केन्द्रेषु = १।४।७।१० भावेषु, वा त्रिकोणे = ५।९ भावयोः, वा स्वर्क्षे = स्वस्वराशौ यथासम्भवं भवेयुस्तदा जातो विद्ययाऽन्वितः = विद्वान्, भवति॥ ७६-७७॥

वाग्भावेश ( द्वितीयेश ) गुरुसे युक्त अष्टम स्थानमें हो तो जातक गूंगा हो। अपने स्थान या अपनी उच्च राशिका ग्रह कहीं भी दोष करनेवाला नहीं होता है॥ ७६॥

द्वितीयेश, बुध और बृहस्पति अष्टम स्थानमें हों तो जातक विद्यासे रहित होवे। यदि ये सब केन्द्र या कोणमें हों, वा अपने गृहमें हों तो विद्यासे युक्त होवे॥ ७७॥

द्वितीये दुर्बले सौम्ये द्वन्द्वयुद्धहतो भवेत्।
जीवार्थेशौ दुर्बलौ वा पवनव्याधिमान्नरः॥ ७८॥

द्वितीय इति। दुर्बले = पूर्वोक्तबलरहिते, सौम्ये = बुधे, द्वितीये = द्वितीयभावगते सति जातो नरः, द्वन्द्वयुद्धहतः = द्वन्द्वयुद्धं युगलपुरुषसङ्ग्रामः ( मल्लयुद्धमिति यावत् ) तस्मिन् हतो भवति, म्रियत इत्यर्थः। अथवा जीवार्थेशौ = गुरुर्द्वितीयभावपतिश्च, दुर्बलौ = बलहीनौ स्यातां तदा जायमानो नरः, पवनव्याधिमान् = वातरोगयुक्तो भवेदिति॥ ७८॥

द्वितीय स्थानमें निर्बल शुभग्रह हो तो जातक द्वंद्व ( दो आदमियों के ) युद्धमें मरे। बृहस्पति और द्वितीयेश दुर्बल हों तो मनुष्य वातव्याधिवाला होवे॥ ७८॥

वाक्स्थानपे देवपुरोहितेन युक्ते यदा नाशगते तु मूकः।
वाक्स्थानपे सौम्ययुते त्रिकोणे केन्द्रस्थिते वा शुभदे च वाग्मी॥ ७९॥

वागिति। गुरुणा सहितो द्वितीयेशो यदि नाश-( अष्टम ) भावगतः स्यात्तदा जातो-

मूको भवतीति (७६ श्लोको द्रष्टव्यः)। अथ यदि द्वितीयेशः शुभग्रहयुतः त्रिकोणे वा केन्द्रे विद्यमानः स्यादथवा कस्मिंश्चिच्छुभदे ( शुभग्रहे ) इत्थम्भूते सति जातो वाग्मी = वाक्पटुः भवति। 'वाचो युक्तपटुर्वाग्मी' इत्यमरः ॥ ७९ ॥

**द्वितीयेश और बृहस्पति अष्टम स्थानमें हों तो जातक गूंगा हो। द्वितीयेश शुभग्रहसे युक्त त्रिकोणमें हो, वा केन्द्रमें हो, वा शुभस्थानमें हो तो वाचाल होवे ॥ ७९ ॥**

वागीशस्थांशपे सौम्ये स्वोच्चे वा शुभवीक्षिते।
पारावतांशके वाऽपि वाग्मी पटुतरो भवेत् ॥ ८० ॥

वागीशेति। वागीशः ( द्वितीयेशः ) तिष्ठति यत्र नवांशे तस्य नवांशस्य स्वामिग्रहे ( द्वितीयेशाधिष्ठितनवांशपतिग्रहे ) सौम्ये = शुभग्रहे, स्वोच्चे, वा शुभवीक्षिते, वा पारावतांशके गतवति। एतदुक्तमवधेयम्। द्वितीयभावपतिः शुभग्रहो भूत्वा स्वकीयोच्चराशौ स्थितः, वा यत्र कुत्र शुभग्रहेण दृष्टः, वा स्वपारावतांशगतो भवेत्। तदा जातो वाग्मी = वचनपटुः, पटुतरः = अतीव विद्वाँश्च भवति ॥ ८० ॥

**द्वितीय स्थानका स्वामी जिसके नवांश में हो, उसका स्वामी शुभ हो, अपने उच्च स्थानमें हो, वा शुभग्रहसे दृष्ट हो, वा पारावतांशमें हो तो जातक वाचाल और चतुर होवे।**

केन्द्रत्रिकोणगे जीवे शुक्रे स्वोच्चं गते यदि।
वाग्भावपेन्दुपुत्रे वा गणितज्ञो भवेन्नरः ॥ ८१ ॥

अधुना विद्याविचारमाह—केन्द्रेति। जीवे केन्द्रत्रिकोणगे ( १।४।७।१०।५।९ एतदन्यतमगते ) शुक्रे, स्वोच्चं = मीनराशिमुपगते, यदि वा वाग्भावपेन्दुपुत्रे = द्वितीयेशे बुधे स्वोच्चं ( कन्याराशिं ) गते नरः, गणितज्ञः = गणितशास्त्रवेत्ता भवेत्।

Notes—अत्र वृषसिंहयोरन्यतरे लग्ने 'वाग्भावपेन्दुपुत्रे' इति सङ्गच्छते। अन्यथा तु 'गुरौ केन्द्रकोणगते शुक्रे स्वोच्चं गते' इत्येव चिन्त्यम् ॥ ८१ ॥

**यदि बृहस्पति केन्द्र या त्रिकोणमें हो और शुक्र उच्च स्थानमें हो, वा द्वितीयेश बुध हो तो वह मनुष्य गणितज्ञ हो ॥ ८१ ॥**

गणितज्ञो भवेज्जातो वाग्भावे भूमिनन्दने।
ससौम्ये बुधसन्दृष्टे केन्द्रे वा सोमनन्दने ॥ ८२ ॥

गणितज्ञयोगान्तरमाह—गणितज्ञ इति। ससौम्ये = केनचिच्छुभग्रहेण ( गुरुशुक्रशुक्लचन्द्राणामन्यतमेनेत्यर्थः ) सहिते, भूमिनन्दने = मङ्गले, वाग्भावे = द्वितीयभावे गतवति, तस्मिन्, बुधेन सन्दृष्टे, वा सोमनन्दने = बुधे, केन्द्रे गतवति जातः, गणितज्ञः ( ज्योतिर्विद् ) भवेत्। अत्र 'ससोमे' इत्यपि पाठान्तरं दृश्यते। तथा सति, ससोमे = चन्द्रयुक्ते भूमिनन्दने इति व्याख्येयम् ॥ ८२ ॥

**मंगल द्वितीय स्थानमें शुभग्रहके साथ हो उसे बुध देखता हो वा बुध केन्द्रमें हो तो मनुष्य गणितज्ञ होता है ॥ ८२ ॥**

वाग्भावपे रवौ भौमे गुरुशुक्रनिरीक्षिते।
पारावतांशके वापि तर्कयुक्तिपरायणः ॥ ८३ ॥

इदानीं तार्किकयोगमाह—वाग्भावप इति। सूर्यो वा भौमो द्वितीयेशो भवेत्। तस्मिन् गुरुशुक्राभ्यामवलोकिते, अपि वा सूर्यभौमयोरन्यतरे यत्र तत्र स्वपारावतांशगते सति जातः तर्कयुक्तिपरायणः = तर्कशास्त्र—( न्यायशास्त्र ) रतो भवति। अत्र 'पारावतांशके सौम्ये' इत्यपि पाठो दृश्यते। तथा सति 'बुधे पारावतांशके विद्यमाने सति' इति व्याख्येयम्।

Notes—सूर्यो वा भौमो वाग्भावपस्तदैव भवति, यदि कर्को वा मीन-तुलयोरन्यतरं लग्नं स्यादिति चिन्त्यम्। अन्यथा सूर्यो वा भौमः यत्र तत्र पारावतांशे ( स्वकीयषडधिकारे ) भवेत्तदोक्तं फलं स्यादिति ॥ ८३ ॥

सूर्य या मंगल द्वितीयेश होकर गुरु और शुक्रसे दृष्ट हो, वा अपने पारावतांशमें हो तो वह मनुष्य तर्कशास्त्र ( न्याय ) में तत्पर हो ॥ ८३ ॥

सम्पूर्णबलसंयुक्ते गुरौ तद्भवनेश्वरे।
दिनेशभृगुसन्दृष्टे शाब्दिकोऽयं भवेन्नरः॥ ८४ ॥

इदानीं वैयाकरणयोगमाह—सम्पूर्णेति। तद्भवनेश्वरे=द्वितीयभावपतौ, गुरौ=बृहस्पतौ ( गुरुर्द्वितीयेशस्तदैव यदि वृश्चिक-कुम्भान्यतरं लग्नं स्यादिति ) सम्पूर्णबलयुक्ते=पूर्वं यानि बलान्युक्तानि तैः सर्वैः संयुक्ते, तथाभूते, दिनेशभृगुसन्दृष्टे=सूर्यशुक्राभ्यामवलोकिते सति, अयमस्मिन् योगे समुद्भवो नरः शाब्दिकः=शब्दशास्त्राभ्यासी=वैयाकरणः भवेदिति। जातकरत्नेऽपि—

गुरौ धनस्थे बलपूर्णयुक्ते शुक्रेण सूर्येण च दृष्टियुक्ते।
शुक्रे धने स्वोच्चगतेऽथवाऽपि जातो नरः शब्दविशेषशास्त्रात् ॥ इति ॥ ८४ ॥

सम्पूर्ण बलसे परिपूर्ण गुरु यदि द्वितीय भावका स्वामी ( द्वितीयेश ) हो उसको सूर्य और शुक्र देखते हों तो वह मनुष्य व्याकरणका पण्डित होवे ॥ ८४ ॥

वेदान्तपरिशीली स्यात्केन्द्रकोणे गुरौ यदि।
बुधेन भृगुणा दृष्टे शनौ पारावतांशके ॥ ८५ ॥

इदानीं वेदान्तज्ञयोगमाह—वेदान्तेति। गुरौ केन्द्रकोणे ( १।४।७।१०।५।९ ) गतवति, तस्मिन् यदि बुधेन, भृगुणा ( शुक्रेण ) च दृष्टे, शनौ च पारावतांशके ( स्वकीयाधिकारषट्के ) विलसति, जातः वेदान्तपरिशीली=वेदान्तशास्त्रविवेचको भवतीति ॥८५॥

यदि बृहस्पति केन्द्र या कोणमें हो उसे बुध और शुक्र देखते हों और शनि अपने पारावतांशमें हो तो मनुष्य वेदान्ती होवे ॥ ८५ ॥

षट्शास्त्रवल्लभः केन्द्रे जीवे दानवपूजिते।
सिंहासने गोपुरांशे वाग्भावस्यांशपे बुधे ॥ ८६ ॥

इदानीं षट्शास्त्रज्ञयोगमाह—षडिति। जीवे=बृहस्पतौ, केन्द्रे ( १।४।७।१० ), दानवपूजिते=शुक्रे, सिंहासने=स्वकीयाधिकारपञ्चके, वाग्भावस्यांशपे=द्वितीयभावगतनवांशराशिपतौ, बुधे, ( बुधो द्वितीयभावगतनवांशपतिर्भूत्वा ) गोपुरांशे=स्वकीयाधिकारचतुष्के सति ( अ. १ श्लो. ४५ द्र. ) जातः, षट्शास्त्रवल्लभः=शिक्षा-कल्प-व्याकरण-ज्योतिः-निरुक्त-छन्दःशास्त्राणां श्रुतेः षडङ्गभूतानां विवेचको भवति ॥ ८६ ॥

बृहस्पति केन्द्रमें हो शुक्र अपने सिंहासनांशमें हो और बुध द्वितीय भावका नवांशपति होकर अपने गोपुरांशमें हो तो जातक षट्शास्त्री हो ॥ ८६ ॥

## अथ कुटुम्बविचारः।

उपजीव्य नरं सर्वे तदीशे गोपुरांशके।
वर्द्धन्ते मुदितास्तस्य भृगौ पारावतांशके ॥ ८७ ॥

उपजीव्येति। तदीशे=द्वितीयभावपतौ, गोपुरांशे=स्वकीयाधिकारचतुष्टये, भृगौ=शुक्रे, पारावतांशके=स्वाधिकारषट्के विद्यमाने सति तस्य जातस्य, सर्वे=आत्मीयाः ( कुटुम्बाः ) तं जायमानं नरमुपजीव्य=तदाश्रिता जीवनं यापयन्तो मुदिताः=प्रसन्नचित्ताः सन्तो वर्द्धन्ते=समृद्धिमुपगच्छन्तीति ॥ ८७ ॥

यदि द्वितीयेश गोपुरांशमें हो और शुक्र पारावतांशमें हो तो उसके सभी आश्रित उससे पलित होकर बड़ी प्रसन्नतासे बढ़ते हैं याने वह मनुष्य अपने आश्रितों का पालक होता है ॥ ८७ ॥

जायाकुटुम्बगृहपौ सितपापयुक्तौ दुःस्थौ च तत्समकलत्रहरौ भवेताम् ।
वित्ताधिपे बलवति स्मरराशिपे वा तुङ्गादिगे यदि समेति कलत्रमेकम् ॥८८॥

जायेति । जाया–कुटुम्बगृहपौ = सप्तमेश–द्वितीयेशौ, सितपापयुक्तौ = शुक्रेण पापग्रहेण च सहितौ, दुःस्थौ = षडष्टम्ययगतौ च स्यातां, तदा तत्समकलत्रहरौ = तत्सङ्ख्यामितस्त्री-नाशकौ, भवेताम् । एतदुक्तं भवति । सप्तमेशो द्वितीयेशो वा यदि शुक्रेण वा केनचिदेकेन पापेन युक्तो दुःस्थश्च स्यात् तदैकस्त्रीनाशको भवति । यदि ग्रहद्वयेन युक्तः स्यात् तदा स्त्रीयुगलं नाशयेत् । एवं ग्रहसंख्यापरत्वेन स्थितिपरत्वेन च स्त्रीनाशयोगो वाच्यः । वित्ताधिपे = द्वितीयेशे, वा स्मरराशिपे = सप्तमभावपतौ बलवति सति यदि तुङ्गादिगे = स्व-कीयोच्चादिगते ( आदिशब्देन स्वमूलत्रिकोण–स्वराशि स्ववर्गादिकं ज्ञेयम् ) तदा जातः एकं, कलत्रं=भार्या, समेति=प्राप्नोति । अत्र योगे जातो नर एकभार्यो भवतीत्यर्थः ॥८८॥

सप्तमेश और द्वितीयेश शुक्र और पापग्रहसे ( जितनेके साथ ) युक्त हों और दुष्टस्थान में हो तो उतनी स्त्रीके नाशक होवें । द्वितीयेश वा सप्तमेश बलवान् होकर उच्चादिमें हो तो एक ही स्त्री होवे ॥ ८८ ॥

## अथ पात्राशनयोर्विचारः ।

भुक्तिस्थानपतौ सितेन्दुसहिते लग्नादिकेन्द्रस्थिते
रौप्यं पात्रमुपैति काञ्चनमयं जीवेन्दुशुक्रान्विते ।
भुक्तिस्थानपदेहपौ शनियुतौ लोहादिपात्रं वदेद्
भौमे पापनिरीक्षिते धनगते जातः कदन्नादिभुक् ॥ ८९ ॥

भुक्तिस्थानपताविति । भुक्तिस्थानं=द्वितीयभावः, तत्पतौ=द्वितीयभावेशे, सितेन्दुसहिते = शुक्रचन्द्राभ्यां युक्ते, तथा सति, लग्नादिकं यत्केन्द्रं ( १।४।७।१० ) तदन्यतमगते जातः, रौप्यं = रजतमयं, पात्रं = भाजनं, उपैति = प्राप्नोति । तथाभूते भुक्तिस्थानपतौ ( लग्नादिकेन्द्रस्थिते ), जीवेन्दुशुक्रान्विते = गुरुचन्द्रशुक्रैः सहिते सति काञ्चनमयं = सौवर्णं पात्रं प्राप्नोति । अथ भुक्तिस्थानपदेहपौ = द्वितीयेशलग्नेशौ यदि शनियुतौ भवेतां तदा लौहादिपात्रं जातकः प्राप्नोतीति वदेत् । अशनमाह—भौमे = मङ्गले, पापनिरीक्षिते=शनि-सूर्यक्षीणचन्द्रान्यतमेनावलोकिते, धनगते = द्वितीयभावमुपगते सति जातः कदन्नादिभुक् = कुत्सितान्नफलादिभोक्ता भवति ॥ ८९ ॥

भुक्ति ( २ ) स्थानका पति शुक्र और चन्द्रमाके साथ लग्नादि केन्द्रमें स्थित हो तो जातको रूपाका ( चांदी ) पात्र मिले । द्वितीयेश यदि बृहस्पती और शुक्रसे युक्त हो तो सोनेका पात्र प्राप्त होवे । द्वितीयेश और लग्नेश शनिसे युक्त हो तो लोहेका पात्र कहे । पापग्रहसे दृष्ट मंगल धनमें हो तो जातक कदन्न भोज करे ॥ ८९ ॥

बह्वाशनो भुक्तिपतौ सपापे दावाग्निदण्डायुधकालभागे ।
नीचांशके पापनिरीक्षिते च शुभैर्न दोषः सहितेक्षिते वा ॥ ९० ॥

बह्वाशन इति । भुक्तिपतौ = द्वितीयेशे, सपापे=पापग्रहेण सहिते, दावाग्नि–दण्डायुध–कालानां भागे ( षष्ट्यंशे ) विद्यमाने सति जातः, बह्वाशनः = अधिकभुक् भवति । भुक्ति-पतौ नीचांशके = स्वकीयनीचराशिनवांशे तस्मिन्पतेन निरीक्षिते च तथैव फलं (बह्वाशनः) स्यात् । अयोक्तयोगेऽपि, शुभैः = शुभग्रहैः, सहितेक्षिते=संयुक्ते, दृष्टे वा दोषः न स्याद-र्थाद्बह्वाशनो न भवेदिति ॥ ९० ॥

भुक्ति (२ भाव) का स्वामी पापग्रहसे युक्त होकर दावाग्नि, दण्डायुध, कालके षष्ठ्यंश में हो या नीचांशमें हो पापग्रहसे देखा जाता हो तो बहुत खानेवाला होवे। यदि वहां द्वितीयेश शुभयुक्त दृष्ट हो तो यह दोष न होवे ॥ ९० ॥

भुक्तिस्थाने शुभयुते तदीशे शुभसंयुक्ते। शुभग्रहेण सन्दृष्टे सुखभुक् स नरो भवेत् ॥
पराऽन्नभुक् तदीशेऽपि नीचशत्रुसमन्विते। नीचखेचरसन्दृष्टे तद्दूषणपरायणः ॥९२॥

भुक्तिस्थाने इति। भुक्तिस्थाने = द्वितीयभावे, शुभयुते ( कश्चिच्छुभग्रहो द्वितीयभावगः स्यादिति ), तदीशे = द्वितीयेशे, शुभसंयुते = केनचिच्छुभग्रहेण सहिते तथाभूते केनचिच्छुभग्रहेण सन्दृष्टे स जातो नरः सुखभुक् = सुखेन भोजनकृद्भवति ॥ ९१ ॥

तदीशे = द्वितीयभावपतौ, नीचशत्रुसमन्विते = स्वनीचे, शत्रुग्रहेण वा समन्विते सति, अपि = निश्चयेन पराऽन्नभुक् = अन्यान्नभक्षणशीलो भवति। अथ द्वितीयेशे तथाभूते, नीचखेचरसन्दृष्टे = नीचवर्त्तिना ग्रहेणावलोकिते जातः तद्दूषणपरायणः = भुक्तान्नदूषणशीलः भवति। तेन यद्भुज्यते तदेव दूष्यते चेति ॥ ९२ ॥

भुक्ति ( २ ) स्थानमें शुभग्रह हो और भुक्ति ( २ ) स्थानेश भी शुभग्रहसे युक्त हो और शुभग्रह उसे देखते हों तो वह मनुष्य सुखसे भोजन करनेवाला हो। यदि २ भावका स्वामी नीच स्थानमें या शत्रुस्थानमें हो तो पराया अन्न खानेवाला हो। नीचग्रहसे दृष्ट हो तो उसके दूषणमें तत्पर हो ॥ ९१-९२ ॥

कालोचिताशनो भुक्तिनाथे लग्नेशवीक्षिते।
पापग्रहेण सन्दृष्टे नीचांशादियुते न तु ॥ ९३ ॥

कालोचितेति। भुक्तिनाथे = द्वितीयेशे, लग्नेशेन वीक्षिते = दृष्टे, स्वोच्चादिगते च जातः कालोचिताशनः = यस्मिन् काले यदशनमुचितं तद्वान् ( समयानुकूलभोज्यभुक् ) भवति। अथ तस्मिन्भुक्तिनाथे, पापग्रहेण सन्दृष्टे नीचांशादियुते च तथा तु न ( कालोचिताशनो न ) भवति। अपि तु कालानुचिताशनो भवतीत्यर्थः ॥ ९३ ॥

द्वितीयेश यदि लग्नेशसे देखा जाता हो पापग्रहसे देखा न जाता हो नीचांशादि युक्त न हो तो समयानुकूल भोजन करने वाला हो ॥ ९३ ॥

स्वल्पाशी रुचिकामः स्याद् भुक्तिनाथे शुभे गृहे।
स्वोच्चे शुभेन सन्दृष्टे मृद्वंशादिसमन्विते ॥ ९४ ॥

स्वल्पाशीति। सरलार्थ एवेत्यलम् ॥ ९४ ॥

द्वितीयेश शुभराशिमें हो तो जातक थोड़ा खानेवाला हो। द्वितीयेश अपने उच्चमें शुभग्रहसे दृष्ट और षष्ठ्यंशमें हो तो सदा खानेमें रुचि रखनेवाला हो ॥ ९४ ॥

भुक्तिस्थानाधिपे मन्दे तदीशे वाऽऽर्किसंयुते।
नीचेऽर्कसूनुना दृष्टे श्राद्धभुक् सततं नरः ॥ ९५ ॥

भुक्तिस्थानाधिप इति भुक्तिस्थानाधिपे = द्वितीयभावेशे, मन्दे = शनैश्चरे सति, वा तदीशे = द्वितीयेशे, आर्किसंयुते = शनिना सहिते, वा तदीशे नीचे = स्वनीचराशौ, अर्कसूनुना = शनैश्चरेण दृष्टे सति जातो नरः सततं = नित्यं, श्राद्धभुक् = श्राद्धान्नभोक्ता ( महाब्राह्मण इव ) भवति ॥ ९५ ॥

दूसरे भावका स्वामी शनि हो या

२
१२ श.
१ ल.
श्राद्धान्नभुक्
६ शु.

द्वितीयेश शनिसे युक्त हो वा द्वितीयेश नीच राशिमें हो उस पर शनिकी दृष्टि हो तो निरन्तर श्राद्धका अन्न खानेवाला ( महापात्र ) होवे ॥ ९५ ॥

सिंहासनांशे यदि देवपूज्ये शुक्रे यदा गोपुरभागयुक्ते ।
पारावतांशे धनपे बलाढ्ये जातस्त्वसङ्ख्याश्रितरक्षकः स्यात् ॥९६॥

सिंहासनांश इति । यदि देवपूज्ये = बृहस्पतौ, सिंहासनांशे = स्वकीयाधिकारपञ्चके, शुक्रे यदा गोपुरभागयुक्ते = स्वाधिकारचतुष्टये, धनपे=द्वितीयेशे, बलाढ्ये सति, पारावतांशे = स्वकीयाधिकारषट्के ( १ अ०, ४५-४६ श्लो. ) च विद्यमाने सति जातः असङ्ख्यानामनेकानामाश्रितानां = शरणागतानां रक्षकः = प्रतिपालको भवति ॥ ९६ ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता ।
अध्याये रुद्र (११) संख्येऽस्मिन् पूर्तिं भावफले गता ॥ ११ ॥

यदि बृहस्पति सिंहासनांशमें हो, शुक्र गोपुर भागमें हो, बलवान् धनेश पारावतांशमें हो तो जातक असंख्य आश्रितों का रक्षक होवे ॥ ९६ ॥

इति जातकपारिजाते एकादशे तनु-धनभावफलाध्याये विमला हिन्दी टीका समाप्ता ॥११॥

---

## अथ तृतीयचतुर्थभावफलाध्यायः ॥ १२ ॥

तत्र तृतीयभावफलम् ।

ज्येष्ठानुजस्थितिपराक्रमसाहसानि कण्ठस्वरश्रुतिवराभरणांशुकानि ।
धैर्यं च वीर्यबलमूलफलाशनानि वक्ष्ये तृतीयभवनात् क्रमशोऽखिलानि ॥१॥

अथाधुना तृतीयभावफलानि विवक्षुः प्रथमं तृतीयभावे किं किं विचार्यमित्याह । श्लोकस्तु स्पष्टार्थ एवेत्यलम् ॥ १ ॥

अब तृतीय भावका विचार करते हैं । तृतीय भावसे ज्येष्ठ और छोटा भाईका विचार, पराक्रम, साहस, कण्ठस्वर, श्रवण, आभरण, वस्त्र, धैर्य, वीर्य, बल, मूल, फल भोजन ये सब क्रमसे कहेंगे ॥ १ ॥

### अथ भ्रातृविचारः ।

भ्रातृस्थानं तृतीयं च नवैकादशसप्तमम् ।
तत्तदीशदशायां च भ्रातृलाभो भवेन्नृणाम् ॥ २ ॥

इदानीं भ्रातृस्थाननिरूपणपूर्वकं भ्रातृविचारमाह—भ्रातृस्थानमिति । जन्मलग्नात् तृतीयम् , नवमम् , एकादशम् , सप्तमञ्च स्थानं भ्रातृस्थानं कथितम् । अत एव तत्तदीशदशायां = तृतीय—सप्तम—नवमै-कादशभावपतीनां दशाकाले, नृणां = जनिमतां, भ्रातृलाभः = सोदरोत्पत्तिः भवेत् । उक्तेषु भावेषु यद्भावपतिर्जन्मकाले बलीयान् भवेत्तद्दशायां विशेषतो भ्रातृलाभेन भवितव्यमिति चिन्त्यम् ॥ २ ॥

तीसरा, नववां, ग्यारहवां और सातवां ये भ्रातृस्थान हैं । उन स्थानोंके स्वामीकी दशा में मनुष्योंको भ्रातृलाभ होता है ॥ २ ॥

भ्रातृस्थानेशतद्राशितद्भावस्थद्युचारिणाम् ।
मध्ये बलसमेतस्य दशा सोदरवृद्धिदा ॥ ३ ॥

तृतीयेश—तृतीयेशराशि- तृतीयभावगतग्रहाणां मध्ये बलीयसो ग्रहस्य दशा सोदरवृद्धिदा भवति ॥ ३ ॥

भ्रातृ (३) स्थानके स्वामी, उसकी राशि तथा ३ में स्थित ग्रहोंके बीचमें बलवान् ग्रहकी दशा भाईकी वृद्धि करनेवाली होती है ॥ ३ ॥

भौमो बलविहीनश्चेद्दीर्घायुर्भ्रातृगो भवेत् ।
विलग्नगो बली यस्य कारकः स प्रभुः स्मृतः ॥ ४ ॥

बलहीनो भौमो भ्रातृगः = तृतीयभावगश्चेद्भवेत्तदा जातो दीर्घायुर्भ्रातृमान् भवेत् । यस्य जन्मकाले कारकः = भ्रातृकारको ( मङ्गलः ) ग्रहः, विलग्नः = जन्मलग्नगतः स्यात्, स जातः, प्रभुः = जनाधिपः स्मृतः = कथितः ॥ ४ ॥

बलसे हीन मंगल ३ रे भावमें हो तो दीर्घायु भाईवाला हो । जिसका भ्रातृभाव कारक लग्नमें बलवान् होकर हो तो वह समर्थ होता है ॥ ४ ॥

जन्मकाले गुणी प्राणी कारको यः समृद्धिकृत् ।
क्षयकारी विपर्यासे भावपो विबलोऽधिकः ॥ ५ ॥

स्पष्टार्थः । एतदर्थं ११ अ. ४, ५, ८ श्लोका द्रष्टव्याः ॥ ५ ॥

जन्म समय यदि किसी भावका कारक गुणवान् और बली हो तो वह उस भावको समृद्धि करने वाला होता है । इससे विपरीत हो तो उस भावकी हानि करता है। भावपति निर्बल हो तो भ्रातृपक्षका अधिक क्षयकारी होता है ॥ ५ ॥

सोदरेशकुजौ नाशं गतौ चेत्सोदरक्षयः ।
पापर्क्षगौ सपापौ वा भ्रातॄनुत्पाद्य नाशदौ ॥ ६ ॥

सोदरेशकुजौ = तृतीयेशो भौमश्च, नाशं गतौ = अष्टमभावमुपगतौ चेद्भवेतां तद जातस्य सोदरक्षयः = भ्रातृहानिर्भवति । तौ सोदरेशकुजौ चेत्पापराशिगतौ, वा पापग्रहा-युक्तौ भवेतां तदा भ्रातॄनुत्पाद्य नाशदौ भवतः । योगेऽस्मिञ्जातस्य भ्रातर उद्भूय म्रिय-न्त इति । जातकरत्नेऽपि—

नाशस्थितौ सोदरनाथभौमौ पापेक्षितौ सोदरनाशमाहुः ।
पापर्क्षगौ पापसमागतौ वा भ्रातॄन्समुत्पाद्य विनाशहेतुः ॥ इति ॥ ६ ॥

तृतीयेश और मंगल अष्टम भावमें हों तो भाईका नाश होता है । दोनों पापग्रहकी राशिमें हों वा पापग्रहके साथ हों तो दोनों ग्रह भाईको उत्पन्न करके नाश करते हैं ॥ ६ ॥

नीचास्तगौ सोदरनायकाख्यौ नीचांशगौ पापसमागतौ वा ।
क्रूरादिषष्ट्यंशगतौ तदानीं भ्रातॄन्समुत्पाद्य विनाशहेतुः ॥ ७ ॥

सोदरनायकाख्यौ = सहजेशः, सहजकारकश्चेत्यन्यत्स्पष्टार्थमेवेति ॥ ७ ॥

भ्रातृस्थानेश और भ्रातृकारक नीच राशिमें हों अस्त हों या नीचांशमें हों वा दोनों क्रूर षष्ट्यंशमें हों तो भाईका जन्म नाश करने ही के निमित्त करते हैं ॥ ७ ॥

अतिक्रूरसमायुक्ते भावे वा कारकेऽपि वा ।
तद्भावनायके वाऽपि बाल्ये सोदरनाशनम् ॥ ८ ॥

अतिशयेन क्रूरः अतिक्रूरः ( पापीयान् ), पापग्रहश्चेन्नीचगतोऽस्तं गतः शत्रुवर्गादिग-तो वा भवेत्तदाऽसावतिक्रूरोऽतीव पापी भवति । तेन पापीयसा ग्रहेण तृतीयभावे वा भ्रातृ-कारके वा तृतीयेशे समायुक्ते सति, बाल्ये = बालावस्थायामेव सोदरनाशनं भवति । तस्य बाल्यकाल एव सोदरो म्रियत इत्यर्थः ॥ ८ ॥

अत्यंत क्रूरग्रहसे युक्त ३ रा भाव हो या भ्रातृकारक हो या ३ रे भावका स्वामी हो तो बाल्यावस्थामें भाई का नाश होवे ॥ ८ ॥

धनेश्वरे नाशगते बलाढ्ये पापान्विते सोदरकारकाख्ये ।
तन्मातृकारग्रहसंयुते च सापत्नमातुः सहजा वदन्ति ॥ ९ ॥

धनेश्वरे = द्वितीयभावेशे, बलाढ्ये = सबले सति, नाशगते = अष्टमभावगते, सोदर-

कारकाख्ये = भ्रातृकारके ग्रहे ( भौमे ) पापान्विते = पापग्रहेण सहिते तस्मात्कारकग्रहसंयुते = तस्य ( तृतीयभावस्य ) यो मातृकारको ग्रहः ( चतुर्थेशः ) तस्मात्सहजभवनपतिरित्यर्थः तेन संयुक्ते सति, सापत्नमातुः = विमातुः सकाशात् सहजाः = भ्रातरो भवन्ति ( वैमात्रेयभ्रातरो भवन्ति ) इति विज्ञा वदन्ति ॥ ९ ॥

**बलवान् द्वितीयेश अष्टममें हो, पापयुक्त भ्रातृकारक ग्रह ३ यसे ४ र्थ भावके कारकसे भी युक्त हो तो उसको सौतेली मातासे उत्पन्न भाई हो ॥ ९ ॥**

भ्रातृस्थाने यदि शुभयुते सोदराणां चिरायुः
पापाक्रान्ते सहजभवने पापदृष्टे विनाशम् ।
ज्येष्ठं हन्ति द्युमणिरनुजस्थानगः पापदृष्टः
सौरस्तस्यानुजमवनिजो हन्ति सर्वान् कनिष्ठान् ॥ १० ॥

तृतीयभावे शुभग्रहाणां दृष्ट्या योगेन च सोदराणां दीर्घायुष्ट्वं, पापानां दृष्ट्या योगेन च सोदराणां विनाशं ब्रूयात् । सूर्यश्चेत्तृतीयस्थानगः स्यात्तदा ज्येष्ठभ्रातरं, शनिस्तस्यानुजं, भौमो हि सर्वान् पश्चाज्जातान् कनिष्ठान् हन्ति । तत्र पापदृष्टे विशेषणार्थादेव शुभदृष्टे तत्परिहारोऽपि भवतीति ॥ १० ॥

**यदि तृतीय भावमें शुभग्रह हो तो भाई दीर्घायु होवे । पापग्रह तृतीयमें हो उसपर पापग्रहकी दृष्टि हो तो भाईका विनाश हो । सूर्य पापग्रहसे दृष्ट तृतीयमें हो तो जातकके ज्येष्ठ भ्राताका विनाश करे, और शनि हो तो उसके केवल १ छोटे भाईका नाश करे और मंगल हो तो सब छोटे भाइयोंका संहार करे ॥ १० ॥**

त्रिकोणकेन्द्रे यदि पापखेटे तृतीयभावादनुजस्य नाशम् ।
शुभोपयाते सहजाभिवृद्धिः शुभाशुभं मिश्रफलं वदन्ति ॥ ११ ॥

तृतीयभावात् त्रिकोणे केन्द्रे वा पापखेटे विद्यमाने सति अनुजस्य = कनिष्ठभ्रातुः नाशः स्यात् । शुभोपयाते = तृतीयभावात् त्रिकोणकेन्द्रे शुभग्रहे गतवति सहजाभिवृद्धिः = सोदरवृद्धिर्भवति । अथ च तत्र शुभेऽशुभेऽपि गतवति, मिश्रफलं = सोदरहानिः, सोदरवृद्धिश्चेति मनीषिणो वदन्ति ॥ ११ ॥

**तृतीय भावसे यदि त्रिकोण या केन्द्रमें पापग्रह हो तो भाईका नाश करे । शुभग्रह हो तो भाईकी वृद्धि करे । यदि शुभ अशुभ दोनों हों तो मिश्र फल ( शुभाशुभ दोनों ) फल देते हैं ॥ ११ ॥**

दुःस्थे चन्द्रे सोदरस्वामियुक्ते जातस्यान्यस्तन्यपानं वदन्ति ।
मातृभ्रातृस्थानपौ बन्धुयातौ नास्ति भ्रातृस्थानवृद्धिर्नराणाम् ॥ १२ ॥
भौमान्वितौ सोदरदौ भवेतामन्यैः समेतौ यदि नानुजः स्यात् ।
सौरस्तृतीयेऽनुजनाशकर्ता विधुन्तुदः सोदरवृद्धिकृत्स्यात् ॥ १३ ॥

चन्द्रे, सोदरस्वामियुक्ते = तृतीयभावपतिना सहिते दुःस्थे = षडष्टव्ययान्यतमगते सति जातस्य नरस्य, अन्यस्तन्यपानं = जननीतरदुग्धपानं विज्ञा वदन्ति । मातृभ्रातृस्थानपौ = चतुर्थेशतृतीयेशौ बन्धुयातौ = चतुर्थस्थानगतौ स्यातां तदा नराणां भ्रातृस्थानवृद्धिः = सहोद्भवः, नास्ति = न भवतीति । तौ मातृभ्रातृस्थानपौ यदि भौमान्वितौ = मङ्गलेन युक्तौ भवेतां तदा सोदरदौ = भ्रातृदातारौ भवतः । यदि तौ, अन्यैः ग्रहैः ( भौमेतरैः ) समेतौ स्यातां तदा अनुजो न स्यात् । शनिस्तृतीयभावगतः स्यात्तदाऽनुजनाशकर्ता भवति । विधुन्तुदः = राहुस्तृतीयगतः सोदरवृद्धिकृत् स्यात् = भ्रातृजन्मदो भवति । तृतीये राहुः भ्रातृनाशको न, किन्तु भ्रातृकारक एव भवतीति भावः ॥ १२-१३ ॥

चन्द्रमा ६।८।१२ भावमें तृतीयेश से युक्त हो तो जातकको दूसरेका स्तनपान करना कहते हैं। चतुर्थेश और तृतीयेश दोनों चतुर्थ स्थानमें हों तो मनुष्योंके भ्रातृ स्थानकी वृद्धि न हो ॥ १२ ॥

यदि तृतीयेश और चतुर्थेश मंगलसे युक्त हों तो भाई को देवें। अन्यग्रहोंसे युक्त हों तो भाई न हो। तीसरे शनि हो तो भाई का नाश करे और राहु हो तो भाईकी वृद्धि करनेवाला हो ॥ १३ ॥

अदृश्यराशौ यदि वा सपापे वधूगृहस्थे सहजाधिनाथे ॥
जातानुजस्योपरि नानुजः स्यात् पुंवर्गगे दृश्यगते तथैव ॥ १४ ॥

सहजाधिनाथे = तृतीयभावेशे, अदृश्यराशौ = स्पष्टलग्नाद्राशिषट्कमदृश्यं भवति, तदन्यतमराशौ यदि वा = अथवा, सपापे = पापग्रहयुक्ते, वधूगृहस्थे = सप्तमभावगते सति, जातानुजस्योपरि = जायमानकनिष्ठानन्तरं, अनुजः = लघुसोदरभ्राता न स्यात्। स जातो यदि कस्यचिदनुजो भवेत्तदा तस्यानुजो न स्यादथवा तस्य जातस्यैकानुजानन्तरमन्योऽनुजो न जायेत, इत्यर्थः। अथ सहजाधिनाथे, दृश्यराशिगते ( स्पष्टसप्तमभावाद्राशिषट्काभ्यन्तरे ) पुंवर्गगे = पुरुष-( विषम ) राशिसम्बन्धिवर्गे गतवति तथैव फलमर्थाज्जातानुजस्योपरि नानुजः स्यादिति ॥ १४ ॥

यदि तृतीयका स्वामी अदृश्य राशिमें हो वा पापग्रहसे युक्त सप्तममें हो तो भाई उत्पन्न होनेके बाद फिर भाई न हो। पुरुष राशिके वर्गमें दृश्य राशिमें हो तो भी वही फल होवे ॥ १४ ॥

भ्रातृस्थानपतौ तु पुंभवनगे तस्यानुजो जायते
युग्मर्क्षे यदि भार्गवेण शशिना युक्तेऽथवा वीक्षिते।
सौम्यर्क्षे शुभखेचरेक्षितयुते केन्द्रत्रिकोणस्थिते
पश्चाज्जातसहोदरश्चिरसुखी दीर्घायुरारोग्यभाक् ॥ १५ ॥

भ्रातृस्थानपतौ = तृतीयेशे, पुंभवनगे = नरराशि-( मेष-मिथुनादिविषमराशि ) गते सति तस्य = जातस्य अनुजः=कनिष्ठभ्राता जायते। अथवा यदि भ्रातृस्थानपतौ, युग्मर्क्षे= सम-( वृष-कर्कादि ) राशौ गते, तस्मिन् भार्गवेण = शुक्रेण, शशिना = चन्द्रेण च, युक्ते= सहिते, वा वीक्षिते = अवलोकिते जातस्यानुजो जायते। अथ भ्रातृस्थानेशे सौम्यर्क्षे = शुभराशौ, शुभखेचरेक्षितयुते = शुभग्रहेण दृष्टे, वा सहिते, केन्द्रत्रिकोण-(१।४।७।१०।५।९) स्थिते सति तस्य जातस्य पश्चाज्जातसहोदरः = लघुभ्राता, चिरसुखी = यावज्जीवनं सुखभाक्, दीर्घायुः, आरोग्यभाक् च भवति ॥ १५ ॥

तृतीय भावका स्वामी पुरुष राशिमें हो तो उसको भाई होवे। तृतीयेश सम राशिमें यदि हो शुक्र और चन्द्रमासे युक्त हो, वा दृष्ट हो तो अनुजका जन्म होवे। शुभग्रहकी राशिमें तृतीयेश शुभग्रहसे दृष्ट युत हो, केन्द्र-त्रिकोणमें स्थित हो तो उसके पश्चात् दीर्घायु तथा आरोग्यवान् भाई होवे ॥ १५ ॥

सहोदरस्थानपतौ तनुस्थे सलग्नपे सोदरनायके वा।
गर्भोऽभयोऽनन्तरमस्य मातुस्तृतीयराशौ सपतौ तथैव ॥ १६ ॥

सहोदरस्थानपतौ = तृतीयभावेशे, तनुस्थे = जन्मलग्नमुपगते, वा सोदरनायके=तृतीयेशे सलग्नपे = लग्नपतिना संयुते, अस्य जातस्य, मातुः, अनन्तरं = एतज्जातानन्तरं, गर्भः, अभयः = निर्विघ्नो भवति। तृतीयराशौ = तृतीय ( भ्रातृ ) भावे, सपतौ = पतिना सहिते ( तृतीयेशे तृतीयगत इत्यर्थः ) तथैव फलमर्थात् गर्भोऽभयोऽनन्तरमस्य मातुरिति वाच्यम्। अस्मिन्योगे जातस्य माता पुनरपि निर्विघ्नं सन्तति प्रसूत इत्यर्थः ॥ १६ ॥

तृतीयेश लग्नमें हो, वा लग्नेशके सहित तृतीयेश हो तो उस जातकके बादका गर्भ अमय होता है। तृतीय भावमें तृतीयेश हो तो भी वही फल होवे ॥ १६ ॥

अथ सोदरसङ्ख्याज्ञानम्।

लाभावसानभवनोपगतग्रहेन्द्रसङ्ख्यास्तदग्रजजनाः सहजा भवन्ति।
लग्नात्तृतीयधनयातवियच्चरेन्द्रैः संख्याजनाः स्युरनुजाः कथयन्ति तज्ज्ञाः ॥१७॥

इदानीं सोदरसङ्ख्यामाह—लाभावसानेत्यादिभिः। जन्मलग्नात्, लाभावसानभवने = एकादशद्वादशभावौ, तावुपगतग्रहेन्द्रसङ्ख्यास्तस्य जातस्याग्रजजनाः=पूर्वजाताः, सहजाः = भ्रातरः ( ज्येष्ठभ्रातरः ) भवन्ति। एकादशे द्वादशे च भावे यावन्तो ग्रहास्तिष्ठन्ति तावन्मितास्तस्य ज्येष्ठाः सोदरा भवन्तीत्यर्थः। एवं लग्नात् तृतीये, द्वितीये च भावे वर्त्तमानग्रहतुल्या अनुजाः = पश्चाज्जायमानाः ( लघुभ्रातरः ) भवन्तीति तज्ज्ञाः = भावफलविदः कथयन्ति।

Notes—अत्र पुरुषग्रहसङ्ख्यातुल्या ज्येष्ठाः कनिष्ठा वा भ्रातरः, स्त्रीग्रहसङ्ख्यातुल्या भगिन्यश्च वाच्या इति ॥ १७ ॥

लग्नसे ११ और १२ वें भावोंमें जितने ग्रह हों उतनी ज्येष्ठ भ्राताकी संख्या कहे। लग्नसे तृतीय और द्वितीय भावस्थ ग्रहसे छोटे भाईयों की संख्या पण्डित लोग कहते हैं ॥ १७ ॥

भ्रातृस्थानपकारकेक्षितयुता वीर्याधिका यद्यदा
तद्युक्तग्रहसंख्ययाऽनुजजनिं जातः समेति ध्रुवम् ॥
चत्वारो यदि नीचमूढरिपुगा निघ्नन्ति जातानुजाँ-
स्ते कुर्वन्ति चिरायुरिष्टबलिनः सर्वानुजानां ग्रहाः ॥ १८ ॥

भ्रातृस्थानपतिना, भ्रातृकारकेण चेक्षिता युताश्च यद्यदा = यावन्मिता वीर्याधिकाः बलवन्तो ग्रहा भवेयुः, तद्युक्तग्रहसंख्यया = तत्रोक्तलक्षणै युतेक्षितग्रहसङ्ख्यातुल्यामनुजजनिं = लघुसोदराणामुत्पत्तिं, जातो जनो ध्रुवं = निश्चयेन, समेति = प्राप्नोति। यावन्तो बलयुक्ता ग्रहास्तृतीयेशेन तृतीयभावकारकेण च युक्ता दृष्टाश्च भवन्ति तावन्तस्तस्य सोदरा भवन्तीति भावः। चत्वार इति। भ्रातृभावेशाद्यधिकारवन्तश्चत्वारः—कारकः, सहजाधीशस्तद्दर्शी, तत्र संस्थित इति चत्वारः, यदि, नीचमूढरिपुगाः = स्वनीचराशौ, अस्तमयाः, शत्रुराशिगता वा भवेयुस्तदा जातानुजान् = समुत्पन्नसोदरान् निघ्नन्ति = विनाशयन्ति। अस्मिन् योगे जातस्य जायमाना अनुजा न जीवन्तीत्यर्थः। ते चत्वारो ग्रहा यदीष्टबलिनः = उच्चादिगताः, मित्रगृहगाः, बलयुक्ताश्च भवेयुस्तदा सर्वानुजानां चिरायुः = दीर्घायुष्ट्वं कुर्वन्ति ॥ १८ ॥

भ्रातृस्थानेश और भ्रातृकारकसे दृष्ट या युत विशेष बली जितने ग्रह हों या ३ रे भावमें युक्त ग्रहकी संख्या तुल्य भाई निश्चय जायमान होते हैं। यदि चार ग्रह नीच गत अस्तङ्गत या शत्रु स्थानमें हों तो उत्पन्न भाइयोंका संहार करते हैं। यदि चार ग्रह शुभस्थानगत तथा बली हों तो भाइयोंको दीर्घायु करते हैं ॥ १८ ॥

भ्रातृस्थानपमुख्यखेचरगणे द्वौ वीर्यवन्तौ यदा
नाशानाशफलप्रदौ समतया वीर्याधिकाश्चेत्त्रयः।
खेटाः स्वल्पसहोदरक्षयकरा दुःस्थानगाः स्त्रीग्रहाः *
यद्यल्पानुजवृद्धिदास्तदनुजस्वाम्यंशसंख्यानुजाः ॥ १९ ॥

भ्रातृस्थानपः = तृतीयेशः मुख्यं = प्रधानं यत्र तस्मिन् खेचरगणे (तृतीयेशप्रभृतिग्रह-

*स्त्रीग्रहौ शशिशुक्रौ द्वावेव, परश्चाधिकाराधिक्यपरत्वाद्बहुवचनं निर्दिष्टम्।

चतुष्के ) यदा द्वौ ग्रहौ वीर्यवन्तौ = बलशालिनौ, स्याताम् , तदा नाशानाशफलप्रदौ समतया भवतः। अर्थात् यावदशुभदौ तावदेव शुभदावपीति। अत्र चतुर्षु ग्रहेषु द्वौ बलिनौ द्वौ बलरहितौ च तुल्यमेव शुभमशुभञ्च कुरुत इति तात्पर्यम्। चेद्यदि चतुर्षु ग्रहेषु त्रयो ग्रहा वीर्याधिकाः स्युस्तदा स्वल्पसहोदरक्षयकरा भवन्ति। तत्र शुभफलमधिकमशुभफलं किञ्चिदेवेति। अथ तत्र यदि स्त्रीग्रहा ( योगकारकाः ) दुःस्थानगता भवेयुस्तदाऽल्पानुजवृद्धिदा भवन्ति। तदानीमल्पा एव अनुजा जायन्त इत्यर्थः। तदनुजस्वाम्यंशसङ्ख्यानुजा इति। तस्य जातस्यानुजस्वामी ( तृतीयेशः ) यत्र तत्र भावे यावन्मिते नवांशे विद्यमानः स्यात्तावन्तस्तस्यानुजा भवन्तीति ॥ १९ ॥

**भ्रातृस्थानेश, भ्रातृदर्शी, भ्रातृस्थानगत और भ्रातृकारक इन चारोंमें यदि दो भी पूर्ण बली हों तो भाइयोंकी हानि और लाभ बराबर ही करते हैं। उन चारोंमें यदि तीन बलवान् ग्रह हों तो थोड़े भाइयोंका संहार करते हैं और स्त्रीग्रह दुःस्थानमें हों तो थोड़े भाइयोंकी वृद्धि करें। उसके छोटे भाईकी संख्या तृतीयेशके नवांशके तुल्य होवे ॥ १९ ॥**

भूमिजे सहजस्थाने यावतां विद्यते बलम्।
शत्रुनीचग्रहं त्यक्त्वा तावन्तः सहजाः स्मृताः ॥ २० ॥

भूमिजे = मङ्गले, सहजस्थाने–तृतीयभावे, शत्रुनीचग्रहं त्यक्त्वा = स्वशत्रुग्रहं नीचगतग्रहं च विहाय यावतां = यत्सङ्ख्यकानां ग्रहाणां, फलं=अष्टकवर्गसम्बन्धि शुभफलं विद्यते। अत्र किलैतदुक्तं भवति। सहजभावगतो भौमो यावन्मितेभ्यो ग्रहेभ्यः शुभफलो भवति परं शत्रुग्रहं नीचगतग्रहं त्यक्त्वेति। तावन्तः = तत्सङ्ख्यकाः, सहजाः = सोदराः, स्मृताः = कथितास्तस्य जातस्येति ॥ २० ॥

**मंगल तृतीयमें जितने ग्रहोंसे शुभफल वाला ( अष्टकवर्गमें ) हों, उनमें शत्रु और नीच गत ग्रहोंको छोड़कर शेषग्रहोंके तुल्य भाई कहे ॥ २० ॥**

भ्रात्रीदौ स्त्रीग्रहर्क्षस्थौ भ्रातृदौ पुंग्रहर्क्षगौ।
सोदरेशकुजौ स्यातां भ्रातृभ्रात्रीसुखप्रदौ ॥ २१ ॥

सोदरेशकुजौ = तृतीयभावेशो मङ्गलश्च यदि स्त्रीग्रहर्क्षस्थौ = स्त्रीग्रहौ शुक्रशशिनौ, तयोः ऋक्षाणि वृषतुलाकर्कटास्तेषु स्थितौ भवेतां तदा, भ्रात्रीदौ = भगिनीप्रदौ स्याताम्, तौ यदि पुङ्ग्रहर्क्षगौ = पुंग्रहा भानुक्षितिजगुरवस्तेषां राशयः = सिंह-मेष-वृश्चिक-धनुः-मीना-स्तेषु स्थितौ तदा, भ्रातृजन्मकरौ भवेताम्। अर्थादेव तौ यदि पुरुषस्त्रीराशिगतौ ( एकः पुरुषराशिस्थोऽन्यः स्त्रीराशिस्थश्च ) भवेतां तदा भ्रातृभ्रात्रीसुखप्रदौ = भ्रातृभगिन्योः सुखदायिनौ भवेतामिति ॥ २१ ॥

**तृतीयेश और मंगल स्त्रीग्रहकी राशिमें हों तो बहिनको देते हैं। यदि दोनों पुरुष ग्रहकी राशिमें हों तो भाईको देवें। ये ही दोनों ग्रह भाई और बहिनका सुख देते हैं ॥२१॥**

स्त्रीहोरया वा युवतिग्रहेण युक्ते यदि भ्रातृगृहे विलग्नात्।
सहोदरीलाभमुपैति जातः सहोदरं तत्परतोऽन्यथा चेत् ॥ २२ ॥

विलग्नात् = जन्मलग्नात्, भ्रातृगृहे = तृतीयभावे, यदि स्त्रीहोरया = चन्द्रहोरया युक्ते ( विषमराशेरपरार्द्धे, समराशेः पूर्वार्द्धे च तृतीयभाव इत्यर्थः ) वा युवतिग्रहेण = स्त्रीग्रहेण ( चन्द्रेण शुक्रेण वा ) युक्ते सति जातो नरः सहोदरीलाभमुपैति। सहोदरं तत्परतोऽन्यथा चेत्। भ्रातृगृहे पुरुषहोरया युक्ते वा पुरुषग्रहेण युक्ते सति जातः सहोदरमुपैति। तत्परत इति स्वकीयजन्मानन्तरं सहोदरीलाभः सहोदरलाभो वा वाच्य इत्यर्थः ॥ २२ ॥

**यदि ३ रे भावमें चन्द्रमाकी होरा वा स्त्री ग्रह ( चं. शु. ) विद्यमान हो तो बालकको**

**बहिनकी उत्पत्ति होवे। इससे अन्यथा ( सूर्यकी होरा वा पुरुष ग्रहमें ) भाईकी उत्पत्ति कहनी चाहिये ॥ २२ ॥**

कारकः सहजाधीशस्तद्दर्शी तत्र संस्थितः।
इष्टानिष्टकरास्तेषां स्वदशान्तर्दशासु च ॥ २३ ॥

इदानीं भ्रातृभावे चतुरोऽधिकारिण आह—कारक इति। १. कारकः = भ्रातृभावकारकः, २ सहजाधीशः = भ्रातृभावेशः, ३. तद्दर्शी = भ्रातृभावद्रष्टा, ४. तत्र संस्थितः = भ्रातृभावे वर्त्तमानः, इति चत्वारो ग्रहाः स्वदशासु स्वान्तर्दशासु च, तेषां = भ्रातृणां ( भगिनीनाञ्च तासाम् ) इष्टानिष्टकराः = शुभाशुभफलदाः ( पूर्वोक्तसल्लक्षणयुक्ताः शुभदाः, असल्लक्षणयुक्ता अशुभदाश्च ) भवन्ति ॥ २३ ॥

**भ्रातृकारक, सहजका स्वामी, सहजको देखनेवाला और सहजस्थ ग्रह ये चारों ग्रह अपनी दशा अन्तर्दशामें शुभाशुभ फल देते हैं ॥ २३ ॥**

कारकादिचतुःखेटस्फुटयोगांशकानुजाः।
वर्ज्या नीचारिमूढांशाः स्वोच्चांशा द्विगुणीकृताः ॥ २४ ॥

कारकादयो ये चत्वारः ( कारकः सहजाधीशः तद्दर्शी तत्र संस्थितः ) खेटास्तेषां स्फुटयोगांशकानुजाः स्पष्टराश्यादीनामैक्येन यद्राश्यादि लभ्यते तस्मिन् यावन्तो नवांशा भवन्ति तावन्तस्तस्यानुजा जायन्त इत्यर्थः। परं च तेषु वर्ज्या नीचारिमूढांशाः = यो ग्रहो नीचगतः, शत्रुगृहस्थः, अस्तमयश्च ते वर्ज्याः। ते तेषु न योज्या इति। एवं ये ग्रहाः स्वोच्चगतास्तेषामंशा द्विगुणीकृता भवन्तीति।

अथवा ते चत्वारो ग्रहाः पृथक् पृथक् यावन्मिते नवांशे विद्यमानाः स्युस्तेषां नवांशसङ्ख्यानामैक्यं चतुर्भक्तं विधाय लब्धनवांशतुल्या अनुजा वाच्याः। तत्रापि नीचारिमूढांशांस्त्यक्त्वा स्वोच्चांशान् द्विगुणीकृत्य योजयेदिति। अत्र जातकरत्नकारेण 'तृतीयेश-कुज-कुजतृतीयेशाः' इति त्रय एव ग्रहा गृहीताः। यथा यद्वचनम्—

'तृतीयराशीश्वरसंस्थितांशं भौमान्वितांशं च कुजात्तृतीये।
तदीश्वरांशं च समेन योज्यं त्रिभागलब्धं सहजाः क्रमेण ॥ इति ॥ २४

**पूर्वोक्त कारकादि ( कारक, सहजेश, सहजदर्शी, सहजस्थ ) के योग करने पर जितना नवांश हो उतने भाई कहे। उसमें जो ग्रह नीच, अरिगृह और अस्तमें हो उसका योग नहीं करना चाहिये और जो ग्रह अपने उच्चांशमें हों उनको दूना करे ॥ २४ ॥**

तृतीयात्सप्तमर्क्षेण भ्रातृभार्याफलं वदेत्।
लग्नेशकुजसोत्थेशा भ्रातुरनिष्टशुभप्रदाः ॥ २५ ॥

तृतीयात्सप्तमर्क्षेणार्थाल्लग्नान्नवमभावेन भ्रातुर्भार्यायाः शुभाशुभं फलं वदेत्। लग्नान्नवमे भावे तत्पतौ च शुभदृष्टियुते सबले च भ्रातृभार्यायाः शुभमन्यथाऽशुभं फलं ब्रूयात्। लग्नेशः, कुजः, तृतीयेशश्चैते भ्रातुरनिष्टशुभप्रदाः। शुभदृष्टयुक्ताः सबलाश्चैते भ्रातुः शुभकराः, अन्यथा अनिष्टकरा भवन्तीति ॥ २५ ॥

**तृतीय भावसे सप्तम राशि द्वारा भाईकी स्त्रीका फल कहे। लग्नेश, मंगल और तृतीयेश से भाईके अनिष्ट और शुभ फलका विचार करे ॥ २५ ॥**

अन्योन्यमिष्टविपुलं तु सहोदराणां लग्नाधिपेन सहिते यदि सोदरेशे ॥
अन्योन्यमिष्टखचरौ यदि तौ बलाढ्यौ लग्नेऽथवा सहजभे न विभागमाहुः ॥२६॥

इदानीं सहोदराणां पारस्परिकं प्रेमाणमाह—अन्योन्यमिति। सोदरेशे = भ्रातृभावपतौ यदि लग्नाधिपेन = तनुलग्नपतिना सहिते सति सहोदराणां = भ्रातृणां, अन्योन्यमिष्टविपुलं प्रेमा स्यात्। यदि तौ = लग्नाधिपसोदरेशौ, बलाढ्यौ=सबलौ, अन्योन्यं=परस्परं, इष्टखचरौ

= मित्रग्रहौ, सन्तौ लग्ने, अथवा सहजमे स्थितौ भवेतां तदा सहोदराणां, विभागं = पार्थक्यं ( Portition ) न आहुरार्याः । ईदृग्योगे जातस्य सहोदरैः सह प्रेमविच्छेदो न भवत्युत विपुलः प्रेमा भवतीति भावः ॥ २६ ॥

लग्नेश और तृतीयेश यदि एकत्र हों तो भाइयोंमें विशेष प्रम हो । यदि दोनों परस्पर इष्टग्रह और बलवान् होकर लग्नस्थ वा तृतीयस्थ हों तो भाईयोंमें विभाग ( भेद ) नहीं होता है ॥ २६ ॥

अथ भ्रात्ररिष्टम् ।

लग्नेशानुजनायकौ विबलिनावन्योन्यशत्रुग्रहौ
दुश्चिक्यस्थितकारकौ च यदि वा दुःस्थानगौ दुर्बलौ ॥
तत्पाके सहजप्रमादकलहं तन्नाशमर्थक्षयं
तत् खेटोपगकोपहेतुकलहस्नेहादि सर्वं वदेत् ॥ २७ ॥

लग्नेश-तृतीयेशौ, विबलिनौ, परस्परं शत्रुग्रहौ भवेताम् , यदि वा दुश्चिक्यस्थितकारकौ = तृतीयगतो ग्रहः, भ्रातृकारकश्च, दुःस्थानगौ = षडष्टव्ययगतौ, दुर्बलौ च भवेतां तदा, तत्पाके = योगकर्तृग्रहयोर्दशाकाले सहजप्रमादकलहं भ्रातृणां वैमनस्याज्झकटकं, तन्नाशं = भ्रातृनाशं, अर्थक्षयं = धनहानिं वदेत् । तत्खेटोपगकोपहेतुकलहस्नेहादि सर्वं = तत्तत्खेटनिमित्तकं कलहं प्रेमादि च सकलं ब्रूयादिति ॥ २७ ॥

यदि लग्नेश और तृतीयेश निर्बल तथा परस्पर शत्रु ग्रह हों अथवा तृतीय भावमें स्थित और ३रे भावका कारक यदि दुष्टस्थानमें निर्बल हों तो उनकी दशामें भाइयोंमें प्रमाद तथा कलह हो उनका नाश और धनका क्षय हो । उस ग्रहके कोपसे कलह और प्रेम कहे ॥२७॥

गुरुदृष्टेऽनुजे शुक्रे भ्रातृरक्षणतत्परः ॥
रविदृष्टे बुधे सोत्थे सुहृन्नाशकरो भवेत् ॥ २८ ॥

शुक्रे अनुजे = तृतीयभावगते तस्मिन् गुरुणा दृष्टे च जातो भ्रातृरक्षणे तत्परो भवेत् । बुधे सोत्थे = तृतीयभावगते तस्मिन् रविणा दृष्टे च सुहृन्नाशकारको भवतीति ॥ २८ ॥

तृतीयमें शुक्र हो उसे गुरु देखता हो तो भाईकी रक्षामें तत्पर रहे । तृतीयस्थ बुधको सूर्य देखे तो मित्रका नाश करनेवाला हो ॥ २८ ॥

भ्रातृस्थतन्नायककारकाणां नीचारिदुःस्थानसमन्वितानाम् ॥
भुक्तौ दशायां धनसत्त्वनाशं पराजयं भ्रातृविनाशमाहुः ॥ २९ ॥

भ्रातृस्थः = तृतीयभावगतः, तन्नायकस्तृतीयेशः, कारको भ्रातृकारक इत्येषां त्रयाणां, नीचे, अरौ ( शत्रुस्थाने ) दुःस्थाने ( षडष्टव्यये ) समन्वितानां सतां भुक्तौ = अन्तरे, दशायां च धनसत्त्वनाशं = ऐश्वर्य-पराक्रमाणां नाशं, पराजयं, भ्रातृविनाशं च मनीषिण आहुः ॥ २९ ॥

भ्रातृभावस्थ, भ्रातृभावेश और भ्रातृकारक ये यदि नीच, शत्रुराशि तथा दुःस्थानमें हों तो उनकी दशान्तर्दशामें धन-बलका नाश, पराजय, और भाईयोंका नाश होता है ॥२९॥

लग्नेशस्फुटतो विशोध्य सहजस्थानाधिपस्य स्फुटं
तन्नक्षत्रगते शनौ तु मरणं तत्सोदराणां वदेत् ॥
तस्माद्धि स्फुटतस्तु मानगृहपे भौमे च संशोधिते
राशौ भानुसुते तथैव च चतुर्योगस्फुटांशेऽथवा ॥ ३० ॥

इदानीं शनिस्थित्या भ्रात्ररिष्टमाह—लग्नेशेति । सहजस्थानाधिपस्य = तृतीयभावेशस्य, स्फुटं राश्यादि, लग्नेशस्फुटतो विशोध्य शेषं कलीकृत्याष्टशतभक्तं तदा यन्नक्षत्रं लब्धं स्यात्तन्नक्षत्रे गते शनौ सति, तत्सोदराणां = तत्र योगे जातस्य भ्रातॄणां मरणं वदेत् । सह-

जेशोनलग्नेशमानजभ्धनक्षत्रे गतवति मन्दे जातस्य भ्रातरो न जीवन्तीति भावः। तस्मादिति। तस्माद्धि स्फुटतः = लग्नेशस्पष्टराश्यादितस्तु मानरूपं = दशमभावेशं, भौमं च विशोध्य तस्मिन्संशोधिते राशौ, भानुसुते = शनैश्चरे याते सति तथैव फलमर्थात्सोदराणां मरणं स्यादिति। अथवा चतुर्योगस्फुटांशे = चतुर्णां ( कारकः सहजाधीशस्तद्दर्शी तत्र संस्थित इति चतुर्णाम् ) योगस्फुटांशे गतवति शनौ तथैव फलं वाच्यमिति ॥ ३० ॥

Notes—विद्यमाने भ्रातृरिष्टे उक्तलक्षणलक्षिते शनौ भ्रातृमरणं वाच्यमिति ॥ ३० ॥

स्पष्ट लग्नेशमेंसे स्पष्ट सहजेशको घटाकर शेष राशि आदिसे जो नक्षत्र हो उस नक्षत्रमें शनिके होनेपर उसके सहोदर भाइयोंका मरण कहे। उसी स्पष्ट लग्नेशमें दशमेश और मंगलको घटाकर शेष राशिमें शनि होवे या सहजेश, सहजदर्शी, सहजस्थ और सहजकारक इन चारोंके योग करने पर जो अंश हो उसपर शनिके होने पर भी वही फल कहे ॥३०॥

चतुःस्फुटाक्रान्तदृकाणराशिं गते गुरौ सोदरनाशमाहुः ॥
तत्तारकानाथदशाऽनुजानामतीव सम्पत्सुखदायिनी स्यात् ॥३१॥

इदानीं गुरुस्थित्या भ्रातृरिष्टमाह—चतुरिति। चतुर्णां ( कारक-सहजाधीश-तद्दर्शि-तत्संस्थितानाम् ) स्फुटैक्येनाक्रान्तो यो दृकाणस्तद्दृकाणराशौ गते गुरौ सति सोदरनाशमाहुः। उक्तग्रहचतुष्टययोगराशौ यद्राशिद्रेष्काणः स्यात्तद्राशौ याते गुरौ जातस्य भ्रातृनाशं ब्रूयादिति। तत्तारकानाथदशा = तदुक्तयोगतो या तारका ( नक्षत्रं ) लभ्यते तस्या यो नाथस्तस्य दशा अनुजानामतीव सम्पत्सुखदायिनी स्यात् ॥ ३१ ॥

Notes—अत्र नक्षत्राणां स्वामिनः महादशासम्बन्धिनो ज्ञातव्याः। यस्मिन्नक्षत्रे यस्य ग्रहस्य दशा भवति स एव तन्नक्षत्रनाथ इति ( अ० १८, श्लो० ३ द्र० ) ॥ ३१ ॥

चारों ( पूर्वोक्त ) के योग करनेसे योगके द्रेष्काण राशिमें गुरुके होने पर भ्रातृनाश होना कहे हैं। उस योग राशिका जो नक्षत्र है उसकी दशा छोटे भाइयोंके लिये विशेष सुख देनेवाली होती है ॥ ३१ ॥

भूसूनुस्फुटतो विशोध्य फणिनं शेषत्रिकोणे गुरौ
जातस्यानुजनाशनं क्षितिसुतं राहुस्फुटाच्छोधयेत् ॥
तद्राशिस्थनवांशकेऽमरगुरौ तज्ज्येष्ठनाशं वदेद्
जन्माधानपकर्मपस्फुटगृहे जीवेऽनुजो जायते ॥ ३२ ॥

भूसूनुस्फुटतः = भौमस्पष्टराश्यादितः, फणिनं = राहुं, विशोध्य = ऊनीकृत्य, शेषमानात् त्रिकोणे ( ९।५ ) गुरौ याते सति जातस्यानुजनाशनं विन्द्यात्। एवं राहुस्फुटात् क्षितिसुतं=भौमं विशोधयेत्, शेषराशौ यन्नवांशकं तस्मिन् गतवत्यमरगुरौ=बृहस्पतौ, तज्ज्येष्ठभ्रातृनाशं वदेत्। अथ जन्माधानपकर्मपस्फुटगृहे = जन्म यस्मिँल्लग्ने जातको जातस्तत्, आधानपः = यस्मिँल्लग्ने जातकस्य गर्भाधानमभूत् तत्पतिः, कर्मपः = जन्मकालीनदशमभावपतिः, एषां त्रयाणां स्फुटैक्यराशौ प्राप्ते जीवे = गुरौ, जातस्यानुजः=कनिष्ठो जायते=समुत्पद्यते ॥ ३२ ॥

स्पष्ट मंगलमें राहुको घटाकर शेष राशिसे त्रिकोणमें जब गुरु होवे तो जातकके छोटे भाईका नाश कहे। स्पष्ट राहुमें मङ्गलको घटाकर शेषराशिके नवांशमें जब बृहस्पति हो तो उसके ज्येष्ठ भाईका नाश कहे। जन्मपति, आधानपति तथा कर्मपतिके योग स्पष्ट गृहमें जब गुरु हो तो छोटे भाईका जन्म होवे ॥ ३२ ॥

## पराक्रमविचारः।

विक्रमाधिपतौ स्वोच्चे नाशस्थे पापसंयुते ॥
चरराशौ चरांशस्थे युद्धात्पूर्वं हतो भवेत् ॥ ३३ ॥

कारके बलहीने वा क्रूरषष्ट्यंशसंयुते ॥
शुभदृग्योगसम्बन्धे विजयी विक्रमेश्वरे ॥ ३४ ॥

विक्रमाधिपतौ = तृतीयभावेशे, स्वकीयोच्चराशौ, नाशस्थे = अष्टमभावगते, तस्मिन्पापग्रहसंयुक्ते तथा चरराशौ चरराशिनवांशे च गतवति जातो युद्धात् पूर्वं सङ्ग्रामारम्भात्प्रथम एव दृढो भवेत् ।

कारके = तृतीयभावकारकग्रहे, बलहीने, अथवा क्रूरषष्ट्यंशसंयुते, विक्रमेश्वरे=तृतीयभावपतौ, शुभदृग्योगसम्बन्धे=शुभग्रहाणां दृष्टियोगसम्बन्धेनान्विते सति जातः संग्रामे विजयी भवेत् ॥ ३३-३४ ॥

**तृतीयभावका स्वामी उच्च स्थानमें होकर अष्टममें हो, पापग्रहसे युक्त हो, चर राशिमें चर नवांशमें हो तो युद्धके पहले दृढ हो जाय ॥ ३३ ॥**

**भ्रातृ-कारक बलहीन हो, क्रूरषष्ट्यंशकमें हो और तृतीयेश शुभग्रहसे दृष्ट युत हो तो युद्धमें विजयी होवे ॥ ३४ ॥**

शौर्याधिपे भानुयुतेऽत्र वीरश्चन्द्रान्विते मानसधैर्यजातः ॥
दुष्टो जडो भौमयुते प्रकोपी सौम्यान्विते सात्त्विकबुद्धियुक्तः ॥ ३५ ॥
जीवान्विते धीरगुणाभिरामः समस्तशास्त्रार्थविशारदः स्यात् ॥
कामातुरः शुक्रसमन्विते तु तन्मूलकोपात् कलहप्रवीणः ॥ ३६ ॥
जडो भवेद्वासरनाथसूनुयुक्तेऽतिभीतो फणिसंयुते स्यात् ॥
बहिर्गदो हृद्गदजाड्ययुक्तः केत्वन्विते मान्दियुते तथैव ॥ ३७ ॥

इदानीं सूर्यादिग्रहयुतस्य तृतीयभावेशस्य फलमाह—शौर्याधिप इत्यादित्रिभिः श्लोकैः । श्लोकाः सरलार्था इत्यलम् ॥ ३५-३७ ॥

**तृतीयेश सूर्यसे युक्त हो तो वीर होवे । चन्द्रमासे युक्त हो तो मानसधैर्ययुक्त हो । मंगलसे युक्त हो तो दुष्ट, जड और क्रोधी हो । बुध से युक्त हो तो सात्त्विक बुद्धिवाला हो । बृहस्पतिसे युक्त हो तो धीरगुणयुक्त और सम्पूर्णशास्त्रमें विशारद हो । शुक्रसे युक्त हो तो कामी और कामके ही कारण कलहमें दक्ष हो । शनिसे युक्त हो तो जड, राहुसे युक्त हो तो डरपोक हो । केतुसे युक्त हो तो बाहरी और हृदय रोगसे युक्त हो और गुलिकसे युक्त हो तो भी यही फल हो ॥ ३५-३७ ॥**

लग्ने गुरौ विक्रमनाथयुक्ते चतुष्पदानां प्रवदन्ति भीतिम् ॥
गवां भयं वा जलराशिलग्ने जलप्रमादं समुपैति जातः ॥ ३८ ॥

बृहस्पतिस्तृतीयेशेन सहितो यदि लग्ने भवेत्तदा चतुष्पदानां = गजाश्वादीनां भीतिं = भयं प्रवदन्ति । वा गवां = गोवृषमहिषादीनां भयं वाच्यम् । जलराशिलग्ने ( जलराशयः पूर्वमुक्तास्तेषामन्यतमे लग्ने ) जातो नरः जलप्रमादं = जले प्रब्रुडनादिभयं समुपैति ॥ ३८ ॥

**लग्नमें बृहस्पति तृतीयेशसे युक्त हो तो चतुष्पदोंका या गौवोंका भय हो । जलचर लग्न हो तो जातक जलका प्रमादी हो याने उसे जलमें डूबनेका सन्देह रहे ॥ ३८ ॥**

कुजेन युक्ते खचरे बलिष्ठे सत्त्वं बलं गानसुखं समेति ॥
कुजानुजस्थानुजराशिनाथास्त्रयो बलिष्ठा रणरङ्गशूराः ॥ ३९ ॥
तेषां त्रयाणामपहारकाले पाकेऽथवा मूलफलादिसौख्यम् ॥
श्रोत्रद्वयं भूषणसत्कथादिसम्पत्करं भ्रातृसुतादिलाभम् ॥ ४० ॥

यस्मिंस्तस्मिन् बलिष्ठे=वीर्यशालिनि खचरे कुजेन युक्ते सति जातः सत्त्वं, बलं, गानसुखं च समेति = प्राप्नोति । अथ— कुजो भौमः, अनुजस्थस्तृतीयभावगतः, अनुजराशिनाथ-

स्तृतीयेश इति त्रयो ग्रहा यदि जन्मकाले बलिष्ठाः स्युस्तदा जातः रणरङ्गशूरः = रणरङ्गे ( सङ्ग्रामस्थले ) शूरो महाबलो भवतीति ॥ ३९ ॥

तेषां त्रयाणां ( कुजानुजराशिनाथानाम् ) ग्रहाणामपहारकाले = अन्तर्दशायामथवा पाके = महादशाकाले मूलफलादिसौख्यमुपैति जातक इति । अन्यत्स्पष्टमित्यलम् ॥ ४० ॥

मंगलसे युक्त ग्रह बली हो तो पराक्रम, बल और गान-सुख प्राप्त हो । मंगल, तृतीयेश और सहज राशिस्थ तीनों ग्रह बलवान् हों तो रणभूमिमें वीर हो । उन तीनोंकी अन्तर्दशा वा दशामें मूल आदिका सुख हो, दोनों कर्णमें सत्कथाका श्रवण तथा धारणार्थ भूषण प्राप्त हों, तथा भ्रातृ पुत्रका लाभ हो ॥ ३९-४० ॥

सात्त्विको भवति सोदराधिपे सौम्यवर्गसहिते बलान्विते ॥
नीचमूढरिपुपापराशिगे पापखेचरयुते तु साहसी ॥ ४१ ॥

सोदराधिपे = तृतीयेशे, सौम्यवर्गसहिते = शुभग्रहस्य वर्गं गतवति, बलान्विते च जातः सात्त्विकः = सत्त्वगुणयुक्तो ( क्षमाशीलः ) भवति । तस्मिन् सोदराधिपे नीचे, अस्तमये, पापराशिगे तथा पापग्रहेण सहिते च जातः साहसी = रजोगुणी (उद्यमकृद्) भवति ॥४१॥

बलवान् भ्रातृस्थानेश शुभ वर्गमें हो तो सात्त्विकी हो । यदि तृतीयेश नीच, मूढ, शत्रु-राशिमें हो पापग्रहसे युक्त हो तो साहसी होवे ॥ ४१ ॥

अथ कण्ठविचारः ।

शौर्याधिपे राहुसमेतराशिनाथान्विते राहुयुते विलग्ने ।
सर्पाद्भयं विक्रमराशिनाथे बुधेन युक्ते गलरोगभाक् स्यात् ॥ ४२ ॥

इदानीं सर्पभय-गलरोगावाह-शौर्याधिप इति । तृतीयेशे राह्वधिष्ठितराशीशेन सहिते, विलग्ने राहुयुते । अत्र तृतीयेशो लग्नेशेनान्वितो भवेत् राहुर्लग्नगतो भवेदिति तात्पर्यम् । अथवा तृतीयेशो राह्वाक्रान्तराशिपतिना सहितः स्याद्वा राहुर्लग्नगतः स्यादिति । तदा जातः सर्पाद्भयं प्राप्नोति । तृतीयेशे बुधेन युक्ते सति जातो गलरोगभाक् स्यादस्मिन्योगे जातस्य गलदेशे रोगो भवतीत्यर्थः ॥ ४२ ॥

तृतीयेश राहुस्थित राशिपतिसे युत हो, लग्न राहुयुक्त हो तो सर्पका भय होवे । तृतीयेश बुधसे युक्त हो तो जातकको गलरोग होवे ॥ ४२ ॥

पापे तृतीये गलरोगमत्र वदन्ति मान्द्यादियुते विशेषात् ॥
भौमान्विते भानुसुते बलाढ्ये तृतीयराशौ यदि कण्डुरोगम् ॥ ४३ ॥

विक्रमेशगुरू लग्नं गतौ गोभीतिसूचकौ ।
राहुणा वा फणिक्रान्तराशिपेन युतौ यदि ॥ ४४ ॥
सबुधो विक्रमपतिर्गलरोगकरो भवेत् ।
सोत्थेऽरिनीचगे पापे सोत्थाभावो विषादिभुक् ॥ ४५ ॥

बुधेन जीवेन युतेक्षिते वा तृतीयराशौ बलसंयुते च ।
तत्केन्द्रगे मन्त्रिणि बोधने वा कण्ठस्वरं चारुतरं समेति ॥ ४६ ॥

सरलार्थाश्चैते श्लोका इत्यलम् ॥ ४३-४६ ॥

पापग्रह तीसरे हो तो गलरोग होवे । गुलिक आदि उपग्रहसे युक्त हो तो विशेष गलरोग हो । तृतीय भावमें मङ्गल, शनि बली हों तो खुजली रोग होवे ॥

यदि राहुसे वा राहु जिस राशिमें हो उसके स्वामीसे युक्त तृतीयेश और बृहस्पति दोनों लग्नमें हों तो बैल, गायका भय हो ॥ ४४ ॥

बुधके साथ तृतीय भावका स्वामी हो तो गलरोग उत्पन्न करे । तृतीय भावमें शत्रु गृहका या नीचका पापग्रह हो तो विष आदिके द्वारा भाईका अभाव होवे ॥ ४५ ॥

तृतीयभवन बली हो, वा बुधसे और गुरुसे युत या दृष्ट हो या उसके (३ रे भावके) केन्द्रमें बृहस्पति या बुध हो तो रमणीय कण्ठस्वर होवे ॥ ४६ ॥

अथ श्रुतिभूषणविचारः।

तृतीये सौम्यसंयुक्ते सौम्यखेचरवीक्षिते।
तदीशे शुभसंयुक्ते कर्णयोर्भूषणं वदेत् ॥ ४७ ॥
शुक्रे तृतीये यदि मौक्तिकं तु जीवे तुलस्याभरणं वदन्ति।
सरक्तमानीलमयं दिनेशे चन्द्रे बहु त्वाभरणं बलाढ्ये ॥ ४८ ॥
सौम्ये श्यामं कुजक्षेत्रे विचित्राभरणं वदेत्।
तत्पतौ स्वोच्चवर्गस्थे दिव्यमाभरणं लभेत् ॥ ४९ ॥

इदानीं कर्णभूषणविचारमाह—तृतीय इत्यादिश्लोकत्रयेण। श्लोकाः किल स्पष्टार्था इत्युपेक्षिताः ॥ ४७-४९ ॥

तृतीय भवनमें शुभग्रह हो उसे शुभग्रह देखते भी हों और तृतीयेश शुभग्रहसे युक्त हो तो कानोंमें भूषण होवे ॥ ४७ ॥

तीसरे भावमें शुक्र हो तो मोतीका भूषण, गुरु हो तो तुलसीका आभरण, सूर्य हो तो लाल नील भूषण, बली चन्द्रमा हो तो बहुत आभरणका होना कहते हैं। बुध हो तो श्याम वर्णका, तृतीय भाव मङ्गलका क्षेत्र हो तो विचित्र आभरण कहे। तृतीय भावका पति उच्च स्थानमें हो तो दिव्य भूषण प्राप्त होवे ॥ ४८-४९ ॥

अथ वस्त्रविचारः।

मानस्थे तुरगेऽथवाऽनुजपतौ सौम्यर्क्षगे तद्युते
दिव्यं वस्त्रमपूर्वमेति सहजे सौम्ये सुवस्त्रं लभेत्।
वीर्याढ्यौ बहुवस्त्रभूषणकरौ शुक्रानुजस्थानपौ
स्यातां धर्मकथारसश्रवणदौ जीवज्ञयुक्तेक्षितौ ॥ ५० ॥

इदानीं वस्त्रविचारमाह—मानस्थ इति। अनुजपतौ = तृतीयभावेशे, मानस्थे = दशमभावगते, अथवा तुरगे = तुरगोऽश्वः, अश्वशब्दः सप्तसङ्ख्याबोधक इति तुरगे = सप्तमभावे, सौम्यर्क्षगे तद्युते = शुभग्रहान्विते शुभराशौ गतवति च जातः अपूर्वम् = अद्भुतं, दिव्यं = मनोरमं वस्त्रमेति = प्राप्नोति। सहजे = तृतीये भावे सौम्ये = शुभग्रहे सति सुवस्त्रं लभेत्। शुक्रोऽनुजस्थानपतिस्तृतीयेशश्चैतौ, वीर्याढ्यौ = सबलौ स्यातां तदा बहुवस्त्रभूषणकरौ भवतः। तौ सबलौ शुक्रानुजस्थानपौ, जीवज्ञयुक्तेक्षितौ = गुरुबुधाभ्यां सहितौ दृष्टौ वा भवेतां तदा धर्मकथारसश्रवणदौ भवतः। अत्र योगे जातो धर्म-(पुराणेतिहासपुण्यमार्गीय) कथारसास्वादनलोलुपो भवति ॥ ५० ॥

तृतीयेश दशवें या ७ वे भावमें हो सौम्य ग्रहके क्षेत्रमें हो वा शुभग्रहसे युक्त हो तो दिव्य अपूर्व वस्त्र प्राप्त हो। तृतीय बुध हो तो सुन्दर वस्त्र मिले। शुक्र और तृतीयेश बलवान् हों तो बहुत वस्त्र और भूषण देवें। यदि वे दोनों बृहस्पति तथा बुधसे युक्त वा दृष्ट हों तो धर्म कथाओंके श्रवण करानेवाले होते हैं ॥ ५० ॥

अथ धैर्यविचारः।

धैर्यान्वितो विक्रमेशे सौम्यग्रहनवांशके।
शुभेक्षिते शुभयुते वैशेषिकसमन्विते ॥ ५१ ॥
धैर्याधिपे पापयुतेक्षिते वा दुःस्थानगे धैर्यविनाशमेति।
केन्द्रत्रिकोणे शुभखेटयुक्ते शुभेक्षिते वा यदि धैर्यशाली ॥ ५२ ॥

इदानीं जातस्य धैर्यविचारमाह—धैर्यान्वितौ इति श्लोकयुगलेन । तत्र श्लोकौ स्पष्टार्थावित्यलम् ॥ ५१-५२ ॥

तृतीयेश शुभग्रहके नवांशमें हो तो शुभदृष्टयुत वैशेषिकांशमें हो तो धैर्यवान् होवे ॥५१॥

तृतीय भावका स्वामी पापग्रहसे युत या दृष्ट हो वा दुष्ट स्थानमें हो तो धैर्यका नाश हो। यदि केन्द्रमें वा त्रिकोणमें शुभयुत वा शुभदृष्ट तृतीयेश हो तो धैर्यवान् हो ॥ ५२ ॥

### अथ बलविचारः ।

वीर्याधिपे भूमिसुतेन युक्ते पापर्क्षगे वीर्यविनाशहेतुः ।
केन्द्रत्रिकोणेससिते बलाढ्ये वीर्याधिको भोगगुणप्रकाशः ॥ ५३ ॥

श्लोकेनानेन जातस्य बलविचारः क्रियते । वीर्याधिपे = तृतीयेशे, मङ्गलेन युक्ते पापर्क्षे = पापराशिगते सति वीर्यविनाशहेतुः = बलहानिकारणं भवति । अत्र जातो निर्बलो भवतीत्यर्थः ।

अथ तृतीयेशे ससिते = शुक्रेण सहिते बलाढ्ये च जातो वीर्याधिकः = महाबलो भोगगुणप्रकाशश्च भवति ॥ ५३ ॥

तृतीय का स्वामी मङ्गलसे युक्त होकर पापग्रहकी राशिमें हो तो बलका विनाशक होता है, और बलवान् तीसरेका स्वामी शुक्रके साथ केन्द्र या कोणमें हो तो अधिक वीर्यवान् तथा भोग आदि गुणसे प्रकाशित होवे ॥ ५३ ॥

### अथ अशनविचारः ।

शुक्रं निशाकरं त्यक्त्वा लग्नात्सोदरभे शुभे ।
शुभराश्यंशगे जातः समेति सुखभोजनम् ॥ ५४ ॥

इदानीमशनविचारमाह—शुक्रमिति । शुक्रं, निशाकरं = चन्द्रं च त्यक्त्वा लग्नात्सोदरभे = तृतीयभावे शुभे = शुभग्रहे, शुभराशिनवांशे च गतवति जातः सुखभोजनं समेति = प्राप्नोति । चन्द्रे शुक्रे च तृतीये सति न सुखभोजनमिति शुक्रं निशाकरं त्यक्त्वेत्युक्तमिति ॥

लग्नसे तृतीय स्थानमें चन्द्रमा और शुक्रके अतिरिक्त शुभ ( बु० बृ० ) ग्रह शुभराशिके नवांशमें हों तो जातक शुभ भोजनसे युक्त होवे ॥ ५४ ॥

जीवस्य राशिनवभागदृक्काणसंस्थे वीर्याधिपे यदि सुरार्चितवीक्षिते वा ।
तत्केन्द्रकोणगृहगेऽवनिजे बलाढ्ये जातस्तु कन्दफलमूलरसप्रियः स्यात् ॥५५॥

वीर्याधिपे = तृतीयभावेशे, जीवस्य = गुरोः, राशौ ( धनुर्मीनान्यतरे ) नवभागे = नवांशे, दृकाणे वा स्थिते यदि सुरार्चितेन = गुरुणा वीक्षिते = अवलोकिते, अथवा तत्केन्द्रकोणगृहगे=ततस्तृतीयभावेशात् केन्द्रकोणे ( १।४।७।१०।९।५ ) गृहे गतवति बलाढ्ये= सबले, अवनिजे=भौमे सति जातः कन्दफलमूलरसप्रियः स्यात् ॥ ५५ ॥

यदि तृतीय भावका स्वामी बृहस्पतिसे दृष्ट बृहस्पतिके राशि, नवांश या द्रेष्काणमें हो, वा बलवान् मंगल उसके ( ३ भावके ) केन्द्र-कोणमें हो तो जातक कन्द, मूल, फलके रसका प्रिय हो ॥ ५५ ॥

सोदरारातिगः शुक्रः शोकरोगभयप्रदः ।
तत्रैव शुभकारी स्यात्पुरतो यदि भास्करात् ॥ ५६ ॥

शुक्रः, सोदरारातिगः = तृतीये षष्ठे वा भावे स्थितः जातस्य शोकरोगभयप्रदो भवति । तत्रैव = तृतीये षष्ठे वा, भास्करात् पुरतः = सूर्यादग्रे विद्यमानः सञ्छुभकारी भवति । अर्थाच्छुक्रस्तृतीये षष्ठे वा भवेत्तथा सूर्यो द्वितीये पञ्चमे वा भवेदिति ॥ ५६ ॥

तृतीय तथा छठें स्थानमें शुक्र हो तो शोक-रोग-भय देनेवाला होता है। यदि वही शुक्र सूर्यके आगे हो तो शुभ होता है ॥ ५६ ॥

*गुरुशुक्रयुते भुक्तौ नाथे सौम्ययुतेक्षिते ।
बलवच्छुभदृष्टे वा त्वन्नदाता भवेन्नरः ॥ ५७ ॥
सौम्ये स्वोच्चं गते भुक्तौ सौम्यग्रहनिरीक्षिते ।
नाथे वैशेषिकांशे वा सुखभुक्तिप्रदो भवेत् ॥ ५८ ॥

भुक्तौ = द्वितीयभावे, गुरुशुक्रयुते, नाथे = भुक्तिनाथे = द्वितीयेशे, सौम्ययुतेक्षिते=शुभग्रहेण युतदृष्टे वा केनचिद्बलवता शुभेन दृष्टे जातो नरः परेषामन्नदाता भवति ॥

सौम्ये = बुधगुरुशुक्रान्यतमे स्वोच्चं गते सति भुक्तौ = द्वितीयभावे स्थिते, तस्मिन् केनचित् सौम्यग्रहेण निरीक्षिते, वा नाथे = द्वितीयभावेशे, स्ववैशेषिकांशे गतवति जातः सुखभुक्तिप्रदो भवति ॥ ५७-५८ ॥

गुरु और शुक्रसे युक्त भुक्ति ( २ रा भाव ) हो या द्वितीयेश शुभग्रहसे युक्त वा दृष्ट हो वा बलवान् शुभग्रह से दृष्ट २ रा भाव हो तो अन्नदाता हो ॥ ५७ ॥

बुध उच्चस्थ होकर २ रे भावमें शुभग्रहसे दृष्ट हो वा २ रे भावका स्वामी वैशेषिकांशमें हो तो शुभभुक्ति ( भोग ) देनेवाला होवे ॥ ५८ ॥

इति तृतीयभावफलानि ।

---

## अथ चतुर्थभावफलम् ।

वदन्ति विद्याजननीसुखानि सुगन्धगोबन्धुमनोगुणानि ।
महीपयानक्षितिमन्दिराणि चतुर्थभावप्रभवानि तज्ज्ञाः ॥ ५९ ॥

श्लोकेनानेन चतुर्थभावे विचारणीयानि वस्तून्याह-वदन्तीति । विद्या-जननी-सुख-सुगन्ध-गो-बन्धु-मनोगुण-राज्य-यान-भू-मन्दिराणि, इत्येतानि चतुर्थभाववशात्प्रभवानि तज्ज्ञाः = भावफलविदो वदन्ति । एषां विचारश्चतुर्थभावतः कर्त्तव्य इति ॥ ५९ ॥

विद्या, माता, सुख, सुगन्ध, गो, बन्धु, मनो गुण, राज्य, यान ( सवारी ), भूमि और गृह ये सब चतुर्थ भावसे विचारणीय हैं ऐसा पण्डित लोग कहते हैं ॥ ५९ ॥

### अथ विद्याविचारः

विद्याराशौ निजपतियुते सौम्ययुक्तेक्षिते वा
जातो विद्याविनयचतुरश्चन्द्रसूनौ बलिष्ठे ॥
दुःस्थे पापद्युचरसहिते पापदृष्टे तदीशे
विद्याहीनो भवति मनुजः पापराशिस्थिते वा ॥ ६० ॥
विद्यास्थानपजीवचन्द्रतनयाः षट्त्रिव्ययायुःस्थिता
विद्याबुद्धिविवेकहीनफलदा नीचारिगा वा यदि ॥
स्वोच्चस्वर्क्षगतास्त्रिकोणगृहगाः केन्द्रस्थिता वा यदि
श्रीविद्याविनयादियुक्तिनिपुणो राजाधिराजप्रियः ॥ ६१ ॥

श्लोकद्वयेन विद्याविचारः । विद्याराशौ = चतुर्थभावे, निजपतियुते = चतुर्थेशेन सहिते तस्मिन् शुभग्रहेण युक्तेक्षिते, वा तत्र ( विद्याराशौ ) चन्द्रसूनौ बलिष्ठे=बलवति बुधे गतवति जातः विद्यायां विनये च चतुरो भवति । तदीशे = चतुर्थेशे, दुःस्थे = षडष्टव्ययस्थे, पापग्रहेण सहिते पापदृष्टे चाथवा पापराशिस्थिते मनुजः विद्याहीनः = मूर्खो भवति ।

विद्यास्थानपजीवचन्द्रतनयाः = चतुर्थेश-गुरु-बुधाः, षट्त्रिव्ययायुः—( ६।३।१२।८

---

*एतत् ५७-५८ श्लोकद्वयं द्वितीयभावफलप्रकरणे समुचितम् ।

भावेषु ) स्थिताः, अथवा, नीचारिगाः = नीचे, शत्रुगृहे वा स्थिता यदि भवेयुस्तदा जातस्य विद्याबुद्धिविवेकेषु हीनफलदा भवन्ति । अस्मिन् योगे जातो विद्याबुद्धिविवेकैर्हीनो भवतीत्यर्थः । ते विद्यास्थानपजीवचन्द्रतनयाः यदि स्वोच्चे, स्वर्क्षे, लग्नात् त्रिकोण-( ९।५ ) गृहे स्थिता वा लग्नात् केन्द्रेषु ( १।४।७।१० ) स्थिता भवेयुस्तदा जातो नरः श्रीविद्याविनयादियुक्तिषु निपुणः, राजाधिराजप्रियश्च भवति ॥ ६०-६१ ॥

चतुर्थ स्थानमें चतुर्थेश शुभग्रहसे युत वा दृष्ट हो और बुध बलवान् हो तो जातक विद्या-विनय-से युक्त चतुर होवे । यदि चतुर्थेश दुष्टस्थानमें पापग्रहसे युक्त हो और पापदृष्ट हो वा पापराशिमें हो तो मनुष्य विद्यासे हीन हो ॥ ६० ॥

चतुर्थेश, बृहस्पति और बुध षष्ठ, तृतीय, द्वादश या अष्टम स्थानमें स्थित हों तो विद्या-बुद्धि-विवेककी हानि करते हैं और उक्त ग्रह नीच या शत्रुस्थानमें हों तो भी उक्त फल देते हैं । यदि वे उक्त ग्रह स्वगृही, स्वोच्च स्थान या त्रिकोणमें हों वा केन्द्रमें हों तो जातक श्री-विद्या-विनय आदिसे युक्त निपुण, तथा राजाधिराजका प्रिय होवे ॥ ६१ ॥

### अथ मातृविचारः

शुक्रे बलिष्ठे यदि वा शशाङ्के सौम्येक्षिते शोभनभागयुक्ते ॥
चतुष्टये, मातृगृहे बलाढ्ये मातुश्चिरायुष्ट्वमुदाहरन्ति ॥ ६२ ॥
मातृस्थानाधिपे षष्ठे व्यये वा बलवर्जिते ॥
लग्ने पापे पापदृष्टे मातृनाशं वदेद् बुधः ॥ ६३ ॥
क्षीणे चन्द्रेऽष्टमे षष्ठे व्यये वा पापसंयुते ॥
पाताले पापसंयुक्ते मातृहानिर्न संशयः ॥ ६४ ॥
मातृस्थानगते मन्दे पापग्रहनिरीक्षिते ।
रन्ध्रनाथेऽरिनीचस्थे मातृनाशं विनिर्दिशेत् ॥ ६५ ।
भ्रातृपुत्रगते पापे पातालेशेऽरिनीचगे ।
चन्द्रे पापसमायुक्ते मातृरोगं विनिर्दिशेत् ॥ ६६ ॥

इदानीं मातृविचारः क्रियते-शुक्र इत्यादिश्लोकपञ्चकेन । यदि शुक्रे, वा शशाङ्के = चन्द्रे, बलिष्ठे = पूर्णबले, सौम्येक्षिते = शुभग्रहावलोकिते, शुभग्रहभागयुक्ते, चतुष्टये=लग्नात्केन्द्रे गतवति, मातृगृहे = चतुर्थभावे, बलाढ्ये सति जातस्य मातुः चिरायुष्ट्वं (दीर्घायुष्ट्वं) विद्वांसः समुदाहरन्ति । अन्ये श्लोकाः स्पष्टार्था एवेति ॥ ६२-६६ ॥

यदि शुक्र वा चन्द्रमा बलवान् होकर शुभग्रहसे देखा जाता हो और शुभवर्गमें हो तथा केन्द्रमें हो, मातृगृह ( चतुर्थ ) सबल हो तो जातककी माता दीर्घायु होवे ॥ ६२ ॥

बलहीन सुखेश षष्ठ स्थानमें हो वा द्वादश स्थानमें हो लग्नमें पापदृष्ट पापग्रह हो तो पण्डित लोग माताका नाश ( मृत्यु ) कहते हैं ॥ ६३ ॥

क्षीण चन्द्रमा अष्टम, षष्ठ वा व्ययमें पापग्रहसे युक्त हो और चतुर्थ भाव पापग्रहसे युक्त हो तो माताकी हानि ( मृत्यु ) निःसंदेह होवे ॥ ६४ ॥

४ थे स्थानमें शनि हो, पापग्रह उसे देखता हो, अष्टमेश शत्रुगृहमें वा नीच स्थानमें हो तो माताका नाश होता है ॥ ६५ ॥

तृतीय और पञ्चम भावमें पाप ग्रह हो चतुर्थेश शत्रु राशिमें वा नीच राशिमें हो तथा चन्द्रमा पापग्रहके साथ हो तो माताको रोग हो ॥ ६६ ॥

षष्ठेश्वरेण सहितः सुखराशिनाथो धर्मस्थितो जनकमत्र विटं करोति ।
भाग्याधिपेन सहितो यदि मातृनाथः सौख्यस्थितो जनकमत्र विटं करोति ॥६७॥
षण्मातृपौ पितृस्थाने पितुश्च व्यभिचारदौ ।
मातृतातारिदेहेशैरेकस्थैः परजातकः ॥ ६८ ॥

इदानीं पितुर्विटत्वमाह—षष्ठेश्वरेणेति । सुखराशिनाथः = चतुर्थेश्वरः षष्ठेश्वरेण सहितो यदि धर्म-(नवम) स्थितो भवेत्तदात्रास्मिन् योगे जातस्य जनकं = पितरं विटं धूर्तं कामुकं करोति । यदि मातृनाथः = चतुर्थेशः भाग्याधिपेन नवमेशेन सहितः सन् सौख्यस्थितः = चतुर्थे एवं गतः स्यात्तदात्र जनक विट करोति । अत्र योगे जातो विटेनोत्पादितोऽपि वा जातस्य पिता विटो ज्ञेय इति ॥ ६७ ॥

षण्मातृपौ = षष्ठेश-चतुर्थेशौ, पितृस्थाने = लग्नान्नवमे भावे भवेतां तदा पितुः व्यभिचारदौ भवतः । अस्मिन् योगे जातस्य पिता व्यभिचारी ( परदारसक्तः ) भवति । मातृतातारिदेहेशैः = चतुर्थेश-नवमेश-षष्ठेश-लग्नेशैश्चतुर्भिर्ग्रहैरेकस्थः यत्र तत्रैकभावगतैर्जातः, परजातकः = अन्यपुरुषोत्पादितः भवति ॥ ६८ ॥

**सुखेश षष्ठेशके साथ धर्म भावमें स्थित हो तो जातकका पिता धूर्त होवे । यदि सुखेश नवमेशके साथ सौख्य स्थानमें हो तो पिता विट ( धूर्त ) हो ॥ ६७ ॥**

**षष्ठेश और सुखेश ९ वें में हों तो जातकके पिताको व्यभिचारी बनावें । सुखेश, नवमेश, षष्ठेश और लग्नेश एक भवनमें हों तो दूसरेसे जायमान जातकको जाने ॥ ६८ ॥**

| | | |
|---|---|---|
| २ / ३ | १ | १२ / ११ |
| ४ | विटो जनकः १ | १० |
| ५ / ६ | ७ | चं. बु. ९ / ८ |

| | | |
|---|---|---|
| २ / ३ | १ | १२ / ११ |
| ४ चं. बृ. | विटो जनकः २ | १० |
| ५ / ६ | ७ | ९ / ८ |

| | | |
|---|---|---|
| ३ / ४ | २ | १ / १२ |
| ५ | व्यभिचारी-पिता | ११ |
| ६ / ७ | ८ | १० सू. शु. / ९ |

| | | |
|---|---|---|
| २ / ३ | १ | १२ / ११ |
| ४ चं बृ. बु. मं. | परजातकः | १० |
| ५ / ६ | ७ | ९ / ८ |

एतानि कल्पितोदाहरणानि बालावबोधार्थं प्रदर्शितानीति ।

**पापेक्षिते पापयुते शशाङ्के दिवाकरे वा यदि केन्द्रराशौ ।**
**क्रूरे सुखे वा यदि पापदृष्टे जातो नरः स्याद्यदि मातृगामी ॥ ६९ ॥**
**चन्द्रे भृगौ वा केन्द्रस्थे पापदृष्टेऽथवा द्वयोः ।**
**क्रूरे सुखे मातृगामी यदि वा गुरुदारभाक् ॥ ७० ॥**

इदानीं जातस्य मातृगामित्वमाह–पापेक्षित इति । चन्द्रे वा सूर्ये पापग्रहेण दृष्टे युते च यदि केन्द्रराशौ गते, यदि वा क्रूरे = पापग्रहे सुखे तस्मिन् पापदृष्टे च जातो नरः मातृगामी = मात्रा सह पापकृद्भवेत् ।

चन्द्रे वा भृगौ = शुक्रे, केन्द्रस्थे तस्मिन् पापेन दृष्टे च, अथवा द्वयोः = चन्द्रशुक्रयोः

केन्द्रस्थयोः सुखे = चतुर्थस्थाने क्रूरे = पापाक्रान्ते सति जातो मातृगामी यदि वा गुरुदार-भाक् = गुरुपत्नीगामी भवतीति ॥ ६९-७० ॥

चन्द्रमा, वा सूर्य पापग्रहसे दृष्ट या युत केन्द्रमें हो वा क्रूर ग्रह चतुर्थमें हो और पापग्रह सुखको देखता हो तो वह जातक मातृगामी होवे ॥ ६९ ॥

चन्द्रमा वा शुक्र केन्द्रमें हो उसे पापग्रह देखता हो अथवा दोनोंसे ४ थे पाप ग्रह हों तो वह जातक मातृगामी वा गुरुपत्नी-गामी हो ॥ ७० ॥

सुखस्थे सारषष्ठेशे चन्द्रे माताऽन्यमैथुनी ।
व्यभिचारप्रदो मातुः सराहुर्दिननायकः ॥ ७१ ॥
शीतांशौ राहुकेतुभ्यां युक्ते नीचेन सङ्गमः ।
मन्दयुक्ते च शूद्रेण वैश्येन बुधयोगतः ॥ ७२ ॥
रवियुक्ते क्षत्रियेण मन्त्रिभ्यां द्विजसङ्गमः ।
एवं चन्द्रः कुजारीशयुक्तस्तत्फलदो भवेत् ॥ ७३ ॥

इदानीं मातुर्व्यभिचारयोगानाह—सुखस्थ इति त्रिभिः श्लोकैः । चन्द्रः भौम-षष्ठे-शाभ्यां सहितश्चतुर्थे भवेत्तदा माता परपुरुषेण ( जारेण ) मैथुनमुपयाति । सूर्यो राहुणा सहितश्चतुर्थे मातुः व्यभिचार-( परपुरषसङ्ग ) प्रदो भवति । चन्द्रे राहुणा केतुना वा युक्ते सुखस्थे सति मातुः नीचेन = हीनजातिपुरुषेण सह सङ्गमो वाच्यः । तथाभूते ( सुख-स्थे ) चन्द्रे मन्देन = शनिना युक्ते सति शूद्रेण, बुधयोगतः = बुधेन सहिते चन्द्रे वैश्येन, रविणा युक्ते क्षत्रियेण, मन्त्रिभ्यां = गुरुणा, शुक्रेण च युक्ते सति द्विजेन = ब्राह्मणेन मातुः सङ्गमो वाच्यः । एवं कुजारीशयुक्तः = भौमषष्ठेशाभ्यां सहितश्चतुर्थे स्थितश्चन्द्रस्तत्फलदः = व्यभिचारित्वकरः स्यादिति पूर्वमेव ( ७१ श्लो० ) कथितः ॥ ७१-७३ ॥

मङ्गलके सहित षष्ठेश और चन्द्रमा सुखमें हों तो उसकी माता दूसरेसे मैथुन करावे । राहुके साथ सूर्य ४ थे में हो तो भी उसकी माताको व्यभिचारिणी बनावे ॥ ७१ ॥

चन्द्रमा राहु या केतुसे युक्त ४ थे में हो तो नीचसे सङ्गम करे । शनिसे युक्त हो तो शूद्रसे । बुधसे युक्त हो तो वैश्यसे । सूर्यसे युक्त हो तो क्षत्रियसे और बृहस्पति या शुक्रसे युक्त हो तो ब्राह्मणसे जातककी माता मैथुन करावे । इसी प्रकार चन्द्रमा, मङ्गल और षष्ठेश से युक्त होनेका भी फल है ॥ ७१-७३ ॥

चन्द्रोऽनिष्टस्थानगः सानुजेशो जातस्यान्यस्तन्यपानं करोति ।
दुःस्थानस्थौ मातृपितृज्ञनाथौ पित्रोर्मृत्युर्लग्ननाथे बलाढ्ये ॥ ७४ ॥

इदानीं पित्रोरनिष्टयोगानाह—चन्द्र इत्यादिभिः । सानुजेशः = तृतीयभावपतिना सहितश्चन्द्रः, अनिष्टस्थानगतः स्यात्तदा जातस्यान्यस्तन्यपानं करोति । अस्मिन्योगे समुद्भूतो नरो मातृहीनो भवति । मातृपितृज्ञनाथौ = चतुर्थनवमभावपती, दुःस्थानगतौ स्याताम् , लग्न-नाथे = लग्नेशे च बलाढ्ये सति, पित्रोः = मातुः पितुश्च मृत्युः = मरणं भवतीति ॥ ७४ ॥

तृतीयेशके साथ चन्द्रमा अनिष्ट(८)स्थानमें हो तो जातक दूसरेका दूध पीता है । सुखेश और नवमेश दुष्ट स्थानमें हों तथा लग्ननाथ बली हो तो माता और पिता की मृत्यु होवे ॥ ७४ ॥

पितृकर्माधिपे दुःस्थे लग्नेशे बलसंयुते ।
पित्रोरनिष्टकारी स्यात् सीमन्तरहितोऽथवा ॥ ७५ ॥

पितृकर्माधिपे = पितुः ( नवमभावस्य ) कर्माधिपो दशमेशो लग्नात्षष्ठभावपतिरिति यावत्तस्मिञ्जन्मलग्नात् षष्ठेशे, दुःस्थे = षडष्टव्ययान्यतमगते, लग्नेशे = जन्मलग्नपतौ, बलसंयुते सति जातः पित्रोः = मातुः पितुश्चानिष्टकारी स्यात्, अथवा स्वयं सीमन्तनाम्ना गर्भसंस्कारेण रहितः स्यात् ॥ ७५ ॥

पितृभावका द्वादशेश ( याने अष्टमभावेश ) दुष्ट स्थानमें हो लग्नेश बलयुत हो तो माता और पिताका अनिष्ट करता है, वा वह जातक सीमन्तसे रहित होता है ॥ ७५ ॥

मातृस्थानेशलग्नेशौ तत्र कोणगतौ यदि ।
तदीशो लग्नगो माता पित्रा सह मृता भवेत् ॥ ७६ ॥

मातृस्थानेश-लग्नेशौ = यदि कोण-( ९।५ ) गतौ स्यातां, तदीशः = त्रिकोणेशः ( पञ्चमेशो नवमेशो वा ) लग्नगतः स्यात्तदा जातस्य माता पित्रा सह मृता भवेत् । तत्र दम्पत्योर्मरणं वाच्यमिति । ७६ ॥

यदि सुखेश और लग्नेश कोणमें हों उस कोणका स्वामी यदि लग्नमें हो तो जातककी माता पिताके साथ मरे ॥ ७६ ॥

मातृलग्नेशपितृपाः केन्द्रकोणस्थिता यदि ।
तद्दशान्तर्दशाकाले जनन्यास्त्वनुमृत्युदाः ॥ ७७ ॥

मातृलग्नेशपितृपाः=चतुर्थ-प्रथम-नवमभावेशाः यदि केन्द्रकोण-(१।४।७।१०।५।९) स्थिताः भवेयुस्तदा तद्दशान्तर्दशाकाले ( त्रयाणां मध्ये यो बलीयांस्तद्दशान्तर्दशायामिति ) जनन्यास्त्वनुमृत्युदा भवन्ति । तत्र मातुरनुपश्चात्पितुरग्रे मरणमित्यर्थः ॥ ७७ ॥

यदि सुखेश, लग्नेश और नवमेश केन्द्र या कोणमें स्थित हों तो उसकी दशा-अन्तर्दशा के समय माताकी मृत्यु होवे ॥ ७७ ॥

रवीन्दू पितृमातृस्थौ यदि तावनुमृत्युदौ ।
तदीशेक्षितयुक्ता वा रविसम्बन्धिनस्तथा ॥ ७८ ॥

यदि रवीन्दू = सूर्याचन्द्रमसौ, पितृमातृस्थौ = नवमगतौ, चतुर्थगतौ वा भवेतां तदा तौ अनुमृत्युदौ = जनन्याः पश्चात्पूर्वं पितुः मरणकारकौ भवतः । वा रविसम्बन्धिनः = सूर्यसम्बन्धिनः ( सूर्यस्य मित्रं, सूर्येण दृष्टः, सूर्ययुक्तः, सूर्यगृहस्थश्चैतेषां केचित् ) तदीशेक्षितयुक्ताः = चतुर्थेशनवमेशान्यतरेण दृष्टा युक्ताश्च तथाऽर्थादनुमृत्युदा भवन्ति ॥ ७८ ॥

यदि सूर्य और चन्द्रमा पिता माताके गृह ( नवम-चतुर्थ ) में हों तो दोनोंकी मृत्यु करें । वा उसके स्वामीसे दृष्ट या युत तथा सूर्य सम्बन्धी हों तो भी वही फल कहे ॥ ७८ ॥

ये मातृभावपतिकारकतत्समेता-स्तन्मातृराशिगतवीक्षितखेचरेन्द्राः ।
तेषामनिष्टकरखेटदशापहारे-जातस्य मातृमरणं प्रवदन्ति सन्तः ॥ ७९ ॥

इदानीं मातुः मरणदशामाह—य इति । मातृभावपतिः = चतुर्थेशः, कारकः = मातृकारकग्रहः ( चन्द्रः ) तत्समेतः = मातृभावगतश्चैते ये ग्रहास्तथा तन्मातृराशिगतग्रहेण वीक्षिता ये खेचरेन्द्राः=ग्रहाः, तेषां मध्ये अनिष्टकरस्य खेटस्य ( यो ग्रहो मात्ररिष्टदो भवति तस्य ) दशापहारे जातस्य मातुः मरणं सन्तः प्रवदन्ति ॥ ७९ ॥

चतुर्थेश, मातृकारक, उसके सहचर, चतुर्थस्थ और चतुर्थदर्शी इन ग्रहोंके बीच जो ग्रह सबसे अधिक अनिष्ट सूचक हो उसकी दशा अन्तर्दशामें जातककी माता मरण प्राप्त करती है ऐसा पण्डितोंने कहा है। सु. शा. कारः ॥ ७९ ॥

मार्तण्डस्फुटतो विशोध्य शशिनं तच्छेषराश्यंशके
जीवे भानुसुते च मातृमरणं तत्कोणगे वा नृणाम् ।
संशोध्यं यमकण्टकं हिमकराद्रन्ध्राधिपस्य स्फुटं
तद्राशौ रविनन्दने मृतिमुपैत्यम्बा तदंशे रवौ ॥ ८० ॥

मार्तण्डस्फुटतः शशिनं विशोध्य = सूर्यस्पष्टराश्यादितश्चन्द्रस्पष्टराश्यादिकमूनीकृत्य, तच्छेषराश्यंशके = तदवशेषमिते राशौ तन्नवांशे च गते जीवे = गुरौ, भानुसुते=शनैश्चरे

च, अथवा तत्कोणगे = तच्छेषराशेः कोणे ( ९।५ ) च गते जीवे शनौ च नृणां मातुर्मरण भवति । अत्रेदं विचिन्त्यम् । चन्द्रेण विरहिते सूर्ये यच्छेषं भवति तस्मिन् राशौ गतवति शनौ तच्छेषांशके गतवति गुरौ च जातस्य मातृमृत्युं विन्द्यात् । अथ हिमकराच्चन्द्राद्रन्ध्राधिपस्याष्टमस्थानपतेः स्फुटे ( जन्मकालीनचन्द्रादष्टमराशीशस्फुटराश्यादितः ) यमकण्टकः संशोध्य, तद्राशौ = शेषमिते राशौ सञ्जाते रविनन्दने = शनैश्चरे, तदंशे=शेषमितेंऽशे गतवति रवौ च तत्य जातस्याम्बा = जननी, मृतिं = मरणमुपैति ॥ ८० ॥

**स्पष्ट सूर्यमें स्पष्ट चन्द्रमाको घटाकर जो हो उसके राश्यंशमें वा इस शेषसे कोणमें जब बृहस्पति, शनि हों तो माताका मरण कहे। चन्द्रमासे आठवें राशिके स्वामीमें यमकण्टकको घटाकर जो शेष बचे उस राशिमें शनि और उस अंशमें सूर्य जब प्राप्त हो तब माता मृत्यु को प्राप्त होती है ॥ ८० ॥**

## अथ सुखविचारः ।

गोपुराद्यंशके जीवे सुखस्थानगतेऽपि वा ।
धनायवृद्धिभावेषु खेटेषु च सुखी भवेत् ॥ ८१ ॥
बुधदृष्टियुते सौख्ये सौम्यमध्यगतेऽथवा ॥
जीवराश्यंशके वाऽपि पुण्यकर्मरतः सदा ॥ ८२ ॥
सुखस्थितः शोभनराशिगो बली विलग्नसम्बन्धगुणाधिको यदि ।
तज्जातिवर्गेण सुखं निरन्तरं तदीयधातुश्रियमेति मानवः ॥ ८३ ॥
चतुर्थगो नीचसपत्नयातस्त्वनिष्टभावाधिपतिर्विलग्नात् ।
लग्नेशशत्रुर्यदि तत्प्रकोपात् शरीरसौख्यादिविनाशमाहुः ॥ ८४ ॥
चतुर्थभावस्थितदर्शिकारका बलान्विता यद्यतिसौख्यहेतुकाः ।
अनिष्टदा नीचसपत्नमूढगाः सुखं शुभेनाशुभमन्यखेचरैः ॥ ८५ ॥
चतुर्थगे भाग्यपतौ सशुक्रे बलाधिके स्याच्चिरकालभोगी ।
शुभान्विते रन्ध्ररिपुव्ययस्थे जातोऽल्पकालं समुपैति सौख्यम् ॥ ८६ ॥

इदानीं सुखविचारमाह—गोपुराद्यंशक इत्यादिपञ्चभिः श्लोकैः । तत्र श्लोकाः सरलार्था एवेत्युपेक्षिताः ॥ ८१–८६ ॥

**बृहस्पति गोपुराद्यंशमें हो वा सुख स्थानमें हो, द्वितीय एकादश और चतुर्थ भावोंमें और ग्रह हों तो सुखी हो ॥ ८१ ॥**

**सुख भावमें बुधकी दृष्टि हो, वा ४ था भाव दो शुभग्रहोंके बीचमें वा बृहस्पतिके राश्यंश में हो तो सदा पुण्यकर्ममें रत हो ॥ ८२ ॥**

**शुभराशिगत बलवान् ग्रह चौथे भावमें लग्नसे सम्बन्ध करनेवाला तथा अधिक गुण ( शुभबिन्दु ) युक्त हो तो उस ग्रहकी जाति वाले मनुष्योंसे उसे सदा सुख मिले और उस ग्रहकी धातुसे उसे सम्पत्ति प्राप्त हो । ( सु० शा० कारः ) ॥ ८३ ॥**

**लग्नसे अष्टम भावका स्वामी चतुर्थमें नीच या शत्रु गृहमें प्राप्त हो और वह यदि लग्नेसका शत्रु हो तो उसके प्रकोपसे शरीर आदिके सौख्यका नाश होवे ॥ ८४ ॥**

**चतुर्थ भावस्थित, चतुर्थदर्शी, चतुर्थका कारक, बलवान् हों तो अत्यन्त सुख होवे । यदि वे सब नीच, शत्रु गृह या अस्तंगत हों तो अनिष्ट देनेवाले होते हैं । वे तीनों ग्रह शुभ हों तो सुख, अन्यसे अशुभ होता है ॥ ८५ ॥**

**चतुर्थ स्थानमें नवमेश शुक्रके साथ हो तथा विशेष बलवान् हो तो बहुत काल तक भोगी हो । शुभ ग्रहसे युक्त भाग्येश यदि अष्टम, षष्ठ वा व्ययमें हो तो अल्प समय ही सुख होता है ॥ ८६ ॥**

## अथ सुखादिविचारनिर्णयः ।

सुखचिन्ता गृहेज्याभ्यां मातृचिन्ता सुखेन्दुतः ।
सुगन्धं गृहशुक्राभ्यां वस्त्रवाहनभूषणम् ॥ ८७ ॥

इदानीं सुख-मातृ-सुगन्ध-वस्त्र-वाहनभूषणानां विचारविवरणमाह-सुखचिन्तेति । गृहं चतुर्थभावः, इज्यो बृहस्पतिस्ताभ्यां सुखचिन्ता = सुखस्य विचारः, सुखेन्दुतः = चतुर्थभावचन्द्राभ्यां मातृविचारः, चतुर्थभावशुक्राभ्यां सुगन्धविचारः, तथा ताभ्यामेव वस्त्र-वाहन-भूषणानां च विचारः प्रकर्त्तव्यः । चतुर्थभावस्य तत्तद्ग्रहस्य च शुभाशुभस्थितिपरत्वेन सुखादीनां शुभाशुभत्वं विनिर्दिशेदिति ॥ ८७ ॥

सुख (४) भावसे और गुरुसे सुखकी चिन्ता करे । सुख (४) भाव और चन्द्रमासे माता की चिन्ता करे । सुख भाव और शुक्रसे सुगन्ध-वस्त्र-वाहन-भूषणकी चिन्ता करे ॥ ८७ ॥

## अथ सुगन्धविचारः ।

सुखेश्वरे शोभनराशियुक्ते शुक्रेण दृष्टे सति संयुते वा ।
अरातिनीचग्रहदृष्टिहीने सुगन्धमाल्यादिसुखं समेति ॥ ८८ ॥

इदानीं सुगन्धमाल्यादिविचारः क्रियते । सुखेश्वरे = चतुर्थभावेशे, शोभनराशियुक्ते = शुभराशिस्थिते तस्मिन् शुक्रेण दृष्टे वा संयुते तथा तत्र अरातिनीचग्रहदृष्टिहीने = शत्रुगृहगतेन नीचगतेन च ग्रहेणानावलोकिते सति जातः सुगन्धद्रव्याणां माल्यादीनां च सुखं समेति ॥ ८८ ॥

चतुर्थेश शुभ राशि में हो, उसे शुक्र देखता हो वा वह शुक्रसे युक्त हो तथा शत्रु, नीच गत ग्रहकी दृष्टिसे रहित हो तो जातक सुगन्ध, माला, आभरणादिके सुखसे युक्त होवे ॥ ८८ ॥

## अथ वस्त्रविचारः ।

वीर्यान्विते शीतकरे सुवस्त्रं साहिध्वजे जीर्णतरं समेति ।
कौशेयकं जीवयुते च रत्नचित्रं सशुक्रे सशनौ तु कृष्णम् ॥ ८९ ॥

इदानीं वस्त्रविचारः क्रियते । शीतकरे = चन्द्रे, वीर्यान्विते = पूर्वोक्तबलैर्युक्ते सुवस्त्रं = उत्तमं वासः प्राप्नोति जातकः । तथा चन्द्रे साहिध्वजे = राहुणा केतुना वा युक्ते सति जीर्णतरं वस्त्रं प्राप्नोति । चन्द्रे जीवेन = गुरुणा युते कौशेयकं ( Silk ) वस्त्रं प्राप्नोति । चन्द्रे सशुक्रे = शुक्रेण सहिते रत्नचित्रं = रत्नादिभिर्विचित्रत्वमुपगतं वस्त्रं प्राप्नोति । सशनौ = शनियुक्ते चन्द्रे तु कृष्णं वस्त्रं जातः समेति । अत्र चन्द्रे सूर्य-कुज-बुधयुक्ते वस्त्रं नोक्तमिति तत्र सूर्ययुते चन्द्रे स्फुटितं, कुजयुते दग्धं, बुधयुते विविधशिल्पयुतं वस्त्रं वाच्यम् ।

Notes—८७ श्लोके 'गृहशुक्राभ्यां वस्त्रवाहनभूषणमि'त्युक्तम् । परश्चात्र चन्द्रतो वस्त्रविचारः कृत इति प्रतिज्ञाभङ्ग इवाभातीति चिन्त्यम् ॥ ८९ ॥

जन्मकालमें बलवान् चन्द्रमा हो तो सुन्दर वस्त्र प्राप्त हो और चन्द्रमा राहु-केतु से युत हो तो जीर्ण वस्त्र प्राप्त हो । बृहस्पतिसे युक्त हो तो कौशेय ( रेशमी ), शुक्रसे युक्त हो तो रत्नादि चित्रित, शनिसे युक्त हो तो काला वस्त्र प्राप्त होवे ॥ ८९ ॥

## अथ पशुविचारः ।

शुक्रेन्दुवर्गसहिते सुखराशिनाथे शुक्रेण शीतरुचिना सहितेक्षिते वा ।
नीचारिपापगगनाटनदृष्टिमुक्ते पश्वादिवित्तमखिलं लभते मनुष्यः ॥ ९० ॥

इदानीं पश्वादिवित्तविचारः क्रियते । सुखराशिनाथे = चतुर्थभावेशे शुक्रचन्द्रयोरन्यतरस्य वर्गे स्थिते तत्र शुक्रेण चन्द्रेण वा युतदृष्टे तस्मिन् नीचारिगतानां पापगगनाटनानां

( पापग्रहाणां ) च दृष्टिमुक्ते=दृष्टिरहिते सति मनुष्यः अखिलं पश्वादिवित्तं ( गो-महिषी-घोटक-गजादिधनं ) लभते ॥ ९० ॥

सुखेश शुक्र या चन्द्रमाके वर्गमें हो शुक्र और चन्द्रमासे युक्त हो वा देखा जाता हो, नीच तथा शत्रु गृहगत या पापग्रहसे दृष्ट न हो तो मनुष्य सम्पूर्ण पशु आदि धनको प्राप्त करे ॥९०॥

अथ बन्धुविचारः।

बन्धुस्थानेश्वरे सौम्ये सौम्यग्रहनिरीक्षिते ।
कारके बलसम्पूर्णे बन्धुपूज्यो भवेन्नरः ॥ ९१ ॥
बन्धूपकर्ता तन्नाथे केन्द्रकोणायसंयुते ।
वैशेषिकांशसंयुक्ते पापदृग्योगवर्जिते ॥ ९२ ॥
बन्धुद्वेषी भवेन्नित्यं पापाक्रान्ते रसातले ।
नीचास्तखेटसंयुक्ते शुभदृग्योगवर्जिते ॥ ९३ ॥

इदानीं बन्धुविचारः क्रियते। तत्र श्लोकाः सरलार्था इति ॥ ९१-९३ ॥

चतुर्थेश शुभग्रह हो, शुभग्रह उसे देखते हों और सुखका कारक बलसे परिपूर्ण हो तो मनुष्य बन्धुवोंसे पूज्य होवे ॥ ९१ ॥

चतुर्थेश केन्द्र, कोण या लाभ स्थानमें हो तथा वैशेषिकांशमें हो और पापग्रहसे दृष्ट युत न हो तो बन्धुओंका उपकार करनेवाला होवे ॥ ९२ ॥

यदि ४ थे भावमें पापग्रह नीचगत या अस्तंगत ग्रहके साथ बैठा हो और उसके ऊपर शुभग्रह का दृष्टि-योग नहीं हो तो वह सदा मित्रोंका विरोधी होता है। (सु० शा० कार) ।

अथ मनोविचारः।

सपापे रन्ध्रपे सौख्ये कपटी पापसंयुते ।
स्वोच्चमित्रस्वर्गस्थे निष्कापट्यं शुभेक्षिते ॥ ९४ ॥
विशुद्धहृदयः शान्तो हृदयेशे बलान्विते ।
गोपुराद्यंशके वाऽपि मृद्वंशादिसमन्विते ॥ ९५ ॥

अत्र श्लोकद्वयेन जातस्य मनोगुणविचारः कृतः। तत्र श्लोकौ स्फुटार्थाविति ॥९४-९५॥

अष्टमेश पापग्रहसे युत हो पापग्रह सुखमें हो तो कपटी हो। वह अष्टमेश यदि स्वोच्च-मित्र-स्ववर्गमें हो, शुभग्रह उसे देखते हों तो कपटी न हो ॥ ९४ ॥

हृदयेश ( चतुर्थेश ) बलवान् हो, गोपुरांश वा मृद्वंश में हो तो विशुद्ध हृदय तथा शान्त चित्त होवे ॥ ९५ ॥

अथ वाहनविचारः।

वाहनेशे बलयुते यानराशौ बलान्विते ।
शुभग्रहेण संदृष्टे वाहनादि फलं वदेत् ॥ ९६ ॥
वाहनेशे वाहनस्थे सेन्दुजे शुभवीक्षिते ।
शुभखेचरराश्यंशे वाहनादि फलं वदेत् ॥ ९७ ॥
चन्द्रो विलग्नसम्बन्धी वाहनेशसमन्वितः ।
तुरङ्गवाहनं तस्य वदन्ति मुनिपुङ्गवाः ॥ ९८ ॥
द्वितीये वा चतुर्थे वा चन्द्रे शोभनराशिगे ।
शुभखेचरसंयुक्ते समुपैत्यश्ववाहनम् ॥ ९९ ॥
सेन्दौ चतुर्थाधिपतौ विलग्नेलग्नेश्वरेणापि युतेऽश्वलाभम् ।
शुक्रेण युक्ते यदि वाहनेशो देहान्विते वा नरवाहनं स्यात् ॥ १०० ॥
आन्दोलिकाभरणदौ सितपूर्णचन्द्रौ केन्द्रत्रिकोणगृहगौ बलिनौ भवेताम् ।

रक्ताम्बराभरणदः सुरपूजितर्क्षे चन्द्रे सुरेन्द्रसचिवेक्षितसंयुते वा ॥ १०१ ॥
आन्दोलिकातुरगलाभमुपैति जातः शुक्रेन्दुयानपतयस्तनुनाथयुक्ताः ।
एकत्र देवगुरुयानपचन्द्रशुक्राः केन्द्रत्रिकोणगृहगाश्चतुरङ्गयानम् ॥ १०२ ॥
वाहनेशे गुरुयुते चतुरङ्गाख्यवाहनम् ।
यानेशे सशुभे माने चामरच्छत्रसंयुतः ॥ १०३ ॥
सुखेश्वरे केन्द्रगते तदीशे लग्नस्थिते वाहनयोगवन्तः ।
कर्मेश्वरे लाभगते तदीशे कर्मस्थिते भूषणयानवन्तः ॥ १०४ ॥

अधुना वाहनविचारमाह-वाहनेश इत्यादि-नवभिः श्लोकैः । तत्र श्लोकाश्च सरलार्था इति न व्याख्याताः ॥ ९६-१०४ ॥

चतुर्थेश और चतुर्थ भाव बली हों शुभग्रहसे दृष्ट हों तो वाहन आदिका सुख हो ॥९६॥

सुखेश सुखमें बुधके साथ हो शुभग्रह उसे देखते हों शुभग्रहके राशि या अंशमें हो तो वाहनादिकी प्राप्ति कहे ॥ ९७ ॥

चन्द्रमा लग्नका संबन्धी हो, सुखेशसे युक्त हो तो उस जातकको घोड़ाका वाहन हो ऐसा श्रेष्ठ मुनि लोग कहते हैं ॥ ९८ ॥

द्वितीय वा चतुर्थ भावगत शुभराशिमें चन्द्रमा हो शुभग्रहसे युक्त हो तो उस जातकको घोड़ा वाहन मिले ॥ ९९ ॥

चतुर्थेश चन्द्रमाके साथ लग्नमें हो लग्नेश्वरसे भी युक्त हो तो उसे घोड़ेका लाभ हो। यदि चतुर्थेश शुक्रसे युक्त लग्नमें हो तो उसे नरवाहन प्राप्त हो ॥ १०० ॥

बलवान् शुक्र तथा पूर्ण चन्द्रमा केन्द्र या त्रिकोणमें प्राप्त हों तो आन्दोलिका और आभरणको देवें। वे दोनों यदि बृहस्पतिके गृहमें हों तो रक्तवस्त्र और भूषणको देवें। चन्द्रमा यदि बृहस्पतिसे दृष्ट युत हो तो भी यही फल जाने ॥ १०१ ॥

शुक्र, चन्द्रमा और चतुर्थेश लग्नेशके साथ हो तो आन्दोलिका ( आटाली ) और तुरङ्ग ( घोड़ा ) का लाभ हो। बृहस्पति, सुखेश, चन्द्रमा और शुक्र एकत्र होकर केन्द्र या त्रिकोण गृहमें हों तो चतुरंग यान ( सवारी ) होवे ॥ १०२ ॥

चतुर्थेश बृहस्पतिसे युक्त हो तो चतुरंग वाहन प्राप्त हो। चतुर्थेश शुभग्रहके सहित १० वें हो तो जातक चामर छत्रसे युक्त हो ( राजा हो ) ॥ १०३ ॥

चतुर्थेश केन्द्रमें हो और उस केन्द्रका स्वामी लग्नमें हो तो वह वाहनवाला होता है। दशमेश एकादशमें हो और लाभेश १० वें में हो तो भूषण तथा सवारीवाला होवे॥१०४॥

## अथ राज्यविचारः ।

यानेशे लाभराशिस्थे सुखे वा लाभगे कुजे ।
अथवा भौमराशिस्थे राज्यप्राप्तिर्न संशयः ॥ १०५ ॥

राज्यप्राप्तियोगमाह—यानेश इति । यानेशे = चतुर्थेशे लाभराशिस्थे, कुजे सुखे = चतुर्थे वा लाभगे, अथवा भौमराशिस्थे मेषवृश्चिकान्यतरराशिगते अतस्य राज्यप्राप्तिर्भवतीत्यत्र संशयो न ।

Notes—'अथवा भौमराशिस्थे' इत्यस्यार्थः-भौमे भौमराशिस्थे, किं वा यानेशे भौमराशिस्थे इत्यपि भवितुं युज्यते । तथा च सर्वार्थचिन्तामणौ—

"क्षेत्रेश्वरे लाभगते बलाढ्ये बन्धौ भवे वा क्षितिसूनुयुक्ते ।
भूसूनुराशौ यदि वा सुखेशे राज्यार्थसौख्याभरणादियानम् ॥ इति ॥ १०५ ॥

चतुर्थेश ११ वें वा ४ थे में हो मंगल लाभमें हो वा उन स्थानोंमें मंगलकी ( १।८ ) राशि हो तो राज्य प्राप्त होता है इसमें संशय नहीं है ॥ १०५ ॥

लग्नाद्वाहनराशिगस्तदधिपस्तद्वीत्तकश्च त्रयः
स्वोच्चस्वर्क्षसुहृद्गृहेषु बलिनः केन्द्रत्रिकोणायगाः ।

दीर्घायुः शयनासनाम्बरबहुक्षेत्राणि सन्मन्दिरं
बन्धुस्नेहमनोज्ञवाहनयशःसौख्यानि कुर्वन्ति ते ॥ १०६ ॥

लग्नादिति । जन्मलग्नाद् वाहनराशिगः = चतुर्थभावगतः, तदधिपः = चतुर्थभावेशः। तद्वीक्षकः = चतुर्थभावद्रष्टा चैते त्रयो ग्रहा बलिनः, स्वोच्चराशिषु, स्वराशिषु, मित्रगृहेषु व्यवस्थिताः केन्द्रत्रिकोणायेषु ( १।४।७।१०।९।५।११ ) गता भवेयुस्तदा ते जातस्य दीर्घायुः शयनासनाम्बरबहुक्षेत्राणि सन्मन्दिरं बन्धुस्नेहमनोज्ञवाहनयशःसौख्यानि कुर्वन्ति ॥

**चतुर्थस्थ, चतुर्थेश और चतुर्थदर्शी ये तीनों ग्रह यदि स्वोच्च, स्वगृह या मित्रगृहमें प्राप्त होकर बली हों, और तीनों ग्रह केन्द्र, त्रिकोण या एकादशमें हों तो वे ग्रह जातककी दीर्घायु और शयन-आसन-वस्त्र-बहुतक्षेत्र-उत्तमगृह-बन्धु स्नेह-मनोज्ञ वाहन-यश-और सौख्य को करते हैं ॥ १०६ ॥**

स्वोच्चराशिगतश्चान्द्रिः केन्द्रकोणसमन्वितः ।
विद्यावाहनसम्पत्तिं करोति विपुलं धनम् ॥ १०७ ॥

स्वोच्चेति । चान्द्रिः = बुधः, स्वोच्चराशिगतः = कन्यागतः सन् केन्द्रे ( १।४।७।१० ) कोणे वा ( ५।९ ) समन्वितो भवेत्तदा विद्यावाहनसम्पत्तिं विपुलं धनं च करोति ॥१०७॥

**बुध अपनी उच्च राशिमें होकर केन्द्र या कोणमें हो तो विद्या, वाहन, सम्पत्ति और विपुल धन करनेवाला होता है ॥ १०७ ॥**

लग्नेशात्सुखनाथतद्भवनगौ भाग्येशभाग्यस्थितौ
चत्वारः शुभवर्गगाः सुबलिनस्ते लग्नसम्बन्धिनः ।
अन्योन्याश्रितवीक्षिता यदि महीपालश्चिरायुः सुखी
तेजस्वी चतुरङ्गयानविपुलश्रीराजचिह्नाङ्कितः ॥ १०८ ॥

लग्नेशादिति । लग्नेशो यत्र तिष्ठति तस्मात्सुख-( चतुर्थ ) राशेर्नाथः = चतुर्थेशः, तद्भवनगः = लग्नेशाच्चतुर्थभावगतश्चैतौ तथा लग्नेशाद्भाग्येशः = नवमेशः, भाग्यस्थितः = नवमगतश्चैतौ चेति चत्वारो ग्रहाः शुभवर्गगाः सुबलिनस्तथा ते यदि लग्नसम्बन्धिनः स्युरेवमन्योन्याश्रितवीक्षिताः = परस्परं राशिस्था दृष्टा वा भवेयुस्तदा जातो महीपालः=राजा, चिरायुः = दीर्घजीवी, सुखी, तेजस्वी, चतुरङ्गयानविपुलश्रीराजचिह्नाङ्कितः भवति ॥ १०८ ॥

**चतुर्थभावगत, चतुर्थेश, नवमेश और नवमभावस्थ ये चारो ग्रह बली हों शुभवर्गमें हों, वे लग्नका सम्बन्धिक हों, परस्पर गृहाश्रित और परस्पर देखते हों तो जातक दीर्घायु, सुखी, तेजस्वी, चतुरङ्ग सवारी, विपुल लक्ष्मी और राजचिह्नसे अङ्कित राजा होवे ॥ १०८ ॥**

ग्रहत्रयं स्थानबलाधिकं चेद्विचित्ररत्नाभरणादि यानम् ।
खेटद्वये वीर्ययुते विलग्ने तदीयपाके समुपैति सौख्यम् ॥ १०९ ॥

चेद्यदि पूर्वं ( १०८ श्लोके ) कथितग्रहचतुष्टये ग्रहत्रयं स्थानबलेनाधिकं स्यात् तदा जातो विचित्ररत्नाभरणादि, यानं = वाहनसौख्यं च प्राप्नोति । अथ च खेटद्वये वीर्ययुते विलग्ने च गतवति सति जातस्तदीयपाके = तद्ग्रहदशाकाले सौख्यं समुपैति ॥ १०९ ॥

**पूर्वोक्त ४ ग्रहोंमें तीन ग्रह स्थानबली हों तो अनेक रत्नोंका आभरण और यान (सवारी) प्राप्त होवें । यदि दो ग्रह बलवान् होकर लग्नमें हों तो उनकी दशामें सौख्य प्राप्त हो॥१०९॥**

उक्तस्थानत्रयेष्वेको बली वाहनराशिपः ।
लग्नलग्नेशसम्बन्धी तद्दशा वाहनप्रदा ॥ ११० ॥

एक एव वाहनराशिपः ( चतुर्थेशः ) बली सन् उक्तस्थानत्रयेषु ( १।४।९ भावेषु ) अन्यतमे स्थितो भवेत्तथा लग्नस्य लग्नेशस्य वा सम्बन्धी स्यात्तदा तद्दशा वाहनप्रदा भवन्ति । तद्दशायां तस्य वाहनलाभो वाच्य इति ॥ ११० ॥

उक्त तीनों स्थानों ( ११४१९ ) में बलवान् एक भी चतुर्थेश लग्न या लग्नेशका सम्बन्धी हो तो उसकी दशा वाहन देनेवाली होती है ॥ ११० ॥

चतुर्थधर्मायधनाधिनाथा विलग्नसम्बन्धिबलाधिकाश्चेत् ।
तदीयपाके समुपैति राज्यं क्रमेण भाग्यं धनलाभमर्थम् ॥ १११ ॥

चतुर्थेश-धर्मेश-लाभेश-धनेशाः विलग्नसम्बन्धिनः पूर्णबलाश्च यदि भवेयुस्तदा तदीयपाके क्रमेण राज्यं, भाग्यम्, धनलाभम्, अर्थम् समुपैति । विलग्नसम्बन्धिनो बलयुक्तस्य चतुर्थेशस्य दशायां राज्यम् । तथाभूतस्य धर्मेशस्य दशायां भाग्यम् । तथा भूतस्य लाभेशस्य दशायां धनलाभम् । तथाभूतस्य धनेशस्य दशायाम् अर्थं समुपैति ।

Notes—अत्र सम्बन्धो बहुसम्मतश्चतुर्विधः प्रोक्तः-स्थानसम्बन्धः १, दृष्टिसम्बन्धः २. मिश्रसम्बन्धः ३. सहचरसम्बन्धः ४. इति ॥ १११ ॥

चतुर्थ, नवम, एकादश और द्वितीयके स्वामी लग्नके सम्बन्धी और अधिक बलवाले हों तो उनकी दशामें क्रमसे राज्य-प्राप्ति, भाग्योदय, धनलाभ और कार्यसिद्ध होते हैं ॥१११॥

ते चत्वारोऽधिकबलयुता देहसम्बन्धिनश्चे-
देतत्सर्वं भवति विपुलं दुर्बला दुःखदाः स्युः ।
मिश्रं मिश्रैस्तनुपरिभवः कारको भावनाथो
भावाक्रान्तो विगतबलिनश्चेदतिक्लेशदास्ते ॥ ११२ ॥

ते चत्वारः = चतुर्थधर्मायधनाधिनाथा इति शेषं स्पष्टमेवेत्यलम् ॥ ११२ ॥

पूर्वोक्त चार ( ४।९।११।२ ) स्थानोंके स्वामी अधिक बलयुक्त तथा लग्नके सम्बन्धी हों तो उन भावोंके सम्बन्धी फल पूर्ण रूपसे होते हैं । परन्तु यदि वे ही दुर्बल हों तो दुःख देने वाले होते हैं। मिश्रित हों तो मिश्र फल देते हैं। भावका कारक, भावनाथ और भावगत ग्रह बलसे हीन हों तो विशेष कष्टदायक होते हैं ॥ ११२ ॥

वाहनेशेऽरिनीचस्थे दुःस्थे धर्माधिपेक्षिते ।
सुदुर्वाहनसम्प्राप्तिश्चलवाहनताऽपि वा ॥ ११३ ॥
धर्मकर्मविलग्नस्थास्तुङ्गोपगशुभग्रहाः ।
लग्नाधिपेन संदृष्टा यानान्ते दुःखमाप्नुयात् ॥ ११४ ॥

वाहनेशे = चतुर्थेशे शत्रुगृहे, नीचे, दुःस्थे ( षडष्टव्ययगे ) च तस्मिन्धर्माधिपेन दृष्टे जातस्य दुष्टवाहनस्य सम्प्राप्तिः, अपि वा चलवाहनता = चञ्चलवाहनाप्तिः वक्तव्या । अत्र दुष्टसैन्यस्य चलसैन्यस्य वा प्राप्तिरपि वक्तव्या । तथा सर्वार्थचिन्तामणौ—

"दुःस्थे विमूढे यदि वाहनेशे भाग्येश्वरेणापि समीक्षिते वा ।
दुर्वाहिनी चञ्चलवाहिनी वा लाभाधिपेनापि समीक्षिते वा" इति ॥

तुङ्गोपगशुभग्रहाः = स्वकीयोच्चराशिगताः शुभग्रहाः, यदि धर्मकर्मविलग्नस्था भवेयुस्तथाभूता लग्नाधिपेन संदृष्टाश्च भवेयुस्तदा जातो यानान्ते = वाहनान्ते दुःखमाप्नुयात् । ईदृग्योगे जातः विरामावसरे वाहनादितो निपातेन कष्टभाग्भवति। एवमेव सर्वार्थचिन्तामणौ-

"कर्मभाग्यविलग्नेषु स्वोच्चे सौम्यग्रहाः स्थिताः ।
दृष्टेषु वा लग्नपेन यानान्ते दुःखमाप्नुयात्" इति ॥ ११३-११४ ॥

चतुर्थेश शत्रुस्थान या नीचस्थानमें होकर दुष्ट स्थानमें हो उसको नवमेश देखता हो तो खराब वाहन प्राप्त हो वा चल वाहन प्राप्त हो ॥ ११३ ॥

नवमें, दशवें और लग्नमें स्थित, उच्चगत शुभग्रह लग्नेशसे संदृष्ट हो तो सवारीके अन्तमें दुःख प्राप्त होता है ॥ ११४ ॥

जीवे वा सुखपे शुभग्रहयुते लग्नात्तपःस्थानगे
सौम्यर्क्षे नरवाहनं चिरतरं राजप्रतापान्वितम् ॥
दुःस्थे पापयुतेऽस्तनीचरिपुगे यानादिभाग्यं नहि
स्वर्क्षे सर्वबलाधिके चिरसुखं चान्दोलिकारोहणम् ॥ ११५ ॥
बन्धुकर्मगृहाधीशौ लाभस्थानगतेक्षकौ ।
बलवन्तौ यदि स्यातां सर्वभाग्यफलप्रदौ ॥ ११६ ॥
लाभस्थौ सुखभाग्येशौ पश्यन्तौ वा सुखस्थलम् ।
वाहिनीसर्वभाग्याढ्यो राजप्रीतिकरो भवेत् ॥ ११७ ॥
धर्मवाहनराशीशौ लग्नसम्बन्धिनौ यदि ।
जीवदृष्टियुतौ तस्य राजवश्यादिभूषणम् ॥ ११८ ॥
शुभवाहनराशीशौ शुभखेचरसंयुतौ ।
बहुसेनाधिपः श्रीमान् बलिनौ यदि जायते ॥ ११९ ॥
भाग्यस्थिते वाहनराशिनाथे सशुक्रजीवे शुभखेटराशौ ।
भाग्याधिपे कोणचतुष्टये वा बहुत्वदेशाभरणार्थयानम् ॥ १२० ॥
कामारियानसहजतपोलग्नव्ययेश्वराः ।
सुखाधिपेन संयुक्तास्त्वसंख्याकरदेशभाक् ॥ १२१ ॥
सुखाधिपो देवगुरुः सितो वा बली विलग्नान्नवमोपयातः ।
त्रिकोणकेन्द्रोपगतः शुभेशः समेति जातो बहुवाहनानि ॥ १२२ ॥
सशुक्रजीवो गेहेशो भाग्यस्थो भाग्यपे सुखे ।
केन्द्रत्रिकोणयोर्वाऽपि बहुवाहनदेशभाक् ॥ १२३ ॥

स्पष्टार्थाः किलैते नव श्लोका अतो न व्याख्याता इति ॥ ११५-१२३ ॥

बृहस्पति वा चतुर्थेश शुभग्रहसे युक्त लग्नसे नववें भावमें हो और सौम्यराशिमें हो तो बहुत काल पर्यन्त राजप्रतापसे युक्त नरवाहन प्राप्त हो। यदि गुरु या चतुर्थेश दुष्टस्थान, पापग्रह युक्त, अस्त, नीच या शत्रु गृहमें हो तो सवारी आदि भाग्यमें नहीं है। यदि स्वगृहमें अति बलवान् हो तो बहुत काल तक सुख आन्दोलिका पर निवास करे ॥ ११५ ॥

यदि चतुर्थेश और दशमेश बलवान् होकर लाभ स्थानमें हों वा लाभस्थानको देखते हों तो सर्वभाग्यके दाता होते हैं ॥ ११६ ॥

चतुर्थेश और नवमेश लाभ स्थानमें हों वा चतुर्थ स्थानको देखते हों तो सैन्ययुक्त सर्वभाग्यसे युक्त और राजाको प्रसन्न करनेवाला हो ॥ ११७ ॥

यदि धर्मेश और सुखेश लग्नके सम्बन्धी हों और उन्हें बृहस्पति देखता हो तो जातक को राजासे मान और भूषण प्राप्त हो ॥ ११८ ॥

नवमेश और वाहनेश ( चतुर्थेश ) यदि बलवान् हों शुभग्रहसे युक्त हों तो बहुत सेना का मालिक और श्रीमान् होवे ॥ ११९ ॥

वाहनेश भाग्यस्थानमें प्राप्त हो, शुक्र और बृहस्पतिके साथ हो और वह शुभग्रहकी राशि हो वा नवमेश कोण या केन्द्रमें हो तो उसे बहुत देश, आभरण, सवारी औ. धन प्राप्त हो ॥ १२० ॥

सप्तम, षष्ठ, चतुर्थ, तृतीय-नवम लग्न और व्यय ( १-३-४-६-७-९-१२ ) के स्वामी सुखेशके साथ हों तो जातक असंख्य देशोंको प्राप्त करे ॥ १२१ ॥

सुखेश बृहस्पति, वा शुक्र बलवान् होकर लग्नसे नववें भावमें प्राप्त हो, नवमेश त्रिकोण वा केन्द्रमें हो तो जातक बहुत वाहनसे युक्त होवे ॥ १२२ ॥

चतुर्थेश शुक्र और गुरुके साथ नवममें हो और नवमेश चतुर्थमें हो वा केन्द्र-त्रिकोणमें हो तो बहुत वाहन और देशवाला होवे ॥ १२३ ॥

अथ राजयोगाः—

लग्नकेन्द्रस्थिते सौम्ये धर्मे तुङ्गगृहाश्रिते ।
धनेशे केन्द्रभावस्थे योगः सिंहासनप्रदः ॥ १२४ ॥
भाग्ये शुभेक्षिते केन्द्रे शुभैः सह धनाधिपे ।
उच्चग्रहे द्वितीयस्थे जन्म सिंहासनप्रदम् ॥ १२५ ॥
लग्नवाहनभाग्येशाः कर्मस्थाः कर्मपस्तनौ ।
लग्नं पश्यति वा खेटः सिंहासनफलप्रदः ॥ १२६ ॥
कर्मलग्नसुखाधीशाः कर्मस्थानगता यदि ।
कर्मपो लग्नसम्बन्धी सिंहासनपतिर्भवेत् ॥ १२७ ॥
गुरुशुक्रशुभाधीशाः केन्द्रकोणायगा यदि ।
अनेकयानसम्पन्नो मण्डलाधिपतिर्भवेत् ॥ १२८ ॥
यानेशकर्मोपगतौ बलिष्ठौ धर्मेशदृष्टौ यदि तद्युतौ वा ।
परस्परक्षेत्रसमागतौ वा सिंहासनप्राप्तिकरौ भवेताम् ॥ १२९ ॥
तद्दशान्तर्दशाकाले तद्राशिपदशागमे ।
तदीशभुक्तिसम्प्राप्तौ सिंहासनपतिर्भवेत् ॥ १३० ॥

इदानीं सप्तभिः श्लोकैः सिंहासनप्रदा योगा उच्यन्ते ।

१. शुभग्रहे लग्नकेन्द्रे, नवमे उच्चगतग्रहे, धनेशे केन्द्रभावे च सति सिंहासनप्रदो योगः ॥ १२४ ॥

२. नवमभावे शुभग्रहदृष्टे, शुभग्रहैः सहिते धनेशे केन्द्रगते, उच्चगतग्रहे द्वितीयगते सिंहासनप्रदो योगः ॥ १२५ ॥

३. लग्नेश-चतुर्थेश-नवमेशाः कर्मभावगताः स्युः, कर्मेशो लग्नगतः स्यादथवा कर्मेशो लग्नदर्शी स्यात्तदा सिंहासनप्रदो योगः ॥ १२६ ॥

४. कर्मेश-लग्नेश-चतुर्थेशास्त्रयः कर्मभागवताः स्युः, कर्मेशो लग्नसम्बन्धी स्यात् तदा सिंहासनप्रदो योगः ॥ १२७ ॥

५. गुरु-शुक्र-नवमेशास्त्रयः केन्द्रकोणायगाः ( १।४।७।१०।९।५।११ गताः ) स्युस्तदा बहुवाहनयुक्तः मण्डलेश्वरकारको योगः ॥ १२८ ॥

६. चतुर्थेश-दशमभावगतावेतौ बलिष्ठौ धर्मेशदृष्टौ वा धर्मेशयुक्तौ वा परस्परक्षेत्रगतौ (चतुर्थेशो दशमगतग्रहगृहे दशमगतग्रहश्चतुर्थभावे) भवेतां तदा योगः सिंहासनप्रदः ॥१२९॥

उक्तेषु योगेषु जातो नरः सिंहासनारूढः ( राजासनगतः ) भवति । कदा भवतीत्येतदर्थं 'तद्दशान्तर्दशाकाले' इत्याद्युक्तम् । यो यो ग्रहः कारको भवति तत्तद्ग्रहदशान्तर्दशायां तत्फलं वाच्यमिति भावः ॥ १३० ॥

लग्न-केन्द्रमें शुभग्रह हो, धर्म स्थानमें उच्चगत ग्रह हो, द्वितीयेश केन्द्रमें हो तो सिंहासन देनेवाला योग होता है । याने इस योगमें उत्पन्न मनुष्य सिंहासन पर बैठने वाला ( राजा ) होवे ॥ १२४ ॥

नवम शुभग्रहसे देखा जाता हो, शुभग्रहके साथ द्वितीयेश केन्द्रमें हो द्वितीय स्थानमें उच्चराशिस्थ होनेपर जन्म हो तो यह योग सिंहासन देनेवाला होता है ॥ १२५ ॥

लग्नेश चतुर्थेश और नवमेश कर्म(१०)में हों, कर्मेश लग्नमें हो वा लग्नको देखता हो तो वह सिंहासनको देवे ॥ १२६ ॥

यदि दशमेश, लग्नेश और चतुर्थेश, दशम भावमें हों, दशमेश यदि लग्नका सम्बन्धी हो तो जातक सिंहासनका स्वामी हो ॥ १२७ ॥

यदि बृहस्पति, शुक्र और नवमेश केन्द्र या कोण या लाभ भावमें हो तो जातक अनेक वाहनोंसे युक्त हो और मण्डलका राजा हो ॥ १२८ ॥

चतुर्थेश और दशमस्थ ग्रह बलवान् हों नवमेशसे देखे जाते हों, वा युत हों, वा परस्पर गृहमें प्राप्त हों तो दोनों सिंहासन प्राप्ति करानेवाले होते हैं ॥ १२९ ॥

उसकी दशा अन्तर्दशाके समय उसके राशिपतिकी दशामें उसकी अन्तर्दशा प्राप्त होने पर जातक सिंहासनका पति होता है ॥ १३० ॥

| | | |
|---|---|---|
| ३ | शु. २ | |
| बु. | सिंहासन प्रदः १ | |
| | | १० मं. |

| | | |
|---|---|---|
| २ चं. | १ | |
| | सिंहासन प्रदः २ | |
| | शु. बु. ७ बृ. | ९ |

| | | |
|---|---|---|
| | १ | श. ११ |
| ४ | सिंहासन प्रदः ३ | १० मं. चं. बृ. |
| | | ९ |

| | | |
|---|---|---|
| | १ | |
| ४ | सिंहासन प्रदः ४ | १० श. मं. चं. |
| | | |

| | | |
|---|---|---|
| ३ ४ | २ | १ श. गु १२ शु. |
| ५ | सिंहासन प्रदः ५ | ११ |
| ६ ७ | ८ | १० ९ |

| | | |
|---|---|---|
| २ ३ | ल. | १२ ११ |
| ४ बु. | सिंहासन प्रदः ६ | १० चं. मं. |
| ५ सू. ६ | ७ | ९ ८ |

एतानि कल्पितोदाहरणानि सुकुमारमतीनामवबोधार्थमेव प्रदर्शितानीति ॥ १३० ॥

## अथ भाग्यविचारः

शुभोदयेशौ सुखराशियातौ सुखाधिपो लग्नगतः शुभर्क्षे ॥
अतीव सौख्यं समुपैति नित्यं सपत्नयातो यदि शत्रुभाग्यम् ॥ १३१ ॥

इदानीं सौख्यभावाभावयोगावाह–शुभोदयेशावति । नवमेश–लग्नेशौ, सुखराशियातौ स्याताम्, सुखाधिपः शुभर्क्षे विद्यमानः सन् लग्नगतः स्यात् तदा जातोऽतीव सौख्यं नित्यं

( सर्वदा ) समुपैति। यदि पूर्वोक्तयोगे सुखाधिपः सपत्नयातः = षष्ठभावगतः स्यात्तदा शत्रुभाग्यं = रिपुभोगं प्राप्नोति। तदानीं शत्रुहस्तगतं तस्य भाग्यादि स्यादिति तात्पर्यम् ॥१३१॥

नवमेश लग्नेश चतुर्थ स्थानमें हों चतुर्थेश शुभ राशिमें लग्नमें हो तो नित्य अत्यन्त सुख होता है। यदि शत्रुस्थानमें हो तो शत्रु भाग्य प्राप्त करे ॥ १३१ ॥

सपत्नभावाधिपतौ तपःस्थे शुभैरदृष्टे बलसंयुते वा ॥
स्वकीयभाग्यादिकमल्पकालं ददाति शत्रौ सुखनाथदाये ॥ १३२ ॥

सपत्नभावाधिपतौ = षष्ठभावेशे, पतःस्थे = नवमभावगते, शुभैरदृष्टे, वा बलसंयुते सति अल्पकालं = किञ्चित्कालं, स्वकीयभाग्यादिकं शत्रौ ददाति, स्वयं तावद्भाग्यहीनो भवति। कदा ? तदुच्यते 'सुखनाथदाये' = चतुर्थेशग्रहदशायामिति ॥ १३२ ॥

शत्रुभावेश नवमें हो उसे शुभग्रह न देखते हों, वा बलवान् हो तो चतुर्थेशकी दशामें कुछ कालतक अपना भाग्य शत्रुको देता है ॥ १३२ ॥

सुखाधिपे शोभनखेटयुक्ते तदीयपाकान्तमरातिगं तत् ॥
पापान्विते तस्य दशावसाने पुनः स्वभाग्यं समुपैति सर्वम् ॥ १३३ ॥

स्पष्टार्थं एवेत्यलम् ॥ १३३ ॥

चतुर्थेश शुभग्रहसे युक्त हो तो उसकी दशामें शत्रुमें उसका भाग्य जाय। यदि चतुर्थेश पापग्रहसे युक्त हो तो उसकी दशा बीतनेपर फिर सब भाग्य प्राप्त होवे ॥ १३३ ॥

## अथ क्षेत्रविचारः।

क्षेत्रस्थाने शुभक्षेत्रे तदीशे शुभसंयुते ॥
तत्कारके तथा प्राप्ते बहुक्षेत्रधनान्वितः ॥ १३४ ॥
क्षेत्रेश्वरे नीचसपत्नभागे कालाग्निशूलान्तकषष्टिभागे ॥
पापान्विते पापनिरीक्षिते वा क्षेत्रादिनाशं कथयन्ति तज्ज्ञाः ॥ १३५ ॥

इदानीं क्षेत्रविचारमाह-क्षेत्रस्थान इति श्लोकद्वयेन। श्लोकौ स्पष्टार्थाविति ॥१३४-१३५॥

४ र्थ भावमें शुभ राशि हो और चतुर्थेश शुभ ग्रहसे युक्त हो तथा उसका कारक शुभस्थानमें प्राप्त हो तो जातक बहुत क्षेत्र-धनसे होता है ॥ १३४ ॥

चतुर्थेश नीचराशि या शत्रुके भागमें हो कालाग्नि, शूल, अन्तकके षष्टिभागमें हो, पापग्रहसे युक्त वा देखा जाता हो तो विज्ञ लोग क्षेत्रादिकका नाश कहे हैं ॥ १३५ ॥

लग्नाधिपस्य गृहपो यदि शत्रुखेटस्तत्पाकभुक्तिसमये गृहभूमिनाशम्।
यानेशभुक्तिसमये निजबन्धुहानिः शन्यारमान्दियुतभुक्तिरनर्थहेतुः ॥१३६ ॥

गृहपः = चतुर्थेशः यदि लग्नाधिपस्य = लग्नेशस्य शत्रुग्रहो भवेत्तदा तत्पाकभुक्तिसमये = तस्य रिपुग्रहस्य दशान्तर्दशाकाले गृहभूमिनाशं विन्द्यात्। यानेशस्य = चतुर्थेशस्य भुक्तिसमये निजबन्धुहानिर्भवति। असौ यानेशो यदि शन्यारमान्दियुतः = शनि = भौम-गुलिकान्यतमयुक्तः स्यात्तदा तस्य भुक्तिरनर्थहेतुः = अनिष्टकरा भवतीति ॥ १३६ ॥

चतुर्थ यदि लग्नेशका शत्रु ग्रह हो तो उसकी दशान्तर्दशामें गृह और भूमिका नाश हो। चतुर्थेशकी अन्तर्दशामें अपने परिवारोंकी हानि हो। शनि-मंगल-गुलिक-युतग्रह की अन्तर्दशा अनर्थ-( मरण ) का कारण होती है ॥ १३६ ॥

वित्तेशः ससुखाधिपो नवमगः सौम्यान्वितः सौम्यभे
निक्षेपं समुपैति लाभधनपौ पातालराशिस्थितौ।
तन्नाथः शुभराशिगः शुभयुतो निक्षेपसिद्धिर्भवे-
ल्लाभेशः सुखराशिगः शुभयुतो निक्षेपवित्तप्रदः ॥ १३७ ॥

इदानीं निक्षेपधनप्राप्तियोगा उच्यन्ते-वित्तेश इति।

१ सुखाधिपेन ( चतुर्थेशेन ) सहितो वित्तेशः ( धनेशः ) नवमभावगतः सौम्यग्रहयुक्तः सौम्यराशिगतश्च यदि भवेत्तदा जातः निक्षेपं = भूमौ निहितं द्रव्यं समुपैति ।

२ लाभधनपौ = एकादश–द्वितीयेशौ पातालराशि-(चतुर्थभाव) गतौ भवेतां, तन्नाथः= चतुर्थेशः शुभग्रहेण सहितः शुभराशिगतश्च भवेत्तदा निक्षेपसिद्धिः=निखातद्रव्यलाभः स्यात् ।

३ लाभेशः = एकादशभावपतिः शुभग्रहेण युतः सन् सुखराशि-( चतुर्थभाव ) गतः स्यात् तदा निक्षेपवित्तप्रदो भवति । उक्तयोगत्रये जातस्य भूतले सञ्चितस्य द्रव्यादेर्लाभो भवतीत्यर्थः ॥ १३७ ॥

**शुभराशिमें शुभग्रहके साथ धनेश सुखाधिपसे युक्त नवम भावमें हो तो गड़ी हुई सम्पत्ति प्राप्त होवे । लाभेश और धनेश चतुर्थ स्थानमें स्थित हों और ४ र्थका स्वामी शुभ-राशिमें शुभयुत हो तो निक्षेप (गड़ा हुआ धन) मिले । लाभेश शुभग्रहके साथ ४ थे भावमें हो तो भी निक्षेप धन मिले ॥ १३७ ॥**

## अथ गृहविचारः ।

अर्थव्ययगृहाधीशा नाशगाः पापसंयुताः ।
यावद्भिरशुभैर्युक्तास्तावद्गेहालसत्वदाः ॥ १३८ ॥
पापेऽरौ वा पापदृष्टे सुखे गेहसुखार्तिभाक् ।
नीचेऽरातौ कुजेऽर्के वा सुखे स्यादगृहो नरः ॥ १३९ ॥
नीचेऽस्तगे वा गेहस्थे दुःखाम्भोधौ पतिष्यति ।
सुखे पापे पापभाक् स्यात् सुखे मन्दे सुखक्षयः ॥ १४० ॥
गृहेशे व्ययगे लग्नादन्यगेहोऽन्यदेशगः ।
रन्ध्रे गृहाद्यभावो वा षष्ठे ज्ञात्यादिसंग्रहः ॥ १४१ ॥
अयत्नतो मन्दिरलाभदः स्यात् चतुर्थपस्तत्र बलाधिको वा ।
दुःस्थानगो दुष्टबलान्वितश्चेदालस्यगेहं ग्रहपीडितं वा ॥ १४२ ॥
षट्त्रिव्ययाष्टमोपेता व्ययवित्तगृहाधिपाः ।
यावत्पापसमोपेतास्तावद्गृहविनाशदाः ॥ १४३ ॥
लग्नत्रिकोणकेन्द्रस्था यावद्बलसमन्विताः ।
तावत्संख्याकगेहानां सामीचीन्यं वदेद् बुधः ॥ १४४ ॥
चतुर्थभावाधिपतौ विलग्नाद्व्ययस्थिते जीर्णगृहं समेति ।
त्रिकोणकेन्द्रोपगते बलाढ्ये विचित्रगेहं रुचिरं तदाहुः ॥ १४५ ॥
तृतीये सौम्यसंयुक्ते गेहेशे बलसंयुते ।
गोपुराद्यंशगे वाऽपि समेति दृढमन्दिरम् ॥ १४६ ॥
आज्ञाक्रियाक्षेत्रविनाशमाहुराज्ञेश्वरे गेहगते सपापे ।
क्रूरांशके मृत्युकरादिभागे रन्ध्रेश्वरेणापि युते तथैव ॥ १४७ ॥
तृतीये सौम्यसंयुक्ते गेहेशे स्वबलान्विते ।
लग्नेशे बलसम्पूर्णे हर्म्यं प्राकारसंयुतम् ॥ १४८ ॥
पारावतांशके गेहनाथे गुर्विन्दुवीक्षिते ।
गोपुराद्यंशके वाऽपि दैविकं गृहमादिशेत् ॥ १४९ ॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते
द्वादशोऽध्यायः ॥ १२ ॥

इदानीं गृहविचारमाह—अर्थव्ययगृहाधीशा इत्यादिद्वादशश्लोकैः। श्लोकाश्चैते सुगमार्थका इति न व्याख्याताः ॥ १३८-१४९ ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता।
अध्याये रवि १२ संख्येऽस्मिन् पूर्तिं भावफले गता ॥ १२ ॥

द्वितीय द्वादश और चतुर्थ गृहके स्वामी पापग्रहसे युत होकर अष्टम स्थानमें हों वहां जितने पापग्रहसे युत हों उतने गृह आलसप्रद हों ॥ १३८ ॥

शत्रुस्थानमें पापग्रह हो वा पापग्रह सुख भावको देखता हो तो जातक गृहके दुःख का भागी हो। नीच राशि या शत्रुराशिमें मङ्गल वा सूर्य होकर सुखमें हो तो मनुष्य गृहरहित होवे ॥ १३९ ॥

यदि ४ र्थस्थ ग्रह नीचराशिमें या अस्त हो तो कूप, तलावमें गिरे। सुखमें पापग्रह हो तो पापका भागी हो। सुखमें शनि हो तो सुखका नाश होवे ॥ १४० ॥

चतुर्थेश द्वादश भावमें हो तो परगेह वासी तथा परदेशवासी हो। अष्टममें हो तो गृहका अभाव हो। छठेमें हो तो जाति आदिका संग्रह हो ॥ १४१ ॥

वहां चतुर्थेश बलवान् हो तो बिना प्रयास हो गृहादिका लाभ हो। दुष्ट स्थानमें दुर्बल चतुर्थेश हो तो आलस्य वा ग्रहपीडित गृह कहे ॥ १४२ ॥

द्वादशेश, द्वितीयेश और चतुर्थेश, षष्ठ, तृतीय, द्वादश तथा अष्टम स्थानमें जितने पापग्रहसे युक्त हों उतने गृहका नाश हो ॥ १४३ ॥

लग्न, त्रिकोण और केन्द्रमें जितने बलवान् ग्रह हों उतने अच्छे गृह पण्डित लोग कहे हैं ॥ १४४ ॥

चतुर्थका स्वामी लग्नसे १२ वें हो तो पुराना गृह जातकको मिले। यदि चतुर्थेश बलवान् होकर त्रिकोण या केन्द्रमें हो तो सुन्दर विचित्र गृह कहे ॥ १४५ ॥

तृतीय भावमें शुभग्रह हो चतुर्थेश बलवान् हो वा अपने गोपुर आदि अंशमें हो तो जातक दृढ गृहसे युक्त हो ॥ १४६ ॥

दशमेश पापग्रहके साथ ४ थे भावमें हो तो आज्ञा क्रिया तथा भूमिका नाश होता है। यदि दशमेश क्रूरांशकमें, मृत्युकरादि षष्ट्यंशमें हो और अष्टमेशसे युक्त हो तो भी यही फल कहे ॥ १४७ ॥

तृतीयभाव शुभग्रहसे युक्त हो, चतुर्थेश बलयुक्त हो लग्नेश परिपूर्ण बली हो तो प्राकार (घेरा) से युक्त हर्म्य (अटारी) गृह हो ॥ १४८ ॥

चतुर्थेश अपने पारावतांशमें हो गुरु और चन्द्रमासे देखा जाता हो वा अपने गोपुर आदि अंशमें हो तो दैविक (मन्दिर) गृह हो ॥ १४९ ॥

इति जातकपारिजाते द्वादशे भावफलाध्याये 'विमला' हिन्दी टीका समाप्ता ॥ १२ ॥

---

## अथ पञ्चमषष्ठभावफलाध्यायः ॥ १३ ॥

### अथ पञ्चमभावफलम्।

पुत्राद्देवमहीपपुत्रपितृधीपुण्यानि सञ्चिन्तये-
द्यात्रामस्तसुतस्वकर्मभवनैर्दूराटनं रिष्फतः।
लग्नाद्बन्धुदिनेशतः पितृसुखं जीवात्मजस्थानतः
पुत्रप्राप्तिरनङ्गवित्तपसितैः स्त्रीसम्पदश्चिन्तयेत् ॥ १ ॥

इदानीं पञ्चमभावफलं विवक्षुरादौ केषाञ्चिद्भावानां विचारक्रममाह–पुत्रादिति। देवः = आराध्यदेवता, महीपः = राज्ययोगः, पुत्रः = सन्तानः, पिता, धीः = बुद्धिः, पुण्यम् = सुकर्म एतानि पुत्रात् = पञ्चमभावतः सञ्चिन्तयेत्। अस्त–सुत–स्व–कर्मभवनैः = सप्तम–पञ्चम–

द्वितीयदशमभावैः यात्रां विचारयेत् । रिष्फतः = द्वादशभावतः, दूराटनं=विदेशभ्रमणं सञ्चिन्तयेत् । लग्नाद् बन्धुदिनेशतश्च = लग्नाच्चतुर्थभावतः, सूर्याच्च पितृसुखं विचारयेत् । जीवात्मजस्थानतः = गुरोः, पञ्चमभावतश्च, पुत्रप्राप्तिः विचारणीया । अनङ्गवित्तपसितैः = सप्तमभाव-द्वितीयेश-शुक्रैः, स्त्रीसम्पदः चिन्तयेत् । तत्तद्भावकारके भावे च सल्लक्षणलक्षिते सति सत्फलमन्यथाऽन्यथात्वं वाच्यमिति ॥ १ ॥

पंचम भावसे देवता, राजा, पुत्र, पिता, बुद्धि और पुण्यका विचार करे। सप्तमभाव, पुत्रभाव, धनभाव और कर्म भावसे यात्राको विचारे। द्वादशसे दूरयात्राको विचारे। लग्न से, चतुर्थसे और सूर्यसे पिताको विचारे। बृहस्पतिसे और पंचमसे पुत्र प्राप्तिको विचारे। सप्तमेश द्वितीयेश, और शुक्रसे स्त्रीसंपत्तिको विचारे ॥ १ ॥

## अथ देवताविचारः।

लग्नादात्मनि पुंग्रहेक्षितयुते पुन्देवताराधनं
युग्मे शुक्रनिशाकरेक्षितयुते स्त्रीदेवतामिच्छति ।
भानौ भास्करमुख्यमिन्दुसितयोर्गौरीं कुमारं कुजे
विष्णुं चन्द्रसुते गुरौ शशिधरं शन्यादियोगे परान् ॥ २ ॥

इदानीं जातस्याराध्यदेवतामाह—लग्नादिति । लग्नादात्मनि = पञ्चमे भावे, पुंग्रहेक्षितयुते = पुरुष-( रविभौमजीवान्यतम ) ग्रहेण दृष्टे युते वा जातस्य पुंदेवताराधनं ब्रूयात् । अस्मिन्योगे जातो नरः पुरुषदेवोपासको भवति । तस्मिन् पञ्चमे भावे, युग्मे = समराशौ सति, तत्र शुक्रेण चन्द्रेण वा दृष्टे वा युते जातः स्त्रीदेवतामिच्छति । समराशीनां शुक्रशशिनोश्च स्त्रीप्रकृतित्वात् । तत्र पञ्चमे भावे सूर्येण युक्ते दृष्टे वा भास्करमुख्यं = सूर्यप्रभृतिपुरुषदेवता वाच्या । इन्दुसितयोः = चन्द्रशुक्रयोः गौरीं देवतां ब्रूयात् । कुजे कुमारं = कार्त्तिकेयं, चन्द्रसुते = बुधे विष्णुं, गुरौ शशिधरं = शिवं, शन्यादियोगे परानितरान् क्षुद्रदेवान् ब्रूयादिति ॥ २ ॥

लग्नसे पांचवें भावको पुरुष संज्ञक ग्रह देखता हो वा उसमें स्थित हो तो जातक पुरुष देवताकी पूजा करे। समराशि पंचममें हो और पंचममें शुक्र या चन्द्रमा हो वा उस स्थान को देखता हो तो स्त्री देवताका आराधन आचार्योंने कहा है। पञ्चम भावमें सूर्य हो तो सूर्य का, चन्द्रमा शुक्र हो तो गौरी का, मंगल हो तो कार्तिकका, बुध हो तो विष्णुका, बृहस्पति हो तो शंकरका, शनि, राहु या केतुका पञ्चममें योग हो तो अपर ( क्षुद्र ) देवका पूजन करे ॥ २ ॥

लग्नाधिपस्यात्मपतौ सपत्ने तद्देवभक्तिः सुतनाशहेतुः ।
समानता साम्यतरे सुहृत्त्वे तद्देवताऽपारकृपामुपैति ॥ ३ ॥

इदानीं स्थितिपरत्वेन देवाराधनपरिणाममाह—लग्नाधिपस्येति । लग्नेशस्य, आत्माधिपतौ ( पञ्चमेशे ) सपत्ने = शत्रुग्रहे सति तद्देवभक्तिः जातस्य सुतनाशहेतुर्भवति । साम्यतरे = लग्नाधिपस्यात्मपतौ समत्वग्रहे ( उदासीने ) सति तद्देवभक्तिः समानताऽन्न शुभा नाशुभा चेति । सुहृत्त्वे=लग्नाधिपस्यात्मपतौ मित्रग्रहे सति जातस्तद्देवताया अपारकृपां = परममनुग्रहमुपैति, तदानीं तद्देवताराधनं परमक्षेमकरं भवतीत्यर्थः ॥ ३ ॥

पंचमेश लग्नेशका शत्रु हो तो उस देव भक्तिसे पुत्रनाश हो। सम हो तो समानता रहे। पञ्चमेश लग्नेशका मित्र हो तो उस देवताके आराधनसे कार्य परिपूर्ण हो ॥ ३ ॥

## अथ राज्यविचारः।

राजस्थाने गुरुबुधसितैरीक्षिते संयुते वा
तद्राशीशे बलवति नृपप्रीतिसम्प्राप्तिमेति ।

पापाक्रान्ते विगतबलिनि स्वामिनि क्रूरभागे
जातो विद्याविनयगुणधीराजसन्मानहीनः ॥ ४ ॥

इदानीं महीपप्रीतिसम्पत्तिभावाभावमाह—राजस्थाने इति । राजस्थाने = पञ्चमे भावे, इति । अन्यत्स्पष्टार्थमेवेत्यलम् ॥ ४ ॥

पुत्र स्थानमें बुध, बृहस्पति और शुक्रकी दृष्टि हो, वा योग हो, उसका राशीश (पञ्चमेश) बलवान् हो तो राजाकी प्रसन्नतासे धन मिले। यदिप ञ्चमभावेश, पापाक्रान्त हो, बलरहित हो, क्रूरभागमें हो तो जातक विद्या, विनय, गुण, बुद्धि और राजसन्मानसे हीन हो ॥

**अथ जन्मविचारः ।**

लग्ने यानपतौ सुखे तनुपतौ दृष्टेऽथवा खेचरैः
संयुक्ते तु चतुष्पदस्य जननं राहुध्वजाभ्यामजः ।
गोजन्मार्यसितेन्दुभिश्च महिषी मन्देन दृष्टे युते
जातः पादपुरःसरं तनुपतिर्माने तनौ भोगिराट् ॥ ५ ॥

इदानीं केषांचिच्चतुष्पदानां जन्मज्ञानमाह—लग्न इति । यानपतौ = चतुर्थेशे, लग्ने, तनुपतौ = लग्नस्वामिनि सुखे = चतुर्थे तत्र खेचरैरितरग्रहैर्यथासम्भवं दृष्टे अथवा संयुक्ते तु चतुष्पदस्य = पशोः, जननं = उत्पत्तिं विजानीयात् । तत्र चतुष्पदविवरणमाह । राहुध्वजाभ्यामजः=राहुणा केतुना वा युक्ते दृष्टे वा अजो जायते । आर्यसितेन्दुभिः=गुरुशुक्रचन्द्रैरन्यतमेन वा दृष्टे गोजन्म वाच्यम् । मन्देन=शनिना दृष्टे युते वा महिषी जायते । अथ तनुपतिः=लग्नस्वामी, माने = दशमे स्थाने, भोगिराट्=राहुः तनौ लग्ने व्यवस्थितः स्यात्तदा पादपुरस्सरं जातः स्यात् । अस्मिन्योगे जातस्य प्रथमं चरणौ प्रादुर्भवतस्ततः शिर इति ॥

सुखेश लग्नमें हो, लग्नेश सुखमें हो और ग्रहोंसे युक्त या दृष्ट हो तो चतुष्पदका जन्म जाने । उसमें राहु-केतुसे बकरा जाने । बृहस्पति, शुक्र और चन्द्रमासे गौका जन्म जाने । शनिसे दृष्ट या युत हो तो महिषीका जन्म कहे । लग्नेश दशवें हो और राहु लग्नमें हो तो जातक प्रथम पांवसे जन्मे ॥ ५ ॥

वित्तास्तगौ पञ्चमयाननाथौ पापेक्षितौ पापसमन्वितौ वा ।
पुंसस्त्रिभागे पुरुषग्रहेन्द्रे जाताः कपिक्रोडबिडालकाद्याः ॥ ६ ॥

इदानीं कपिक्रोडबिडालादीनां जन्माह—वित्तास्तगाविति । पञ्चमयाननाथौ = पञ्चमेशचतुर्थेशौ वित्तास्तगौ = द्वितीयसप्तमगतौ भवेतां तथाभूतौ पापग्रहेण दृष्टौ वा युक्तौ भवेतां, पुरुष ग्रहेन्द्रे = रविभौमजीवान्यतमे पुंसस्त्रिभागे पुरुषग्रहद्रेष्काणे गतवति जाताः कपिक्रोडबिडालकाद्याः भवन्ति । अस्मिन्योगे वानरसूकरमार्जारादीनां जन्म भवतीति भावः ॥ ६ ॥

द्वितीय और सप्तममें पंचमेश तथा चतुर्थेश हों, पापग्रहसे देखे जाते हों या युक्त हों पुरुष द्रेष्काणमें पुरुष ग्रह हो तो जातक कपि क्रोड बिडाल आदि जाने ॥ ६ ॥

तस्मिन्मन्दबुधेक्षिते तु जननं पिण्डाकृतिर्वाक्पतिः ।
साहिर्दुर्बलवीक्षितो यदि महीदेवान्वयो नीचकृत् ।
एकस्था गुरुराहुभानुतनयाः शुक्रेन्दुपुत्रेक्षिताः
शूद्रोऽपि द्विजतौल्यमेति निखिलां विद्यामुपैति द्विजः ॥ ७ ॥

तस्मिन्निति । तस्मिन् पूर्वोक्त-( पुंसस्त्रिभागे पुरुषग्रहेन्द्रे ) योगे, मन्दबुधाभ्यामीक्षिते तु जननं पिण्डाकृतिर्भवति । अस्मिन्योगे यत्प्रादुर्भवति तदवयवादिरहितमिति । यदि साहिर्वाक्पतिः = राहुयुक्तो गुरुः दुर्बलवीक्षितः = बलहीनग्रहदृष्टः स्यात्तदा महीदेवान्वयः = विप्रवंशजः, नैच्यकृत् = कुत्सितकर्मा भवति । अस्मिन्योगे ब्राह्मणकुलेऽपि जातो नीचवदाचरणशीलो भवतीति । गुरुराहुभानुतनयाः = बृहस्पतिराहुशनैश्चराः यदि एकस्थाः शुक्रे-

न्दुपुत्राभ्यामीक्षिताश्च भवेयुस्तदा शूद्रोऽपि जातो द्विजतौल्यमेति = विप्रसमतां प्राप्नोति । अस्मिन्योगे शूद्रजन्माऽपि ब्राह्मणवदाचरति । उच्चकर्मा भवतीति भावः । अत्र योगे जातो यदि द्विजः=ब्राह्मणवंशजः स्यात्तदा निखिलां विद्याम् उपैति, सकलविद्याविद् भवतीत्यर्थः ॥

शनि और बुध पूर्वोक्त पञ्चमेश चतुर्थेशको देखते हों तो पिंडके समान जन्म हो। यदि बृहस्पति राहुके साथ बलरहित ग्रहसे दृष्ट हो तो विप्र भी नीच कर्म करनेवाला उत्पन्न हो। एक स्थानमें बृहस्पति राहु और शनिको शुक्र और बुध देखें तो शूद्र भी हो तो ब्राह्मणकी समानताको प्राप्त होता है, और ब्राह्मण समस्त विद्याको प्राप्त करता है ॥ ७ ॥

## अथ पुत्रविचारः ।

लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथवाऽऽलोकिते
चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथाऽसम्भवः ।
पाथोनोदयगे रवौ रविसुते मीनस्थिते दारहा
पुत्रस्थानगतश्च पुत्रमरणं पुत्रोऽवनेर्यच्छति ॥ ८ ॥

इदानीं स्त्रीपुत्रयोर्भावाभावज्ञानमाह—लग्नादिति । जन्मलग्नात्पुत्रे = पञ्चमभावे, कलत्रे = सप्तमभावे च शुभग्रहेण पतिना च युक्ते, अथवाऽऽलोकिते, चन्द्राद्वा = जन्मकालिकचन्द्रतो वा पुत्रकलत्रभे = पञ्चमे सप्तमे च भावे शुभग्रहेण स्वस्वस्वामिना च युतेऽथवा दृष्टे सति तयोः = पुत्रस्त्रियोः सम्पत् अस्ति हि = निश्चयेनेति । लग्नाच्चन्द्राद्वा पञ्चमे भावे शुभग्रहेण पञ्चमेशेन च युते वा दृष्टे पुत्रस्य प्राप्तिर्भवति । एवं लग्नाच्चन्द्राद्वा सप्तमे भावे शुभग्रहेण सप्तमेशेन च युते वा दृष्टे स्त्रीसम्पदस्तीति वाच्यम् । अन्यथाऽसम्भवः । यस्य जन्मलग्नाच्चन्द्राद्वा पञ्चमो भावः शुभेन स्वामिना च दृष्टो युतो वा न भवति तस्य पुत्रोत्पत्तिर्न भवति । असौ पुत्रहीनः स्यादिति । एवं लग्नाच्चन्द्राद्वा सप्तमः शुभपतिभ्यां युतो वा दृष्टो न स्यात्तदा तस्य स्त्री न भवति । अत्र 'पुत्रकलत्रभे' इत्युपलक्षणमेव किन्तु सर्वेषामेव भावानामीदृग्विचारेण भवितव्यम् ।

"यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्याभिवृद्धिः" ।

इति विशेषवचनदर्शनात् । पाथोनोदयग इति । रवौ = सूर्ये, पाथोनोदयगे = कन्याराशिलग्ने गते, रविसुते = शनैश्चरे, मीनस्थिते सति जातो दारहा = स्त्रीनाशको मृतभार्य इति यावद्भवति । अत्रैव ( पाथोनोदयगे रवौ ) योगे अवनेः पुत्रः = मङ्गलो यदि पुत्रस्थानगतः = पञ्चमभाव-( मकर ) गतः स्यात् तदा पुत्रमरणं यच्छति । अत्र योगे जातस्य पुत्रो म्रियत इत्यर्थः ॥ ८ ॥

लग्नसे या चन्द्रमा से पंचम और सप्तम भावमें शुभग्रह या उनके पतिका योग अथवा दृष्टि हो तो क्रमसे पुत्र और स्त्रीका सुख अच्छा होवे। अन्यथा इन दोनोंकी प्राप्तिमें असम्भव है। कन्या लग्नमें सूर्य हो, शनि मीनमें हो तो स्त्रीकी हानि हो। पुत्र स्थानमें मङ्गल हो तो पुत्रकी मृत्यु हो ॥ ८ ॥

| | | |
|---|---|---|
| | ६ सू. | |
| | दारहा | |
| | १२ श. | |

| | | |
|---|---|---|
| | ६ सू. | |
| | पुत्रमरणम् | |
| १० मं. | | |

पुत्रस्थानपतौ तु वा नवमपे लग्नात्कलत्रेऽथवा
युग्मर्क्षे शशिशुक्रवीक्षितयुते पुत्रीजनो जायते।
पुंवर्गे पुरुषग्रहेक्षितयुते जातस्तु पुत्राधिको
जीवात्पञ्चमराशितश्च तनयप्राप्तिं वदेद् दैशिकः॥ ९॥

इदानीं पुत्रपुत्रीयोगावाह-पुत्रस्थानपताविति। पञ्चमेशे, अथवा नवमभावेशे लग्नात् कलत्रे = सप्तमे भावे, अथवा युग्मर्क्षे = समराशौ व्यवस्थिते तत्र शशिना शुक्रेण वा दृष्टे वा युते पुत्रीजनो जायते। अस्मिन्योगे कन्यासन्ततिर्भवति। अथ तत्र (पुत्रस्थानपतौ तु वा नवमपे) पुंवर्गे = पुरुषग्रहवर्गे पुरुषग्रहेण दृष्टे वा युते जातस्तु पुत्राधिको भवति। अस्मिन्योगे जातो नरो बहुपुत्रान्वितो भवति। एवमाह मन्त्रेश्वरः—

'पुंराश्यंशे धीश्वरे पुंग्रहेन्द्रैर्युक्ते दृष्टे पुंग्रहे पुंप्रसूतिः।
स्त्रीराश्यंशे स्त्रीग्रहैर्युक्तदृष्टे स्त्रीणां जन्म स्यात्सुतर्क्षे सुतेशे' इति॥

जीवात् = गुरोः, पञ्चमराशितः = पुत्रभावाच्च दैशिकः = फलादेशकर्त्ता तनयप्राप्तिं वदेदित्युक्तमपि पुनरुक्तवदुक्तमिति॥ ९॥

पुत्र स्थानका स्वामी वा नवमेश लग्नसे सप्तम हो या सम राशिमें हो चन्द्रमा तथा शुक्रसे दृष्ट या युत हो तो कन्या उत्पन्न होवे। विषम राशिमें हो पुरुष ग्रह (सू०मं०बृ०) से दृष्ट या युत हो तो जातक अधिक पुत्रसे युक्त हो। गुरुसे तथा पञ्चम भावसे पुत्र प्राप्ति का विचार करे॥ ९॥

शुक्रेन्दुवर्गे सुतभे विलग्नाच्छुक्रेण चन्द्रेण युतेऽथ दृष्टे।
पापैरयुक्ते बहुपुत्रशाली शन्यारदृष्टे सति पुत्रहीनः॥ १०॥

इदानीं पुत्रभावाभावावाह—शुक्रेन्दुवर्गे इति। विलग्नात्सुतभे = पञ्चमे भावे, शुक्रेन्दुवर्गे = शुक्रचन्द्रमसोरन्यतरस्य राश्यादौ वर्त्तमाने, तस्मिन् शुक्रेणाथवा चन्द्रेण युते दृष्टे वा, तथा पापग्रहैरयुक्ते सति जातो बहुपुत्रशाली भवति। तत्र पूर्वलक्षणे शन्यारदृष्टे = शनिभौमाभ्यां निरीक्षिते सति जातो नरः पुत्रहीनः = अपुत्रो भवतीति॥ १०॥

लग्नसे पञ्चम भवन शुक्र या चन्द्रमाके वर्गमें हो शुक्र या चन्द्रमासे युक्त या दृष्ट हो पापग्रहसे युक्त न हो तो बहुत पुत्रवाला हो। शनि और मङ्गल देखते हों तो पुत्रसे रहित हो॥ १०॥

पौत्रप्राप्तिरनङ्गभे सुतगृहात्सौम्यस्य राश्यंशके
तन्नाथे शुभखेटवीक्षितयुते केन्द्रत्रिकोणेऽथवा।
स्वक्षेत्रोपगते तु पुत्रगृहपे जातोऽल्पपुत्रो भवेत्
पुत्रेशांशपतिः स्वभांशकगतो यद्येकपुत्रं वदेत्॥ ११॥

इदानीं पौत्रप्राप्तियोगम्, अल्पपुत्रयोगमेकपुत्रयोगञ्चाह—पौत्रप्राप्तिरिति। सुतगृहात् = पञ्चमभावतः, अनङ्गभे = सप्तमे भावे (लग्नादेकादशे भाव इति दिक्) सौम्यस्य राश्यंशके = शुभग्रहस्य राशिनवांशके विद्यमाने, तन्नाथे = तत्पतौ (लाभेशे) शुभखेटेन वीक्षिते वा युते, अथवा लग्नात् केन्द्रत्रिकोणे (१।४।७।१०।५।९) व्यवस्थिते सति जातस्य पौत्रप्राप्तिः (पुत्रस्यापत्यं पुमान् पौत्रस्तस्य लाभः) भवति। स्वक्षेत्रोपगत इति। पुत्रगृहपे = पञ्चमभावेशे, स्वक्षेत्रोपगते = स्वराशौ व्यवस्थिते सति जातः अल्पपुत्रः भवति। पुत्रेशांशपतिरिति। पुत्रेशः = पञ्चमभावपतिः यन्नवांशे भवेत्तन्नवांशपतिर्ग्रहो यदि स्वभांशकगतः स्यात् तदा जातस्यैकं पुत्र वदेत्॥ ११॥

पञ्चम गृहसे सप्तममें (लग्नसे ११ वें) सौम्यग्रहकी राशि तथा नवांश हो, उसका स्वामी शुभग्रहसे दृष्ट-युत हो, वा केन्द्रत्रिकोणमें हो तो पौत्रकी प्राप्ति हो। पञ्चमेश अपनी

गृह्णाति । अत्रेदमवधेयम् । पञ्चमभावगतग्रहस्य तत्कारकग्रहस्य च मध्ये बलीयसो ग्रहस्य षड्वर्गे यत्स्थानं ग्रहशून्यं भवेत् तद्गृहं यज्जातिकं स्यात्ततो दत्तात्मजं गृह्णाति जातक इति ॥

लग्नेश और पञ्चमेश दुष्ट स्थानमें हो उन्हें यदि शुभग्रह देखते हों तो कृतक पुत्रको देते हैं । पञ्चमभावगत ग्रह और कारकके मध्य जो बली हो उसके षड्वर्गमें जो शून्य स्थान हो उसी जातिसे दत्तक ग्रहण करे ॥ १३ ॥

केन्द्रत्रिकोणगृहगः सुतपः शुभर्क्षे सौम्यान्वितो यदि सुतं समुपैति बाल्ये ।
भोगीशयुक्तसुतराशिपभुक्तिजातः स्वल्पायुरेति फणिभुक्तिभवश्चिरायुः ॥ १४ ॥

केन्द्रेति । सुतपः = पञ्चमभावेशः, शुभर्क्षे विद्यमानः सन् केन्द्रत्रिकोण–( १।४।७।१०। ५ । ९ ) गृहगः स्यात्तथाभुतो यदि सौम्यान्वितः = केनचिच्छुभग्रहेण सहितः स्यात्तदा, बाल्ये = अल्पवयस्येव सुतं = पुत्रं, समुपैति । अथ पुत्रस्याल्पायुर्दीर्घायुर्योगावाह–भोगीशयुक्तेति । भोगीशेन ( राहुणा ) युक्तस्य सुतराशिपस्य ( पञ्चमेशस्य ) भुक्तिजातः = दशान्तर्दशाकाले समुद्भूतः पुत्रः स्वल्पायुः = अल्पजीवित्वं, फणिभुक्तिभवः ( पञ्चमेशयुक्तस्य राहोर्भुक्तिकाले जायमानः ) चिरायुः = दीर्घायुष्ट्वमेति ॥ १४ ॥

शुभराशिस्थ पञ्चमेश केन्द्र–त्रिकोणमें हो शुभ युत हो तो बाल्यावस्थामें ही पुत्रप्राप्ति हो । राहुसे युक्त पञ्चमेशकी अन्तर्दशामें उत्पन्न हो तो अल्पायु हो और राहुभुक्तिमें चिरायु पुत्र प्राप्त करे ॥ १४ ॥

पुत्रस्थानपवित्तपौ गतबलौ पापेक्षिते पुत्रभे
जातोऽनेककलत्रवानपि सुताभावं समेति ध्रुवम् ।
तज्जाया यदि पुत्रयोगजनिता सौम्येन वा पञ्चमात्
षष्ठेशेन निरीक्षिते सुतवती जारेण सञ्जायते ॥ १५ ॥

इदानीं सुताभावयोगं जारपुत्रयोगञ्चाह—पुत्रस्थानपवित्तपाविति । पञ्चमेश–द्वितीयेशौ यत्र तत्र गतबलौ भवेतां तथा पुत्रभे=पञ्चमभावे पापेक्षिते सति जातो नरोऽनेककलत्रवानपि=बहुदारोऽपि, ध्रुवं = निश्चयेन सुताभावम्=अपुत्रत्वं समेति । अस्मिन् योगे जातस्य बहुविवाहे कृतेऽपि न कस्यामपि स्त्रियां पुत्रो जायत इत्यर्थः । अथ तज्जाया = तस्य पूर्वोक्तलक्षणयुक्तस्य नरस्य स्त्री यदि, पुत्रयोगजनिता = पुत्रयो[illegible] स्यात् तथा तत्र पञ्चमे भावे सौम्येन=केनचिच्छुभग्रहेण वा पञ्चमात्षष्टेशेन ( लग्नाद्दशमेशेनेत्यर्थः ) निरीक्षिते सती जारेण = अन्यपुरुषेण, सुतवती=पुत्रवती सञ्जायते । न तदानीमौरसः पुत्रः स्यात्किन्तु क्षेत्रज एव जायत इति भावः ॥ १५ ॥

पुत्रेश और धनेश बलरहित हों पुत्रभाव पापग्रहसे देखा जाता हो तो जातक अनेक स्त्री वाला होने पर भी निश्चय सन्तानसे रहित रहे । यदि उसकी स्त्री पुत्रयोगवाली हो तो ५ वें को बुधसे या पाँचवें भावके षष्ठेशसे दृष्ट होने पर अन्यपुरुषसे पुत्रवती होवे ॥ १५ ॥

पुत्रस्थाने तदीशे वा गुरौ वा शुभवीक्षिते ।
शुभग्रहेण संयुक्ते पुत्रप्राप्तिर्न संशयः ॥ १६ ॥
लग्नेशे पुत्रभावस्थे पुत्रेशे बलसंयुते ।
परिपूर्णबले जीवे पुत्रप्राप्तिर्न संशयः ॥ १७ ॥
पुत्रस्थानगते जीवे परिपूर्णबलान्विते ।
लग्नाधिपेन संदृष्टे पुत्रप्राप्तिर्न संशयः ॥ १८ ॥
वैशेषिकांशके जीवे पुत्रेशे च तथास्थिते ।
शुभनाथेन संदृष्टे पुत्रे तत्प्राप्तिमादिशेत् ॥ १९ ॥

इदानीं पुत्रप्रदा योगा उच्यन्ते-पुत्रस्थान इत्यादिश्लोकचतुष्केण । तत्र श्लोकाः किल सरलार्था इति ॥ १६-१९ ॥

पञ्चमभाव वा पञ्चमेश वा गुरु शुभग्रहसे दृष्ट हो तथा शुभग्रहसे युक्त हो तो निस्सन्देह पुत्रप्राप्ति होवे ॥ १६ ॥

लग्नेश पुत्रभावमें हो पञ्चमेश बलवान् हो गुरु पूर्ण बलवान् हो तो निस्सन्देह पुत्रप्राप्ति हो ॥ १७ ॥

परिपूर्ण बली बृहस्पति पुत्रभावमें हो उसे लग्नेश देखता हो तो निस्सन्देह पुत्रप्राप्ति हो ॥

बृहस्पति वैशेषिकांशमें हो वैसे ही पुत्रेश भी हो, ५ वें भावको नवमेश देखता हो तो उसको पुत्रप्राप्ति होवे ॥ १९ ॥

दशमे शीतगुर्द्यूने भृगुजः पापिनः सुखे ।
तस्य सन्ततिविच्छेदो भविष्यति न संशयः ॥ २० ॥
षष्ठाष्टमस्थो लग्नेशः पापयुक्तः सुताधिपः ।
दृष्टो वा शत्रुनीचस्थैः पुत्रहानिं वदेद् बुधः ॥ २१ ॥
लग्नसप्तमधर्मान्त्यराशिगाः पापखेचराः ।
सपत्नराशिवर्गस्था वंशविच्छेदकारिणः ॥ २२ ॥

इदानीं वंशविच्छेदकरा योगा उच्यन्ते-दशमे शीतगुरित्यादिश्लोकत्रयेण । श्लोकास्तु सुगमार्थका इत्यलम् ॥ २०-२२ ॥

चन्द्रमा दशवें भावमें हो, शुक्र सप्तममें हो पापग्रह चतुर्थमें हों तो उसके सन्तानका निःसन्देह नाश होता है ॥ २० ॥

लग्नेश षष्ठ भावमें वा अष्टम भावमें हो, पुत्रेश पापग्रहसे युक्त हो वा उसे शत्रुगृहस्थ या नीचस्थ ग्रह देखता हो तो पुत्रकी हानि कहे ॥ २१ ॥

पापग्रह लग्न, सप्तम, नवम और द्वादश स्थानमें हों तथा शत्रुके राशि या वर्गमें हों तो वंशका विच्छेद करनेवाले होते हैं ॥ २२ ॥

बन्ध्या वृद्धा कृशा बाला रोगिणी पुष्पवर्जिता ।
कर्कशा स्थूलदेहा च नार्योऽष्टौ परिवर्जिताः ॥ २३ ॥

इदानीमष्टविधानां स्त्रीणां परित्यागमाह—बन्ध्येति । बन्ध्या = सन्ततिरहिता ( Barren woman ), वृद्धा=अधिकवयस्का, कृशा=क्षीणाङ्गी, बाला=अत्यल्पवयस्का, रोगिणी = व्याधिपीडिता, पुष्पवर्जिता = रजोहीना, कर्कशा=दुर्व्यवहारिणी, स्थूलदेहा चेता अष्टौ नार्यः परिवर्जिताः । श्रेयस्कामैः पुंभिरेतदष्टलक्षणोपलक्षिताः स्त्रियो हेया नोद्वाह्या इत्यर्थः ॥

बन्ध्या, वृद्धा, कृशा ( दुर्बला ), बाला, रोगिणी, पुष्पवर्जिता ( ऋतुसे हीना ), कर्कशा, स्थूलदेहा ( मोटी ) ये ८ स्त्रियां वर्जित हैं । विवाहके पूर्व इनकी परीक्षा कर लेनी चाहिये ॥

गुरुलग्नेशदारेशपुत्रस्थानाधिपेषु च ।
सर्वेषु बलहीनेषु वक्तव्या त्वनपत्यता ॥ २४ ॥
पुत्रस्थानं गते पापे तदीशे नीचराशिगे ।
शुभदृष्टिविहीने तु वक्तव्या त्वनपत्यता ॥ २५ ॥
गुरुलग्नहिमांशूनां पञ्चमस्थैरशोभनैः ।
शुभदृग्योगरहितैर्वक्तव्या त्वनपत्यता ॥ २६ ॥
पुत्रस्थानगते पापे तदीशे पापमध्यगे ।
सौम्यदृग्योगरहिते वक्तव्या त्वनपत्यता ॥ २७ ॥
पापमध्यगते जीवे पुत्रेशे बलवर्जिते ।
सौम्यदृग्योगरहिते वक्तव्या त्वनपत्यता ॥ २८ ॥

इदानीमनपत्यतायोगानाह—गुरुलग्नेत्यादिश्लोकपञ्चकेन ।

१ बृहस्पति-लग्नेश-सप्तमेश-पञ्चमेशा यदि निर्बला भवेयुस्तदा जातस्यानपत्यता ( सन्ततिराहित्यं ) भवति । अस्मिन्योगे जातो नरोऽसन्ततिर्भवतीति )

२ पञ्चमे भावे पापग्रहे विद्यमाने पञ्चमेशे नीचङ्गते तत्र शुभग्रहदृष्टिविहीने सति अनपत्यता भवतीति ।

३ गुरोः, लग्नाच्चन्द्राच्च पञ्चमे भावे यदि पापग्रहा भवेयुस्तथा शुभदृष्टियोगरहिता भवेयुस्तदा अनपत्यता भवति ।

४ पापग्रहः पञ्चमभावगतः पञ्चमेशः पापद्वयमध्यगतः शुभग्रहदृष्टियोगरहितश्च भवेत्तदा अनपत्यता भवति ।

५ गुरुः पापद्वयमध्यगतः पुत्रेशः ( पञ्चमेशः ) निर्बलः शुभदृष्टियोगरहितः स्यात्तदा अनपत्यता भवति ॥ २४-२८ ॥

बृहस्पति, लग्नेश, सप्तमेश और पञ्चमेश, इन सबके बलहीन होनेपर अनपत्यता ( सन्तानरहित ) कहे ॥ २४ ॥

पापग्रह पुत्रस्थानमें हो, पुत्रेश नीच राशिमें हो, शुभग्रहकी दृष्टि न हो तो अनपत्यता कहे ॥ २५ ॥

बृहस्पति, लग्न और चन्द्रमा इनके पांचवें पापग्रह हों शुभग्रहसे दृष्ट युत न हों तो अनपत्यता कहे ॥ २६ ॥

पुत्रस्थानमें पापग्रह हो, पुत्रेश पापग्रहके मध्यमें हो, वहां शुभग्रहकी दृष्टि योग न हो तो अनपत्यता कहे ॥ २७ ॥

पापग्रहोंके बीचमें गुरु हो पुत्रेश निर्बल हो शुभग्रह न देखता हो या न युत हो तो अनपत्यता कहे ॥ २८ ॥

पुत्रस्थाने बुधक्षेत्रे मन्दक्षेत्रेऽथवा यदि ।
मान्दिमन्दयुते दृष्टे तदा दत्तादयः सुताः ॥ २९ ॥

इदानीं दत्तादिसुतयोगमाह—पुत्रस्थान इति । बुधक्षेत्रे = मिथुनकन्ययोरन्यतरे अथवा मन्दक्षेत्रे = मकर-कुम्भयोरन्यतरे पुत्रस्थाने = पञ्चमे भावे सति तस्मिन् मान्दिमन्दयुते दृष्टे=गुलिकशनैश्चरयोरन्यतरेण द्वाभ्यां वा सहिते वा दृष्टे तदा जातस्य दत्तादयः सुताः भवन्ति । अत्र योगे जातस्य नौरसः पुत्रो भवति, किन्तु दत्तकात्मजादय एव पुत्रत्वेनोपयुज्यन्त इति । तथा च फलदीपिकायाम्—

'मान्दे सुतर्क्षे यदि चाऽथ बौधं मान्दार्कपुत्रान्वितवीक्षितं चेत् ।
दत्तात्मजः स्यादुदयास्तनाथसम्बन्धहीनो विबलः सुतेशः' इति ।

यदि पुत्रभावमें बुधकी राशि ( ३।६ ) वा शनिकी राशिमें ( १०।११ ) शनि या गुलिक हो वा इसकी दृष्टि हो तो दत्तक आदि पुत्र हो ॥ २९ ॥

मीनस्थोऽत्यल्पसन्तानश्चापस्थः कृच्छ्रसन्ततिः ॥
असन्ततिः कुलीरस्थो जीवः कुम्भे न सन्ततिः ॥ ३० ॥
पुत्रस्थाने कुलीरे वा मीने कुम्भे शरासने ।
स्थितो यदि सुराचार्यस्तत्फलं कुरुते नृणाम् ॥ ३१ ॥

इदानीं गुरोः स्थितिवशेन सन्तानविचारमाह—मीनस्थ इति । जीवः = गुरुर्यदि मीनस्थो भवेत्तदा जातोऽत्यल्पसन्तानः स्यात् । यदि गुरुश्चापस्थः = धनुर्गतः स्यात्तदा, कृच्छ्रसन्ततिः = कष्टेन सन्तानवान् स्यात् । अत्र योगे जातस्य विविध-( देवाद्याराधन ) प्रयासेन पुत्रो जायते । यदि गुरुः कुलीरस्थः = कर्कराशिगतः स्यात्तदा असन्ततिः = जातः

सन्तानरहितो भवति । एवं जीवः कुम्भे स्थितः स्यात्तदाऽपि न सन्ततिर्भवतीति । पूर्वोक्त-( कुलीर-मीन-कुम्भ-धनुरिति ) राशिचतुष्टयानामन्यतमे राशौ पुत्रस्थाने = पञ्चमे भावे, यदि सुराचार्यः = बृहस्पतिः स्थितो भवति तदाऽसौ गुरुः नृणां = अभिमतां, तत्फलं = पुत्रोत्पत्तिं कुरुते ॥ ३०-३१ ॥

मीनके गुरुमें थोडी सन्तान, धनुस्थ गुरुमें कष्टसे सन्तान, उच्च गुरुमें सन्तानरहित, कुम्भके गुरुमें सन्तान न होवे ॥ ३० ॥

पुत्रस्थानमें कर्क-मीन-कुम्भ-धनु राशि हो यदि उसपर बृहस्पति हो तो मनुष्योंको सन्तान उत्पन्न होनेका फल करे ॥ ३१ ॥

| | | |
|---|---|---|
| २ / ३ | १ | १० बु. १० / ४. / रा. ११ |
| ४ सू. ३. | १।२।३।४ योगाः | १० |
| ५ / ६ | ७ | ९ शु. २. / ८ |

| | | |
|---|---|---|
| | १२।८।७।५ | |
| | पुत्रोत्पत्तिः | |
| ४।१२।६।१ ९.बृ. | | |

पापग्रहेण संदृष्टे देवशापात्सुतक्षयः ।
षष्ठाधिपयुते दृष्टे विप्रशापात्सुतक्षयः ॥ ३२ ॥
सुतेशे कुजसंयुक्ते रिपुनाथेन वीक्षिते ।
शुभदृष्टिविहीने च रिपुदोषात्सुतक्षयः ॥ ३३ ॥
नवमे पापसंयुक्ते मन्दयुक्ते सुताधिपे ।
त्रिकोणे मान्दिसंयुक्ते पितृदोषात्सुतक्षयः ॥ ३४ ॥
मातृस्थानगते पापे सुतेशे मन्दसंयुते ।
व्ययनाशगते पापे मातृदोषात्सुतक्षयः ॥ ३५ ॥
राहुकेतुयुते दृष्टे पञ्चमे बलवर्जिते ।
तदीशे वा तथा प्राप्ते सर्पदोषात्सुतक्षयः ॥ ३६ ॥
गुरुपुत्रेशदारेशभूमिजाः संयुता यदि ।
दुर्दैवपीडया पुत्रीपुत्रनाशं वदेद् बुधः ॥ ३७ ॥

इदानीं सन्तानक्षयकारणान्याह—पापग्रहेणेत्यादिषड्भिः । सुते, सुतेशे, गुरौ वा पापग्रहेण संदृष्टे सति जातस्य देवशापात् = कस्यचिद् देवस्यावहेलनाप्रयुक्तदोषात् सुतक्षयो भवति । तस्मिन्नेव षष्ठाधिपेन = षष्ठभावपतिना युते वा दृष्टे विप्रशापात् = ब्राह्मणस्य दुर्वाक्यवशात्सुतक्षयो भवति ॥ ३२ ॥

सुतेशे = पञ्चमभावेशे कुजेन संयुते रिपुनाथेन = षष्ठेशेन वीक्षिते तस्मिञ्छुभग्रहदृष्टिरहिते च रिपुदोषात् = शत्रोरपराधेन सुतक्षयो भवति ॥ ३३ ॥

नवमे भावे पापग्रहेण संयुक्ते, सुताधिपे = पञ्चमभावेशे, मन्दयुक्ते = शनिना सहिते वा मान्दिना = गुलिकेन संयुक्ते त्रिकोणे ( ९।५ ) व्यवस्थिते सति पितृदोषात् = पितुरपराधेन सुतक्षयो भवति ॥ ३४ ॥

कस्मिंश्चित्पापे मातृस्थान-( ४ भावं ) गते, पापे सुतेशे मन्दसंयुते, अर्थात् कश्चित्पापग्रहः सुतेशो भूत्वा शनिना सहितः सन्, व्यये ( १२ ) नाशे ( ८ ) वा भवेत् तदा मातृदोषात् = जननीशापवशात्सुतक्षयो वाच्यः ॥ ३५ ॥

पञ्चमे भावे राहुणा केतुना वा युते वा दृष्टे निर्बले च सति, अथवा तदीशे = पञ्चमभावपतौ तथा प्राप्ते ( राहुणा केतुना वा युतदृष्टे निर्बले च ) सर्पदोषात् = सर्पादेर्मारणादिप्रत्यवायात्सुतक्षयः स्यादिति ॥ ३६ ॥

गुरुः, पञ्चमेशः, सप्तमेशः, मङ्गलश्चैते यदि संयुताः सन्त एकत्र गताः स्युस्तदा दुर्दैवपीडया = कस्यचित्प्रतिकूलदेवस्य बाधावशात् कन्यापुत्रयोर्नाशं बुधो वदेत् ॥ ३७ ॥

Notes—जन्मकुण्डल्यां सन्तानबाधाकारणमधिगम्य तद्दोषपरिहारार्थं तत्तत्प्रतिकूलदेवादेराराधनादिकं प्रकर्त्तव्यम् । तदा सत्यपि बाधकयोगे सन्ततिसम्भवो भवति "शान्त्या सर्वत्र सदिति" 'तत्प्राप्तिर्धर्ममूलादिति' वचनाच्चेति दिक् ॥ ३२–३७ ॥

पुत्र भावको पापग्रह देखता हो तो देवशापसे पुत्रका नाश कहे। षष्ठेशसे युक्त या दृष्ट पुत्रभाव हो तो ब्राह्मणके शापसे पुत्रका संहार कहे ॥ ३२ ॥

पुत्रेश मंगलसे युक्त हो, षष्ठेश उसको देखता हो शुभग्रह न देखता हो तो शत्रुके दोष से पुत्रका क्षय जाने ॥ ३३ ॥

९ वें स्थानमें पापग्रह हो पंचमेश शनिसे युक्त हो गुलिक त्रिकोणमें हो तो पिताके शाप से पुत्रका नाश कहे ॥ ३४ ॥

४ र्थ भाव पापग्रहसे युक्त हो, पुत्रेश शनिसे युक्त हो तथा १२।८ स्थान पापयुक्त हो तो माताके दोषसे पुत्रका क्षय हो ॥ ३५ ॥

पांचवाँ स्थान राहु या केतुसे युक्त या दृष्ट हो बलसे रहित हो उसका स्वामी भी उसी प्रकार हो तो सर्पके दोषसे पुत्रका क्षय हो ॥ ३६ ॥

यदि गुरु, पुत्रेश, सप्तमेश और मंगल सम्मिलित हों तो दुष्टदेवकी पीडासे पुत्री और पुत्रका नाश कहे ॥ ३७ ॥

पुत्रस्थानगतः कश्चित्परिपूर्णबलान्वितः ।
अदृष्टः पुत्रनाथेन तदा दत्तादयः सुताः ॥ ३८ ॥
पापक्षेत्रगते चन्द्रे पुत्रेशे धर्मराशिगे ।
दत्तपुत्रस्य सम्प्राप्तिर्लग्नेशस्तु त्रिकोणगः ॥ ३९ ॥
युग्मोदये पुत्रनाथश्चतुर्थस्थानगोऽपि वा ।
मन्दांशकसमारूढो दत्तपुत्रो भविष्यति ॥ ४० ॥
युग्मांशे भानुजांशे वा पुत्रेशोऽर्केन्दुजान्वितः ।
दत्तपुत्रस्य सम्प्राप्तिस्तस्मिन्योगे भविष्यति ॥ ४१ ॥
मन्दांशे पुत्रराशीशः स्वराशौ गुरुभार्गवौ ।
पूर्वं दत्तसुतप्राप्तिः पुनर्नार्याः पुनः सुतः ॥ ४२ ॥
मन्दांशकस्थिताः खेटाः शुक्लपक्षबलाधिकाः ।
गुरुर्यदि सुखस्थाने दत्तपुत्रेण सन्ततिः ॥ ४३ ॥

इदानीं कांश्चिद्दत्तकपुत्रयोगानाह—पुत्रस्थानगत इत्यादिषड्भिः। परिपूर्णबलान्वितः = पूर्वोक्तसकलबलशाली कश्चिद् ग्रहः, पुत्रस्थानगतः = पञ्चमभावगतः पुत्रनाथेन = पञ्चमेशेन, अदृष्टो भवेत्तदा तस्य जातस्य दत्तादय एव सुता भवन्ति नौरसा इति ॥ ३८ ॥

चन्द्रमाः पापग्रहराशिगतः, पञ्चमेशः-नवमभावगतः, लग्नेशस्त्रिकोणगतः स्यात्तदा दत्तपुत्रस्य सम्प्राप्तिर्भवति ॥ ३९ ॥

पुत्रनाथः = पञ्चमेशः युग्मोदये = समराशिके लग्ने, वा चतुर्थस्थानगोऽपि मन्दांशकसमारूढः = शनेः ( मकरकुम्भयोरन्यतरस्य ) नवांशे विद्यमानः स्यात्तदा जातस्य दत्तपुत्रो भविष्यति ॥ ४० ॥

अर्केन्दुआन्वितः = सूर्यांशुभाभ्यां सहितः, पुत्रेशः = पञ्चमेशः, युग्मांशे = समराशिनवांशे अथवा भानुजांशे = शनेः ( मकरकुम्भान्यतरस्य ) नवांशे विद्यमानः स्यात्तदा तस्मिन् योगे दत्तपुत्रस्य सम्प्राप्तिर्भविष्यति ॥ ४१ ॥

पुत्रराशीशः = पञ्चमभावपतिः यत्र तत्र, मन्दांशे=मकरकुम्भान्यतरराशिनवांशे भवेत्, गुरुभार्गवौ = बृहस्पतिशुक्रौ स्वराशौ भवेतां ( गुरुर्धनुर्मीनान्यतरे, शुक्रो वृषतुलान्यतरे ) तदा जातस्य पूर्वं = प्रथमं, दत्तसुतप्राप्तिर्भवति, ततः परं नार्याः = स्वस्त्रियाः पुनरौरसः पुत्रो भवति ॥ ४२ ॥

यदि शुक्लपक्षे जन्म स्यात् तथा बलाधिकाः = पूर्णबलशालिनः खेटाः ( त्र्यधिकाः ) मन्दांशके ( मकरकुम्भान्यतरराशिनवांशे ) स्थिता भवेयुः, तदानीं यदि गुरुः सुख ( ४ ) स्थाने भवेत्तदा जातस्य दत्तपुत्रेण सन्ततिर्भवति ॥ ४३ ॥

Notes—अत्र युग्मशब्देन मिथुनस्यापि ग्रहणं भवति । तेन 'युग्मोदये=मिथुनराशिलग्ने, 'युग्मांशे = मिथुनराशिनवांशे' इत्यपि व्याख्यानं स्यात् । अग्रे 'मन्दांशके' 'भानुजांशके' च दर्शनात् युग्मेत्यत्र मिथुनग्रहणमदोषमिति विचिन्त्यम् ॥ ३८-४३ ॥

**पुत्र स्थानमें परिपूर्ण बलवान् कोई भी ग्रह प्राप्त हो और पुत्रनाथ अस्त हो तो दत्तक आदि पुत्र हो ॥ ३८ ॥**

**चन्द्रमा पापग्रहके गृहमें हो पुत्रेश नवर्वे में हो और लग्नेश त्रिकोणमें हो तो दत्तक पुत्र की प्राप्ति हो ॥ ३९ ॥**

**पुत्रनाथ सम राशिमें हो वा चतुर्थ स्थानमें हो तथा शनिके नवांशमें हो तो दत्तक पुत्र होवे ॥ ४० ॥**

**सम राशिके नवांशमें, शनिके नवांशमें सूर्य और चन्द्रमासे युक्त पुत्रेश हो तो इस योगमें दत्तक पुत्रकी प्राप्ति होती है ॥ ४१ ॥**

**पुत्र राशिका स्वामी शनिके अंशमें हो, अपनी राशिमें गुरु और शुक्र हों तो पहले दत्तक पुत्र हो, फिर स्त्रीसे पुत्र प्राप्ति होवे ॥ ४२ ॥**

**शनिके अंशमें शुक्ल पक्षके अधिक बलवाले ग्रह हों यदि गुरु पुत्र-स्थान में हो तो दत्त पुत्र हो ॥ ४३ ॥**

विलग्नस्थे धरासूनौ निधनस्थे दिवाकरे ।
सुखे वा शुभसंदृष्टे पुत्रः कालान्तरे भवेत् ॥ ४४ ॥
लग्ने दिनेशतनये रन्ध्रस्थानगते गुरौ ।
पञ्चमे दुर्बले रिष्फे भौमे कालान्तरे सुतः ॥ ४५ ॥

इदानीं विलम्बेन पुत्रोत्पत्तियोगावाह—विलग्नस्थ इति द्वाभ्याम् । धरासूनौ=मङ्गले, विलग्नस्थे = जन्मलग्नमुपगते, दिवाकरे = सूर्ये, निधनस्थे = अष्टमभावगते, अथवा सुखे= चतुर्थभावमुपगते तस्मिञ्छुभग्रहेण सन्दृष्टे सति, कालान्तरे = विलम्बेन ( अधिकवयसि ) पुत्रः भवेत् । तथा च होरारत्ने—

"भौमे विलग्नयाते चाष्टमराशिस्थिते दिनेशसुते ।
सूर्ये वाऽऽस्पदुतर्क्षे पुत्रः कालान्तरे भवति" इति ।

दिनेशतनये = शनैश्चरे, लग्ने गतवति, गुरौ रन्ध्रस्थान-( ८ ) गते, पञ्चमे भावे दुर्बले सति, भौमे रिष्फे = द्वादशे भावे गतवति कालान्तरे = विलम्बेन सुतो जायते । पाराशरीये च—"लग्ने मन्दे गुरौ रन्ध्रे व्यये भौमसमन्विते ।

शुभदृष्टे स्वतुङ्गे वा चिरात् पुत्रमुपैति सः ॥" इति ॥ ४४-४५ ॥

**लग्नमें मंगल हो अष्टममें वा सुखमें सूर्यपर शुभग्रहकी दृष्टि हो तो कालान्तरमें पुत्र होवे ॥ ४४ ॥**

लग्नमें शनि हो अष्टम गुरु हो पंचममें वा द्वादशमें बलहीन मंगल हो तो कालान्तर में पुत्र होवे ॥ ४५ ॥

पुत्रान् पञ्चमभात्तृतीयभवनाद् भ्रातॄन् कलत्रात् स्त्रियो
दासीश्च क्षितिराशितः स्वभवनाद्दासाँश्च मित्राणि च ॥
याताँश्चैव नवांशकाञ्छुभदृशा हत्वा तथा रोपयेद् ।
व्योमव्योमकरैर्विभज्य तु तथा भूताश्च पुत्रादयः ॥ ४६ ॥

इदानीं पुत्र-भ्रातृ-कलत्र-दास-दासी-मित्राणां विचारस्थानानि तेषां संख्याज्ञानमाह—पुत्रानिति। पञ्चमभात् = लग्नात्पञ्चमभावतः, पुत्रान्, विचारयेदिति शेषः। तृतीयभवनात् = सहजभावतः, भ्रातॄन्। कलत्रात् = सप्तमभावतः स्त्रियश्चिन्तनीया इति। क्षितिराशितः = चतुर्थभावात्, दासीश्चिन्तयेत्। स्वभवनात् = द्वितीयभावात्, दासान्, मित्राणि च विचारयेत्। यातानिति। तत्तत्पञ्चमतृतीयादिभावे यातान् = भुक्तान्, नवांशकान् ( यावन्तो नवांशा भुक्तास्तानिति ) शुभदृशा = शुभखेटदृष्टया, हत्वा = सङ्गुण्य तथारोपयेत् = स्थापयेत्। अथ च तान् व्योमव्योमकरैः = २०० शतद्वयेन विभज्य तु ( पुनः ) तथाभूताः = लब्धिसंख्यामिताः, पुत्रादयः वाच्याः। अत्रेदं खलु विचिन्त्यम्। पञ्चमे, तृतीये, चतुर्थे, द्वितीये, सप्तमे च भावे यावच्छुभखेटदृग्बलं ( २ अ० ३०-३१ श्लो० द्र० ) तेन तत्तद्भावस्य भुक्तनवांशाः सङ्गुणिताः शतद्वयेन भक्ताश्च कार्यास्तदा लब्धमिताः पुत्रादयो वक्तव्या इति ॥ ४६ ॥

अत्र-युक्तिः—"पुत्रभावोपयुक्तांशतुल्या सङ्ख्या शुभांशके" इति गर्गवचनेन, तथा—

"सङ्ख्या नवांशतुल्या सौम्यांशे तावती सदा दृष्टा" इति कल्याणवचनेन च पुत्रादिभावे गतनवांशानां शुभदृष्टिबलानां च सापेक्षयातयोर्गुणनफले कलामये ( दृष्टिबलस्य कलामयत्वात् ) शतद्वयभक्ते सति ( एकस्मिन्नवांशे द्विशतकलात्वात् ) लब्धितुल्याः पुत्रादय इति साधूक्तन्तदिति ॥ ४६ ॥

पञ्चम भावसे पुत्रोंका, तृतीयसे भाइयोंका, सातवेंसे स्त्रीका, चौथेसे दासियोंका, दूसरेसे नौकरों और मित्रोंका विचार करना चाहिये। इन सबोंकी संख्या जाननेका प्रकार यह है कि-उस २ भाव पर शुभग्रहोंका जो दृग्बल हो ( २ अ० ३०-३१ श्लो० देखिये ) उससे उस भावके गतनवांश संख्याको गुणा करे उसमें २०० से भाग देने पर लब्धि संख्या तुल्य पुत्रादि जानना चाहिये। सुधाशालिनीकारः ॥ ४६ ॥

पुत्रं सोदरभं कलत्रमुदयं यानं च राशिं विना
तल्लिप्ताः शुभखेटदृग्बलहताः षष्ट्या विभक्ताः क्रमात् ॥
व्योमाकाशकराप्तपुत्रसहजस्त्रीदासदासीसुहृत्-
सङ्ख्याः पापनभोगदृग्बलभवाः पुत्रादिनाशप्रदाः ॥ ४७ ॥

पुत्रमिति। पुत्रं = पञ्चमभावम्, सोदरम् = तृतीयभावम्, कलत्रं = सप्तमभावम्, उदयं = लग्नम्, यानं = चतुर्थभावम्, राशिं विना कृत्वा = उक्तभावानां राशिसङ्ख्यां परित्यज्य, तल्लिप्ताः = तत्तद्भावांशादीनां पृथक् पृथक् कलाः, शुभखेटदृग्बलहताः = शुभग्रहाणां दृष्टिबलप्रमाणेन गुणिताः, षष्ट्या ६० विभक्ताः, ततः क्रमात् = क्रमशः, व्योमाकाशकरैः २०० आप्ताः ( विभक्ताः सन्तः ) पुत्र-सहज-स्त्री-दास-दासी-सुहृदां पृथक् पृथक् सङ्ख्याः भवेयुः। तत्र पापनभोगदृग्बलभवाः पुत्रादिनाशप्रदा भवन्ति। इदमुक्तं भवति। तत्तदुक्तभावेषु पापग्रहाणां दृष्टिबलादुक्तविधिना यावत्यः सङ्ख्या आयच्छन्ति तावतां पुत्रादीनां नाशं ब्रूयादिति।

अत्रापि युक्तिः ४६ श्लोकटोकोक्तैवेत्यलम् ॥ ४७ ॥

**पञ्चम, तृतीय, सप्तम, लग्न, और चतुर्थ भावके राशिको छोड़कर लिप्ता करे। (इन भावोंके अंशादिकी कला बनावे) शुभग्रहके दृष्टि बलसे गुणे, ६० का भाग दे, फिर २०० का भाग देने पर क्रमसे पुत्र, भाई, स्त्री, दास, दासी, मित्र होते हैं। पाप ग्रहके दृष्टि बलसे जायमान पुत्रादि नाश होते हैं ॥ ४७ ॥**

पुत्रस्थानपलग्नपस्फुटयुते राश्यंशकोणे गुरौ
पुत्राप्तिः सचिवेन्द्विनस्फुटयुते राश्यंशसंख्याः सुताः।
धीधर्मावनिनायकस्फुटचयप्राप्तांशसंख्याऽथवा
धीधर्मक्षितिगस्फुटैक्यभवने यातांशतुल्याः सुताः ॥ ४८ ॥

इदानीं पुत्राप्तिकालं पुत्रसङ्ख्याज्ञानप्रकारान्तरञ्चाह–पुत्रस्थानेति। पुत्रस्थानपलग्नपस्फुटयुते = पञ्चमेश–लग्नेशयोः पृथक् पृथक् यत्स्पष्टराश्यादिमानं तयोर्योगे क्रियमाणे ये राश्यंशा भवन्ति तत्र तस्मात्कोणे (५।९) च सञ्चारात्समागते गुरौ = बृहस्पतौ, पुत्राप्तिः = सुतोत्पत्तिः सम्भवति। सुतसङ्ख्याज्ञानमाह–सचिवेन्द्विनस्फुटयुते = गुरु–चन्द्र–सूर्याणां स्पष्टैक्ये कृते जायमानस्य राशेरंशसङ्ख्याः = नवांशसङ्ख्यासमाः, सुताः = पुत्रा भवेयुः। वा, धीधर्मावनिनायकस्फुटचयप्राप्तांशसङ्ख्या = पञ्चमेश–नवमेश–चतुर्थेशानां स्पष्टैक्ये प्राप्तराशेर्नवांशसमा पुत्रसङ्ख्या वाच्या। अथवा धीधर्मक्षितिगस्फुटैक्यभवने=पञ्चम–नवम–चतुर्थभावेषु व्यवस्थितानां ग्रहाणां स्पष्टैक्ये कृते यो राशिर्भवति तस्मिन् राशौ, यातांशतुल्याः = गतनवांशसङ्ख्यासमाः सुता वक्तव्या इति ॥ ४८ ॥

**स्पष्ट पञ्चमेश और लग्नेशके योग करनेसे जो राश्यंश हो उसमें या उससे कोणमें बृहस्पति के प्राप्त होनेसे पुत्रप्राप्ति कहे। स्पष्ट गुरु, चन्द्र और सूर्यके योग करने पर प्राप्तराशिमें जितना नवांश गत हो उतने पुत्र होते हैं। वा पञ्चमेश नवमेश, चतुर्थेशके स्पष्टैक्य राशिके नवांश संख्या तुल्य पुत्र होते हैं। वा पञ्चम, नवम और चतुर्थभावमें प्राप्त ग्रहोंके योगराशिमें गत नवांशसंख्या तुल्य पुत्र जाने ॥ ४८ ॥**

जीवाच्चन्द्रमसो विलग्नभवनात्पुत्रप्रदं पञ्चमं
तस्माद्धर्मगृहं च तत्पतिदशाभुक्तौ सुताप्तिं वदेत् ॥
पुत्रस्थानपकामपस्फुटयुते यत्तारका तद्दशा
तत्खेटान्वितवीक्षकग्रहदशाभुक्तिश्च पुत्रप्रदा ॥ ४९ ॥

जीवादिति। जीवात् = गुरुर्यत्र भवति तस्मात्, चन्द्रमसः = चन्द्राधिष्ठितराशितः, विलग्नभवनात् = जन्मलग्नतश्च पञ्चमं स्थानं पुत्रप्रदं भवति। त्रयाणां मध्ये बलीयसो ग्रहस्य पञ्चमस्थानात् पुत्रभावाभावं विचारयेत्। तस्माद्धर्मगृहं च = ततः (गुरोः चन्द्राद्विलग्नाद्वा) नवमं स्थानमपि पुत्रदं भवति। तत्पतिदशाभुक्तौ = यत्स्थानं पुत्रदं कथितं तदीशग्रहदशान्तर्दशाकाले, सुताप्तिं = पुत्रोत्पत्तिं वदेत्प्राज्ञ इति शेषः। अथ पुत्रस्थानपकामपस्फुटयुते = स्पष्ट–पञ्चमेश–सप्तमेशयोरैक्ये क्रियमाणे, यत्तारका=यन्नक्षत्रं सञ्जायते, तद्दशा= विंशोत्तरीमतेन तस्मिन्नक्षत्रे यस्य ग्रहस्य दशा भवति तद्ग्रहदशा पुत्रप्रदा भवति। तदिति। तत्खेटेन = पञ्चमेशेन सप्तमेशेन च अन्वितस्य = युक्तस्य तस्मिन् वीक्षकस्य च ग्रहस्य दशा, भुक्तिरन्तर्दशा च पुत्रप्रदा भवति ॥ ४९ ॥

**बृहस्पतिसे, चन्द्रमासे, लग्नसे, पांचवां स्थान पुत्र देनेवाला है और उससे ९ राशि भी पुत्रदायक होता है। उन राशियोंके स्वामीकी दशामें पुत्र प्राप्ति कहे। पञ्चमेश सप्तमेशके स्पष्टताको युत करने पर जो नक्षत्र हो उसकी स्पष्टदशा और उससे युतदृष्टकी दशाभुक्ति पुत्र देनेवाली है ॥ ४९ ॥**

पुत्रस्थानपकारकेक्षकयुता दुःस्थानपा दुर्बला
दुःस्थास्तत्परिपाकभुक्तिसमये पुत्रस्य नाशं वदेत्।
चत्वारो बलशालिनो यदि शुभास्तत्पाकभुक्त्यन्तरे
पुत्राप्तिं सुतसम्पदः प्रभुजनप्रीतिं च कुर्वन्ति ते ॥ ५० ॥

इदानीं स्थितिपरत्वेन पुत्रस्येष्टानिष्टं आह—पुत्रेति। पुत्रस्थानपकारकेक्षकयुताः = १ पुत्रभावेशः, २ पुत्रकारकः, ३ पुत्रभावदर्शी, ४ पुत्रभावगतश्चैते ग्रहा यदि दुःस्थानपाः = षडष्टव्ययभावेशाः, वा दुर्बलाः, वा दुःस्थाः = षडष्टव्ययगता भवेयुस्तदा तत्परिपाकभुक्तिसमये = ईदृग्लक्षणलक्षितानां ग्रहाणां दशान्तर्दशाकाले पुत्रस्य नाशं = मरणं वदेत्।

अथ ते चत्वारः=पुत्रस्थानपकारकेक्षकयुता ग्रहा यदि बलशालिनः=वीर्यवन्तः, शुभाः= शुभग्रहाश्च भवेयुस्तदा ते तत्पाकभुक्त्यन्तरे = तद्दशाभोगकाले, पुत्राप्तिं = पुत्रोत्पत्तिं, सुतसम्पदः = पुत्रसमृद्धीः, प्रभुजनानां = नृपादीनां प्रीतिं, च कुर्वन्ति ॥ ५० ॥

१ पुत्रभावेश, २ पुत्रकारक, ३ पुत्रभावद्रष्टा, ४ पुत्रभावस्थ ये चार ग्रह यदि दुःस्थान (६।८।१२) के स्वामी हों, निर्बल हों या दुःस्थान (६।८।१२) में स्थित हों तो उनकी दशा अन्तर्दशामें पुत्रका नाश कहे।

यदि वे चारों ग्रह पूर्णबली हों शुभग्रह हों तो अपनी दशा अन्तर्दशामें पुत्रलाभ, पुत्रों की समृद्धि राजाओंकी प्रसन्नता करते हैं ॥ ५० ॥

पुत्रेशकारकयुतेक्षकखेचराणां तत्कालजस्फुटयुतांशकराशियातौ।
वागीशभानुतनयौ यदि गोचरेण जातस्य पुत्रजनिमृत्युकरौ भवेताम् ॥ ५१ ॥

इदानीं पुत्रस्य जननमरणलक्षणे आह—पुत्रेशेति। पुत्रेशकारकयुतेक्षकखेचराणां = पञ्चमेश-पुत्रकारक-पञ्चमदर्शिग्रहाणां तत्काले (जन्मसमये) याता ये स्पष्टराश्यादयस्तेषां योगेन ये राश्यंशाः समुत्पद्यन्ते तस्मिन् राशौ नवांशे च, यातौ = सम्प्राप्तौ, गोचरेण = सञ्चारेण, वागीशभानुतनयौ = गुरुशनैश्चरौ यदि भवेतां तदा जातस्य नरस्य पुत्रजनिमृत्युकरौ भवेताम्। अत्रैतदुक्तं भवति। जन्मकाले उक्तानां चतुर्णां स्पष्टग्रहाणां योगेन यद्राश्यादिकं स्यात्तत्र यदा गोचरेण गुरुर्याति तदा पुत्रजन्म वाच्यम्। यदा तत्र शनिर्याति तदा पुत्रस्य मरणं वाच्यमिति।

Notes—अत्र न केवलं गणितागतराशौ गुरोः शनैश्चरस्य प्राप्तौ तत्तत्फलं विनिर्दिशेदपि च तत्र जातस्य वयसस्तारतम्येनापि भवितव्यमन्यथा कदाचिच्चतुर्णां ग्रहाणां योगे परमाल्पे तदासन्ने च जन्मकालिके गुरौ शनौ वा सति, परमाल्पवयसि जातस्य पुत्रोत्पत्तेरसम्भवापत्तिरिति चिन्त्यम् ॥ ५१ ॥

जन्मकालमें पुत्रभावेश, पुत्रकारक, पुत्रभावदर्शी, पुत्रभावस्थ इन चारों ग्रहोंके स्पष्टराश्यादिके योग करने पर जो राशि नवांश हो उसमें गोचरवश गुरुके जाने पर पुत्रका जन्म और शनिके जाने पर पुत्रका मरण कहना चाहिये ॥ सं० टी० कारः ॥ ५१ ॥

## अथ पितृविचारः।

पितृस्थानेश्वरे सौम्ये कारके शुभसंयुते।
भावे वा शुभसंयुक्ते पितृसौख्यं विनिर्दिशेत् ॥ ५२ ॥

इदानीं जातस्य पितुर्विचारमाह—पितृस्थानेश्वर इति। पितृस्थानेश्वरे = पञ्चमभावेशे, सौम्ये = शुभग्रहे, कारके = पितृकारके ग्रहे, शुभसंयुते, वा पञ्चमभावे शुभसंयुते सति पितृसौख्यं विनिर्दिशेत्। अस्मिन्योगे समुत्पन्नस्य नरस्य पितृसुखं भवतीति।

Notes—"पिताऽपि चिन्त्यो नवमे सुतर्क्षे" इति वचनस्वरसाद्धत्र पञ्चमे नवमे च

भावे पितृविचारः क्रियते । परञ्चास्मिन् ग्रन्थे 'पुत्राद्देवमहीपपुत्रपितृधीपुण्यानि सञ्चिन्तयेदिति' प्रतिज्ञादर्शनात्, नवमे-'भाग्यप्रभावगुरुधर्मतपःशुभानि' इत्यत्र पितुरदर्शनाच्च प्रकृतश्लोके 'पितृस्थानेश्वरे भावे' इत्यादौ पञ्चमभाव एव मया व्याख्यात इति ॥ ५२ ॥

**पितृस्थानेश ( पञ्चमेश ) शुभग्रह हो, पितृकारक ग्रह शुभग्रहसे युक्त हो, या पञ्चमभाव शुभयुक्त हो तो जातकको पिताका सुख कहना चाहिये ॥ ५२ ॥**

पारावतादौ तन्नाथे कारके च तथा स्थिते ।
स्वोच्चमित्रांशके वाऽपि पितृदीर्घायुरादिशेत् ॥ ५३ ॥
क्रूरनीचांशकस्थे वा भावनाथे च कारके ।
मन्दमान्द्यगुसंयुक्ते पितृदुःखं विनिर्दिशेत् ॥ ५४ ॥
सौम्ये तदीश्वरे वाऽपि नीचमूढारिराशिगे ।
क्रूरषष्ट्यंशके वाऽपि पितृदुःखं विनिर्दिशेत् ॥ ५५ ॥

सरलार्थाश्चैते त्रयः श्लोका इति न व्याख्याताः ॥ ५३-५५ ॥

**पञ्चमेश अथवा पितृकारक ग्रह पारावत आदि वैशेषिकांशमें हो, या अपने उच्चमें मित्रके नवांशमें हो तो पिता दीर्घायु होता है ।**

**पञ्चमेश तथा पितृकारक ग्रह पापग्रहके नवांशमें या नीच में हों या शनि, गुलिक, राहु इनमें किसी एकसे अथवा एकाधिकसे युत हों तो पितृदुःख कहना चाहिये ।**

**शुभग्रह और पञ्चमेश यदि नीच, अस्तङ्गत, या शत्रुगृह में हो अथवा क्रूर-षष्ट्यंशमें हो तो पितृदुःख कहना चाहिये ॥ ५३-५५ ॥**

पितृकर्मगृहे जातः पितृतुल्यगुणान्वितः ।
पितृजन्मतृतीयर्क्षे जातः पितृवशानुगः ॥ ५६ ॥
पितृषष्ठाष्टमे जातः पितृशत्रुर्भविष्यति ।
तद्भावपे विलग्नस्थे पितृश्रेष्ठो भवेत्सुतः ॥ ५७ ॥

इदानीं पितुर्जन्माङ्गवशात्पुत्रजन्माङ्गे फलमाह—पितृकर्मगृहे जात इति द्वाभ्याम् । पितृकर्मगृहे = यस्मिंल्लग्ने पितुर्जन्म भवेत्तस्माद्दशमे राशौ, जातः = समुत्पन्नो बालकः, पितृतुल्यगुणान्वितः = पितृसदृशगुणादिसंयुतो भवति । तत्र यदि पिता पण्डितस्तदा पुत्रोऽपि पण्डितः । पिता मूर्खश्चेत्तदा पुत्रोऽपि मूर्खः एवं सर्वे गुणदोषास्तत्तुल्या एव । पितृजन्मतृतीयर्क्षे = पितुर्जन्मलग्नात्तृतीये लग्ने, जातो बालः, पितृवशानुगः=पितुरादेशकरो भवेत् । परञ्च न केवलमेतावतैव तत्फलं वाच्यमपि च जातकस्य स्वीयजन्मकालीनतत्तद्भावबलाबलमपि सञ्चिन्त्यमिति ।

पितृषष्ठाष्टमे = पितुर्जन्मलग्नात्षष्ठेऽष्टमे वा लग्ने जातो बालः पितृशत्रुर्भविष्यति = अस्मिंल्लग्ने जातः पित्रा सह द्वेषकरो भविष्यति । तद्भावपे = जातकस्य जन्मलग्नात्पञ्चमभावेशे, विलग्नस्थे = जातस्य जन्मलग्नमुपगते सति सुतः, पितृश्रेष्ठो भवेत् । अस्मिंल्लग्ने जातो बालः गुणादिभिः पितुः सकाशात्, श्रेष्ठः = प्रतिष्ठितो भवेदिति ॥ ५६-५७ ॥

**पिताके जन्मलग्नसे १० वें लग्नमें जन्म होनेसे वह जातक पिताके समान गुणवाला होता है । पिताके पण्डित होनेसे पण्डित और पिता मूर्ख हो तो मूर्ख । इसी तरह पिताके समान गुण दोषसे युत हो । पिताके जन्मर्क्षसे ३ रे राशिमें जायमान बालक पिताका आदेशकारी होता है ।**

**पिताके जन्मलग्नसे ६।८ वें लग्नमें जन्म लेनेवाला बालक पिताका शत्रु ( दुश्मन ) होता है । जातकके जन्मलग्नसे पञ्चम भावेश यदि जातकके लग्नमें हो तो वह जातक गुणोंमें श्रेष्ठ और पिताके अपेक्षा आदरणीय होता है ॥ ५६-५७ ॥**

लग्नादायतपःस्थिताः शनिमहीपुत्रागवो मृत्युदा-
स्तातस्यार्कजभूसुतौ निधनदौ बालस्य रन्ध्रास्तगौ ॥
माने वा यदि पञ्चमे कुजरविच्छायाकुमारेन्दवः
सद्यो मातुलतातबालजननीनाशं प्रकुर्वन्ति ते ॥ ५८ ॥

लग्नादिति । शनिमहीपुत्रागवः = शनि-कुज-राहवः, यदि लग्नादायतपःस्थिताः = जन्मलग्नादेकादश-नवमभावगताः भवेयुस्तदा, तातस्य=पितुः मृत्युदा भवन्ति । अस्मिन्योगे जातस्य पिता म्रियते इत्यर्थः । अर्कजभूसुतौ = शनिमङ्गलौ, रन्ध्रास्तगौ = लग्नादष्टम-सप्तमगतौ, बालस्य = आत्मजस्य निधनदौ = मृत्युकरौ भवतः । अथ कुजरविच्छायाकुमारेन्दवः = मङ्गल-सूर्य-शनि-चन्द्रमसः, माने=लग्नाद्दशमे यदि वा पञ्चमे व्यवस्थिताः स्युस्तदा ते सद्य एव क्रमेण मातुलतातबालजननीनाशं प्रकुर्वन्ति । तत्र दशमे पञ्चमे वा स्थितः कुजो मातुलनाशकरः, सूर्यः तातनाशकः, शनिर्बालकनाशकः, चन्द्रमा जननीनाशको भवतीति । अयमेवार्थ उक्तः सर्वार्थचिन्तामणौ—

'लाभे शुभे वा यदि मन्दभौमौ फणीन्द्रयुक्तौ पितुरस्त्यपायः ।
लग्नाच्छुभे कर्मणि भूमिपुत्रे पापेक्षिते मातुलमृत्युमाहुः ।
मन्देन युक्ते यदि पुत्रमृत्युं चन्द्रे हि तन्मातृमृतिं सपापे ।
पितुर्मृतिं वासरनायकेऽत्र न संशयः पापदृशा समेते' इति ॥ ५८ ॥

शनि, मङ्गल और राहु जन्मलग्नसे ११।९ स्थानमें हों तो पिताकी मृत्यु करते हैं। शनि और मङ्गल ८।७ में हों तो जातकके पुत्रकी मृत्यु करते हैं। यदि मङ्गल १० वें या ५ वें में हो तो शीघ्रही मामाकी मृत्यु, सूर्य १०।५ में हो तो पिताकी मृत्यु, शनि हो तो पुत्रकी मृत्यु और चन्द्रमा हो तो माताकी मृत्यु करता है ॥ ५८ ॥

सबले पितृभावेशे लग्नेशेन्दुचतुर्थपाः ।
दुर्बला यदि तन्मातुर्गर्भतो मरणं विदुः ॥ ५९ ॥

सबल इति । पितृभावेशे = पञ्चमेशे, सबले = बलयुक्ते सति, तथा लग्नेशेन्दुचतुर्थपाः = जन्मलग्नेश-चन्द्र-चतुर्थेशाः यदि दुर्बलाः भवेयुस्तदा, तन्मातुः = जातकस्य मातुः, गर्भतः मरणं विदुः । अस्मिन्योगे जातस्य माता गर्भयातनया म्रियते इति भावः ॥ ५९ ॥

यदि पञ्चम भावेश बली हो लग्नेश, चन्द्रमा और सुखेश दुर्बल हों तो उसकी माताका गर्भसे मरण होवे ॥ ५९ ॥

नवमादष्टमाधीशो नवमात्खरपोऽथवा ॥
शनिर्वेधेषु यः क्रूरः संभवेत् पितृमृत्युदः ॥ ६० ॥

नवमादिति । जातस्य नवमभावादष्टमाधीशः = जन्मलग्नाच्चतुर्थभावेश इति, अथवा नवमात्खरपः = नवमाद्द्वाविंशतिद्रेष्काणेशः, नवमे यो द्रेष्काणः स एव तस्मादष्टमे ( लग्नाच्चतुर्थे ) भावे खर-संज्ञकस्तदीशः यदि शनिः स्यात् तथा तत्र यः क्रूरः वेधेषु = तात्कालिकग्रहवेधेषु शनिना विद्धो भवेत् स पितृमृत्युदः सम्भवेत् ।

अत्र वेधो जन्मराशेः ( जन्मकाले चन्द्राधिष्ठितराशेः ) विचार्यः । तत्र तावद् वेधज्ञानाय कालप्रकाशिकोक्ताः श्लोका उद्ध्रियन्ते—

१ २ ९ ३ ६ १२ ७ ८ १० ४ ५ ११
रविः पु-रो-धा-मी-ता-स्य-स-दा-न-व-श-युग्-गतैः ।
५ १ ९ ३ ६ १२ २ ७ १० ४ ८ ११
शशी मा-या-न्ध-गो-च-र्या-र-स-ना-भु-ज-युग्-गतैः ॥
१ २ १२ ३ ४ ९ ६ ५ ८ १० ५ ११
कुजः पु-रा-स्य-गो-वे-अ-तौ-र्य-दा-ने-श-युग्-गतैः ॥

२ ५ ४ ३ ७ ९ ६ १ ८ १० १२ ११
बुधः ख-मि-व-गो-सि-धु-स्तो-य-दा-ना-ल्य-युग्-गतैः ॥
१ १२ २ ५ ४ ६ ३ ७ १० ३ ८ ११
जीवः का-र्ये-र-मा-भू-तो-गोः-स्यो-न-ल-द-युग्-गतैः ।
८ ७ १ १० ९ १२ २ ५ ११ ४ ३
शुक्रो हं-स-पु-न-र्धें-र्यो-रा-मा-र्धं-भो-ग-त-ग्रहैः ॥
कुजवद्राहुरविजौ न वेधः पितृपुत्रयोः ॥ इति ॥

Notes—अत्र सूर्यशनैश्चरयोः, चन्द्रबुधयोश्च वेधलक्षणसत्त्वेऽपि वेधदोषो न भवति 'न वेधः पितृपुत्रयोः' इत्युक्तत्वात् । तेन 'वेधेषु यः क्रूरः' इत्यत्र सूर्यशनैश्चरयोः वेधमपहायैव विचारः कर्त्तव्य इति ॥ ६० ॥

नववेंसे अष्टमेश वा ३ वें से खरेश ( २२ द्रे० पति ) यदि शनि हो और वेधमें जो पापग्रह हो वह पिताकी मृत्यु करता है ॥ ६० ॥

अथ वेधस्थानबोधकचक्रम् ।

| | चन्द्र-भावाः | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| सूर्यः | १ | २ | ९ | ३ | ६ | १२ | ७ | ८ | १० | ४ | ५ | ११ |
| चन्द्रः | ५ | १ | ९ | ३ | ६ | १२ | २ | ७ | १० | ४ | ८ | ११ |
| मं.श.रा. | १ | २ | १२ | ३ | ४ | ९ | ६ | ७ | ८ | १० | ५ | ११ |
| बु. | २ | ५ | ४ | ३ | ७ | ९ | ६ | १ | ८ | १० | १२ | ११ |
| बृ. | १ | १२ | २ | ५ | ४ | ६ | ३ | ७ | १० | ३ | ८ | ११ |
| शु. | ८ | ७ | १ | १० | ९ | १२ | २ | ५ | ११ | ४ | ३ | ६ |

दिनेशस्थितराश्यंशप्राणितः कोणगे रवौ ।
पितृमृत्युर्मातृमृत्युरिन्दुस्थांशर्क्षयोर्बलात् ॥ ६१ ॥

दिनेशेति । दिनेशस्थितराश्यंशप्राणितः = सूर्यो यस्मिन् राशौ यन्नवांशे च तिष्ठति तयोर्मध्ये यः प्राणी = बलवान् भवेत् तस्मात् राशेर्नवांशाद्वा कोण-( ५।९ ) गे रवौ = सूर्ये सञ्जाते सति पितृमृत्युः स्यात् । एवम् इन्दुस्थांशर्क्षयोर्बलात् = चन्द्रमा यस्मिन्नवांशे राशौ च तिष्ठति तयोर्मध्ये बलवतो नवांशाद्वा राशेः कोणे ( ५।९ ) गतवति सूर्ये मातृमृत्युर्भवेदिति । प्रथमं गुरोः शनैश्चराद्वा पित्रोर्मरणवर्षं विज्ञायानेन श्लोकेन पित्रोर्मरणमासज्ञानं कुर्यात् ॥ ६१ ॥

सूर्य जिस राशि और जिस नवांशमें हो उन दोनोंमें जो बलवान् हो उससे ५।९ राशि में सूर्यके जाने पर पिताकी मृत्यु एवं चन्द्रस्थित नवांश और राशिमें बली राशिसे ५।९ में सूर्यके जाने पर माता की मृत्यु होती है । पहले बृहस्पति और शनिके द्वारा माता और पिताके मरण वर्षका ज्ञान करके इस श्लोकसे महीने का ज्ञान करना होगा ॥ ६१ ॥

भानुस्थितांशपारूढनवांशद्वादशांशभम् ।
गते चन्द्रे भवेन्मृत्युर्मातापित्रोर्यथाक्रमम् ॥ ६२ ॥

भानुस्थितेति । भानु : = सूर्यः जन्मकाले यस्मिन्नवांशे तिष्ठति तन्नवांशपतिर्ग्रहो यद्राशिसम्बन्धिनवांशे द्वादशांशे च व्यवस्थितः स्यात्तं भं = राशिं गते चन्द्रे मातापित्रोः यथाक्रमं मृत्युर्भवेत् । अर्थात् सूर्याधिष्ठितनवांशपतिर्ग्रहो यन्नवांशे भवति तद्राशिगते चन्द्रे मातुर्मरणं तथा तद्द्वादशांशराशिगते चन्द्रे पितुर्मरणं वाच्यमित्यर्थः ॥

Notes—पित्रोर्मरणवर्षमासज्ञानानन्तरमनेन श्लोकेन तिथिज्ञानं सम्भवेदिति ॥६२॥

सूर्य जिस नवांशमें हो उसका पति जिस राशिके नवांशमें हो उस राशिमें चन्द्रमाके जाने पर माताकी मृत्यु, एवं सूर्याधिष्ठित नवांशपति जिस राशिके द्वादशांशमें हो उस राशिमें जब चन्द्रमा जावे तब पिताकी मृत्यु हो । पहले माता और पिताकी मृत्युके वर्ष, मास जान कर इस श्लोकसे तिथि जान सकते हैं ॥ ६२ ॥

दुष्टस्थानगते भानौ सिंहान्त्यद्वादशांशके ।
जातश्चेज्जननात्पूर्वं पितृमृत्युं प्रयच्छति ॥ ६३ ॥

इदानीं जातस्य जननात्पूर्वं पितुर्मरणमाह—दुष्टेति । भानौ सूर्ये, दुष्टस्थानगते = षडष्टव्ययगते तत्र सिंहान्त्ययोः = सिंहमीनराश्योः, द्वादशांशके च व्यवस्थिते सति जातश्चेत् = यदि जन्म स्यात् तदा जननात्पूर्वं=गर्भस्थ एव जातके तस्य पितुर्मृत्युं प्रयच्छति । अस्मिन्योगे जातस्य गर्भस्थस्यैव पिता म्रियत इति भावः ॥ ६३ ॥

सूर्य दुष्टस्थान ( ६।८।१२ ) में होते हुये यदि सिंह या मीनके द्वादशांशमें हो तो जातकके जन्मसे पहले ही पिताकी मृत्यु हो ॥ ६३ ॥

मार्तण्डे गुलिकस्फुटादपहृते राशित्रिकोणे शनौ
रोगं तज्जनकस्य देवसचिवे मृत्युस्तदंशोपगे ।
आदित्ये यमकण्टकस्फुटयुते तद्राशिकोणे गुरौ
रोगं तद्भवनांशकेऽमरगुरौ तातस्य नाशं वदेत् ॥ ६४ ॥

इदानीं गुरुवशात् पितृमरणमाह—मार्त्तण्ड इति । मार्त्तण्डे = सूर्ये, गुलिकस्फुटात् = गुलिकस्पष्टराश्यादितः अपहृते = विशोधिते सति यदवशिष्टं स्यात्तद्राशित्रिकोणे ( ५।९ ) सञ्चारात् सञ्जाते शनौ तज्जनकस्य रोगं वदेत् । तथा देवसचिवे = गुरौ सञ्चारात् तदंशोपगे = तदवशिष्टराश्यंशोपगते सति तज्जनकस्य = तस्य जातस्य पितुर्मृत्युर्भवेत् । प्रकारान्तरमाह—आदित्य इति । सूर्ये स्पष्ट-यमकण्टकस्य राश्यादिना युक्ते सति यो राशिस्तद्राशिकोणे सञ्चारात्समागते गुरौ तातस्य रोगं ब्रूयात्तथा तद्भवनांशके = तल्लब्धराशिनवांशे सञ्जातेऽमरगुरौ = बृहस्पतौ सति तातस्य, नाशं = मरणं वदेदिति । अनेन विधिना पितुर्मरणवर्षज्ञानं सम्भवेद् गुरोरेकैकराशिभ्रमणस्य वर्षमिति परिभाषात्वात् ॥ ६४ ॥

स्पष्ट गुलिकमें स्पष्टसूर्यके घटानेसे जो शेष हो उस राशिमें या उससे त्रिकोणमें गोचरीय शनिके जाने पर जातकके पिताको रोग होता है और शेष राशिके नवांशमें बृहस्पतिके जानेपर उसके पिताकी मृत्यु होती है।

सूर्यमें स्पष्ट यमकण्टकके जोड़नेसे प्राप्त राशि त्रिकोण में गुरुके जाने पर पिताको रोग और उसके नवांशमें जानेपर पिताकी मृत्यु कहनी चाहिये ॥ ६४ ॥

केन्द्रे चरेऽर्के चन्द्रे वा पितरौ न दहेत्सुतः ॥
केन्द्रे द्विदेहगौ तौ चेन्मृत्युदाहौ द्विकालगौ ॥ ६५ ॥

इदानीं पुत्रहस्तात् पित्रोः शवदाहाभावयोगमाह = केन्द्र इति । अर्के = सूर्ये, वा चन्द्रे, चरे = मेष-कर्क-तुला-मकरान्यतमे विद्यमाने सति, केन्द्रे = जन्मलग्नात् १।४।७।१० तदन्यतमे व्यवस्थिते सुतः पितरौ = पितरं मातरं च मरणानन्तरं न दहेत् अस्मिन् योगे जातस्य पितरौ पुत्रहस्तेन न दह्येते, तत्र पुत्रस्य परोक्षत्वादशक्यत्वाद्वेति । अथ तौ =

चन्द्रसूर्यौ चेद्यदि द्विदेहगौ = द्विस्वभावराशिगतौ भूत्वा केन्द्रे भवेतां तदा पित्रोः, मृत्युदाहौ = मरणं शवदहनञ्च, द्विकालगौ भवेताम् । न खलु मरणावसर एव शवदाहो भवेत् । अर्थान्मरणानन्तरं कालान्तरे तच्छवदाहो भवेदिति । अत्रेदं वक्तुं युज्यते—यस्य नरस्य जन्मकाले सूर्याचन्द्रमसौ केन्द्रे द्विदेहगौ भवतस्तस्य पितरौ स्वजनपरोक्षे (विदेशादौ) म्रियेते अतस्तयोः मृत्युदाहौ नैककालौ भवत इति । अर्थादेव जन्मकाले चन्द्रसूर्यौ स्थिरर्क्षे केन्द्रे भवेतां तदा पितरौ मरणकाल एव पुत्रहस्तेन दह्येते इति ॥ ६५ ॥

सूर्य या चन्द्रमा चर ( मे. क. तु. म. ) राशिका होकर यदि केन्द्र ( १।४।७।१० भाव ) में हो तो पुत्र माता-पिताका दाह ( मरणानन्तर शवदाह ) नहीं करता। यदि सूर्य और चन्द्रमा द्विस्वभाव ( मि. कं. ध मी ) राशिमें होकर केन्द्रमें हों तो माता-पिताकी मृत्यु और दाह एक समय नहीं होते, बल्कि मरणके कुछ काल ( दिन ) के बाद दाह होता है। अर्थतः सिद्ध हुआ कि स्थिरराशिके चन्द्र और सूर्य यदि केन्द्रमें हों तो पुत्र अपने माता-पिताका दाह मरण कालही में करता है। सु. शा. कारः ॥ ६५ ॥

अदृश्ययातौ पितृमातृनाथौ पित्रोर्मुखादर्शनदौ भवेताम् ।
पुत्राधिपोऽदृश्यगृहोपगश्चेत्पुत्राननादर्शनदोऽन्त्यकाले ॥ ६६ ॥

इदानीमन्तकाले पित्रोः पुत्रस्य च मुखादर्शनयोगावाह—अदृश्ययाताविति। जातस्य जन्मकाले पितृमातृनाथौ—पितृमातृभावेशौ (५।४ भावपती) यदि अदृश्ययातौ = लग्नभोग्य—सप्तमभुक्तान्तर्गतौ ( अदृश्यचक्रार्धगतौ ) भवतस्तदा जातस्य पित्रोर्मुखादर्शनदौ भवेतामर्थादस्मिन्योगे जातो नरः पित्रोर्मुखं न पश्येदिति । अथ पुत्राधिपः = जातकस्य पुत्र-(५) भावेशः चेद्यदि, अदृश्यगृहोपगः = अदृश्यचक्रार्द्धगतः स्यात्तदाऽन्त्यकाले = मरणावसरे पुत्राननादर्शनदः स्यात् । अस्मिन्योगे जातो नरो मरणकाले पुत्रमुखं न पश्यतीत्यर्थः । उभयत्रापि परोक्षस्थितिकारणादिति वक्तव्यम् ॥ ६६ ॥

नवमेश और चतुर्थेश यदि अदृश्य चकार्द्ध ( लग्नके भोग्यांश और सप्तमके भुक्तांश इन दोनोंके मध्य ) में हों तो पुत्र अपने माता और पिताका मुख ( मरनेके समय ) नहीं देखता। यदि पञ्चमेश अदृश्य राशिमें हो तो मरनेके समय पिता माता अपने पुत्रका मुख नहीं देख पाते। तात्पर्य यह है कि दोनों योगमें पुत्रके परोक्षमें माता-पिताकी मृत्यु हो ॥

## अथ बुद्धिविचारः ।

दुःस्थे बुद्धिस्थानपेऽदृश्यगे वा जातो मन्दप्रायबुद्धि समेति ॥
केन्द्रे कोणे सौम्यवागीशयुक्ते वीर्योपेते बुद्धिमानिङ्गितज्ञः ॥ ६७ ॥
त्रिकालज्ञो भवेज्जीवे स्वांशे मृद्वंशसंयुते
गोपुराद्यंशके वाऽपि शुभांशे शुभवीक्षिते ॥ ६८ ॥

अधुना जातस्य बुद्धिविचारः क्रियते-दुःस्थ इत्यादिद्वाभ्याम् । बुद्धिस्थानपे = पञ्चमभावेशे, दुःस्थे = षडष्टव्यय-( ६।८।१२ ) गते, वा अदृश्यगे = अदृश्यचक्रदलगते सति जातो नरः मन्दप्रायबुद्धिं = स्थूलबुद्धि, समेति = प्राप्नोति । अत्र योगे जातः मलिनप्रज्ञो भवतीति । अथ बुद्धिस्थानपे केन्द्रे ( १।४।७।१० ) कोणे ( ५।९ ) गते, तस्मिन् सौम्यवागीशयुक्ते = बुधगुर्वोरन्यतरेण द्वाभ्यां वा युक्ते, ( अथवा केवलं बुध-गुरू केन्द्रे कोणे वा भवेतामित्यपि वक्तुं युज्यते ) वीर्योपेते = बलयुक्ते च सति जातो बुद्धिमान्, इङ्गितज्ञः = सङ्केतेनैव मनोगतविषयज्ञो भवति ।

जीवे = बृहस्पतौ, स्वांशे = स्वराशेः (९।१२) नवांशे, मृद्वंशेन = शुभषष्ट्यंशेन संयुते, अपि वा गोपुराद्यंशके ( १ अ० ४५-५६ श्लो. द्र. ) शुभांशे वा विलसति, शुभग्रहेण

( बुध-शुक्र-शुक्लचन्द्रान्यतमेन ) वीक्षिते = अवलोकिते च सति जातो नरः, त्रिकालज्ञः= भूत-वर्तमान-भविष्यविद् भवेत् ॥ ६७-६८ ॥

पञ्चमेश दुःस्थान ( ६।८।१२ ) में हो या अदृश्य राशिमें हो तो जातक विशेषकर मन्द-बुद्धि होता है। यदि पञ्चमेश बुध और गुरुसे युक्त होकर केन्द्र या कोणमें हो तथा बलवान् हो तो जातक बुद्धिमान् और इशारेसे अभिप्रायको जाननेवाला होता है ॥ ६७ ॥

बृहस्पति अपने नवांशमें, या शुभषष्ट्यंशमें या गोपुरादि वैशेषिकांशमें, या शुभग्रहके नवांशमें होकर शुभदृष्ट हो तो जातक त्रिकालज्ञ ( भूत-वर्तमान-भविष्य जाननेवाला ) होता है ॥ ६८ ॥

हृद्रोगी पञ्चमे पापे सपापे च रसातले।
क्रूरषष्ट्यंशसंयुक्ते शुभदृग्योगवर्जिते ॥ ६९ ॥

इदानीं जातस्य हृद्रोगयोगमाह—हृद्रोगीति। जातकस्य पञ्चमे भावे पापे=सूर्य-भौम-शनि-क्षीणचन्द्रान्यतमे तिष्ठति, रसातले = लग्नाच्चतुर्थभावे च सपापे = पापग्रहेण सहिते सति तथा तत्र क्रूरषष्ट्यंशसंयुक्ते शुभग्रहाणां दृष्ट्या योगेन च वर्जिते सति जातो नरः हृद्रोगी = हृद्रोगयुक्तो भवति ॥ ६९ ॥

चतुर्थ और पञ्चम भावमें पापग्रह हो, पापषष्ट्यंशसे युत हो और शुभग्रहके योग तथा दृष्टिसे रहित हो तो जातकको हृदय रोग होता है ॥ ६९ ॥

## अथ पुण्यविचारः।

अन्नदानपरो नित्यं पञ्चमेशे शुभांशके।
शुभखेचरसंयुक्ते भूमिजे केन्द्रमाश्रिते ॥ ७० ॥

इदानीं यस्मिन्योगे जातोऽन्नदानपरो भवति तमाह—अन्नदानपर इति। पञ्चमेशे शुभांशके विलसति, भूमिजे = मङ्गले शुभखेचरेण संयुक्ते केन्द्रमाश्रिते च सति जातो नरः नित्यं = सततम्, अन्नदानपरः = अन्नदानैकशीलः भवति ॥ ७० ॥

इति पञ्चमभावफलानि।

पञ्चमेश शुभग्रहके नवांशमें होकर शुभग्रहसे युक्त हो और मङ्गल केन्द्रमें हो तो जातक अन्नदान करनेमें तत्पर रहता है ॥ ७० ॥

---

## अथ षष्ठभावफलम्।

### तत्रादौ रोगविचारः।

रोगारिव्यसनक्षतानि वसुधापुत्रारितश्चिन्तये-
दुक्तं रोगकरं तदेव रिपुगे जीवे जितारिर्भवेत्।
षष्ठोऽरीशबुधौ विधुन्तुदयुतौ लग्नेशसम्बन्धिनौ
लिङ्गस्यामयकृद् व्रणेन रुधिरः षष्ठे सलग्नाधिपः ॥ ७१ ॥

अथाधुना षष्ठभावफलानि विवक्षुरादौ षष्ठभावे विचारणीयविषयान् ततो रोगयोगं चाह—रोगेत्यादिना। रोगः = आमयः, अरिः = शत्रुः, व्यसनं = दुराचरणम्, क्षतं=व्रणा-घाताश्चैतानि वसुधापुत्रारितः = मङ्गलतः षष्ठभावतश्च सञ्चिन्तयेत् = विचारयेत्। तदेव = षष्ठस्थानं ( भौमान्वितम् ) रोगकरमुक्तम्। जीवे = गुरौ, रिपुगे = षष्ठभावगते सति जातः, जितारिः = शत्रुनाशको भवेत्। अरीशबुधौ = षष्ठेशो बुधश्च, विधुन्तुदेन = राहुणा युतौ, लग्नेशस्य सम्बन्धिनौ ( स्थान-दृष्टि-मित्र-सहचरान्यतमसम्बन्धयुक्तौ ) भवेतां तदा

जातः षण्ढो ( नपुंसकः ) भवति । सलग्नाधिपः = लग्नेशेन सहितः, रुधिरः = मङ्गलः, षष्ठे भावे भवेत् तदा व्रणेन लिङ्गस्यामयकृद् = शिश्नरोगकरो भवति ॥ ७१ ॥

मंगल और शत्रुभावसे-रोग, शत्रु, व्यसन और चोट घाव वगैरहका विचार करे। मंगल युक्त छठा भाव रोग करने वाला कहा गया है। बृहस्पति षष्ठभावमें हो तो जातक शत्रु जीतनेवाला हो। षष्ठेश और बुध राहुके साथ लग्नेशके सम्बन्धी हों तो जातक नपुंसक हो। मङ्गल लग्नेशके साथ छठे भावमें हो तो घावसे लिङ्गमें रोग हो ॥ ७१ ॥

पत्नी षण्ढत्वमेति क्षतभवनगते कामपे सासुरेज्ये
भौमे मन्देन दृष्टे रिपुभवनगते शत्रुभार्यामुपैति ।
सौम्यैर्दृष्टे युते वा न भयमरिजनाच्छत्रुभे जन्मलग्नात्
पापैः शत्रुक्षतादिव्रणभयविपुलं जायते लाञ्छनं वा ॥ ७२ ॥

पत्नीति । सासुरेज्ये=असुरेज्येन ( शुक्रेण ) सहिते, कामपे=सप्तमेशे, क्षतभवनगते=षष्ठभावमुपगते जातस्य पत्नी = स्त्री, षण्ढत्वं = क्लीबत्वम् , एति=प्राप्नोति । विगतयोषिद्धर्मा भवतीत्यर्थः । भौमे=मङ्गले, रिपुभवनगते=षष्ठभावमुपगते तस्मिन्मन्देन=शनिना दृष्टे च सति जातः शत्रुभार्या=द्विषत्स्त्रियम्, उपैति=प्राप्नोति । अस्मिन्योगे जातस्य भार्या शत्रुर्भवतीति ।

अथ जन्मलग्नात् शत्रुभे = षष्ठभावे, सौम्यैः शुभग्रहैः दृष्टे वा युते सति जातस्य, अरिजनात् = शत्रोः सकाशात्, भयं न भवेत् । तस्मिन् षष्ठभावे पापैः दृष्टे वा युते ( सौम्यदृष्टियोगरहिते च ) सति, शत्रोः = वैरिजनात् , क्षतादेः = आघातादितः, व्रणभय-विपुलं = व्रणादितो भयाधिक्यं जायते वा लाञ्छनं=मिथ्यापवादः सञ्जायते ॥ ७२ ॥

शुक्रके सहित सप्तमेश शत्रुस्थानमें हो तो स्त्री नपुंसकी हो। मंगल शत्रुभवनमें हो शनि उसे देखता हो तो शत्रु स्त्री मिले। जन्मलग्नसे षष्ठस्थानमें शुभग्रह हों या देखते हों तो शत्रुसे भय न हो। पाप ग्रह हो तो शत्रुसे क्षतादि व्रण बहुत हो और लांछन हो ॥ ७२ ॥

षष्ठे भास्वति लग्ननायकरिपौ नीचारिगे दुर्बले
जातस्तत्पितृवर्गशत्रुसहितो लग्नेशमित्रग्रहे ।
इष्टस्थानगते निजोच्चसुहृदां वर्गोपयाते सति
ज्ञातीनां बहुलं वदन्ति मुनयः शत्रुव्रणाभावभाक् ॥ ७३ ॥

षष्ठ इति । भास्वति = सूर्ये, षष्ठे भावे व्यवस्थिते, लग्ननायकरिपौ = लग्नेशस्य शत्रुग्रहे दुर्बले नीचारिगे च सति जातो नरः, तत्पितृवर्गशत्रुसहितः = स्वपित्रादीनां ये शत्रवस्तैः सहितः भवति । अथ तस्मिन् भास्वति षष्ठे व्यवस्थिते, लग्नेशमित्रग्रहे, इष्टस्थानगते शुभ-स्थाने-( केन्द्रकोणादिके ) गते, तथा निजोच्चसुहृदां = स्वकीयोच्चराशेः मित्राणां वा वर्गे सम्प्राप्ते सति जातः ज्ञातीनां = स्ववंशजानां ( दायादानां ) बहुलं प्राप्नोति, शत्रुव्रणाभावभा-क् = रिपु-क्षतादिभीरहितश्च भवेदिति ॥ ७३ ॥

सूर्य षष्ठस्थानमें हो लग्नेशका शत्रुग्रह नीचराशिमें हो दुर्बल हो तो जातक पितृवर्ग शत्रुसे सहित हो। लग्नेशका मित्रग्रह इष्टस्थानमें प्राप्त हो अपने उच्च या मित्रके वर्गमें प्राप्त हो तो पुरुष अपने बहुत वंशजोंको प्राप्त करता है और उसे शत्रु तथा घाव वगैरह नहीं होते, ऐसा मुनियोंने कहा है ॥ ७३ ॥

शत्रुस्थानगतोऽरिनीचगृहगो वक्रं गतो वाऽस्तगो-
ऽनेकारातिजनो बहुक्षततनुः षष्ठाधिपो वा तथा ॥
षष्ठस्थानगतेषु भास्करमुखव्योमाटनेषु क्रमात्
तत्तत्कारकखेटवर्गरिपुणा सम्पीडितः सन्ततम् ॥ ४ ॥

 शत्रुस्थानगत इति । अरिनीचगृहगः = शत्रुगृहे नीचे वा गतः, वक्रं गतः, वा अस्तगः

कश्चिद् ग्रहो यदि शत्रुस्थानगतः = षष्ठभावगतः स्यात् तदा अनेकारातिजनः=बहुशत्रुजनैर्युक्तः, बहुक्षततनुः = बहुव्रणादिपीडितगात्रश्च भवेत्। षष्ठाधिपः = षष्ठेशो वा तथा = अरिनीचगृहगः, वक्रं गतोऽस्तगो वा भवेत्तदाऽपि तथा फलं भवेत्। भास्करमुखव्योमाटनेषु = सूर्यादिग्रहेषु, षष्ठस्थानगतेषु = शत्रु-(६) भावगतेषु जातो नरः क्रमात् तत्तत्कारकखेटवर्गरिपुणा = यो ग्रहः षष्ठगतो भवति तस्य यो वर्गः (वर्णः) तज्जातीयशत्रुणा सन्ततं = नित्यम् 'सततानारताश्रान्तसन्ततविरतानिशम्। नित्यानवरताजस्रम्' इत्यमरः, सम्पीडितो भवति। अत्रेदं विचिन्त्यम्। गुरु-शुक्रौ षष्ठस्थौ भवेतां तदा ब्राह्मणजातीयशत्रुणा सम्पीडितो भवेत्। सूर्य-भौमौ षष्ठस्थौ तदा क्षत्रियेण रिपुणा, चन्द्रश्चेत्तदा वैश्येन, बुधश्चेत्तदा शूद्रेण, शनिश्चेत्तदा म्लेच्छेन सम्पीडितो भवेदिति॥ ७४॥

**कोई भी ग्रह अपने शत्रुगृहमें होकर, या नीचमें होकर, या वक्री होकर, या अस्त होकर यदि छठे भावमें हो तो जातक अनेक शत्रुओंसे युत हो तथा उसके शरीरमें बहुत घाव हों। इसी तरह षष्ठेशके होने पर भी फल होते हैं। सूर्य आदि ग्रहोंके छठे भावमें रहने पर क्रमसे उनके वर्गके शत्रुसे जातक पीड़ित होता है॥ ७४॥**

पापव्योमचरास्त्रयोऽरिपतितत्प्राप्तेक्षका दुर्बला-
गोवित्तक्षयमामयं रिपुभयं कुर्वन्ति जन्मादितः।
ते सर्वे बलशालिनो यदि शुभा गोवित्तमश्वादिकं
राजान्नं सकलोपदंशसहितं रोगारिनाशं वदेत्॥ ७५॥

पापेति। अरिपतितत्प्राप्तेक्षकाः = १.षष्ठभावेशः, २.षष्ठभावगतः, ३.षष्ठभावदर्शी चैते त्रयो ग्रहाः यदि पापव्योमचराः = पापग्रहाः, दुर्बलाः = बलरहिताश्च भवेयुः तदा गोवित्तक्षयं=गवां धनानां च नाशम्, आमयं=रोगम्, रिपुभयं=शत्रुभीतिं च जन्मादित एव कुर्वन्ति। अथ ते सर्वे=षष्ठेश-षष्ठस्थ-षष्ठद्रष्टारो ग्रहा यदि शुभाः=शुभग्रहाः, बलशालिनः=बलवन्तश्च भवेयुस्तदा गोवित्तमश्वादिकं, विविधोपस्करयुक्तं राजान्नं, रोगारिनाशं च वदेत्॥ ७५॥

**षष्ठेश, षष्ठभावस्थ और षष्ठभावद्रष्टा ये तीनों ग्रह यदि पापग्रह हों और दुर्बल हों तो जन्मसे ही गौ-धनका नाश, रोग और शत्रुसे भय होता है। यदि वे तीनों ग्रह बली और शुभग्रह हों तो गौ, धन, घोड़ा आदि सवारी, अनेक सामग्रियोंके सहित, सुन्दर-अन्नकी प्राप्ति और रोग तथा शत्रुका नाश होता है॥ ७५॥**

तेषामम्बरचारिणामतिशुभौ केन्द्रत्रिकोणायगौ
द्वावेतौ बलशालिनौ यदि लघुव्याध्यादिनाशं नृणाम्।
एकोऽपि प्रबलो यदि व्रणरिपुक्लेशादि किञ्चित् फलं
यत्तत्कारकवर्गमूलमखिलं मोदं प्रमादं तु वा॥ ७६॥

तेषामिति। तेषां = त्रयाणाम्, अम्बरचारिणां = ग्रहाणाम्=अरिपतितत्प्राप्तेक्षकाणाम्, अतिशुभौ=त्रयाणां मध्येऽतीव शुभग्रहौ द्वौ यदि केन्द्रत्रिकोणाय (१।४।७।१०।५।९।११) गौ भवेताम्, तथा चैतौ द्वौ यदि बलशालिनावपि भवेतां तदा नृणाम् = जनिमताम्, लघुव्याध्यादिनाशं कुरुतः। अथ तेषां त्रयाणां मध्ये एकोऽपि प्रबलो ग्रहो यदि केन्द्रत्रिकोणायगो भवेत् तदा किञ्चित् = ईषदेव व्रणरिपुक्लेशादि फलं कुरुते। अत्र मोदम्=अनुकूलं (शुभम्) वा प्रमादं=प्रतिकूलम् (अशुभम्) यत् फलमुक्तं तदखिलं तु=सर्वमपि कारकवर्गमूलं=यो ग्रहस्तयोः कारको भवति तन्मूलकं विजानीयात्॥ ७६॥

**उन तीनों (षष्ठेश-षष्ठस्थ-षष्ठदर्शी) में कोई दो ग्रह अत्यन्त शुभग्रह हों, १।४।७।१०।५।९।११ इन भावोंमें किसीमें स्थित हों, बलयुक्त हों तो छोटे २ रोगोंका नाश करते**

यदि उन तीनोंमें एक भी ग्रह प्रबल हो तो थोड़े घाव, शत्रु, रोग वगैरह कहने चाहिये। यहां अच्छा या बुरा जो फल कहा गया है वह उस योगकारक ग्रहके सम्बन्धसे जानना चाहिये। अर्थात् जिस ग्रहका जो अच्छा या बुरा फल है वही जानना चाहिये ॥ ७६ ॥

पापे लग्नगते सपत्नपयुते देहव्रणं देहिनां
पुत्रस्थे पितृपुत्रयोः सुखगते मातुः कलत्रे स्त्रियाः।
धर्मस्थे सति मातुलस्य सहजे तस्यानुजस्य व्रणं
लाभस्थे तु तदग्रजस्य निधने जातो गुदार्तो भवेत् ॥ ७७ ॥

पाप इति। सपत्नपेन = षष्ठेशेन युते पापे = पापग्रहे ( सूर्य = कुज-शनि-राहूणामन्यतमे ) लग्नगते सति देहिनां = जातानां, देहव्रणं = शरीरे व्रणं स्यात्। सपत्नपयुते पापे पुत्रस्थे = पञ्चमभावगते सति पितृपुत्रयोः = जातस्य पितुः पुत्रस्य च देहव्रणं स्यात्। सुखगते = चतुर्थभावगते सति मातुः = जातस्य जनन्याः देहव्रणं स्यात्। कलत्रे = सप्तमगते, स्त्रियाः देहव्रणं स्यात्। धर्मस्थे = नवमभावगते सति तन्मातुलस्य। सहजे = तृतीये सति तस्यानुजस्य = तस्य कनिष्ठभ्रातुः। लाभस्थे = एकादशस्थे सति तु तदग्रजस्य = तस्य ज्येष्ठभ्रातुः व्रणं जायते। अथ सपत्नपयुते पापग्रहे निधने = अष्टमभावगते सति जातः स्वयमेव गुदार्तः = अपानरोगेण ( भगन्दरादिना ) पीडितो भवेदिति ॥ ७७ ॥

षष्ठेशसे युक्त लग्नमें पापग्रह हो तो मनुष्यके देहमें व्रण हो। पञ्चममें हो तो पिता और पुत्रके देहमें। चौथेमें हो तो माताके देहमें। धर्ममें हो तो मामाके देहमें। तृतीयमें हो तो जातकके छोटे भाईके देहमें व्रण हो। लाभमें हो तो बड़े भाईके देहमें व्रण हो। अष्टममें हो तो जातक स्वयं गुदार्त ( बवासीर रोगी ) हो ॥ ७७ ॥

भानुर्मूर्ध्नि शशी मुखेऽवनिसुतः कण्ठे तु नाभेरध-
श्चान्द्रिः सूरिरनामयं प्रकुरुते नेत्रामयं भार्गवः।
मन्दो वातमहिश्च केतुरुदरव्याधिं बुधक्षेत्रगो
लग्नेशः शशिजेन वीक्षितयुतो गुह्यव्रणं यच्छति ॥ ७८ ॥

भानुरिति। भानुः = सूर्यो यदि षष्ठेशयुतः षष्ठाष्टमगतश्च भवेत्तदा मूर्ध्नि = शिरोदेशे आमयं = रोगं = व्रणादिकं करोति। शशी = चन्द्रस्तथाभूतो मुखे, अवनिसुतः = मङ्गलस्तथाभूतः कण्ठे, चान्द्रिः = बुधस्तथाविधस्तु नाभेरधोदेशे रोगं करोति। सूरिः = बृहस्पतिः अनामयं = रोगमुक्तिम् ( आरोग्यम् ) कुरुते। भार्गवः = शुक्रस्तथाविधश्चेत्तदा नेत्रामयं = नेत्ररोगं प्रकुरुते। मन्दः = शनिः, वातं = वातव्याधिम्, अहिः = राहुः, केतुश्च उदरव्याधिम् = उदररोगं प्रकुरुतः। अथ च लग्नेशः, बुधक्षेत्रगः = कन्यामिथुनान्यतरस्थः शशिजेन = बुधेन, वीक्षितयुतः = दृष्टो युक्तो वा षष्ठस्थश्च यदि भवेत् तदा गुह्यव्रणं = भगन्दरादिगुप्तरोगं यच्छति = करोतीति।

Notes—अत्र बृहस्पतौ 'अनामयत्वम्' उक्तं परन्तु पराशरेण षष्ठेशयुते षष्ठाष्टमगते च गुरौ नासिकारोगोऽभिहितः। तथा च तद्वचनानि—

षष्ठाधिपोऽपि पापश्चेद्देहे वाऽप्यष्टमे स्थितः। तदा व्रणं भवेद् देहे कर्मस्थानेऽप्ययं विधिः ॥
एवं पित्रादिभावेशास्तत्तत्कारकसंयुताः। व्रणाधिपयुताश्चापि षष्ठाष्टमयुता यदि ॥
तेषामपि व्रणं वाच्यमादित्येन शिरोव्रणम्। इन्दुना च मुखे, कण्ठे भौमेन, ज्ञेन, नाभिषु ॥
गुरुणा नासिकायां च भृगुणा नयने पदे।
शनिना राहुणा कुक्षौ केतुना च तथा भवेत्। इति ॥ ७८ ॥

षष्ठेशसे युक्त ६।८ भावमें सूर्य हो तो सिरपर, चन्द्रमा हो तो मुखमें, मंगल हो तो कण्ठमें, बुध हो तो नाभिके नीचे रोग हो। गुरु हो तो रोगका नाश करते हैं। [illegible] हो तो

नेत्ररोग, शनि हो तो वातव्याधि, राहु-केतु हो तो पेट में रोग हो। लग्नेश बुधके गृह (३।६) में हो और बुधसे देखा जाता हो वा युक्त हो तो गुह्यस्थानमें व्रण करता है ॥७८॥

लग्नादियद्राशिगते फणीशे शुक्रेक्षिते तत्तनुचिह्नमेति ॥
मन्दाहियुक्ते रिपुराशिनाथे तुरङ्गपश्वादिभयं वदन्ति ॥ ७९ ॥

लग्नादीति । फणीशः = राहुः लग्नादि-यद्राशिगतः = लग्नाद्यस्मिन् स्थाने स्थितः शुक्रेण दृष्टश्च भवेत् तत्स्थानं 'कादिविलग्नविभक्तभगात्रः' ( अ० ३, श्लो० ७६ द्र० ) इत्यनेन यस्मिन्नङ्गे भवेत्तत्तनौ = तदङ्गे, चिह्नमेति = व्रणादिचिह्नं भवति । अथ रिपुराशिनाथे = षष्ठभावेशे मन्दाहियुक्ते=शनिराहुभ्यां सहिते सति जातस्य तुरङ्गपश्वादिभयं = घोटकादिचतुष्पदेभ्यो भयं मनीषिणः वदन्ति ॥ ७९ ॥

लग्नादि जिस राशिमें राहु हो, शुक्र उसको देखता हो तो वह राशि शरीरमें जिस स्थानका हो उस जगह व्रण कहे। शत्रुस्थानका मालिक शनि-राहुसे युक्त हो तो घोड़ा आदि पशुओंसे भय होता है ॥ ७९ ॥

पापग्रहेण संदृष्टे बलहीनेऽरिनायके। पापान्तरगते वाऽपि शत्रुपीडा भविष्यति ॥
शत्रुस्थानाधिपे दुःस्थे नीचमूढारिराशिगे। लग्नेशे बलसंयुक्ते शत्रुनाशं वदेद्बुधः ॥

इदानीं शत्रोः पीडां शत्रुनाशञ्चाह—पापग्रहेणेतिद्वाभ्याम् । अरिनायके = षष्ठभावेशे, बलहीने, पापग्रहेण संदृष्टे च, अपि वा पापान्तरगते = पापद्वयमध्यगते सति जातस्य शत्रोः सकाशात् पीडा = दुःखं भविष्यति । अस्मिन्योगे जातस्य शत्रुद्वारेण दुःखं भवति । न कदाचिच्छत्रुणा तज्जातस्य शुभं सम्भाव्यत इति भावः ।

शत्रुस्थानाधिपे = षष्ठभावेशे, दुःस्थे, नीचे, अस्तङ्गते, शत्रुगृहं गते वा तथा लग्नेशे= जन्मलग्नाधिपतौ बलसंयुक्ते सति बुधः शत्रुनाशं = जातस्य रिपोः मरणं वदेत् । अस्मिन् योगे जातस्य शत्रुर्म्रियते इति भावः ॥ ८०-८१ ॥

शत्रु स्थानका मालिक बलहीन हो पापग्रहसे देखा जाता हो, वा पापग्रहोंके बीच हो तो शत्रुसे पीड़ा होती है ॥ ८० ॥

शत्रुभावेश दुष्ट स्थानमें हो नीच, अस्तङ्गत, शत्रु राशिमें हो लग्नेश बली हो तो शत्रु का नाश कहना चाहिये ॥ ८१ ॥

षष्ठेशे गोपुरांशादौ दिवाकरनिरीक्षिते। लग्नेशे बलसम्पूर्णे ज्ञातीनामुपकारकृत् ॥
इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते त्रयोदशोऽध्यायः ॥१३॥

इदानीं ज्ञातीनामुपकारकृतं जातकमाह—षष्ठेश इति । षष्ठेशे = षष्ठभावपतौ, गोपुरांशादौ = गोपुरादिवैशेषिकांशे ( १ अ० श्लो० ४५-४७ ) विद्यमाने, दिवाकरनिरीक्षिते = सूर्येणावलोकिते, लग्नेशे बलसम्पूर्णे = परिपूर्णबलान्विते च सति जातो नरो ज्ञातीनामुपकारकृत् = स्वबन्धुबान्धवानामुपकृतिकरो भवतीति ॥ ८२ ॥

इति षष्ठभावफलानि ।

पारिजाते सुधा टीका कपिलेश्वररञ्जिता ।
अध्याये विश्व (१३) सङ्ख्येऽस्मिन् पूर्ति भावषष्ठे गता ॥ १३ ॥

षष्ठेश गोपुरांशादिमें हो उसको सूर्य देखता हो लग्नेश परिपूर्णबली हो तो जातक जातिका उपकार करनेवाला होता है ॥ ८२ ॥

इति वैद्यनाथदैवज्ञविरचिते जातकपारिजाते त्रयोदशाध्याये षष्ठभावफले
'विमला' हिन्दी टीका समाप्त ॥ १३ ॥

—०—

# अथ सप्तमाष्टमनवमभावफलाध्यायः ॥ १४ ॥

## तत्र सप्तमभावफलम् ।

यात्रापुत्रकलत्रसौख्यमखिलं सञ्चिन्तयेत्सप्तमा-
दुक्तं पुत्रसुखासुखागमफलं सर्वं च यत्तद्वदेत् ॥ ३ ॥

यात्रेति । सप्तमात् = सप्तमभावात्, यात्रापुत्रकलत्रसौख्यमखिलं सञ्चिन्तयेत् = विचारयेत्; तथा इतः पूर्वं पुत्रसुखासुखागमफलं यदुक्तं तत्सर्वं च सप्तमादपि वदेत् । तथा हि जातकाभरणे—

"रणाङ्गणं चापि वणिक्क्रियाश्च जायाविचारागमनप्रयाणम् ।
शास्त्रप्रवीणैर्हि विचारणीयं कलत्र(७)भावे किल सर्वमेतत्" इति ॥

एवं जातकरत्ने—

"युवतिपदादुद्वाहं भार्या-पति-सूप-दधि-गुडक्षीरम् ।
आगमनं सरिदार्त्ति मूत्राशयं च नष्टधनम्" इति ॥ ३ ॥

सप्तम भावसे सम्पूर्ण यात्रा-पुत्र-स्त्री-सुखका विचार करे । जो कुछ पहले पुत्रादिके सुख-असुखके आगम फल कहे जा चुके हैं वे सब सप्तम भावसे भी कहे ॥ ३ ॥

जारः कामगते सिते मदनपे सार्हिध्वजे वा तथा
कामे जीवयुगीक्षिते शुभगृहे जातो न जारो भवेत् ॥ १ ॥

जार इति । सिते = शुक्रे, कामगते = सप्तमभावगते सति जातो नरः जारः=परस्त्रीगामी भवति । वा मदनपे = सप्तमभावेशे यत्र तत्र साहिध्वजे = राहुणा वा केतुना सहिते सति तथा = जारो भवति । अथ कामे = सप्तमे भावे शुभगृहे=शुभग्रहराशौ सति तस्मिन् जीवेन=गुरुणा युक्ते वा ईक्षिते=दृष्टे सति जातो नरो जारो न भवेत्प्रत्युत सदाचारी भवेदिति ॥१॥

शुक्र सप्तममें हो तो जार (परस्त्रीलम्पट) हो, या सप्तमेश राहु या केतुसे युत हो तो भी जार हो । सप्तम शुभगृह हो उसमें गुरु हो वा उसे देखता हो तो जार नहीं होता है ॥ १ ॥

दुःस्थे कामपतौ तु पापगृहगे पापेक्षिते तद्युते
तज्जायाभवनस्य मध्यमफलं सर्वं शुभं चान्यथा ॥
कामस्थानपतौ सितेन सहिते पापर्क्षगे कामधीः
सौम्यर्क्षे शुभखेटवीक्षितयुते जातः सितच्छत्रवान् ॥ २ ॥

दुःस्थ इति । कामपतौ = सप्तमेशग्रहे तु, दुःस्थे = षडष्टव्ययान्यतमगते, पापग्रहगृहगे, पापग्रहैर्वीक्षिते वा पापग्रहेण युक्ते तज्जायाभवनस्य = तस्य जातकस्य सप्तमभावस्य सर्वं मध्यमफलं भवति, अर्थादीदृग्योगे जातस्य सप्तमभावे यत्किञ्चिद्विचार्य्यते तत्सर्वं मध्यमफलं भवति । अन्यथा चार्थात् सप्तमेशे शुभस्थानगते, शुभराशिगते, शुभेक्षिते वा शुभयुते सति तज्जायाभवनस्य सर्वं फलं शुभं स्यात् । कामस्थानपतौ = सप्तमभावेशे, सितेन = शुक्रेण सहिते, पापर्क्षगे = पापराशिगते च जातः कामधीः = कामुकः भवति । तस्मिन्नेव सप्तमेशे सौम्यर्क्षे = शुभराशिगते, शुभखेटेन वीक्षिते वा युते सति जातो नरः सितच्छत्रवान् = धवलातपत्रयुतः ( राजेति यावत् ) भवेदिति ॥ २ ॥

सप्तमेश दुष्ट स्थानमें हो, पापगृहमें हो, उसे पापग्रह देखता हो, या पापसे युत हो तो उसके सप्तमगृहका मध्यम फल कहे । ऐसा न हो तो सब शुभ जाने । सप्तमेश शुक्रके साथ होकर पापराशिमें हो तो कामी हो । शुभराशि में हो, शुभग्रहसे युक्त हो, या उसे शुभग्रह देखते हों तो वह जातक सितछत्रवाला ( राजा ) होवे ॥ २ ॥

वित्तास्तारिपभार्गवास्तनुगताः पापान्विताः कामुकः
पापव्योमचरान्वितौ तनुरिपुस्थानाधिपौ चेत्तथा।
कामस्थे रिपुवित्तलग्नपयुते पापे परस्त्रीरतः
पापारातिकलत्रपा नवमगाः कामातुरो जायते ॥ ३ ॥

वित्तेति। वित्तास्तारिपभार्गवाः = द्वितीयेश-सप्तमेश-षष्ठेश-शुक्राः, पापान्विताः = पापग्रहयुक्ताः सन्तो यदि तनुगताः = लग्ने विद्यमाना भवेयुस्तदा जातः कामुकः = अतिकामी भवेत्। चेद्यदि तनुरिपुस्थानाधिपौ = लग्नेश-षष्ठेशौ यत्र तत्र पापव्योमचरान्वितौ = पापग्रहयुक्तौ भवेतां तदा तथा = कामुकः = सदा स्त्रीरतो भवेत्। पापे = रविभौमशनीनामन्यतमे, कामस्थे = सप्तमभावगते, तस्मिन् रिपुवित्तलग्नपयुते = षष्ठेश-द्वितीयेश-लग्नेशैः सहिते च जातः परस्त्रीरतः = अन्यदारसक्तः स्यात्। अथ च पापारातिकलत्रपाः = पापग्रह-षष्ठेश-सप्तमेशाः यदि नवमगा भवेयुस्तदा जातः कामातुरः=कामपीडितः जायते= भवतीति। अत्रोक्तयोगेषु शुभग्रहाणां दृष्टियोगे न तथात्वमिति ज्ञेयम्।

तथा च सर्वार्थचिन्तामणौ—

लग्नस्थिता वित्तकलत्रशत्रुनाथाः सशुक्रा यदि पापयुक्ताः।
जातः परस्त्रीषु रतः कुमार्गी शुभेक्षिताश्चेन्न तथा भवेच्च ॥
लग्नारिपौ पापयुतौ यदि स्याज्जातः परस्त्रीषु रतः कुमार्गी।
लग्नेश्वरे शत्रुकुटुम्बनाथे पापैर्युते वा यदि दारराशौ।
जातः परस्त्रीषु रतः·················इति ॥ ३ ॥

द्वितीयेश, सप्तमेश, षष्ठेश और शुक्र पापग्रहसे युक्त होकर लग्नमें हों तो जातक कामी हो लग्नेश और षष्ठेश पापग्रहसे युक्त हो तो भी कामी होता है। कोई पापग्रह षष्ठेश, धनेश और लग्नेशसे युक्त होकर सप्तम भावमें ही हो तो परस्त्रीगामी हो। पापग्रह, षष्ठेश और सप्तमेश नवम भावमें हों तो कामातुर होता है ॥ ३ ॥

जारः कर्मधनास्तपा दशमगाः पुत्रादिकारग्रहा-
दुःस्था धीगुरुकामपाः सुतगृहे पापेक्षितेऽनात्मजः।
जीवज्ञौ यदि वा निशाकरसितौ कामे बहुस्त्रीरतः
शुक्रे मन्मथराशिगे बलवति स्त्रीणां बहूनां पतिः ॥ ४ ॥

जार इति। कर्मधनास्तपाः = दशमेश-द्वितीयेश-सप्तमेशाः यदि दशमभावगताः स्युस्तदा जातो जारः स्यात्। धीगुरुकामपाः=पञ्चमेश-नवमेश-सप्तमेशाः पुत्रादिकारग्रहाः सन्तो यदि दुःस्थाः=षडष्टव्ययगताः स्युः, तथा सुतगृहे = पञ्चमभावे पापेक्षिते सति जातो नरोऽनात्मजः = पुत्ररहितो भवेत्। तथाहि सर्वार्थचिन्तामणौ—

'कर्मेशवित्तेशकलत्रनाथा मानस्थिता जारमुदाहरन्ति।
धीधर्मनाथौ सकलत्रनाथौ दुःस्थानगौ हीनबलौ शुभैर्न ॥
दृष्टे सुते दारबहुत्वयोगे त्वपुत्रयोगं मुनयो वदन्ति' इति ॥

जीवज्ञाविति। गुरुबुधौ, वा निशाकरसितौ = चन्द्रशुक्रौ, कामे = सप्तमभावे भवेतां तदा जातो बहुस्त्रीरतः = विविधस्त्रीसंसक्तो भवेत्। अथ च बलवति = पूर्णबलयुक्ते शुक्रे मन्मथराशिगे = सप्तमभावगते सति जातो बहूनां स्त्रीणां पतिः भवति। यस्य जन्मकाले बलीयान् शुक्रः सप्तमे भवति तस्य बह्व्यः स्त्रियो भवन्तीति ॥ ४ ॥

दशमेश, द्वितीयेश और सप्तमेश दशवें हों तो जातक जार हो पञ्चमेश, नवमेश और सप्तमेश पुत्रादि कारक होकर दुष्ट स्थानमें हों, पांचवें भावको पापग्रह देखता हो तो जातक

का सन्तान न हो। यदि गुरु, बुध, वा चन्द्र सप्तममें हों तो बहुत स्त्रियोंसे भोग करे। बलवान् शुक्र सप्तममें हो तो बहुत स्त्रियोंका पति हो ॥ ४ ॥

शुक्रारौ मदगौ कलत्ररहितो धर्मात्मजस्थौ तथा
शत्रुस्थानगतौ निशाकरसितौ यद्येकपुत्रो भवेत्।
लग्नास्तव्ययगेषु पापखचरेष्विन्दौ सुते दुर्बले
वन्ध्यास्त्रीपतिरेव जातमनुजो जायाविहीनोऽथवा ॥ ५ ॥

शुक्राराविति। शुक्रारौ = शुक्रमङ्गलौ, मदगौ = सप्तमभावगतौ भवेतां तदा जातः कलत्ररहितः = स्त्रीविहीनः ( मृतभार्य इति यावत् ) भवति। तावेव शुक्रारौ धर्मात्मजस्थौ = नवमपञ्चमगतौ भवेतां तदा तथा = कलत्ररहितः स्यात्। तथा च सारावल्याम्—

"द्यूने कुजभार्गवयोर्जातः पुरुषो भवेद्विकलदारः।
धीधर्मस्थितयोर्वा परिकल्प्यं पण्डितैरेवम्" इति ॥

शत्रुस्थानगताविति। निशाकरसितौ = चन्द्रशुक्रौ यदि शत्रुस्थानगतौ = षष्ठभावगतौ भवेतां तदा जातस्यैकपुत्रः भवेत्। लग्नास्तेति। पापखचरेषु = पापग्रहेषु, लग्नास्तव्ययगेषु = लग्नसप्तमद्वादशभावेषु व्यवस्थितेषु, दुर्बले = निर्बले ( क्षीणे ) इन्दौ = चन्द्रे, सुते= पञ्चमभावे च गतवति सति जातमनुजः = समुद्भूतो नरः, वन्ध्यास्त्रीपतिः = अप्रजायाः स्त्रिया भर्ता भवति, अथवा जायाविहीनः = स्त्रीविहीनो भवति। अस्मिन्योगे जातस्य स्त्री वन्ध्या ( बाँझिन ) भवति, वा असौ पुरुषः स्त्रीरहितः स्यादिति। तथा च सारावल्याम्—

"लग्नव्ययमदनस्थैः पापैः क्षीणे निशाकरे धीस्थे।
स्त्रीहीनो भवति नरः पुत्रैश्च विवर्जितो नूनम्" इति ॥ ५ ॥

शुक्र और मङ्गल सप्तममें हों तो जातक स्त्रीसे रहित होवे। नवम और पञ्चममें हों तो भी यही फल जाने। यदि चन्द्रमा और शुक्र शत्रु स्थानमें हों तो जातकको एक पुत्र हो। लग्न, सप्तम और द्वादशमें पापग्रह हों निर्बल चन्द्रमा पञ्चम भावमें हो तो जातक बन्ध्या ( बाँझिन ) स्त्रीका पति होवे, वा स्त्रीसे रहित होवे ॥ ५ ॥

बन्ध्यापतिः सितरवी मदनोदयस्थौ चन्द्रोदये समगृहे ललनाकृतिः स्यात् ॥
पुंराशिगे पुरुषभावयुतं कलत्रं स्त्रीपुंग्रहेक्षितयुते सति मिश्ररूपम् ॥ ६ ॥

बन्ध्यापतिरिति। सितरवी = शुक्रसूर्यौ, मदनोदयस्थौ = सप्तमस्थौ लग्नस्थौ वा भवेतां तदा जातः बन्ध्यापतिः भवति। चन्द्रोदये = चन्द्राश्रिते लग्ने, समगृहे = २।४।६।८।१०।१२ एतदन्यतमराशौ सति जातो नरः ललनाकृतिः = योषित्प्रकृतिः भवति। पुंराशिग इति। चन्द्रोदये पुरुष-( १।३।५।७।९।११ एतदन्यतम-) राशिगते सति जातस्य कलत्रं = स्त्री, पुरुषभावयुतं = पुरुषाकृतिः भवति। तस्मिन्नेव लग्नाश्रितचन्द्रे यत्र तत्र स्त्रीपुंग्रहेक्षितयुते = स्त्रीग्रहेण पुरुषग्रहेण च दृष्टे वा संयुक्ते सति मिश्ररूपं = स्त्रीपुरुषसंयुक्ताकृतिर्भवति। तत्र कथितलक्षणलक्षिते चन्द्रोदये समराशौ पुरुषस्य मिश्ररूपम्, विषमराशौ तत्स्त्रिया मिश्ररूपमिति वाच्यम् ॥ ६ ॥

शुक्र और सूर्य सप्तम या लग्नमें हों तो जातक बन्ध्यापति हो। चन्द्रमा उदय (लग्न) में समगृहमें हो तो जातक स्त्रीके आकृतिका हो। पुरुषराशि ( विषमगृह ) में हो तो स्त्री पुरुष आकृतिवाली हो। यदि मिश्र ग्रहसे दृष्ट युत हो तो मिश्रित-रूपा हो ॥ ६ ॥

भौमांशे वा भौमराशौ विलग्नात् कामस्थाने जन्मभे वा वधूनाम्।
जाया दासी नीचमूढग्रहांशे दुष्टा वा स्याद्यौवने भर्तृहीना ॥ ७ ॥

भौमांश इति। विलग्नात्=पुरुषस्य जन्मलग्नात् कामस्थाने=सप्तमे भावे, वा वधूनाम् = स्त्रीणाम्, जन्मभे = जन्मलग्ने भौमांशे=मेषवृश्चिकान्यतरराशिनवांशे वा भौम-

राशौ = मेषवृश्चिकान्यतरराशौ सति जाया=स्त्री, दासी=भृत्या भवति। एतदुक्तं भवति। पुरुषस्य सप्तमे भावे भौमांशे वा भौमराशौ सति तस्य स्त्री दासी भवति। एवं स्त्रिया जन्मलग्ने भौमांशे वा भौमराशौ सति सा स्त्री दासी स्यादिति। तस्मिन्नेव भावे नीचमूढग्रहांशे = नीचं गतस्यास्तं गतस्य वा ग्रहस्य नवांशे सति स्त्री दुष्टा = दुराचारिणी, अथवा यौवने = युवावस्थायां भर्तृहीना=मृतभर्तृका ( विधवा ) भवति ॥ ७ ॥

पुरुषके जन्मलग्नसे सप्तम भावमें तथा स्त्रियोंके जन्मलग्नमें मङ्गलका नवांश या राशि हो तो स्त्री दासी होवे। यदि उसमें नीचगत ग्रहका या अस्त ग्रहका नवांश हो तो स्त्री दुष्टा या युवा अवस्थामें विधवा होवे ॥ ७ ॥

शुभांशराशौ यदि सद्गुणाढ्या शुभेक्षिते चारुतरं कलत्रम्।
चन्द्रांशके दुर्बलचन्द्रराशौ जाता पतिघ्नी सबले तु साध्वी ॥ ८ ॥

शुभांशराशाविति। तस्मिन्नेव पुरुषस्य सप्तमे, स्त्रियाः प्रथमे वा भावे यदि शुभांशराशौ = शुभनवांशे वा शुभराशौ = सति जातस्य स्त्री, वा स्त्री ( जाता ) सद्गुणाढ्या भवति। अथ तस्मिन्सप्तमे वा प्रथमे भावे शुभांशराशौ, शुभेक्षिते=शुभग्रहेण दृष्टे च जातस्य कलत्रं = स्त्री, चारुतरं = अतीव सुन्दरी भवति। अथ च दुर्बलचन्द्रराशौ वा चन्द्रांशके = कर्कराशिनवांशे जाता स्त्री पतिघ्नी = पतिनाशकर्त्री भवति। तत्र चन्द्रे सबले = बलयुक्ते सति जाता स्त्री साध्वी = भर्तृपरायणा सच्चरित्रा च भवति ॥ ८ ॥

पूर्वोक्त ७ या १ भाव यदि शुभ राशि या शुभांशमें हो तो सद्गुण वाली स्त्री हो। यदि उसे शुभग्रह देखते हों तो खूब रमणीय स्त्री हो। चन्द्रमाके नवांश तथा दुर्बल चन्द्रराशिमें उत्पन्न स्त्री हो तो पतिनाशिनी होती है। सबल चन्द्रमें जायमान हो तो साध्वी होती है॥८॥

अर्कांशे कुलटा निजोच्चगृहगे साध्वी शुभालोकिते
लग्ने शीतकरेऽथवा मदनभे नीचारिमूढान्विते।
पापव्यालविहङ्गपाशनिगलद्रेक्काणभागान्विते
सन्ध्यंशे विगतव्रता च विधवा जातस्य जाया भवेत् ॥ ९ ॥

अर्कांश इति। शीतकरे=चन्द्रे, लग्ने अथवा मदनभे = सप्तमे भावे व्यवस्थिते तस्मिन् अर्कांशे = सिंहराशिनवांशे च गतवति जातस्य पुरुषस्य स्त्री कुलटा = पुंश्चली ( व्यभिचारिणी ) भवति। तस्मिन्नेव लग्नाश्रिते मदनाश्रिते वा चन्द्रे निजोच्चगृहगे = वृषराशिगते तत्र शुभालोकिते च सति जातस्य स्त्री साध्वी = सच्चरित्रा भवति। अथ तस्मिन्नेव लग्ने वा मदनभे चन्द्रे नीचारिमूढान्विते = स्वनीच-( वृश्चिक-) राशिस्थे, शत्रुराशिस्थे, सूर्येण सहास्तङ्गते वा, अथवा पापव्यालविहङ्गपाशनिगलद्रेक्काणभागान्विते ( अ० ५, श्लो० ५५, ६० ) अथवा सन्ध्यंशे = ऋक्षसन्ध्यंश-( कटकालिमीनभान्त्यंश- ) गते सति जातस्य नरस्य जाया = स्त्री, विगतव्रता = स्त्रीनियम-( पातिव्रत्य- ) रहिता, च = अथवा विधवा= मृतभर्तृका भवेत् ॥ ९ ॥

यदि चन्द्रमा लग्नमें अथवा सप्तममें सूर्यके अंशमें हो तो स्त्री कुलटा हो। अपने उच्चगृहमें हो शुभ ग्रह देखते हों तो साध्वी होती है। नीचगत, शत्रुगृहस्थ या अस्तंगत हो तथा पाप-सर्प-विहंग-पाश-निगलके द्रेष्काण भागमें हो और ऋक्षसन्धिमें हो तो जातक की स्त्री पातिव्रत धर्मसे रहित तथा विधवा होवे ॥ ९ ॥

कामस्थे तनुपे शुभग्रहयुते सद्वंशजामिच्छति
क्रूरर्क्षे मदगे विलग्नरमणे दुर्वंशजाताङ्गनाम् ॥
वर्णं रूपगुणाकृतिं च सकलं यत्तद्गृहोक्तं वदेद्
दुर्व्यापारकरमहाकृतिनरप्रीतिं प्रयात्यङ्गना ॥ १० ॥

कामस्थ इति। तनुपे = लग्नेशे कामस्थे = सप्तमभावगते शुभराशौ, तस्मिन् शुभग्रहेण युक्ते च जातो नरः सद्वंशजाम्=उत्तमकुलोत्पन्नां स्त्रियमिच्छति = अभिलषति (प्राप्नोतीत्यर्थः)। क्रूरर्क्षे इति। विलग्नरमणे = लग्नेशे, मद्गे = सप्तमे भावे, क्रूरर्क्षे = पापराशौ च गतवति दुर्वंशजाताङ्गनां = कुलहीनगृहोत्पन्नां स्त्रियं प्राप्नोतीति। स्त्रिया वर्णादिकमाह- वर्णमिति। सप्तमे भावे यो राशिस्तस्य यो वर्णः, यद्रूपं, ये च गुणाः, या चाकृतिः तत्सकलं तद्गृहोक्तं (तत्सप्तमराश्युक्तम्) स्त्रिया वदेत्। अथ स्त्रिया व्यभिचारयोगस्य सति सम्भवे कीदृक्पुरुषमुपयातीत्याह-दुर्व्यापारेति। सप्तमे भावे यो ग्रहो दुर्व्यापारकरः = व्यभिचारयोगसूचको भवेत् तद्ग्रहाकृतियुक्तेन नरेण सह, अङ्गना=जातस्य स्त्री प्रीतिं=प्रमोदं प्रयाति ॥१०॥

लग्नेश सप्तम भावमें शुभग्रहसे युक्त हो तो अच्छे वंशकी उत्पन्न उसकी स्त्री हो। लग्नेश सातवें भावमें पापराशिमें हो तो दुर्वंशमें जायमान उसकी अङ्गना (स्त्री) हो। स्त्रीका वर्ण, रङ्ग, गुण, स्वभाव सब सप्तम गृहके अनुकूल कहे। व्यभिचार योगमें जो ग्रह व्यभिचार योग करता हो उसीके अनुकूल रूपवाले मनुष्यसे स्त्री प्रेम करती है ॥ १० ॥

पापाप्रकाशसंयुक्ते कलत्रे दुष्टचारिणी।
रवौ बन्ध्या तु शीतांशौ क्षीणे तु व्यभिचारिणी ॥ ११ ॥
कुजे तु म्रियते मन्दे दुर्भगा राहुसंयुते।
परदारोऽरतिः स्वीयां निषेकाभावकोऽसुतः ॥ १२ ॥
धूमे विवाहहीनः स्यान्म्रियते कार्मुके सति।
परिवेषे तु दुःशीला केतौ बन्ध्या सती भवेत् ॥ १३ ॥
काले विदारः पापे तु गर्भस्रावेण संयुता।
सुशीला स्त्री प्रसूता च पूर्यमाणे सुधाकरे ॥ १४ ॥
बुधे सुपुत्रा वागीशे गुणयुक्ता सुपुत्रिणी।
शुक्रे सौभाग्यसंयुक्ता श्रीमती च बलान्विते ॥ १५ ॥

इदानीं सप्तमे भावे ग्रहाणामुपग्रहाणाञ्च स्थितिवशेन फलान्याह—पापेति श्लोकपञ्चकेन। कलत्रे = सप्तमे भावे पापाप्रकाशसंयुक्ते = पापग्रहेण अप्रकाशग्रहेण (उपग्रहेण अ० २ श्लो० ६) वा सहिते जातस्य स्त्री दुष्टचारिणी = दुर्जनासक्ता (दुराचारवती) भवति। रवौ = सूर्ये कलत्रे सति स्त्री बन्ध्या भवति। क्षीणे शीतांशौ = चन्द्रे तु व्यभिचारिणी (पुंश्चली) भवति। अन्यत् सर्वं सुस्पष्टमेवेत्यलमतिविस्तरेण ॥

सप्तम भावमें पापग्रह या अप्रकाश (उपग्रह) ग्रह हों तो जातककी स्त्री दुष्टचारिणी (व्यभिचारिणी) हो। वहां सूर्य हो तो बन्ध्या हो। क्षीण चन्द्रमा हो तो व्यभिचारिणी हो। मंगल हो तो स्वयं मर जावे। शनि हो तो दुर्भगा स्त्री हो। राहु हो तो परस्त्रीमें रत हो, अपनी स्त्रीमें उदासीन, गर्भाधानका अभाव तथा पुत्रहीन हो। धूम हो तो विवाहसे रहित हो। धनुष हो तो स्वयं मर जावे। परिवेष हो तो दुःशीला हो। केतु हो तो बाँझ और पतिव्रता हो ॥ ११-१३ ॥

सप्तममें काल हो तो स्त्री-रहित हो। पापग्रह हो तो गर्भस्राव हो। पूर्ण चन्द्रमा हो तो सुशीला और कन्या उत्पन्न करनेवाली हो। बुध हो तो सुपुत्रा हो। गुरु हो तो गुणवती तथा पुत्रवती स्त्री हो। बली शुक्र हो तो सौभाग्यवती और श्रीमती हो ॥ १४-१५ ॥

स्त्रीपुत्रपे बलिनि शोभनखेटदृष्टे षष्ठाधिपेन सहिते सति वीक्षिते वा।
जारेण पुत्रजनिलाभमुपैति जाया तस्या धवो बहुकलत्रयुतोऽप्यपुत्रः ॥ १६ ॥

स्त्रीपुत्रप इति। स्त्रीपुत्रपे = सप्तमेशे वा पञ्चमेशे, बलिनि = पूर्णबलयुते, शोभनखेटदृष्टे = शुभग्रहेणावलोकिते, षष्ठाधिपेन = षष्ठेशेन सहिते वा वीक्षिते = दृष्टे च सति तस्य

जातस्य जाया = स्त्री, जारेण = अन्यपुरुषेण पुत्रजनिलाभं=सुतोत्पत्तिमुपैति। तस्याः स्त्रियाः, धवः = स्वामी ( यस्य जन्माङ्गचक्रमीदृग्लक्षणयुतं स्यात्सः ) बहुकलत्रयुतोऽपि = अनेकस्त्री-सहितोऽपि, अपुत्रः = पुत्ररहित एव भवेदिति । न खलु कस्यामपि स्त्रियां तस्यौरसः पुत्रो जायेतेति भावः ।

Notes—यदि स्त्रियाः कुण्डल्यामयं योगः स्यात्तदा सा स्त्री परपुरुषेण पुत्रोत्पत्तिमुपैति। न स्वपतिनेति । पुरुषस्य कुण्डल्यामयं योगः सर्वथा सन्तानबाधक एव भवतीति विज्ञेयम् ॥१६॥

सप्तमेश या बलवान् पञ्चमेश शुभग्रहसे दृष्ट और षष्ठेशके साथ हो वा षष्ठेश देखता हो तो स्त्री जारसे पुत्र उत्पन्न करे और उसके स्वामीके बहुत स्त्री हों तो भी पुत्रहीन हो ॥१६॥

नीचे गुरौ मदनगे सति नष्टदारो मीने कलत्रभवने रविजे तथैव ।
मन्दारराशिनवभागगते सुरेज्ये जारो भवेदिनसुतारसमन्विते वा ॥ १७ ॥

नीच इति । नीच-( मकरराशि- ) वर्त्तिनि गुरौ मदनगे = सप्तमभावगते सति जातः नष्टदारः = मृतभार्यः भवेत् । कर्कराशिलग्नेऽस्य योगस्य सम्भवः । रविजे = शनैश्चरे मीने कलत्रभवने = सप्तमे भावे च गते तथैवार्थान्नष्टदारः भवेत् । कन्यालग्नेऽस्य सम्भव इति । सुरेज्ये = गुरौ मन्दारराशिनवभागगते=शनिकुजयोरन्यतरस्य राशौ नवांशे वा गते, अथवा इनसुतारसमन्विते=शनिभौमान्यतरेण सहिते सति जातो जारो भवेदिति । तथा च मन्त्रेश्वरः-

शुक्रे वृश्चिकगे मदे मृतवधूः कामे वृषस्थे बुधे,
स्त्रीनाशस्त्वथ नीचगे सुरगुरौ यूनाधिरूढे तथा ।
जामित्रे झषगे शनौ सति तथा भौमेऽथवा स्त्रीमृति-
श्चन्द्रक्षेत्रगयोर्मदेऽर्किकुजयोः स्त्री सती शोभना ॥ इति ॥ १७ ॥

सातवें भावमें नीच राशिका गुरु हो तो उसकी स्त्री मर जावे । सप्तम मीन राशि हो उसमें शनि हो तो भी पूर्वोक्त फल जाने । शनि या मंगलके नवांशमें गुरु हो, वा शनि मंगलके साथ हो तो वह जार ( व्यभिचारी ) हो ॥ १७ ॥

सप्तमे वाऽष्टमे पापे व्ययस्थे धरणीसुते। अदृश्ये यदि तन्नाथे कलत्रान्तरभाग्भवेत् ॥
सुवंशजातं प्रथमं कलत्रं लग्नेश्वरो दारपसंयुतश्चेत् ।
दिनेशकान्त्याभिहतस्तदानीं स्वरूपहीनां सुतरां वदन्ति ॥ १९ ॥

इदानीं कलत्रद्वययोगं तल्लक्षणञ्चाह—सप्तम इति, सुवंशजातमिति श्लोकद्वयेन । जन्म-लग्नात् सप्तमे, अथवा अष्टमे भावे कस्मिंश्चित् पापे सति तथा धरणीसुते = मङ्गले व्ययस्थे= द्वादशे गतवति, तन्नाथे = स्त्रीभावेशे यदि अदृश्ये = अदृश्यचक्रार्द्धगतेऽस्तङ्गते वा सति जातो नरः कलत्रान्तरभाक् = दारान्तरोपयुक्तो भवेत् । अस्मिन् योगे जातस्य कलत्रद्वयं स्यादिति भावः । तत्र कलत्रद्वये प्रथमं कलत्रं सुवंशजातं विजानीयात् । यदि पूर्वोक्तयोगे लग्नेश्वरः = जन्मलग्नस्वामी, दारपसंयुतः = सप्तमेशेन सहितः स्यात्तदेति । अथ केवलं लग्नेश्वरो यदि दिनेशकान्त्याभिहतः = सूर्येण सहास्तमितो भवेत्तदानीं प्रथमां स्त्रियं सुतराम् = अतिशयेन स्वरूपहीनां = सौन्दर्यरहितां = कुरूपां विज्ञा वदन्तीति ॥ १८-१९ ॥

सप्तम या अष्टममें पापग्रह हो बारहवें मंगल हो और यदि सप्तमेश अदृश्य हो तो उसे दूसरी भी स्त्री होवे ॥ १८ ॥

लग्नेश जायेशके साथ हो तो पहिली स्त्री सुवंशोत्पन्न हो । यदि सूर्यकी कांतिसे हत हो अर्थात् अस्त हो तो रूपसे रहित ( कुरूपा ) स्त्री जाने ॥ १९ ॥

वित्ते पापबहुत्वे च कलत्रेशे तथास्थिते ।
*शत्रुस्थानगते केतौ कलत्रत्रयभाग्भवेत् ॥ २० ॥

---

* 'पापग्रहेण सन्दृष्टे' इत्यपि पाठान्तरम् ।

इदानीं कलत्रत्रययोगमाह—वित्त इति । वित्ते = लग्नाद् द्वितीयभावे पापबहुत्वे = अधिकपापग्रहे सति कलत्रेशे = सप्तमेशे च तथास्थिते = अदृश्येऽस्तङ्गते वा सति केतौ शत्रुभावगते च जातः कलत्रत्रयभाग् भवेत् । अस्मिन्योगे जातस्य स्त्रीत्रयं भवतीति । सर्वार्थचिन्तामणावपि कलत्रत्रययोगः—

"वित्ते पापबहुत्वे तु कलत्रे वा तथाविधे ।
तदीशे पापसन्दृष्टे कलत्रत्रयभाग्भवेत्" ॥ इति ॥ २० ॥

**द्वितीय स्थानमें बहुत पापग्रह हों सप्तमेश भी पाप युक्त हो और शत्रुस्थान ( छठे ) में केतु हो तो जातककी तीन स्त्रियाँ होवें ॥ २० ॥**

केन्द्रत्रिकोणे दारेशे स्वोच्चमित्रस्ववर्गगे ।
कर्माधिपेन वा दृष्टे बहुस्त्रीसहितो भवेत् ॥ २१ ॥

इदानीं बहुस्त्रीयोगमाह—केन्द्रेति । दारेशे = सप्तमेशे स्वोच्चमित्रस्ववर्गगे सति वा केन्द्रत्रिकोणे ( १।४।७।१०।९।५ ) गतवति वा कर्माधिपेन = कर्म-( दशम- ) भावपतिना दृष्टे सति जातो नरः बहुस्त्रीसहितः = अधिककलत्रवान् भवति ॥ २१ ॥

**सप्तमेश अपनी उच्चराशि, मित्रगृह, स्ववर्गमें होकर केन्द्रत्रिकोणमें हो वा कर्मेश उसे देखता हो तो जातक बहुत स्त्रीसे युक्त हो ॥ २१ ॥**

कलत्राधिपतौ केन्द्रे शुभग्रहनिरीक्षिते ।
शुभांशे शुभराशौ वा पत्नी व्रतपरायणा ॥ २२ ॥

इदानीं व्रतपरायणां स्त्रियमाह—कलत्रेति । कलत्राधिपतौ=सप्तमेशे केन्द्रे (१।४।७।१०) शुभांशे = शुभग्रहनवांशे, शुभराशौ वा व्यवस्थिते तस्मिन् शुभग्रहेण निरीक्षिते सति जातस्य पत्नी = स्त्री, व्रतपरायणा = पातिव्रत्यैकनियमा भवति ॥ २२ ॥

**सप्तमेश केन्द्रमें हो शुभग्रह उसको देखता हो शुभांश वा शुभराशि में हो तो जातक की पत्नी व्रतमें तत्पर रहे ( स्त्री पतिभक्त होवे ) ॥ २२ ॥**

दाराधिपे सोमसुते सपापे नीचारिवर्गे रिपुनाशभावे ।
पापान्तरे पापदृशा समेते जाया पतिघ्नी कुलनाशिनी स्यात् ॥ २३ ॥

इदानीं पतिघ्नीं स्त्रियमाह—दाराधिप इति । सोमसुते = बुधे दाराधिपे = सप्तमेशे सति सपापे = केनचित्पापग्रहेण सहिते नीचारिवर्गे, रिपुनाश-( ६।८ ) भावे वा गतवति, वा पापान्तरे = पापद्वयमध्यगते ( एकेन पापेन संयुक्तः, एकः पापो बुधाद् द्वितीयेऽन्यो द्वादशे भवेदिति ) तस्मिन् पापदृशा समेते वा जातस्य जाया पतिघ्नी = पतिनाशिनी, कुलनाशिनी= वंशोन्मूलिनी च भवेदिति ॥ २३ ॥

**सप्तमेश बुध पापग्रहके साथ नीच या शत्रुवर्गका होकर शत्रुभाव या अष्टम भावमें हो, पापग्रहोंके बीचमें हो उसपर पापग्रहकी दृष्टि हो तो उसकी स्त्री पतिको मारनेवाली कुलनाशिनी होवे ॥ २३ ॥**

शुभांशे शुभसंदृष्टे नाथे जाया सुवंशजा ।
पापारूढे पापवर्गे तस्य जाया कुवंशजा ॥ २४ ॥

स्पष्टार्थः ॥ २४ ॥

**सप्तमेश शुभांशमें शुभदृष्ट हो तो स्त्री अच्छे वंशकी हो । यदि सप्तमेश पापयुत पापवर्ग में हो तो उसकी स्त्री कुवंशोत्पन्ना होवे ॥ २४ ॥**

कामस्थाने सखेटे सितयुतखचरैर्दारसंख्यां वदन्ति
स्वोच्चस्थव्योमवासो न भवति गणने शुक्रयुक्तग्रहैर्वा ॥

जायाधीशे सितर्क्षे सति धनभवने शुक्रसंयुक्तसंख्या
शुक्रानङ्गेशयुक्तद्युचरनववधूवल्लभो जायते वा ॥ २५ ॥

इदानीं स्त्रीसङ्ख्यामाह—कामस्थान इति । कामस्थाने = सप्तमे भावे सखेटे = ग्रहयुक्ते सति सितयुतखचरैः = शुक्रसंयुक्तगगनेचरैः दारसङ्ख्यां = स्त्रीसङ्ख्यां वदन्ति । अत्रेदमुक्तं भवति । यदि सप्तमे भावे कश्चिद्ग्रहो भवेत्तदा शुक्रेण सहिता यावन्तो ग्रहा भवेयुस्तावत्यो दारास्तस्य भवन्तीति । अत्र शुक्रयुक्तग्रहैः स्वोच्चस्थव्योमवासः = स्वक्षेत्रस्थ उच्चस्थितो वा ग्रहो गणने = सङ्ख्याने प्राप्यो न भवति । यदुक्तं 'सितयुतखचरैः दारसंख्यां वदन्ति' तत्र शुक्रेण युक्तः स्वक्षेत्रोच्चवर्गतो ग्रहो न गणनीय इति भावः । अत्र 'वा' इति पदं मतान्तरसूचकमिवाभातीति चिन्त्यम् ।

जायाधीश इति । जायाधीशे = सप्तमभावेशे, सितर्क्षे=शुक्रराशौ=वृषतुलयोरन्यतरे, धनभवने = द्वितीयभावे च सति शुक्रसंयुक्तसङ्ख्या = शुक्रेण संयुक्ता यावन्तो ग्रहास्तावती सङ्ख्या स्त्रियो वाच्या । अथवा शुक्रेण, अनङ्गेशेन = सप्तमेशेन च युक्ता यावन्तो द्युचराः = ग्रहास्तावतीनां नववधूनां वल्लभः = भर्त्ता, जायते = भवति जातक इति ॥ २५ ॥

सातवां भाव ग्रह युक्त हो तो शुक्रके साथ जितने ग्रह हों उतनी स्त्रियोंकी संख्या पण्डित लोग कहते हैं । शुक्रयुक्त ग्रहोंमें उच्चगत ग्रहकी गणना नहीं होती है । सप्तमेश शुक्र के गृह ( २।७ ) में धन भावमें हो ( मेष लग्न हो, शुक्र वृष पर हो, या कन्या लग्न हो गुरु तुला पर हो तो यह योग मिलेगा ) तो शुक्र संयुक्त संख्या स्त्रीकी जाने । वा शुक्र और सप्तमेशसे युक्त ग्रहकी संख्या तुल्य नवीन स्त्रियोंका स्वामी होवे ॥ २५ ॥

दारेशेन कुटुम्बपेन सहिता यावद्ग्रहा दुर्बला-
स्तत्संख्याककलत्रनाशनकरा दुःस्थाननाथा यदि ॥
यावन्तो बलशालिनः शुभकरास्तत्तुल्यजायासुखं
कुर्वन्त्येकवियच्चरो बलयुतो यद्येकदारो भवेत् ॥ २६ ॥

दारेशेनेति । दारेशेन=सप्तमेशेन, वा कुटुम्बपेन—द्वितीयेशेन सहिता, यावद्ग्रहा दुर्बलाः = बलरहिता यदि दुःस्थाननाथाश्च भवन्ति तदा तत्संख्याककलत्रनाशनकरा भवेयुः । बलशालिनः, शुभकराः = शुभाः शुभस्थानेशाः शुभस्थानगताश्च यावन्तो ग्रहा दारेशेन द्वितीयेशेन वा सहिताः स्युस्तत्तुल्यजायासुखं कुर्वन्ति । अथ यदि बलयुत एक एव वियच्चर=ग्रहः सप्तमेशेन कुटुम्बपेन वा सहितो भवेत्तदा जातो नर एकदारः=एकस्त्रीयुतो भवेत् ।

Notes—सप्तमभावगतैर्ग्रहैः स्त्रीसङ्ख्या वक्तव्या । तत्र पापास्तावत्स्त्रीनाशकाः शुभास्तावत्स्त्रीसौख्यदा भवन्ति । पापोऽपि सप्तमे यदि स्वगेहोच्चादिगतः स्यात्तदा शुभ एव भवत्येवं शुभो यदि नीचारिगतः सन् सप्तमे भवेत्तदाऽशुभकर एवेति विमृश्य वक्तव्यम् । तथा च मन्त्रेश्वरः—

स्त्रीसङ्ख्यां मदगैर्ग्रहैर्मृतिमसत्खेटैश्च सद्भिः स्थितिः,
द्यूनेशे सबले शुभे सति वधूः साध्वी सुपुत्रान्विता ।
पापोऽपि स्वगृहं गतः शुभकरः पत्न्याश्च कामस्थितो
हित्वा षड्व्ययरन्ध्रपान् मदनगाः सौम्यास्तु सौख्यावहाः ॥ २६ ॥

जितने दुर्बल ग्रह सप्तमेश या द्वितीयेशसे युक्त हों उतनी संख्या स्त्रीका नाश करते हैं । यदि वे दुष्ट स्थानके स्वामी हों जितने बलवान् शुभ ग्रह हों उनके तुल्य स्त्रीका सुख हो । यदि एक ग्रह बली हो तो एक ही स्त्री हो ॥ २६ ॥

अथ विवाहकालः ।

लग्नानङ्गपतिस्फुटैक्यगृहगे जीवे विवाहं वदे-
च्चन्द्राधिष्ठिततारकावधुपयोरैक्यांशके वा तथा ॥

जीवे मित्रनवांशके बलयुते यद्येकदारान्वितः
स्वांशे द्वित्रिकलत्रवान् बहुवधूनाथः स्वतुङ्गांशके ॥ २७ ॥

इदानीं जातस्य विवाहसमयमाह—लग्नेति । लग्नानाथपतिस्फुटैक्यगृहगे = जन्मलग्नेशस्य सप्तमेशस्य च पृथक् पृथक् यत्स्पष्टराश्यादिकं तयोर्योगे कृते यद्राश्यादिकं भवेत्तस्मिन् सञ्चारेण गतवति जीवे = गुरौ जातस्य विवाहं वदेत् । अथवा जन्मकाले चन्द्राधिष्ठिततारकायाः = चन्द्रो यस्मिन्नक्षत्रे भवेत्तस्य यत्स्पष्टराश्यादिकं, तथा वधुपस्य = सप्तमेशस्य यत्स्पष्टराश्यादिकं तयोरैक्यांशके = योगे कृते सति यन्नवांशस्तस्मिन् गतवति गोचरीयजीवे सति तथा = जातस्य विवाहं वदेदिति ।

अथैकदारमाह—जीव इति । जन्मकाले बलयुते = पूर्वोक्तबलसहिते जीवे = गुरौ मित्रनवांशके च व्यवस्थिते सति जात एकदारान्वितः = एकस्त्रीयुतो भवति ।

अथ द्वित्रिकलत्रमाह—स्वांश इति । बलयुते जीवे स्वांशे = धनुर्मीनान्यतरराशिनवांशे सति जातः द्वित्रिकलत्रवान् भवति ।

अथ बहुदारमाह—बह्विति । तस्मिन्नेव बलयुते जीवे स्वतुङ्गांशके = स्वोच्च-(कर्क-) राशिनवांशे गतवति जातः बहुवधूनाथः=अधिकवनितापतिर्भवतीति ॥ २७ ॥

लग्नेश और सप्तमेशके स्पष्ट राश्यादिके योगतुल्य राशिमें जब गोचरीय बृहस्पति हो तब विवाह होना कहे । वा चन्द्राधिष्ठित नक्षत्र और सप्तमेशके योगतुल्य अंशमें गुरुके होने पर विवाह कहे । यदि गुरु मित्रके नवांशमें हो तो एक ही स्त्रीसे युक्त हो । स्वांशमें हो तो दो तीन स्त्रीवाला हो । उच्चांशमें हो तो बहुत स्त्रियोंका स्वामी होवे ॥ २७ ॥

कलत्रनाथस्थितभांशकेशयोः सितक्षपानायकयोर्बलीयसः ।
दशागमे द्यूनपयुक्तभांशकत्रिकोणगे देवगुरौ करग्रहः ॥ २८ ॥

इदानीं विवाहकालज्ञाने प्रकारान्तरमाह—कलत्रेति । कलत्रनाथस्थितभांशकेशयोः = सप्तमेशः स्थितो यस्मिन् भे = राशौ, अंशके = नवांशे च तदीशयोः मध्ये बलीयसो ग्रहस्य दशागमे, वा सितक्षपानायकयोः = शुक्रचन्द्रयोर्मध्ये बलीयसो ग्रहस्य दशागमे = महादशाकाले, द्यूनपेन = जन्मलग्नात्सप्तमेशेन युक्तो यो राश्यंशकस्तस्मात् त्रिकोणे (५।९) गतवति गुरौ च जातस्य करग्रहः = विवाहो वाच्यः ।

Notes—अत्र लग्नचन्द्रयोर्बलीयसः पक्षो ग्राह्यः । अर्थात् यदि चन्द्रो बलीयांस्तदा सितक्षपानायकयोर्बलीयसः दशागमे इति, लग्ने बलीयसि कलत्रनाथस्थितभांशकेशयोः बलीयसः दशागमे इति पक्षः स्वीकार्यः । लग्नाच्चन्द्राच्च भावविचारस्य विहितत्वादिति ॥

सप्तमेश जिस राशि और नवांशमें हो उनके स्वामियोंमें, या शुक्र और चन्द्रमामें जो अधिक बली हो उसकी दशामें सप्तमेश युत, राश्यंशसे त्रिकोणमें गुरुके होनेपर विवाह कहे ॥ २८ ॥

शुक्रोपेतकलत्रराशिपदशाभुक्तिर्विवाहप्रदा
लग्नाधिपसप्तमस्थराशिपदशाभुक्तौ च पाणिग्रहः ॥
कर्मायुर्भवनाधिनायकदशाभुक्तौ विवाहः क्रमात्
कामेशेन युतः कलत्रगृहगस्तत्पाकभुक्तौ तु वा ॥ २९ ॥

इदानीमन्यानपि विवाहसमयानाह—शुक्रोपेतेति । शुक्रेण उपेतस्य = सहितस्य कलत्रराशिपस्य—सप्तमभावेशस्य दशाभुक्तिः विवाहप्रदा भवति । यस्य जन्मसमये सप्तमेशः शुक्रसंयुक्तः स्यात्तस्य सप्तमेशदशान्तर्दशाकाले विवाहो भवतीत्यर्थः ।

लग्नादिति । जन्मलग्नाद् वित्तपतिः = द्वितीयेशः यस्मिन् राशौ तिष्ठति तद्राशिपतेर्दशाभुक्तौ च पाणिग्रहः = विवाहो वक्तव्यः ।

कर्मायुरिति । कर्मभावेशस्यायुर्भावेशस्य च दशान्तर्दशाकाले विवाहो वाच्यः ।

अथवा यदि कलत्रगृहगः = सप्तमभावगतः ग्रहः कामेशेन = सप्तमेशेन युतो भवेत्तदा तु तद्दशायाः = सप्तमगतग्रहदशाया भुक्तौ विवाहो वक्तव्य इति । अत्र क्रमादित्यनेन क्रमिका योगा उक्ता इति ज्ञातव्यम् ॥ २६ ॥

**शुक्रयुक्त सप्तमेशकी दशाभुक्ति विवाह करानेवाली होती है। लग्नसे द्वितीयेशकी राशिपतिकी दशाभुक्तिमें पाणिग्रहण होवे। दशमेश और अष्टमेशकी दशाकी भुक्तिमें क्रमसे विवाह होवे। वा सप्तमेशसे युक्त तथा कलत्र ( सप्तम ) राशिमें प्राप्त ग्रहकी दशाकी भुक्तिमें विवाह कहे ॥ २९ ॥**

सौम्यव्योमचरः स्थितः शुभगृहे चादौ ददाति श्रियं
पापर्क्षे शुभखेचरो यदि दशामध्ये विवाहादिकम् ॥
क्रूरः पापगृहोपगो यदि फलं पाकावसाने तथा
सौम्यर्क्षे यदि सर्वकालफलदः सौम्यान्वितः शोभनः ॥ ३० ॥

इदानीं ग्रहाणां शुभाशुभस्ववशात् स्थितिवशाच्च फलसमयमाह—सौम्यव्योमचर इति । शुभग्रहो यदि शुभगृहे स्थितः स्यात् तदाऽसौ आदौ=स्वदशारम्भसमय एव श्रियं = शुभसम्पदं ( विवाहादिफलम् ) ददाति । शुभखेचरः=शुभग्रहो यदि पापर्क्षे=पापराशौ स्थितः स्यात्तदा स्वदशामध्ये = स्वदशाया मध्यकाले विवाहादिकं शुभफलं ददाति । क्रूरः= पापग्रहो यदि पापगृहोपगः स्यात्तदा पाकावसाने = स्वदशाया अन्तकाले तथा = विवाहादिफलं ददाति । यदि क्रूरः सौम्यर्क्षे = शुभराशौ भवेत् तदा सर्वकालफलदो ज्ञेयः । क्रूरः सौम्यान्वितः = शुभग्रहसंयुक्तश्चेद्भवेत्तदाऽसौ शोभनः = शुभ एव स्यादिति ।

Notes—इतः पूर्वश्लोके यदुक्तं 'दशाभुक्तौ विवाहः' इति तत्समय एवोक्तोऽस्मिन् श्लोके । तत्र विवाहकर्तृग्रहस्य स्थितिं विलोक्य तद्दशाभुक्तौ विवाहसमये ब्रूयादिति । अत्र विवाह इत्युपलक्षणमेव अतः सर्वस्मिन्नेव भावविचारे तत्तद्भावकारकस्य परिस्थितिवशेनोक्तवत्फलं वाच्यमिति निष्कर्षः ॥ ३० ॥

**सौम्य ग्रहसे शुभ गृह युक्त हो तो दशामें पहले शुभफलको देता है। यदि पापराशिमें शुभग्रह हो तो दशाके मध्यमें विवाह आदि शुभ फल हो। पापग्रह यदि पापगृहमें हो तो दशाके अन्तमें फल देता है। पापग्रह यदि शुभराशिमें हो तो अपनी सम्पूर्ण दशामें फल देवे। यदि वह शुभ युक्त हो तो शुभ होता है ॥ ३० ॥**

लग्नेश्वरस्थितनवांशपतिः स्वराशौ चन्द्रे पुरन्दरगुरौ च कलत्रलाभम् ॥
कामेशशुक्रगृहगेऽमरमन्त्रिणीन्दौ केन्द्रेऽथवा गुरुयुते सति गोचरेण ॥ ३१ ॥

इदानीमन्यमपि विवाहसमयमाह—लग्नेश्वरेति । लग्नेश्वरः = जन्मलग्नपतिस्तिष्ठति यस्मिन्नवांशे तन्नवांशपतेः स्वराशौ = द्वितीयस्थाने चन्द्रे, पुरन्दरगुरौ = बृहस्पतौ च गोचरेण समागते सति जातस्य कलत्रलाभम् = स्त्रीप्राप्तिं=विवाहं विजानीयात् । अथवा केन्द्रे= जन्मलग्नाद् १।४।७।१० एतदन्यतमे गुरुयुते सति कामेशशुक्रगृहे = सप्तमेशो भृगुर्वा यत्र तिष्ठति तस्मिन् राशौ गोचरेण = सञ्चारेण गतवति अमरमन्त्रिणि = गुरौ, इन्दौ=चन्द्रे च कलत्रलाभं ब्रूयादिति ।

Notes—अत्र वयसस्तारतम्येनापि भवितव्यम् । न केवलं गुरोः सञ्चारतः फलमादिशेदिति ॥ ३१ ॥

लग्नेश जहाँ स्थित हो उस नवांशका स्वामी जहाँ हो उससे २ री राशिमें चन्द्रमा और बृहस्पति हों तो स्त्रीका लाभ होवे। सप्तमेश और शुक्रके गृहमें जब चन्द्रमा तथा बृहस्पति हों, तथा उससे केन्द्रमें जब गोचरीय गुरु हो तो स्त्रीका लाभ होवे ॥ ३१ ॥

यत्संख्याकमजादि कामभवनं तद्वत्सरे वा नृणां
साष्टाब्दे कृतमौञ्जिकर्मपरतः कल्याणकालो भवेत् ॥
लग्नादस्तविलग्ननायकयुतक्षेत्रांशके सम्भवा
या सा भर्तृमनःप्रसादकरणी भर्ता तथैव स्त्रियाः ॥ ३२ ॥

अन्यमपि विवाहकाले स्त्रियाः स्वभावं चाह—यदिति। कामभवनं = सप्तमं स्थानम् अजादि = मेषादिगणनाक्रमेण यत्सङ्ख्याकं भवेत् तद्वत्सरे, वा साष्टाब्दे=अष्टवर्षसहिते तत्सप्तमभावाङ्कसमवर्षे नृणां कृतमौञ्जिकर्मपरतः = मौञ्जिसंस्कार-( व्रतबन्धन- ) तः अनन्तरं कल्याणकालः = परिणयनसमयो भवेत्। यथा कस्यचित् सप्तमे भावे कर्कराशिस्तथा तस्य मौञ्जिबन्धनमष्टाब्दे जातं तदा मौञ्जिकर्मपरतो द्वादशे ( ८ + ४ ) वर्षे जन्मतो विंशतितमे ( ४ + ८ + ८ ) वर्षे वा द्वादशे वर्षे तस्य परिणयनं वाच्यमिति।

अथ भर्तृमनःप्रसादकरणीं स्त्रीमनःप्रसादकरञ्चाह—लग्नादिति। लग्नात् = जन्मलग्नात् अस्तविलग्नं = सप्तमो भावस्तस्य नायकेन = स्वामिना ( सप्तमेशेनेत्यर्थः ) युतो यः क्षेत्रांशकः = राशिनवांशस्तस्मिन् सम्भवा = उत्पन्ना या स्त्री, सा भर्तृमनःप्रसादकरणी = पतिमनोमोदिनी भवति। तथैव = तेनैव प्रकारेण ( तल्लक्षणविशिष्टः ) भर्ता = स्वामी, स्त्रियाः मनःप्रसादकरो भवतीति ॥ ३२ ॥

जितनी संख्या मेषादिसे सप्तम भाव हो उतने वर्ष या उसमें ८ जोड़कर यज्ञोपवीतके बाद कल्याण (विवाह)का समय होता है। लग्नसे सप्तम भावेश युक्त क्षेत्रांशकमें (अर्थात् लग्नमें सप्तमेशस्थ राशिका नवांश हो) उत्पन्न स्त्री स्वामीके मनको प्रसन्न करनेवाली होती है। उसी प्रकार स्त्रीको स्वामी प्रसन्न करनेवाला होता है ॥ ३२ ॥

कामान्वितेक्षकवियच्चरराशिजाता चन्द्रादतीव सुभगा च पतिप्रिया स्यात् ॥
स्त्रीजातके च पतिरिष्टकरो वधूनां दिग्देशजा भृगुसुतादबलाधिपस्य ॥ ३३ ॥

कामेति। चन्द्रात् = जन्मकालीनचन्द्राधिष्ठितराशितः कामे = सप्तमे भावे, अन्वितः= व्यवस्थितः वा ईक्षकः = सप्तमभावद्रष्टा यो वियच्चरः = ग्रहस्तस्य, राशौ = स्वगृहे जाता स्त्री अतीव सुभगा पतिप्रिया च स्यात्। इदमुक्तं भवति। जन्मकाले चन्द्राधिष्ठितराशेः सप्तमे स्थाने यो ग्रहो भवेत्तदभावे तत्र यस्य सर्वाधिका दृष्टिर्भवति तस्य ग्रहस्य राशिरेव यस्या जन्मराशिर्भवति सा स्त्री अतीव सुन्दरी भर्तुः प्रियतमा च भवतीति। स्त्रीजातके= स्त्रियाः जन्मकुण्डल्यामपि कथितलक्षणे सति पतिः वधूनां = स्त्रीणाम्, इष्टकरः = मनःप्रीतिकरो भवेदिति।

दिगिति। भृगुसुतात्=शुक्रात् अबलाधिपस्य सप्तमेशस्य या दिक् ( २ अ. २३ श्लोक द्र. ) तद्दिग्देशजा जातस्य स्त्री वाच्या। अत्रेदं विचिन्त्यम्। पुरुषस्य जन्मकाले शुक्रो यत्र भवेत्तस्मात्सप्तमभावस्य योऽधिपस्तस्य या दिगुक्ता तस्यां दिशि तस्य विवाहो वाच्य इति ॥

अत्र दारदिग्ज्ञानेऽन्येऽपि प्रकाराः—

शुक्राधिष्ठितराश्यंशदिशो वा दारसम्भवः।
शुक्रआमित्रतो वाऽपि दारेशस्य दिशोऽथवा ॥

कलत्रसंस्थस्य तदीक्षकस्य लग्नात्तदीशस्य च चन्द्रतो वा।

दिग्जातमत्र प्रवदेत् कलत्रं पुंसोऽङ्गनायाश्च पतिं तथैव ॥

कामस्थकामाधिपभार्गवानामृक्षं दिशं शंसति तस्य पत्न्याः ॥ इति ॥ ३३ ॥

पुरुषके चन्द्रमासे सप्तममें स्थित तथा सप्तमको देखनेवाले ग्रह उसकी राशि में उत्पन्न होनेवाली स्त्री अत्यन्त सुन्दरी और पतिप्रिया होती है। स्त्री जातकमें ऐसा हो तो स्त्रियों के मनोरथ पूर्ण करनेवाला पति होता है। शुक्रसे सप्तमेशकी दिशाकी स्त्री कहे। याने जातक की शादी शुक्रसे सप्तमेशकी दिशामें कहनी चाहिये ॥ ३३ ॥

## अथ वरवधूजातकसंयोगः।

इदानीं वरस्य वध्वाश्च जातकसंयोगमाहेत आरभ्य श्लोकैश्चतुर्दशभिः—

धनावसानस्मरयानरन्ध्रगो धरासुतो जन्मनि यस्य दारहा ॥

तथैव कन्याजनजन्मलग्नतो यदि क्षमासूनुरनिष्टदः पतेः ॥ ३४ ॥

धनेति। यस्य पुरुषस्य जन्मनि = जन्मकाले धरासुतः = मङ्गलः, धनावसानस्मरयानरन्ध्रगः = द्वितीय–द्वादश–सप्तम–चतुर्थाष्टमानामन्यतमगतः स्यादसौ पुरुषो दारहा = स्त्रीविनाशकः भवेदर्थात्तस्य नरस्य स्त्री न जीवेदित्यर्थः।

कन्याजनजन्मलग्नतो यदि क्षमासूनुः = मङ्गलः तथैव = धनावसानस्मरयानरन्ध्र-(२।१२।७।४।८) गतः स्यात् तदा पतेः = स्वामिनः अनिष्टदः = मृत्युकरः भवेदिति। अत्र योगे जाता कन्याऽपि भर्तृविनाशिनी भवतीति भावः। अत्र वध्वा वरस्य च जन्मलग्नगतो भौमोऽशुभ उक्तः। अत्रोपलभ्यतेऽपि विशेषवचनम्—

"लग्ने व्यये च पाताले जामित्रे चाष्टमे कुजे।

कन्या भर्तृविनाशाय भर्ता कन्याविनाशकृत्" इति ॥ ३४ ॥

जिस पुरुषके द्वितीय, द्वादश, सप्तम, चतुर्थ या अष्टममें मंगल हो वह (दारहा) स्त्री का नाशक होवे। इसी प्रकार कन्या के लग्नसे (२–४–७–८–१२) भावमें यदि मंगल हो तो पतिका अनिष्ट करनेवाली होती है। "धना" की जगह "लग्ना" पाठमें अन्य ग्रन्थोंसे भी सहयोग होगा। क्योंकि "लग्ने व्यये च पाताले जामित्रे चाष्टमे कुजे" इससे १–४–७–८ १२ ये स्थान अनिष्टकर अन्य ग्रन्थोंमें दृष्टि गोचर होते हैं ॥ ३४ ॥

क्रूरव्योमचरः स्त्रीणामष्टमस्थो विलग्नतः।

नीचारिपापवर्गेषु यदि मृत्युकरः पतेः ॥ ३५ ॥

क्रूरेति। क्रूरव्योमचरः = कश्चित्पापग्रहः नीचारिपापवर्गेषु विद्यमानः सन् यदि स्त्रीणां विलग्नतः=जन्मलग्नात् अष्टमस्थो भवेत् तदा तस्याः पतेः=स्वामिनः मृत्युकरो भवेदिति॥३५॥

स्त्रियोंके लग्नसे अष्टम क्रूरग्रह नीच, शत्रु, पापके वर्गमें हो तो पतिकी मृत्यु करने वाला होता है ॥ ३५ ॥

द्यूनकुटुम्बगतौ यदि पापौ दारवियोगजदुःखकरौ तौ।

तादृशयोगजदारयुतश्चेज्जीवति पुत्रधनादियुतश्च ॥ ३६ ॥

द्यूनकुटुम्बगताविति। पापौ = द्वौ पापग्रहौ यदि द्यूनकुटुम्बगतौ = सप्तमद्वितीयगतौ भवेताम्, (एकः सप्तमे, एको द्वितीये इति) तदा तौ दारवियोगजदुःखकरौ = स्त्रीवियोगजनितदुःखदायिनौ भवेताम्। अस्मिन्योगे जातस्य पुरुषस्य स्त्री म्रियत इत्यर्थः। अथासौ पुरुषो यदि तादृशयोगजदारयुतः = तादृशे योगे (द्यूनकुटुम्बगतौ यदि पापावित्यस्मिन्) जातैः दारैः (स्त्रीभिः) युतो भवेत् अर्थात्तस्य जातस्य स्त्रिया जन्मकुण्डल्यामपि पापौ द्वितीयसप्तमौ भवेतां तदा पुत्रधनादियुतश्च जीवति। न तदानीं दम्पत्योरकाले मरणमिति भावः॥३६॥

यदि पापग्रह सप्तम और द्वितीय स्थानमें हों तो दोनों स्त्रीवियोगोत्पन्न दुःख देनेवाले होवें। ऐसे ही योगवाली उसकी स्त्री हो तो पुत्र धनादिसे युक्त होकर जीवे ॥ ३६ ॥

कलत्रराशित्रितयेऽथवा स्यात्तदीशसंयुक्तभराशिकोणे ।
कलत्रराशिर्यदि पुत्रशाली तदन्यराशिर्यदि पुत्रहीनः ॥ ३७ ॥

कलत्रेति । पुरुषजन्मकुण्डल्याम्—कलत्रराशित्रितये=कलत्रराशेर्भेदत्रये ( कलत्रेशो यत्र भवेत् १, तस्योच्चं नीचं वा २, कलत्रराशिः ३ इति कलत्रस्य भेदत्रयं भवति ) किं वा सप्तमादित्रये, अथवा तदीशसंयुक्तभराशिकोणे=सप्तमेशस्थितराशेः कोणे ( ५।९ ) यदि कलत्रराशिः = स्त्रिया जन्मराशिः स्यात्तदा जातः पुत्रशाली भवेत् । तस्मिन् यदि तदन्यराशिः = स्त्रिया जन्मराशेर्भिन्नो राशिः स्यात्तदा पुत्रहीनो भवेदिति ॥ ३७ ॥

पुरुषके कलत्र* राशित्रयमें वा सप्तमेशसे संयुक्त राशिके कोणमें यदि उसके स्त्रीकी राशि हो तो पुत्रशाली ( पुत्रवान् ) हो । उससे अन्य राशि हो तो पुत्रहीन होवे ॥ ३७ ॥

अथ स्त्रियाः स्तनविचारः ।

काठिन्योरुकुचा मदे दिनकरे कामाधिपे केन्द्रगे
जीवेन्दुज्ञसितान्विते गुरुकुचा, शुष्कस्तना भूमिजे ।
लम्बापीनपयोधरा सगुलिकच्छायासुताहिध्वजे,
धूमादौ विषमाकृतिस्तनवती दुःस्थेऽथवा कामपे ॥ ३८ ॥

इदानीं कथम्भूता स्त्री भवेदित्याह—काठिन्येति । दिनकरे = सूर्ये, मदे=सप्तमे स्थिते सति जातस्य स्त्री काठिन्योरुकुचा=काठिन्यं=घनत्वमुरुगतावूरू = जघनौ, कुचौ = स्तनौ च यस्यां सा तथाभूता भवेत् । जीवेन्दुज्ञसितान्विते = गुरु-चन्द्र-बुध-शुक्रान्यतमेन सहिते कामाधिपे = सप्तमभावेशे केन्द्रगे सति स्त्री गुरुकुचा = पीनपयोधरा भवेत् । भूमिजे=मङ्गले सप्तमगे सति शुष्कस्तना = गलत्कुचा भवेत् । सगुलिकच्छायासुताहिध्वजे = गुलिकेन सहिते छायासुते = शनौ, अहिध्वजे = राहुकेत्वोरन्यतरे वा सप्तमे गतवति सति स्त्री लम्बापीनपयोधरा = लम्बायमानावापीनौ ( स्थूलौ ) च पयोधरौ ( कुचौ ) यस्यास्तथाभूता भवेत् । धूमादौ = सप्तमे भावे धूमाद्युपग्रहे सति स्त्री विषमाकृतिस्तनवती = असमान-(लघुमहत्-) पयोधरधरा भवेत् । अथवा कामपे = सप्तमेशे दुःस्थे सत्यपि विषमाकृतिस्तनवती स्त्री भवेदिति ॥ ३८ ॥

सूर्य सप्तममें हो तो उसके स्त्रीकी जाँघें और स्तन कठिन हों । सप्तमेश केन्द्रमें हो बृहस्पति, चन्द्रमा, बुध या शुक्रसे युक्त हो तो स्त्रीके स्तन बड़े हों । यदि ७ वेंमें मङ्गल हो तो शुष्क स्तन हो । गुलिकके साथ शनि, राहु या केतु हों तो लम्बे मोटे स्तन हों । सप्तमेश दुष्टस्थानमें हो अथवा सप्तममें धूमादि उपग्रह हो तो स्त्री विषमस्तनवाली हो ॥ ३८ ॥

अथ गम्यस्त्रीविवरणम् ।

वन्ध्यासङ्गमिनेऽस्तगे समवधूकेलिं निशानायके
भूपुत्रे तु रजस्वलाजनरतिं वन्ध्यावधूमेति वा ।
वेश्यामिन्दुसुते तु विप्रवनितां जीवे सिते गर्भिणीं
नीचस्त्रीरतिमर्कजोरगशिखिप्राप्तेऽथवा पुष्पिणीम् ॥ ३९ ॥

इदानीं कथम्भूतया स्त्रिया सह सङ्गो भवेदित्याह—वन्ध्येति । इने = सूर्ये, अस्तगे = सप्तमभावगते सति पुरुषो वन्ध्यासङ्गं करोति । निशानायके = चन्द्रे सप्तमगते सति समवधूकेलिं = स्वसमानरूपगुणवयोयुतया वध्वा सह केलिं = रतिक्रीडां करोति । भूपुत्रे = भौमे सप्तमे सति रजस्वलाजनरतिं करोति । अथवा वन्ध्यावधूम् एति = प्राप्नोति । इन्दुसुते = बुधे

* कलत्रनाथस्थितभं तदीयराशिं कलत्रस्य विदुर्महान्तः ।
तस्योच्चनीचं यदिवा कलत्रराशिं तदंशत्रितयं तदीयम् ॥

सप्तमे गते तु वेश्यामुपयाति । जीवे = गुरौ सप्तमे सति विप्रवनितां = ब्राह्मणीमुपगच्छति । सिते = शुक्रे तथाभूते सति गर्भिणीं स्त्रियमुपेयात् । अर्कजोरगशिखिप्राप्ते = सप्तमे भावे शनौ, राहौ, केतौ वा प्राप्ते सति नीचस्त्रीरतिं कुर्यादथवा पुष्पिणीं = रजस्वलामुपेयादिति ॥ ३९ ॥

सूर्य सप्तममें हो तो बन्ध्या स्त्रीसे सङ्गम हो । चन्द्रमा ७ वेंमें हो तो अपने समान स्त्री से केलि हो । मङ्गल हो तो रजस्वला स्त्रीसे रति हो, वा बन्ध्या स्त्री प्राप्त हो । बुध हो तो वेश्यासे रति हो । बृहस्पति हो तो ब्राह्मणीसे रति हो । शुक्र हो तो गर्भिणी स्त्रीसे विहार हो । शनि, राहु वा केतु हो तो नीच स्त्रीसे रमण हो, वा रजस्वला स्त्रीसे केलि हो ॥ ३९ ॥

### अथ स्त्रीसङ्गमे स्थानविचारः ।

क्रीडागारमिने वनं सुखगते चारु स्वगेहं विधौ
भूपुत्रे सति कुड्यमिच्छति बुधे जातो विहारस्थलम् ।
जीवे देवगृहं सिते तु सलिलं मन्देऽथवा पन्नगे
केतौ माधवशङ्करप्रियसुतस्थानं वधूसङ्गमे ॥ ४० ॥

इदानीं जातस्य रतिक्रीडास्थलानि निर्दिशति । इने = सूर्ये, सुखगते = चतुर्थस्थानस्थे सति वनम् = अरण्यम्, वधूसङ्गमे क्रीडागारं = विहारस्थलं वाच्यम् । विधौ = चन्द्रे सुखगते सति चारु स्वगेहं = रमणीयमात्मभवनमेव वाच्यम् । भूपुत्रे = मङ्गले चतुर्थे सति कुड्यं = तृणकाष्ठविरचितं गृहं वाच्यम् । बुधे चतुर्थे सति विहारस्थलं = विहरणभूमिः । जीवे चतुर्थे सति देवगृहं = देवालयः=मठमन्दिरादि । सिते = शुक्रे चतुर्थे सति तु सलिलं = जलाशय-तटम् । अथ मन्दे = शनौ, पन्नगे = राहौ, केतौ वा चतुर्थे सति माधव-शङ्कर-प्रिया-सुत-स्थानं वधूसङ्गमे = स्त्रीप्रसङ्गे स्थानं वाच्यमिति ॥ ४० ॥

सुख स्थान में सूर्य हो तो वनमें (गृहातिरिक्त स्थानमें) रतिक्रीडा हो । चन्द्रमा हो तो रमणीय गृहमें विहार हो । मङ्गल हो तो कुटीमें रमण हो । बुध हो तो विहारके ही स्थानमें विहार हो । गुरु हो तो देवागारमें केलि हो । शुक्र हो तो जलके समीप क्रीडा हो । शनि वा राहु, केतु हो तो विष्णु, शङ्कर, देवी, गणेश, आदि देवताओंके मन्दिरमें मैथुन करे ॥४०॥

शुक्रांशे मदनस्थितेऽवनिसुते कामाधिपे पञ्चमे ।
जायारिष्टमुपैति सप्तमगते भानौ कलत्रार्थवान् ।
दुःस्थौ कामकुटुम्बपौ सभृगुजौ दुश्चिक्ययातौ तु वा
तत्सङ्ख्याककलत्रहा बलयुतौ वित्तास्तपौ दारवान् ॥ ४१ ॥

इदानीं कलत्रशुभाशुभमाह—शुक्रांश इति । अवनिसुते = भौमे शुक्रांशे गतवति मद-नस्थिते सति कामाधिपे = सप्तमेशे पञ्चमे च सति जातो जायारिष्टं = स्त्रीकष्टम्, उपैति = प्राप्नोति । अस्मिन् योगे जातस्य स्त्री कष्टं प्राप्नोतीत्यर्थः । भानौ = सूर्ये सप्तमगते सति कलत्रार्थवान् भवति ।

कामकुटुम्बपौ = सप्तमेशद्वितीयेशौ सभृगुजौ = शुक्रेण सहितौ भूत्वा दुःस्थौ=षष्ठ-व्ययगतौ, वा दुश्चिक्ययातौ = तृतीयमुपगतौ तु तत्संख्याककलत्रहा = यस्मिन् भावेऽयं योगो भवेत्सङ्ख्याकतुल्यस्त्रीविनाशकः स्यात् । अथ वित्तास्तपौ = धनेश-सप्तमेशौ बलयुतौ चेद्भवेतां तदा तत्संख्याकदारवान् भवेज्जातक इति ॥ ४१ ॥

शुक्रके नवांशमें सप्तमस्थ मङ्गल हो, सप्तमेश पञ्चममें हो तो स्त्रीको कष्ट प्राप्त हो। सूर्य ७ वेंमें हो तो स्त्रीसुखवाला हो । सप्तमेश और द्वितीयेश शुक्रके साथ दुष्ट स्थानमें हों वा तृतीयमें हों तो उतनी संख्याको स्त्रीकी हानि हो । यदि द्वितीयेश और सप्तमेश बली हों तो स्त्री जीती रहे ॥ ४१ ॥

## अथ भगचुम्बनयोगः ।

जातः समेति भगचुम्बनमस्तनाथे शुक्रेण वीक्षितयुते भृगुमन्दिरे वा ।
एवं कुटुम्बभवनाधिपतौ तथा स्याद् दारर्क्षगे दशमपे ससिते तथैव ॥ ४२ ॥

इदानीं भगचुम्बनयोगमाह—जात इति । १. अस्तनाथे = सप्तमेश्वरे शुक्रेण वीक्षिते वा भृगुमन्दिरे = वृषतुलयोरन्यतरे यत्र तत्र गते सति जातः भगचुम्बनं समेति । अस्मिन्नृक्षयोगे जातो नरः स्त्रीभगस्य चुम्बनं कुर्यादिति । २. कुटुम्बभवनाधिपतौ = द्वितीयेशे एवमुक्तलक्षणसंयुक्ते ( शुक्रेण वीक्षितयुते भृगुमन्दिरे वा ) तथा स्यादर्थाज्जातो भगचुम्बनमेति । अपि च ३. ससिते = शुक्रसंयुक्ते दशमपे = दशमभावेशे, दारर्क्षगे = सप्तमभावगते सति तथैवार्थाज्जातो भगचुम्बनं समेतीति ॥ ४२ ॥

३ ल.
शु.
१
भगचुम्बन
योगः
बृ. ७
९

४
चं. २
३ ल.
२
भगचुम्बन-
योगः
९
शु.

सप्तमेश यदि शुक्रसे दृष्ट या युत हो तो जातक भग (योनि) का चुम्बन करे। शुक्रके गृहमें सप्तमेश हो तो भी यही फल हो। इसी प्रकार द्वितीयेशके होने पर भी फल होता है। दशमेश शुक्रके साथ सप्तममें हो तो भी यही फल होता है ॥ ४२ ॥

३ ल.
३
भगचुम्बन-
योगः
१८
९ बृ. शु.

## अथ स्त्रिया भगविचारः ।

कामेश्वरो देवगुरुः सितो वा समं भगं चारुतरं तरुण्याः ।
ह्रस्वं भगं सप्तमराशिनाथे शनीन्दुतारासुतमध्ययाते ॥ ४३ ॥
दीर्घं समेति भगमस्तपतौ जलर्क्षे तत्कारके जलगृहोपगते तथैव ।
सार्द्रं भगं मदनगे भृगुवीक्षितेऽब्जे गुह्यं त्वनार्द्रमुपयाति वधूः सपापे ॥४४॥

इदानीं जातकस्य स्त्रिया भगविचारमाह—कामेश्वर इति । देवगुरुः = बृहस्पतिः वा सितः = शुक्रः, कामेश्वरः = सप्तमभावपतिः स्याच्चेत्तदा तरुण्याः = स्त्रियाः समं = नातिह्रस्वं नातिदीर्घं च चारुतरम् = अतीव चिक्कणं, भगम् = योनिः स्यात् । मेषवृश्चिकयोः मिथुनकन्ययोर्वाऽन्यतरे लग्ने सति अयं योगः सम्भवेत् । सप्तमराशिनाथे = सप्तमेशे शनीन्दुतारासुतमध्ययाते = शनिचन्द्रबुधमध्यगते सति स्त्रिया ह्रस्वं = लघुप्रमाणकं भगं स्यादिति ॥ ४३ ॥

दीर्घमिति । अस्तपतौ = सप्तमेशे, जलर्क्षे = जलचरराशौ = मृगापरार्द्धान्त्यकुलीरसंज्ञे, सति, दीर्घं = महत्प्रमाणकं भगं (योनिम्) समेति । तत्कारके = सप्तमभावकारकग्रहे (शुक्रे) जलगृहोपगते = जलचरराशौ गतवति सति तथैवार्थाद्दीर्घं भगं समेति ।

सार्द्रमिति । अब्जे = चन्द्रे, मदनगे = सप्तमभावगते, तस्मिन् भृगुवीक्षिते=शुक्रेणाव-लोकिते च सति सार्द्रं=क्लिन्नं ( सजलमिति ) भगं समेति । अथ तादृशेऽब्जे सपापे=पाप-ग्रह-संयुक्ते सति वधूः=स्त्री, अनार्द्रं=शुष्कं, गुह्यं=रहस्यदेशं=भगम्, उपयाति=प्राप्नोतीति ।

Notes—एते योगाः स्त्रियाः पुरुषस्य च जन्मकुण्डल्यां समफला एव भवन्तीति चिन्त्यम् ॥ ४४ ॥

सप्तमेश, बृहस्पति या शुक्र हो तो उसके स्त्रीकी योनि सम और अच्छी हो । सप्तमेश यदि शनि, चन्द्र और बुधके मध्यमें हो तो योनि छोटी हो ॥ ४३ ॥

सप्तमेश जलचर राशिमें हो तो बड़ी योनि हो । उसका ( स्त्रीभावका ) कारक ग्रह जलर्क्षमें हो तो भी बड़ी योनि हो । चन्द्रमा सप्तममें हो उसे शुक्र देखता हो तो सार्द्र ( भींगी हुई या अत्यन्त शीतल ) भग हो और सप्तममें पापग्रह हो तो योनि आर्द्र न हो शुष्क हो ॥ ४४ ॥

लग्नेशास्थनवांशनाथगृहगे जीवे समेति स्त्रियं
नीचारातिनवांशके सति मृतस्त्रीको विदारोऽथवा ।
लग्ने कामपतिस्फुटादपहृते राशित्रिकोणे गुरौ
लग्ने सप्तमराशिपस्फुटहृते जीवे मृतिं योषितः ॥ ४५ ॥

लग्नेशेति । लग्नेशास्थनवांशनाथगृहगे = लग्नेशो यन्नवांशे तिष्ठति तन्नवांशनाथो ग्रहो यद्गृहगतो भवेत् तत्र गतवति जीवे = गुरौ सति जातः स्त्रियं समेति प्राप्नोति ।

नीचारातिनवांशके = तथाभूते जीवे स्वनीचराशेः, शत्रुग्रहस्य वा नवांशे सति जातः मृतस्त्रीकः, अथवा विदारः = स्त्रीरहितः ( अविवाहितः ) भवेत् ।

अथ स्त्रीमरणमाह—लग्न इति । कामपतिस्फुटात् = स्पष्टसप्तमेशग्रहात् लग्ने अप-हृते = विशोधिते यच्छेषं स्यात्तद्राशित्रिकोणे गतवति गुरौ, अथवा लग्ने सप्तमराशिपस्फु-टेन हृते रहिते ( ऊनीकृते ) यच्छेषं तद्राशौ गतवति गुरौ योषितः = जातकस्य पत्न्याः मृतिं वदेदिति ॥ ४५ ॥

लग्नेश जहां हो वहांके नवांशपतिके गृहमें जब गुरु हो तो स्त्री प्राप्त हो । यदि लग्नेश नीच या शत्रुके नवांशमें हो तो स्त्री मरे, वा विना स्त्रीका ही रहे । स्पष्ट सप्तमेशमेंसे लग्न को घटावेसे शेष राशिसे त्रिकोणमें गुरुके होने पर या लग्नमें स्पष्ट सप्तम राशिपतिके घटाने पर शेषमें गुरु हो तो स्त्रीकी मृत्यु कहे ॥ ४५ ॥

लग्नात्कामपकारकौ शुभकरौ वीर्याधिके सप्तमे
पत्या साकमुपैति मृत्युमबला पापैर्युतेक्षिते ।
कामच्छिद्रदशापहारसमये शुक्राष्टवर्गोदिते
राशौ भानुसुते कलत्रमरणं जीवे तदंशान्विते ॥ ४६ ॥

लग्नादिति । जन्मलग्नात् यः कामपतिः = सप्तमेशः, कारकः = स्त्रीकारकश्च तौ यदि शुभकरौ = शुभग्रहौ सप्तमे भवेतां तथा सप्तमे भावे वीर्याधिके = पूर्णबलान्विते तस्मिन् पापैर्युतेक्षिते = पापयोगदृष्टिवर्जिते सति अबला = स्त्री, पत्या = भर्त्रा, साकं = सहैव मृत्यु-मुपैति । अस्मिन् योगे सकृदेव दम्पत्योर्मरणं भवतीति भावः ।

कलत्रमरणमाह—कामच्छिद्रदशापहारसमये=सप्तमस्थानाधिकर्तृ कच्छिद्रग्रहस्य (अ० ५, श्लो० ५२-५३ द्र० ) दशापहारकाले, शुक्राष्टवर्गोदिते = पूर्वोक्त ( अ० १० ) शुक्रा-ष्टवर्गकथितराशौ भानुसुते = शनैश्चरे, तथा तदंशान्विते = तद्राश्यंशे गतवति गुरौ च कल-त्रमरणं = स्त्रीमरणं स्यादिति ॥ ४६ ॥

लग्नसे सप्तमेश और ७ मका कारक शुभग्रह हों, सप्तम भाव बली हो उसपर पापग्रहोंका

योग या दृष्टि नहीं हो तो स्त्री पतिके साथ मरे। सप्तम भावसे छिद्र ग्रहकी दशा प्राप्त होने पर शुक्रके अष्टवर्गोक्त राशिमें शनि हो और उसके नवांसमें जब गुरु हो तब स्त्रीकी मृत्यु कहे ॥ ४६ ॥

मदनभवननाथे पारिजातादिवर्गे सुरगुरुयुतदृष्टे शोभनस्थानयाते।
दधिमधुघृतसूपक्षीरपक्वोपदंशैः सह शुचि रुचिरान्नं चारुकान्तामुपैति ॥ ४७ ॥

स्पष्टार्थः ॥ ४७ ॥

इति सप्तमभावविचारः।

सप्तमेश अपने पारिजातादि वर्गमें हो, गुरुसे युक्त या दृष्ट हो, शुभ स्थानमें हो तो दधि-मधु-घी-दाल-दूध पक्व पदार्थोंके साथ सुन्दर अन्नका भोजन और रमणीय स्त्री प्राप्त होती है ॥ ४७ ॥

## अथाष्टमभावफलम्।

अथाधुनाऽष्टमभावफलानि विवक्षुरादौ तत्र विचारणीयकथनपूर्वकमल्पायुर्योगद्वयमाह—

आयुर्दायमनिष्टहेतुमुदयव्योमायुरीशार्कजै-
रुक्तं तत्सकलं तथापि निधनप्राप्तिं प्रवक्ष्ये पुनः।
अल्पायुर्व्ययगेऽथवा रिपुगते पापान्विते रन्ध्रपे
लग्नेशेन युते तु तत्र विबले जातोऽल्पजीवी नरः ॥ ४८ ॥

आयुर्दायमिति। उदयव्योमायुरीशार्कजैः = लग्नेश-दशमेशा-ष्टमेश-शनैश्चरैः, आ-ऽस्यायुर्दायम्, अनिष्टहेतुं = मरणकारणं च विचारयेदिति सकलं पूर्वमुक्तम् (आयुर्दाया-ध्यायेऽरिष्टाध्याये) तथापि पुनः निधनप्राप्तिं प्रवक्ष्ये। अत्राष्टमेशाष्टमभावाभ्यामायुर्विचारो निधनविचारश्च कार्य इति तात्पर्यम्।

अल्पायुरिति। पापान्विते=पापग्रहेण सहिते रन्ध्रपे = अष्टमभावपतौ व्ययगे = द्वादशे, अथवा रिपुगते = षष्ठमुपगते जातः अल्पायुर्भवेत्। अथ तत्र = रन्ध्रपे तथाभूते विबले लग्नेशेन युते च जातो नरः अल्पजीवी भवेदिति।

Notes—यस्य भावस्याधिपतिः षडष्टव्ययगतो भवति तस्य भावस्य हानिरिति सामान्यो नियमस्तेनाष्टमभावादायुषो विचारस्य सद्भावादष्टमेशे षष्ठे व्यये वा गतेऽल्पायुरुद्ध-मिति किं चित्रम् ॥ ४८ ॥

लग्न दशम और अष्टमके स्वामी और शनिसे आयुर्दाय तथा अनिष्टका कारण पहले कहा है, तथापि फिर अष्टमभाव प्रसङ्गसे सब कहते हैं। अष्टमेश द्वादश वा षष्ठ भावमें पापग्रहसे युक्त होतो जातक अल्पायु होवे। वहीं (१२।६) पर यदि अष्टमेश बलहीन तथा लग्नेशके साथ हो तो जातक अल्पजीवी होवे ॥ ४८ ॥

स्वस्थे रन्ध्रपतौ चिरायुरुदयच्छिद्राधिपौ षष्ठगौ
रिष्फस्थौ यदि वा समेति मनुजो जातश्चिरायुर्बलम्।
व्यापारोदयरन्ध्रराशिपतयः केन्द्रत्रिकोणायगा
दीर्घायुर्विबलाः सभानुतनया यद्यल्पमायुर्वदेत् ॥ ४९ ॥

अधुना दीर्घायुर्योगानाह—स्वस्थ इति। रन्ध्रपतौ = अष्टमेशे स्वस्थे = स्वराशिस्थे (अत्र सूर्यचन्द्रान्यतरस्याष्टमेशत्वे सति स्वस्थे = अष्टमस्थे इत्येवमेव) जातश्चिरायुः = दीर्घजीवी स्यात्।

उदयच्छिद्राधिपौ = लग्नेशाष्टमेशौ, षष्ठगौ, वा रिष्फस्थौ = द्वादशगतौ यदि स्याताम् तदा जातः मनुजः चिरायुर्बलं समेति = दीर्घजीवी भवतीति।

व्यापारोदयरन्ध्रराशिपतयः = दशमेश-लग्नेश-ष्टमेशाः यथासम्भवं केन्द्रत्रिकोणाय-(१।४।७।१०।५।९।११) गाः भवेयुस्तदा जातो दीर्घायुः स्यात्।

अथाल्पायुराह—विबला इति । एत एव तथा भूता ग्रहाः सभानुतनयाः = सूर्यपुत्रेण ( शनिना ) सहिताः यदि विबलाः = निर्बला भवेयुस्तदा अल्पमायुर्वदेत् । तदानीं जातोऽल्पायुर्भवेदिति ॥ ४९ ॥

अष्टमेश अपने स्थानमें हो तो दीर्घायु हो । लग्नेश और अष्टमेश दोनों छठे भावमें हों या द्वादशमें हों तो जातक दीर्घायु होवे । दशम, लग्न और अष्टमके स्वामी केन्द्र, त्रिकोण या एकादश भावमें प्राप्त हों तो दीर्घायु हो । यदि वे शनिके साथ हों तो अल्पायु कहे ॥ ४९ ॥

कर्मेशरन्ध्रतनुपा बलशालिनश्चेज्जातश्चिरायुरिननन्दनयोगहीनाः ।
द्वावप्यतीव बलिनौ यदि मध्यमायुरेको बली लघुतरायुरनायुरन्यः ॥ ५० ॥

इदानीं दीर्घ-मध्य-लघु-हीनायुर्योगानाह—कर्मेशेति ।

चिरायुः—कर्मेशरन्ध्रतनुपाः = दशमेशाष्टमेशलग्नेशाश्चेद्यदि बलशालिनः = पूर्णबलाः ( त्रयोऽपि ) भवेयुस्तथा इननन्दनयोगहीनाः = शनैश्चरयोगरहिताश्च भवेयुस्तदा जातश्चिरायुः= दीर्घजीवी स्यात् । अत्र पूर्णबला अपि शनियोगसहिता न तावद्दीर्घायुष्कराः स्युरिति ज्ञेयम् ।

मध्यायुः—यदि तेषु ( कर्मेशाष्टमेशलग्नेशेषु ) द्वावपि कौचिदतीव बलिनौ भवेताम् तदा मध्यमायुः स्यात् ।

अल्पायुः—यदि तेषु त्रिषु कश्चिदेको बली भवेत् तदा लघुतरायुः = अतिलघ्वायुः = अल्पायुर्भवेत् ।

हीनायुः—अन्यः अनायुरर्थात् तेषु न कश्चिदपि बली स्यात् प्रत्युत लग्नेशाष्टमेशदशमेशाः निर्बला भवेयुस्तदा अनायुः = हीनायुः भवेदिति ॥ ५० ॥

दशमेश, अष्टमेश, लग्नेश बली हों और शनिका योग न हो तो जातक चिरायु होता है । इनमें दो यदि अत्यन्त बली हों तो मध्यमायु हो । एक बली हो तो अल्पायु हो यदि तीनोंमें कोई बली नहीं हो तो आयु नहीं होती है ॥ ५० ॥

रन्ध्राधिपे पापगृहोपयाते दुःस्थानगे पापयुतेऽल्पमायुः ।
शुभान्विते शोभनराशियुक्ते शुभेक्षिते रन्ध्रगते चिरायुः ॥ ५१ ॥

इदानीमल्पायुश्चिरायुर्योगावाह—रन्ध्राधिप इति स्पष्टार्थ एवेत्यलम् ॥ ५१ ॥

अष्टमेश पापगृहमें प्राप्त हो दुष्ट स्थानमें पापग्रह युत हो तो अल्पायु होवे । वही यदि शुभग्रह से युक्त शुभराशिमें हो या शुभदृष्ट अष्टममें प्राप्त हो तो चिरायु होवे ॥ ५१ ॥

नाशस्थे तनुपेऽथवा निधनपे पापेन युक्तेक्षिते
मूढेऽदृश्यगतेऽथवा रिपुगृहे जातो गतायुर्भवेत् ।
दीर्घायुर्निजतुङ्गगे शुभयुते केन्द्रत्रिकोणेऽथवा
रन्ध्रे रन्ध्रपतौ चिरायुरुदयं यातो विलग्नाधिपे ॥ ५२ ॥

नाशस्थ इति । तनुपे = लग्नेशे, अथवा निधनपे = अष्टमेशे, नाशस्थे = अष्टमभावगते, केनचित् पापेन युक्तेक्षिते = सहिते वा दृष्टे, मूढेऽदृश्यगते=सूर्येण सहादृश्यकालांशान्तर्गते परमास्तं गत इत्यर्थः, अथवा रिपुगृहे = षष्ठभावगते सति जातः गतायुः = आयूरहितः भवेन्न जीवेदित्यर्थः ।

अथ चिरायुः—तस्मिन्नेव तनुपेऽथवा निधनपे शुभयुते निजतुङ्गगे = स्वकीयोच्चंगते केन्द्रत्रिकोणे वा गतवति चिरायुः स्यात् । अथवा रन्ध्रपतौ, रन्ध्रे = अष्टमे, विलग्नाधिपे= लग्नेशे, उदयं याते = लग्नं गते जातश्चिरायुर्भवेदिति ॥ ५२ ॥

लग्नेश अष्टममें हो वा अष्टमेश पापग्रहसे युक्त या दृष्ट होकर अस्तं गत हो अथवा शत्रुगृहमें हो तो जातक आयु रहित हो । अष्टमेश अपनी उच्चराशिमें शुभग्रहयुत हो, केन्द्रत्रिकोणमें हो तो दीर्घायु हो । अथवा अष्टमेश ८ वें हो लग्नेश लग्नमें हो तो जातक चिरायु होवे ॥ ५२ ॥

लग्नादन्त्यगृहाधिपे बलवति स्वर्क्षे चिरायुः सुखी
लग्नेशो यदि रन्ध्रपश्च बलिनौ केन्द्रस्थितौ चेत्तथा ।
आधानोदयराशितोऽष्टमगृहान्मेषूरणं जन्मभं
शुक्रज्ञामरवन्दितेक्षितयुतं यद्यायुरारोग्यभाक् ॥ ५३ ॥

लग्नादिति । लग्नादन्त्यगृहाधिपे = द्वादशभावपतौ बलवति स्वर्क्षे च गतवति जातः चिरायुः सुखी च भवेत् । लग्नेशः, रन्ध्रपः = अष्टमेशश्चैतौ यदि बलिनौ केन्द्रस्थितौ च भवेताम् तदा तथा = चिरायुः सुखी च भवेदिति ।

आधानोदयराशितः = गर्भाधानकालीनलग्नात्, वा अष्टमगृहात्=जन्मकालीनाष्टमभावात् मेषूरणं=दशमभावः, अथवा जन्मभं=जन्मकालीनचन्द्रराशिः यदि शुक्रज्ञामरवन्दितेक्षितयुतं= शुक्रबुधजीवान्यतमेन दृष्टः युतो वा स्यात् तदा आयुष्मान्, आरोग्यश्च भवेदिति ॥ ५३ ॥

लग्नसे द्वादशका स्वामी अपनी राशिमें बलवान् हो तो जातक चिरायु और सुखी होवे। यदि लग्नेश और अष्टमेश बली हों, केन्द्रमें हों तो भी वही फल हो। यदि गर्भाधानकी लग्नराशिके अष्टम गृहसे दशवीं राशि, वा जन्मलग्न शुक्र-बुध-बृहस्पतिसे दृष्ट या युत हो तो जातक आयुष्मान् और आरोग्य हो ॥ ५३ ॥

## अथ मृत्युविचारः ।

रन्ध्रेशे रिपुरन्ध्ररिष्फगृहगे तत्पाकभुक्तौ मृतिं
मन्दाक्रान्तगृहेशपाकसमये रन्ध्रेशभुक्तौ तथा ॥
पाके रन्ध्रगृहाधिपस्य तदनुक्रान्तस्य भुक्तौ तु वा
खेटानां बलदुर्बलेन सकलं संचिन्त्य यत्तद्वदेत् ॥ ५४ ॥

अधुना मृत्युविचारः क्रियते—रन्ध्रेश इति ।

१. अष्टमभावपतौ रिपुरन्ध्ररिष्फगृहगे = षष्ठाष्टमद्वादशान्यतमभावगते सति तत्पाकभुक्तौ = अष्टमेशदशान्तर्दशाकाले मृतिं = जातकस्य मरणं वदेत् ।

२. मन्दाक्रान्तगृहेशपाकसमये = जन्मकाले शनिर्यस्मिन् राशौ भवेत्तद्राशीशग्रह-दशायाम्, रन्ध्रेशभुक्तौ=अष्टमेशान्तर्दशाकाले, तथा = जातस्य मृतिं वदेदिति ।

३. अथवा रन्ध्रगृहाधिपस्य = अष्टमभावपतेः, पाके = दशायाम्, तदनुक्रान्तस्य = अष्टमभावपतेः सङ्गतस्य ग्रहस्य, भुक्तौ = अन्तर्दशाकाले जातस्य मृतिं वदेत् ।

अत्रोक्तयोगत्रये खेटानां = मरणयोगकर्तृग्रहाणां बलदुर्बलेन ( बलाबलविचारणपूर्वकम् ) सकलं, सञ्चिन्त्य = विविच्य, यत् = यद्ग्रहदशायां सम्भवः स्यात्तद्ग्रहदशान्तर्दशाकाले तन्मरणं वदेदिति ॥ ५४ ॥

अष्टमेश, षष्ठ, अष्टम, द्वादश गृहमें हो तो उसकी दशाभुक्तिमें मृत्यु हो। शनि जिस गृहमें हो उस गृहके स्वामीकी दशामें रन्ध्रेशकी भुक्ति ( अन्तर्दशा ) में मृत्यु हो। वा अष्टमेश की दशामें अष्टमस्थ ग्रहकी अन्तर्दशामें मृत्यु हो। यहां ग्रहोंके बलाबलसे सब विचार कर फल कहे ॥ ५४ ॥

लग्नेशो निधनारिरिष्फगृहगे साह्नौ सकेतौ तु वा
होरारन्ध्रपसंयुतग्रहदशा जातस्य मृत्युप्रदा ॥
तत्खेटान्वितराशिनायकदशा नाशप्रदा देहिनां
खेटानां प्रथमागतस्य फणिनः पाकापहारे क्रमात् ॥ ५५ ॥

लग्नेश इति । साह्नौ = राहुणा सहिते, वा सकेतौ = केतुयुक्ते लग्नेशे निधनारि—रिष्फगृहगे = अष्टम–षष्ठ–व्ययान्यतमभावमुपगते सति होरारन्ध्रपसंयुतग्रहदशा = लग्नेशाष्टमेशान्यतरेण सहितस्य ग्रहस्य दशा जातस्य मृत्युप्रदा भवति ।

अथ यदि लग्नेशेनाष्टमेशेन वा न कश्चिद् ग्रहः संयुतो भवेत्तदा तत्सेटान्वितराशि-नायकदशा = तेन खेटेन ( लग्नेशाष्टमेशान्यतरेण ) अन्वितो यो राशिर्यत्र लग्नेशाष्टमे-शान्यतरो ग्रहो यस्मिन् राशौ भवेदित्यर्थः, तन्नायकस्य = तद्राशीशग्रहस्य दशा देहिनां = अनिमतां नाशप्रदा = मृत्युदा भवति ।

अथोक्तग्रहदशायां कदा मरणमित्याह—खेटानामिति । योगकर्तृग्रहाणां प्रथमागत-स्य = पूर्वं प्राप्तस्य फणिनः = राहोः क्रमात् पाकापहारे = भुक्तौ मरणम् । अत्रेदं तावदवधे-यम् । मृत्युदशायां राहुप्रभृतिग्रहदशाभुक्तिर्मृत्युकर्त्री भवति, न ततः पूर्वमिति ॥ ५५ ॥

**लग्नेश अष्टम, षष्ठ या द्वादश गृहमें हो, राहुके साथ वा केतुके साथ हो तो लग्नेश या अष्टमेशसे संयुत ग्रहकी दशा मृत्यु देनेवाली हो । यदि लग्नेश या अष्टमेशके साथ ग्रह न हो तो उससे युक्त राशिके स्वामी की दशा मनुष्योंको नाश करने वाली होती है । पूर्वोक्त ग्रहों में क्रमसे पहले राहु की अन्तर्दशा प्राप्त होने पर मृत्यु कहे ॥ ५५ ॥**

व्यापाररन्ध्रतनुनाथशनैश्चराणां मध्ये विधुन्तुदयुतो विबलग्रहो यः ।
तत्पाकभुक्तिसमये मरणं नराणां तद्युक्तवीक्षकनभोगदशान्तरे वा ॥ ५६ ॥

व्यापारेति । दशमेशाष्टमेशलग्नेशशनैश्चराणां चतुर्णां मध्ये यो ग्रहो विबलो विधुन्तु-दयुतः = राहुयुतो भवेत् तस्य ग्रहस्य पाकभुक्तिसमये, अथवा तद्युक्तस्य ग्रहस्य, तद्वीक्षकस्य ग्रहस्य वा दशान्तरे नराणां मरणं वाच्यम् ॥ ५६ ॥

**दशमेश, अष्टमेश, लग्नेश और शनिके मध्यमें राहुयुत और बलरहित जो ग्रह हो उस की दशा भुक्तिमें मनुष्योंका मरण होता है । वा उसके साथी या दर्शी ग्रहकी अन्तर्दशा में मृत्यु होती है ॥ ५६ ॥**

नाशे नाशपतौ तु तद्ग्रहदशाभुक्तौ समेत्यामयं
लग्ने लग्नपतौ तु लग्नपदशाभुक्तौ शरीरार्तिभाक् ॥
पश्चादामयनाशनं तनुसुखं मोदश्च सञ्जायते
रन्ध्रेशे बलसंयुते तनुपतेर्दाये मृतिर्देहिनाम् ॥ ५७ ॥

नाश इति । नाशपतौ = अष्टमभावेशे, नाशे = अष्टमभावगते तु तद्ग्रहदशाभुक्तौ= अष्टमेशग्रहदशान्तर्दशाकाले जातः आमयं = रोगं समेति = प्राप्नोति, रोगी भवेदित्यर्थः । लग्नपतौ लग्ने गते तु जातः लग्नपदशाभुक्तौ = लग्नेशग्रहदशान्तर्दशाकाले, शरीरार्ति-भाक् = शरीरक्लेशयुक्तः ( रुग्णः ) स्यादिति ।

अथात्र लग्नेशाष्टमेशग्रहयोर्मध्ये रन्ध्रेशे = अष्टमेशग्रहे, बलसंयुते = बलीयसि सति पश्चात्, आमयनाशनं = व्याधिविमुक्तिः, तनुसुखं = शरीरसुखम्, मोदश्च=हर्षश्च सञ्जा-यते । तथा तनुपतेः = लग्नेशग्रहस्य, दाये=दशायाम्, देहिनां मृतिः स्यात् ॥ ५७ ॥

**अष्टमेश अष्टममें हो तो उसकी दशा भुक्ति प्राप्त होने पर रोग होता है लग्नमें लग्नेश हो तो उसकी दशाभुक्तिमें पहले शरीरमें दुःख होता है, बाद रोगका नाश होकर शरीर का सुख होता है, हर्ष होता है । यदि अष्टमेश बली हो तो लग्नेशकी दशामें मनुष्यों की मृत्यु होती है ॥ ५७ ॥**

जातस्य जन्मसमये विबले विलग्ने लग्नेशरन्ध्रपतिपाकमतीव कष्टम् ।
पश्चादतीव सुखमेति विलग्ननाथे वीर्यान्विते निधनपस्य मृतिं दशायाम् ॥५८॥

जातस्येति । जन्मसमये विलग्ने विबले = बलहीने सति लग्नेशरन्ध्रपत्योः पाकं ( दशा ) जातस्यातीव कष्टं = दुःखदं भवति । तत्र विलग्ननाथे—लग्नेशे वीर्यान्विते=पूर्ण-बलयुक्ते सति पश्चादनन्तरमतीव सुखमेति । तथा निधनपस्य = अष्टमभावपतेः दशायाम् मृतिः स्यात्तस्य जातस्येति ॥ ५८ ॥

जातकके जन्म समय लग्न निर्बल हो तो लग्नेश और अष्टमेशकी दशा विशेष कष्ट देने वाली होती है। यदि लग्नेश बली हो तो वादमें विशेष सुख हो। अष्टमेशकी दशामें मृत्यु हो॥५८॥

देहेशे च विनाशपे बलयुते केन्द्रत्रिकोणस्थिते
तद्युक्तग्रहपाकभुक्तिसमये रोगापवादः फलम् ।
रन्ध्रेशस्तनुपश्च खेचरयुतौ केन्द्रत्रिकोणस्थितौ
रन्ध्रस्थानगतस्य पाकसमये मृत्युं समेति ध्रुवम् ॥ ५६ ॥

देहेश इति । देहेशे = लग्नस्वामिनि, च = अथवा विनाशपे=अष्टमेशे बलयुते केन्द्र-त्रिकोणस्थिते च सति तद्युक्तग्रहपाकभुक्तिसमये = तथाभूतेन लग्नेशाष्टमेशान्यतरेण युक्तस्य ग्रहस्य पाकभुक्तिकाले रोगापवादः = व्याधिभयम् फलं प्राप्नुयाज्जातक इति ।

रन्ध्रेशः = अष्टमेशः, तनुपः=लग्नेशश्चैतौ, खेचरयुतौ=येन केनचिद् ग्रहेण युक्तौ, केन्द्र-त्रिकोणस्थितौ च भवेतां तदा रन्ध्रस्थानगतस्य=अष्टमभावस्थितस्य ग्रहस्य पाकसमये जातो ध्रुवम् = अवश्यमेव मृत्युं समेति = प्राप्नोति ॥ ५६ ॥

लग्नेश तथा अष्टमेश बलवान् हों केन्द्र या त्रिकोणमें स्थित हों तो उससे युक्त ग्रहकी दशाभुक्तिमें रोग और अपवाद फल होता है। अष्टमेश तथा लग्नेश दोनों किसी भी ग्रह से युक्त तथा केन्द्र, त्रिकोणमें हो तो अष्टम स्थानमें स्थित ग्रहकी दशामें निश्चय मृत्युको प्राप्त होता है ॥ ५९ ॥

नो चेदष्टमखेचरौ यदि तनुप्राप्तेन सञ्चिन्तये-
न्मन्दे लग्नगतेऽथवाऽष्टमगते तत्पाकभुक्तौ मृतिः ।
रन्ध्रेशोदयनायकौ सखचरौ युक्तग्रहो दुर्बलो
यस्तस्य द्युचरस्य पाकसमये भुक्तौ च मृत्युं वदेत् ॥ ६० ॥

नो चेदिति । पूर्वश्लोके (५९) यदुक्तं 'रन्ध्रस्थानगतस्य पाकसमये मृत्युं समेति ध्रुवम्' तत्र रन्ध्रे ग्रहाभावे सति तनुप्राप्तेन=लग्नगतेन ग्रहेणार्थाल्लग्नगतग्रहस्य पाकसमये मृत्युं सञ्चिन्तयेदिति ।

अथ मन्दे=शनैश्चरे लग्नगते, अथवा अष्टमगते सति तत्पाकभुक्तौ = शनिदशान्त-र्दशायाम् जातस्य मृतिः स्यात् ।

अपि च रन्ध्रेशोदयनायकौ = अष्टमेशलग्नेशौ सखचरौ = केनचित्स्वेतरग्रहेण सहितौ भवेतां तदा तत्र यो ग्रहो दुर्बलो युक्तस्तस्य ग्रहस्य पाकसमये तस्यैव भुक्तौ च जातस्य मृत्युं वदेदिति ॥ ६० ॥

यदि ऐसा (८ वें में ग्रह) न हो तो लग्नमें प्राप्त ग्रहसे विचारे। शनि लग्नमें वा अष्टममें हो तो उसकी दशा भुक्तिमें मृत्यु हो। अष्टमेश और लग्नेश जिस ग्रहसे युक्त हो वह युक्त ग्रहकी दशा और भुक्तिमें मरण कहे ॥ ६० ॥

इदानीं मारकग्रहदशाभुक्तौ कदा मरणं स्यादित्याह—

लग्नात्पञ्चमराशिपेन सहितव्योमाटनानां दशा-
संख्याभानुहृतावशेषगृहगे मृत्युं दिनेशे सति ।
पुत्रेशो न वियच्चरेण सहितः स्वाब्देन सञ्चिन्तये-
ल्लग्नेशेन युताब्दमङ्कविहृतं संक्रान्तिपूर्वं दिनम् ॥ ६१ ॥

लग्नादिति । जन्मलग्नात् पञ्चमराशिपेन = पञ्चमेशेन सहितानां, व्योमाटनानां = ग्रहाणां, दशासङ्ख्याभानुहृतावशेषगृहगे=दशासमामानानि द्वादशभिर्विभज्य शेषमिते राशौ गतवति दिनेशे = सूर्ये सति जातस्य मृत्युं वदेत् ।

अथ यदि पञ्चमेशो न केनापि वियच्चरेण=ग्रहेण सहितो भवेत्तदा स्वाब्देन=स्वदशा-

वर्षेण मृत्युं सञ्चिन्तयेत्। अर्थात्पञ्चमेशे ग्रहयोगरहिते सति तदानीं पञ्चमेशस्यैव दशावर्षमानं द्वादशभक्तं कृत्वा लब्धमिते राशौ गतवति सूर्ये मरणमिति।

अथ तत्र राशौ सूर्ये सति कस्मिन्दिने मरणमित्याह—लग्नेशेनेति। लग्नेशग्रहेण युताब्दं = सहितग्रहाणां दशावर्षमानं (तस्मिन् ग्रहयोगाभावे केवलं लग्नेशवर्षमिति) अङ्गविहृतं = त्रिशद्भक्तं (अत्र क-ट-प-य-वर्णभवैरित्यादिना अङ्गं = ३०) शेषमितं सङ्क्रान्तिपूर्वं=सूर्यस्य राशिसङ्क्रमणमारभ्य दिनं वाच्यमर्थात्तद्राशौ तद्दिने मरणं स्यादिति ॥६१॥

लग्नसे पञ्चमराशिके स्वामीसे युक्त ग्रहोंकी दशा संख्यामें १२ से भागदेने पर जो गृह हो उसमें जब सूर्य हो तो मृत्यु होवे। पञ्चमेश यदि किसी ग्रहसे युक्त न हो तो केवल अपने वर्ष (दशावर्ष) से विचारे। लग्नेशसे युत वर्षमें ३० का भाग देने पर जो हो उतने दिन संक्रान्तिसे मृत्युके होते हैं ॥ ६१ ॥

इदानीं मात्रा पित्रा च सह मृत्युयोगम्, अपस्मारान्मृत्युयोगं चाह—

त्रिकोणे केन्द्रे वा यदि पितृतनुक्षेत्रपतयो
दशाभुक्तौ तेषामनुमरणमाहुर्मुनिगणाः ॥
सभौमे मन्दाढ्ये फणियुजि तु वेन्दौ निधनगे
त्वपस्मारस्तस्मान्मरणमथवेन्दौ कृशतनौ ॥ ६२ ॥

त्रिकोण इति। पितृतनुक्षेत्रपतयः = पितृ-(९) भावेशः, लग्नेशः क्षेत्रपतिः = मातृभावपतिः = चतुर्थेशः इति त्रयो ग्रहा यदि त्रिकोणे=लग्नात् ५।९ भावे, वा केन्द्रे १।४।७।१० भवेयुस्तदा तेषां मध्ये बलीयसो ग्रहस्य दशाभुक्तौ तेषामनुमरणं = सहैव मृत्यं मुनिगणाः = पूर्वे महर्षयः आहुः। तथा च सर्वार्थचिन्तामणौ—

सुखेश-भाग्येश-विलग्ननाथास्त्रिकोणगाः केन्द्रगताश्च सर्वे।
भुक्तौ यदा तत्परिपाककाले पित्रा सहैवानुमृतिश्च मातुः ॥

अथ सभौमे = मङ्गलयुक्ते वा मन्दाढ्ये = शनियुक्ते, वा फणियुजि = राहुयुक्ते, इन्दौ= चन्द्रे, निधनगे = अष्टममुपगते तु जातस्यापस्मारः = मृगी रोगः स्यात्। अथवा कृशतनौ= क्षीणज्योतिषि (नष्टबले) इन्दौ = चन्द्रे पूर्वोक्तलक्षणे सति तस्यापस्मारान्मरणं स्यादिति। तथा हि सर्वार्थचिन्तामणौ—

रन्ध्रे शशाङ्के फणिनाथयुक्ते हीने त्वपस्मारयुतः समन्दे।
तत्र स्थिते हीनबले शशाङ्के पिशाचपीडा जलजा च पीडा ॥
भौमाहिमन्दान्यतमेन युक्ते क्षीणे शशाङ्के निधनस्थितेऽपि।
दुःस्थे त्वपस्मारभयान्मृतिः स्यात् पिशाचपीडा त्वथवा मृतिः स्यात् ॥६२॥

नवमेश, लग्नेश और चतुर्थेश त्रिकोणमें वा केन्द्रमें हों तो उनकी दशाभुक्तिमें मुनिगण अनुमरण उनका (माता पिताका) कहे हैं। यदि चन्द्रमा-मंगल वा शनि वा राहुके साथ अष्टममें हो वा चन्द्रमा निर्बल हो तो मृगी रोगसे मृत्यु होवे ॥ ६२ ॥

चन्द्रे वित्तगतेऽथवा निधनगे जातो बहुस्वेदवान्
कर्मस्थानगते कुजे बुधयुते दुर्गन्धदेहो भवेत्।
पापे रन्ध्रगते तु पापसहिते रोगप्रमादाकरः
सौम्यव्योमगृहेऽतिशोभनयुते जातः समोदः सुखी ॥ ६३ ॥

स्पष्टार्थ एवेत्यलम् ॥ ६३ ॥

चन्द्रमा द्वितीय भावमें अथवा अष्टममें हो तो जातक बहुत स्वेद (पसीना) वाला हो। दशममें मंगल बुधसे युक्त हो तो दुर्गन्ध देह हो। अष्टममें पापग्रह पापयुक्त हो तो

बहुत रोग हो। बुध दशम गृहमें हो और अत्यन्त शुभग्रहसे युक्त हो तो जातक हर्ष युत तथा सुखी हो ॥ ६३ ॥

शीर्षोदयेषु चरभादिषु वित्तपस्य लग्नाधिपस्य भुजगस्य दशापहारे।
पृष्ठोदये सति तदीयदृगाणपस्य तद्वीक्षितादिसहितस्य मृतिं वदेद्वा ॥ ६४ ॥

इदानीं लग्ने चरादिराशिवशान्मृत्युविचारमाह—शीर्षोदयेष्विति। शीर्षोदयेषु राशिषु (१ अ० १४ श्लो० द्र०) लग्नगतेषु चरभादिषु=चरस्थिरद्वन्द्वराशिषु क्रमेण—वित्तपस्य=धनेशस्य, लग्नाधिपस्य, भुजगस्य = राहोः दशापहारे मृतिं वदेत्। एतदुक्तं भवति। मिथुन-सिंह-कन्या-तुला-वृश्चिक-कुम्भानां मध्ये तुला-लग्ने द्वितीयस्य दशापहारे, सिंह-वृश्चिक-कुम्भान्यतमे लग्ने लग्नेशस्य दशापहारे, मिथुन-कन्ययोरन्यतरे लग्ने राहोर्दशापहारे जातस्य मरणं वदेत्।

अथ पृष्ठोदये = वृष-कर्क-मेष-धनुः-मकरान्यतमे (१ अ. श्लो० १४ द्र०) लग्ने सति तदीयदृगाणपस्य = लग्नाश्रितद्रेष्काणपतेः, तद्वीक्षितादिसहितस्य = लग्नगतद्रेष्काणपतिद्रष्टुस्तद्युक्तस्य वा दशापहारे मृतिं वदेत्। अत्रापि त्रैविध्यमुक्तं, तच्चरादिराशिपरमेवार्थात् मेषकर्कमकरान्यतमे लग्ने—लग्नद्रेष्काणपतेर्दशापहारे, वृषलग्ने—लग्नद्रेष्काणपतिद्रष्टुर्दशापहारे, धनुर्लग्ने—लग्नद्रेष्काणपतिसहितस्य दशापहारे जातस्य मरणं वाच्यम्।

Notes—अत्र लग्नद्रेष्काणपतौ ग्रहदृष्टियोगाभावे तद्द्रेष्काणपतिरेव ग्राह्य इति ॥६४॥

शीर्षोदय राशिमें, चर आदि राशिमें क्रमसे धनेशकी, लग्नेशकी और राहुकी दशामें, पृष्ठोदय राशिमें क्रमसे चरादि राशिमें उसके द्रेष्काणपति, उसके देखने वाले तथा उसमें युक्तकी दशामें मृत्यु कहे ॥ ६४ ॥

इति अष्टमभावफलविचारः।



## अथ नवमभावफलम्।

### तत्रादौ भाग्यविचारः।

अथाधुना नवमभावफलविचारः क्रियते। तत्रादौ नवमभावात्तत्कारकाच्च ( गुरोः ) विचारणीयविषयकथनपूर्वकं भाग्ययोगमाह—

भाग्यप्रभावगुरुधर्मतपःशुभानि संचिन्तयेन्नवमदेवपुरोहिताभ्याम्।
भाग्येशदेवसचिवौ शुभवर्गयातौ भाग्ये शुभग्रहयुते समुपैति भाग्यम् ॥ ६५ ॥

भाग्यप्रभावेत्यादि। नवमदेवपुरोहिताभ्याम् = लग्नान्नवमभावतः गुरोश्च सकाशात् भाग्यम् = दैवम् ( तकदीर ), प्रभावः = सामर्थ्यम्, गुरुः = शिक्षको दीक्षकश्च, धर्मः, तपः, शुभम् = सत्कार्याणि एतानि सञ्चिन्तयेत् = विचारयेत्। एतेषां शुभाशुभविचारो नवमभावबृहस्पतिभ्यां प्रकर्त्तव्य इति।

भाग्येशदेवसचिवौ = नवमभावेशो बृहस्पतिश्च शुभवर्गयातौ भवेताम्, भाग्ये = नवमे भावे शुभग्रहयुते सति जातो नरः भाग्यं = सदभ्युदयं, समुपैति = प्राप्नोति। अस्मिन् लक्षणे जातो भाग्यवान् भवेदित्यर्थः ॥ ६५ ॥

नवम भाव और बृहस्पतिसे भाग्य, प्रभाव, गुरु, धर्म, तप और शुभका विचार करना चाहिये।

नवमेश और बृहस्पति शुभवर्गमें हों, भाग्य भाव शुभग्रहसे युक्त हो तो जातक भाग्यवान् होता है ॥ ६५ ॥

पापारिनीचरविलुप्तकरा नभोगा भाग्यस्थिता यदि यशोधनधर्महीनाः ॥
पापोऽपि तुङ्गनिजमित्रगृहोपगश्चेद्भाग्ये तु भाग्यफलदः सततं नराणाम् ॥६६॥

पापारीति । पापग्रहाः, शत्रुगृहगताः, नीचगताः, सूर्येण सहास्तङ्गता वा नभोगाः = ग्रहाः यदि, भाग्यस्थिताः = नवमभावगताः स्युस्तदा जाताः नराः यशोधनधर्महीना भवन्ति । अथ यदि पापोऽपि = कश्चित्पापग्रहोऽपि तुङ्गगतः ( उच्चस्थः ), निजगृहगतः मित्रगृहोपगतः सन् चेद् भाग्ये=नवमभावे स्थितः स्यात्तदा तु नराणां सततं भाग्यफलदः= अभ्युदयकृदेव भवेत् । पापो वा शुभो वा कश्चिद्ग्रह उच्च-स्व-मित्रगृहगतो यद्भावगतः स्यात्तद्भावपोषक एव भवतीति प्रायः सर्वेषां सिद्धान्त एवावगम्यः ॥ ६६ ॥

यदि पापग्रह, नीचराशिस्थ ग्रह, या अस्तग्रह नववें भावमें हों तो जातक यश, धर्म और धनसे हीन हो । पापग्रह भी यदि उच्चस्थानमें, मित्रगृहमें होकर नववेंमें हो तो मनुष्य निरन्तर भाग्यवान् होता है ॥ ६६ ॥

सौम्यस्वामियुतेक्षितं नवमभं भाग्यप्रदं प्राणिनां
तद्राशीशसमेतराशिरमणो भाग्यस्य कर्त्ता भवेत् ॥
भाग्येशः परिपाचको भवति तत्पुत्रेश्वरो बोधक-
स्तुङ्गस्वर्क्षगृहोपगो यदि चिरं भाग्यं प्रकुर्वन्ति ते ॥ ६७ ॥

सौम्यस्वामीति । नवमभम् = भाग्यस्थानम् , सौम्येन = शुभग्रहेण, स्वामिना = स्वपतिना ( नवमेशेन ) युक्तमीक्षितं = दृष्टं वा भवेत्तदा प्राणिनां = जनिमताम् भाग्यप्रदम् = अभ्युदयकारकं भवेदिति ।

तदिति । तद्राशीशः भाग्यराशिपतिः ( नवमेशः ) समेतः = स्थितो यस्मिन् राशौ तद्राशिरमणः = तद्राशिपतिः=नवमेशाधिष्ठितराशिपतिर्ग्रह इत्यर्थः, स भाग्यस्य कर्त्ता भवेत् । भाग्येशाधिष्ठितराशिपतेः शुभाशुभस्थितिवशेनापि शुभाशुभभाग्यविचारः कर्त्तव्य इति भावः ।

भाग्येश इति । भग्येशो ग्रहो हि परिपाचको भवति । अर्थाद्भाग्येशदशायां भाग्योदयसम्भवः । तत्पुत्रेश्वरः=नवमभावात्पञ्चमेशोऽर्थाल्लग्नेशः, बोधकः=भाग्यज्ञापको भवति । ते सर्वे पूर्वोक्ताः ( भाग्येश–भाग्येशाधिष्ठितराशीश–भाग्यगत–लग्नेशाः ) यदि तुङ्गस्वर्क्षगताः स्युस्तदा चिरं = यावदायुः भाग्यं प्रकुर्वन्ति ॥ ६७ ॥

नवमभाग यदि अपने स्वामीसे या शुभग्रहसे युत या दृष्ट हो तो जातकका भाग्योदय करता है । भाग्येश जिस राशिमें हो उसका स्वामी भी भाग्यकारक होता है । नवमेश ग्रह भाग्यका परिपाचक और भाग्यका पञ्चमेश (लग्नेश) भाग्यबोधक होता है । ये सब ग्रह यदि अपने २ उच्च या स्वगृह की राशि में हों तो सदा भाग्यवान् बनाते हैं । सु. शा. कार ॥६७॥

भाग्यस्थे दशवर्गजोच्चभवनस्वांशस्थिते पञ्चके
भाग्यं श्रीविपुलं समेति नृपतिस्तत्स्वामियुक्तेक्षिते ॥
चत्वारो बलशालिनो नवमगा भाग्यं प्रयच्छन्ति ते
तुङ्गस्वांशगताः स्वदेशविभवं त्वन्यत्र चान्यांशगाः ॥ ६८ ॥

भाग्यस्थ इति । दशवर्गजोत्पन्नयोगे ( वैशेषिकांशे ), उच्चे, स्वभवने, स्वांशे च स्थिते पञ्चके = ग्रहाणां पञ्चके ( पञ्चप्रमिते ग्रहे ) भाग्यस्थे = नवमभावगते तस्मिन् तत्स्वामियुक्ते = नवमेशेन युक्ते वा दृष्टे सति जातो नृपतिः स्यात् , तथा श्रीविपुलं = विविधसम्पत्तिसहितं, भाग्यं समेति = प्राप्नोति ।

अथ चेद्बलशालिनः चत्वारो ग्रहास्तुङ्गस्वांशगताः सन्तो नवमगा भवेयुस्तदा ते भाग्यं, स्वदेशविभवं = स्वदेशाश्रयसम्पत्तिं, प्रयच्छन्ति = ददति । ते चेदन्यांशगाः = परनवांशगताः स्युस्तदाऽन्यत्रभवं विभवं प्रयच्छन्तीति ॥ ६८ ॥

अपने वैशेषिकांशमें, उच्चमें, स्वगृहमें, नवांशमें स्थित पांच ग्रह यदि भाग्य स्थानमें हों उनपर नवमेशकी दृष्टि या योग हो तो जातक राजा तथा अनेक सम्पत्तिसे सहित भाग्यशाली होता है।

यदि चार ग्रह बली और अपने उच्च तथा नवांशमें स्थित होकर भाग्य स्थानमें हों तो भाग्य तथा अपने २ देशमें उत्पन्न सम्पत्तियां जातकको देते हैं। यदि वे ग्रह अन्य नवांशमें हों तो अन्यत्र उत्पन्न सम्पत्ति देते हैं। सु. शा. कार ॥ ६८ ॥

अथ नवमे गुरौ ग्रहदृष्टिफलानि।

इत आरभ्य ७२ श्लोकं यावन्नवमे गुरौ ग्रहदृष्टिफलान्युच्यन्ते—

भाग्ये तत्पतिशोभनेक्षितयुते भाग्यं समेति ध्रुवं
धर्मे पापयुते भृगौ शशिनि वा जातो गुरुस्त्रीरतः ॥
दृष्टेऽर्केण गुरौ नृपः क्षितिभुवां मन्त्री बुधेनार्थवान्
शुक्रेणाश्वपतिः सुखी तु शशिना मन्देन चोष्ट्रादिभाक् ॥ ६९ ॥

भाग्य इति। भाग्ये = नवमभावे तत्पतिना=नवमेशेन, शोभनेन = शुभग्रहेण वा ईक्षिते वा युते जातो नरः ध्रुवं = निश्चयेन, भाग्यं समेति, भाग्यवान्भवेदित्यर्थः। पापग्रहेण युते भृगौ = शुक्रे, वा शशिनि = चन्द्रे, धर्मे = नवमभावे गतवति जातो नरो गुरुस्त्रीरतः = गुरुपत्न्यामासक्तो भवेत्। तथा च जातकरत्ने—

चन्द्रे सपापे यदि धर्मराशौ भृगोः सुते वा गुरुदारगामी।
धर्माधिपस्यांशपतौ तथैव युक्ते तथा तादृशदारगामी ॥

दृष्टेऽर्केणेति। गुरौ = बृहस्पतौ, अर्केण = सूर्येण दृष्टे जातो नृपो भवेत्। क्षितिभुवा = भौमेन दृष्टे गुरौ जातो मन्त्री = सचिवः ( Minister ) भवेत्। बुधेन दृष्टे गुरौ जातोऽर्थवान् भवेत्। शुक्रेण दृष्टे गुरौ जातोऽश्वपतिः = तुरङ्गधनो भवेत्। शशिना = चन्द्रेण दृष्टे गुरौ सुखी स्यात्। मन्देन = शनिना दृष्टे गुरौ जातः उष्ट्रादिभाक् = उष्ट्रप्रभृतिचतुष्पदयुक्तो भवेत्।

Notes—अत्र यदि गुरुर्भाग्यस्थः स्यात्तदा ग्रहदृष्टिफलस्याधिक्यं वक्तव्यम् ॥ ६९ ॥

यदि भाग्यस्थान ( ९ वां भाव ) अपने स्वामी वा शुभग्रहसे युत या दृष्ट हो तो जातक अवश्य भाग्यवान् होता है।

पापग्रहसे युत शुक्र या चन्द्रमा यदि भाग्य ( ९ ) स्थानमें हो तो जातक अपने गुरुकी स्त्रीमें आसक्त होवे।

नवम भावगत गुरु यदि सूर्यसे देखे जावें तो जातक राजा हो। मङ्गल गुरुको देखे तो जातक मन्त्री हो। बुध देखे तो धनी हो। शुक्र देखे तो घोड़ेवाला हो। चन्द्रमा देखे तो सुखी हो। शनि देखे तो ऊँट वगैरह चौपायोंसे युक्त हो। सु. शा. कार ॥ ६९ ॥

विद्वान् वारणगोतुरङ्गधनवानिन्द्वर्कदृष्टे गुरौ
सेनावाहनरत्नवान्नवमगे जीवे कुजार्केक्षिते ॥
विद्यावादविनोदवित्तविपुलः सूर्येन्दुजालोकिते
शुक्रादित्यनिरीक्षिते विनयवाग् जीवे तपःस्थानगे ॥ ७० ॥
मन्दादित्यनिरीक्षिते गुणनिधिः प्राज्ञो बहुग्रामवान्
जीवे चन्द्रकुजेक्षिते पृथुयशाः सेनासुखश्रीयुतः ॥
तारेशेन्दुजवीक्षिते गृहसुखश्रेष्ठार्थशय्यासनः
शुक्रेन्दुप्रविलोकिते वितनयः शूरो धनी कर्मकृत् ॥ ७१ ॥
चन्द्रादित्यसुतेक्षिते तु गुणवान् वादी विदेशं गतो-

जीवे शुक्रबुधेक्षिते नवमगे विद्याधिको जायते ॥
सर्वव्योमचरेक्षिते नरवरो राजा बहुद्रव्यवान्
सौभाग्याचरराज्यवित्तफलदाः सर्वे तपःस्थानगाः ॥ ७२ ॥

विद्वानिति । नवमगे गुरौ इन्द्वर्कदृष्टे = चन्द्रसूर्याभ्यामवलोकिते जातो विद्वान्, वारण-गोतुरङ्गधनवांश्च भवेत् । कुजार्काभ्यामीक्षिते नवमगे गुरौ जातः वाहनरत्नवान् भवेत् । अन्यत्सर्वं स्पष्टमेवेत्यलम् ।

Notes—नवमगतो गुरुः सकलग्रहनिरीक्षमाणो जातकं बहुधनयुतं राजानं करोति । तत्रापि यदि गुरुरुच्चस्थः स्वगृहादिगतो वा स्यात्तदाऽतिशयेनेति । सर्वे शुभाः भाग्यस्थाने सङ्गता निश्चलराज्यदा अर्थादेव पापा नवमे भाग्यबाधकाः स्युरित्यपि चिन्त्यम् ॥ ७०-७२ ॥

नवम भावमें स्थित गुरुको चन्द्रमा और सूर्य देखें तो जातक पण्डित तथा हाथी, गौ, घोड़े और सम्पत्तियोंसे युक्त हो । मङ्गल और सूर्य देखें तो सेना, वाहन और रत्नसे युक्त हो । सूर्य और बुधसे देखे जानेपर विद्याकी चर्चामें आनन्दित और खूब धनी हो । शुक्र और सूर्य नवमगत गुरुको देखें तो जातक अत्यन्त मधुर बोलनेवाला हो ।

नवमगत गुरुको शनि और सूर्य देखें तो जातक बहुत बड़ा गुणी, विद्वान् और अनेक गांव ( इलाके ) वाला हो । चन्द्रमा और मङ्गल देखें तो बहुत बड़ा यशस्वी, सेना-सुख-और सम्पत्तिसे पूर्ण हो । चन्द्रमा और बुध देखे तो अनेक प्रकारके गृहसुख, उत्तम धन और शय्यादि सुखोंसे युक्त हो । शुक्र और चन्द्रमा देखें तो पुत्रहीन, पराक्रमी, धनवान् और कर्मकर्त्ता हो ।

नवमगत गुरुको चन्द्रमा और शनि देखें तो जातक गुणी हो, विवादी हो और विदेश, वासी हो । बुध और शुक्र देखें तो उत्तम विद्वान् हो । यदि नवमगत गुरुको सभी ग्रह देखते हों तो मनुष्योंमें पूज्य, बहुत धनी राजा हो । सभी शुभग्रह यदि ९ वें भावमें होवें तो अचल राज्य और धन देनेवाले होते हैं । सुधाशालिनीकारः ॥ ७०-७२ ॥

## नवमे द्विग्रहयोगफलानि

इत आरभ्य ७७ श्लोकं यावन्नवमे द्विग्रहयोगफलान्युच्यन्ते—

भाग्यस्थे शशिनि प्रभाकरसुतज्ञारेक्षिते भूपति-
स्तुङ्गव्योमचरे तपःस्थलगते भूपः शुभालोकिते ।
सेन्दौ तिग्मकरे तु तत्र धनिको नेत्रामयार्त्तो भवेद्
दुःखी वादरतः कुजेन सहिते भानौ नृपालप्रियः ॥ ७३ ॥

भाग्यस्थ इति । शशिनि = चन्द्रे भाग्यस्थे, तस्मिन् प्रभाकरसुतज्ञारेक्षिते = शनिबुध-भौमैरवलोकिते जातो भूपतिः = राजा भवेत् ।

तुङ्गव्योमचरे = उच्चाश्रिते कस्मिन्नपि ग्रहे, तप.स्थलगते = नवमभावगते ( तत्र शुभ ग्रहे विशेषेणेति बोद्धव्यम् ) तस्मिन् शुभालोकिते च जातो भूपः स्यात् ।

( सू. चं. )—सेन्दौ = चन्द्रसहिते तिग्मकरे = सूर्ये, तत्र=नवमस्थे ( अमावास्याया-मित्थं सम्भाव्यते ) तु जातः धनिकः, नेत्रामयार्त्तः = चक्षूरोगपीडितश्च भवेत् ।

( सू. मं. )—कुजेन सहिते भानौ भाग्यस्थे जातो दुःखी, वादरतः = विवादप्रियः, नृपालप्रियश्च भवेदिति ॥ ७३ ॥

नवें भावमें स्थित चन्द्रमाको शनि, बुध और मंगल देखते हों तो जातक राजा हो । उच्चराशिके ग्रह नवें भावमें हो उसे शुभग्रह देखते हों तो जातक राजा हो ।

नवें भावमें चन्द्रमा और सूर्य हों तो धनी हो और नेत्ररोगी हो । मङ्गलके साथ सूर्य ९ वें में हो तो दुःखी, विवादी और राजाका प्रिय होवे ॥ ७३ ॥

भानौ सेन्दुसुते सपत्नबहुलो दुःखी रुगार्तः सदा
वागीशेन युते पितृप्रियकरो जातः स्वयं वित्तवान् ।
रोगी शुक्रयुते रवौ शनियुते रुग्णः पिता कुक्षिरुक्
चन्द्रे सावनिनन्दने तु जननीहन्ता धनत्यागवान् ॥ ७४ ॥

भानाविति । ( सू. बु. )—सेन्दुसुते = इन्दुसुतेन ( बुधेन ) सहिते, भानौ=सूर्ये भाग्ये गतवति जातः सपत्नबहुलः = शत्रुबहुलः = अनेकरिपुव्याप्तः, दुःखी, सदा रुगार्त्तः = व्याधिपीडितश्च भवेत् ।

( सू. बृ. )—वागीशेन = गुरुणा युते नवमस्थे भानौ जातः पितृप्रियकरः = स्वजनकामोदकृत्, स्वयं वित्तवान् = धनी च भवेत् ।

( सू. शु. )—शुक्रयुते रवौ भाग्ये सति रोगी स्यात् ।

( सू. श. ) शनियुते रवौ भाग्ये जातो रुग्णः = व्याधिमान्, तस्य पिता च कुक्षिरुक्= उदरामययुग् भवेत् ।

( चं. मं. ) चन्द्रे सावनिनन्दने=भौमेन सहिते चन्द्रे भाग्यगते तु जातो जननीहन्ता= मातृवधकृत्, धनत्यागवाँश्च भवेदिति ॥ ७४ ॥

सूर्य और बुध ९ वें भावमें हों तो जातकके बहुत शत्रु हों । स्वयं सदा दुःखी और रोगसे पीड़ित रहे । सूर्य गुरुके साथ ९ वेंमें हो तो जातक पिताका आज्ञाकारी और धनी होवे । सूर्य शुक्रके साथ हो तो जातक रोगी हो । शनिसे युक्त हो तो जातक रोगी हो और उसका पिता उदरव्याधिसे युक्त हो ।

यदि मङ्गल और चन्द्रमा ९ वें भावमें हो तो जातक माताका नाश करे और धनका भी त्याग करे ॥ ७४ ॥

वाग्मी शास्त्रकलापवान् नवमगे चन्द्रे सतारासुते
सेन्दौ मन्त्रिणि धीरधीर्नरवरः श्रीमान् गुरुस्थानगे ।
तारेशे कुलटापतिः सभृगुजे सापत्नमातृप्रिय-
श्चन्द्रे मन्दयुते विधर्मगुणवान् माता कुलप्रच्युता ॥ ७५ ॥

वाग्मीति । ( चं० बु० )—सतारासुते = तारासुतेन ( बुधेन ) सहिते चन्द्रे नवमगे सति जातो नरः वाग्मी = वाक्चतुरः, शास्त्रकलापवान् = विविधशास्त्रज्ञो भवेत् ।

( चं० बृ० ) सेन्दौ = चन्द्रयुक्ते, मन्त्रिणि=गुरौ, गुरुस्थानगे=नवमगे, जातः श्रीमान्, धीरधीः = प्रशस्तबुद्धिः, नरवरः = पुरुषश्रेष्ठश्च भवेदिति ।

( चं० शु० )—सभृगुजे शुक्रेण सहिते, तारेशे = चन्द्रे नवमगे जातः, कुलटापतिः = पुंश्चलीस्त्रीस्वामी, सापत्नमातृप्रियः = विमातुः स्नेहकृच्च भवेत् ।

( चं० श० )—मन्दयुते = शनिसहिते चन्द्रे भाग्यगते जातो विधर्मगुणवान् भवेत्, तस्य माता च कुलप्रच्युता = कुलाद् बहिष्कृता भवेदिति ॥ ७५ ॥

यदि चन्द्रमा बुधके साथ नववें भावमें हो तो जातक बोलनेमें चतुर और अनेक शास्त्रों का ज्ञाता हो । चन्द्रमा और गुरु नववें हों तो जातक धीर बुद्धि, पुरुषश्रेष्ठ और श्रीमान् हो । नववें चन्द्रमा शुक्रसे युक्त हो तो कुल्टा स्त्रीका पति हो और सौतेली माताका प्रिय हो । नववें चन्द्रमा शनिसे युक्त हो तो जातक निन्दित गुणोंसे युत हो और उसकी माता कुलसे बाहर हो जाय ॥ ७९ ॥

शास्त्री भोगसुखी कुजे बुधयुते सेज्ये धनी पूजितः
शुक्रेण स्त्रिवधूपतिः सहकुजे वादी विदेशं गतः ।
भौमे भानुसुतान्विते नवमगे पापी परस्त्रीरतः
सौम्ये सामरवन्दिते पटुमतिर्विद्वान् धनी पण्डितः ॥ ७६ ॥

शास्त्रीति । ( मं० बु० )—बुधयुते, कुजे = मङ्गले नवमगे जातः शास्त्री = शास्त्राध्ययनाध्यापनकृद्भवेत् ।

( मं० बृ० )—ईड्ये = इज्येन ( गुरुणा ) सहिते कुजे नवमगे जातो धनी, लोकैः पूजितः = मान्यश्च भवेत् ।

( मं० शु० )—शुक्रेण सह कुजे नवमगे जातो द्विवधूपतिः = द्विदारः, वादी, विदेशं गतश्च भवेत् ।

( मं० श० )—भानुसुतान्विते = शनिसंयुक्ते भौमे नवमगे जातो हि पापी, परस्त्रीरतश्च भवेत् ।

( बु० बृ० )—सामरवन्दिते = अमरवन्दितेन ( गुरुणा ) सहिते, सौम्ये = बुधे नवमगे सति जातः पटुमतिः = चतुरबुद्धिः, विद्वान्, धनी, पण्डितः = सदसद्वस्तुविवेकबुद्धिशाली च भवेदिति ॥ ७६ ॥

बुधसे युक्त नववेंमें मंगल हो तो जातक शास्त्र जाननेवाला हो, और भोगी तथा सुखी हो । मंगल बृहस्पतिसे युक्त नववेंमें हो तो धनवान् और पूज्य होता है । मंगल शुक्रसे युक्त नववेंमें हो तो दो स्त्रियोंका पति, विवादी और विदेश वासी हो । नववें भावमें मङ्गल शनिसे युक्त हो तो जातक पापी, पराई स्त्रीगामी हो । नवममें बुध गुरुके सहित हो तो चतुरबुद्धि, विद्वान् धनी और ज्ञानी होवे ॥ ७६ ॥

प्राज्ञो गीतरतिप्रियः सभृगुजे चन्द्रात्मजे पण्डितः<br>
सौम्ये मन्दयुते तु रोगितनुको वित्ताधिकोऽसत्यवाक् ।<br>
जीवे शुक्रयुते चिरायुरधिकश्रीमान् समन्दे गुरौ<br>
रोगी रत्नधनः सितेऽसितयुते भूपालतुल्यो भवेत् ॥ ७७ ॥

प्राज्ञ इति । ( बु. शु. )—सभृगुजे = शुक्रेण सहिते, चन्द्रात्मजे = बुधे भाग्य-(नवम) स्थानगते जातः पण्डितः स्यात् ।

( बु. श. )—मन्दयुते, सौम्ये = बुधे नवमगे तु जातो रोगितनुकः = रुग्णशरीरः, वित्ताधिकः = धनी, असत्यवाक् = मिथ्यावादी च भवेत् ।

( बृ. शु. )—शुक्रयुते जीवे = गुरौ नवमगते जातः, चिरायुः = दीर्घजीवी, अधिकश्रीमान् = बहुलधनश्च स्यात् ।

( बृ. श. )—समन्दे गुरौ नवमगते जातो रोगी, रत्नधनश्च भवेत् ।

( शु. श. )—सिते = शुक्रे, असितेन = शनिना युते नवमगते सति जातो भूपालतुल्यो भवेन्न तु भूपाल इति ॥ ७७ ॥

नववें भावमें बुध शुक्रसे युक्त हो तो जातक बुद्धिमान्, गीतरति प्रिय और पण्डित हो । बुध शनिसे युत नवमें भावमें हो तो रोगी, अधिक धनवान् और मिथ्यावादी हो । नववेंमें बृहस्पति शुक्रसे युक्त हो तो चिरायु और विशेष श्रीमान् हो । नवममें शनिके साथ गुरु हो तो रोगी तथा रत्नका धनी हो । नववेंमें शुक्र शनिसे युक्त हो तो राजाके सदृश हो ॥७७॥

## अथ नवमे त्रिग्रहयोगफलानि ।

इतः प्रभृति ८६ श्लोकान्तं नवमे भावे त्रिग्रहयोगफलान्युच्यन्ते—

रवीन्दुभौमा नवमोपयाता यदि क्षताङ्गः पितृमातृहीनः ।<br>
हिंस्रो विकर्मा रविचन्द्रसौम्या रवीन्दुजीवाः सुखवाहनाढ्यः ॥ ७८ ॥

रवीन्दुभौमा इति । ( सू. चं. मं. )—सूर्य-चन्द्र-कुजाः यदि नवमोपयाताः स्युः तदा जातः, क्षताङ्गः = रुग्णशरीरः, पितृमातृहीनश्च भवेत् ।

( सू. चं. बु. )—रविचन्द्रसौम्याः = सूर्यचन्द्रबुधा नवमगाश्चेत्तदा जातो हिंस्रः = हिंसाकर्मकृत्, विकर्मा = स्वकुलाचारकर्मरहितश्च भवेत् ।

(सू. चं. बृ.)—रवीन्दुजीवा यदि नवमे स्युस्तदा जातः सुखवाहनाढ्यो भवेदिति ॥७८॥

यदि नववेंमें सूर्य चन्द्र और मंगल हों तो जातकके शरीरमें क्षत ( घाव ) हो और वह माता पितासे हीन हो। नववेंमें रवि, चन्द्र और बुध हों तो हिंसा कर्म करनेवाला, कुलाचार हीन हो। नववेंमें रवि, चन्द्र और गुरु हों तो जातक सुख और वाहनसे पूर्ण हो ॥७८॥

चन्द्रार्कौ ससितौ वधूकलहकृद् राजप्रियो वित्तहा
भाग्यस्थौ रविशीतगू शनियुतौ भृत्यो विरोधी सताम्।
रव्यारौ सबुधौ तु तत्र सुभगः क्रुद्धो विवादप्रियः
सेज्यौ देवपितृप्रियः सुतवधूवित्तान्वितो जायते ॥ ७९ ॥

चन्द्रार्काविति ( सू. चं. शु. )—ससितौ = शुक्रेण सहितौ चन्द्रार्कौ भाग्यस्थौ स्यातां तदा जातो नरो वधूकलहकृत्=स्त्रीभिः सह कलहकरः, राजप्रियः, वित्तहा=धनक्षयकरश्च भवेत्।

( सू. चं. श. )—शनियुतौ रविशीतगू भाग्यस्थौ स्यातां तदा जातः भृत्यः = परेषां सेवकः, सतां = सज्जनानां विरोधी च भवेत्।

( सू. मं. बु. )—सबुधौ = बुधेन सहितौ रव्यारौ = सूर्यभौमौ, तत्र = भाग्ये भवेतां तदा जातः सुभगः = दर्शनीयशरीरः, क्रुद्धः, विवादप्रियश्च भवेत्।

( सू. मं. बृ. )—सेज्यौ = गुरुणा सहितौ सूर्यभौमौ भाग्यगतौ स्यातां तदा जातः देवपितृप्रियः, सुतवधूवित्तान्वितः = स्त्रीपुत्रधनैः सकुलश्च भवेदिति ॥ ७९ ॥

यदि ९ वें भावमें सूर्य, चन्द्रमा और शुक्र होवें तो जातक स्त्रीसे झगड़नेवाला, राजाका स्नेही और धननाश करनेवाला होता है।

सूर्य, चन्द्रमा और शनि ९ वेंमें होवें तो जातक दूसरेका नौकर और भले आदमियोंका विरोधी होता है।

सूर्य, मंगल और बुध नववें भावमें होवें तो जातक देखनेमें सुन्दर, क्रोधी और विवादप्रिय होता है।

सूर्य, मङ्गल और गुरु ९ वें में हों तो देवता और पितरोंके प्रिय, पुत्र, स्त्री और धनोंसे पूर्ण होता है ॥ ७९ ॥

सूर्यारौ ससितौ विवादनिरतः कोपी वधूदूषक-
श्छायासूनुयुतौ विबन्धुरधनो साधुः पितुर्मारकः।
धर्मस्थौ रविचन्द्रजौ गुरुयुतौ राजप्रियो वित्तवान्
साच्छौ राजसमः सभानुतनयौ पापी परस्त्रीपतिः ॥ ८० ॥

सूर्याराविति। ( सू० मं० शु० )—ससितौ = शुक्रेण सहितौ सूर्यारौ = रविमङ्गलौ भाग्यगतौ स्यातां तदा जातो विवादनिरतः, कोपी, वधूदूषकश्च भवेत्।

( सू० मं० श० )—छायासूनुयुतौ = शनिना सहितौ सूर्यभौमौ भाग्यगतौ तदा जातो विबन्धुः = बन्धुरहितः, अधनः = दरिद्रः, साधुः = सज्जनः, पितुर्मारकः ( तस्मिञ्जात एव तस्य पिता म्रियेत इत्यर्थः ) भवेत्।

( सू० बु० बृ० )—गुरुयुतौ रविचन्द्रजौ ( रविबुधगुरवः ) धर्मस्थौ भवेतां तदा जातो राजप्रियो वित्तवांश्च भवेत्।

( सू० बु० शु० )—साच्छौ = शुक्रेण सहितौ सूर्यबुधौ धर्मगतौ तदा जातो राजसमः= नृपतुल्यो भवेत्।

( सू० बु० श० )—सभानुतनयौ = शनिना सहितौ सूर्यबुधौ नवमे भवेतां तदा जातो हि पापी, परस्त्रीरतश्च स्यादिति ॥ ८० ॥

यदि सूर्य, मङ्गल और शुक्र ९ वें भावमें होवें तो जातक विवादमें निरत क्रोधी, स्त्रियोंसे झगड़ने वाला हो।

सूर्य, मङ्गल और शनि ९ वेंमें होवें तो बन्धुहीन, साधु और पितृहीन हो।

सूर्य, बुध और गुरु ९ वेंमें हों तो जातक राजाका स्नेही और धनी हो। सूर्य, बुध और शुक्र ९ वें में हों तो राजाके समान हो। सूर्य, बुध और शनि हों तो पापी और परस्त्रीगामी हो। सु० शा० कार ॥ ८० ॥

जीवार्कौ सितसंयुतौ परवधूसक्तो धनी पण्डितः।
सार्कौ जीवदिवाकरौ यदि विटस्वामी तपःस्थानगौ ॥
आदित्यासितभार्गवा नवमगा हीनो नृपैर्दण्डितो
बाल्ये तप्तमनाः सुखी च परतश्चन्द्रारशीतांशुजाः ॥ ८१ ॥

जीवार्काविति। ( सू० बृ० शु० )—जीवार्कौ = गुरुसूर्यौ, सितेन = शुक्रेण संयुतौ नवमगतौ स्यातां तदा जातः परवधूसक्तः = अन्यदाररतः, धनी पण्डितश्च भवेत्।

( सू० बृ० श० )—सार्कौ = शनिना सहितौ जीवदिवाकरौ=गुरुसूर्यौ, तपःस्थानगौ= नवमभावगतौ स्यातां तदा जातो विटस्वामी=विटानां ( धूर्तानां ) स्वामी=धूर्तराट् भवेदिति।

( सू० शु० श० )—आदित्यासितभार्गवाः = सूर्यशुक्रशनैश्चराः नवमगा भवेयुस्तदा जातो हीनो गुणादिरहितो नृपैः = राजभिर्दण्डितश्च भवेत्।

( च० मं० बु० )—चन्द्रारशीतांशुजाः = चन्द्रकुजबुधा यदि नवमगताः स्युस्तदा जातो बाल्ये = शैशवे, तप्तमनाः = दुःखितचित्तः, परतः = यौवने च सुखी भवेदिति ॥८१॥

यदि ९ वें भावमें सू० बृ० शु० हों तो जातक परस्त्रीरत, धनी और पण्डित हो। सू० बृ० श० हों तो धूर्तराज हो।

सू० शु० श० नववें भावमें होवें तो जातक निर्गुण तथा राजासे दण्डित हो। चं० मं० और बुध ९ वें भावमें होवें तो जातक बाल्यावस्थामें दुःखी और उसके बाद (युवा अवस्था) में सुखी होता है।

देवाराधनतत्परो नवमगैश्चन्द्रारवागीश्वरै-
र्जातो नष्टकलत्रवान् क्षततनुः शुक्रेन्दुभूनन्दनैः ॥
क्षुद्रो मातृहरो महीपतिसमश्चन्द्रारसूर्यात्मजै-
राचार्यो धनवान् विभुश्च रजनीनाथज्ञदेवार्चितैः ॥ ८२ ॥

देवेत्यादि। ( चं० मं० बृ० )—चन्द्रारवागीश्वरैः = चन्द्रमङ्गलबृहस्पतिभिः नवमगैः जातः देवाराधनतत्परः = देवपूजनपरायणो भवेत्।

( चं० मं० शु० )—शुक्रेन्दुभूनन्दनैः = चन्द्र-कुज-शुक्रैः नवमगैः जातः नष्टकलत्रवान् = मृतभार्यः, क्षततनुः = पीडितगात्रश्च भवेत्।

( च० मं० श० )—चन्द्रारसूर्यात्मजैः = चन्द्रकुजशनैश्चरैः नवमगैः जातः, क्षुद्रः = कृपणः, मातृहरः = जननीविनाशकः, महीपतिसमः = नृपतुल्यश्च भवेत्।

( चं० बु० बृ० )—रजनीनाथज्ञदेवार्चितैः = चन्द्रबुधगुरुभिर्नवमैः जातः आचार्यः, धनवान्, विभुश्च भवेदिति ॥ ८२ ॥

यदि चं० मं० बृ० ९ वेंमें होवें तो जातक देवताओंकी पूजामें तन्मय होता है। चं० मं० शु० ९ वेंमें हों तो स्त्रीरहित तथा रोगी होता है। चं० मं० श० ९ वें में होनेसे कृपण (कञ्जूस) और मातृहीन होता है। चं० बु० बृ० ९ वेंमें होवें तो जातक पूज्य विद्वान्, धनी और पराक्रमी होता है ॥ ८२ ॥

मातुः सपत्नीजनको विभुः स्यात् चन्द्रज्ञशुक्रा नवमोपयाताः।
पापी विवादप्रियबुद्धियुक्तो जातः सुधारश्मिबुधार्कपुत्राः ॥ ८३ ॥

मातुरिति। ( चं० बु० शु० )—चन्द्रज्ञशुक्रा यदि नवमोपयाता भवेयुस्तदा जातो

मातुः = स्वजनन्याः, सपत्नीजनकः = सापत्न्यकारको भवेत्, विभुः = समर्थश्च स्यात् ।

( चं० बु० श० )—सुधारश्मिबुधार्कपुत्राः = चन्द्रबुधशनैश्चरा यदि नवमोपगताः स्युस्तदा जातः पापी, विवादप्रियबुद्धियुक्तः = विवादशीलश्च भवेदिति ॥ ८३ ॥

**चन्द्रमा, बुध और शुक्र नववेंमें प्राप्त हों तो अपनी माताकी सपत्नी ( सौत ) उत्पन्न करावे और पराक्रमी हो । चन्द्रमा, बुध और शनि नववें हों तो जातक पापी, विवादप्रिय और बुद्धियुक्त हो ॥ ८३ ॥**

चन्द्रामरेज्यौ ससितौ महीपः सार्कात्मजौ सद्गुणकर्मशीलः ॥
मन्दज्ञशुक्रा नरपालतुल्यः कृषिक्रियावित्तपरो गुरुस्थाः ॥ ८४ ॥

चन्द्रामरेज्याविति । ( चं० बृ० शु० )—ससितौ = शुक्रसंयुतौ, चन्द्रामरेज्यौ=चन्द्रगुरू यदि नवमगतौ भवेतां तदा जातः महीपः = राजा भवेत् ।

( चं० बृ० श० )—सार्कात्मजौ = शनिना सहितौ चन्द्रगुरू नवमगौ चेत्तदा जातः सद्गुणकर्मशीलः = विहितसत्कर्मकृद्भवेत् ।

( बु. शु. श. )—मन्दज्ञशुक्राः = शनिबुधशुक्राः, गुरुस्थाः = नवमभावगताः स्युस्तदा जातः नरपालतुल्यः=राजसमः, कृषिक्रियावित्तपरः=कृषिकर्मणा धनोपार्जनशीलश्च भवेदिति ॥

**चन्द्रमा और गुरु शुक्रके सहित नववें में हों तो राजा, शनिके साथ हों तो सद्गुण कर्मशील हो। नववेंमें शनि, बुध और शुक्र हों तो राजाके तुल्य और कृषि क्रियासे धनार्जनमें तत्पर हो ॥ ८४ ॥**

राजप्रियो माण्डलिकः सजीवौ भाग्यस्थितौ भूसुतचन्द्रपुत्रौ ।
शास्त्री सशुक्रौ चपलश्च भीरुः समन्दुजौ वादपरोऽसमर्थः ॥ ८५ ॥

राजप्रिय इति । ( मं. बु. बृ. )—सजीवौ = गुरुणा सहितौ भूसुतचन्द्रपुत्रौ = मङ्गलबुधौ यदि भाग्यस्थितौ = नवमभावगतौ स्यातां तदा जातः राजप्रियः = नृपमित्रः, माण्डलिकः = मण्डलशासकः ( Ruler af a Province ) भवेत् ।

( मं. बु. शु. )—सशुक्रौ कुजबुधौ भाग्यस्थौ स्यातां तदा जातः, शास्त्री = शास्त्रवेत्ता चपलः = चञ्चलमतिः, भीरुः = भयभीतश्च भवेत् ।

( मं. बु. श. )—समन्दुजौ = शनिना सहितौ कुजबुधौ भाग्यस्थौ स्यातां तदा जातः वादपरः = विवादशीलः, असमर्थः = सर्वत्रैव कार्ये अक्षमो भवेदिति ॥ ८५ ॥

**बृहस्पतिके साथ मङ्गल और बुध भाग्य भवनमें हों तो राजाका प्रिय, प्रान्तका शासक हो । शुक्रके साथ हो तो, शास्त्रवेत्ता, चञ्चल, भीरु ( डरपोक ) हो । शनिसे युक्त हों तो विवादमें तत्पर और कार्योंमें असमर्थ हो ॥ ८५ ॥**

ख्यातो विद्वान् धर्मवान् जीवसौम्यौ धर्मस्थाने [illegible]
विद्यावाग्मी सासितौ धर्मसंस्थौ [illegible] ॥ ८६ ॥

ख्यात इति । ( बु. बृ. शु. )—जीवसौम्यौ = गुरुबुधौ [illegible] धर्मस्थाने = नवमे भावे भवेतां तदा जातः ख्यातः = [illegible], विद्वान् [illegible]

( बु. बृ. श. )—सासितौ = शनैश्चरेण सहितौ गुरुबुधौ नवमगौ स्यातां [illegible] वाग्मी = विविधविद्यासु चतुरो भवेत् ।

अथ नवमे भावे केषाञ्चित् चतुर्ग्रहाणां योगफलमाह—राजश्रीमानिति ।

( चं. बु. बृ. शु. )—जीवशुक्रज्ञचन्द्रा यदि नवमभावमुपगताः स्युस्तदा जातः राजश्रीमान् = राजलक्ष्मीयुतो भवेदिति ॥ ८६ ॥

**धर्मस्थानमें शुक्रसे युक्त बृहस्पति और बुध हों तो नामी, विद्वान् और धर्मवान् हो**

रविके साथ नववेंमें वे ही हों तो विद्या पढ़नेवाला खूब दक्ष हो। गुरु, शुक्र, बुध और चन्द्रमा ९ वें भावमें हों तो श्रीमान् राजा हो॥ ८६॥

जातः साहसविक्रमार्जितधनः सूर्यारजीवार्कजैः
शूरः सर्वगुणप्रपञ्चरसिकः शुक्रारजीवेन्दुभिः।
षट्पञ्चत्रिचतुर्वियच्चरयुते भाग्ये समेति श्रियं
राजत्वं सबुधे विबोधनगुरौ जातः समेत्यश्रियम्॥ ८७॥

जात इति। (सू. मं. बृ. श.)—सूर्यारजीवार्कजैः = सूर्य-मङ्गल-बृहस्पति-शनैश्चरैः भाग्ये = नवमे भावे गतैः जातः साहसविक्रमार्जितधनः = उद्योगेन, पराक्रमेण चोपार्जित धनयुक्तः भवेत्।

(चं. मं. बृ. शु.)—शुक्रारजीवेन्दुभिः=शुक्रमङ्गलबृहस्पतिचन्द्रैः भाग्ये स्थितैः जातः शूरः = सङ्ग्रामप्रियः, सर्वगुणप्रपञ्चरसिकः = विविधगुणविलासी च भवेत्।

अथ सामान्यतो नवमे भावे त्र्यादिग्रहयोगफलमाह—षडित्यादि। भाग्ये = नवमे भावे षट्-पञ्च-त्रि-चतुर्वियच्चरैर्युते जातः, श्रियं = विविधसम्पत्तिं, समेति = प्राप्नोति। सबुधे = बुधयुक्ते त्र्यादिग्रहे भाग्ये गते राजत्वं समेति। अथ च तस्मिंस्त्र्यादिग्रहे विबोधन-गुरौ = विगतो बोधनो गुरुश्च यस्मात्तस्मिन् (बुध-गुरु-रहिते) भाग्ये गतवति अश्रियम् = अनैश्वर्यं समेति। बुधे गुरौ वा भाग्ये गतवति भाग्यवान् भवतीति भावः। तत्रापि भाग्ये त्र्यादिग्रहयोगे बुधे गुरौ च गतवति विशेषादिति चिन्त्यम्॥ ८७॥

नवें में सूर्य, मंगल, बृहस्पति और शनि हों तो जातक साहस और पराक्रमसे धन उत्पन्न करे। शुक्र, मंगल, बृहस्पति और चन्द्रमा हों तो वीर और सर्वगुणप्रपञ्चका रसिक हो। छः, पांच, तीन या चार ग्रहसे युक्त भाग्य स्थान हो तो जातक लक्ष्मी प्राप्त करे। बुधके साथ वे ग्रह नववें हों तो राज प्राप्त हो। यदि वे ग्रह बुध या गुरुसे रहित होकर ९ वें हों तो भाग्यहीन होवे॥ ८७॥

जनयन्ति भाग्यसंस्था गुरुसौम्यविवर्जिता ग्रहाः पुरुषम्।
व्याधिप्रायमकान्तं जनहीनं बन्धनार्तमतिदीनम्॥ ८८॥

जनयन्तीति। गुरुसौम्याभ्यां = बृहस्पतिबुधाभ्यां विवर्जिताः = रहिताः ग्रहास्त्रिप्रभृतयः, भाग्यसंस्थाः = नवममुपगताः, व्याधिप्रायं=विविधरोगाक्रान्तम्, अकान्तं=कुरूपं, जनहीनं = परिवारादिरहितं, बन्धनार्तं = कारागारादिभाजम्, अतिदीनं च पुरुषं जनयन्ति = उत्पादयन्ति। अत्रेदमुक्तं भवति। नवमे भावे बुधगुरुरहिता त्र्यादयो ग्रहा न भाग्यकारका भवन्ति। किन्तु यदि केचित् त्र्यादयो ग्रहाः सबुधाः सजीवा वा भवेयुस्तदा ते भाग्यवन्तमेव जातं कुर्वन्तीति॥ ८८॥

बृहस्पति और बुधके अतिरिक्त ग्रह भाग्य स्थानमें हों तो पुरुषको प्रायः व्याधि होती है, जनसे हीन होता है, तेज हीन, बन्धनार्त और अत्यन्त दीन होता है॥ ८८॥

भाग्याधिपे विनाशस्थे नीचशत्रुखगेक्षिते।
क्रूरांशे नीचराश्यादौ भाग्यहीनो भवेन्नरः॥ ८९॥

भाग्याधिप इति। भाग्याधिपे = नवमभावेशे, विनाशस्थे = अष्टमभावमुपगते तस्मिन् नीचगतग्रहेण स्वशत्रुग्रहेण वा दृष्टे. क्रूरांशे = पापग्रहनवांशे, वा नीचराश्यादौ = स्वनीचराशौ स्वनीच-नवांशे वा विद्यमाने भाग्येशे जातो नरः भाग्यहीनः भवेदिति॥ ८९॥

भाग्याधीश अष्टममें हो उसे नीच गत या शत्रु ग्रह देखता हो, वह क्रूरांश या नीच राशि आदिमें हो तो भाग्यसे हीन मनुष्य होता है॥ ८९॥

भाग्याधिपे शुभयुते शुभग्रहनिरीक्षिते ।
तद्भावे शुभसम्बन्धे तत्कीर्तिधनभाग्यवान् ॥ ९० ॥

भाग्याधिप इति । भाग्याधिपे = नवमभावेशे शुभयुते=केनचिच्छुभग्रहेण सहिते शुभग्रहेण निरीक्षिते च तद्भावे शुभसम्बन्धे=शुभग्रहस्य सम्बन्धे ( नवमो भावः शुभग्रहराशिः, वा शुभदृष्टः, वा शुभयुक्तो भवेदित्यर्थः ) सति जातः सत्कीर्तिधनभाग्यवान् भवेदिति ॥ ९० ॥

नवमेश शुभयुक्त हो, शुभग्रहसे देखा जाता हो, उस भावमें शुभग्रहका सम्बन्ध हो तो कीर्तिमान्, धनवान् और भाग्यवान् होवे ॥ ९० ॥

सिंहासनांशे तन्नाथे लग्नेशेन निरीक्षिते ।
कर्माधिपेन संदृष्टे महादानकरो भवेत् ॥ ९१ ॥
जातः पुरोहितो वाऽपि ब्रह्मवंशसमुद्भवः ।
दानाध्यक्षोपकारी स्याद् वर्णभेदविकल्पना ॥ ९२ ॥

सिंहासनांश इति । तन्नाथे = नवमभावेशे सिंहासनांशे ( ० पृ० ७५ श्लो० ) गतवति तथाभूते लग्नेशेन, निरीक्षिते = दृष्टे, कर्माधिपेन = दशमेशेन संदृष्टे च जातो नरो महादानकरः = अतीवदानशीलो भवेदिति ।

जात इति । उक्तयोगेऽस्मिन् ब्रह्मवंशसमुद्भवः = ब्राह्मणकुलोत्पन्नो जातश्चेत्तदा पुरोहितः = याजकः भवेत् । किं वा दानाध्यक्षोपकारी = राज्ञामन्तिके दानाध्यक्षत्वमवाप्य परेषामुपकारकृद्भवेत् । अत्र वर्णभेदविकल्पना = नवमभावराशेः यो वर्गस्तदनुकूलाधिकारिता जातस्य निर्देष्टव्येति । यथा विप्रस्य पौरोहित्यम्, क्षत्रियस्य सैन्याधिपत्यम्, वैश्यस्य कोशाधिपत्यम्, शूद्रस्य दास्यमिति कर्म निर्देष्टव्यम् ॥ ९१-९२ ॥

भाग्यस्थानका स्वामी सिंहासनांशमें हो लग्नेश उसको देखता हो और दशमेश भी देखता हो तो वह जातक महादानी होवे ॥ ९१ ॥

अथवा ब्राह्मणके वंशमें उत्पन्न पुरोहित, दानाध्यक्ष, परोपकारी हो । यहाँ वर्णके भेदसे फलकी कल्पना करे ॥ ९२ ॥

गुरौ तद्भावसंयुक्ते नवांशाधिपतौ तथा ।
शुभग्रहेक्षिते वाऽपि गुरुभक्तियुतो भवेत् ॥ ९३ ॥

गुराविति । गुरौ = बृहस्पतौ तद्भावसंयुक्ते = नवमभावमुपगते, नवांशाधिपतौ = नवमगतनवांशपतिग्रहे तथा ( तद्भावसंयुक्ते ), अपि वा गुरौ शुभग्रहेक्षिते सति जातो गुरुभक्तियुतो भवेत् ॥ ९३ ॥

नववें भावमें बृहस्पति हो, नवांशाधिपति ९ वेंमें हो तथा शुभग्रहसे देखा जाता हो तो गुरुभक्तिमें युक्त होवे ॥ ९३ ॥

गुरुस्थाने सौम्ययुते गुरुवर्गसमन्विते ।
तदीशे गुरुभागस्थे गुरुभक्तिरतः सुखी ॥ ९४ ॥
गुरुशुक्रबुधांशस्थे धर्मनाथेन वीक्षिते ।
शुभग्रहाणां मध्यस्थे धर्मकृत्स नरो भवेत् ॥ ९५ ॥

गुरुस्थान इति । गुरुस्थाने = नवमे भावे, सौम्ययुते = शुभग्रहेण सहिते तस्मिन् गुरोर्वर्गेण, समन्विते च, तदीशे = नवमभावपतौ गुरुभागस्थे = गुरुनवांशगते च सति जातो गुरुभक्तिरतः = गुरुसेवापरायणः सुखी च भवेदिति ॥ ९४ ॥

गुरुशुक्रेति । तस्मिन् गुरुस्थाने गुरुशुक्रबुधांशस्थे = गुरुशुक्रबुधानामन्यतमस्य नवांशमुपगते तस्मिन् धर्मनाथेन=नवमेशेन ( स्वपतिना ) वीक्षिते = दृष्टे शुभग्रहाणां मध्यस्थे च सति स नरः=एतल्लक्षणलक्षिते काले जायमानो नरः धर्मकृद् भवेत् ॥ ९५ ॥

यदि धर्मभावमें शुभग्रह शुक्रके वर्गमें हो, नवमेश शुक्रके नवांशमें हो तो गुरु भक्तिमें रत सदा सुखी हो । गुरु, शुक्र या बुधके अंशमें नवमेशको शुभग्रह देखते हों या शुभग्रहोंके अंशमें हो तो वह सन्तुष्ट धर्म करनेवाला होवे ॥ ९४–९५ ॥

धर्मे पापे पापभाक् स्यात् तदीशे पापसंयुते ।
क्रूरषष्ट्यंशके वाऽपि धर्महीनो भवेन्नरः ॥ ९६ ॥

धर्मे पाप इति । कस्मिंश्चित् पापग्रहे धर्मे = नवमभावे गतवति जातो नरः पापभाक् = पापी भवति । तदीशे = नवमभावेशे पापसंयुते = केनापि पापेन सहिते, अपि वा क्रूरषष्ट्यंशके गतवति सति नरो धर्महीनः = पापकर्मा भवेदिति ॥ ९६ ॥

नवमेंमें पापग्रह हो तो पापी हो । धर्मेश पापग्रहसे युक्त हो वा क्रूर षष्ट्यंशमें हो तो धर्मसे हीन हो ॥ ९६ ॥

बलवति शुभनाथे केन्द्रकोणोपयाते शुभशतमुपयाति स्वामिदृष्टे विलग्ने ।
सुरगुरुनवभागत्रिंशदंशत्रिभागे दशमभवनपे वा वीतभोगस्तपस्वी ॥ ९७ ॥

बलवतीति । शुभनाथे = शुभाख्यो नवमो भावस्तन्नाथे = नवमभावपतौ, केन्द्रकोणोपयाते = लग्नात् केन्द्रं ( १।४।७।१० ) वा कोणम् ( ५।९ ) उपगते विलग्ने = जन्मलग्ने स्वामिदृष्टे = लग्नेशेनावलोकिते सति जातः शुभशतं = विविधशुभफलानि, उपयाति = प्राप्नोति । वा दशमभवनपे = दशमेशे, सुरगुरुनवभागत्रिंशदंशत्रिभागे = सुरगुरोर्बृहस्पतेर्नवमांशे त्रिंशांशे द्रेष्काणे वा व्यवस्थिते जातो वीतभोगः = त्यक्तसुखैश्वर्यसम्पत्कः, तपस्वी भवेत् । तत्रैव ( बलवति शुभनाथे केन्द्रकोणोपयाते ) दशमभवनपे गुरोः नवभागत्रिंशदंशत्रिभागान्यतममुपगते वीतभोगस्तपस्वी भवेदिति ॥ ९७ ॥

बलवान् नवमेश केन्द्र या कोणमें हो, लग्न लग्नेशसे देखा जाता हो तो सैकड़ों शुभ होवें । वा दशमेश बृहस्पतिके नवांश, या त्रिंशांश, या द्रेष्काणमें हो तो जातक भोगरहित तपस्वी हो ॥ ९७ ॥

सकलगगनवासाः स्वोच्चगा भाग्यराशौ धनकनकसमृद्धं श्रेष्ठमुत्पादयन्ति ।
यदि शुभखचरेन्द्रैस्तत्र दृष्टा नभोगा विनिहतरिपुपक्षो दिव्यदेहः सुकीर्तिः ॥ ९८ ॥

सकलगगनवासा इति । सकलगगनवासाः = पापो वा शुभः कश्चिदपि सर्व एव ग्रहः ( न खलु सर्वे सप्त ग्रहास्तेषां युगपदुच्चे स्थितेरसम्भवत्वात् ) स्वोच्चगाः, भाग्यराशौ = नवमे भावे गता भवेयुस्तदा श्रेष्ठम् = अत्युत्कृष्टम् धनकनकसमृद्धम् उत्पादयन्ति । यदि तत्र= नवमे भावे केचिदपि नभोगाः=ग्रहाः, शुभखचरेन्द्रैः शुभग्रहैः दृष्टा भवेयुस्तदा जातो विनिहतरिपुपक्षः = विशीर्णवैरिकुलः, दिव्यदेहः=सुन्दरवपुष्मान् , सुकीर्तिश्च भवेत् ।

Notes—एकस्मिन् काले सकलगगनवासाः स्वोच्चगा न जातु भवितुमर्हन्ति । स्वोच्चे ( मेषे ) गतवति सूर्ये बुधस्यापि स्वोच्चे ( कन्याराशौ ) स्थितिः सर्वथा सिद्धान्तविरुद्धेति सकलगगनवासा इत्यनेन सप्तग्रहाणां मध्ये कश्चिदपि शुभः पापो वा, सर्वोऽपि स्वतुङ्गगतो भाग्यस्थाने धनकनकसमृद्धिदो भवतीति विविच्यम् ॥ ९८ ॥

जन्मके समय सभी ग्रह अपने उच्च राशिमें, या नवम भावमें हों तो धन-सुवर्णकी अच्छी वृद्धि करते हैं । यदि शुभग्रह नवम भावगत ग्रहोंको देखते हों तो उसके शत्रुपक्षका संहार होता है और सुकीर्ति होती है ॥ ९८ ॥

तातेशतत्कारकखेचरेन्द्रौ दुःस्थौ तयोः पुत्रमुखं न दृश्यम् ।
केन्द्रत्रिकोणे यदि तौ नभोगौ वदेत्तयोः पुत्रमुखं हि दृश्यम् ॥ ९९ ॥

तातेशेति । तातेशः पितृभावेशः, तत्कारकः पितृकारकः तौ खेचरेन्द्रौ=ग्रहौ, दुःस्थौ= दुःस्थान-( षडष्टव्यय- ) गतौ भवेतां तदा पुत्रमुखं न दृश्यं भवेदिति । अस्मिन्नवस्थे

आत्मज सुखोत्पत्तिर्न भवतीत्यर्थः । अथ यदि तौ नवमेशौ ग्रहौ ( नवमेशपितृकारकखे-चरौ ) केन्द्रत्रिकोणे ( १।४।७।१०।५।९ ) भवेतां तदा तयोः ग्रहयोः पुत्रकृतं हितं-त्वेन हर्षं भवेदिति ॥ ९९ ॥

नवमेश और पितृ कारक ग्रह उन दोनोंके दुष्ट स्थानमें होनेसे पुत्रका सुख नहीं देखे। यदि वे दोनों ग्रह केन्द्र, कोणमें हों तो पुत्रका सुख देखे ॥ ९९ ॥

इदानीं जातस्य पितुर्मरणं दिने रात्रौ वा स्यादित्याह—

पितुर्निशायां मरणं सुखेशशुक्रेन्दवः षष्ठगता बलाढ्याः ॥
सारीश्वरास्तन्मरणं तथैव चन्द्रेण हीनास्तु दिवा मृतिः स्यात् ॥ १०० ॥

पितुरिति सुखेशशुक्रेन्दवः=चतुर्थेश-शुक्र-चन्द्राः बलाढ्याः सन्तो यदि यत्र तत्र लग्नात् षष्ठभावे व्यवस्थिताः स्युस्तदा पितुः मरणं, निशायां = रात्रौ वक्तव्यम् । अथ त एव त्रयो ग्रहाः ( सुखेशशुक्रेन्दवः ) सारीश्वराः = षष्ठेशेन सहिताः, चन्द्रेण हीनाश्च भवेयुः, अर्थात् चतुर्थेश-षष्ठेश-शुक्रास्तथैव ( बलाढ्याः षष्ठगताश्च भवेयुस्तदा तु पितुः दिवा = दिन एव, मृतिः = मरणं स्यादिति ॥ १०० ॥

चतुर्थेश, शुक्र और चन्द्रमा ६ ठे स्थानमें हों तो रात्रिमें पिताकी मृत्यु हो। यदि वहां चन्द्रमा न हो और षष्ठेशसे युक्त हो तो दिनमें पिताकी मृत्यु होवे ॥ १०० ॥

सौम्ये चराद्यभागस्थे भाग्येशे बलसंयुते ॥
गुरुशुक्रयुते दृष्टे जपध्यानसमाधिमान् ॥ १०१ ॥

सौम्य इति । सौम्ये = शुभे ( बुध इत्यर्थः ) भाग्येशे = नवमभावपतौ बलसंयुते सति चराद्यभागस्थे = चरराशिप्रथमनवांशमुपगते तस्मिन् गुरुशुक्रयुते, वा गुरुशुक्रदृष्टे जातो जप-ध्यानसमाधिमान् भवेत् । तुलामकरान्यतरलग्ने सञ्चछतेऽयं योगः ॥ १०१ ॥

शुभग्रह नवमेश बलवान् होकर चरराशिके प्रथम नवांशमें हो गुरु और शुक्रसे युत दृष्ट हो तो जप-ध्यान-समाधि वाला होवे ॥ १०१ ॥

देवलोकादिभागस्थे कर्मेशे भाग्यपेऽपि वा ।
पारावतांशके सौम्ये ब्रह्मनिष्ठापरो भवेत् ॥ १०२ ॥

देवलोकादिभागस्थ इति । कर्मेशे = दशमभावपतौ, अपि वा भाग्यपे = नवमेशे, देव-लोकादिभागस्थे ( १ अ० ४५–४७ श्लो० द्र० ) सौम्ये=कस्मिंश्चिच्छुभग्रहे पारावतांशके गतवति जातो ब्रह्मनिष्ठापरः = ब्रह्मज्ञानी भवेत् ॥ १०२ ॥

कर्मेश वा शुभ भाग्येश अपने देवलोकादि भागमें हो, वा पारावतांशमें हो तो ब्रह्मनि-ष्ठामें जातक तत्पर हो ॥ १०२ ॥

पारावतादिभागस्थे धर्मेशे गुरुसंयुते ।
लग्नेशे गुरुसंदृष्टे महादानकरो भवेत् ॥ १०३ ॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते चतुर्दशोऽध्यायः ॥१४॥

पारावतादिभागस्थ इति । धर्मेशे=नवमभावपतौ गुरुणा संयुते तथा स्वपारावतादि-भागे गतवति, लग्नेशे च गुरुसंदृष्टे सति जातो महादानकरो भवेदिति ॥ १०३ ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता ।
अध्याये शक्रतुल्ये- ( १४ ) ऽस्मिन् पूर्त्तिं भावफले गता ॥ १४ ॥

धर्मेश बृहस्पतिसे युक्त पारावतादि भागमें हो लग्नेश गुरुसे देखा जाता हो तो जातक महादानी होता है ॥ १०३ ॥

इति जातकपारिजाते चतुर्दशे भावफलाध्याये 'विमला' हिन्दी टीका समाप्ता ॥ १४ ॥

# अथ दशमैकादशद्वादशभावफलाध्यायः ॥ १५ ॥

## तत्र दशमभावफलम् ।

अथाधुना पञ्चदशाध्यायो व्याख्यायते । अस्मिन्नध्याये कर्मायव्ययभावानां फलानि निर्दिष्टानि । तत्र प्रथमं दशमभावफलं विवक्षुर्दशमभावे विचारणीयविषयानाह—

आज्ञामानविभूषणानि वसनव्यापारनिद्राकृषि-
प्रव्रज्यागमकर्मजीवनयशोविज्ञानविद्याः क्रमात् ।
कर्मस्वामिदिनेशबोधनगुरुच्छायासुतैश्चिन्तये-
दुक्तानि प्रविहाय पूर्वमशुभे मानी विमानो भवेत् ॥ १ ॥

आज्ञेति । आज्ञा, मानम् , विभूषणानि, वसनम् , व्यापारः, निद्रा, कृषिः, प्रव्रज्या, आगमः, कर्म, जीवनम् , यशो विज्ञानम् , विद्या इत्येतान् विषयान् , कर्मस्वामिदिनेशबोधनगुरुच्छायासुतैः = दशमेश–सूर्य–बुध–बृहस्पति–शनैश्चरैः, क्रमात्, पूर्वम् = इतः प्रथमम्, उक्तानि, प्रविहाय = त्यक्त्वा, सञ्चिन्तयेत् = विचारयेत् । अत्र क्रमादित्यनेन कर्मस्वामिदिनेशबोधनगुरुच्छायासुतैरित्यत्र पूर्वपूर्वस्याभावे उत्तरोत्तरतो ग्राह्य इत्यर्थः । अशुभे, माने = दशमे भावे अशुभे = पापाक्रान्ते, पापदृष्टे च जातो नरः, विमानः = मानरहितः = अप्रतिष्ठः लोकैरनादृतश्च भवेदिति ॥ १ ॥

आज्ञा ( हुकूमत ), मान, भूषण, वस्त्र, व्यापार, निद्रा, कृषि, प्रव्रज्या, आगम, कर्म, जीवन, यश, विज्ञान और विद्या इन सबका विचार दशमेश, सूर्य, बुध, गुरु और शनिसे क्रमसे करे । १० वें भावमें अशुभ ग्रह हो तो मान–रहित हो ॥ १ ॥

## अथ कर्मविचारः ।

कर्मेशे बलवर्जिते चपलधीर्जातो दुराचारवान्
जीवज्ञासितभानवो विबलिनो दुःस्था विकर्मप्रदाः ।
गङ्गास्नानफलं समेति दशमे राहौ दिनेशेऽथवा
मीने कर्मणि चन्द्रजारसहिते जातः स मुक्तो भवेत् ॥ २ ॥

कर्मेश इति । कर्मेशे=दशमभावेशे, बलवर्जिते=निर्बले सति जातो नरः परः चपलधीः= अव्यवस्थितबुद्धिः, दुराचारवान्=कुत्सितकर्मकृच्च भवेत् । जीवज्ञासितभानवः = गुरु–बुध– शनि–सूर्याः विबलिनो भूत्वा यदि दुःस्थाः=दुःस्थान ( ६।८।१२ ) गताः स्युस्तदा जातस्य विकर्मप्रदाः भवेयुः । अस्मिन् योगे जातः गर्हितकर्मा भवेदिति भावः राहौ वा दिनेशे = सूर्ये दशमे सति जातो नरो गङ्गास्नानफलं, समेति = प्राप्नोति । कर्मणि = दशमे भावे, मीने = मीनराशौ सति तस्मिन् चन्द्रजारसहिते = बुधभौमाभ्यां संयुक्ते च स जातो नरः मुक्तः = निर्धूततापः = जीवन्मुक्तो भवेदिति ॥ २ ॥

कर्मेश ( दशमेश ) निर्बल हो तो जातक चञ्चल बुद्धि और दुराचारी हो । बृहस्पति, बुध, शनि और सूर्य बलरहित और दुष्टस्थानमें हों तो जातक सत्कर्महीन हो । दशवेंमें राहु वा सूर्य हो तो गङ्गास्नानका फल देता है । मीन राशि दशवेंमें हो वह बुध और मङ्गलसे युक्त हो तो जातक मुक्त हो ॥ २ ॥

मानेश्वरे शुक्रयुते च केन्द्रे तुङ्गस्थिते तादृशतोयपूतः ।
व्यये बुधे तद्भवनाधिपे वा स्वोच्चान्विते तादृशपुण्यभाक् स्यात् ॥ ३ ॥

मानेश्वर इति । शुक्रेण युते, मानेश्वरे = दशमभावपतौ केन्द्रे, वा तुङ्गस्थिते = उच्चगते सति जातः तादृशतोयपूतः = गङ्गाजले निर्मलीकृतकायो भवेत् । व्यय इति । तद्भवनाधिपे

दशमभावेशे बुधे, व्यये = द्वादशे वा स्वोच्चान्विते = स्वकीयोच्चराशिं गते सति जातः तादृश-पुण्यभाक् = कथितपुण्ययुक्तः ( जातः स मुक्तो भवेदिति ) स्यादिति ॥ ३ ॥

दशमेश शुक्रसे युक्त केन्द्रमें बैठा हो । द्वादशमें बुध हो, वा द्वादशका स्वामी वहाँ हो, उच्चराशिका हो तो उसीके सदृश पुण्यका भागी हो ॥ ३ ॥

चन्द्रे कर्मणि जाह्नवीसलिलतः पूतो हि पूतद्युतौ
पापो यच्छति कर्मगो विबलवान् द्यूतक्रियासाहसम् ।
सौम्या दुर्बलशालिनो दशमगाः सत्कर्मविध्वंसकाः
कर्मेशज्ञसुरार्चितैः क्रतुफलं सञ्चिन्त्य सम्यग्वदेत् ॥ ४ ॥

चन्द्र इति । पूतद्युतौ = विमलकिरणे = परिपूर्णबिम्बे चन्द्रे, कर्मणि=दशमभावे विलसति सति जातो नरो हि = निश्चयेन जाह्नवीसलिलतः = गङ्गाजलतः, पूतः = विधूतपापः भवेत् । पाप इति । कर्मगः = दशमभावगतः, विबलवान् = दुर्बलः पापः द्यूतक्रियासाहसम्= अक्ष-( जूआ ) क्रीडोत्कर्षं यच्छति = करोतीति । सौम्या इति । दुर्बलशालिनः=निर्बलाः, सौम्याः = शुभग्रहाः, दशमगाश्चेद्भवेयुस्तदा सत्कर्मविध्वंसकाः = तीर्थस्नानदेवयज्ञव्रतादीनां विनाशकाः भवेयुः । कर्मेशज्ञसुरार्चितैः = कर्म-( दशम ) भावेश-बुध-गुरुभिः, कर्मगैः ( दशमगैः ) क्रतुफलं = यज्ञफलं लभेत् । इति सम्यक् सञ्चिन्त्य = विविच्य, ग्रहसंस्थितिवशात् सर्वं वदेत् ॥ ४ ॥

पूर्ण चन्द्रमा दशवें भावमें हो तो जातक गङ्गाजलसे पवित्र हो । बलरहित पापग्रह दशवें में हो तो जूवा काममें साहसी हो । निर्बल शुभग्रह दशवें स्थानमें हो तो सत्कर्म का संहार कारक हो । दशमेश, बुध तथा बृहस्पति दशवेंमें हों तो जातक यज्ञकर्ता होवे । ये सब फल अच्छे प्रकारसे विचारकर कहे ॥ ४ ॥

एकस्थौ तनुकर्मपौ यदि तयोरेकाधिपत्यं तु वा
जातः स्वार्जितसद्धनेन कुरुते यज्ञादिकर्मोत्सवम् ।
सार्कौ शूद्रधनेन साहिशिखिनि क्षुद्रैः सजीवे नृप-
स्तत्तत्कारकवित्ततो यदि युते रव्यादिभिः कर्मपे ॥ ५ ॥

एकस्थाविति । तनुकर्मपौ = लग्नेश-दशमेशौ यदि, एकस्थौ = यत्र तत्रैकत्र सङ्गतौ भवेताम् , वा तयोः = लग्नकर्मभावयोः, एकाधिपत्यम् = एकस्वामित्वं भवेत्, तदा जातः, स्वार्जितसद्धनेन = निजबाहुबलादुपार्जितेन सद्द्रव्येन यज्ञादिकर्मोत्सवं कुरुते । न खलु तस्यासन्मार्गे द्रव्यापायो भवतीति ।

सार्काविति । कर्मपे = दशमेशे, सार्कौ = आर्किणा ( शनिना ) सहिते सति शूद्रधनेन यज्ञादिकर्मोत्सवं कुरुते । तस्मिन्कर्मपे, साहिशिखिनि = अहिना ( राहुणा ) शिखिना ( केतुना ) वा सहिते सति, क्षुद्रैः = क्षुद्रजातिधनैः, सजीवे = जीवेन ( गुरुणा ) सहिते कर्मपे सति नृपैः = राजन्यद्रव्यैः यज्ञादि कुरुते ।

तत्तदिति । कर्मपे रव्यादिभिः = सूर्यप्रमुखैः ग्रहैः युते सति तत्तत्कारकवित्ततः = दशमेशसंयुतो रव्याद्यन्यतमो ग्रहो यस्य भावस्य जातीयस्य वा कारको भवति तदुपार्जितद्रव्यतो यज्ञादिकर्मोत्सवं कुरुते जातक इति ।

Notes—तयोरेकाधिपत्यमित्यत्र लग्नदशमभावयोरेक एवाधिपतिस्तदैव भवेत् यदि कन्या मीनो वा राशिर्लग्नं स्याद् । कन्यालग्ने सति तस्माद्दशमो मिथुनराशिस्तेन लग्नदशमयोरेक एव बुधोऽधिपतिः । मीनलग्ने तस्माद्दशमो धनूराशिरतो लग्नदशमयोरेक एवाधिपो गुरुरिति ॥ ५ ॥

लग्नेश और दशमेश एक स्थानमें हों वा दोनों ( ११।० ) का एकाधिपत्य हो ( कन्या और मीन लग्न होनेसे लग्नेश और दशमेश एक ही सकेगा ) तो जातक स्वार्जित उत्तम धनसे यज्ञादि करे। राहु-केतुके साथ हो तो क्षुद्र जातिके धनसे और गुरुसे युक्त हो तो राजाके धनसे यज्ञादि कर्म करे। दशमेश सूर्यादि जिस ग्रहसे युक्त हो वह जिस जातिका कारक हो उस जातिके धनसे यज्ञादि होते हैं ॥ ५ ॥

बहुशुभयुजि माने वाजपेयादिसिद्धिः सितबुधयुतराशिस्वामिनौ दुर्बलाढ्यौ
यदि कृतसवनोऽपि प्राप्तकर्मप्रनष्टो भवति परमकर्मा दानवाचारशीलः ॥ ६ ॥

बह्विति। माने = दशमे भावे, बहुशुभयुजि = बहूनां शुभग्रहाणां संयोगे सति वाजपेयादिसिद्धिः = वाजपेयप्रमुखमखपूर्त्तिर्भवति जातस्येति शेषः। यदि सितबुधयुतराशिस्वामिनौ = शुक्रबुधाक्रान्तराशीशौ दुर्बलाढ्यौ = निर्बलौ भवेतां तदा कृतसवनोऽपि = सम्पादिताभिषवोऽपि ("सुत्याऽभिषवः सवनं च सा" इत्यमरः) प्राप्तकर्मप्रनष्टः = दुर्दैवविपाकादुपस्थिताध्वरेऽक्षमोऽभूत्वा परमकर्मा = उत्कृष्टकर्मकृदपि, दानवाचारशीलः = राक्षसाचरणयुक्तो भवेदिति ॥ ६ ॥

**दशममें बहुत शुभग्रह हों तो वाजपेय यज्ञ करे। यदि शुक्र तथा बुधसे युत राशिके स्वामी निर्बल हो तो यज्ञकार्य प्रारम्भ करके भी कर्म नष्ट होता है और वह परमकर्म करनेवाला भी राक्षसी स्वभाववाला होता है ॥ ६ ॥**

चन्द्रात् कर्मणि शोभने बलयुते तुङ्गादिवर्गस्थिते
वागीशेन युतेक्षिते नरवरो यज्वा यशस्वी भवेत् ॥
जीवज्ञासुरपूजितस्थितगृहाधीशा विनाशं गता
जातः सत्फलकर्मवानपि कृतां कर्मश्रियं नाप्नुयात् ॥ ७ ॥

चन्द्रादिति। बलयुते = सबले, शोभने = बुध-शुक्रयोरन्यतरे ग्रहे तुङ्गादिवर्गस्थिते सति, चन्द्रात् = जन्मकालीनचन्द्राधिष्ठितराशितः, कर्मणि = दशमे गते तस्मिन्, वागीशेन = गुरुणा, युतेक्षिते=सहिते दृष्टे वा सति जातः, नरवरः=पुरुषेषु श्रेष्ठः, यज्वा = विधिनेष्टवान् ( कृतोत्तमाध्वरः 'यज्वा तु विधिनेष्टवान्, इत्यमरः ) यशस्वी = यशोधनः = लोके लब्धप्रतिष्ठ इति भवेत्।

जीवेत्यादि। जीवः = गुरुः, ज्ञः = बुधः, असुरपूजितः = शुक्रः, एते यत्र यत्र तिष्ठन्ति तत्तद्गृहाधीशाः = राशिस्वामिनः ( गुरु-बुध-शुक्राक्रान्तराशिपतयः ) चेद् विनाशम् = अष्टमभावं गताः स्युस्तदा जातः सत्फलकर्मवान् = कृतसत्परिणामककर्मा अपि, कृतां = सम्पादितां, कर्मश्रियं=परिणामसम्पदां, नाप्नुयात्=न लभेत्। अस्मिन्योगे विधिना कर्माणि कृत्वाऽपि कर्मसाफल्यं न प्राप्नोतीति भावः ॥ ७ ॥

**चन्द्रमासे दशवेंमें बलवान् शुभग्रह उच्चादि वर्गमें हो बृहस्पतिसे युक्त वा दृष्ट हो तो मनुष्योंमें श्रेष्ठ तथा यज्ञ करनेवाला यशस्वी हो। बृहस्पति, बुध और शुक्र जहांपर स्थित हों उनके स्वामी अष्टममें हों तो जातकको सत्कर्मवान् होने पर भी किये हुए कर्मका फल ( कल्याण ) प्राप्त नहीं होता है ॥ ७ ॥**

कर्मेशज्ञसुरार्चिता बलयुता यज्ञादिसत्कर्मदाः
सौम्यव्योमचरेण वीक्षितयुतास्ते वाजपेयादिभाक्।
जीर्णोद्धारणसुख्यगोपुरतटाकारामपुण्यप्रदा
यज्वा कर्मपतौ शुभे शशियुते माने विराड्ध्वजे ॥ ८ ॥

कर्मेशेत्यादि। कर्मेशः = दशमेशः, ज्ञः = बुधः, सुरार्चितः = बृहस्पतिश्चैते यदि बलयुताः = बलशालिनः स्युस्तदा यज्ञादिसत्कर्मदा भवेयुः। ते त्रयो यदि सौम्यव्योमचरेण =

शुक्रेण, सूर्यचन्द्रेण वा वीक्षिताः, युता वा भवेयुस्तदा जातः वाजपेयादिमखम् = वाजपेय-प्रभृतियज्ञकृद्भवेत्। तथा ते ग्रहास्तस्य जातस्य जीर्णोद्धारणमुख्यगोपुरतटाकारामकृत्कराः भवन्ति। अर्थादसौ जातकः जीर्णोद्धारणम् = पुरातनस्य मठमन्दिरादेः संस्करणम्, मुख्य-गोपुरादेः = प्रसिद्धगोशालादेर्निर्माणम्, तटाकादेर्निर्माणम्, आरामादेः = उद्यानादेर्निर्माण-मित्यादि पुण्यकार्यं कुर्यादिति। यज्वेति। कर्मपतौ = दशमेशे, शुभे = शुभग्रहे, शशिना = चन्द्रेण युते, माने = दशमगते तस्मिन् निराहुध्वजे = राहुकेतुभ्यां रहिते च सति जातः, यज्वा = कृतयज्ञो भवेदिति ॥ ८ ॥

दशमेश, बुध और बृहस्पति बलवान् हों तो यज्ञादि सत्कर्मके देनेवाले होवें। यदि वे सौम्यग्रहसे दृष्ट या युत हों तो वाजपेयादि यज्ञके करानेवाले होते हैं. तथा जीर्णोद्धार प्रभृति गोशाला, तालाब, बाग आदि निर्माणका पुण्य देते हैं। यदि दशमेश शुभग्रह तथा चन्द्रमाके साथ हो और १० वेंमें राहु और केतु नहीं हो तो जातक यज्ञकर्त्ता होवे ॥ ८ ॥

उच्चस्थे शशिजेऽहिकेतुवियुते भाग्योपयातेऽथवा
कर्मस्वामिनि भाग्यगे च मनुजो यागादिसत्कर्मवान् ॥
कर्मेशे निजतुङ्गगे बुधयुते तारासुते चास्तगे
तुङ्गस्थानगते सति क्रतुफलं जातः समेति ध्रुवम् ॥ ९ ॥

उच्चस्थ इति स्पष्टार्थ एवेत्यलम् ॥ ९ ॥

बुध अपने उच्च ( कन्या ) राशिमें राहु-केतुसे रहित हो अथवा ९ वें भावमें हो और दशमेश नववेंमें हो तो मनुष्य यज्ञ आदि कर्म करनेवाला होता है। दशमेश अपनी उच्च राशिमें बुधसे युक्त हो या सप्तममें उच्चका बुध हो तो जातक निश्चय यज्ञफलको प्राप्त करे॥

कर्मस्थे शशिनन्दने सवनकृत्साहिध्वजे कर्महा
कर्मेशे रिपुरन्ध्ररिष्फगृहगे कर्मावरोधी भवेत् ॥
कर्मेशस्य बुधस्य कर्मभवने राहौ मखध्वंसक-
स्तुङ्गस्थानगतोऽपि कर्मगृहपो दुःस्थानगः कर्महा ॥ १० ॥

कर्मस्थ इति। शशिनन्दने=बुधे, कर्मस्थे=दशमभावगते सति, सवनकृत्=यज्ञार्थवस्तु-सम्पादकः भवेत्। तथाभूते शशिनन्दने, साहिध्वजे=राहुणा केतुना वा सहिते सति जातः कर्महा=यज्ञादिकर्मनाशको भवेत्। कर्मेश इति। दशमेशे, रिपुरन्ध्ररिष्फगृहगे=षष्ठाष्टमव्ययान्य-तमभावगते सति, कर्मावरोधी=अन्यस्यापि कर्तव्यस्य यज्ञादिकर्मणः निरोधकः भवेत्।

कर्मेशस्येति। कर्मेशस्य बुधस्य=दशमेशत्वविशिष्टस्य बुधस्य, कर्मभवने=दशमे स्थाने राहौ सति। अत्रेदमुक्तं भवति। दशमभावपतिः बुधो भवेत्तथा बुधो यत्र भवेत्तस्माद्दशमे स्थाने राहुर्भवेत्तदा, जातः—मखध्वंसकः = यज्ञविनाशकः स्यादिति। धनुः—कन्ययोरन्यतरे लग्ने बुधो दशमेशो भवितुमर्हतीति चिन्त्यम्।

तुङ्गस्थानगतोऽपीति। कर्मगृहपः = दशमेशः, तुङ्गस्थानगतोऽपि = स्वकीयोच्चराशि गतः अपि यदि, दुःस्थानगः=षडष्टव्ययगतः स्यात्तदा जातः, कर्महा=कर्मनाशकः भवेत्। षष्ठेऽष्टमे व्यये वा भावे दशमेश उच्चगतोऽपि जातम् कर्मविनाशकमेव करोतीति भावः ॥१०॥

बुध कर्ममें हो तो सवन ( यज्ञार्थ औषध संग्रह ) करनेवाला हो। यदि बुध राहु-केतुसे युक्त हो तो कर्मकी हानि करने वाला हो। दशमेश षष्ठ, अष्टम या द्वादशम हो तो कर्मका अवरोधी ( रोकनेवाला ) हो। 'दशमेश-बुधसे दशममें राहु हो तो वह यज्ञनाशक होवे। कर्मेश उच्चराशिगत होने पर भी यदि दुःस्थान ( ६।८।१२ ) में हो तो जातक कर्मका नाशक होवे ॥ १० ॥

व्यापारधर्मभवने शुभखेटयुक्ते तन्नाथजीवतनुपा बलशालिनश्चेत् ।
आचारधर्मगुणकर्मविधिप्रयुक्तश्रद्धापरो भवति विप्रकुलाग्रगण्यः ॥ ११ ॥

व्यापारधर्मभवन इति । व्यापारः = दशमभावः । धर्मः = नवमभावः । अन्यत्स्पष्टमेवेत्यलम् ॥ ११ ॥

दशम और नवम गृहमें शुभग्रह हों उन भावोंके स्वामी, बृहस्पति और लग्नेश बलवान् हों तो आचार-धर्म-गुण-कर्म-विधिमें प्रयुक्त और श्रद्धालु हो, तथा ब्राह्मण कुलमें मुख्य हो ॥ ११ ॥

सौम्यान्वितानि गुरुकर्मकलत्रपुत्रलग्नानि पञ्च भवनानि शुभेक्षितानि ।
तन्नायकाश्च बलिनो यदि सर्वतत्त्वविद्याधिकक्रतुसमस्तगुणप्रसिद्धः ॥ १२ ॥

सौम्यान्वितानीति । गुरु-कर्म-कलत्र-पुत्र-लग्नानि = नवम-दशम-सप्तम-पञ्चम-प्रथमेत्येतानि गृहाणि ( भावाः ) यथासम्भवं सौम्यान्वितानि = शुभग्रहसंयुक्तानि शुभेक्षितानि वा भवेयुस्तथा तन्नायकाश्च = नवमेश-दशमेश-सप्तमेश-पञ्चमेश-लग्नेशाश्च यदि बलिनः भवेयुस्तदा जातः सर्वतत्त्वविद्याधिकः, क्रतुकरः, समस्तैः गुणैः प्रसिद्धश्च भवेदिति ॥

यदि नवम, दशम, सप्तम, पंचम और लग्न ये पांच गृह शुभग्रहसे युक्त हों या शुभग्रह से दृष्ट हों और उन स्थानोंके स्वामी बलवान् हों तो सर्व तत्त्व, अधिकविद्या, सब यज्ञ आदि गुणोंसे प्रसिद्ध होवे ॥ १२ ॥

ज्ञानव्योमाधिवासास्तनुगुरुदशमस्थानपाः षड्बलाढ्या
जातः षट्शास्त्रवेत्ता निखिलनिगमविज्ज्ञानदीक्षामुपैति ।
धर्मव्यापारलग्नाधिपबुधविबुधाचार्यपाकापहारे
सत्कर्माचारसर्वक्रतुफलनिगमज्ञानविद्याकरः स्यात् ॥ १३ ॥

ज्ञानेत्यादि । ज्ञानव्योमाधिवासाः=ज्ञानञ्च व्योम च = ज्ञानव्योमनी, तेऽधिवसन्तीति = ज्ञानव्योमाधिवासाः । तत्र ज्ञानं = २।४।५। भावास्तेषु ज्ञानस्य विचारात् । व्योम = १० भावः । अत एव ज्ञानव्योमाधिवासाः = द्वितीय-चतुर्थ-पञ्चम-दशमभावगता ग्रहा यदि तनुगुरुदशमस्थानपाः=लग्न-नवम-दशमभावानामधिपाः स्युस्तथा षड्बलाढ्याः = पूर्वोक्तैः षड्बलैः सहिताः स्युः तदा जातः षट्शास्त्रवेत्ता, निखिलनिगमविद् भवति, तथा ज्ञानदीक्षां च प्राप्नोति ।

धर्मेति । धर्मव्यापारलग्नाधिपबुधविबुधाचार्याणां=नवमेश-दशमेश-लग्नेश-बुध-गुरूणाम्, पाकापहारे=दशान्तर्दशाकाले जातो नरः-सत्कर्माचारशीलः, सर्वक्रतुफलयुक्तः, सकलनिगमज्ञान-विद्याकरश्च भवेदिति ॥ १३ ॥

ज्ञानस्थान ( ५।४।२ ) तथा दशममें लग्नेश, नवमेश, दशमेश अपने षड्बलसे युक्त हों तो जातक छः शास्त्रोंका ज्ञाता, सम्पूर्णनिगमका विज्ञ हो और ज्ञानदीक्षा प्राप्त करे । उसको नवम-दशम-लग्नके स्वामी, बुध और गुरुकी दशा-अन्तर्दशामें सब सत्कर्म, आचार, सब यज्ञफल, वेदज्ञान और विद्याकी प्राप्ति हो ॥ १३ ॥

चन्द्रे तृतीये जलराशियुक्ते करोति जीर्णोद्धरणादि पुण्यम् ।
तटाककूपादिकमत्र लग्नात् कर्मेश्वरे गोपुरभागयुक्ते ॥ १४ ॥

चन्द्र इति । जलराशियुक्ते=मृगापरार्द्धान्त्यकुलीरान्यतम-( १ अ० १७ श्लो० द्र० ) राशौ गतवति चन्द्रे, तृतीये=लग्नात्तृतीयभावे व्यवस्थिते सति जातः जीर्णोद्धरणादि=पुरातनस्य जलाशयारामदेवमन्दिरादेः उद्धारः (पुनः संस्कारः) इत्यादि पुण्यं-धर्मकार्यं करोति ।

लग्नात् कर्मेश्वरे=दशमभावेशे गोपुरभागयुक्ते गोपुरादिवैशेषिकांशे गते सति, अत्र=अस्मिन्योगे जातः तटाककूपादिकं पुण्यं करोति ॥ १४ ॥

जलचर राशिका चन्द्रमा तृतीयमें हो तो जातक जीर्णोद्धार पुण्यको करे। लग्नसे दश-मेश गोपुरभागमें हो तो तालाब, कूप आदि निर्माण करनेवाला होवे ॥ १४ ॥

## अथ प्रव्रज्यायोगः।

अथातः अष्टाविंशतिभिः श्लोकैः प्रव्रज्यायोगा उच्यन्ते—

जातः पञ्चचतुर्वियच्चरवरैः केन्द्रत्रिकोणस्थितै-
रेकस्थैर्बलिभिः प्रधानबलवत्खेटाश्रमस्थो भवेत्।
आदित्यासितजीवशुक्रधरणीपुत्रेन्दुतारासुतै-
र्वानप्रस्थविवासभिक्षुचरकाः शाक्यो गुरुर्जीवकः ॥ १५ ॥
वानप्रस्थस्तपस्वी वनगिरिनिलयो नग्नशीलो विवासा
भिक्षुः स्यादेकदण्डी सततमुपनिषत्तत्त्वनिष्ठो महात्मा।
नानादेशप्रवासी चरकयतिवरः शाक्ययोगी कुशीलो
राजश्रीमान् यशस्वी गुरुरशनपरो जल्पको जीवकः स्यात् ॥ १६ ॥

इदानीं प्रव्रज्यायोगं सूर्यादिसप्तग्रहाणां पृथक् पृथक् प्रव्रज्यां प्रव्रज्यालक्षणञ्चाह—जात इति द्वाभ्याम्। पञ्चचतुर्वियच्चरवरैः = पञ्चभिश्चतुर्भिर्वा ग्रहैरेकस्थैः = सम्मिलितैर्बलिभिश्च सद्भिः, केन्द्र-त्रिकोणस्थितैः = केन्द्रे (१।४।७।१०) वा त्रिकोणे (५।९) व्यवस्थितैः। अत्रेदं किल विचिन्त्यम्। बलवन्तः पञ्च, चत्वारो वा ग्रहा एकत्र सम्मिलिताः सन्तः केन्द्रे वा कोणे स्थिता भवेयुः, तदा जातः प्रधानबलवतः = तेषु पञ्चसु चतुर्षु वा ग्रहेषु यः प्रधानबलवान् (सर्वापेक्षया बलीयान्) भवेत्तस्य खेटस्याश्रमस्थः (यस्य ग्रहस्य य आश्रमस्तदाश्रमगतः) भवेत्।

अथ ग्रहाणां प्रव्रज्याश्रममाह—आदित्येत्यादि। आदित्यासितजीवशुक्रधरणीपुत्रेन्दुतारासुतैः = सूर्य-शनि-गुरु-शुक्र-कुज-चन्द्र-बुधैः क्रमात्-वानप्रस्थ-विवासः-भिक्षु-चरक-शाक्य-गुरु-जीवकाः प्रव्रज्या ज्ञातव्याः। एवमुक्तं तत्र भवता वराहेण—

"चतुरादिभिरेकस्थैः प्रव्रज्यां स्वां ग्रहः करोति बली।
बहुवीर्यैस्तावत्यः प्रथमा वीर्याधिकस्यैव ॥
तापसवृद्धश्रावकरक्तपटाजीविभिक्षुचरकाणाम्।
निर्ग्रन्थानां चार्कात् पराजितैः प्रच्युतिर्बलिभिः" इति ॥

अथ पूर्वोक्तप्रव्रज्यानां लक्षणान्याह—वानप्रस्थेत्यादि।

वानप्रस्थः—तपस्वी, वनगिरिनिलयः = वनानि, गिरयश्च निलयो गृहं यस्येति स वानप्रस्थ उच्यते।

विवासाः—नग्नशीलः = वस्त्ररहितः (नग्नः) विवासाः कथ्यते।

भिक्षुः—एकदण्डी = एकदण्डधरः, सततमुपनिषत्तत्त्वनिष्ठः = ब्रह्मविचारणपरः, महात्मा च भिक्षुरुच्यते।

चरकः—चरकयतिवरः, नानादेशप्रवासी = विविधदेशभ्रमणशीलः भवति।

शाक्यः—शाक्ययोगी, कुशीलः = दुराचारवान् वञ्चकः भवति।

गुरुः—राजश्रीमान् = राजसम्पद्युतः, यशस्वी = कीर्तिमाँश्च भवति।

जीवकः—अशनपरः=केवलमुदरम्भरः, जल्पकः=वावदूकश्च भवति ॥ १५–१६ ॥

**बलवान् पांच या चार ग्रह केन्द्र (१।४।७।१०) या त्रिकोण (५।९) मेंसे एक स्थान में स्थित हों उनमें सबसे अधिक बलवाले ग्रहका आश्रमस्थ जातक होगा। यहां सूर्य, शनि, गुरु, शुक्र, मङ्गल, चन्द्र और बुधसे क्रमसे वानप्रस्थ, विवास (नङ्गा), भिक्षु, चरक,**

शाक्य, गुरु और जीवक प्रव्रज्या होती हैं ( सूर्यके बली होनेसे वानप्रस्थ, शनिसे नग्न, गुरुसे भिक्षुक, शुक्रसे चरक, मङ्गलसे शाक्य, चन्द्रसे गुरु और बुधसे जीवक होता है )॥१५॥

अब प्रव्रज्याओंके स्वरूप कहते हैं—वानप्रस्थ तपस्वी है, वह जंगल तथा पर्वतों पर रहता है। विवासा-हमेशा नङ्गा विनावस्त्रका रहता है। भिक्षु-एकदण्डी निरन्तर उपनिषद् के तत्वज्ञ महात्मा है। चरक-नानादेश प्रवासी यतिश्रेष्ठ है। शाक्ययोगी-कुशील होता है। गुरु-राजश्रीयुत यशस्वी है। जीवक-भोजनमें तत्पर, जल्पक ( बहुत बोलने वाला ) है॥

कर्मस्था बलिनस्त्रयो गगनगाः स्वोच्चादिवर्गस्थिताः
कर्मेशश्च बलाधिको यदि यतिस्तत्तुल्यशीलोऽथवा।
कर्मेशे बलवर्जिते गृहगृहप्राप्ते दुराचारवान्
तद्योगप्रदमध्यगौ धनमदस्थानाधिपौ कामधीः॥ १७॥

कर्मस्था इति। स्वोच्चादिवर्गस्थिताः = स्वकीयोच्च-मूलत्रिकोण-स्वराशिप्रभृतिवर्गे व्यवस्थिता बलिनस्त्रयो ग्रहा यदि कर्मस्थाः=दशमभावगता भवेयुस्तथा यदि कर्मेशः=दशमभावेशो ग्रहो बलाधिको भवेत्तदा जातः, यतिः = जितेन्द्रियः भवेत् 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः। अथवा तत्तुल्यशीलः = यतिसमस्वभावः भवेत्।

कर्मेश इति। दशमभावपतौ, बलवर्जिते = निर्बले, गृहगृहप्राप्ते = गृहात् चतुर्थभावाद् गृहं चतुर्थं ( १ अ० ५० श्लो० द्र० ) तद्गृहगृहं, तस्मिन्नर्थाल्लग्नात्सप्तमे भावे च विद्यमाने सति जातः दुराचारवान् = कुत्सितचरित्रः ( लम्पटः ) भवेत्।

तदिति। धनमदस्थानाधिपौ = द्वितीयेश-सप्तमेशौ यदि तद्योगप्रदमध्यगौ = कथितप्रव्रज्यायोगकर्तृग्रहमध्यगतौ भवेतां तदा जातः कामधीः = कामुकः भवेदिति॥ १७॥

दशवेंमें बलवान् तीन ग्रह स्वोच्चादि वर्गस्थित हों कर्मेश अधिक बलवान् यदि हो तो यति अथवा उसके समान शीलवाला हो। यदि कर्मेश बलरहित हो और ७ वें भावमें प्राप्त हो तो दुराचारी होवे। द्वितीय और सप्तमके स्वामी प्रव्रज्याकारक ग्रहोंके बीचमें हो तो वह काम-बुद्धि होता है॥ १७॥

तद्योगप्रदखेचरैरिनशनिक्षोणीकुमारान्वितैः
संन्यासं समुपैति वित्ततनयस्त्रीवर्जितो मानवः॥
सौम्यांशोपगतः सहस्रकिरणस्तुङ्गान्त्यभागस्थितं
खेटं पश्यति यौवने वयसि वा बाल्ये यतीशो भवेत्॥ १८॥

तद्योगेति। तद्योगप्रदखेचरैः = उक्तप्रव्रज्यायोगकारकैर्ग्रहैः, इनशनिक्षोणीकुमारान्वितैः= सूर्य-शनि-मङ्गलसंयुतैः सद्भिः जातो मानवः, वित्ततनयस्त्रीवर्जितः = धन-पुत्र-दाररहितः सन् संन्यासं समुपैति। सौम्यांशोपगत इति। सहस्रकिरणः = सूर्यः सौम्यांशोपगतः= शुभनवांशगतः सन् तुङ्गान्त्यभागस्थितम्=उच्चतमभागे व्यवस्थितं खेटं = ग्रहं ( यं कमपि ) पश्यति तदा जातो नरः यौवने वयसि, वा बाल्ये वयसि, यतीशः=जितेन्द्रियाग्रणीः भवेत्॥

प्रव्रज्यायोगके देनेवाले ग्रह सूर्य-शनि-मङ्गलसे युक्त हो तो मनुष्य धन, पुत्र, स्त्रीसे रहित होकर संन्यासको प्राप्त होता है। शुभनवांशमें सूर्य हो वह उच्चके अन्त भागमें स्थित ग्रह को देखता हो तो जातक युवा अवस्थामें वा बाल्यावस्थामें संन्यासी हो॥ १८॥

शुक्रेन्दुप्रविलोकिते गतबले लग्नाधिपे निर्धनो
भिक्षुः स्याद्यदि तुङ्गभांशकयुतस्तारापतिं पश्यति॥
एकर्क्षैरविलोकिते तु बहुभिर्लग्नेश्वरे दीक्षित-
स्तद्योगप्रदभावकारकदशाभुक्तौ तदीयं फलम्॥ १९॥

शुक्रेन्दिति। गतबले = अतिनिर्बले, लग्नाधिपे=जन्मलग्नेशे, शुक्रेन्दुप्रविलोकिते=शुक्र-

चन्द्राभ्यां निरीक्षिते सति जातः निर्द्धनः = दरिद्रो भवेत् । भिक्षुरिति । यदि तुङ्गांशक-युतः = स्वकीयोच्चराश्यंशकगतः कश्चिद्ग्रहः लग्नेश्वरो वा, तारापतिं = चन्द्रं पश्यति तदा जातः भिक्षुः = परिव्राट् स्यात् । एकस्थैरिति । एकस्थानगतैः बहुभिः ( त्र्यधिकैः ) ग्रहैरवलोकिते लग्नेश्वरे तु जातः दीक्षितः = दीक्षया सहितः ( प्रव्रजितः ) भवेत् । अत्रोक्तयोगेषूक्तानां फलानां पाककालमाह—तदिति । तदुक्तप्रव्रज्यायोगो यद्भावे सम्भवेत्तद्भावकारकग्रहदशाभुक्तौ तदीयमुक्तं फलं वाच्यमिति ॥ १९ ॥

शुक्र और चन्द्रमा बलहीन लग्नेशको देखते हों तो दरिद्र होवे । कोई ग्रह यदि उच्चराश्यंशमें युक्त होकर चन्द्रमाको देखता हो तो भिक्षुक ( संन्यासी ) होवे । बहुत ग्रह एक स्थानमें स्थित होकर लग्नेशको देखते हों तो दीक्षित हो । ये सब फल योगप्रद तथा भावकारककी दशा भुक्तिमें होते हैं ॥ १९ ॥

शीतांशुराशीशमिनात्मजो वा लग्नेश्वरः पश्यति दीक्षितः स्यात् ।
भौमर्क्षगे मन्दहगाणभागे मन्देक्षिते शीतकरे यतिः स्यात् ॥ २० ॥

शीतांशुराशीशमिति । शीतांशोः=चन्द्रस्य यो राशिस्तदीशम् = जन्मकालीनचन्द्राधिष्ठितराशिपतिम् , इनात्मजः = शनैश्चरः, वा लग्नेश्वरः = जन्मलग्नपतिः यदि पश्यति तदा जातः दीक्षितः = प्रव्रजितः स्यात् ।

भौमर्क्षग इति । शीतकरे = चन्द्रे, भौमर्क्षगे = मेषवृश्चिकान्यतरराशिगते, वा मन्दहगाणभागे = शनैश्चरस्य द्रेष्काणे नवांशे वा गतवति, न केवलं यावत् , मन्देक्षिते = शनिना विलोकिते सति जातः यतिः = जितेन्द्रियः परिव्राड् भवेदिति । अत्र वाराहोक्तमपि—

"जन्मेशोऽन्यैर्यद्यदृष्टोऽर्कपुत्रं पश्यत्यार्किर्जन्मपं वा बलोनम् ।

दीक्षां प्राप्नोत्यार्किदृक्काणसंस्थे भौमार्क्यंशे सौरदृष्टे च चन्द्रे" इति चिन्त्यम् ॥ २० ॥

चन्द्रमा जहां हो उस राशिपतिको शनि या लग्नेश्वर देखता हो तो दीक्षित होवे । यदि चन्द्रमा मङ्गलकी राशि में हो शनिके द्रेष्काणमें हो उसको शनि देखता हो तो संन्यासी होवे ॥ २० ॥

जीवारमन्दलग्नेषु मन्ददृष्टियुतेषु च ।
लग्नाद्धर्मगते जीवे नृपयोगेऽपि तीर्थकृत् ॥ २१ ॥

जीवारेति । गुरु–भौम–शनि–लग्नेषु, मन्ददृष्टियुतेषु = शनिनावलोकितेषु, च = पुनः लग्नाद्धर्मगते जीवे = गुरौ लग्नान्नवमभावगते सति, नृपयोगेऽपि = जातकस्य कस्मिंश्चिद्राजयोगे सत्यपि जातः, तीर्थकृत् = शास्त्रकारः भवेत् । अत्र 'जीवारमन्दलग्नेषु' इत्यत्र जीवः = गुरुः, आरः = मङ्गलः, मन्दः = शनिः, लग्नं = जन्मलग्नमेतेषु, एवं व्याख्याने शनौ शनिदृष्टेरनुपपत्तिदोषापत्तेः गुरुभौमशनीनां लग्नेषु = राशिषु ( धनुर्मीनमेषवृश्चिकमकरकुम्भेषु ) शनिनाऽवलोकितेष्वित्येवमेव व्याख्यानं सङ्गतं स्यादिति । परञ्च तदपि कर्कादिराशिचतुष्टय-[illegible] मध्ये शनावेवास्य सम्भव इत्यपि विचिन्त्यमित्यलम् ॥ २१ ॥

गुरु, मङ्गल, शनिके लग्नमें यदि शनिकी दृष्टि हो लग्नसे ९ वें भावमें बृहस्पति हों तो राज योग होने पर भी तीर्थ करनेवाला यति होवे ॥ २१ ॥

नवमस्थानगे चन्द्रे नभोगैर्नावलोकिते ।
नृपयोगेऽपि सञ्जातो दीक्षितो नृपतिर्भवेत् ॥ २२ ॥

नवमस्थानग इति । यदि चन्द्रमा लग्नान्नवमस्थानगतः न केनापि ग्रहेणावलोकितश्च भवेत्तदा नृपयोगे समुत्पन्नोऽपि दीक्षितः = प्रव्रज्यामुपगतः नृपतिः भवेत् । यथाऽधुना मण्डलेश्वरः, महान्त इत्यादिपदवाच्यः परिव्राड् भवतीति ॥ २२ ॥

नवम स्थानमें चन्द्रमाको कोई ग्रह न देखते हों तो राजयोगमें उत्पन्न हो तो भी दीक्षित राजा होवे ॥ २२ ॥

**सुरगुरुशशिहोरास्वार्किदृष्टासु धर्मे गुरुरथ नृपतीनां योगजस्तीर्थकृत् स्यात् ।**
**नवमभवनसंस्थे मन्दगेऽन्यैरदृष्टे भवति नरपयोगे दीक्षितः पार्थिवेन्द्रः ॥ २३ ॥**

सुरगुरुशशिहोरास्विति । सुरगुरुः = बृहस्पतिः, शशी = चन्द्रः, होरा = जन्मलग्नम् तासु आर्किदृष्टासु = शनिनाऽवलोकितासु, अथ = तथा, गुरुः धर्मे = नवमे भवेत्, तदा नृपतीनां योगजः = कस्मिंश्चिद्राजयोगे जायमाने जनः, तीर्थकृत्=शास्त्रकर्त्ता स्यात् । तथा च विशेषवचनम्—

गुरुशशिलग्ना दृष्टा कोणेन तु नवमगो यदि गुरुः ।
नरनाथजन्मजातः शास्त्रकरो भवति न च नृपः ॥

नवमभवनसंस्थ इति । मन्दगे = मन्दं ( स्वल्पं ) गच्छतीति मन्दगस्तस्मिन् = शनैश्चरे, अन्यैः = इतरग्रहैः, अदृष्टे = नावलोकिते तत्र नरपयोगे = कस्मिंश्चिद्राजयोगेऽपि सति जातो नरः, दीक्षितः = प्रव्रज्यामुपगतः, पार्थिवेन्द्रः = राजाधिराजः ( King of Kings ) स्यात् । अत्र राजयोगाभावे निगदितयोगे जातो नरः प्रव्रज्यामुपेयादिति । तथोक्तमपि—

"नवमस्थाने सौरो यदि स्थितः सर्वदर्शनविमुक्तः ।
नरनाथयोगजातो नृपोऽपि दीक्षान्वितो भवति ॥
नृपयोगस्याभावे योगेऽस्मिन् दीक्षितो नरो जातः ।
निःसन्दिग्धं प्रवदेद्योगस्यास्य प्रभावेण" इति ॥ २३ ॥

गुरु, चन्द्रमा और लग्न पर शनिकी दृष्टि हो और बृहस्पति नवममें हो तो राजयोगमें उत्पन्न भी तीर्थ ( शास्त्र ) करने वाला हो । नवम भवनमें शनि किसीसे देखा न जाता हो तो राजयोगमें भी दीक्षित राजेन्द्र होता है ॥ २३ ॥

| | | |
|---|---|---|
| २ / ३ | १ ल. | १२ / ११ |
| ४ चं. | १. | १० मं. |
| ५ र. / बु. ६ शु. | ७ श. | ९ बृ. / ८ |

| | | |
|---|---|---|
| ३ / ४ | २ | १ / १२बृ.चं. |
| ५ र. बु. शु. | २. | मं. ११ |
| ६ / ७ | ८ | १० श. / ९ |

इदानीं ग्रहाणां संयोगेन प्रव्रज्याभेदानाहेत आरभ्योनचत्वारिंशच्छ्लोकावधि ।

**सितार्कभौमार्कसुता महाबलाः सुरेज्यभूनन्दनभानुभानुजाः ।**
**कुजेन्दुवागीशशनैश्चरा इमे समं गताश्चेज्जनयन्ति तापसम् ॥ २४ ॥**

सितार्केति । १—सितार्कभौमार्कसुताः = शुक्र-सूर्य-कुज-शनैश्चराः । वा—
२—सुरेज्यभूनन्दनभानुजाः = गुरु-भौम-सूर्य-शनैश्चराः । वा—
३—कुजेन्दुवागीशशनैश्चराः = कुज-चन्द्र-गुरु-शनैश्चराः-

यदि महाबलाः = पूर्णबलसंयुक्ताः सन्तः समं गताः = यत्र तत्रैकत्र सम्मिलिताः स्युस्तदा तापसं = वानप्रस्थं जनयन्ति । अत्रान्यतमयोगे जातो नरस्तपस्वी भवतीत्यर्थः ॥२४॥

शुक्र, सूर्य, मंगल और शनि या बृहस्पति, मंगल, सूर्य और शनि या मंगल, चन्द्रमा बृहस्पति और शनि पूर्णबली होकर एक स्थानमें हों तो तपस्वी उत्पन्न करते हैं ( इन तीनों योगोंमें उत्पन्न जातक तपस्वी होता है ) ॥ २४ ॥

ग्रहैश्चतुर्भिः सहिते तदीशे केन्द्रत्रिकोणोपगतैस्तु मुक्तः।
चतुर्ग्रहैः कर्मगतैः प्रव्रज्यां प्राप्नोति जातः कथितो मुनीन्द्रैः ॥ २५ ॥

ग्रहैरिति। तदीशे = दशमभावेशे केन्द्रत्रिकोणोपगतैः यैः कैश्चिच्चतुर्भिर्ग्रहैः सहिते सति जातो नरः मुक्तो भवेत्। यैः कैश्चिच्चतुर्ग्रहैः कर्मगतैः=दशमभावगतैः जातः प्रव्रज्याम् आप्नोति इति मुनीन्द्रैः कथितः। तत्र चतुर्णां मध्ये यो बलीयान् भवेत्तत्कृतां प्रव्रज्यां प्राप्नुयाज्जातक इति वाच्यम् ॥ २५ ॥

दशम भावका स्वामी केन्द्र या त्रिकोणमें स्थित चार ग्रहोंसे युक्त हो तो मुक्त (मोक्षमार्गी) होवे। चार ग्रह दशवें हों तो जातक संन्यासको प्राप्त हो ऐसा मुनियों ने कहा है ॥ २५ ॥

कुजार्कसोमार्कजदेववन्दितैः कुजार्कचन्द्रात्मजमन्दभार्गवैः।
रवीन्दुभौमासितदानवप्रियैर्भवन्ति जाता व्रतसंयुता नराः ॥ २६ ॥

कुजार्केति। १—कुजार्कसोमार्कजदेववन्दितैः = भौम-सूर्य-चन्द्र-शनि-गुरुभिः, वा—
२—कुजार्कचन्द्रात्मजमन्दभार्गवैः = भौम-सूर्य-बुध-शनि-शुक्रैः, वा—
३—रवीन्दुभौमासितदानवप्रियैः = सूर्य-चन्द्र-कुज-शनि-शुक्रैः,
यत्र तत्रैकत्र सम्मिलितैः सद्भिः जाता नराः व्रतसंयुताः=परिव्राड्व्रतपालका भवन्ति॥२६॥

मंगल, सूर्य, चन्द्रमा, शनि और गुरु या मंगल, सूर्य, बुध, शनि और शुक्र या सूर्य, चन्द्र, मंगल, शनि और शुक्र इनके एकत्र होने पर जो उत्पन्न हो वह मनुष्य व्रतसे युक्त (नियमी, संयमी) होवे ॥ २६ ॥

सितारसूर्यात्मजजीवभास्करैः कुजेन्दुदेवेज्यबुधार्कनन्दनैः।
सितेन्दुपुत्रार्किशशाङ्कभूमिजैर्भवेत्तपस्वी वनपर्वताश्रयः ॥ २७ ॥

सितारेत्यादि। १—शुक्र-कुज-शनि-गुरु-सूर्यैः। वा, २—भौम-चन्द्र-गुरु-बुध-शनैश्चरैः। वा-३—शुक्र-बुध-शनि-चन्द्र-मङ्गलैर्यत्र कुत्राप्येकस्थानगतैः जातः वनपर्वताश्रयः = वनगिरिनिलयः तपस्वी भवेदिति ॥ २७ ॥

शुक्र, मंगल, शनि, गुरु और सूर्यके एकत्र होनेसे या मंगल, चन्द्रमा, गुरु, बुध और शनिके एकत्र या शुक्र, बुध, शनि, चन्द्र और मंगलके एकत्र होने पर जातक पर्वत तथा वनमें रहनेवाला तपस्वी होवे ॥ २७ ॥

चन्द्रेन्दुपुत्रारसुरेज्यभास्करैः शशाङ्कसूर्येन्दुजशुक्रभूमिजैः।
एकर्क्षगैरेभिरिह प्रजाता भवन्ति विद्यामुनयोऽस्त्रदूषकाः ॥ २८ ॥

चन्द्रेत्यादि। १—चन्द्र-बुध-भौम-गुरु-सूर्यैः। वा, २—चन्द्र-सूर्य-बुध-शुक्र-मङ्गलैः सम्मिलितैरेकत्र गतैः सद्भिरिहास्मिन्नन्यतरयोगे प्रजाता नरा अस्त्रदूषकाः=आयुधनिन्दका विद्यामुनयः=सज्ज्ञानप्रवर्त्तकशास्त्रकर्त्तारो मुनयो भवन्ति ॥ २८ ॥

चन्द्रमा, बुध, मंगल, गुरु और सूर्यके एकत्र होनेसे या चन्द्र, सूर्य, बुध, शुक्र और मंगलके एक राशिमें होने से उत्पन्न हों तो अस्त्र शस्त्रोंका विरोधी विद्याभ्यासी मुनि होते हैं॥२८॥

रवीन्दुभौमेन्दुजजीवभार्गवैः सुधाकरारार्किगुरुज्ञभास्करैः।
कुजेन्दुसूर्यार्किसितेन्दुसम्भवैर्भवेदमीभिः सहितैर्व्रती नरः ॥ २९ ॥

रवीत्यादि। १—सूर्य-चन्द्र-कुज-बुध-गुरु-शुक्रैः, वा २-चन्द्र-कुज-शनि-गुरु-बुध-सूर्यैः, वा ३—मङ्गल-चन्द्र-सूर्य-शनि-शुक्र-बुधैरमीभिर्ग्रहैः सहितैरेकस्थानगतैः नरो व्रती भवेत्। अस्मिन्नन्यतमयोगे जातो नरो नियमकृद्व्रतीति ॥ २९ ॥

सूर्य, चन्द्रमा, मंगल, बुध, गुरु और शुक्र एक राशिमें हों, या चन्द्रमा, मङ्गल, शनि, गुरु, बुध और रवि एक राशिमें हों या मङ्गल, चन्द्रमा, सूर्य, शनि, शुक्र और बुध एकत्र हों तो इन योगोंमें उत्पन्न मनुष्य व्रती होवे ॥ २९ ॥

सितेन्दुजीवार्कजभानुलोहितैः सितार्किजीवार्कमृगाङ्कसोमजैः ॥
एकत्र यातैर्गगनाटनैः सदा भवन्ति जाता मुनयस्तपस्विनः ॥ ३० ॥

सितेन्द्वित्यादि। १-शुक्र-चन्द्र-गुरु-शनि-सूर्य-मङ्गलैः, वा २-शुक्र-शनि-गुरु-सूर्य-चन्द्र-बुधैः, एकत्रयातैरेभिः गगनाटनैः = ग्रहैः जाता नराः सदा तपस्विनः मनुयो भवन्ति ॥

शुक्र, चन्द्रमा, बृहस्पति, शनि, सूर्य और मङ्गल एकत्र हों या शुक्र, शनि, बृहस्पति, सूर्य, चन्द्र और बुध एकत्र हों तो जातक तपस्वी होता है, यह मुनि लोग कहते हैं ॥३०॥

कुजज्ञवागीशसितासितारुणैः सितार्किजीवेन्दुजचन्द्रभूमिजैः ॥
बलप्रधानैर्गगनाटनैर्यदा यदि प्रजातः पुरुषस्तपस्विनाम् ॥ ३१ ॥

कुजज्ञेति। १—मङ्गल-बुध-गुरु-शुक्र-शनि-सूर्यैः, वा २—शुक्र-शनि-गुरु-बुध-चन्द्र-मङ्गलैः, बलप्रधानैः = पूर्णबलान्वितैर्ग्रहैरेकत्रगतैः यदा प्रजातः भवेत्तदाऽसौ जातस्तपस्विनां मध्ये पुरुषः = प्रधानो भवेदिति ॥ ३१ ॥

मंगल, बुध, बृहस्पति, शुक्र, शनि और सूर्यके बली होनेसे या शुक्र, शनि, बृहस्पति, बुध, चन्द्र और मंगलके अत्यन्त बली और एकत्र होनेसे यदि उत्पन्न हो तो जातक तपस्वी हो ॥ ३१ ॥

रवीन्दुवागीशदिनेशपुत्रैः शनैश्चरेन्द्वर्कसितैरवश्यम् ॥
रवीन्दुपुत्रक्षितिजामरेज्यैस्तपस्विनो मूलफलाशनाः स्युः ॥ ३२ ॥

रवीन्द्विति। १-सूर्य-चन्द्र-गुरु-शनैश्चराः, वा-शनि-चन्द्र-सूर्य-शुक्राः, वा ३-सूर्य-बुध-भौम-गुरवो यद्येकत्र गताः स्युस्तदा जाता नरा अवश्यमेव मूलफलाशनाः तपस्विनः स्युः ॥ ३२ ॥

सूर्य, चन्द्रमा, बृहस्पति और शनिके एकत्र होनेसे या शनि, चन्द्रमा, सूर्य और शुक्रके एकत्र होनेसे या रवि, बुध, मङ्गल और बृहस्पतिके एकत्र होनेसे अवश्य तपस्वी मूल, फल भोजन करनेवाला होवे ॥ ३२ ॥

वक्रार्कसोमात्मजदानवेज्या भौमेन्दुवागीशशशाङ्कपुत्राः ॥
एकर्क्षगा जन्मनि यस्य जन्तोर्भवेद्यती वल्कलभूतिधारी ॥ ३३ ॥

वक्रेति। १-मङ्गल-सूर्य-बुध-शुक्राः, वा २-मङ्गल-चन्द्र-गुरु-बुधाः यस्य जन्तोः= पुरुषस्य, जन्मनि = जन्मकाले एकर्क्षगा भवन्ति स जातकः वल्कलभूतिधारी = वल्कलं = वृक्षत्वक्, भूतिः = भस्म, ते धरतीति तथा ( वृक्षत्वग्भस्मधारी ) सति जितेन्द्रियः = परिव्राड् भवेदिति ॥ ३३ ॥

जिसके जन्म समयमें मंगल सूर्य, बुध तथा शुक्र एकत्र हों या मंगल, चन्द्र, गुरु और बुध एक राशिमें हों वह वल्कल और विभूति धारण करनेवाला यती हो ॥ ३३ ॥

शशीन्दुसूनुक्षितिजार्कपुत्रा बुधक्षमापुत्रसुरेज्यसौराः ।
एकत्रगा यस्य नरस्य जातं कुर्वन्ति ते तापसमेव शान्तम् ॥ ३४ ॥

शशीति। १-चन्द्र-बुध-मङ्गल-शनैश्चराः, वा २-बुध-मङ्गल-गुरु-शनैश्चराः यस्य नरस्य जन्मकाले एकत्रगा भवेयुस्तं जातं नरं, ते = तथाभूता ग्रहाः, एव=निश्चयेन, शान्तं= शुद्धान्तःकरणं तापसं कुर्वन्ति ॥ ३४ ॥

जिसके जन्मकालमें चन्द्र, बुध, मङ्गल और शनि एकत्र हों या बुध, मङ्गल बृहस्पति और शनि एकत्र हों वे ग्रह उस जातकको शान्त चित्तवाला तपस्वी करते हैं ॥ ३४ ॥

चन्द्रार्कभार्गवशशाङ्कसुता बलिष्ठा भौमेन्दुपुत्रसितभास्करनन्दनाश्च ॥
मन्देन्दुवाक्पतिसिता नियतं यतीनां कुर्वन्ति जन्म कृतवल्कफलाशनानाम् ॥ ३५ ॥

चन्द्रार्केति। १-चन्द्र-सूर्य-शुक्र-बुधाः, वा २—मङ्गल-बुध-शुक्र-शनैश्चराः, वा ३-शनि-चन्द्र-गुरु-शुक्राः बलिष्ठाः सन्तः एकराशिगता भवन्ति तदा नियतम्=अवश्यमेव

कृतवल्कफलाशनानां यतीनां जन्म कुर्वन्ति । एतदन्यतमयोगे जातो नरः वल्कलधारी कन्दमूलफलाहारी यती भवतीत्यर्थः ॥ ३५ ॥

चन्द्रमा, सूर्य, शुक्र और बुध बलवान् हों या मंगल, बुध, शुक्र और शनि बलवान् हों या शनि, चन्द्रमा, बृहस्पति तथा शुक्र बलवान् हों तथा एकत्र प्राप्त हों तो जातकको संन्यासी, वल्कल धारण करनेवाला, फल भोजन करनेवाला बनाते हैं ॥ ३५ ॥

रविशशिकुजशुक्रैश्चन्द्रभौमज्ञसूर्यैर्गुरुसितरविमन्दैः शुक्रमन्देन्दुजीवैः ॥
कुजबुधसितचन्द्रैरेभिरेकर्क्षयातैर्भवति गिरिवनौकास्तापसः सर्ववन्द्यः ॥ ३६ ॥

रवीति । १ सूर्य-चन्द्र-मंगल-शुक्राः, वा २-चन्द्र-मंगल-बुध-सूर्याः, वा ३-गुरु-शुक्र-सूर्य-शनैश्चराः, वा ४-शुक्र-शनि-चन्द्र-गुरवः, वा ५-मंगल-बुध-शुक्र-चन्द्राः, यस्य जन्मकाले एकर्क्षगताः स्युरसौ जातकः गिरिवनौकाः=गिरयः ( पर्वता ) वनानि ( विपिनानि ) च, ओकः ( सद्म ) यस्य = पर्वतवननिलयस्तापसः = तपश्चरः सर्ववन्द्यो महात्मा भवेदिति ॥ ३६ ॥

रवि, चन्द्र, मंगल, शुक्र या चन्द्रमा, मंगल, बुध, सूर्य या बृहस्पति, शुक्र, रवि, शनि, या शुक्र, शनि, चन्द्रमा, बृहस्पति या कुज, बुध, शुक्र, चन्द्रमा ये ग्रह एक राशिमें हों तो पर्वत और वनमें रहनेवाले सर्ववन्द्य तपस्वी हों ॥ ३६ ॥

सितशशिकुजगुरुमन्दैश्चन्द्रेन्दुजभौमगुरुशुक्रैः ॥
रविकुजशनिबुधजीवैर्भवति यती दुःखितो दीनः ॥ ३७ ॥

सितेति । १-शुक्र-चन्द्र-मङ्गल-गुरु-शनैश्चराः, वा २-चन्द्र-बुध-भौम-गुरु-शुक्राः, वा ३ सूर्य-भौम-शनि-बुध-गुरवः यस्य जन्मकाले एकत्र गताः स्युरसौ जातकः दुःखितः दीनः यती भवति ॥ ३७ ॥

शुक्र, चन्द्रमा, मंगल, गुरु, शनि या चन्द्र, बुध, मंगल, गुरु, शुक्र या रवि, मंगल, शनि, बुध, बृहस्पति ये एकत्र होवें तो जातक दुःखी और दीन यती हो ॥ ३७ ॥

कुजार्किदेज्यसितेन्दुपुत्रैः शनीनसोमात्मजचन्द्रभौमैः ।
नभश्चरैरेकगृहोपयातैर्जटाधरा वल्कलधारिणः स्युः ॥ ३८ ॥

कुजार्कीति । १-मङ्गल-शनि-गुरु-शुक्र-बुधाः, वा २-चन्द्र-सूर्य-बुध-चन्द्र-भौमाः, येषां जन्मकाले एकराशिगताः स्युस्ते जाताः जटाधराः, वल्कलधारिणः परिव्राजो भवेयुरिति ॥

मङ्गल, शनि, बृहस्पति, शुक्र और बुधके योगसे या शनि, सूर्य, बुध, चन्द्रमा और मङ्गल के एकत्र होनेसे जातक जटा और वल्कल धारण करनेवाला संन्यासी होवे ॥ ३८ ॥

भान्विन्दुजेन्दुकुजजीवसुरारिपूज्यैः सूर्येन्दुभौमगुरुशुक्रदिनेशपुत्रैः ॥
प्राप्नोत्यवश्यमिह तापसरूपमेभिरेकर्क्षगैर्गगनचारिभिरायताक्षः ॥ ३९ ॥

भान्विन्द्विति । १-सूर्य-बुध-चन्द्र-मङ्गल-गुरु-शुक्राः, वा २-सूर्य-चन्द्र-मङ्गल-गुरु-शुक्र-शनैश्चराः यदि जन्मकाले एकर्क्षगा स्युस्तदा जातः आयताक्षः = विशाललोचनः सन् अवश्यमेव तापसरूपं प्राप्नोति ॥ ३९ ॥

सूर्य, बुध, चन्द्रमा, मङ्गल, गुरु और शुक्रके एक गृहमें प्राप्त होने से या सूर्य, चन्द्रमा, मङ्गल, गुरु, शुक्र और शनि इन ग्रहोंके एक राशिमें होने से जातक आयताक्ष ( बड़े नेत्र वाला ) तापसरूपको प्राप्त होता है ॥ ३९ ॥

न वीक्षितश्चेदितरग्रहेन्द्रैर्लग्नाधिपः पश्यति भानुपुत्रम् ॥
लग्नाधिपं वा यदि भानुपुत्रः संन्यासयोगो हि बलेन हीनम् ॥ ४० ॥

इदानीं शनि-लग्नेशयोः सम्बन्धात् प्रव्रज्यामाह-न वीक्षित इति । लग्नाधिपः = जन्मलग्नेशः, इतरग्रहेन्द्रैः = स्वेतरैर्ग्रहैः, न वीक्षितः = नावलोकितस्तथाभूतश्चेद्यदि भानुपुत्रं =

शनैश्चरं पश्यति, अथवा भानुपुत्रः = शनैश्चरः ( सबलः ) बलेन हीनं = निर्बलं, लग्नाधिपं = जन्मलग्नपति पश्यति तदा, हि = निश्चयेनायं संन्यासयोगः भवति। अत्र योगे जातः परिव्राट् स्यादेवेति भावः। अत्र वराहेण लग्नाधिपस्य स्थाने जन्माधिपोऽर्थाज्जन्मकालीनचन्द्राधिष्ठितराशीश उक्तः। तथा तद्वचनम्—

"जन्मेशोऽन्यैर्यद्यदृष्टोऽर्कपुत्रं पश्यत्यार्किर्जन्मपं वा बलोनम्।

दीक्षां प्राप्नोत्यार्किदृक्काणसंस्थे भौमार्क्यंशे सौरदृष्टे च चन्द्रे" इति ॥ ४० ॥

लग्नेश शनिको देखता हो और अन्य ग्रह लग्नेशको न देखते हों अथवा यदि शनि बलसे हीन लग्नेशको देखता हो तो संन्यासयोग होता है। याने इस योगमें जातक संन्यासी होवे ॥ ४० ॥

| | | |
|---|---|---|
| र. बु. | २ ल. | बृ. चं. |
| ५ शु. | | श. ११ |
| मं. | | |

चन्द्रे भानुसुतेक्षिते रविसुतद्रेक्काणयाते तथा
भिक्षुर्मन्दनिरीक्षिते रविसुतक्षोणीसुतांशे विधौ ॥
संन्यासप्रदखेचरः सगुलिकः साहिध्वजो वा यदि
क्रूरांशोपगतः करोति विगताचारं यतीनां ध्रुवम् ॥ ४१ ॥

चन्द्र इति। रविसुतद्रेक्काणयाते = यत्र कुत्रापि शनैश्चरस्य द्रेष्काणे गतवति चन्द्रे तथा तस्मिन्, भानुसुतेक्षिते = शनिना निरीक्षिते सति जातो भिक्षुः = भिक्षाशी ( परिव्राट् ) स्यात्। वा विधौ = चन्द्रे, रविसुतक्षोणीसुतांशे=शनिभौमान्यतरनवांशे गते तस्मिन् मन्देन निरीक्षिते च भिक्षुः स्यादिति।

संन्यासप्रदखेचरः = प्रव्रज्यायोगकरो ग्रहः, सगुलिकः = गुलिकेन सहितः, वा साहिध्वजः = राहुणा केतुना वा सहितः, यदि वा क्रूरांशोपगतः=पापनवांशगतः स्यात् तदा जातं नरं यतीनां = परिव्रजतां मध्ये विगताचारम्=आचारहीनं ( भ्रष्टं ) ध्रुवम्=निश्चयेन करोति। तथा हि सर्वार्थचिन्तामणौ—

'शनेर्दृगाणे कुमुदारमबन्धौ मन्देक्षिते तादृशयोगमाहुः।

मन्दांशके भूमिसुतांशके वा मन्देक्षिते चन्द्रयुते तथैव ॥

संन्यासयोगाधिपतौ सराहौ क्रूरांशके वा गुलिकेन युक्ते।

संन्यासवैकल्यमुदाहरन्ति भङ्गो भवेत्तस्य शुभैर्विहीने' इति ॥ ४१ ॥

शनिके द्रेष्काणमें चन्द्रमाको शनि देखता हो अथवा शनि वा मंगलके नवांशमें चन्द्रमा से शनि दृष्ट हो तो जातक भिक्षु ( संन्यासी ) होता है, संन्यासप्रद ग्रह गुलिकके सहित हो वा राहु-केतुसे युक्त हो, तथा क्रूरांशमें हो तो जातक आचरण हीन यती ( संन्यासी ) होता है ॥ ४१ ॥

रविलुप्तकरैरदीक्षिता बलिभिस्तद्गतभक्तयो नराः।
अभियाचितमात्रदीक्षिता निहतैरन्यनिरीक्षितैरपि ॥ ४२ ॥

इदानीं पूर्वोक्तानां ग्रहयोगवशाज्जायमानप्रव्रज्याभेदानामपवादमाह—रविलुप्तकरैरिति। पूर्वोक्तयोगेषु चतुरादिग्रहेषु रविलुप्तकरैः=रविणा सहास्तं गतैर्बलिभिर्ग्रहैः नरा अदीक्षिताः=अलब्धप्रव्रज्या भवन्ति, किन्तु तद्गतभक्तयो भवन्ति। अत्रेदमुक्तं भवति। एकस्थेषु चतु-

रादिग्रहेषु यावन्तो ग्रहा बलिनस्तावन्तः स्वस्वप्रव्रज्याकरा भवन्ति, तत्र खलु यावन्तो ग्रहा अस्तमिताः स्युस्तावन्तः स्वप्रव्रज्यां न प्रयच्छन्ति, परञ्च तत्प्रव्रज्यायोगगतेषु ते श्रद्धालवो भवन्तीति ।

अभियाचितमात्रदीक्षिता इति । बलिभिस्तैर्ग्रहैः, निहतैः = अन्यग्रहेण युद्धे पराजितैः, अन्यैश्च निरीक्षितैः दृष्टैरपि जाता नरा अभियाचितमात्रदीक्षिताः = दीक्षाभ्यर्थनशीला भवन्ति, न तु लब्धदीक्षा भवन्तीति ।

Notes—सूर्येण सह विद्यमानो ग्रहः स्वकालांशाधिकान्तरितश्चेदास्तं गच्छति । एवं सूर्याद् द्वितीयराशावपि यदि स्वकालांशान्तर्गतः स्यात्तदाऽस्तं गच्छतीति तावद्ग्रहाणां कालांशा अपि लिख्यन्ते—

दस्रेन्दवः १२, शैलभुवश्च १७, शक्राः १४, रुद्राः ११, खचन्द्राः १०, तिथयः १५ क्रमेण ।
चन्द्रादितः काललवा निरुक्ता ज्ञशुक्रयोर्वक्रगयोर्द्विहीनाः १२, ८ ॥ इति, सि० शि० ॥

तथा च पराजितलक्षणं वराहोक्तम्—

दक्षिणदिक्स्थः परुषो वेपथुरप्राप्य सन्निवृत्तोऽणुः ।
अधिरूढो विकृतो निष्प्रभो विवर्णश्च यः स जितः ॥

कथितानां प्रव्रज्यानां परिपक्तिः तत्तद्योगकर्तृग्रहदशाकालेऽवगम्या ।

'दीक्षादानसमर्थो यो भवति तदा बलेन संयुक्तः ।
तस्यैव दशाकाले दीक्षां लभते नरोऽवश्यम्' इत्युक्तत्वात् ॥ ४२ ॥

**प्रव्रज्याकारक ग्रह सूर्यके साथ अस्त हों तो अदीक्षित ( मन्त्रहीन ) यती हो । यदि वे ग्रह बली हों तो उस प्रव्रज्यामें श्रद्धा रखनेवाला होवे ( यती नहीं ) । यदि वे ग्रह युद्धमें हारे और अन्य ग्रहोंसे दृष्ट हों तो याचना मात्रसे दीक्षित होता है ॥ ४२ ॥**

## अथ जीविकायोगाः ।

अथाधुना जातकोऽयं कथं धनमुपार्ज्जयेत् कया वृत्या जीवनञ्च यापयेदित्यादीनां विचारानाहास्मिन् जीविकायोगप्रकरणे ।

**अर्थाप्तिः पितृजननीसपत्नमित्रभ्रातृस्त्रीभृतकजनाद्दिवाकराद्यैः ।**
**होरेन्द्वोर्दशमगतैर्विकल्पनीया मेन्द्वर्कास्पदपतिगांशनाथवृत्त्या ॥ ४३ ॥**

अर्थाप्तिरिति । होरेन्द्वोः=होरा लग्नम्, इन्दुश्चन्द्रस्तयोर्दशमगतैः, दिवाकराद्यैः = सूर्यादिग्रहैः, पितृजननीसपत्नमित्रभ्रातृस्त्रीभृतकजनात् क्रमेण अर्थाप्तिः ( धनागमनं ) विकल्पनीया = परिचिन्तनीया । यथा—जन्मकालीनलग्नाच्चन्द्राद्वा यदि रविर्दशमे स्यात् तदा पितृतो धनागमं ब्रूयात् । लग्नाद्दशमे चन्द्रे सति जनन्याः = मातुः सकाशाद्धनाप्तिर्वाच्या । लग्नाच्चन्द्राद्वा भौमे दशमगते सपत्नात् = शत्रुतः । एवं बुधे दशमे सति मित्रात् = सुहृदः सकाशात् । गुरौ दशमे भ्रातुः सकाशात् । शुक्रे दशमगते स्त्रीतः । शनौ दशमे भृतकजनात् = भृत्यात् = सेवकाद्धनाप्तिर्वक्तव्या । अत्र लग्नाद्दशमे ग्रहाभावे चन्द्राद्दशमस्थग्रहाद्विचार्यः । यदि कश्चिल्लग्नाद्दशमगतः स्यात् कश्चिच्चन्द्रादपि दशमगः स्यात्तदा द्वाभ्यामेव विचारयेत् । तत्र द्वावपि ग्रहौ स्वस्वदशायां स्वस्वोक्तवशादर्थाप्तिं कुरुतः । तत्रापि बलीयान् विशेषेणेति वाच्यम् ।

**अथ लग्नाच्चन्द्रादपि दशमे स्थाने शून्ये ( ग्रहरहिते ) सति किं कार्यम् ? तदाह— मेन्द्वर्कास्पदपतिगांशनाथवृत्त्येति । मेन्द्वर्काणां = लग्न-चन्द्र-सूर्याणाम्, आस्पदपतयः=दशमेशाः, गता येषु अंशेषु = नवांशेषु, तेषां नवांशानां ये नाथास्तेषां पृथक् पृथक् वा वृत्तिस्तया जातस्यार्थाप्तिर्वाच्या । अत्रेदं किल विचिन्त्यम् । लग्नाच्चन्द्रात्सूर्याच्च दशमेशा ग्रहा**

यत्र यत्र नवांशे व्यवस्थिताः स्युस्तत्तन्नवांशेशग्रहवृत्त्या जातस्यार्थागमनं भवतीति। तथा चोक्तमपि—

उदयाच्छशिनो वाऽपि ये ग्रहा दशमस्थिताः। ते सर्वेऽर्थप्रदा ज्ञेयाः स्वदशासु यथोदिताः॥
लग्नार्कराशिनाथेभ्यो दशमाधिपतिर्ग्रहः। यस्मिन्नवांशे तत्कालं वर्त्तते तस्य यः पतिः॥
तद्वृत्त्या प्रवदेद्वित्तं जातस्य बहवो यदा। भवन्ति वित्तदास्तेऽपि स्वदशासु विनिश्चितम्॥इति॥

अब जीविकाका विचार करते हैं—लग्नसे वा चन्द्रमासे दशवें स्थानमें जो ग्रह हो उस ग्रहके द्रव्यसे मनुष्यकी जीविका होती है। लग्नसे वा चन्द्रमासे दशम सूर्य हो तो पितासे धन मिले। चन्द्रमा हो तो मातासे। मंगल हो तो शत्रुसे। बुध हो तो मित्रसे गुरु हो तो भाईसे। शुक्र हो तो स्त्रीसे। शनि हो तो सेवकसे धन मिले। यदि लग्न और चन्द्रमा दोनोंसे १० वें ग्रह हों तो अपनी २ दशामें दोनों फल देंगे। यदि दशवें बहुत ग्रह हों तो अपनी २ दशामें सब फल देंगे। यदि लग्न या चन्द्रमासे दशवें कोई ग्रह न हो तो लग्न, चन्द्रमा, सूर्य इनसे दशम भावके पति जिस नवांशमें हों उसका स्वामी जो ग्रह हो उसकी वृत्तिसे धन प्राप्ति कहे॥ ४३॥

अर्थाप्तिं कथयेद्विलग्नशशिनोर्मध्ये बली यस्ततः।
कर्मेशस्थनवांशराशिपवशाद् वृत्तिं जगुस्तद्विदः॥ ४३½॥

अर्थाप्तिमिति। विलग्नशशिनोः = जन्मकालीनलग्नचन्द्रयोर्मध्ये बली = अधिकबलवान् भवेत् ततः = तस्मात्, अर्थाप्तिं = धनलाभं कथयेत्। अर्थात् लग्नचन्द्रयोर्बलाधिकाद्दशमस्थितग्रहाधिकाराद्, दशमे ग्रहाभावे दशमेशग्रहवृत्त्या चार्थलाभं ब्रूयादिति। तथा हि सारावल्याम्—

होरेन्द्वोर्बलयोगाद्यो दशमस्तत्स्वभावजं कर्म। तस्याधिपपरिवृद्ध्या वृद्धिर्ज्ञेयाऽन्यथा हानिः॥

अत्र बलवद्ग्रहणं नोचितं जातस्य विविधद्वारेणार्थागमदर्शनात्। तत्र बलवति विशेषेणाऽल्पबलेऽल्पत्वेनेति वक्तुं युज्यते।

अथ वृत्तिम् ( जीविकाम् ) आह—कर्मेशेति। कर्मेशः ( लग्नाच्चन्द्राद्वा दशमेशः ) यस्मिन्नवांशे तिष्ठति तन्नवांशराशिपतिवशात्, वृत्तिं = जीविकां, तद्विदः = भाग्यविदो विद्वांसः, जगुः = ऊचुः। लग्नचन्द्रयोर्दशमेशस्थनवांशपतेर्या वक्ष्यमाणा वृत्तिस्तयैव तस्य जातस्य जीवनं वाच्यमिति॥ ४३½॥

लग्न और चन्द्रमा इन दोनोंमें जो बली हो उससे दशमभावका स्वामी जहां स्थित हो उस नवांशपतिसे जीविका कहे॥ ४३½॥

अथ ग्रहाणां वृत्तयः।

भैषज्योर्णतृणाम्बुधान्यकनकव्यापारमुक्तादिकै-
रन्योन्यागमदूतवृत्तिभिरिनस्यांशे तु जीवत्यसौ॥ ४४॥
जलोद्भवानां क्रयविक्रयेण कृषेश्च मृद्वाद्यविनोदमार्गात्॥
राजाङ्गनासंश्रयवित्तरूपान्निशाकरांशे वसनक्रयाद्वा॥ ४५॥
धातोर्विवादेन रणप्रकारात् स्तब्धाग्निवादात् कलहप्रवृत्त्या।
जीवत्यसौ साहसमार्गरूपाद् धरासुतांशे यदि चौरवृत्त्या॥ ४६॥
शिल्पादिकाव्यागमशास्त्रमार्गाज्ज्योतिर्गणज्ञानवशाद् बुधांशे॥
परार्थवेदाध्ययनाज्जपाच्च पुरोहिताद्याज्यवशात् प्रवृत्तिः॥ ४७॥
जीवांशके भूसुरदेवतानामुपासनाध्यापकरूपमार्गात्।
पुराणशास्त्रागमनीतिमार्गाद्धर्मोपदेशैरकुसीदमाहुः॥ ४८॥
सुवर्णमाणिक्यगजाश्वमूलाद् गवां क्रयाज्जीवनमाहुरार्याः।
गुडौदनक्षारदधिक्रयेण स्त्रियाः प्रलोभेन भृगोः सुतांशे॥ ४९॥

शन्यंशके कुत्सितमार्गवृत्त्या शिल्पादिभिर्दारुमयैर्वधाद्यैः ।
विन्यस्तभाराज्जनविप्रलम्भादन्योन्यवैरागममार्गमूलात् ॥ ५० ॥

पूर्वश्लोके यदुक्तं-'कर्मेशस्थनवांशराशिपवशाद् वृत्ति', तद्ग्रहाणां वृत्तय उच्यन्ते-भैष-ज्येत्यादिभिः ।

इनस्यांशे=सूर्यस्य नवांशे ( सूर्यो यदि कर्मेशस्थनवांशपतिः स्यादित्यर्थः ) सति असौ जातकः—भैषज्यं = औषधम् , ऊर्णा = मेषादिकलोम ( ऊन, रेशम ) तृणानि = घासाः, अम्बुधान्यं = जलजान्नम् , कनकं = सुवर्णम् , एषां व्यापारेण = क्रयविक्रयेण, मुक्तादिकैः= मौक्तिकादीनां ( मोती वगैरह ) व्यापारेण, अन्योन्यागमदूतवृत्तिभिः = इतस्ततः परस्परं भृत्यकार्यैश्च जीवति=जीवनं यापयति ॥ ४४ ॥

निशाकरांशे = चन्द्रनवांशे = कर्मेशस्थनवांशपतौ चन्द्रे सति-जलोद्भवानां = जलोत्प-न्नानां=शङ्खमुक्तामीनादीनां क्रयविक्रयेण, कृषेः=कृषि-( खेती ) कर्मतश्च, मृद्वाद्यविनोदमार्गात्= मृण्मयवाद्याधिकरणक-मोदादिना, राजाङ्गनानां=राजपत्नीनां, संश्रयेण = समाश्रयणेन लब्धं यद्वित्तं तस्मात् , वा वसनक्रयात् वस्त्रादेः क्रयविक्रयतश्च जीविकामुपैति ॥ ४५ ॥

धरासुतांशे=मङ्गलनवांशे=कर्मेशस्थनवांशपतौ मङ्गले सति-धातोः ( सुवर्णादेः ) विवादेन = व्यवहारेण 'विवादो व्यवहारः स्यादि'त्यमरः । रणप्रकारात् = सङ्ग्रामात् , स्त-ब्धाग्निवादात् = स्तब्धानलस्य प्रशान्ताग्नेः ( कोयला ) व्यवहारतः । कलहप्रवृत्त्या = सङ्कटकव्यापारात् , साहसमार्गरूपात् = अनीक्षितकर्तव्यतः, चोरवृत्त्या = तस्करकर्मणा च जीवनं यापयतीति ॥ ४६ ॥

बुधांशे = बुधस्य नवांशे = कर्मेशस्थनवांशपतिः बुधो भवेत्तदा = शिल्पादिना = चित्र-पुस्तक-वस्त्रादिनिर्माणेन, काव्येन=काव्यनिर्माणेन, आगमशास्त्रमार्गात् संहितादिशा-स्त्रज्ञानतः, ज्योतिर्गणानां ज्ञानवशात् = भाग्यगणनया, परार्थवेदाध्ययनाज्जपाच्च = परस्य हेतोः वेदमन्त्राणामध्ययनेन जपेन च, पुरोहिताद्यज्यवशात्=पौरोहित्यकर्मतो याजनतश्च प्रवृत्तिः = जीविका भवति ॥ ४७ ॥

जीवांशके = कर्मेशस्थनवांशेशे गुरौ सति—भूसुरदेवतानाम् = ब्राह्मणानां देवानाञ्च, उपासनया = पूजनेन, अध्यापकरूपमार्गात् = छात्राणामध्यापनकर्मतः, पुराणशास्त्रागमनी-तिमार्गात् , धर्मोपदेशैश्चाकुसीदं = स्वजीविकावृत्तिं मनीषिणः आहुः ॥ ४८ ॥

भृगोः सुतांशे = शुक्रस्य नवांशे—सुवर्णमाणिक्यगवाद्यादीनां व्यापारतः, गवां क्रयात् , गुडौदनक्षारदधिक्रयेण स्त्रियाः प्रलोभेन च जीवनम् आहुः ॥ ४९ ॥

शन्यंशके = शनिनवांशे—कुत्सितमार्गवृत्त्या = गर्हितकर्मणा, दारुमयैः शिल्पादिभिः = काष्ठमयचित्रादिरचनया, वधाद्यैः = परेषां घातितया पीडनादिना च, विन्यस्तभारात् = भार-वहनात् , जनविप्रलम्भात् = जनानां वञ्चनकर्मतः, अन्योन्यवैरागममार्गमूलात् = परस्परवि-द्वेषमूलतश्च वृत्तिः प्रवक्तव्या ॥ ५० ॥

Notes—अत्र सामान्येन पापग्रहाणां नवांशे कुत्सितवृत्त्या शुभग्रहाणां नवांशे च भवति कर्मेशे सुवृत्त्या जीविका कथिता । परञ्च तत्र तत्तन्नवांशपतेः स्थितिमवलोक्यैव शुभाशुभत्वे तारतम्येन न्यूनाधिकत्वमपि वाच्यम् । अतो हि पापोऽपि ग्रहो बलीयाञ्छुभोच्चा-दिवर्गगस्तावच्छुभत्वमाप्नोति । एवं शुभोऽपि निर्बलो नीचारिपापवर्गगो न तावच्छुभ इति चिन्तनीयम् ॥ ४४-५० ॥

लग्न या चन्द्रमासे दशम स्थान का स्वामी सूर्यके अंश ( नवांश ) में हो तो औषध ( दवा ),ऊन, तृण, जलधान्य, सोना, मोती आदिके व्यापारसे, परस्पर आने जानेसे, दूत वृत्तिसे जीविका करे ॥ ४४ ॥

लग्न या चन्द्रमासे दशम स्थानका स्वामी चन्द्रमाके अंशमें हो तो जलमें उत्पन्न होने वाले वस्तु ( शंख, सुतुही, मोती, सिंहारा, तिन्नी, मत्स्य ) के व्यापारसे, कृषि ( खेती ) से, मिट्टीके खिलौना, वाजा आदि विनोदसे, राजाकी स्त्रीसे वित्त प्राप्ति होनेसे या वस्त्रके खरीदनेसे जीविका होती है ॥ ४५ ॥

लग्नसे वा चन्द्रसे दशमाधीश मङ्गलके अंशमें हो तो धातु (सोना, चांदी, तामा, पीतल आदि )के व्यापारसे, लड़ाईसे, कोयला तथा राखीके व्यापारसे, कलहसे, चोरीसे, साहससे वह जीता है ॥ ४६ ॥

लग्न या चन्द्रमासे दशमेश बुधके अंशमें हो तो शिल्प ( कारीगरी ) से, काव्य, पुराण, धर्मशास्त्रके मार्गसे, ज्यौतिष शास्त्रसे, दूसरेके निमित्त वेद पढ़नेसे, जपसे, पुरोहितीसे, यज्ञकरानेसे जीविका हो ॥ ४७ ॥

लग्न या चन्द्रमासे दशमेश यदि गुरुके अंशमें हो तो ब्राह्मण-देवताकी सेवा करनेसे, अध्यापकीसे, पुराण-शास्त्र-धर्म ग्रन्थके नीति मार्गसे, धर्मोपदेशसे जीविका हो ॥ ४८ ॥

लग्न या चन्द्रमासे दशमेश शुक्रांशमें हो तो सुवर्ण, मणि, हाथी, घोड़ा, गायके व्यापार से, गुड़-चावल-नमक-दधि-खरीदनेसे, स्त्रियोंके प्रलोभनसे पण्डित लोग जीवन कहते हैं ॥

लग्न या चन्द्रमासे दशम स्थानका स्वामी शनैश्चरके अंशमें हो तो निन्दित मार्ग की वृत्तिसे लकड़ीके शिल्पसे, वधसे, बोझा ढोनेसे, लोगोंके ठगनेसे, परस्पर वैरसे, जीवन होता है ॥ ५० ॥

सौम्यैश्चतुष्केन्द्रगृहोपयातैः कुलोत्तमा वंशकरा नृपालाः ॥
सर्वज्ञधीवित्तयशोगुणाढ्या नरा नृपप्रीतिकराश्च वा स्युः ॥ ५१ ॥

इदानीं चतुर्षु केन्द्रेषु शुभै राजयोगमाह—सौम्यैरिति । सौम्यैः = शुभग्रहैः ( गुरु-बुध-शुक्लचन्द्रैः ) चतुष्केन्द्रगृहोपयातैः = चतुर्ष्वपि केन्द्रेषु ( १।४।७।१० ) यथा सम्भवं व्यवस्थितैः कुलोत्तमाः = स्वकीयकुले मान्याः, वंशकराः = कुलोपचयकराः, सर्वज्ञधीवित्तयशोगुणाढ्याः = सर्वज्ञत्वबुद्धिधनकीर्तिगुणगणैः सहिताः, नृपालाः = राजानः भवन्ति । अथवा नृपप्रीतिकराः = राज्ञामानन्ददायकाः ( सन्मन्त्रिणः ) नराः भवन्ति । पापैश्चतुष्केन्द्रगतैरेतत्प्रतिकूलं फलं वाच्यम् । तथा च क्वचित्पुस्तके—

पापैश्चतुष्केन्द्रगृहोपयातैर्नीचव्रताचाररताश्च निःस्वाः ॥
मूर्खाः परस्त्रीपरवित्तशीलाः शूराः कदाचिन्नृपतिप्रियाः स्युः ॥ इति च पाठः ॥ ५१ ॥

चारों केन्द्रोंमें शुभ ग्रह हों तो वे ग्रह उत्तम कुलका बनावें वा वे ग्रह सर्वज्ञ, बुद्धिमान् धनवान्, यशस्वी, गुणी और राजाको प्रसन्न करनेवाला मनुष्य बनाते हैं ॥ ५१ ॥

कर्मकर्मांशगाः सौम्या जातः पुण्यरतः सदा ॥
पापिनः पापकर्मात्मा चन्द्राद्वा यदि जायते ॥ ५२ ॥

इदानीं पुण्यपापरतत्वमाह—कर्मेति । सौम्याः=शुभग्रहा यदि कर्मकर्मांशगाः=लग्नाद्दशमे भावे वा तन्नवांशे गताः स्युः ( दशमे भावे सौम्यग्रहाभावे दशमराशिनवांशे सौम्यैर्भवितव्यम् ) तदा जातः सदा पुण्यरतः = सत्कर्मनिरतो भवेत् । चेत् पापिनः=पापग्रहाः कर्मकर्मांशगाः स्युस्तदा जातः सदा पापकर्मात्मा भवेत् ।

चन्द्राद्वेति। लग्नात् कर्मणि कर्मांशे च ग्रहाभावे सति चन्द्रात् कर्मकर्मांशे तथाभूते सति तथैव ( कथितवत् ) जायते । अत्र लग्नाच्चन्द्राद्वा कर्मणि वा कर्मांशे सौम्यपापयोरधिकारवशादपि फले तारतम्यं कर्त्तव्यमिति ॥ ५२ ॥

लग्नसे या चन्द्रमासे दशवेंमें या दशमके नवांशमें शुभग्रह हो तो जातक सदा पुण्यमें रत हो । यदि इसी तरह पापग्रह हो तो पापी होवे ॥ ५२ ॥

कर्मेशस्वंशपो यत्र तदीशः पापखेचरः ।
धूमादिग्रहसम्बन्धी यदि पापरतो भवेत् ॥ ५३ ॥

इदानीं पापरतयोगमाह—कर्मराश्यंशप इति । कर्मराश्यंशपः = कर्मराशेः ( दशमभावस्य ) यो नवांशस्तत्पतिः यत्र राशौ भवेत् तद्राशीशो यदि पापखेचरस्तथा धूमाद्युपग्रहसम्बन्धी स्यात्तदा जातः पापरतः = पापकर्मानुरागी भवेत् ॥ ५३ ॥

दशमेश जहां हो उस स्थानका स्वामी पापग्रह हो तथा यदि धूमादि उपग्रहका सम्बन्धी हो तो पापमें रत होवे ॥ ५३ ॥

सिद्धारम्भः कर्मगे चन्द्रलग्नाद्भानौ भौमे साहसी पापबुद्धिः ।
विद्वान् सौम्ये वाक्पतौ राजतुल्यः शुक्रे भोगी भानुजे शोकतप्तः ॥ ५४ ॥

इदानीं चन्द्राद्दशमे ग्रहस्थितिवशात्फलान्याह, तत्र तावदेकैकग्रहस्य फलम्-सिद्धारम्भ इति । चन्द्रलग्नात् = जन्मकालीनचन्द्राधिष्ठितराशितः, कर्मगे=दशमस्थानगते, भानौ= सूर्ये जातः सिद्धारम्भः = सिद्धाः ( साफल्यमुपगत ) आरम्भाः ( सङ्कल्पाः ) यस्य = सिद्धमनोरथ इति यावद्भवति । भौमे = मङ्गले चन्द्राद्दशमे सति जातः, साहसी = असमीक्षितकृद् भवति । पापबुद्धिश्च भवति । सौम्ये = बुधे तथाभूते सति, विद्वान् = पण्डितो भवति । वाक्पतौ = बृहस्पतौ तथाभूते सति राजतुल्यो भवेन्न तु राजेति । शुक्रे तथासति भोगी = विविधभोगयुक्तो भवति । भानुजे=शनैश्चरे तथाभूते जातः, शोकतप्तः=चिन्ताकुलचित्तो भवेदिति ॥ ५४ ॥

चन्द्रलग्नसे सूर्य दशवें हो तो सिद्धारम्भ होवे ( वह जिस कर्मका आरम्भ करे उसकी सिद्धि जरूर हो ), मंगल हो तो साहसी और पापबुद्धि, बुध हो तो विद्वान्, गुरु हो तो राजतुल्य, शुक्र हो तो भोगी और शनि हो तो शोकसे संतप्त होवे ॥ ५४ ॥

चन्द्रात्कर्मगते रवौ सरुधिरे मत्तः परस्त्रीरतो-
ज्योतिर्विच्च सचन्द्रजे जलधनस्त्रीभूषणादिप्रियः ।
सिद्धार्थो नृपसंमतश्च सगुरौ शुक्रेण युक्ते नृप-
प्रीतिस्त्रीधनवृद्धिभाक् शनियुते दीनो दरिद्रो भवेत् ॥ ५५ ॥

इदानीं चन्द्राद् दशमे भौमादिसहितस्य सूर्यस्य फलान्याह—चन्द्रादिति । सरुधिरे = मङ्गलेन सहिते रवौ चन्द्रात्कर्मगते सति जातः मत्तः, परस्त्रीरतश्च भवेत् । सचन्द्रजे = बुधयुक्ते रवौ चन्द्राद् दशमे सति ज्योतिर्वित् = ज्योतिश्शास्त्रज्ञः, जलधनस्त्रीभूषणादिप्रियः = जलधनानि ( शङ्खमुक्तादीनि ) स्त्रियः ( सुवासिन्यः ) भूषणादयः ( अलङ्करणादयः ) प्रियाः ( अभीष्टाः ) यस्य स तथा भूतो भवेत् । सगुरौ=गुरुणा सहिते रवौ तथाभूते जातः सिद्धार्थः = सफलमनोरथः, नृपसंमतः=राजप्रियश्च भवेत् । शुक्रेण युक्ते रवौ तथा सति नृपप्रीतिस्त्रीधनवृद्धिभाग् भवेत् । शनियुते रवौ चन्द्राद्दशमे सति जातः, दीनः = अप्रसन्नवदनः, दरिद्रः = निस्वश्च भवेदिति ॥ ५५ ॥

चन्द्रमासे दसवेंमें सूर्य मंगलके साथ हो तो मतवाला तथा परस्त्रीगामी हो । बुधके साथ हो तो ज्योतिषी, जलधन-स्त्री-भूषण आदि का प्रिय होवे । बृहस्पतिके साथ हो तो सिद्धार्थ ( पूर्णमनोरथ ), राजसंमत ( मंत्री ) हो । शुक्रसे युक्त हो तो राजासे प्रीति तथा स्त्री-धन-की वृद्धिवाला और शनिसे युक्त हो तो दुःखी तथा दरिद्र होवे ॥ ५५ ॥

चन्द्रात्कर्मणि भूसुते बुधयुते शास्त्रोपजीवी भवेत्
सेज्ये नीचजनाधिपः सभृगुजे वैदेशिकः स्याद्वणिक् ।
सार्कौ साहसिकोऽसुतश्च शशिनः कर्मस्थिते बोधने
सेज्ये षट्कतनुश्च दीनवचनः ख्यातो नृपालप्रियः ॥ ५६ ॥
माने चन्द्रमसो बुधे सभृगुजे विद्यावधूवित्तवान्
सार्कौ पुस्तकलेखकश्च विषमाचारप्रवृत्तोऽथवा ।

जीवे शुक्रयुते तु विप्रजनपो भूपप्रियः पण्डितः
सार्कौ सर्वजनोपतापचतुरो जातः स्थिरारम्भधीः ॥ ५७ ॥
सुगन्धनीलचूर्णादिचित्रकारो भिषग्वणिक् ।
कर्मस्थानगते मन्दे सासुरेज्ये निशाकरात् ॥ ५८ ॥

इदानीं शशिनो दशमे भौमादिद्विग्रहफलान्याह–चन्द्रादिति । बुधयुते भूसुते = मङ्गले, चन्द्रात्, कर्मणि = दशमगते सति जातः, शास्त्रोपजीवी = शास्त्राणां पठनपाठनादिना जीविकावान् भवेत् । यथाऽऽधुनिकाः पण्डितंमन्याः । सेज्ये = गुरुणा युते भौमे चन्द्राद्दशमे सति नीचजनानाम् ( अशिक्षितानां शूद्रादीनाम् ) अधिपः स्यात् । सभृगुजे = शुक्रसहिते भौमे तथा भूते सति वैदेशिकः = दूरदेशप्रवासी, वणिक् = व्यापारकृत् स्यात् । सार्कौ = शनिना सहिते सति साहसिकः = उद्यमकृत्, असुतः = पुत्रहीनश्च भवेत् ।

अथ चन्द्राद्दशमे बुधे जीवादिद्वुके फलान्याह–शशिन इति । बोधने = बुधे, सेज्ये = इज्येन ( गुरुणा ) सहिते, शशिनः = चन्द्रात्, कर्मस्थिते = दशमगते सति जातः, षण्ढतनुः = क्लीबाङ्गः, दीनवचनः, ख्यातः, नृपालप्रियश्च भवेत् । सभृगुजे = शुक्रसहिते बुधे चन्द्रमसः सकाशात्, माने=दशमे गते सति जातः विद्यावधूवित्तवान् भवेत् । सार्कौ=आर्किणा ( शनिना ) सहिते, बुधे चन्द्राद्दशमे प्राप्ते सति जातः पुस्तकलेखकः, अथवा विषमाचरणे प्रवृत्तः = प्रतिकूलव्यवहारोन्मुखः ( यथा आधुनिकः सुधारवादी जनः ) भवेत् ।

अथ चन्द्राद्दशमे जीवादिद्विग्रहफलानि—जीव इति । शुक्रेण युते जीवे = गुरौ, चन्द्राद्दशमे गते तु जातः विप्रजनपः = ब्राह्मणानामधिपः, भूपप्रियः = राजमन्त्री, पण्डितः = विद्वांश्च भवेत् । सार्कौ = शनिना, सहिते गुरौ तथाभूते सति सर्वजनोपतापचतुरः = सर्वेषां जनानाम् उपतापने ( प्रपीडने ) चतुरः ( दक्षो व्यग्रश्च )=सकललोकप्रमथनसमर्थः, स्थिरारम्भधीः = दृढसङ्कल्पबुद्धिश्च भवेत् ।

अथ चन्द्राद्दशमे शुक्रशनियोगफलम्–सुगन्धेति । सासुरेज्ये=असुरेज्येन ( शुक्रेण ) सहिते, मन्दे = शनैश्चरे, निशाकरात्=चन्द्रस्थानात्, कर्मस्थाने=दशमे गते सति जातो नरः सुगन्धनीलचूर्णादिभिश्चित्रकारः, भिषक् = वैद्यः, वणिक् = व्यापारकृच्च भवेदिति ॥५६–५८॥

चन्द्रमासे दशवेंमें मंगल बुधसे युक्त हो तो शास्त्रोपजीवी होवे । गुरुसे युक्त हो तो नीचोंका स्वामी होवे । शुक्रके साथ हो तो विदेशी बनियां होवे । शनिके साथ हो तो साहसी और बिना संतानका हो । चन्द्रमासे दशवेंमें बुध गुरुसे युक्त हो तो नपुंसक, दीन वचन, नामी तथा राजप्रिय होवे ॥ ५६ ॥

चन्द्रमासे दशवेंमें बुध शुक्रसे युक्त हो तो विद्या–स्त्री और धनसे युक्त होवे । शनिसे युक्त हो तो पुस्तक लेखक, अथवा विषम आचारमें प्रवृत्त होवे । चन्द्रमासे दशवेंमें बृहस्पति शुक्रसे युक्त हो तो ब्राह्मणोंमें मुख्य, राजाका प्रिय और पंडित होवे । शनिसे युक्त हो तो जातक सब ही को सतानेमें व्यग्र तथा किसी कर्मके सम्पादनमें दृढ सङ्कल्प बुद्धि होता है ॥ ५७ ॥

चन्द्रमासे दशवें स्थानमें शनि शुक्रसे युक्त हो तो सुगंध विक्रेता, नील आदि चूर्णसे चित्रकार, वैद्य तथा बनियां होवे ॥ ५८ ॥

## अथ आज्ञाविचारः ।

आज्ञास्थानाधिपे सौम्ये शुभयुक्तेक्षितेऽपि वा ।
शोभनांशगते वाऽपि जातस्त्वाज्ञाधरो भवेत् ॥ ५९ ॥
आज्ञाधिपे मन्दयुते रन्ध्रनाथेन वीक्षिते ।
क्रूरांशे केन्द्रराशौ वा क्रूराज्ञां प्रकरोति सः ॥ ६० ॥

इदानीं जातस्याज्ञाविचारः क्रियते—आज्ञास्थानाधिप इति । आज्ञास्थानाधिपे=लग्नाद्दशमभावेशे, सौम्ये = शुभग्रहे सति वा तस्मिन् शुभग्रहेण युक्ते वाऽवलोकिते सति, अपि वा दशमेशे, शोभनांशगते = शुभग्रहनवांशे गतवति जातस्तु आज्ञाकरः = शासनकृत् भवति । "अववादस्तु निर्देशो निदेशः शासनं च सः । शिष्टिश्चाज्ञा च" इत्यमरः ।

आज्ञाधिपे = लग्नाद्दशमेशे, मन्दयुते = शनिना सहिते, रन्ध्रनाथेन = लग्नादष्टमेशेन, वीक्षिते = अवलोकिते. क्रूरांशे = पापनवांशे वा केन्द्रराशौ व्यवस्थिते सति स जातः क्रूराज्ञां = गर्हितस्यादेशं. प्रकरोति = पालयति ॥ ५९–६० ॥

**दशमेश शुभग्रह हो शुभग्रहसे युक्त हो वा शुभग्रह उसको देखते हों, वा शुभांशमें प्राप्त हो तो जातक आज्ञा देने वाला होवे ॥ ५९ ॥**

**दशमेश शनिसे युक्त हो, अष्टमेश उसको देखता हो क्रूरांश वा केन्द्र राशिमें हो तो वह क्रूर हुकूमत करता है ॥ ६० ॥**

## अथ कीर्ति-मान-कृषि-व्यापार-निद्राविचारः ।

कर्कटस्थे निशानाथे गुरुशुक्रनिरीक्षिते ।
पारावतादिभागस्थे सत्कीर्तिर्धनवान् भवेत् ॥ ६१ ॥

कर्कटस्थ इति । निशानाथे = चन्द्रे, कर्कटस्थे = स्वगृहं गते, गुरुशुक्राभ्यां निरीक्षिते तथा पारावतप्रभृति-वैशेषिकांशे गतवति जातः सत्कीर्त्तिः = पारमार्थिककृत्यकृत्, धनवांश्च भवेत् ॥ ६१ ॥

**चन्द्रमा कर्क राशिमें हो उसको बृहस्पति और शुक्र देखते हों, तथा चन्द्रमा अपने पारावतादि भागमें हो तो जातक सत्कीर्ति वाला धनी हो ॥ ६१ ॥**

मानेशे शुभसंयुक्ते शुभमध्यगतेऽपि वा ।
शुभग्रहांशके वाऽपि कीर्तिमानभिमानवान् ॥ ६२ ॥

मानेश इति । स्पष्टार्थः ॥ ६२ ॥

**दशमेश शुभग्रहसे युक्त हो वा शुभग्रहके बीचमें हो वा शुभग्रहके अंशमें हो तो कीर्तिमान् और अभिमानी जातक हो ॥ ६२ ॥**

पापेक्षिते कर्मणि पापयुक्ते मानाधिपे हीनबलोपयाते ।
जातोऽपवादी विगताभिमानः स्वकर्मतेजोबलकीर्तिहीनः ॥ ६३ ॥

पापेक्षित इति । कर्मणि = लग्नाद्दशमे भावे पापेक्षिते = पापग्रहेणावलोकिते, वा पापयुक्ते, मानाधिपे = दशमेशे, हीनबलोपयाते = यत्र कुत्रापि दौर्बल्यमुपगते सति जातो नरः अपवादी = कलङ्कयुतः, विगताभिमानः = मानहीनः, स्वकर्मणा, तेजसा, बलेन, कीर्त्या च हीनोऽपि भवति ॥ ६३ ॥

**दशवें भावमें बलरहित दशमेश हो उस पर पापग्रहकी दृष्टि हो वह पापग्रहसे युक्त हो तो जातक अपवादी हो, अभिमान रहित हो और अपने कर्मसे, तेजसे, बलसे, कीर्त्तिसे हीन होवे ॥ ६३ ॥**

कर्मेशतन्नवांशेशौ शनिसम्बन्धसंयुतौ । षष्ठाधिपयुतौ दृष्टौ बहुदारान्वितो भवेत् ॥

अथ बहुदारयोगः—कर्मेशेति । कर्मेशतन्नवांशेशौ = दशमेशः तन्नवांशपतिश्चैतौ द्वौ शनिसम्बन्धसंयुतौ = शनैश्चरस्य सम्बन्धिनौ ( शनिना दृष्टौ, वा युतौ, शनिराशिगतौ, वा शनिमित्रग्रहौ ) भवेतां तथा, षष्ठाधिपेक्षितयुतौ = षष्ठेशेन दृष्टौ वा युतौ भवेतां तदा जातो जनो बहुदारान्वितः = अधिकस्त्रीयुतो भवेत् ॥ ६४ ॥

**दशमेश और उसका नवांशेश दोनों शनिके सम्बन्धी हों और षष्ठेशसे युक्त दृष्ट हों तो बहुत स्त्री वाला हो ॥ ६४ ॥**

भूसूनुर्क्षितिराशिपौ च बलिनौ केन्द्रत्रिकोणायगौ
कर्मेशे भृगुचन्द्रवीक्षितयुते कृष्यादिगोवित्तवान् ।
सम्बन्धी यदि कर्मणः शशिसुतो वाणिज्यशीलः सदा
सौम्यासौम्ययुते तु सात्त्विकतमोनिद्री विमिश्रेऽन्यथा ॥ ६५ ॥

इदानीं कृषिगोधनानां, वाणिज्यस्य, निद्रायाश्च विचारमाह—भूसूनुक्षितीति । भूसूनुक्षितिराशिपौ = भौमश्चतुर्थभावपतिश्चैतौ द्वौ च बलिनौ भूत्वा केन्द्रत्रिकोणायगौ ( १।४।७।१०।५।९।११ एतदन्यतमगतौ ) भवेताम्, तथा कर्मेशे = दशमेशग्रहे भृगुचन्द्राभ्यां वीक्षिते = दृष्टे, वा युते = सहिते सति जातः कृष्यादिगोवित्तवान् = कृषि-गो-धनयुक्तो भवेत् ।

वाणिज्यमाह—सम्बन्धीति । शशिसुतः = बुधः यदि कर्मणः = दशमभावस्य सम्बन्धी = सम्बन्धचतुष्टयेष्वन्यतमसम्बन्धवान् भवेत् तदा जातः सदा वाणिज्यशीलः = व्यापारकृत् स्यात् ।

निद्रामाह—सौम्यासौम्येति । दशमे भावे सौम्यासौम्ययुते = शुभपापसहिते क्रमेण सात्त्विकतमोनिद्री भवेत् । यथा दशमे शुभग्रहयुते सात्त्विकनिद्री ( विहितनिद्रावात् ) योगीव, दशमे पापग्रहयुते तमोनिद्री ( गर्हितनिद्रायुतः, रोगीव ) भवेत् । विमिश्रे = दशमे शुभपापाभ्यां सहिते सति अन्यथा = रजोनिद्री ( भोगीव ) भवेदिति ॥ ६५ ॥

मङ्गल और चतुर्थेश बली होकर १।४।७।१०।५।९।११ भावोंमें किसी भावमें हों और कर्मेश शुक्र तथा चन्द्रमासे दृष्ट या युत हों तो जातक कृषि और गो-धनवाला हो। यदि बुध १० वें भावका सम्बन्धी हो तो सदा व्यापार करनेवाला हो। यदि १० वां भाव शुभ ग्रहसे युत हो तो सात्त्विक निद्रावाला तथा पापग्रहसे युत हो तो तमो निद्रावाला एवं मिश्र ( शुभ और पाप ) ग्रहसे युत होने पर मिश्र फल कहना चाहिये ॥ ६५ ॥

इति दशमभावविचारः ।



## अथ लाभभावफलम् ।

अथाधुना लाभभावफलविचारः प्रारब्धः । तत्रादौ लाभभावे विचारणीयकथनपूर्वकं तत्र सूर्यादिग्रहस्थितिवशाल्लाभमाह—

लाभस्थानेन लग्नादखिलधनचयप्राप्तिमिच्छन्ति सर्वे
लाभस्थानोपयातः सकलबलयुतः खेचरो वित्तदः स्यात् ।
भानुश्चेज्ज्ञातिवर्गादतिधनमुडुपो मातृवर्गेण भौमः
स्वोत्थान्नान्द्रियदीष्टप्रभुविबुधसुहृन्मातुलैर्वित्तमेति ॥ ६६ ॥
जीवो यच्छति वेदशास्त्रयजनाचारादिपुत्रैर्धनं
शुक्रः स्त्रीजनकाव्यनाटककलासङ्गीतविद्यादिभिः ।
दासीदासकृषिक्रियार्जितधनं धान्यं समृद्धं शनि-
र्विप्रादिद्युचरेण वीक्षितयुते विप्रादयो वित्तदाः ॥ ६७ ॥

लाभस्थानेनेति । लग्नात् लाभस्थानेन = एकादशभावेन अखिलधनचयप्राप्तिं = सर्वेषामेव धनानां चयं = वृद्धिं, प्राप्तिं = लाभं च सर्वे होराशास्त्रविद इच्छन्ति । निखिलधनवृद्धिलाभमेकादशभावतो विचारयेदिति भावः ।

यः कोऽपि ग्रहः सकलबलयुतः = पूर्णबलवान् सन् लाभस्थानोपयातः = एकादशभावमुपगतः स्यादसौ वित्तदः = धनलाभकरः स्यात् ।

अथैकादशे ग्रहस्थितिपरत्वेन धनलाभमूलमाह—भानुरिति । सूर्यश्चेद्यदि लाभ-

स्थाने पूर्णबलयुतो भवेत्तदा ज्ञातिवर्गाल्लाभं करोति । उडुपः = चन्द्रस्तथा भवेत् तदा मातृवर्गेण = मातृ-मातामही-मातृष्वसृभ्यः अतिधनमुपैति । भौमः तथा भवेत् तदा स्वोत्थात् = भ्रातृवर्गात्, चान्द्रिः = बुधः तथा भवेत् तदा इष्टः = आत्मीयः, प्रभुः = स्वामी ( मालिक ), विबुधः = देवो ब्राह्मणश्च, सुहृत् = मित्रम्, मातुलः = मातृभ्राता, तैः वित्तं = धनम्, एति = प्राप्नोति । जीवः = गुरुः पूर्णबलो लाभस्थाने स्यात् तदा वेद-शास्त्रयजनादीनामाचारादिना = अध्ययनाध्यापनयज्ञादिव्यवहारतः, पुत्रैश्च धनं यच्छति । शुक्रः तथा भवेद् तदा स्त्रीजनैः, काव्यादिना, नाटकेन, कलाभिः ( शिल्पादिभिः ) सङ्गीत-विद्यादिभिश्च धनं प्राप्नुयात् । शनिः लाभस्थाने पूर्णबलोपेतो भवेत्तदा दासी-दास-कृषि-क्रियाभिः = स्त्रीचेत्तदा दासीक्रियया, पुमांश्चेत्तदा दास-( सेवक ) वृत्त्या कृषिकर्मणा चोपार्जितं धनं, धान्यं, समृद्धं ( सम्पत्ति ) लभते ।

अथ जातिवशाद्धनलाभमाह—विप्रेति । एकादशे भावे विप्रादिखचरेण = ब्राह्मणादि-जातिग्रहेण वीक्षिते वा युते विप्रादयो वित्तदा भवन्ति । अर्थात् गुरुशुक्रौ सबलौ लाभस्थौ वा लाभेक्षकौ स्याताम् तदा जातस्य ब्राह्मणद्वारेण धनाप्तिः । सूर्यभौमौ तथा चेत्तदा क्षत्रि-यद्वारेण, चन्द्रस्तथा स्यात्तदा वैश्यवशात्, बुधस्तथा स्यात्तदा शूद्रवशात्, शनिस्तथा चेत्तदा अन्त्यजैः ( म्लेच्छैः ) धनाप्तिर्वाच्येति ॥ ६६–६७ ॥

**अब लाभ भावका विचार कहते हैं—लग्नसे ग्यारहवें भावसे सम्पूर्ण धन प्राप्तिका विचार सभी आचार्योंका मत है। प्रत्येकबलसे युक्त ग्रह लाभस्थानमें प्राप्त हो तो धनको देता है। वहां यदि बलवान् सूर्य लाभस्थानमें हो तो अपने जाति ( दायादों ) से धन मिले। चन्द्रमा हो तो मातृवर्गसे। मङ्गल हो तो भाईसे। यदि बुध हो तो प्रभुसे, देवतासे, मित्रसे और मामासे धन मिले ॥ ६६ ॥**

**गुरु हो तो वेद-शास्त्र-यज्ञादि-आचारसे तथा पुत्रसे धन मिले। शुक्र हो तो स्त्रीजनसे काव्य-नाटक-कला-सङ्गीत-विद्यासे। शनि हो तो दासी-दास-कृषि-क्रियासे उपार्जित धनधान्य समृद्धि युत हो। लाभस्थान यदि ब्राह्मणादि ग्रहसे युत दृष्ट हो तो ब्राह्मणादिसे धन मिले ॥ ६७ ॥**

आयस्थः शुभखेचरः शुभधनं पापस्तु पापार्जितं
मिश्रैर्मिश्रधनं समेति मनुजस्तज्जातकोक्तं वदेत् ।
लाभस्थानगतः समस्तगुणवानिष्टाधिकश्चेद्बली
जातो यानविभूषणाम्बरवधूभोगादिविद्याधिकः ॥ ६८ ॥

आयस्थ इति । स्पष्टार्थ एवेत्यलम् ॥ ६८ ॥

**लाभ भावमें शुभग्रह हो तो शुभसे धन, पापग्रह हो तो पापसे धन, मिश्र ग्रह हो तो शुभ तथा पापसे उत्पन्न धन मनुष्यको हो ऐसा कहे। लाभस्थानमें अधिक बलवान् ग्रह हो तो समस्त गुणवाला तथा मित्रवाला, यान ( वाहन ), विभूषण, वस्त्र, स्त्री भोगादिसे, पूर्ण विद्वान् हो ॥ ६८ ॥**

वित्तेशायगृहाधिपौ तनुपतेरिष्टग्रहौ चेद्धनं
सत्कर्मामरविप्रपुण्यविषये दानादियोग्यं वदेत् ।
आयस्थो विबलः पराजितबलो नीचारिदुःस्थानपो
रेकायोगकरो यदि प्रतिदिनं कुर्वीत भिक्षाटनम् ॥ ६९ ॥

वित्तेशेति । वित्तेशायगृहाधिपौ = द्वितीयेशैकादशेशौ चेद्यदि तनुपतेः = लग्नेशस्य, इष्टग्रहौ = मित्रग्रहौ स्याताम् तदा जातस्य धनं सत्कर्मणि = यज्ञाद्यनुष्ठाने, अमराणां ( देवानां ) पूजनादौ, विप्राणामध्ययनाध्यापने, पुण्यविषये ( तीर्थक्षेत्रादौ ) च दानादियोग्यं भवतीति वदेत् ।

आयस्थ इति । विबलः = निर्बलः, वा ग्रहयुद्धे पराजितबलः, वा नीचारिदुःस्थानपः = नीचगतः, शत्रुगृहस्थः, दुःस्थान-( ६।८।१२ ) पतिर्वा ग्रहो यदि आयस्थः = लाभस्थान-( ११ ) गतः स्यात्तदा रेकायोगकरः = दारिद्र्ययोगकरः ( ६ अ० द्र० ) स्यादसौ जातकः प्रतिदिनं भिक्षाटनं कुर्वीत । अस्मिन् योगे जातो नरो भिक्षाशी भवेदिति भावः ॥ ६९ ॥

धनेश, और लाभेश यदि लग्नेशके मित्र हों तो उसका धन सत्कर्म-देवता-विप्र-पुण्य-विषयमें दान आदिके योग्य कहे । विबल, पराजित, नीचगत, शत्रुगृहस्थ, दुःस्थानपति और रेकायोगकर्त्ता ग्रह यदि ११ भावमें प्राप्त हो तो प्रतिदिन भिक्षा मांगनेवाला हो ॥ ६९ ॥

लाभेशे दिनपेऽथवा शशधरे भूपालतुल्याश्रयाद्
भौमे मन्त्रिजनाग्रजानुजकृषिद्वारैर्धनं लभ्यते ।
विद्याबन्धुसुतैः सुधाकरसुते जीवे निजाचारतः
शुक्रे रत्नवधूगजादिपशुभिर्मन्दे कुवृत्त्या श्रियम् ॥ ७० ॥

इदानीं सूर्यादिग्रहे लाभभावेशे सति फलानि-लाभेशे दिनप इति । स्पष्टार्थ एवेति॥७०॥

यदि सूर्य वा चन्द्रमा लाभेश हो तो राजाके सदृश धनवान्के आश्रयसे, मंगल लाभेश हो तो मन्त्री, ज्येष्ठ तथा छोटे भाईसे और कृषिसे धन प्राप्त हो। बुध लाभेश हो तो विद्या-बन्धु-पुत्रसे धन लाभ हो। बृहस्पति लाभेश हो तो अपने आचारसे धन प्राप्त हो। शुक्र हो तो रत्न-स्त्री तथा हाथी आदि पशुसे लाभ हो। यदि शनि लाभेश हो तो कुवृत्तिसे धन लाभ होवे ॥ ७० ॥

लाभस्थानपतौ विलग्नभवनात् केन्द्रत्रिकोणस्थिते
लाभे पापसमन्विते तु धनवान् तुङ्गादिराश्यंशके ।
तत्तत्कारकवर्गतो बलवशाद् योगानुसारं वदेत्
तत्तत्खेटदशापहारसमये वित्तं वदेत्तद्दिशि ॥ ७१ ॥

लाभस्थानपताविति । एकादशभावस्वामिनि ग्रहे विलग्नभवनात् = जन्मलग्नात् केन्द्रे त्रिकोणे वा स्थिते, वा लाभे=एकादशभावे, पापसमन्विते=पापेन केनचित् सहिते, वा लाभेशे तुङ्गादिराश्यंशके विद्यमाने सति जातो जनस्तु धनवान् भवेत् । तथा च सर्वार्थचिन्तामणौ—
"लाभेश्वरे केन्द्रगते त्रिकोणे वा समन्विते । लाभे वा पापसंयुक्त धनलाभमुदीरयेत्" । इति ॥

कया रीत्या धनलाभं वदेदित्याह—तत्तदिति । बलवशात् योगानुसारं च = धनलाभयोगे यो ग्रहो योगकृद्भवेत्तद्बलानुसारं ( न्यूनाधिक्यम् ) तत्तत्कारकवर्गतः = स योगकृद् ग्रहो यद्भावस्य कारको भवेत्तद्वर्गवशाल्लाभं वदेत् । कदा कुत्र च लाभं वदेदित्याह । तस्य योगकृतो ग्रहस्य दशापहारसमये, तद्दिशि च = योगकृद् ग्रहो यद्दिगधिपो भवेत्तस्यां दिशि वित्तं = धनलाभं वदेदिति ॥ ७१ ॥

लाभ स्थानका स्वामी लग्नसे केन्द्र या कोणमें स्थित हो लाभमें पापग्रह हो वा लाभेश उच्च आदि राशि या उसके नवांशमें हो तो धनवान् होवे । लाभ कारक ग्रहके साथ और योगके अनुसार उस ग्रहकी जाति द्वारा लाभ कहे । लाभ कारक ग्रहकी दशा तथा अन्तर्दशामें उसी ग्रहकी दिशामें लाभ कहना चाहिये ॥ ७१ ॥

इति लाभभावविचारः ।

## अथ व्ययभावफलम् ॥

अथाधुना व्ययभावफलानि विवक्षुरादौ व्ययभावे विचारणीयविषयकथनपूर्वकं विविधदेशयदाटनयोगमाह—

लग्नादन्त्यतदीशभानुतनयैर्दूराटनं दुर्गतिं
दातृत्वं शयनादिसौख्यविभवं वित्तक्षयं चिन्तयेत् ।
रिष्फस्थे चरखेचरे चरगृहे दुःस्थाननाथेऽथवा
नानादेशवनाटनो हि शनिना युक्तेऽथवाऽऽलोकिते ॥ ७२ ॥

लग्नादिति । दूराटनं = दूरदेशादिभ्रमणम् , दुर्गतिं = यातनाम् , दातृत्वं = दानकर्म ( त्यागम् ), शयनादिसौख्यविभवं = पर्यङ्कादिसुखसम्पत्तिम् , वित्तक्षयं = धनापव्ययश्चैतानि, लग्नादन्त्यतदीशभानुतनयैः = द्वादशभाव-द्वादशभावेश-शनैश्चरैः, चिन्तयेत् = विचारयेत् ।

रिष्फस्थ इति । चरखेचरे = चरप्रकृतिग्रहे = चन्द्रे ( २ अ० ४७ श्लो० द्र० ), अथवा दुःस्थाननाथे = षडष्टव्ययान्यतमभावपतिग्रहे चरगृहे सति, रिष्फस्थे=व्ययभावमुपगते तस्मिन् शनिना युक्ते अथवा आलोकिते च सति जातो जनः, हि=निश्चयेन, नानादेशवनाटनः=विविधदेशेषु वनेषु च भ्रमणशीलो भवेदिति ॥ ७२ ॥

अब व्ययभावका विचार कहते हैं:—१२ वें भाव, द्वादशेश और शनिसे दूरका जाना, दुर्गति, दान, शयनादिसौख्य, विभव और वित्तक्षयका विचार करे । द्वादश भावमें चरग्रह हो अथवा चरगृहमें दुष्ट स्थानका स्वामी हो शनिसे युक्त या दृष्ट हो तो जातक नानाप्रकारके देश और वनमें घूमनेवाला होवे ॥ ७२ ॥

## अथ व्ययविचारः ।

रिष्फस्थानगते शुभे शुभयुते सौम्यग्रहालोकिते
तन्नाथे विबलेऽरिनीचगृहगे वित्तव्ययाभावभाक् ।
रिष्फस्थे विबले बलेन सहिते रिष्फाधिपे वित्तहा
मिश्रव्योमचरान्विते तु सकलं मिश्रव्ययं देहिनाम् ॥ ७३ ॥

रिष्फस्थानगत इति । शुभयुते = केनचित् शुभग्रहेण सहिते, शुभे = कस्मिंश्चिच्छुभग्रहे रिष्फस्थानगते=द्वादशभावमुपगते, तस्मिन् सौम्यग्रहेणालोकिते, तथा तन्नाथे = द्वादशेशे, विबले = बलरहिते, अरिनीचगृहगे वा सति, जातः वित्तव्ययाभावभाक् = धनव्ययरहितः ( धनसञ्चयकृदेव ) भवेत् ।

अथ धनहानियोगः—रिष्फस्थ इति । द्वादशे भावे विबले ग्रहे गतवति, रिष्फाधिपे = द्वादशेशे बलेन सहिते च सति जातः वित्तहा = धनक्षयकरः स्यात् ।

मिश्रेति । तस्मिन् द्वादशभावेशे वा द्वादशे भावे मिश्रव्योमचरान्विते = पापेन सौम्येन च सहिते तु देहिनां = जनिमताम् सकलं मिश्रव्ययं = साधारणं ( सन्मार्गेऽसन्मार्गेऽपि ) धनव्ययं ब्रूयादिति ॥ ७३ ॥

१२ वें भावमें शुभग्रह शुभग्रहसे युत और दृष्ट हो उसका स्वामी विबल, नीच, शत्रुगृहमें हो तो धनका व्यय न हो । द्वादशमें निर्बल ग्रह हो और द्वादशेश बलसे युक्त हो तो धनकी हानि करनेवाला हो । १२ वां भाव या द्वादशेश मिश्रग्रह ( शुभग्रह और पापग्रह ) से युक्त हो तो मिश्रव्यय ( शुभ तथा अशुभमें खर्च ) हो ॥ ७३ ॥

इष्टव्ययो भवति शोभनवर्गयाते दुष्टव्ययो विबलखेटयुतेक्षिते वा ।
यत्कारकद्युचरवर्णजनादनर्थं जातः समेति बलहीनदशापहारे ॥ ७४ ॥

इदानीं शुभाशुभव्ययविचारमाह—इष्टव्यय इति । द्वादशे द्वादशेशे वा शोभनवर्गयाते, वा सबलखेटयुतेक्षिते जातः इष्टव्ययः = सन्मार्गे धनव्ययकृद् भवति । अथवा तस्मिन् विबलखेटयुतेक्षिते, दुष्टव्ययः = अपमार्गे व्ययकृद्भवति ।

यदिति । बलहीनदशापहारे = द्वादशस्थो द्वादशेशो वा बलहीनः स्यात्तदा तस्य दशान्तर्दशायां, यत्कारकयुचरवर्गजनात् = तादृशोऽसौ ग्रहो यत्कारको भवेत्तद्वर्गजनात् जात अनर्थं = दुर्गतिं, समेति = प्राप्नोति ॥ ७४ ॥

द्वादशेश शुभवर्गमें हो तो दुष्ट व्यय होता है । निर्बल ग्रहसे युत दृष्ट हो तो दुष्ट व्यय हो । दुष्ट फल कारक ग्रह जिस जातिका हो उसी वर्णके द्वारा उस निर्बल ग्रहकी दशा भुक्तिमें जातक दुःख पाता है ॥ ७४ ॥

क्रूरग्रहे बलवति व्ययगेऽरिनाशस्थानाधिपे कृषिधनस्थितिनाशकः स्यात् ।
रिष्फे चतुद्विपदभे सह तत्पदेन खेटेन सर्वपशुभृत्यविनाशमेति ॥ ७५ ॥

क्रूरग्रह इति । अरिनाशस्थानाधिपे=षष्ठाष्टमान्यतरभावेशे, क्रूरग्रहे=पापग्रहे बलवति च सति, व्ययगे= द्वादशभावमुपगते जातः कृषिधनस्थितिनाशकः स्यात् ।

रिष्फ इति । द्वादशे भावे चतुर्द्विपदभे = चतुष्पद-( चापापरार्द्धहरिगोमकरादिमेषान्यतमे ) भे वा द्विपद-(कन्यानृयुग्मघटतौलिशरासनाद्यन्यतमे) भे, तत्पदेन खेटेन चतुष्पदग्रहेण ( शनिभौमान्यतरेण ) द्विपदग्रहेण (गुरुशुक्रान्यतरेण) वा सह व्यवस्थिते ( चतुष्पदराशौ चतुष्पदग्रहेण, द्विपदराशौ द्विपदग्रहेणेत्यर्थः ) जातः सर्व–पशु–भृत्य–विनाशमेति ॥

षष्ठेश या अष्टमेश बलवान् पापग्रह होकर १२ वें भावमें हो तो कृषि, धन तथा स्थान का नाश हो । द्वादश भावमें चतुष्पद या द्विपद राशि हो उसमें वैसा ही ग्रह भी हो तो सभी पशुओं और नौकरोंका नाश होता है ॥ ७५ ॥

विप्रादिखेचरयुते सति विप्रमुख्यैः स्त्रीवर्गतस्तु तरुणीखचरेण युक्ते ।
रिष्फे नरग्रहयुते रिपुणा सुहृद्भे जातः सुहृज्जनवशाद्धननाशमेति ॥ ७६ ॥

विप्रादीति । रिष्फे विप्रादिखेचरयुते सति विप्रमुख्यैः=ब्राह्मणादिभिः धनव्ययो वाच्यः । एतदुक्तं भवति । गुरुशुक्रान्यतरे द्वादशे सति ब्राह्मणद्वारेण, कुजार्कान्यतरे सति क्षत्रियेण, चन्द्रे सति वैश्येन, बुधे सति शूद्रेण, शनिराहुकेतूनामन्यतमे म्लेच्छै र्व्ययो वाच्य इति । तरुणीखचरेण = स्त्रीग्रहेण = चन्द्रशुक्रान्यतरेण युक्ते रिष्फे तु स्त्रीवर्गतः = योषिज्जनवशाद्धनव्ययः स्यात् । रिष्फे नरग्रहयुते = सूर्य–कुज–गुरुयुते, रिपुणा = शत्रुद्वारेण, तस्मिन्नेव रिष्फे सुहृद्भे = मित्रग्रहराशौ, नरग्रहयुतेऽर्थान्नरग्रहस्यासौ द्वादशो भावः सुहृद्भं भवेत्तदा जातः सुहृज्जनवशात् = मित्रजनद्वारेण धननाशमेति ॥ ७६ ॥

१२ वां भाव विप्रादि ग्रहसे युक्त हो तो विप्रादि जातिसे, स्त्रीसंज्ञकग्रहसे युक्त हो तो स्त्रीवर्गसे, १२ वां भाव नर ग्रहसे युक्त हो तो शत्रुके द्वारा, यदि वह मित्रराशिमें हो तो मित्रसे जातकका धन नाश होता है ॥ ७६ ॥

## अथ दानविचारः ।

त्यागी शुभग्रहयुते कृषकश्च धर्मी पापेऽवसानगृहगे तु विवादशीलः ।
नेत्रामयः पवनकृच्चपलोऽटनः स्यादुच्चस्वमित्रभवने तु परोपकारी ॥ ७७ ॥

त्यागीति । रिष्फेः शुभग्रहयुते जातः त्यागी = दानशीलः, कृषकः = कृषिकृत् , धर्मी= धर्मात्मा च भवति । पापे = पापग्रहे अवसानगृहगे = द्वादशभावमुपगते तु विवादशीलः = विषमभाषणपरः, पवनकृत् , नेत्रामयः=चक्षूरोगवान् , चपलः=चञ्चलः, अटनः=भ्रमणशीलः, स्यात् । तस्मिन्नेवावसानगृहे पापे उच्च–स्व–मित्रभवने गतवति तु जातः परोपकारी=अन्योपकृतिकृद्भवेदिति ॥ ७७ ॥

व्यय भाव शुभग्रहसे युक्त हो तो त्यागी, कृषक और धर्मात्मा हो । द्वादश भाव पापग्रह से युक्त हो तो विवादी, वातव्याधिके कारण नेत्ररोगी, चपल और घूमनेवाला हो । यदि द्वादशस्थ ग्रह उच्च, स्वगृही या मित्रगृही का हो तो परोपकारी होवे ॥ ७७ ॥

भानुर्वा कृशशीतगुर्व्ययगतो वित्तस्य नाशं नृपै-
र्भौमो नाशयतीन्दुजेक्षितयुतो नानाप्रकारैर्धनम् ।
वागीशेन्दुसिता यदि व्ययगता वित्तस्य संरक्षकाः
सौम्यः शुक्रयुतेक्षितो यदि नृणां शय्यासुखं जायते ॥

इदानीं धननाशं, धनरक्षां, शय्यासुखञ्चाह—भानुरिति । भानुः = सूर्यः, वा कृशशीतगुः = क्षीणचन्द्रः, व्ययगतः = द्वादशस्थानगतः स्यात्तदा नृपैः = राजभिः, वित्तस्य=धनस्य नाशं ब्रूयात् । भौमः = मङ्गलो व्यये, इन्दुजेक्षितयुतः = बुधेन दृष्टो वा युतः स्यात् तदा नानाप्रकारैः = विविधहेतुभिः धनं नाशयति ।

वागीशेन्दुसिताः = गुरुचन्द्रशुक्राः सम्मिलिताः यदि व्ययगताः स्युस्तदा ते वित्तस्य संरक्षका भवन्ति । न तदानीं धनस्य व्ययो वाच्य इति ।

सौम्यः = बुधः शुक्रेण युक्तः, वा दृष्टो यदि व्यये स्यात् तदा नृणां=जनिमताम्, शय्यासुखं = पर्यङ्कानन्दो जायते ॥ ७८ ॥

**सूर्य वा क्षीण चन्द्रमा बारहवें हो तो राजाके द्वारा धनका नाश हो । मंगल बुधसे युक्त या दृष्ट हो तो नाना प्रकारसे धनका संहार करे । यदि बारहवें चन्द्रमा, शुक्र और बृहस्पति हों तो धनके रक्षक होते हैं । यदि बुध शुक्रसे युक्त या दृष्ट हो तो मनुष्योंको शय्याका सुख होवे ॥ ७८ ॥**

**अथ शयनविचारः ।**

व्ययेशे स्वोच्चराशिस्थे शुभवर्गसमन्विते ।
शुभखेचरसंदृष्टे पर्यङ्कशयनं वदेत् ॥ ७९ ॥
विचित्रमञ्चे शयनं व्ययेशे परमोच्चगे ।
भाग्यनाथेन वा दृष्टे मणिरत्नविभूषितम् ॥ ८० ॥

इदानीं जातस्य शय्याविचारमाह—व्ययेश इति । व्ययेशः ( द्वादशेशः ) स्वोच्चराशिगतः शुभवर्गगतः शुभग्रहदृष्टश्च भवेत्तदा जातस्य पर्य्यङ्कशयनं = मञ्च = खट्वा-शयनं वदेत् । व्ययेशः परमोच्चगतः, भाग्यनाथेन = नवमेशेन दृष्टो वा भवेत्तदा विचित्रमञ्चे = विविधशिल्पसन्निते पर्यङ्के मणिरत्नविभूषितं शयनं = शय्या स्यात् ॥ ७९–८० ॥

**द्वादशेश अपने उच्चराशिमें हो, शुभवर्गमें हो, शुभग्रहसे देखा जाता हो तो पर्यङ्क ( पलङ्ग ) पर शयन कहे ॥ ७९ ॥**
**द्वादशेश परम उच्च स्थानमें हो तो विचित्र मणिरत्नसे विभूषित शय्यापर शयन हो ८०**

शुक्रे वा रविनन्दने हिमकरे रन्ध्रत्रिकोणस्थिते
तद्गेहे शिथिलीभवेन्नृपतनं जातस्य केत्वन्विते ॥
निद्राक्षीकृकलासगौलिपतनं पापान्विते भार्गवे
भौमे कच्छपदर्शनं बुधयुते जातः श्वदष्टो भवेत् ॥ ८१ ॥

शुक्रे वेति । शुक्रे, रविनन्दने=शनैश्चरे, वा हिमकरे = चन्द्रे, रन्ध्रत्रिकोणस्थिते=अष्टमात् ९।५ भावे गतवति, केत्वन्विते = केतुना सहिते च तस्य जातस्य गेहे नृपतनं = अकस्मान्मनुष्याणां निपतनं शिथिलीभवेत् भवेदित्यर्थः । अथ तत्र भार्गवे = शुक्रे, पापान्विते सति, निद्राक्षी = सुप्ता नारी, कृकलासः=सरटः ( पक्षीविशेषः ) गौलिः=गौधेयः ( विषखपरा ) एषां पतनं भवेत् । तत्र भौमे सति जातस्य कच्छपदर्शनं = शयनकाले स्वप्ने कच्छपस्य दर्शनं जायते । तत्र बुधयुते सति जातः श्वदष्टः = शुना दंशितो भवेत् ॥

**शुक्र शनि वा चन्द्रमा अष्टमके त्रिकोणमें स्थित हो केतुके साथ हो तो जातकके घरमें**

नरपतन शिथिल हो। यदि वहां पापग्रहसे युक्त शुक्र हो तो निद्रा स्त्री, गिरगिट तथा गौलि (विषखपरा) का पतन हो। मंगल हो तो स्वप्नमें कछुआ देख परे। बुधसे युक्त हो तो कुत्तेसे काटना कहे॥ ८१॥

### अथ गतिविचारः।

मन्दाहिध्वजसंयुते तु निधनस्थानाधिपेनान्विते
रिष्फे दुर्गतिमेति षष्ठपतिना दृष्टेऽथवा मानवः॥
जातो याति परं पदं सुरगुरौ लग्ने भृगौ कामगे
कन्यास्थे रजनीकरे यदि धनुर्लग्ने च मेषांशके॥ ८२॥

इदानीं जातस्यावसाने गतिविचारमाह—मन्दाहीति। निधनस्थानाधिपेन = अष्टमभावेशेन, अन्विते = सहिते, रिष्फे = द्वादशे भावे, मन्दाहिध्वजसंयुते = शनिराहुकेत्वन्यतमेन च सहिते अथवा तस्मिन् षष्ठेशेन दृष्टे जातो मानवोऽवसानकाले दुर्गतिं = यातनां (नरकम्) एति = प्राप्नोति।

अथ परं पदमाह—जात इति। सुरगुरौ = बृहस्पतौ लग्ने जन्मकालीनलग्ने, भृगौ= शुक्रे, कामगे = सप्तमगते, रजनीकरे = चन्द्रे, कन्यास्थे = कन्याराशिमुपगते सति जातो नरः परं पदं = निर्वाणपदं (मोक्षस्थानम्) यद् गत्वा पुनर्न निवर्त्तते तत्—

'यद् गत्वा न निवर्त्तन्ते तद्धाम परमं मम' ति श्रीभगवद्वचनात्। याति गच्छति।

अस्मिन्योगे लग्नं निर्दिशति—'यदि धनुर्लग्ने च मेषांशके' अर्थाद्धनूराशौ मेषनवांशे च (८।३°।२०′।०″) लग्नं स्यादिति। अस्यामवस्थायां गुरुः स्वराशौ लग्नगतः, शुक्रः स्वराशौ सप्तमगः, चन्द्रः षष्ठे कन्यागतश्च भवेदिति स्पष्टमेव॥ ८२॥

| | | |
|---|---|---|
| | १ ल. | मं. रा. श. |
| | दुर्गतियोगः | |
| ६ बु. | | ८ |

| | | |
|---|---|---|
| | ९ बृ. ल ३°।२०′ | |
| | परं पदयोगः | |
| ६ चं. | ७ शु. | |

द्वादश भाव शनि, राहु या केतुसे युक्त हो फिर अष्टमेशसे युक्त हो, अथवा षष्ठेशसे दृष्ट हो तो मरनेके बाद दुर्गति हो। वा बृहस्पति लग्नमें हो, शुक्र सप्तममें हो, कन्यापर चन्द्रमा हो यदि धनु लग्नमें मेषका नवांश हो तो जातक परम पद (मोक्ष) प्राप्त करे॥ ८२॥

दुःस्थे दुष्टगृहाधिपे बलयुते तद्भावपुष्टिं वदे-
दायुःस्थानपतौ तु यत्र विबले तद्भावनाशं तथा।
लग्नेशः शुभखेटवीक्षितयुतो यद्भावयातो बली
तद्भावस्य शुभं करोति विपुलं नीचारिगस्त्वन्यथा॥ ८३॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते पञ्चदशोऽध्यायः॥ १५॥

इदानीं ग्रहस्थितिवशाद्भावानां शुभाशुभत्वमाह—दुःस्थ इति। बलयुते = पूर्णबले दुष्टगृहाधिपे = षष्ठाष्टमद्वादशभावाधीशे, दुःस्थे = षष्ठाष्टमद्वादशान्यतमभावगते इति तद्भावपुष्टिं वदेत्। विबले = निर्बले, आयुःस्थानपतौ = अष्टमेशग्रहे तु यत्र भावे सति तद्भावस्य नाशं ब्रूयात्। निर्बलोऽष्टमेशो यद्भावगतः स्यात् तद्भावनाश इति भावः। बली लग्नेशः शुभखेटेन वीक्षितो वा युतो यस्मिन् भावे गतः स्यात् तद्भावस्य विपुलम्=अतीव, शुभं =

पुष्टिं करोति। स एव लग्नेशो नीचारिगो भूत्वा यद्भावगः स्यात्तस्यान्यथा—अशुभमेव करोतीति।
इति द्वादशभावफलविचारः।

पारिजाते सुधा टीका कपिलेश्वररञ्जिता। अध्याये पञ्चदशके पूर्त्ति भावफले गता ॥ १५ ॥

दुष्ट स्थानका स्वामी दुष्ट स्थानमें हो तो उस भावकी पुष्टि कहे। आयु स्थानका स्वामी जहां विबल होकर रहता है उस भावका नाश होता है। बली लग्नेश शुभग्रहसे दृष्ट युक्त होकर जिस भावमें प्राप्त हो उस भावका विशेष शुभ करता है। नीच, या शत्रु गृहका हो तो अन्यथा ( अशुभ ) फल देता है ॥ ८३ ॥

इति जातकपरिजाते पञ्चदशाध्याये 'विमला' हिन्दी टीका समाप्ता ॥ १५ ॥

---

## अथ स्त्रीजातकाध्यायः ॥ १६ ॥

श्रीबलारोग्यसन्तानविद्याकीर्तिविवर्द्धनम्।
तिथिभग्रहसंयुक्तं जातकं ब्रूमहे वयम् ॥ १ ॥
अर्थार्जने सहायः पुरुषाणामापदर्णवे पोतः।
यात्राकाले मन्त्री जातकमपहाय नास्त्यपरः ॥ २ ॥
श्रीमज्जातकपत्रिका परहितं व्योमाधिवासस्फुटैः
पञ्चाङ्गद्युचराष्टवर्गसहितस्थानादिषड्वीर्यजैः।
आयुर्गोचरयोगभावजफलैः सार्द्धं दशाचक्रजै-
र्दीर्घायुःसुतभर्तृसौख्यविपुलश्रीकीर्तिदा लिख्यते ॥ ३ ॥

अथाधुना स्त्रीजातकाध्यायो व्याख्यायते। तत्रादौ त्रिभिः श्लोकैर्जातकविवरणमुच्यते। श्रीबलारोग्येत्यादि। श्रियः = सम्पदः, बलानि = शौर्याणि, आरोग्यं = नैरुज्यम्, सन्तानाः = अपत्यानि, विद्याः, कीर्त्तयः = यशांसि, एतेषां विवर्द्धनं यतो ज्ञायते तं तिथिभग्रहसंयुक्तं तिथिनक्षत्रग्रहवशाज्जायमानं जातकं वयं ग्रन्थकर्त्तारो ब्रूमहे प्रकटयाम इति। जन्मकालिकग्रहतिथिनक्षत्रवशादेव सकलं शुभाशुभफलं सङ्घटत इति भावः। अयं हि जातकः पुरुषाणामर्थार्जने सहायो भवत्यर्थार्थः कश्चिज्जातकोक्तसमयेऽर्थार्जने प्रवृत्तो भवति स दुखेनार्थमुपार्जयति। अथवा जातकशास्त्रबलेन जातकविदां ( ज्योतिर्विदाम् ) पुरुषाणामर्थाः कुशलेन सिद्ध्यन्ति। आपदर्णवे पोतः = आपदो विपत्तेरर्णवः समुद्रस्तस्मिन् पोतस्तरणिः। जातकशास्त्रमेव पुरुषाणामापदवस्थायां परित्राणोपायं दर्शयतीति भावः। यात्राकाले मन्त्री। यथा मन्त्री नृपमधुनाऽनेन विधिना वर्त्तितव्यमधुनेदमाचरणीयमित्यादि विजयमार्गमुपदिशति तथैवैतज्जातकशास्त्रमात्मविहितमार्गे गच्छतां पुरुषाणां कौशल्यं प्रकटयतीत्यर्थः। अतएव पुरुषाणां धनोपार्जने सहायकः, आपदर्णवे पोतः, यात्राकाले मन्त्री जातकमपहाय = जातकशास्त्रं विना अपरो नास्ति, किन्तु जातकबलादेव अनिमतां सर्वं सम्पत्स्यत इति भावः। अत्र तृतीयश्लोकेन जातकपत्रिका-( जन्मपत्रिका ) लेखनोपकरणानि प्रदर्श्यन्ते। तात्कालिकाः स्पष्टग्रहाः, पञ्चाङ्गस्थिता ग्रहाः, ग्रहाणामष्टकवर्गाः, ग्रहाणां स्थानादिषड्बलानि, आयूंषि, योगाः, भावफलानि, दशाचक्राणि चैतैः सहिता दीर्घायुःसुतभर्तृसौख्यविपुलश्रीकीर्तिदा श्रीमज्जातकपत्रिका लिख्यते मनीषिभिरिति ॥ १-३ ॥

अब हम श्री, बल, आरोग्य, सन्तान, विद्या और कीर्तिको बढ़ानेवाला तिथि-नक्षत्र-ग्रहसे युक्त जातकको कहते हैं ॥ १ ॥

धनोपार्जनमें सहायक, पुरुषोंके आपत्ति रूपी समुद्रमें जहाज, यात्रा समयमें मंत्री जातकको छोड़ दूसरा नहीं है ॥ २ ॥

दूसरोंके उपकारके लिये दीर्घायु पुत्र-स्वामी-स्त्री-सुख विपुल श्री तथा यशको बताने वाली श्रीजातक पत्रिकाको लिखा है। जिसके अन्दर सभी स्पष्टग्रहके अष्टकवर्ग, षड्बल, आयु, गोचर, भावफल और अनेक दशाचक्र दर्शाये गये हैं ॥ ३ ॥

स्त्रीणां जन्मफलं नृयोगमुदितं यत्तत्पतौ योजयेत्-
तासां देहशुभाशुभं हिमकराल्लग्नाच्च वीर्याधिकात्।
भर्तॄणामगुणं गुणं मदगृहाच्छिद्राच्च तेषां मृतिम्
सौम्यासौम्यबलाबलेन सकलं सञ्चिन्त्य सर्वं वदेत् ॥ ४ ॥

इदानीं स्त्रीणां जातकफलान्युच्यन्ते। स्त्रीणां जन्मफलं = जन्मकालवशाज्जातं शुभाशुभं फलं यन्नृयोगं पुरुषसम्भवमुदितं तत्सर्वं तासां पतौ = स्वामिनि योजयेत्। एतदुक्तं भवति। स्त्रीषु यद्यत्फलमक्षमं तत्तत्तासां पतिविषये विजानीयात। यथा राजयोगादिकं पुरुषसम्भाव्यम्। अथ तासां स्त्रीणां देहशुभाशुभं = शरीरसौख्यदुःखं हिमकराच्चन्द्रवशाल्लग्नाज्जन्मलग्नाच्च वीर्याधिकादर्थाच्चन्द्रलग्नयोर्मध्ये यो बलवान् भवेत्तद्वशाच्छारीरिकं सुखदुःखं विचिन्त्यम्। चन्द्रे लग्ने वा शुभे शरीरसौख्यम्। लग्ने चन्द्रे वा विबले (क्रूरे) शरीरकष्टमिति ब्रूयात्। तासां स्त्रीणां भर्तॄणां = पतीनामगुणं = दोषं गुणं च मदगृहाज्जन्मलग्नात्सप्तमं यद्गृहं तस्मात्सप्तमभावाच्चिन्तयेत्। तेषां पतीनां, छिद्रादष्टमभावात् (स्त्रीणां जन्माष्टमगृहात्) मृतिः विवेचनीया। अन्यत्सकलं सौम्यासौम्यबलेन शुभपापबलेन सञ्चिन्त्य = विविच्य सर्वं शुभाशुभं वदेत्। यस्मिन् शुभबलाधिक्यं तच्छुभम्, यस्मिन्नशुभबलाधिक्यं तदशुभमिति ब्रूयादिति। तथाऽत्र वराहमिहिरः—

यद्यत्फलं नरभवेऽक्षममङ्गनानां तत्तद्वदेत्पतिषु वा सकलं विधेयम्।
तासां तु भर्तृमरणं निधने वपुस्तु लग्नेन्दुगं सुभगतास्तमये पतिश्च ॥ इति ॥४॥

पुरुषोंके योगफल जो कहे गये हैं वे स्त्रियोंके योगमें उसके पतिके वास्ते कहने चाहियें। स्त्रियोंके देहका शुभाशुभ फल लग्न या चन्द्रमामें अधिक बलीसे विचारे। सप्तमसे पतिके अगुण और गुणको विचारे। अष्टमसे पतिकी मृत्यु विचारे। यह शुभ और पापग्रहोंका बलाबल विचार कर सभी फल कहने चाहिये ॥ ४ ॥

स्त्रीणां जन्मनि लग्नशीतकरयोर्मध्ये बली यस्ततः
सम्पद्रूपबलानि तन्नवमतः पुत्रायवृद्धिं वदेत्।
सौमङ्गल्यमनिष्टमष्टमगृहाद् भर्तृश्रियं सप्तमात्
केचिद्भर्तृशुभाशुभं शुभगृहादिच्छन्ति होराविदः ॥ ५ ॥
वैधव्यं निधनेन लग्नभवनात्तेजो यशः सम्पदः
पुत्रं पञ्चमभावतः पतिसुखं कामेन केचिद्विदुः।
प्रव्रज्यामपि योषितामतिसुखं धर्मोपयातग्रहैः
शेषं भावजयोगजन्यमखिलं नारीनराणां समम् ॥ ६ ॥

स्त्रीणां, जन्मनि = जन्मकाले लग्नशीतकरयोः = जन्मलग्नचन्द्रयोर्मध्ये यो बली भवेत्तस्तस्माद्बलयुक्ताच्चन्द्राल्लग्नाद्वा स्त्रीणां सम्पदः = श्रियः, रूपमाकृत्यादि, बलानि = शौर्याणि ज्ञेयानि। तन्नवमतः = स्त्रीजन्मलग्नान्नवमभावतः पुत्रायवृद्धिं = पुत्रस्यात्मजस्यायस्य द्रव्यादेर्लाभस्य च वृद्धिं वदेत्। सौमङ्गल्यं = सौभाग्यं, अनिष्टं=मरणञ्चाष्टमगृहाच्चिन्त्यम्। सप्तमभावात्स्त्रीणां भर्तृश्रियं=पतिसौख्यं विचिन्तयेत्। अत्र केचित् होराविदो जातकशास्त्रवेत्तारो भर्तृशुभाशुभं स्त्रीणां शुभगृहान्नवमभावादिच्छन्ति। परं तन्नाचार्याभिमतं केचिदिति पदोपादानादिति। अतः सप्तमभावादेव पतिशुभाशुभं विचार्यमिति ॥ ५ ॥

निधनेन स्त्रीणामष्टमभावेन तासां वैधव्यं = पतिनिधनं विचार्यम्। लग्नभवनाज्जन्मलग्नात्तेजः = कान्तिः, यशः, सम्पदः=श्रियो विचार्याः। पञ्चमभावतः पुत्रमपत्यं चिन्तयेत्। कामेन = सप्तमभावेन पतिसुखं चिन्त्यम्। इति केचिदन्ये विज्ञा ऊचुः। धर्मोपयातग्रहैः = नवमभावस्थितग्रहैस्तत्र बलवद्ग्रहवशात्, योषितां = स्त्रीणां, प्रव्रज्यां = सन्यासं अपि चातिसुखं विचिन्त्यम्। शेषमवशिष्टं भावजं फलं योगजन्यं चाखिलं फलं, नारीनराणां = स्त्रीपुरुषाणां, समम् = समानमेव भवति। न च तेषु कश्चिद्भेद इति ॥ ६ ॥

स्त्रियोंके जन्मसमय लग्न और चन्द्रमामें जो बली हो उससे धन, रूप और बल और उसके नवमे भावसे पुत्र और आयकी वृद्धिको कहे। अष्टम गृहसे शुभ और अनिष्ट कहे। सप्तम गृहसे स्वामीका शुभाशुभ कहे। किसीका मत है कि नवम भवनसे स्वामीका शुभाशुभ फल कहे ॥ २ ॥

अष्टमसे वैधव्य योग, लग्नसे तेज-यश-सम्पति विचारे। पञ्चम भावसे पुत्र विचारे। सप्तमसे पतिका सुख विचारना किसीका मत है। नवममें प्राप्तग्रह-( संन्यास ) से प्रव्रज्या और स्त्रियोंका विशेष सुख विचारे। शेष भावोंके फल स्त्री और पुरुषके समान हैं ॥ ६ ॥

युग्मे लग्ननिशाकरौ यदि वरस्त्री रूपशीलान्विता
सौम्यालोकितसंयुतौ गुणवती साध्वी च सम्पद्युता।
ओजर्क्षे पुरुषाकृतिश्च चपला पुंश्चेष्टिता पापिनी
पापव्योमचरेण वीक्षितयुतौ जाता दुराचारिणी ॥ ७ ॥
लग्नेन्दू विषमर्क्षगौ शुभयुतौ सौम्यग्रहालोकितौ
नारी मिश्रगुणाकृतिः स्थितिगतिप्रज्ञावती जायते।
युग्मागारगतौ तु पापसहितौ पापेक्षितौ वा तथा
तद्राशीशयुतेक्षकग्रहबलादाहुः समस्तं विदः ॥ ८ ॥

इदानीं लग्नेन्दुवशात्स्त्रीफलमाह। यदि लग्ननिशाकरौ = स्त्रिया जन्मलग्नं चन्द्रश्च, युग्मे=समराशौ ( २।४।६।८।१०।१२ राशीनामन्यतमे ) स्यातां तदा जाता स्त्री, वरस्त्रीरूपशीलान्विता भवति। तौ युग्मगतौ लग्नेन्दू सौम्यैः शुभग्रहैरालोकितौ दृष्टौ वा संयुतौ भवेतां तदा स्त्री गुणवती साध्वी सम्पद्युता च भवति। ओजर्क्षे इति। तौ लग्नेन्दू यदि ओजर्क्षे = विषम-( १।३।५।७।९।११ ) राशौ भवेतां तदा जाता स्त्री, पुरुषाकृतिः = पुरुषस्वभावा, चपला=चाञ्चल्ययुक्ता, पुंश्चेष्टिता=पुंश्चली, पापिनी च भवति। तौ लग्नेन्दू विषमर्क्षगौ, पापव्योमचरेण = पापग्रहेण, विक्षितौ = दृष्टौ, वा युतौ = सहितौ भवेतां तदा जाता स्त्री दुराचारिणी दुष्कर्मकर्त्री भवति। तथा च—फलदीपिकायाम्—

'उदयहिमकरौ द्वौ युग्मगौ सौम्यदृष्टौ सुतनयपतिभूषा—सम्पदुत्कृष्टशीला।
अशुभसहितदृष्टौ चौजगौ पुंस्वभावा कुटिलमतिरवश्या भर्तृघ्ना दरिद्रा' ॥ इति।

तौ लग्नेन्दू, विषमर्क्षगौ शुभग्रहेण युतौ, सौम्यग्रहालोकितौ वा भवेतां तदा जाता नारी= स्त्री, मिश्रगुणाकृतिः=स्त्री-पुरुषोभयाकृतिगुणयुक्ता तथा स्थितिगतिप्रज्ञावती=दिग्देशकालादिबुद्धियुक्ता जायते। तावेव लग्नेन्दू, युग्मागारगतौ=समराशिगतौ, पापसहितौ वा पापदृष्टौ भवेतां तदा तथाऽर्थात्पूर्वोक्त-(मिश्रगुणाकृतिरित्यादि) फलयुक्ता भवति। अथ तद्राशीशयुतेक्षकग्रहबलात्=तस्याः कन्याया यो राशीशश्चन्द्राधिष्ठितराशिपतिस्तत्र यस्य यस्य ग्रहस्य योगो दृष्टिश्च भवति, तेषु बलीयसो ग्रहस्यानुरूपं समस्तं फलंविदो होराशास्त्रज्ञा वदन्ति ॥ ७-८ ॥

यदि सम राशिमें लग्न और चन्द्रमा दोनों हों तो श्रेष्ठ स्त्रीके रूप और शीलसे स्त्री युक्त हो। यदि उसे शुभग्रह देखते हों तो वह स्त्री गुणवती साध्वी और संपत्ति युक्त हो। लग्न और चन्द्रमा यदि विषम राशिमें हों तो स्त्री पुरुषकी आकृतिवाली, चंचल, पर-पुरुष पर चेष्टा

करनेवाली, पापिनी होती है। पापग्रहसे दृष्ट-युत हों तो वह स्त्री व्यभिचारिणी होती है॥७॥

लग्न और चन्द्रमा विषम राशिमें हों शुभग्रहसे युक्त हों और उन्हें शुभग्रह देखते हों तो स्त्री मिश्रित गुण, आकृति, स्थिति, चाल और बुद्धिवाली होती है। यदि दोनों युग्म (सम) राशिमें हों पापग्रहसे युक्त हों वा पापग्रह उन्हें देखता हो तो भी मिश्र गुणादि कहे। उस समय जन्म राशिपति पर जिस ग्रहका योग या दृष्टि हो उस ग्रहके बलानुसार विद्वान् समस्त फल कहते हैं॥ ८॥

ओजे विलग्ने पुरुषैर्बलिष्ठैर्बलान्वितैश्चन्द्रबुधासुरेज्यैः।
सामान्यशक्तौ सति सूर्यपुत्रे जाता हि तस्या बहवो धवाः स्युः॥ ९॥

इदानीं कुलटायोगमाह—ओज इति। ओजे विलग्ने = विषमराशिके जन्मलग्ने, पुरुषैः (रविभौमगुरुभिः) ग्रहैः यत्र तत्र बलिष्ठैः = स्थानादिवीर्ययुक्तैः, चन्द्रबुधासुरेज्यैः = चन्द्रबुधशुक्रैः, बलान्वितैः = सबलैः, सूर्यपुत्रे = शनैश्चरे, सामान्यशक्तौ = साधारणबलयुक्ते सति जाता = या स्त्री जायते, तस्याः स्त्रियाः, हि = निश्चयेन बहवो धवाः = स्वामिनो भवन्ति। इत्थं भूते योगे जाता कन्या अनेकान् पतीन् वृणुते। कुलटा भवतीत्यर्थः॥ ९॥

विषम राशिमें लग्न हो पुरुष ग्रह बली हों चन्द्रमा, बुध तथा शुक्र बलवान् हों, शनि सामान्य शक्ति युक्त हो तो उत्पन्न होनेवाली स्त्रीके बहुत पति होवें॥ ९॥

युग्मे विलग्ने कुजसौम्यजीवशुक्रैर्बलिष्ठैः खलु जातकन्या।
विख्यातनाम्नी सकलार्थतत्त्वबुद्धिप्रसिद्धा भवतीह साध्वी॥ १०॥

इदानीं साध्वीस्त्रीयोगमाह—युग्म इति। युग्मे विलग्ने=समराशिके लग्ने, कुजसौम्यजीवशुक्रैः=मङ्गलबुधगुरुशुक्रैः, बलिष्ठैर्यत्र तत्रस्थैः, जातकन्या=तदानीं जनिता कन्या, खलु=निश्चयेन, विख्यातनाम्नी = लोकेषु गीयमाना, सकलार्थानां तु तत्त्वबुद्धौ=सारावगमे प्रसिद्धा, साध्वी = सती (सदाचारवती) च भवति॥ १०॥

सम राशि लग्नमें, मंगल, बुध, गुरु और शुक्र बलवान् हों तो उत्पन्न कन्या निश्चय विख्यात नामवाली, सकल अर्थ, तत्त्व बुद्धिमें प्रसिद्धा तथा साध्वी होती है॥ १०॥

सौरे मध्यबले बलेन रहितैः शीतांशुशुक्रेन्दुजैः
शेषैर्वीर्यसमन्वितैः पुरुषिणी यद्योजराश्युद्गमे।
जीवारास्फुजिदैन्दवेषु बलिषु प्राग्लग्नराशौ समे
विख्याताखिलशास्त्रयुक्तिकुशला स्त्री ब्रह्मवादिन्यपि॥ ११॥

इदानीं पुरुषिणीयोगं ब्रह्मवादिनीयोगञ्चाह—सौर इति। सौरे=शनौ, मध्यबले=सामान्यबलसहिते, शीतांशुशुक्रेन्दुजैः=चन्द्रशुक्रबुधैर्यत्र तत्र, बलेन रहितैः=निर्बलैः, शेषैः= सूर्यभौमगुरुभिर्यत्र तत्र गतैर्वीर्यसमन्वितैः=सबलैः, यद्योजराश्युद्गमे=यदि विषमराशिरुद्गमे लग्ने भवति (१।३।५।७।९।११ राशीनामन्यतमे लग्न इत्यर्थः) तदा जाता स्त्री पुरुषिणी= विविधपुरुषा भवतीति। ब्रह्मवादिनीमाह—जीवारास्फुजिदैन्दवेषु=गुरुभौमशुक्रबुधेषु, यत्र तत्र बलिषु, प्राग्लग्नराशौ समे=जन्मलग्ने सम-(२।४।६।८।१०।१२ एतदन्यतम) राशौ सति जाता स्त्री विख्याताखिलशास्त्रयुक्तिकुशला=प्रसिद्धानि चाखिलानि शास्त्राणि तेषां युक्तिषु (विवेकेषु) कुशला (प्रौढमतिः), ब्रह्मवादिन्यपि = मोक्षशास्त्रेऽपि दक्षा भवतीति॥ ११॥

शनि मध्यबली हो, चन्द्र-शुक्र और बुध बलसे हीन हों, शेष ग्रह बलयुक्त हों, यदि विषम राशिके लग्नमें जन्म हो तो पुरुषिणी (परपुरुषगामिनी) हो। समराशिमें प्रथम लग्न हो और बृहस्पति, शुक्र, बुध बलवान् हों तो वह स्त्री विख्यातनाम्नी, सम्पूर्ण शास्त्र युक्ति में कुशल और ब्रह्मवादिनी होवे॥ ११॥

अथ त्रिंशांशफलम् ।

लग्ने भौमगृहं गते शशिनि वा वीर्याधिके भूसुते
त्रिंशांशप्रभवाऽबला यदि दुराचारप्रयुक्ता भवेत् ।
प्रेष्या भानुसुतांशके गुणवती साध्वी च जीवांशके
सौम्यांशे मलिना सितांशजवधूर्जारव्रताचारिणी ॥ १२ ॥
लग्ने भार्गवराशिगे कलहकृद् दुष्टा कुजस्यांशके
साध्वी पुत्रवती पुरन्दरगुरोरंशे पुनर्भूः शनेः ।
सौम्यस्यांशसमुद्भवाऽखिलकलासङ्गीतवाद्यप्रिया
शुक्रांशे बुधवल्लभा च सुभगा लोकप्रिया जायते ॥ १३ ॥
त्रिंशांशेऽवनिजस्य बोधनगृहे लग्ने तु पुत्रान्विता
मन्दांशे विधवाऽथवा मृतसुता क्लीबाकृतिस्थाऽसती ।
जैवे भर्तृपरा बुधस्य तरुणी विख्याततेजस्विनी
शौक्रे चारुतराम्बराभरणगोवित्तप्रसिद्धा भवेत् ॥ १४ ॥
लग्ने चन्द्रगृहं गते बलवति क्षोणीसुतस्यांशके
जाता जारविनोदशीलरसिका पापेक्षिते शीतगौ ।
विश्वस्ता रविजस्य निर्जरगुरोरल्पायुरल्पात्मजा
बौधे शिल्पकलावती भृगुसुतत्रिंशांशके कामुकी ॥ १५ ॥
भानुक्षेत्रगते तनौ शशिनि वा भूनन्दनस्यांशके
नारी पुम्प्रकृतिस्थिता च कुलटा मन्दांशके दुःखिता ।
जीवांशे नृपवल्लभा गुणवती सौम्यस्य पुंश्चेष्टिता
दुष्टा चासुरवन्दितस्य कुपतिस्नेहान्विता रोगिणी ॥ १६ ॥
वागीशस्य गृहोदये वसुमतीपुत्रस्य भागोद्भवा
विख्याता परिचारिणी रविसुतस्यांशे दरिद्रा भवेत् ।
जीवांशे धनवस्त्रभूषणवती सौम्यस्य सम्पूजिता
साध्वी दानवमन्त्रिणः सुतवती सद्वस्त्रभूषान्विता ॥ १७ ॥
लग्ने मन्दगृहे बलिन्यवनिजत्रिंशांशके शोकिनी
मन्दांशे सति दुर्भगा निजकुलाचारानुरक्ता गुरोः ।
सर्वज्ञा कुलटा बुधांशजनिता शुक्रस्य वन्ध्या सती
लग्नेन्दुस्फुटयोगतस्तु सकलत्रिंशांशजं वा वदेत् ॥ १८ ॥

अधुना स्त्रीजातके त्रिंशांशफलान्युच्यन्ते। तत्र प्रतिराशि ताराग्रहाणां त्रिंशांशे गतस्य लग्नस्य फलानि ज्ञेयानि। वीर्याधिके=बलीयसि, लग्ने वा शशिनि, भौमगृहं=मेषवृश्चिकयोरन्यतरं गते तस्मिन् भूसुतस्य=मङ्गलस्य त्रिंशांशे, प्रभवा=जनिता, अबला=स्त्री, दुराचारप्रयुक्ता=दुराचार-(व्यभिचार) कर्मणि निरता भवेत्। अन्यत्सर्वं स्पष्टमेव । एतदर्थं चक्रं विलोक्यम् ॥१२-१८॥

यदि लग्न वा चन्द्रमा मङ्गलकी ( १।८ ) राशिमें हो बली हो तो मङ्गलके त्रिंशांशमें उत्पन्न होनेवाली दुराचारमें युक्त हो। शनिके त्रिंशांशमें हो तो दूती हो। गुरुके त्रिंशांशमें हो तो गुणवती हो। बुधके त्रिंशांशमें मलिना, शुक्रके त्रिंशांशकी स्त्री जारव्रतका आचरण करती है ( व्यभिचारिणी होती है ) ॥ १२ ॥

लग्नमें शुक्रकी ( २।७ ) राशि हो तो मङ्गलके त्रिंशांशमें कलह करनेवाली दुष्टा हो। गुरुका त्रिंशांश हो तो साध्वी, पुत्र-वती हो। शनिका अंश हो तो पुनर्भू हो। बुधका अंश

हो तो सम्पूर्ण कला संगीत और वाद्यकी प्रिया हो। शुक्रका अंश हो तो पण्डितकी स्त्री, सुन्दरी और लोकमें आदरणीया हो ॥ १३ ॥

बुध का गृह ( ३।६ ) लग्नमें हो तो मङ्गलके त्रिंशांशमें पुत्रसे युक्ता हो। शनिका अंश हो तो विधवा वा मृतवत्सा हो। नपुंसकीके समान और पापिनी हो। गुरुके अंशमें हो तो स्वामीमें तत्पर रहे। बुधके त्रिंशांशकी स्त्री विख्यात तेजवाली हो। शुक्रके त्रिंशांशकी सुन्दर वस्त्र-भूषण-यौवनसे प्रसिद्धा हो ॥ १४ ॥

लग्न चन्द्रमाके गृह ( कर्क ) में हो तो मङ्गलके त्रिंशांशमें स्त्री बली हो। चन्द्रमा पापग्रहसे देखा जाता हो उस समय उत्पन्न कन्या जार पुरुषसे विनोद करनेवाली हो। शनिके त्रिंशांशमें विश्वस्ता, बृहस्पतिके त्रिंशांशमें अल्प आयुवाली तथा अल्प पुत्रवाली होती है। बुधके त्रिंशांशमें शिल्पकला जाननेवाली, शुक्रके त्रिंशांशमें विशेष कामिनी होती है ॥१५॥

सूर्यके गृह ( सिंह ) में लग्न वा चन्द्रमा हो उसमें मङ्गलका त्रिंशांश हो तो स्त्री पुरुषके समान प्रकृतिवाली और कुलटा हो। शनिके त्रिंशांशमें हो तो दुःखिनी हो। गुरुके त्रिंशांशमें हो तो राजाकी स्त्री, गुणवती हो। बुधके त्रिंशांशमें हो तो पुरुषकी इच्छा करनेवाली हो। शुक्र त्रिंशांशका हो तो दुष्टा, जारके प्रेममें तत्पर तथा रोगिणी हो ॥ १६ ॥

बृहस्पतिका गृह ( धनु या मीन ) लग्न हो मङ्गलके त्रिंशांशमें उत्पन्न हो तो भाग्यवती, विख्यात तथा परिवार युक्ता हो। शनिके अंशमें दरिद्रा हो। बृहस्पतिके अंशमें हो तो धन-वस्त्र-भूषणवाली हो। बुधके अंशमें हो तो सुपूजिता हो। शुक्रके अंशमें साध्वी पुत्रवती और सुवस्त्र भूषणसे युक्ता हो ॥ १७ ॥

लग्न शनिका गृह ( मकर या कुम्भ ) हो, उसमें बलवान् मंगलका त्रिंशांश हो तो शोक युक्ता हो। शनिका अंश हो तो दुर्भगा हो। बृहस्पतिका अंश हो तो निज कुलाचारमें अनुरक्ता हो। बुधके अंशमें उत्पन्न हो तो सर्वज्ञा और कुलटा वह स्त्री हो। शुक्रके अंशमें बन्ध्या और पतिव्रता हो। स्पष्ट लग्न और चन्द्रमाके योगसे भी समस्त त्रिंशांश अनित फल कहा है॥१८॥

## स्त्रीजातके लग्नत्रिंशांशफलचक्रम् ।

| लग्नराशयः चन्द्रराशयो वा | भौमत्रिंशांशफलम् | शनित्रिंशांश फलम् | गुरुत्रिं-फलम् | बुधत्रि-फलम् | शुक्रत्रि-फलम् |
|---|---|---|---|---|---|
| भौमगृहे १।८ मे. वृश्चिक. | दुराचारिणी | प्रेष्या | गुणवती, साध्वी | मलिना | जारिणी |
| शुक्रगृहे २।७ वृ. तु. | कलहकृत, दुष्टा | पुनर्भूः | साध्वी, पुत्रिणी | कलावती | सुभगा, लोकप्रिया, पण्डिता |
| बुधगृहे ३।६ मि. कन्या. | पुत्रान्विता | विधवा अपुत्रा वा | भर्तृपरा | तेजस्विनी | मनोरमा |
| चन्द्रगृहे ४ कर्क | बलवती आरिणी | विश्वस्ता | अल्पायुरल्पात्मजा | शिल्पकलावती | कामुकी |
| सूर्यक्षेत्रे ५ सिंहे | पुम्प्रकृतिः, कुलटा | दुःखिता, | नृपवल्लभा | पुंश्चेष्टिता | दुष्टा, रोगिणी |
| गुरुगृहे ९।१२ ध. मी. | विख्याता, सपुत्रा, | दरिद्रा | धनवस्त्रभूषणवती | सम्पूजिता | साध्वी, पुत्रवती |
| शनिगृहे १०। ११ म. कु. | शोकिनी | दुर्भगा | कुलीना | सर्वज्ञा, कुलटा | बन्ध्या, सती |

आग्नेयैर्विधवाऽस्तराशिसहितैर्मिश्रैः पुनर्भूर्भवेत्
क्रूरे हीनबलेऽस्तगे स्वपतिना सौम्येक्षिते प्रोज्झिता ।
अन्योन्यांशकयोः सितावनिजयोरन्यप्रसक्ताङ्गना
द्यूने वा यदि शीतरश्मिसहिते भर्तुस्तदाऽनुज्ञया ॥ १६ ॥

इदानीं विधवा-पुनर्भू-भर्तृत्यक्तयोगानाह—आग्नेयैरिति । आग्नेयैः = पापग्रहैः, अस्तराशिसहितैः = सप्तमस्थानगतैः, विधवा भवति । मिश्रैः = शुभैः पापैश्च सप्तमस्थैः, पुनर्भूर्भवेत् ( पुनर्भूलक्षणमग्रिमश्लोके द्रष्टव्यम् ) पुनरन्येन परिणीता भवेत् । हीनबले, क्रूरे = पापग्रहे, अस्तगे=सप्तमभावगे, तथाभूते केनचित् सौम्येन = शुभग्रहेण, ईक्षिते = दृष्टे स्त्री, स्वपतिना प्रोज्झिता = स्वभर्त्रा परित्यक्ता स्यात् । अन्योन्येति । सितावनिजयोः= शुक्राङ्गारकयोः, यत्र तत्रान्योन्यांशगयोः शुक्रनवांशे भौमः, भौमनवांशे शुक्रो भवेत्तदा सा अङ्गना = स्त्री, अन्यप्रसक्ता=परपुरुषरक्ता भवति । वा यदि तौ सितावनिजौ, शीतरश्मिना= चन्द्रेण, सहितौ, द्यूने = सप्तमे भावे भवेतां तदा सा स्त्री, भर्तुरनुज्ञया=पतिनिर्देशेन पर-पुरुषमुपयाति न तु स्वेच्छयेति । तथा जातकाभरणे—

अन्योन्यांशावस्थितौ भौमशुक्रौ स्यातां कान्तासङ्गताऽन्येन नूनम् ।
चन्द्रोपेतौ शुक्रवक्रौ स्मरस्थावाज्ञैव स्यात् स्वामिनश्चामनन्ति ॥ १९ ॥

सातवां भाव यदि पापग्रहोंसे युक्त हो तो स्त्री विधवा हो । यदि पापग्रह, शुभग्रह दोनों हों तो दो वार ब्याही जाय या अनेक पतिवाली हो । बलरहित क्रूरग्रह सप्तम गृहमें हो उसे शुभग्रह देखता हो तो अपने पतिसे त्यागी जाय ( उसका स्वामी उसको छोड़ दे ) । शुक्र और मंगल परस्पर एक दूसरेके अंशमें हों तो अन्य पुरुषमें वह स्त्री प्रसक्त रहे । यदि दोनों सप्तम भवनमें चन्द्रमासे युक्त हो तो पतिकी आज्ञासे पर पुरुष संगिनी हो ॥ १९ ॥

स्वैरिणी या पतिं त्यक्त्वा सवर्णं कामतः श्रयेत् ।
अक्षतं च प्रजाद्वारं पुनर्भूः संस्कृता पुनः ॥ २० ॥

इदानीं स्वैरिणी-पुनर्भूलक्षणमुच्यते । या स्त्री स्वकीयं पतिं त्यक्त्वा कामतः = स्वेच्छया, सवर्णं = निजवर्णतुल्यमन्यं पुरुषं श्रयेत् सा स्वैरिणी भवति । अक्षतमिति । विवाहितायाः यस्याः स्त्रियाः प्रजाद्वारं = यतः प्रजाः ( अपत्यानि ) निःसरन्ति, 'योनिरिति यावत्' अक्षतं = पुरुषसङ्गमेन-( मैथुनेन ) रहितं स्यात् सा स्त्री पुनरन्येन पुरुषेण संस्कृता = विवाहिता भवति तदा सा 'पुनर्भूः' भवतीति ॥ २० ॥

जो स्त्री अपने पतिको छोड़कर कामसे ( अपनी इच्छासे ) सवर्ण ( अपने जातिके ) अन्य पुरुषका सेवन करे वह स्वैरिणी कहलाती है । प्रथम पतिसे यदि स्त्रीकी योनि अक्षत (मैथुन रहित) हो तो उसकी दूसरी शादी होती है, इस लिये उसका नाम पुनर्भू होता है ॥

सौरारर्क्षे लग्नगे सेन्दुशुक्रे मात्रा सार्द्धं पुंश्चली पापदृष्टे ॥
कौजे स्वेंऽशे सौरिणा व्याधियोनिश्चारुश्रोणी वल्लभा सद्ग्रहांशे ॥ २१ ॥

इदानीं जनन्या सह पुंश्चली-व्याधियोनि-सुभगायोगानाह—सौरारर्क्ष इति । सौरारर्क्षे = शनिभौमराशौ ( १०।११।१।८ एषामन्यतमराशौ ) लग्नगते तस्मिन्, सेन्दुशुक्रे = चन्द्रशुक्राभ्यां सहिते, तथाभूते पापदृष्टे = केनचित्पापग्रहेण निरीक्षिते च जाता स्त्री, मात्रा सह पुंश्चली = जनन्या सहितैव परपुरुषगामिनी स्यात् । कौज इति । अस्तांशे = लग्नात्सप्तमे राशौ यन्नवांशो भवति तस्मिन्, कौजे = कुजसम्बन्धिके, अर्थात्सप्तमे राशौ भौमनवांशे सति तस्मिन्, सौरिणा = शनिना दृष्टे स्त्री व्याधियोनिः = सरोगभगा भवति । चारुश्रोणी वल्लभा सद्ग्रहांशे = तस्मिन् सप्तमे भावे शुभग्रहस्य नवांशे सति स्त्री चारुश्रोणी ( सुन्दरकटियुक्ता ) वल्लभा = भर्तृप्रिया च भवति । तथा च सारावल्याम्—

सौरारगृहे तद्वत् शशिनि सशुक्रे विलग्नगे जाता । मात्रा साकं कुलटा क्रूरग्रहवीक्षिते भवति ॥
द्यूने तु कुजनवांशे शनिना दृष्टे सरोगयोनिः स्त्री ।
सद्ग्रहभागे चारुश्रोणी पतिवल्लभा भवति ॥ २१ ॥

शनि या मङ्गलकी राशिमें लग्न हो वहां शुक्र चन्द्रमाके सहित हो, उसे पापग्रह देखते हों तो वह स्त्री माताके सहित पुंश्चली हो । सातवेंमें मङ्गलके नवांशको शनि देखता हो तो योनिमें व्याधि हो । यदि शुभ ग्रहके अंशमें हो तो स्त्रीकी कमर रमणीय हो और वह पतिकी प्यारी होवे ॥ २१ ॥

बलहीनेऽस्तगे पापे सौम्यग्रहनिरीक्षिते ।
पत्या विसृज्यते नारी नीचारिस्थे च वैरिणी ॥ २२ ॥

श्लोकोऽयं सरलार्थोऽपि च १६ तमश्लोकस्य द्वितीयपदे गतार्थो भवतीति ॥ २२ ॥

निर्बल पापग्रह सप्तम स्थानमें हो उसे शुभग्रह देखते हों तो वह स्त्री पतिसे त्यागी जाय । यदि नीच या शत्रु-स्थानमें वह पापग्रह हो तो वह पतिकी वैरिणी हो ॥ २२ ॥

उत्सृष्टा मदनस्थिते दिनकरे शत्रुग्रहालोकिते
ऽविश्वस्ताऽवनिजे वधूरमणयोरन्योन्यवैरं तु वा ।
सौम्यासौम्ययुते कलत्रभवने जाता पुनर्भूः शनौ
कामस्थे रिपुवीक्षिते त्वविधवा जाता जरां गच्छति ॥२३॥

इदानीं स्त्रीजातके सप्तमभावफलं ग्रहपरत्वेनोच्यते-उत्सृष्टेति । दिनकरे = सूर्ये, मदनस्थिते = सप्तमभावमुपगते, तस्मिन् , शत्रुग्रहेणालोकिते सति स्त्री पतिना उत्सृष्टा = त्यक्ता भवति । अवनिजे=भौमे, मदनस्थिते शत्रुग्रहालोकिते च स्त्री अविश्वस्ता, वा तत्र वधूरमणयोः=स्त्रीपुंसोरन्योन्यवैरं=परस्पर विद्वेषो भवति । कलत्रभवने = सप्तमे भावे, सौम्यासौम्ययुते=शुभपापग्रहैः सहिते सति जाता स्त्री पुनर्भूः=पत्यन्तरकर्त्री, भवति । शनौ, कामस्थे= सप्तमभावस्थे, रिपुणा वीक्षिते च सति जाता स्त्री तु अविधवा सती (कुमारिकैव ) बाल्य इति यावत् जरां वृद्धत्वं गच्छति । अर्थाच्छनिः सप्तमे पापदृष्टो भवेत्तदा कुमारिकैव स्त्री वृद्धात्वमुपयाति । तस्या विवाहो न भवेदित्यर्थः । तथा बृहज्जातके—

'उत्सृष्टा रविणा, कुजेन विधवा बाल्येऽस्तराशिस्थिते ।
कन्यैवाशुभवीक्षितेऽर्कतनये द्यूने जरां गच्छति' इति ॥ २३ ॥

सूर्य सप्तममें हो उसका शत्रु उसे देखता हो तो वह स्त्री उत्सृष्टा ( त्यागी ) हो । मङ्गल हो तो विश्वाससे हीन अथवा स्त्रीपुरुषमें परस्पर वैर हो । सप्तम भवनमें शुभ अशुभ दोनों प्रकारके ग्रह हों तो पुनर्भू हो । शनि सप्तम स्थानमें शत्रुसे देखा जाता हो तो बुढापा तक कुमारी रहती है ॥ २३ ॥

पापर्क्षे मदनस्थिते शनियुते वैधव्यमेत्यङ्गना
जारासक्तविलासिनी सितकुजावन्योन्यराश्यंशगौ ॥
चन्द्रे कामगृहं गते तु पतिना सार्द्धं दुराचारिणी
मन्दारर्क्षविलग्नौ शशिसितौ वन्ध्या सुतस्थे खले ॥ २४ ॥

पापर्क्षे इति । मदनस्थिते = सप्तमभावगते, पापर्क्षे = पापग्रहर्क्षे, शनियुतेऽर्थात्सप्तमो भावः पापराशिस्तत्र शनिः स्थितो भवेत्तदा, अङ्गना = जायमाना कन्या, वैधव्यमेति=भर्तृमरणं प्राप्नोति । जारिणीमाह । सितकुजौ = शुक्रमङ्गलौ, अन्योन्यराश्यंशगौ=शुक्रः कुजराशिनवांशगतः, कुजः शुक्रराशिनवांशगतः स्यात्तदा जाता स्त्री, जारासक्तविलासिनी=परपुरुषरतामोदवती भवति । दम्पत्योः व्यभिचारित्वमाह । चन्द्रे, कामगृहं=सप्तमभावं गते तु स्त्री पतिना सार्द्धं दुराचारिणी भवति । चन्द्रमा यदि स्त्रीजातके सप्तमे भवेत्तदा सा स्त्री

व्यभिचारिणी, तत्पतिश्च व्यभिचारी भवति । बन्ध्यामाह । शशिसितौ = चन्द्रशुक्रौ, मन्दारर्क्षविलग्नगौ = शनिभौमराशिके ( १०।११।१।८, एषामन्यतमे राशौ ) लग्ने व्यवस्थितौ भवेतां, खले=रविभौमशनीनामन्यतमे सुतस्थे=पञ्चमभावगते सति जाता स्त्री बन्ध्या=सन्ततिरहिता भवति, सा न जातु प्रसूत इत्यर्थः । तथा होरारत्ने—

अन्योन्यांशे सितारौ चेज्जारासक्ता भवेद्वधूः । तथैव सप्तमे चन्द्रे दुश्चरी पतिना सह ॥
मन्दारर्क्षे विलग्नस्थौ शशिशुक्रौ यदा तदा । बन्ध्या भवति सा नारी पञ्चमे पापसंयुते॥२४॥

सप्तम गृह पापराशि हो उसपर शनि हो तो स्त्री विधवा होवे । शुक्र और मङ्गल अन्योन्य राशि ( शुक्रकी राशि वृष या तुलामें मङ्गल, मङ्गलकी राशि मेष या वृश्चिकमें शुक्र ) हो तो जार पतिमें आसक्त और विलासवती होती है । चन्द्रमा सप्तममें हो तो पतिके साथ व्यभिचारिणी ( स्त्री पति दोनों लम्पट ) हो । चन्द्रमा और शुक्र यदि शनि या मङ्गल की राशि गत लग्नमें प्राप्त हों तथा पञ्चममें पापग्रह हो तो बन्ध्या हो ॥ २४ ॥

कलत्रराश्यंशगते महीजे मन्देक्षिते दुर्भगमेति कन्या ॥
शुक्रांशके सौम्यदृशा समेते कलत्रराशौ पतिवल्लभा स्यात् ॥ २५ ॥

इदानीं दुर्भगा-पतिवल्लभायोगावाह-कलत्रेति । महीजे=मङ्गले यत्र तत्र कलत्रराशेः = सप्तमभावस्य, अंशगते=नवांशगते, मन्देन=शनिना, ईक्षिते=दृष्टे सति जाता कन्या दुर्भगं = कुत्सितयोनिम्, एति = प्राप्नोति । अस्मिन्योगे जाता दुर्भगा भवतीत्यर्थः । शुक्रांशक इति । महीजे कलत्रराशौ=सप्तमभावे शुक्रस्यांशगते, तस्मिन्सौम्यस्य=शुभग्रहस्य, दृशा=दृष्ट्या, समेते सति जाता स्त्री पत्युः वल्लभा प्रियतमा स्यात् ॥ २५ ॥

सप्तम भाव राशिके नवांशमें मङ्गल हो उसको शनि देखता हो तो वह कन्या दुर्भगा ( खराब योनिवाली ) हो । यदि ७ वें भावमें मङ्गल शुक्रांशमें हो उसे शुभग्रह देखते हों तो पतिवल्लभा हो ॥ २५ ॥

भौमागारविलग्नगौ शशिसितौ नारी पतिद्वेषिणी
चन्द्रज्ञौ परतत्त्ववादचतुरा भौमेन्दुजौ भोगिनी ।
चन्द्रज्ञासुरवन्दिता यदि सुखद्रव्यान्विता लग्नगा
वागीशो यदि लग्नगः सुतनया प्रज्ञाविभूषान्विता ॥ २६ ॥

भौमागारेति । शशिसितौ = चन्द्रशुक्रौ, भौमागारविलग्नगौ = मङ्गलराशिके जन्मलग्ने गतौ ( मेषे वृश्चिके वा गतावित्यर्थः ) भवेतां तदा जाता नारी पतिद्वेषिणी = भर्तृविरोधिनी भवति । चन्द्रज्ञौ = चन्द्रबुधौ, यदि भौमागारविलग्नगौ भवेतां तदा परतत्त्ववादचतुरा = ब्रह्मवाद-( मोक्षशास्त्र- ) कुशला भवति । भौमेन्दुजौ = मङ्गलबुधौ, भौमागारविलग्नगौ भवेतां तदा, भोगिनी=सुखिनी भवति । अथ चेत् यदि चन्द्रज्ञासुरवन्दिताः = चन्द्रबुधशुक्राः, लग्नगाः=यस्मिंस्तस्मिन् जन्मलग्ने गता भवेयुस्तदा स्त्री सुखद्रव्यान्विता भवति । यदि वागीशो गुरुः लग्नगो भवेत्तदा स्त्री सुतनया = सुपुत्रवती, प्रज्ञाविभूषान्विता=प्रज्ञाभिः ( बुद्धिभिः ) विभूषाभि-( अलङ्करणैः ) श्चान्विता भवति ॥ २६ ॥

चन्द्रमा और शुक्र मंगलकी राशिगत लग्नमें हो तो स्त्री पतिसे वैर करनेवाली हो । चन्द्रमा और बुध हों तो परतत्त्ववाद (ब्रह्मज्ञान) में चतुर हो । मंगल और बुध हों तो भोग करनेवाली हो। यदि चन्द्रमा, बुध तथा गुरु लग्नमें हों तो वह स्त्री सुख-द्रव्यसे युक्त होती है । बृहस्पति लग्नमें हो तो सुन्दर सन्तान, बुद्धि और भूषणसे युक्त होवे ॥ २६ ॥

तुङ्गस्था गगनाटनाः शुभकरा रन्ध्रे सपापे वधू-
र्वैधव्यं समुपैति पापभवने पापग्रहालोकिते ।
रन्ध्रेशांशपतौ खले च विधवा निःसंशयो भामिनी
सौम्यै रन्ध्रगतैः समेति तरुणी प्रागेव मृत्युं पतेः ॥ २७ ॥

तुङ्गस्था इति । शुभकरा गगनाटनाः = शुभग्रहाः यत्र तत्र भावे, तुङ्गस्थाः = स्वस्वोच्चगताः स्युः, रन्ध्रे = अष्टमे भावे, सपापे = पापग्रहेण सहिते, पापभवने = पापग्रहराशौ, पापग्रहालोकिते च सति जाता स्त्री वैधव्यं समुपैति । विधवा भवतीत्यर्थः । योगान्तरमाह—रन्ध्रेशो ( अष्टमेशः ) यस्मिन्नवांशे तिष्ठति तन्नवांशपतौ खले = पापग्रहे सति भामिनी = स्त्री, निःसंशयः=अवश्यमेव, विधवा भवति । सधवामरणमाह । सौम्यैः=शुभग्रहैः, रन्ध्रगतैः=अष्टमभावस्थितैः, पतेः = स्वामिनः, प्रागेव=पूर्वमेव, तरुणी = स्त्री, मृत्युं समेति । अस्मिन्योगे जाता स्त्री सधवा सती म्रियते इत्यर्थः ॥ २७ ॥

**अपने २ उच्च स्थानमें शुभ ग्रह हों, पापग्रहकी राशिमें पापयुक्त अष्टम स्थान पापग्रह से दृष्ट हो तो स्त्री विधवा होवे । अष्टमेशका नवांश पति पापग्रह हो तो निःसन्देह विधवा हो । शुभग्रह यदि ८ वेंमें हो तो स्वामीसे पहले मरे ॥ २७ ॥**

भाग्यस्थाः शुभखेचराः स्मरगते पापेऽष्टमस्थेऽथवा
भर्तृश्रीबहुपुत्रसौख्यविभवैः सार्द्धं चिरं जीवति ।
क्रूरैर्बन्धुगृहोपगैर्बहुसुतप्राप्ता भवत्यङ्गना
चापे वा कटकोदये पतिसुतप्राप्ता दरिद्रान्विता ॥ २८ ॥

भाग्यस्था इति । शुभखेचराः = बुधगुरुशुक्रशुक्लचन्द्राः, भाग्यस्थाः = नवमभावगता भवेयुः, पापे = सूर्यभौमशनीनामन्यतमे ग्रहे, स्मरगते = सप्तमस्थे, अथवा अष्टमस्थे सति स्त्री, भर्त्रा, श्रिया, बहुपुत्रैः, सौख्यैः, विभवैश्च सार्द्धं चिरं = दीर्घकालं जीवति । योगेऽस्मिन्सकलसुखसम्पन्ना सती दीर्घजीविनी भवति । क्रूरैः = पापैः, बन्धुगृहोपगैः = चतुर्थभावमुपगतैः अङ्गना = स्त्री, बहुसुतप्राप्ता = अनेकसन्ततियुक्ता भवति । चापे = धनुषि, वा कटकोदये = कर्कराशिलग्ने सति स्त्री पतिसुतप्राप्ता = भर्तृपुत्रवती, दरिद्रान्विता = निर्धना भवति । तथा हि—

'भाग्यस्थाने स्थिते सौम्ये सपापेऽस्तेऽष्टमेऽपि वा । भर्तृपुत्रसुखैः सार्द्धं दीर्घकालं च जीवति ॥
धनुःकर्कटके लग्ने भर्तृपुत्रादिदुःखदा" इति यवनः ॥ २८ ॥

**नववें गृहमें शुभग्रह हों सप्तम वा अष्टममें पापग्रह हों तो वह स्त्री पति-लक्ष्मी-बहुत पुत्र-सुख-विभवके साथ बहुत काल तक जीवित रहती है । क्रूरग्रह चतुर्थ स्थानमें हों तो उस स्त्रीके बहुत पुत्र होवें । लग्नमें धनु वा कर्क हो तो पति-पुत्रसे युत दरिद्रा होवे ॥ २८ ॥**

गोसिंहालिवधूदये सुतगते चन्द्रेऽल्पपुत्रान्विता
पापैरस्तशुभोदयाष्टमगतैर्दारिद्र्यशोकाकुला ।
सौम्यासौम्ययुतैश्च मिश्रफलिनी सौम्यैः शुभश्रीयुता
पुत्रेशोऽरिगते तनौ रिपुपतौ शस्त्रेण मृत्युर्भवेत् ॥ २९ ॥

गोसिंहेति । गोसिंहालिवधूदये सुतगते = पञ्चमे भावे वृषसिंहवृश्चिककन्यान्यतमे राशौ तस्मिंश्चन्द्रे व्यवस्थिते सति जाता स्त्री अल्पपुत्रवती भवति । तथा च गर्गः—
"सिंहालिवृषकन्यासु चन्द्रे तिष्ठति पञ्चमे । अल्पापत्यं विजानीयात् पुरुषेषु तथा वदेत्" इति।

पापैरिति । पापग्रहैः यथासम्भवं, अस्तशुभोदयाष्टमगतैः = सप्तमनवमप्रथमाष्टमभावगतैः, स्त्री दारिद्र्यशोकेनाकुला भवति । पूर्वोक्तैर्भावैः सौम्यासौम्ययुतैः=शुभैः पापैश्च युतैः मिश्रफलिनी = शुभाशुभफलद्वयवती भवति । पूर्वोक्तैर्भावैः केवलं सौम्यैः युतैः शुभश्रीयुता भवति । स्त्रियाः शस्त्रकृतं मरणमाह—पुत्रेशे इति । पञ्चमभावेशे, अरिगते = षष्ठभावगते, रिपुपतौ = षष्ठेशे, तनौ = लग्ने विद्यमाने सति स्त्रियाः शस्त्रेण मृत्युर्भवेत् ॥ २९ ॥

**वृष, सिंह, वृश्चिक वा कन्या लग्न हो, पंचममें चन्द्रमा हो तो थोड़े पुत्र होवें । पापग्रह सप्तम, नवम, लग्न तथा अष्टममें हों तो दरिद्रताके शोकसे व्याकुल हो । शुभग्रह, पापग्रह**

दोनों प्रकारके ग्रह हों तो मिश्र फल हो। केवल शुभग्रह हों तो शुभ लक्षणोंसे युक्ता हो। पंचमेश बष्ठ स्थानमें हो, शत्रु स्थान (६) का स्वामी लग्नमें हो, तो शस्त्रसे मृत्यु हो ॥२९॥

क्रूरग्रहैरस्तगतैः समस्तैर्विलग्नराशेर्विधवा भवेत्सा।
मिश्रैः पुनर्भूरिह जातकन्या पत्युज्झिता हीनबलैरसद्भिः ॥ ३० ॥

श्लोकोऽयं स्पष्टार्थः १९ तमश्लोकपूर्वार्द्धस्य समानार्थकश्चेति ॥ ३० ॥

लग्नसे सप्तम भावमें सब पापग्रह हों तो विधवा हो। मिश्रग्रह ७ वें हों तो इस योग में उत्पन्न कन्या पुनर्भू हो। पापग्रह बलसे हीन हों तो उसका पति उस स्त्रीको त्याग दे॥

स्त्रीजन्मलग्नान्मदगे शशाङ्के शुक्रारयुक्ते यदि जातकन्या।
सा पत्यनुज्ञापरगामिनी स्यात्सौरारभांशोपगते तथैव ॥ ३१ ॥

स्पष्टार्थः। १९ तमश्लोकोत्तरार्द्धार्थतुल्यश्चेति ॥ ३१ ॥

स्त्रीके जन्म लग्नसे सप्तम स्थानमें चन्द्रमा हो, शुक्र और मंगलसे युक्त हो तो वह स्त्री पतिकी आज्ञासे दूसरे पुरुषसे विहार करे। पूर्वोक्त चन्द्रमा यदि शनि या मंगलके नवांश में हो तो भी यही फल होवे ॥ ३१ ॥

सौरारभांशोपगतग्रहेषु शुक्रेन्दुयुक्तेष्वशुभेक्षितेषु।
जाता कुलाचारगुणैर्विहीना मात्रा च सार्कं व्यभिचारिणी स्यात् ॥ ३२ ॥

सौरारेति। यत्र तत्र भावे सौरारभांशोपगतग्रहेषु = शनिमङ्गलयोर्भानि मेषवृश्चिकमकरकुम्भास्तेषां नवांशेषूपगतेषु ग्रहेषु, शुक्रेन्दुभ्यां युक्तेषु अशुभेन = पापग्रहेण, ईक्षितेषु। एतदुक्तं भवति। शुक्रचन्द्राभ्यां युक्ताः केचिदन्ये अधिका ग्रहा भौमशनिभांशे यत्र तत्र गताः केनचित्पापेन दृष्टाश्च भवेयुस्तदा जाता स्त्री कुलाचारगुणैर्विहीना तथा मात्रा सार्कं व्यभिचारिणी च स्यात्। अस्मिन्योगे जाता न यावत्कन्यैव कुकर्मकर्त्री भवत्यपि तु तन्माताऽपि दुराचारिणी भवतीति ॥ ३२ ॥

शनि और मंगलकी राशि या नवांशमें ग्रह प्राप्त हों शुक्र और चन्द्रमासे युक्त तथा पाप ग्रहसे दृष्ट हो तो कन्या कुल आचारसे हीन हो और माताके सहित व्यभिचारिणी हो ॥३२॥

क्षितितनयनवांशे लग्नतः सप्तमस्थे दिनकरबुधदृष्टे व्याधियोनिः प्रजाता।
शुभकरनवभागे सप्तमस्थानसंस्थे सुभगसुतवती सा चान्यथा दुर्भगा स्यात् ॥३३॥

सरलार्थः श्लोकोऽयमिति ॥ ३३ ॥

लग्नसे सप्तम भावमें मंगलका नवांश हो, सूर्य और बुध देखते हों तो योनिमें व्याधि हो। शुभग्रहका नवांश सप्तम भावमें हो तो सुभगा और पुत्रवाली हो, अन्यथा दुर्भगा हो॥

कामासक्तमनस्विनी च विधवा पापद्वये सप्तमे
पश्चात्स्वामिवधं करोति कुलटा पापत्रये चास्तगे।
राजामात्यवराङ्गना यदि शुभे कामं गते कन्यका
मारस्थे तु शुभत्रये गुणवती राज्ञी भवेद् भूपतेः ॥ ३४ ॥

सरलार्थः। स्त्रीजातके सप्तमे भावे सपापेऽशुभं फलम्। सप्तमे शुभग्रहे शुभं फलमिति भावार्थः ॥ ३४ ॥

दो पापग्रह सप्तममें हों तो काममें आसक्ता, मनस्विनी और विधवा हो। तीन पापग्रह सप्तममें हों तो कुछ समयके बाद पतिको मारे और कुलटा होवे। यदि सप्तममें शुभग्रह हो तो राजाके नौकरकी स्त्री हो। सातवें स्थानमें यदि तीन शुभग्रह हों तो गुणवती और राजाकी रानी होवे ॥ ३४ ॥

अन्योन्यांशगतौ सितार्कतनयावन्योन्यदृष्टौ तु वा
कुम्भे चाष्टमभागजातवनिता कामाग्नितप्ता भवेत्।

वैधव्यं समुपैति चन्द्रभवनात् क्रूरे मदस्थानगे
चन्द्रादस्तगृहोपगः शुभकरो राज्यास्पदं यच्छति ॥ ३५ ॥

अन्योन्येति । सितार्कतनयौ = शुक्रशनी, अन्योन्यांशगतौ = यत्र तत्र भावे शुक्रः शनिनवांशे, शनिः शुक्रनवांशे भवेत्, तौ परस्परदृष्टौ च भवेतां, वा कुम्भे लग्ने अष्टमे भागे जनिता वनिता (स्त्री) कामाग्नितप्ता = मदनानलेन दग्धा (अतीव कामातुरा) भवति । वैधव्यमिति । क्रूरे=कस्मिंश्चित्पापग्रहे, चन्द्रभवनात्=चन्द्राधिष्ठितराशितः, मदस्थानगे=सप्तमराशिगते सति स्त्री वैधव्यं=पतिमृत्युं, समुपैति=प्राप्नोति । शुभकरः=बुधगुरुशुक्रान्यतमो ग्रहः चन्द्रादस्तगृहमुपगतो भवेत्तदा स्त्रियै तद्भर्त्रे वा राज्यम्, आस्पदं=प्रतिष्ठानं च यच्छति=ददाति । स्त्रीजातके चन्द्रादस्ते (७) पापोऽशुभदः शुभः शुभदश्चेति सारार्थः ॥३५॥

शुक्र और शनि परस्पर एक दूसरेके अंशमें हों परस्पर देखते हों, वा कुम्भके आठवें नवांशमें उत्पन्न स्त्री कामाग्निसे संतप्त हो । चन्द्रमासे सप्तम क्रूरग्रह हो तो विधवा होती है । चन्द्रमासे सातवें घरमें शुभग्रह हो तो राज्य पदको देवे ॥ ३५ ॥

स्त्रीजन्मलग्ने शशिशुक्रयुक्ते कोपान्विता सा सुखभागिनी स्यात् ।
सर्वत्र चन्द्रे सति तत्र जाता सुखान्विता वीतरतिप्रिया स्यात् ॥ ३६ ॥

सरलार्थोऽयं श्लोकः । स्त्रीजन्मलग्ने चन्द्रशुक्रौ केवलं वा चन्द्रः शुभकर एवेत्यलम् ३६

स्त्रीके जन्म लग्नमें चन्द्रमासे युक्त शुक्र हो तो वह कोपसे युक्त और सुखकी भागिनी होती है । चन्द्रमा लग्नमें हो तो उत्पन्न होनेवाली सर्वत्र सुखसे युक्त वीर पुरुषके साथ रतिप्रिया होती है ॥ ३६ ॥

शुक्रेन्दुभे रूपगुणाभिरामा कलावती जीवबुधोदये तु ।
लग्नस्थिता जीवबुधासुरेज्या जाताङ्गना सर्वगुणप्रसिद्धा ॥ ३७ ॥
वाचस्पतौ नवमपञ्चमकेन्द्रसंस्थे तुङ्गादिके भवति शीलसमन्विता च ।
साध्वी सुपुत्रजननी सुखिनी गुणाढ्या नूनं कुलद्वययशस्करिणी भवेत्सा ॥ ३८ ॥

सरलार्थौ श्लोकौ द्वाविति ॥ ३७-३८ ॥

लग्न शुक्र या चन्द्रमाके गृहमें हो तो रूपगुणसे सुन्दरी हो । गुरु या बुधकी राशिका उदय हो तो कला जानने वाली हो । लग्नमें बृहस्पति, बुध और शुक्र हों ऐसे योगमें कन्या सर्वगुणमें प्रसिद्ध हो ॥ ३७ ॥

बृहस्पति नवम, पंचम या केन्द्रमें स्थित हो उच्चादिमें हो तो शीलसे युक्त, साध्वी सुपुत्रकी माता, सुखिनी, गुणयुक्ता और निश्चय दोनों कुलका यश करनेवाली होवे ॥ ३८ ॥

यदि शुभकरदृष्टा शिल्पिनी शुद्धचित्ता सततमिह सलज्जा चारुमूर्तिः सुपुत्रा ।
बहुधनशुभयुक्ता वल्लभे वल्लभत्वं व्रजति शुभशतानां भाजनत्वं च होरा ॥३९॥

यदिति । होरा = स्त्रिया जन्मलग्नं, यदि शुभकरदृष्टा = एकेन द्वाभ्यां त्रिभिर्वा शुभग्रहैर्दृष्टा स्यात्तदा शिल्पिनीत्यादि फलं वाच्यम् ॥ ३९ ॥

यदि शुभग्रह लग्नको देखते हों तो शिल्पिनी, शुद्ध चित्तवाली, निरंतर लाजवाली, रमणीय मूर्ति, पुत्रवती तथा बहुत-धन-सुखसे युक्ता, पतिप्रेमा और सैकड़ों शुभकी पात्री होती है ॥ ३९ ॥

चन्द्रे कर्कटकोदये च बलिभिः शुक्रज्ञजीवेन्दुभि-
र्नानाशास्त्रकलारसज्ञचतुरा विख्याततेजस्विनी ।
कामस्थैरथवा विलग्नभवनाद्धर्मस्थितैः खेचरैः
प्रव्रज्यामुपयाति जन्मसमये पाणिग्रहे चिन्तयेत् ॥ ४० ॥

चन्द्र इति । कर्कटकोदये = कर्कराशिलग्ने, चन्द्रे, बलिभिः शुक्रज्ञजीवेन्दुभिश्च जाता

स्त्री नानाशास्त्रकलाज्ञा, रसज्ञा, चतुरा, विख्याता, तेजस्विनी च भवति। विलग्नभवनात् = जन्मलग्नात्, कामरथैः = सप्तमगतैः, अथवा धर्मस्थितैः = नवमगतैः, खेचरैः=यैः कैश्चित् र्व्यादिग्रहैः व्यवस्थितैः, स्त्री प्रव्रज्यां=संन्यासमुपयाति। तत्र बलीयसो ग्रहस्य हेतुमूलां प्रव्रज्यां प्राप्नुयात्। इमां किल जन्मसमये, पाणिग्रहे = विवाहे च चिन्तयेत्।

तथाच—बलिभिर्बुधगुरुशुक्रैः शशाङ्कसहितैर्विलग्नगे शशिभे।

स्त्री ब्रह्मवादिनी स्यादनेकशास्त्रेषु कुशला च ॥

क्रूरे आमित्रगते नवमे यदि खेचरो भवति नूनम्।

आप्नोति प्रव्रज्यां पापग्रहसम्भवामबलाः ॥

जन्मकाले विवाहे च चिन्तायां वरणे तथा।

चिन्त्यं स्त्रीणां तु यत्प्रोक्तं घटते तत्पतिष्वपि ॥ सारावल्याम् ॥ ४० ॥

चन्द्रमा कर्क लग्नमें हो, शुक्र, बुध गुरु तथा चन्द्रमा बली हों तो नाना प्रकारके शास्त्र कला और रसज्ञानमें चतुरा, विख्यात तेजस्विनी हो। लग्नसे सप्तम वा नवम भावमें ग्रहों से जन्म समय और विवाहके समय प्रव्रज्या योगका विचार करे ॥ ४० ॥

पापेऽस्ते नवमगतग्रहस्य तुल्यां प्रव्रज्यां युवतिरुपैत्यसंशयेन।

उद्वाहे वरणविधौ प्रदानकाले चिन्तायामपि सकलं विधेयमेतत् ॥४१॥

जन्मन्युद्वाहकाले च चिन्तायां वरणे तथा।

स्त्रीणां चिन्ता बुधेनोक्ता घटते तत्पतिष्वपि ॥ ४२ ॥

इदानीं स्त्रीणां प्रव्रज्यायोगमाह—पापेऽस्त इति। स्त्रियाः जन्मलग्नात्, अस्ते = सप्तमे भावे, पापे = पापग्रहे सति नवमगतस्य ग्रहस्य तुल्यां प्रव्रज्यां, युवतिः = स्त्री, असंशयेनोपैति। एतत् सकलं प्रव्रज्यादि उद्वाहे = विवाहे, वरणविधौ=कन्याया वैवाहिकवरणे, प्रदानकाले, चिन्तायामपि विधेयं=विचारणीयमिति। तथोक्तञ्च गुणाकरेण—

अस्ते पापे धर्मगतग्रहोक्तां प्रव्रज्यां स्त्री याति निःसंशयेन।

दानोद्वाहे प्रश्नकालेषु चैवं चिन्त्यं सर्वं हौरिकैस्तत्र युक्त्या ॥

अत्र प्रसङ्गात् ग्रहोक्ताः प्रव्रज्या उच्यन्ते—योगकर्तृषु ग्रहेषु यदि सूर्यो बलीयान् स्यात्तदा तापसः, चन्द्रश्चेत्तदा कापालिकः, भौमे बलवति रक्तपटः बुधे एकदण्डी, गुरौ त्रिदण्डी (भिक्षुः), शुक्रे चरकः, शनौ नग्नः, इति प्रव्रज्याः कथनीयाः। तथा स्वल्पजातके—

'तापस-वृद्धश्रावक-रक्तपटा-जीवि-भिक्षु-चरकाणाम्-निर्ग्रन्थानामिति' ॥

जन्मनीत्यादिः। सरलार्थ एवेति ॥ ४१-४२ ॥

पापग्रह सप्तममें हो तो नवम गत ग्रहके सदृश स्त्री प्रव्रज्याको प्राप्त हो इसमें सन्देह नहीं है। इसलिये स्त्रीके विवाहमें, वरण विधिमें, कन्यादान कालमें, चिन्तामें यह सब विचार करे ॥ ४१ ॥

स्त्रियोंके जन्म समयमें, विवाह कालमें, प्रश्नकालमें, वरणमें प्रव्रज्याका विचार करना कहा है। यह प्रव्रज्या स्त्रीके पतिमें भी घटती है ॥ ४२ ॥

क्रूरेऽष्टमे विधवता निधनेश्वरांशे यस्य स्थिते वयसि तस्य समे प्रदिष्टा।

सत्स्वर्थगेषु मरणं स्वयमेव तस्याः कन्यालिगोहरिषु चाल्पसुतत्वमिन्दौ ॥४३॥

इदानीं स्त्रिया वैधव्ययोगं मरणयोगञ्चाह—क्रूर इति। क्रूरे = कस्मिंश्चित्पापे, अष्टमे भावे व्यवस्थिते, निधनेश्वरः = अष्टमभावेशः यत्र तत्र यस्य ग्रहस्यांशे = नवांशे स्थितो भवेत्, तस्य समे वयसि = तस्य ग्रहस्यायुर्दाये (दशायां) स्त्रियाः, विधवता प्रदिष्टा=पतिमरणं वाच्यमिति। सत्स्विति। तदानीं (स्त्रीजन्मनि) सत्सु=शुभग्रहेषु, अर्थगेषु = द्वि-

तीयभावमुपगतेषु तस्याः स्त्रियाः स्वयमेव मरणं स्यात्। स्त्री स्वयमेव म्रियते ( बलवतो-दशायाम् ) इति। कन्येति। इन्दौ=चन्द्रे, कन्यालिगोहरिषु=कन्या-वृश्चिक-वृष-सिंहान्यतमे गते च स्त्री अल्पसुतत्वम् = अल्पापत्यत्वमाप्नुयादिति। तथा च—

पापेऽष्टमे तु विधवा निधनाधिपतिर्नवांशके यस्य।
तस्य दशायां मरणं वाच्यं तस्याः शुभैर्द्वितीयस्थैः॥
कन्यालिवृषभसिंहे शिशिरमयूखेऽल्पपुत्रा स्यात्।
पुत्रभवने शुभयुते निरीक्षिते वा तथैव स्यात्॥ इति सारावल्याम् ॥४३॥

क्रूरग्रह अष्टम भावमें हो अष्टमेश जिसके नवांशमें हो उस ग्रहके नैसर्गिकायु तुल्य वयसमें विधवा हो। उस योगमें शुभ ग्रह धन स्थानमें हो तो स्वयं उसकी मृत्यु हो चन्द्रमा यदि कन्या, वृश्चिक, वृष या सिंहमें हो तो थोड़ी सन्तान हों॥ ४३॥

रन्ध्रे मिश्रबले शुभाशुभखगैरालोकिते वा युते
दम्पत्यो समकालमृत्युमखिलज्योतिर्विदः संविदुः॥
एकस्थौ मदलग्नपौ च यदि वा लग्नस्थिते कामपे
कामस्थे तनुपे शुभग्रहयुते मृत्युस्तयोस्तुल्यतः॥ ४४॥

इदानीं दम्पत्योः समकालमरणमाह—रन्ध्र इति। रन्ध्रे=अष्टमे भावे, मिश्रबले=शुभाशुभसामान्यबलयुते तस्मिन् शुभैरशुभैश्च ग्रहैरालोकिते वा युते सति, दम्पत्योः = वधूवरयोः, समकालम्=एकस्मिन्नेव समये मृत्युं=मरणम्, अखिलज्योतिर्विदो विद्वांसः संविदुरूचुः। योगान्तरमाह। मदलग्नपौ = सप्तमेशलग्नेशौ यत्र तत्रैकत्रस्थौ भवेतां, यदि वा कामपे = सप्तमेशे, लग्नस्थिते, तनुपे=लग्नेशे, कामस्थे=सप्तमभावगते शुभग्रहयुते च, तयोः=स्त्रीपुंसोः तुल्यतः = एककाले, मृत्युर्भवेदिति ॥ ४४॥

अष्टम भाव सम बल हो, शुभ-अशुभ दोनों प्रकारके ग्रह देखते हों वा युक्त हों तो दंपती ( स्त्री-पुरुष दोनों ) समकाल ( एकसाथ ) में मरे यह सभी ज्यौतिष शास्त्रके विद्वान् कहे हैं। यदि सप्तमेश और लग्नेश एक स्थानमें हों, वा सप्तमेश लग्नमें हो सप्तममें लग्नेश हो शुभग्रहसे युक्त हो तो दोनों ( स्त्री-पुरुष ) की मृत्यु समकालमें हो॥ ४४॥

सत्स्वर्थगेषु स्वयमेव सा स्त्री विपद्यते तत्परिपाककाले।
रन्ध्रस्थतन्नाथतदंशपानां दशापहारे मृतिमाहुरार्याः॥ ४५॥

इदानीं स्त्रिया मरणकालमाह—सत्स्विति। स्त्रिया जन्मकाले सत्सु = शुभग्रहेषु, अर्थगेषु = द्वितीयभावमुपगतेषु, तत्परिपाककाले = तेषां ( शुभग्रहाणां ) मध्ये बलीयसो ग्रहस्य दशाकाले सा स्त्री स्वयमेव विपद्यते = म्रियते। रन्ध्रेति। रन्ध्रस्थतन्नाथतदंशपानां = रन्ध्रे ( अष्टमे ) यो ग्रहस्तिष्ठति, तन्नाथः ( अष्टमेशः ), तदंशपः ( अष्टमगतनवांशपतिः = जन्मतो हि ६४ नवांशेशः ) इत्येषां त्रयाणां ( यो बलीयान् भवेत्तस्य ) दशापहारे = दशावसाने स्त्रिया मृतिमार्या आहुरिति॥ ४५॥

शुभग्रह धन भावमें हो तो स्वयं वह स्त्री उसकी दशाके परिपाक कालमें मरे। अष्टम स्थानमें स्थित और अष्टमेश तथा उसके नवांसपतिकी दशा भुक्तिमें मृत्यु होना श्रेष्ठ विद्वान् लोग कहे हैं॥ ४५॥

सहजभवननाथे पुङ्ग्रहे पुङ्ग्रहर्क्षे पुरुषखचरयुक्ते पुङ्ग्रहालोकिते वा।
नयनभवनकेन्द्रे कोणगे वा बलिष्ठे बहुधनसुखवन्तं सोदरं याति जाता॥४६॥
सहोदरस्थानपलाभनाथौ विलग्नतः पञ्चमराशियातौ।
नृपालतेजोगुणरूपवन्तं सहोदरं जातवधूः समेति॥ ४७॥

इदानीं स्त्रियाः सोदरप्राप्तियोगावाह—सहजेति श्लोकद्वयेन। सहजभवननाथे = तृतीयभावेशे, पुंग्रहे = पुरुषग्रहे = रविभौमगुरूणामन्यतमे, पुंग्रहर्क्षे = पुरुषग्रहराशौ = सिंह-मेष-वृश्चिक-धनुः-मीनानामन्यतमे स्थिते, पुरुषखचरेण = रविभौमगुरूणामन्यतमेन युक्ते वा केनचित् पुंग्रहेणालोकिते, वा सहजेशे नयनभवने = द्वितीयभावे केन्द्रे (१।४।७।१०) कोण-(५।९) गे वा सति बलिष्ठे = सबले च जाता स्त्री बहुधनसुखदन्तं सोदरम् = एकजनन्यां जातं भ्रातरं, याति=प्राप्नोति। सहोदरेति। तृतीयैकादशभावेशौ, विलग्नतः= स्त्रीजन्मलग्नात् पञ्चमराशिगतौ भवेतां तदा जातवधूः = समुत्पन्ना स्त्री, नृपालस्य = राज्ञः तेजोगुणरूपाणि इव तेजोगुणरूपाणि सन्त्यस्य तं (राजसदृशं) सहोदरं भ्रातरं समेति प्राप्नोति ॥ ४६-४७ ॥

**तृतीयेश पुरुष संज्ञक ग्रह हो, पुरुषग्रहकी राशिमें हो, पुरुषग्रहसे युक्त हो वा पुरुषग्रहसे देखा जाता हो, वा द्वितीय, केन्द्र वा कोणमें बलिष्ठ हो तो उस कन्याके बहुत धन सुखवाला भाई होवे ॥ ४६ ॥**

**तृतीयेश और लाभेश लग्नसे पञ्चम भावमें हों तो राजाके समान तेज, गुण, रूपवाला भाई स्त्रीको प्राप्त होवे ॥ ४७ ॥**

## अथ पतिलक्षणम्।

यस्या मन्मथमन्दिरे गतबले शून्ये खलालोकिते
सौम्यव्योमनिवासदृष्टिरहिते भर्ता नरः को भवेत्।
क्लीबः स्यात् पतिरस्तगे शशिसुते सार्कात्मजे दुर्भगा
बन्ध्या वा तरुणी चरे मदगृहे नित्यं प्रवासान्वितः ॥ ४८ ॥

अथाधुना स्त्रीणां पतिलक्षणमुच्यते-यस्या इति। यस्याः स्त्रिया मन्मथमन्दिरे = सप्तमे भावे, गतबले = निर्बले, शून्ये = ग्रहरहिते, खलालोकिते = पापग्रहदृष्टे, तस्मिन् सौम्यव्योमनिवासानां = शुभग्रहाणां दृष्टिरहिते सति, भर्त्ता = तस्याः स्त्रियाः स्वामी, को नरः = कुत्सितो नरः (कापुरुषः) भवेत्। क्लीब इति। शशिसुते = बुधे, अस्तगे = सप्तमगते सति पतिः क्लीबः = नपुंसकः स्यात्। सार्कात्मजे = सप्तमे शनियुते, तरुणी = स्त्री, दुर्भगा = दूषितयोनिः, वा बन्ध्या = प्रसवरहिता भवति। चरे मदगृहे = लग्नात्सप्तमे भावे चरराशौ सति भर्त्ता नित्यं=सर्वदा प्रवासान्वितः = विदेशगतो भवति न कदाचिद् गृहे तिष्ठतीति। अर्थादेव सप्तमे स्थिरराशौ नित्यं गृहस्थो द्विस्वभावे च गृहान्वितः प्रवासान्वितश्च भवतीति। तथा वराहः—

शून्ये कापुरुषोऽबलेऽस्तभवने सौम्यग्रहावीक्षिते
क्लीबोऽस्ते बुधमन्दयोश्चरगृहे नित्यं प्रवासान्वितः ॥ ४८ ॥

**जिस स्त्री का सप्तम स्थान बलरहित, शून्य हो शुभग्रहकी दृष्टिसे रहित हो तो उसका स्वामी कापुरुष (कायर) हो। बुध ७ वें में शनिके साथ हो तो पति नपुंसक हो, वा वह स्त्री बन्ध्या तथा दुर्भगा हो। सप्तम भवनमें चर राशि हो तो पति सदा प्रवासी हो ॥ ४८ ॥**

स्वांशे भास्वति कामगे मृदुरतिक्रीडाविनोदी पति-
श्चन्द्रे सौख्यमुपैति भूमितनये जारो वधूतत्परः।
विद्वान् चन्द्रसुते जितेन्द्रियवरो जीवे मदस्थानगे
शुक्रे कान्तवपुः सुखी च रविजे वृद्धोऽतिमूर्खो भवेत् ॥ ४९ ॥

स्वांश इति। स्वांशे = स्वनवांशोपगते, भास्वति = सूर्ये, कामगे = सप्तमभावगते सति पतिः मृदुरतिक्रीडाविनोदी भवति। चन्द्रे स्वांशे गते सप्तमे विद्यमाने सति स्त्री पतिसौख्यमुपैति। भूमितनये = मङ्गले स्वांशे सप्तमे च गते पतिः जारः=परस्त्रीगामी, वधूतत्परः=

स्त्रीलोलुपश्च भवति । चन्द्रसुते = बुधे, तथाभूते, पतिः विद्वान् भवति । जीवे = गुरौ, मदस्थानगे = सप्तमगते स्वांशे सति, जितेन्द्रियाणां वरः = श्रेष्ठो भवति भर्त्तेति । शुक्रे तथाभूते सति पतिः, कान्तवपुः = मनोरमगात्रः सुखी च भवति । रविजे = शनौ सप्तमे स्वांशे सति पतिः वृद्धः अतिमूर्खश्च भवति । तथा होरारत्ने—

अस्तेऽर्के स्वांशगे स्वर्क्षे भर्त्ता रतिपरो मृदुः । चन्द्रेऽस्ते स्वर्क्षगे स्वांशे मृदुस्मरवशः पतिः ॥
भौमेऽस्ते स्वांशगे क्षेत्रे स्त्रीलोलो निर्धनः पतिः ।
सौम्येऽस्ते स्वांशके क्षेत्रे भर्ता विद्वान् भवेत् सुखी ॥
जीवेऽस्ते स्वांशके स्वर्क्षे गुणवान् विजितेन्द्रियः । शुक्रेऽस्ते स्वांशके क्षेत्रे कन्यासौभाग्यवान् सुखी ॥
मन्देऽस्ते स्वांशके क्षेत्रे वृद्धो मूर्खो भवेत्पतिः । एवं सप्तमराशिस्थैर्ग्रहैर्नॄणां वदेत् फलम् । इति॥

सूर्य अपने नवांशमें सातवें भावमें स्थित हो तो उसका पति कोमलमति तथा रति क्रीडाका विनोदी हो । स्वांशस्थ चन्द्रमा ७ वें हो तो सुखकी प्राप्ति हो । स्वांशस्थ मङ्गल ७ वें हो तो जार पति उस स्त्री में तत्पर रहै । स्वांशस्थ बुध ७ वें हो तो पति पण्डित हो । स्वांशका गुरु सप्तम भावमें हो तो पति जितेन्द्रिय हो । अपने अंशका शुक्र सप्तममें हो तो सुन्दर शरीरवाला सुखी पति हो । शनि स्वांशमें हो तो पति वृद्ध और विशेषतः मूर्ख होवे॥

स्यान्मार्दवाङ्गो गुणवान्प्रगल्भो जामित्रराश्यंशकजा तु याऽस्याः ।
सौरेऽस्तगे स्वांशगृहोपयाते वृद्धोऽतिमूर्खः पतिरेव तस्याः ॥ ५० ॥

स्यादिति । या स्त्री जामित्रराश्यंशकजा = लग्ने सप्तमभावस्य नवांशे समुद्भूता भवति, अस्याः पतिः मार्दवाङ्गः = मृदोर्भावो मार्दवस्तदङ्गवानर्थात्कोमलगात्रः, गुणवान्, प्रगल्भः ( चतुरः ) च भवति । अत्रोदाहरणं यथा—यदि मेषराशिर्लग्नं स्यात्तदाऽत्र तुलाराशेर्नवांशेन भवितव्यमेवं सर्वत्रोह्यम् । तथा सति लग्नमानम् ०।२३° । सौर इति स्पष्टार्थः, ४९ श्लोकोक्तस्य—'रविजे वृद्धोऽतिमूर्खो भवेत्' इत्यस्य सदृशार्थश्चेति ॥ ५० ॥

लग्नस्थ सप्तम भाव राशिके नवांशमें ( जैसे मेष लग्न गत तुलाके नवांशमें ) उत्पन्न स्त्रीका पति कोमलांग, गुणवान् और चतुर होता है । शनि सप्तम भावमें अपने राशि या नवांशमें हो तो उस स्त्रीका पति वृद्ध तथा अतिमूर्ख होवे ॥ ५० ॥

दुःस्थौ धर्मगृहेशदेवसचिवौ भर्ता गतायुर्भवेद्
दीर्घायुर्धनवांस्त्रिकोणगृहगौ केन्द्रस्थितौ वा यदि ।
विद्वान् बोधनवाहनेशसहितौ सारार्कजौ कर्षकः
स्वर्भानुध्वजसंयुतौ यदि खलः सारीश्वरश्चोरराट् ॥ ५१ ॥

दुःस्थाविति । धर्मगृहेश—देवसचिवौ = नवमभावपतिबृहस्पती यदि दुःस्थौ = षष्ठव्ययगतौ भवेतां तदा तस्याः स्त्रिया भर्त्ता गतायुर्भवेन्म्रियत इत्यर्थः । तौ यदि त्रिकोण— ( ५।९ ) गृहगौ वा केन्द्र—( १।४।७।१० ) स्थितौ भवेतां तदा भर्त्ता दीर्घायुश्चिरजीवी धनवाँश्च भवेत् । विद्वानिति । तौ धर्मेशगुरू यदि बोधनवाहनेशसहितौ = बुधचतुर्थेशाभ्यां संयुतौ भवेतां तदा भर्त्ता विद्वान् भवति । तौ धर्मेशगुरू सारार्कजौ = भौमशनिभ्यां सहितौ स्यातां तदा भर्त्ता कर्षकः=कृषिकर्मा भवेत् । तौ धर्मेशगुरू स्वर्भानुध्वजसंयुतौ = राहुकेतुयुतौ भवेतां तदा भर्त्ता खलः स्यात् । सारीश्वरश्चोरराट् = तयोर्धर्मेशगुर्वोरेकतरः अरीश्वरेण ( षष्ठेशेन ) सहितो भवेत्तदा भर्त्ता चोरराट् महान् चोरो भवेदिति ॥ ५१ ॥

धर्मेश और बृहस्पति दुष्ट स्थानमें हों तो पति गतायु ( अल्पायु ) हो । यदि वे दोनों त्रिकोणमें या केन्द्रमें हों तो दीर्घायु और धनी हो । यदि वे दोनों केन्द्र—कोणमें बुध या सुखेशसे युक्त हों तो विद्वान् हो । मङ्गल या शनिसे युक्त हों तो कर्षक ( खेतिहर ) हो । राहु या केतुसे युक्त हों तो खल हो । षष्ठेशसे युक्त हो तो चोरोंका मालिक होवे ॥ ५१ ॥

गौराङ्गः पतिरस्तगे दिनकरे कामी सरोषेक्षण-
श्चन्द्रे रूपगुणान्वितः कृशतनुर्भोगी रुगार्तो भवेत् ।
नम्रः क्रूररसोऽलसः पटुवचाः संरक्तकान्तिः कुजे
विद्यावित्तगुणप्रपञ्चरसिकः सौम्ये मदस्थानगे ॥ ५२ ॥
दीर्घायुर्नृपतुल्यवित्तविभवः कामी च बाल्ये गुरौ
कान्तो नित्यविनोदकेलिचतुरः काव्ये कविः क्ष्मापतिः ।
मन्दे वृद्धकलेवरोऽस्थिरतनुः पापी पतिः कामगे
राहौ वा शिखिनि स्थिते मलिनधीर्नीचोऽथवा तत्समः ॥ ५३ ॥

इदानीं सप्तमभावे ग्रहपरत्वेन भर्तुर्लक्षणमाह—गौराङ्ग इति श्लोकयुगलेन सरलार्थेन ।

सूर्य सप्तम भवनमें हो तो पति गौर वर्ण हो, कामी और रोष दृष्टिवाला हो। चन्द्रमा सप्तम स्थानमें हो तो पति रूपगुणसे युक्त दुर्बल गात्र भोगी और रोगी हो। मङ्गल सप्तम भावमें हो तो पति नम्र, क्रूर स्वभाववाला, आलसी, चतुरता पूर्वक बोलनेवाला और रक्त गौर कान्तिवाला हो। बुध सप्तम भावमें हो तो विद्या, वित्त, गुण-प्रपञ्चका रसिक हो॥५२॥

बृहस्पति सप्तम स्थानमें हो तो पति दीर्घायु, राजाके सदृश धनी तथा बाल्यावस्थामें ही कामी हो। शुक्र सप्तम स्थानमें हो तो तेजवान्, नित्य विनोद केलि करनेमें चतुर कवि और भूपति हो। शनि सप्तममें हो तो वृद्ध शरीर, एवं चञ्चल शरीरवाला और पापी पति हो। राहु वा केतु हो तो मलिनबुद्धि नीच वा नीचके सदृश हो ॥ ५३ ॥

दिग्देशस्थितिधर्मकर्मजगुणाः पुञ्जातके योषितां
ये नारीजनजातके निजपतौ संयोजितास्तत्त्वतः ।
द्यूनांशोपगतग्रहेषु बलवत्खेटांशतुल्याः सुताः
केन्द्रे कामपतिः करोति विपुलं कल्याणकालोत्सवम् ॥ ५४ ॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते षोडशोऽध्यायः ॥१६॥

दिग्देशेति । पुंजातके = पुरुषाणां जातके दिग्देशस्थितिधर्मकर्मजगुणाः ये निगदितास्त एव योषितामपि जन्मनि विनिर्देश्याः । एवं नारीजनजातके = स्त्रीजन्मविषये ये निगदिता दिगादिगुणास्ते स्त्रीणां निजपतौ=स्वस्वभर्तृविषये तत्त्वतो विशेषेण संयोजिता भवन्ति । 'यद्यत्फलं नरभवेऽक्षममङ्गनानां तत्तद्वदेत्पतिषु वा सकलं विधेयम्' इति वराहोक्तेन । द्यूनांशेति । द्यूनांशे=सप्तमभावस्य नवांशे यावन्तो ग्रहा भवेयुस्तेषां मध्ये बलीयसो ग्रहस्य नवांशसङ्ख्यातुल्याः सुता भवन्ति । एतदुक्तं भवति । यत्र तत्र राशौ लग्नात्सप्तमभावराशेः सम्बन्धिके नवांशे यावन्तो ग्रहा भवेयुस्तेषां मध्ये यो ग्रहः सर्वापेक्षया बली भवेत् असौ ग्रहस्तस्मिन् राशौ यावत्सङ्ख्ये नवांशे व्यवस्थितः स्यात्तन्नवांशसङ्ख्यातुल्याः सुता वाच्या इति । केन्द्र इति । कामपतिः=सप्तमभावेशः, केन्द्रे गतश्चेत् तदा विपुलं कल्याणकालोत्सवं करोति इति ॥ ५४ ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता ।
अध्याये षोडशे चास्मिन् पूर्ति स्त्रीजातके गता ॥ १६ ॥

पुरुषके जातकमें दिशा, देश, स्थिति, धर्म, कर्म, इत्यादि जो शुभाशुभ, गुण हैं, वे ही स्त्री जातकमें स्त्रियोंको कहने चाहिये। एवं स्त्री-जातकमें स्त्रीके स्वामीको कहने चाहिये। सप्तमभावके नवांशमें जितने ग्रह हों उनमें सबसे बली ग्रहके नवांशके तुल्य पुत्र कहे। यदि सप्तमेश केन्द्रमें हो तो बड़ा कल्याण समय प्राप्त कराता है ॥ ५४ ॥

इति जातकपारिजाते षोडशे स्त्रीजातकाध्याये 'विमला' हिन्दी टीका समाप्ता ॥ १६ ॥

---

# अथ कालचक्रदशाध्यायः ॥ १७ ॥

प्रणम्य परमात्मानं शिवं परमकारणम् ।
खेचरं चक्रमध्यस्थं चतुःषष्टिकलात्मकम् ॥ १ ॥
पप्रच्छ देवदेवेशमीश्वरं सर्वमङ्गला ।
कालचक्रगतिं सर्वां विस्तराद्वद मे प्रभो ॥ २ ॥

अथाधुना कालचक्रदशाध्यायो व्याख्यायते । तत्र प्रथमं कालचक्रगतिविषये भगवत्याः शङ्करं प्रति प्रश्नः—'प्रणम्येति श्लोकयुगलेन' सरलार्थेन ॥ १–२ ॥

**परम कारण परमात्मा खेचर ग्रह–चक्र मध्यस्थ चौसठ कला वाले उस देवदेवेश ईश्वर श्री शिवजीको भगवती श्री सर्वमङ्गला ( गौरी ) देखकर प्रणाम कर बोली-हे प्रभो ! मुझे समस्त कालचक्र गतिको विस्तारसे कहिये ॥ १–२ ॥**

**ईश्वर उवाच ।**

अहमादित्यरूपोऽस्मि चन्द्रमास्त्वं प्रचक्षसे ।
संयोगेन वियोगेन जगत्स्थावरजङ्गमम् ॥ ३ ॥

भगवत्याः पूर्वोक्तं ( कालचक्रविषयकं ) प्रश्नं निशम्य तदुत्तरमाह महादेवः—अहमिति । अहं किल सर्वेषामात्मा, आदित्यरूपः = सूर्य इवास्मि । 'सूर्य आत्मा जगतस्तस्थुषश्च' इति श्रुतौ गीतत्वात् । त्वं चेश्वरी चन्द्रमाः प्रचक्षसे, सर्वेषां मनस्त्वात् । 'चन्द्रमा मनसो जातः' इति तथा "आत्मा रविः शीतकरस्तु चेतः" इति ज्यौतिषे च बहुधाऽभिहितत्वात् । अत एवात्म–मनसोः संयोगेन वियोगेन स्थावरजङ्गमं = चराचरं, जगत् प्रकटीभवति, तिरोभवति चेति । इदमुक्तं भवति । सूर्याचन्द्रमसावेव दशायां कारणत्वेन गृह्येते । ताभ्यामेव नक्षत्रस्य कालस्य चावगमनात् ॥ ३ ॥

**श्री शङ्करजी बोले—मैं सूर्य स्वरूप हूं, तूं प्रत्यक्ष चन्द्रमा हो, हमारे तुम्हारे संयोग वियोगसे ही समस्त चराचर संसारकी सृष्टि और लय होते हैं ॥ ३ ॥**

पञ्च प्राचीरालिखेद्वागसङ्ख्यास्तिर्यग्रेखा वर्जितान्तश्चतुष्काः ॥
प्रागादीशा द्वादश व्योमवासा ज्योतिश्चक्रस्वामिनस्तुम्बराद्याः ॥ ४ ॥
धराजशुक्रज्ञशशीनसौम्यसितारजीवार्कजमन्दजीवाः ;
क्रमेण मेषादिकराशिनाथास्तदंशपाश्चेति वदन्ति सन्तः ॥ ५ ॥

भूतैकविंशत्रियो नवदिक्षोडशाब्धयः ।
सूर्यादीनां क्रमादब्दा राशीनां स्वामिनो वशात् ॥ ६ ॥
अश्वीपुनर्वसूहस्तमूलप्रोष्ठपदादिषु ।
अंशकान् गणयेन्मेषात्प्रादक्षिण्यक्रमं वदेत् ॥ ७ ॥
रोहिणीमघवैशाखवैष्णवादिषु भेषु च ।
अंशकान् वृश्चिकादीनां गणयेदपसव्यतः ॥ ८ ॥
दक्षिणांशिकनक्षत्रं द्वादशांशकराशिषु ।
चक्रं प्रदक्षिणीकृत्य मीनान्ते विन्यसेत्पुनः ॥ ९ ॥
उत्तरात्रयनक्षत्रं वृश्चिकाद्यप्रदक्षिणम् ।
कृत्वा चापान्तकेऽन्यस्मिन् ज्ञातव्ये दक्षिणोत्तरे ॥ १० ॥
सव्यापसव्यमार्गेण चाश्विन्यादि त्रिकं त्रिकम् ।
देहादि गणयेत्सव्ये वामे जीवादि गण्यते ॥ ११ ॥

मेषगोयमकुलीरमन्दिरेष्वंशकेषु परमायुरुच्यते ।
ज्ञानकं मदगजास्तदा क्रमात्तत्र कोणभवनेषु तद्वदेत् ॥ १२ ॥
एवमायुः परिज्ञानं देहजीवौ प्रकल्प्य च ।
सव्ये तु प्रथमांशस्तु देह इत्यभिधीयते ॥ १३ ॥
जीवः सर्वेष्वन्त्यपादौ विलोममपसव्यके ।

इदानीं कालचक्रक्रममाह—पञ्च प्राचीति । तत्र चक्रलेखनप्रकारो हि चक्रदर्शनेन स्फुटः स्यात् । कालचक्रे सूर्यादीनां दशावर्षाणि क्रमेण भूतादयः सन्ति । अर्थात् सूर्यस्य = ५ व० । चन्द्रस्य = २१ व० । मं. = ७ व० । बु. = ९ व० । गुरोः = १० व० । शु. = १६ व० । शनेः = ४ वर्षाणि । एतानि किल वर्षाणि प्रतिराशि खण्डनवके राशीनां ( 'पौरज्ञावो मातासहोधी' इत्यादिवक्ष्यमाणसव्यापसव्योपगतानां ) स्वामिनां वशतो ज्ञेयानि ।

## सव्यचक्रवाक्यानि—

१, पौ–र–ज्ञा–वो–मा–ता–स–हो–धी । २, न–क्ष–त्र–दा–सी–च–र्वे–ण–गाः ।

३, रू–पो–न्न–क्षु–र्नि–धा–य–र–ज्ञ–म् ।

४, वाणी–च–स्य–न्द–धि–न–क्ष–त्र–म् ॥

५, हं–स–श्च–व–र्शा–व–र–प–त्र–म । ६, क्ष–मा–धी–क–र–गो–भी–मा–च ।

७, सु–द–धि–न–श्च–न्न–जः–सि–तः । ८, वा–मा–ज्ञा–र–को–त्र–क्षु–र्नि–धिः ॥

निर्दिष्टचक्रे—अश्विनी–पुनर्वसु–हस्त–मूल–पूर्वभाद्रपदादिषु नक्षत्रेषु मेषादारभ्यांशकान् क्रमेण गणयेत् । एतत्किल प्रादक्षिण्यक्रमं = सव्यमार्गं वदेत् । रोहिण–मघा–विशाखा–श्रवणादिषु मेषु = नक्षत्रेषु वृश्चिकादीनामंशकानुत्क्रमेण गणयेत् । एतत्किलापसव्यमार्गं वाच्यम् । अत्रैतदुक्तं भवति । अश्विनी–पुनर्वसु–हस्त–मूल–पूर्वभाद्रेति नक्षत्रपञ्चकस्य प्रथम–द्वितीय–तृतीय–तुरीयपादाः क्रमेण मेष–वृष–मिथुन–कर्कांशगताः स्थाप्याः । भरणी–पुष्य–चित्रा–पूर्वाषाढोत्तरभाद्रेति नक्षत्रपञ्चकस्य प्रथम–द्वितीय–तृतीय–चतुर्थ–पादाः क्रमेण सिंह–कन्या–तुला–वृश्चिकांशगताः स्थाप्याः । कृत्तिका–श्लेषा–स्वाती–उत्तराषाढ–रेवतीति पञ्चभानां प्रथम–द्वितीय–तृतीय–चतुर्थ–पादा धनुर्मकरकुम्भमीनांशगताः स्थाप्याः । इति सव्यक्रमम् । अथ च रोहिणी–मघा–विशाखा–श्रवणेति नक्षत्रचतुष्टयस्य प्रथम–द्वितीय–तृतीय–चतुर्थ–पादाः क्रमेण वृश्चिक–तुला–कन्या–सिंहगताः । मृगशिराः–पूर्वफल्गुनी–अनुराधा–धनिष्ठानां चत्वारः पादाः क्रमेण कर्क–मिथुन–वृष–मेषगताः । आर्द्रा–उत्तरफल्गुनी–ज्येष्ठा–शततारार्णां चत्वारः पादाः क्रमेण मीन–कुम्भ–मकर–धनुरंशगताः स्थापनीयाः । इत्यपसव्यम् । अन्यत्सर्वं चक्रदर्शनेन स्पष्टं भवेत् ।

अथ राशीनामंशके परमायुरुच्यते । मेषगोयमकुलीरमन्दिरेषु = मेष–वृष–मिथुन–कर्क–राशिषु, अंशकेषु क्रमेण–ज्ञानकं = १००, मदाः = ८५, गजाः = ८३, तदा = ८६, कोणभवनेषु = उक्ता ये मेषाद्यश्चत्वारो राशयस्तेभ्यः कोण–( ५।९ ) राशिषु सिंहादिचतुर्षु धनुरादिचतुर्षु च राशिषु तद्वदेव वदेत् । अर्थात्–मेष–सिंह–धनुषां शतं ( १०० ) पूर्णायुः । वृष–कन्या–मकराणां पञ्चाशीतिः ( ८५ ) । मिथुन–तुला–कुम्भानां त्र्यशीतिः ( ८३ ) । कर्क–वृश्चिक–मीनानां षडशीतिः ( ८६ ) पूर्णायुर्भवतीति ।

# अथ कालचक्रदशा-

सव्यनक्षत्राणि—१, २, ३, ७, ८, ९, १३, १४,

| नक्षत्राणि | पादाः | देहाधीशाः | १ | २ | ३ | ४ |
|---|---|---|---|---|---|---|
| अश्विनी १, पुनर्वसु ७, हस्त १३, मूल १९, पूर्वभाद्र २५ | १ | मं. | पो=१ मं=७ व | रं=२ शु=१६व | गा=३ बु=९ व | वो=४ चं=२१व |
| | २ | श. | न=१० श=४ व | क्ष=११ श=४ व | त्र=१२ बृ=१० | दा=८ मं=७ व |
| | ३ | शु. | रू=२ शु=१६ | पो=१ मं=७ | त्र=१२ बृ=१० | क्षु=११ श=४ |
| | ४ | चं. | वा=४ चं=२१ | णी=५ सू=५ | च=६ बु=९ | स्यं=७ शु=१६ |
| भरणी २ पुष्य ८ चित्रा १४ पूर्वाषाढ २० उत्तरभाद्र २६ | १ | मं. | हूं=८ मं=७ | स=७ शु=१६ | क्ष=६ बु=९ | व=४ चं=२१ |
| | २ | श. | क्ष=११ श=४ | त्रा=१० श=४ | धी=९ बृ=१० | क=१ मं=७ |
| | ३ | शु. | सु=७ शु=१६ | द=८ मं=७ | धि=९ बृ=१० | न=१० श=४ |
| | ४ | चं. | वा=४ चं=२१ | मां=५ सू=५ | गा=३ बु=९ | र=२ शु=१६ |
| कृ ३ श्लेषा ९ स्वाती १५ उत्तराषाढ २१ रेवती २७ | १ | मं. | पौ=१ मं=७ | रं=२ शु=१६ | गा=३ बु=९ | वो=४ चं=२१ |
| | २ | श. | न=१० श=४ | क्ष=११ श=४ | त्र=१२ बृ=१० | दा=८ मं=७ |
| | ३ | शु. | रू=२ शु=१६ | पो=१ मं=७ | त्र=१२ बृ=१० | क्षु=११ श=४ |
| | ४ | चं. | वा=४ चं=२१ | णी=५ सू=५ | च=६ बु=९ | स्यं=७ शु=१६ |

# सव्यमार्गवाक्यानि

१५, १९, २०,२१, २५, २६, २७, इति पञ्चदश ।

| ५ | ६ | ७ | ८ | ९ | परमायुर्वर्षाणि | जीवाधिपाः | राशयः |
|---|---|---|---|---|---|---|---|
| मा=५<br>सू=५ व | ता=६<br>बु=९ व | स=७<br>शु=१६व | हो=८<br>मं=७ व | धी=९<br>बृ=१० व | १००<br>व. | बृ. | मेषः |
| सी=७<br>शु=१६व | च=६<br>बु=९ व | वं=४<br>चं=२१ | ण=५<br>सू=५ व | गः=३<br>बु=९ व | ८५<br>व. | बु. | वृषः |
| नि=१०<br>श=४ | धा=९<br>बृ=१० | य=१<br>मं=७ | रं=२<br>शु=१६ | गं=३<br>बु=९ | ८३<br>व. | बु. | मिथुनं |
| द=८<br>मं=७ | घि=९<br>बृ=१० | न=१०<br>श=४ | क्ष=११<br>श=४ | त्रं=१२<br>बृ=१० | ८६<br>व. | बृ. | कर्कः |
| शां=५<br>सू=५ | ब=३<br>बु=९ | र=२<br>शु=१६ | प=१<br>म=७ | त्रं=१२<br>बृ=१० | १००<br>व. | बृ. | सिंहः |
| र=२<br>शु=१६ | गो=३<br>बु=९ | भी=४<br>चं=२१ | मा=५<br>सू=५ | च=६<br>बु=९ | ८५<br>व. | बु. | कन्या |
| क्ष=११<br>श=४ | त्र=१२<br>बृ=१० | ज=८<br>मं=७ | सि=७<br>शु=१६ | तः=६<br>बु=९ | ८३ | बु. | तुला |
| को=१<br>मं=७ | त्र=१२<br>बृ=१० | क्षु=११<br>श=४ | निं=१०<br>श=४ | घिः=९<br>बृ=१० | ८६ | बृ. | वृश्चिकः |
| मा=५<br>सू=५ | ता=६<br>बु=९ | स=७<br>शु=१६ | हो=८,<br>मं=७ | धी=९<br>बृ=१० | १०० | बृ. | धनुः |
| सी=७<br>शु=१६ | च=६<br>बु=९ | वं=४<br>चं=२१ | ण=५<br>सू=५ | गः=३<br>बु=९ | ८५ | बु. | मकरः |
| नि=१०<br>श=४ | धा=९<br>बृ=१० | य=१<br>मं=७ | रं=२<br>शु=१६ | गं=३<br>बु=९ | ८३ | बु. | कुम्भः |
| द=८<br>मं=७ | घि=९<br>बृ=१० | न=१०<br>श=४ | क्ष=११<br>श=४ | त्रं=१२<br>बु=१० | ८६ | बृ. | मीनः |

# अथापसव्य-

१, ध-न-वै-त्र-प-रा-ह्न-मि-व ॥ २, ता-सा-द-श्र-क्षु-र्नि-धि-र्द्दा-सा ॥

५, त्र-क्षु-र्नि-धि-दा-स-स्त-मे-व ॥ ६, गि-रा-यु-ध-न-श्र-त्र-प-रः ॥

| नक्षत्राणि | पादाः | जीवाधिपः | अथ कालचक्रदशा- अपसव्यनक्षत्राणि—४,५,६,१०, | | | |
|---|---|---|---|---|---|---|
| रोहिणी ४, मघा १०, विशाखा १६, श्रवण २२, | १ | बृ. | ध=९ बृ=१० | न=१० श=४ | वै=११ श=४ | श्र=१२ बृ=१० |
| | २ | बु. | ता=६ बु=९ | सा=७ शु=१६ | द=८ मं=७ | श्र=१२ बृ=१० |
| | ३ | बु. | च=६ बु=९ | मी=५ सू=५ | मो=४ चं=२१ | गी=३ बु=९ |
| | ४ | | श्र=१२ बृ=१० | यो=१ मं=७ | रा=२ शु=१६ | गी=३ बु=९ |
| मृगशिराः ५, पूर्वफाल्गुनी ११, अनुराधा १७, धनिष्ठा २३ | १ | बृ. | श्र=१२ बृ=१० | क्षु=११ श=४ | नि=१० श=४ | धि=९ बृ=१० |
| | २ | बु. | गि=३ बु=६ | रा=२ शु=१६ | यु=१ मं=७ | ध=९ बृ=१० |
| | ३ | बु. | गो=३ बु=९ | मां=५ सू=५ | वा=४ चं=२१ | ची=६ बु=९ |
| | ४ | बृ. | धि=९ बृ=१० | ज=८ मं=७ | सि=७ शु=१६ | त=६ बु=९ |
| आर्द्रा ६, उत्तरफाल्गुनी १२, ज्येष्ठा १८, शतभिषा २४, | १ | बृ. | त्र=१२ बृ=१० | क्षु=११ श=४ | नि=१० श=४ | धि=९ बृ=१० |
| | २ | बु. | गि=३ बु=९ | रा=२ शु=१६ | यु=१ मं=७ | ध=९ बृ=१० |
| | ३ | बु. | गो=३ बु=९ | मां=५ सू=५ | वा=४ चं=२१ | ची=६ बु=९ |
| | ४ | बृ. | धि=९ बृ=१० | ज=८ मं=७ | सि=७ शु=१६ | त=९ बु=९ |

# चक्रवाक्यानि—

३, च–र्मी-भो–गी–रा–य–घ-न–क्षंम् ॥ ४, त्र–यो-रा–गी–मा–मे–त्ता–म–ह ॥

७, गो–मां-वा–ची–स–दा–त्रि–र्क्षु–ष्ने ॥ ८, धि–ज-सि-त्त–मि–वा–ज्ञा–रि–का ॥

| ऽपसव्यचक्रवाक्यानि— ११,१२,१६,१७,१८,२२,२३,२४ | | | | | परमायुर्वर्षाणि | देहाधिपः | राशयः अंशाः |
|---|---|---|---|---|---|---|---|
| प=१ मं=७ | रां=२ शु=१६ | ग=९ बु=३ | मि=५ सू=५ | व=४ चं=२१ | ८६ | चं. | वृश्चिकः |
| क्षु=११ श=४ | नि=१० श=४ | धि=९ बृ=१० | र्दा=८ मं=७ | सा=७ शु=१६ | ८३ | शु. | तुला |
| रा=२ शु=१६ | य=१ मं=७ | घ=९ बृ=१० | न=१० श=४ | क्षं=११ श=४ | ८५ | शनिः | कन्या |
| मा=५ सू=५ | मे=४ चं=२१ | त्ता=६ बु=९ | स=७ शु=१६ | ह=८ मं=७ | १०० | मं. | सिंहः |
| र्ह्रौ=८ मं=७ | स=७ शु=१६ | स्त=६ बु=९ | मे=५ सू=५ | व=४ चं=२१ | ८६ | चं. | कर्कः |
| न=१० श=४ | क्ष=११ श=४ | त्र=१२ बृ=१० | प=१ मं=७ | रः=२ शु=१६ | ८३ | शु. | मिथुनं |
| स=७ शु=१६ | दा=८ मं=७ | त्रि=१२ बृ=१० | र्क्षु=११ श=४ | ष्ने=१० श=४ | ८५ | श. | वृषः |
| मि=५ सू=५ | वा=४ चं=२१ | ज्ञा=३ बु=९ | रि=२ शु=१६ | का=१ मं=७ | १०० | मं. | मेषः |
| र्दा=८ मं=७ | स=७ शु=१६ | स्त=६ बु=९ | मे=५ सू=५ | व=४ चं=२१ | ८६ | चं. | मीनः |
| न=१० श=४ | क्ष=११ श=४ | त्र=१२ बृ=१० | प=१ मं=७ | रः=२ शु=१६ | ८३ | शु. | कुम्भः |
| स=७ शु=१६ | दा=८ मं=७ | त्रि=१२ बृ=१० | क्षु=११ श=४ | ष्ने=१० श=४ | ८५ | श. | मकरः |
| मि=५ सू=५ | वा=४ चं=२१ | ज्ञा=३ बु=९ | रि=२ शु=१६ | का=१ मं=७ | १०० | मं. | धनुः |

अथ देहजीवपरिज्ञानमुच्यते। प्रतिराशि नवखण्डानि ( अंशाः ) भवन्ति। तेषु सव्यमार्गे प्रथमोंऽशो देहसंज्ञोऽन्तिमोंऽशो जीवसंज्ञो भवति। एतद्विलोममपसव्येऽर्थात्प्रथमो जीवसंज्ञोऽन्त्यो देहाभिधो भवति। एतच्चक्रलेखनप्रकारः पाराशरीये—

द्वादशारं लिखेच्चक्रं तिर्यगूर्ध्वसमानकम्। गृहा द्वादश जायन्ते सव्यचक्रे यथाक्रमम्॥
द्वितीयादिषु कोष्ठेषु राशीन्मेषादिकाँल्लिखेत्। एवं द्वादशराश्याख्यकालचक्रमुदीरितम्॥
विश्वर्क्षपूर्वाभाद्रं च रेवती सव्यतारकः। एतद्दशोडुपादीनामश्विन्यादौ च वीक्षयेत्॥
विशदस्तत्प्रकारस्तु कथ्यते शृणु पार्वति!। देहजीवौ मेष-चापौ दस्राद्यचरणस्य च॥
मेषादिचापपर्यन्तं राशिपाश्च दशाधिपाः। देहजीवौ नक्रयुग्मौ दिगीशार्काष्टभूधराः॥
षड्वेदशरलोकाश्च राशिपाश्च दशाधिपाः। दस्रादिदशताराणां तृतीयचरणेषु च॥
गौर्देहो मिथुनं जीवो द्विकार्केशदशांशकाः। अक्षिरामाख्यनाथास्ते दशाधिपतयः क्रमात्॥
अश्विन्यादिदशोडूनां चतुर्थचरणेषु च। कर्कमीनौ देहजीवौ कर्कादिनवमेश्वराः॥
दशाधिपा नव ज्ञेयाः शृणु पार्वति! निश्चितम्। याम्येज्यचित्रातोयर्क्षा उत्तराभाद्रतारकाः॥
एतत्पञ्चोडुपादीनां भरण्यादौ च वीक्षयेत्। याम्यप्रथमपादस्य देहजीवावलीझषौ॥
नागागर्तुपयोधीषुरामाक्षीन्द्वर्कभेश्वराः। याम्यद्वितीयपादस्य देहजीवौ घटाङ्गने॥
रुद्रदिङ्नन्दचन्द्राक्षिरामाब्धीषुरसेश्वराः। याम्यतृतीयपादस्य देहजीवौ तुलाङ्गने।
सप्ताष्टाङ्कदिगीशार्कगजादिरसराशिपाः। देहजीवौ कर्कचापौ चतुर्थचरणे स्मृतौ॥
वेदबाणाग्निनेत्रेन्दुसूर्येशदशनन्दपाः। सव्यमेवं विजानीयात्, अपसव्यं तु कथ्यते॥
द्वादशारं लिखेच्चक्रं तिर्यगूर्ध्वसमानकम्। द्वितीयादिषु कोष्ठेषु वृश्चिकाद् व्यस्तमालिखेत्॥
प्राजापत्यमघेन्द्राग्निश्रवणं च चतुष्टयम्। धातृवद्वीक्षयेद् देहजीवौ कर्किधनुर्धरौ॥
नवदिग्रुद्रसूर्येन्दुनेत्राग्निष्वब्धिराशिपाः। धातृद्वितीयचरणे तुलाजौ देहजीवकौ॥
षष्ठसप्ताष्टार्करुद्रा दिङ्नवा गिरिराशिपाः। धातृतृतीयचरणे ( देह ) जीवौ कुम्भाङ्गनाधिपौ।
षड्बाणाब्धिगुणाक्षीन्दुनन्ददिग्रुद्रराशिपाः। रोहिण्यन्तपदे देहजीवावलिझषौ स्मृतौ।
सूर्येन्दुद्विगुणेष्वब्धितर्कशैलाष्टराशिपाः। चान्द्ररौद्रभगार्यम्णमित्रेन्द्रवसुवारुणम्।
एतत्ताराष्टकं चैव विज्ञेयं चान्द्रवत् क्रमात्। देहजीवौ कर्किमानौ मृगाद्यचरणस्य च।
व्यस्तमीनादिकर्कान्तं राशिपाश्च दशाधिपाः। गौर्देहो मिथुनं जीव इन्द्रभस्य द्वितीयके।
त्रिद्वीन्द्वर्कदिगीशार्कचन्द्रद्विभवनाधिपाः। देहजीवौ नक्रयुग्मौ मृगपादे तृतीयके।
त्रिबाणाब्धिरसागाष्टसूर्येशदशराशिपाः। मेषचापौ देहजीवाविन्द्रभस्य चतुर्थके।
व्यस्तं चापादिमेषान्तं राशिपाश्च दशाधिपाः। एवं व्यस्ततरे ज्ञेयं देवजीवदशादिकम्।
स्पष्टं तवाग्रे कथितं पार्वति! प्राणवल्लभे!॥

अत्र प्रसङ्गाज्जन्मकालीननक्षत्रतो राशीनामंशावगमनप्रकारो लिख्यते। जन्मकाले गतनक्षत्रसङ्ख्या त्रिभक्ता कार्या, शेषं चतुर्गुणं कार्यं, तज्जन्मनक्षत्रस्य वर्त्तमानचरणेन सहितं कुर्यादेवं फलं राशिमानं स्यात्; तस्य राशेः यत्पूर्णायुर्मानं तदेव तस्य पूर्णायुर्भवति। अथ जन्मनक्षत्रस्य वर्तमानचरणे यद् भुक्तमानं तद्राशिपूर्णायुर्मानेन सङ्गुणं नवशतेन भक्तं च कार्यं, फलं भुक्तदशामानं भवेत्। तदूनं पूर्णायुर्मानं भोग्यदशामानं स्यादिति।

अत्रोदाहरणम्—

कल्प्यते कस्यचिज्जन्म कृत्तिकानक्षत्रस्य चतुर्थचरणे वर्त्तते; तत्र चतुर्थचरणे भुक्तमानं दण्डादि ७।८। तदा—

'गततारा त्रिभिर्भक्ता शेषं चत्वारिसङ्गुणम्। वर्तमानपदेनाढ्यं राशीनामंशको भवेत्'॥

इत्युक्तप्रकारेण गतनक्षत्रसङ्ख्या = २। त्रिभक्ता तदा शेषं = २। एतच्चतुर्गुणं जातं =

(२ × ४)=८ । कृत्तिकानक्षत्रस्य वर्त्तमानेन पदेना=( ४ )नेन सहित जातं=(८ + ४) १२ । अतएव मीनांशदशायां तस्य जन्म जातमतस्तत्पूर्णायुर्मानं = ८६ षडशीतिः । अथ कृत्तिकाचतुर्थचरणभुक्तमान—( ७।८ ) मेतत् मीनांशपूर्णायुर्मानेनानेन ( ८६ ) संगुणितं जातं= ( ७।८ ) × ८६ = ४२८५ × ८६ = ३६८०८५ । एतत् नवशतेन (९००) भक्तम् । जातं भुक्तदशामानं वर्षादि=४०।१०।२३।१२ । एतत् पूर्णायुर्माना—(८६) दस्माच्छोधितं जातं= ८६—( ४०।१०।२३।१२ ) भोग्यदशामानम् = ४५।१।६।४८; स्पष्टार्थं चक्रं विलोक्यम् ॥

पांच रेखायें पूर्वसे पश्चिम तक ( खड़ी ) लिखे और पांच रेखायें पेड़ी लिखे इस तरह १६ कोष्ठ होते हैं; उनमें बीचके ४ कोष्ठों को त्याग दे, तो १२ कोष्ठका चक्र होता है उसमें पूर्वसे ईशान पर्यन्त मेषादि द्वादश राशि के स्वामी प्रत्येक कोष्ठ के स्वामी जानने चाहिये ॥४॥

मेषादि राशिके और मेषादि नवांशके क्रमसे मंगल, शुक्र, बुध, चन्द्र, सूर्य, बुध, शुक्र, मंगल, बृहस्पति, शनि, शनि और गुरु पति हैं ऐसा मनीषी गण कहते हैं ॥ ५ ॥

सूर्यादि ग्रहके ५।२१।७।९।१०।१६।४ क्रमसे दशा वर्ष हैं। जो ग्रह जिस राशिका स्वामी है उस ग्रहका वर्ष ही उस राशिका भी वर्ष जाने जैसे-( सिंह ५, कर्क २१, मे-वृ ७, मि-कं ९, ध-मी. १०, वृ-तु १६, म-कु ४ ) ॥ ४ ॥

अश्विनी, पुनर्वसु, हस्त, मूल और पूर्वभाद्रपदादि तीन २ नक्षत्रोंके पादोंमें सव्यक्रमसे मेषसे अंशोंको गिने । रोहिणी, मघा विशाखा और श्रवण आदि नक्षत्रमें वृश्चिक आदि राशिसे अंशकोंको क्रमसे गिने । सव्यके प्रत्येकसे तीन नक्षत्रके चार २ चरणोंसे १२ राशियोंमें मेषसे प्रदक्षिणा करके मीन पर्यंत लिखे। अपसव्यके प्रत्येक नक्षत्रसे तीन नक्षत्रके चार २ चरणोंसे वृश्चिकसे उलटा क्रमसे धनु पर्यन्त लिखे। सव्य और अपसव्य मार्गसे अश्विनी आदिसे तीन २ नक्षत्र जिसमें सव्य क्रमसे देहादि और वाममें जीवादि जाने। इसका स्पष्टीकरण संस्कृत चक्रसे कीजिये ॥ ७-११ ॥

मेष-वृष-मिथुन-कर्क-राशियोंके अंशमें क्रमसे ज्ञानक ( १०० वर्ष) सद् (८५ व.) गज (८३ व ) तदा (८६) वर्ष परमायु कहे हैं। और ये ही उनके कोण (५।९) गृहमें पूर्णायु हैं ॥

इस प्रकार आयुका परिज्ञान करके देह और जीवकी कल्पना करके फलका विचार करे। पहला अंश 'देह' संज्ञक हैं। सबके अन्त्यमें 'जीव' है। अपसव्यमें विलोम ( पहला जीव और अन्त्यमें 'देह' ) जाने ॥ १३ ॥

देहजीवे यदा राहुः केतुर्भौमो रविः स्थितः ॥ १४ ॥
तदा तस्मिन्भवेन्मृत्युर्देहे रोगः प्रवर्तते ।
देहजीवगृहं यातः सौम्यो जीवश्च भार्गवः ॥ १५ ॥
सुखसम्पत्करं सर्वं शोकरोगविनाशनम् ॥
मिश्रखेचरसंयुक्ते मिश्रं फलमवाप्नुयात् ॥ १६ ॥

इदानीं पूर्वपरिभाषितदेहजीवयोः फलमाह—देहजीव इत्यादिभिः । पूर्वपरिभाषिते देहे जीवे च सम्प्राप्ते निर्दिष्टग्रहे निर्दिष्टं फलं वाच्यम् । तथा च बृहत्पाराशरे—
देहजीवसमायोगे भौमार्करविजादिभिः । एकैकयोगे मरणं बहुयोगे तु का कथा ॥
यत्र स्थाने तु सञ्जीवो देहयोगसमन्वितः । तत्र पापग्रहैर्योगे तद्दशामरणं भवेत् ॥
देहयोगे महाबाधा जीवयोगे तु मृत्युदः । द्वाभ्यां संयोगमात्रेण हन्यते नात्र संशयः ॥
जीवे जीवो यदा राहुः सौरिर्वक्रो रविः स्थितः । मृत्युकालगतिं ज्ञात्वा शान्तिं कुर्याद्यथाविधि ॥
जीवे जीवो यदा सोमः सौम्यो वाऽपि सितः स्थितः । तदा सौख्यं प्रकुर्वन्ति रोगमृत्युविनाशनम् ॥
पापक्षेत्रदशायोगे देहजीवौ तु दुःखदौ । शुभक्षेत्रदशायोगे शुभयोगे शुभं भवेत् ।
देहे शुभग्रहैर्युक्ते भूषणादि ध्रुवं भवेत् । जीवे शुभग्रहैर्युक्ते पुत्रदारादिकाँल्लभेत् ॥ १४-१६

यदि सव्य या अपसव्य चक्रमें देह-जीवमें राहु, केतु, मंगल और सूर्य स्थित हो तो

उस दशामें मृत्यु हो। केवल देहमें हों तो रोग हो। देह या जीव गृहमें बुध, बृहस्पति, शुक्र हों तो सम्पूर्ण सुख-सम्पत्ति करें और शोक रोगका संहार करें। यदि देह-जीव मिश्र ग्रहसे युक्त हो तो मिश्र फल होवे ॥ १४-१६ ॥

सिंहावलोकसमये मण्डूकगतिसम्भवे ।
अपमृत्युभयं तस्मिन् प्रायश्चित्ताद्विमुच्यते ॥ १७ ॥

सिंहावलोकसमय इति । सिंहावलोकनं मण्डूकगतिश्चाग्रे ( ८९-९१ श्लोके ) वक्ष्यति। "कालचक्रगतिस्त्रेधा निश्चिता पूर्वसूरिभिः । मण्डूकगमनं चैव पृष्ठतो गमनं तथा ॥
सिंहावलोकनं नाम पुनरागमनं भवेत् । पृष्ठतो गमनं चैव कर्किकेसरिणोरपि ॥
मीनवृश्चिकयोश्चापमेषयोः केसरी गतिः । कन्याकर्कटयोः सिंहयुग्मयोर्मण्डुकी गतिः" इति ॥
तथा पाराशरीये—"प्रथमे गतिर्मण्डूकी द्वितीये मर्कटी तथा ।
बाणायनवपर्यन्तं गतिः सिंहावलोकनम् ॥
कन्यायां कर्कटे वाऽपि सिंहभे मिथुनेऽपि च । मण्डूकीगतिसंज्ञो वै तादृशं रोगकारणम् ॥
मीने तु वृश्चिके वाऽपि चापे मेषे तथैव च । सिंहावलोकनं चैव तादृशं च फलं लभेत्" इति॥

अत्रैतदुक्तं भवति । कालचक्रदशायामुक्तलक्षणकेऽन्तरे प्राप्ते सति तत् तत्फलं वाच्यम् । तत्र गतिज्ञानाय चक्रमेव द्रष्टव्यम् । लक्षणलक्षिते ग्रहे विविच्य फलमूहनीयमित्यलं पल्लवितेन ॥ १७ ॥

सिंहावलोकके समयमें मण्डूकगतिके सम्भव होने पर अपमृत्युका भय होता है वह प्रायश्चित्त ( शान्ति ) करनेसे छूटता है। ( सिंहावलोक, मण्डूकगति, पृष्ठगमनका विवरण आगे ८९-९१ श्लोकमें कहेंगे ) ॥ १७ ॥

मीनात्तु वृश्चिके याते ज्वरं भवति देहिनाम् ।
पाथोनात्कर्कटे याते मातृबन्धुवधूमृतिः ॥ १८ ॥
कर्कटात्तु हरौ याते व्रणरोगं वदेद् बुधः ।
सिंहात्तु मिथुनं याते स्वस्त्रीव्याधिमृतिर्भवेत् ॥ १९ ॥
पुत्रबन्धुमृतिं विद्याच्चापान्मेषं गते पुनः ।
शुभग्रहेऽस्मिन्नभयं पापग्रहयुते भयम् ॥ २० ॥
कन्यायाः कर्कटे याते पूर्वभागे महान्भवेत् ।
उत्तरां दिशमाश्रित्य शुभयात्रां गमिष्यति ॥ २१ ॥
सिंहात्तु मिथुनं याते पूर्वभागं विवर्जयेत् ।
कार्यारम्भे तु नैर्ऋत्यां सुखयात्रां गमिष्यति ॥ २२ ॥
कर्कटाद्दक्षिणे सिंहे कार्यहानिश्च रोगकृत् ।
दक्षिणां दिशमाश्रित्य पश्चादागमनं भवेत् ॥ २३ ॥
मीनात्तु वृश्चिके क्रान्ते उदगाच्छति सङ्कटम् ।
चापान्मेषे भयं यात्रा व्याधिर्बन्धुमृतिर्भवेत् ॥ २४ ॥
तत्र सम्पद्विवाहादि शुभं भवति पश्चिमे ।
शुभारूढे नृपप्रीतिं सर्वसम्पत्करं नृणाम् ॥ २५ ॥

सरलार्थाः किलैते श्लोकाः ॥ १८-२५ ॥

मीनसे वृश्चिक पर जानेवाली अन्तर्दशामें मनुष्योंको ज्वर होता है। एवं कन्यासे कर्कमें जाने पर माता-बन्धु-स्त्रीको मृत्यु होती है ॥ १८ ॥

कर्कसे सिंहमें जानेवाली दशामें पण्डित लोग व्रण रोग कहते हैं। सिंहसे मिथुन में जाने पर अपनी स्त्रीकी व्याधिसे मृत्यु होती है ॥ १९ ॥

धनुसे मेषपर जानेपर पुत्र और मित्रकी मृत्यु हो। इसमें शुभग्रह होनेसे भय नहीं है, पापग्रह होनेसे भय है ॥ २० ॥

कन्यासे कर्क पर जानेपर पूर्व भागमें महान् हो। यहां उत्तर दिशाके आश्रयसे शुभ-यात्रा करे ॥ २१ ॥

सिंहसे मिथुनपर जानेवाली दशामें पूर्वदिशाका त्याग करे। यहां कार्यसिद्धिके लिये नैर्ऋत्य दिशामें सुखयात्रा करे ॥ २२ ॥

सव्य चक्रमें कर्कसे सिंहपर जानेवाली दशामें कार्यहानि और रोग हो। उसमें दक्षिण दिशाका आश्रयण कर पीछे आगमन हो ॥ २३ ॥

मीनसे वृश्चिकपर जानेवाली दशामें उत्तर दिशामें सङ्कट प्राप्त हो। धनुसे मेषपर आने वाली दशामें भय, यात्रा, व्याधि तथा बन्धुकी मृत्यु होती है ॥ २४ ॥

वहां ( धनुसे मेषवालीमें ) सम्पत्ति विवाहादि शुभ पश्चिममें होता है। यदि उसमें शुभग्रह हों तो मनुष्यको राजासे प्रीति, सब सम्पत्ति करानेवाली होवे ॥ २५ ॥

देहो मेषश्चापसिंहाजभानां जीवश्चापी गोवधूनक्रभानाम् ।
आकोकेरो देहसंज्ञो नृयुग्मं जीवः सव्ये चापसव्ये विलोमात् ॥ २६ ॥
उक्षा देहो युग्मकोणं गतानां जीवं युग्मागारमाहुर्मुनीन्द्राः ।
मीनो जीवः कर्कटो देहराशिः सव्ये चक्रे कर्किकीटान्त्यभानाम् ॥ २७ ॥

अधुना पूर्वोक्तकालदशाचक्रे द्वादशराशीनां देहजीवपरिभाषामाह—देह इति । चाप-सिंहाजभानां = धनुःसिंहमेषराशीनां, मेषो = भौमः देहसंज्ञो भवति, चापी = धनुः = गुरुः जीवसंज्ञो भवति । गोवधूनक्रभानाम् = वृषकन्यामकरराशीनाम् , आकोकेरः = मकरः शनिः, देहसंज्ञो भवति । नृयुग्मं = मिथुनं बुधः, जीवसंज्ञो भवति । एवं किल सव्ये भवति । अपसव्ये च विलोमात् । अर्थात् अपसव्ये चापसिंहाजभानाम् , धनुर्देहाभिधं, मेषो जीवाख्यश्चैवं गोवधूनक्रभानां मकरो जीवाख्यः, मिथुनं देहश्च भवतीति ज्ञेयम् । युग्मस्य = मिथुनस्य, कोणगतानां = मिथुनतुलाकुम्भानामुक्षा = वृषाधिपः = शुक्रः, देहसंज्ञो भवति । युग्मागारं = मिथुनं = बुधं, जीवं मुनीन्द्रा आहुः । एतत्किल सव्येऽपसव्ये च समानमेव भवति । अथ कर्किकीटान्त्यभानां = कर्कवृश्चिकमीनानां मीनो ( गुरुः ) जीवः, कर्कटश्च-न्द्रमा देहश्च भवति । परमेतत् सव्ये चक्रे । अपसव्ये तु विलोममर्थात् कर्किकीटान्त्यभानां मीनो ( गुरुः ) देहः, कर्कटः ( चन्द्रः ) जीवश्चेति वाच्यम् । स्पष्टार्थं चक्रं विलोक्यमिति ॥

सव्यचक्रमें मेष-धनु-सिंह-राशिमें मेष देह संज्ञक है, और धनु जीव संज्ञक है। वृष-कन्या-मकर राशियोंका मकर देह संज्ञक और मिथुन जीव संज्ञक है। अपसव्यमें इसका उलटा जाने। राशीशको देहेश और जीवेश जानें। स्पष्टार्थ सं चक्र देखें ॥ २६ ॥

सव्यचक्रमें मिथुन-तुला-कुम्भराशियोंका वृष देह और मिथुन जीव मुनीन्द्रोंने कहा है। कर्क-वृश्चिक-मीनका मीन जीव और कर्क देह संज्ञक है। यहां भी जीव और देहका पति राशिपति समझें। अपसव्यमें इसका विपरीत होता है ॥ २७ ॥

देहजीवसमायुक्तैर्भौमार्किरविभोगिभिः ।
एकैकयोगे मरणं बहुयोगे न संशयः ॥ २८ ॥
देहयुक्ते महारोगं जीवयुक्ते महद्भयम् ।
द्वाभ्यां संयोगमात्रेण हन्यते नात्र संशयः ॥ २९ ॥
अधिरोगो भवेद् द्वाभ्यामपमृत्युस्त्रिभिर्भवेत् ।
चतुर्भिर्मृतिरापन्ना देहजीवे भवेद्यदि ॥ ३० ॥
युगपद्देहजीवौ तु पापग्रहयुतौ तथा ।
राजचोरादिभीतिश्च द्वाभ्यां मृत्युर्न संशयः ॥ ३१ ॥

अग्निबाधां रवौ विद्याच्चन्द्रे ज्वलनबाधनम्
भौमे शस्त्रकृता पीडा वायुबाधाकरं बुधे ॥ ३२ ॥
गुरौ चोदरबाधा स्यात् शुक्रेऽग्निभयमाप्नुयात् ।
शनौ गुल्मेन बाधा स्याद् राहौ विषकृतां रुजम् ॥ ३३ ॥

अस्मिन् कालचक्रे प्रतिराशिं या देहजीवसंज्ञाः परिभाषितास्तासु यथासम्भवं देह-जीवसमायुक्तैः भौम-शनि-सूर्य-राहुभिः निर्दिष्टं फलं ब्रूयात्। तत्रैकैकयोग एव मरणं भवति। बहुयोगे तु अवश्यमेव मरणं वाच्यम्। यथा पूर्वोक्तोदाहरणे मीनांशदशायां देहः कर्कटः (चन्द्रः), जीवो मीनः (गुरुः) वरीवर्त्ति। अत्र यदि देहे जीवे वा राशौ, वोभयत्रापि यदि भौमार्किरविभोगिनामन्यतमः सर्वे वा सम्प्राप्ता भवेयुस्तदा मीनांश-दशायां निर्दिष्टग्रहान्तरे तस्य मरणं वक्तव्यमित्यर्थः। पक्षान्तरमाह—देहयुक्त इति। देहे गतवति भौमादिपापग्रहे महारोगं, जीवे गतवति महद्भयं, द्वाभ्यां देहे जीवे च संयोग-मात्रेण नरस्तदन्तरे हन्यते, अत्र संशयो नेति। अन्यत्स्पष्टार्थमेवेति ॥ २८-३३ ॥

मंगल, शनि, रवि या राहु देह और जीवमें संयुक्त हो तो एक २ के योगमें भी मरण कहे। बहुतके योगमें तो निःसन्देह मृत्यु कहे ॥ २८ ॥

पूर्वोक्त कोई ग्रह देहयुक्त हो तो महारोग, जीवयुक्त हो तो महाभय होता है। दोनोंका संयोग होनेसे मृत्यु होती है ॥ २९ ॥

दो ग्रहोंसे युक्त देह या जीव हो तो अधिरोग, तीनसे अपमृत्यु, चारसे निश्चित मृत्यु हो॥

देह और जीव दोनों पापग्रहसे युक्त हों तो राजासे और चोरसे भय हो। दोनों दो दो पापग्रहोंसे युक्त होनेसे मृत्यु हो, इसमें संशय नहीं है ॥ ३१ ॥

उस देह या जीवमें सूर्य हो तो अग्निबाधा, चन्द्रमा हो तो ज्वलन बाधा, मंगल हो तो शस्त्रसे पीडा, बुध हो तो वायु की बाधा हो ॥ ३२ ॥

बृहस्पति हो तो उदर बाधा, शुक्र हो तो अग्निका भय हो, शनि हो तो गुल्म बाधा हो, राहु हो तो विषका किया रोग हो ॥ ३३ ॥

भ्रातृस्थानगतो जीवो दारस्थानगतः कुजः ।
तथा जन्मगतो मन्दो राहुर्नवमराशिगः ॥ ३४ ॥
चन्द्रोऽष्टमगृहं यातः सूर्यो रिष्फगृहं गतः ।
बुधः सप्तमभावस्थो भार्गवः शत्रुराशिगः ॥ ३५ ॥
इत्येवं मरणस्थानं तस्मिन्पापयुतेऽथवा ।
पापदृष्टेऽरिनीचस्थे दुर्बले दुःखमाप्नुयात् ॥ ३६ ॥

अधुना कानिचिन्मरणस्थानान्युच्यन्ते—भ्रातृस्थानेति। १. जीवो (गुरुः) यदि भ्रातृस्थानगतः = तृतीयभावस्थो भवेत्तदा तृतीयं मरणस्थानं भवति। २. कुजो दारस्थान-(७) गतः स्यात्तदा दारास्थानं (७) मरणं ज्ञेयम्। ३. जन्मगतः=लग्नस्थितः, मन्दः। ४. नवमस्थितो राहुः। ५. अष्टमगतः चन्द्रः। ६. द्वादशगतो रविः। ७. सप्तमगतो बुधः। ८. अष्टमस्थः शुक्रश्च यदि भवति तदा किलैतत् मरणस्थानं भवति। तस्मिन् = मरणस्थाने, पापयुते = पापग्रहेण सहिते अथवा पापदृष्टे अरिनीचस्थे (तत्तद्राशौ यो ग्रहो भवेत्तस्य ग्रहस्यासौ राशिर्नीचो वा शत्रुगृहं स्यात् तदा) दुर्बले वा ग्रहे सति तद्योगकारकदशायां नरो दुःखमाप्नुयात्। अत्र बहूनां योगकर्तृग्रहाणां मध्ये बलवतो ग्रहणं भवति। तद्दशायां दुःखं प्राप्नुयाज्जातक इति ॥ ३४-३६ ॥

भ्रातृ स्थानमें बृहस्पति हो, सप्तम स्थानमें मंगल हो, जन्म स्थानमें शनि हो, राहु नवम राशिमें हों, चन्द्रमा अष्टम गृहमें हो, सूर्य १२ वें हो, बुध ७वें हो, शुक्र छठे हो तो

ये मरण स्थान हैं। इनके पाप युक्त होने पर वा पाप दृष्ट होनेपर तथा शत्रु नीच-स्थानीय-दुर्बल-ग्रहयुत होनेपर कष्ट होता है ॥ ३४-३६ ॥

अथ देहजीवफलम्।

भानुः करोति विविधापदमर्थनाशमातिज्वरारिजनभीतिपदच्युतिं च ॥
पित्तार्तिगुल्मग्रहणीक्षयकर्णरोगं पश्वादिबन्धुमरणं सहजादिनाशम् ॥ ३७ ॥

इति सूर्यफलम्।

चन्द्रः स्वबन्धुनजनसङ्गमकन्यकाप्तिमारोग्यभूषणसुखाम्बरराजपूज्यम्।
दानक्रियादिसुरभूसुरपुण्यतीर्थस्नानार्चनं मृदुसुखान्नसुखं करोति ॥ ३८ ॥

इति चन्द्रफलम्।

भौमः करोति तनुतापरुगग्निचोरभीतिं स्वबन्धुकलहं सहजादिनाशम्।
क्षेत्रार्थनाशपदविच्युतियुद्धनीतिं गुल्मार्शकुष्ठविषशत्रुभयं कुवृत्तिम् ॥ ३९ ॥
ज्वरमासुरिकापैत्त्यं ग्रन्थिस्फोटं कुजस्य च।
विषाग्निशस्त्रचोरारिनृपभीतिं वदेद् बुधः ॥ ४० ॥

इति भौमफलम्।

सौम्यः करोति सुहृदाप्तमहत्प्रसादविज्ञानशीलनिगमागमशास्त्रबोधम्।
स्त्रीपुत्रदारनृपभूषणगोगजाश्वलाभं विवेकधनबुद्धियशोऽभिवृद्धिम् ॥ ४१ ॥

इति बुधफलम्।

जीवः करोति विविधार्थसुखं महत्त्वं राज्याभिषेकमवनिप्रभुपूजनाद्यम्।
स्त्रीपुत्रलाभसुखभूषणभोजनार्थमारोग्यकीर्तिविजयं च परोपकारम् ॥ ४२ ॥

इति गुरुफलम्।

शुक्रः करोति रतिलाभसुखाङ्गनादिचित्राम्बरार्थपशुवाहनरत्नजालम्।
गानक्रियानटनगोष्ठिमहत्प्रतापं सत्कीर्तिदानविभवं सुजनैः समाजम् ॥ ४३ ॥

इति शुक्रफलम्।

मन्दः करोति कलहं तनुकृच्छ्रमृत्युबन्ध्वार्तिमग्निरिपुभूतभयं विषार्तिम्।
मानार्थहानिमभिमानकलत्रपुत्रनाशं गृहार्थकृषिवाणिजगोविनाशम् ॥४४॥

इति शनिफलम्।

राहौ देहेऽरिपीडाऽऽत्मबन्धुकष्टपरिभ्रमम्।
पक्षाघातादिपीडां च राजभीतिं वदेन्नृणाम् ॥ ४५ ॥

इति राहुफलम्।

केतौ चोराग्निपीडादिरक्तस्रावादिपीडनम्।
दारिद्र्यं बन्धुनाशं च स्थाननाशं धनक्षयम् ॥ ४६ ॥

इति केतुफलम्।

अधुना देहजीवयोः ग्रहपरत्वेन फलानि दशभिः श्लोकैराह। देहजीवयोः बुधगुरुशुक्राणामेव शुभं फलं भवतीति सारार्थः। श्लोकास्तु सरलार्था अतो विस्तरभयान्न व्याख्याता इति ॥ ३७-४६ ॥

इति देहजीवफलम्।

सूर्य यदि देह या जीवमें हो तो विविध प्रकारकी आपत्ति, धननाश, पीडा, ज्वर, शत्रुसे भय, पदच्युति, पित्तरोगसे गुल्म-ग्रहणी-क्षय-कर्णरोग, पशु तथा परिवारका मरण, और भ्रातृनाश करता है ॥ ३७ ॥

चन्द्रमा देह या जीवमें बन्धुवोंसे समागम, कन्याकी प्राप्ति, आरोग्यता, भूषण-सुख वस्त्र, राजपूज्य, वा दान क्रियादि, देव ब्राह्मणकी सेवा पुण्यतीर्थमें स्नान-पूजन और मृदु अन्नसुखको करता है ॥ ३८ ॥

मंगल देह-जीवमें होनेसे शरीरमें ताप-रोग, अग्नि तथा चौरसे भय, कुटुम्बमें कलह भ्रातृनाश, क्षेत्र-धननाश, पदच्युति, युद्धनीति, गुल्म-बवासीर-कोढ-विष-शत्रुसे भय और कुवृत्ति ( निकृष्ट जीविका ) को करता है ।

ज्वर, मसूरिका ( शीतला ) पित्त विकार, गँठिया वाव, विष-अग्नि-शस्त्र-शत्रु और राजासे भय मंगलका फल कहे ॥ ३९-४० ॥

बुध देह या जीवमें मित्रसे खूब प्रसन्नताकी प्राप्ति, विज्ञान-शील-निगमागम शास्त्रका बोध, स्त्री पुत्र-नृपभूषण-गौ-हाथी-घोड़ेका लाभ, विवेक-धन-यशकी वृद्धि करता है ॥४१॥

देह या जीवमें स्थित बृहस्पति-विविध प्रकारके धन-सुख, महत्त्व, राज्याभिषेक, राजा से पूजन आदि, स्त्री-पुत्रका लाभ, सुख-भूषण-भोजन-धन, आरोग्यता, कीर्ति, विजय, और परोपकारिता करता है ॥ ४२ ॥

शुक्र देह या जीवमें रतिका लाभ स्त्रियोंसे सुख, अनेक वस्त्र, धन-पशुवाहन-रत्नसमूह का लाभ, नाच-गानकी गोष्ठीमें विशेष प्रताप, सत्कीर्ति, दान, विभव और सुजनोंसे सत्संग कराता है ॥ ४३ ॥

देह जीवमें शनि कलह, शरीरको क्षीण, मृत्यु, भ्रातृ दुःख, अग्नि-शत्रु-भूतका भय, विषसे पीड़ा, मान-अर्थकी हानि, गौरव-स्त्री-पुत्रका नाश और गृह-धन-कृषि-व्यापार-तथा गाय बैलोंका नाश करता है ॥ ४४ ॥

जीव या देहमें राहु हो तो शत्रुसे अपनेको पीड़ा, बन्धुको कष्ट, मनस्ताप, पक्षाघातादि पीड़ा और राजभय, मनुष्योंको कहे ॥ ४५ ॥

केतु देह या जीवमें हो तो अग्निसे पीड़ा, खून गिरना इत्यादि पीड़ा, दरिद्रता, बन्धु-नाश, स्थाननाश और धनक्षय होता है ॥ ४६ ॥

अथ चक्रदशाफलम् ।

लग्नचक्रदशाकाले देहारोग्यं महत्सुखम् ।
कीर्तिभूषणराज्यार्थसुतदाराम्बरायतिम् ॥ ४७ ॥
शुभक्षेत्रे शुभं सर्वं पापर्क्षे फलमन्यथा ।
तद्वत्पापसमायुक्ते शुभयुक्ते शुभादिकम् ॥ ४८ ॥
स्वक्षेत्रतुङ्गमित्रस्थखेचरेण समन्विते ।
विलग्नचक्रपाके तु राज्यार्थनृपपूजनम् ॥ ४९ ॥
नीचमूढारिराशिस्थखेचरेण समन्विते ।
पुत्रदारादिनाशं च मिश्रे मिश्रफलं वदेत् ॥ ५० ॥

इति लग्नफलम् ।

द्वितीयराशिचक्रे तु धनधान्यविवर्द्धनम् ।
भोजनं सुतदाराप्तिं क्षेत्रगोनृपपूजनम् ॥ ५१ ॥
विद्याप्तिं वाक्पटुत्वं च सद्गोष्ठ्या कालयापनम् ।
शुभर्क्षे फलमेवं स्यात्पापर्क्षे फलमन्यथा ॥ ५२ ॥

इति द्वितीयफलम् ।

तृतीयराशिचक्रस्य परिपाके महत्सुखम् ।
भक्ष्यभोज्यफलाप्तिं च शौर्यं धैर्यं मनोजयम् ॥ ५३ ॥

कर्णाभरणवस्त्राप्तिं कण्ठभूषणमायतिम् ।
अन्नपानादिसम्पत्तिं शुभराशौ शुभं वदेत् ॥ ५४ ॥
इति तृतीयफलम् ।
चतुर्थराशिचक्रस्य पाके वाहनभूषणम् ।
सीमाप्ति तीर्थयात्रादिमहज्जननिषेवणम् ॥ ५५ ॥
चित्तशुद्धिं महोत्साहं स्त्रीसुताप्तिं कृषिक्रियाम् ।
बन्धुक्षेत्राभिवृद्धिं च गृहलाभं महत्सुखम् ॥ ५६ ॥
आरोग्यमर्थलाभं च सुगन्धाम्बरभूषणम् ।
शुभर्क्षे शोभनं विद्यात्पापर्क्षे सर्वनाशनम् ॥ ५७ ॥
इति चतुर्थफलम् ।
सुतराश्यात्मके चक्रे राज्याप्तिं राजपूजनम् ।
स्त्रीसुताप्तिं महाधैर्यमारोग्यं बन्धुपोषणम् ॥ ५८ ॥
अन्नदानं यशोलाभमानन्दाब्धिमहोदयम् ।
उपकर्तृत्वमर्थाप्तिं वाहनाम्बरभूषणम् ॥ ५९ ॥
शुभपापर्क्षजं सर्वं ग्रहयोगादिसम्भवम् ।
पूर्ववद्योजयेत्तत्र चरराशौ वदेद् धृतिम् ॥ ६० ॥
इति सुतफलम् ।
चक्रस्य षष्ठराशेस्तु परिपाकेऽग्निजं भयम् ।
चोरारिविषभूपार्तिस्थाननाशं महद्भयम् ॥ ६१ ॥
प्रमेहगुल्मपाण्ड्वादिग्रहणीक्षयसम्भवम् ।
अपकीर्तिः कलत्रार्थे सुतबन्धुविनाशनम् ॥ ६२ ॥
बन्धनानि गरप्राप्तिमृणदारिद्र्यपीडनम् ।
पापर्क्षे फलमेवं स्यान्मिश्रं शुभगृहे सति ॥ ६३ ॥
इति षष्ठफलम् ।
कलत्रराशिचक्रस्य परिपाके करग्रहः ।
स्त्रीसुखं पुत्रलाभं च घृतसूपगुडादिकम् ॥ ६४ ॥
कृषिगोगजभूषाप्तिं राजपूजां महद्यशः ।
शुभराशौ फलं सत्यं शुभखेचरसंयुते ॥ ६५ ॥
इति सप्तमफलम् ।
मृत्युचक्रदशाकाले महद् दुःखं धनक्षयम् ।
स्थाननाशं बन्धुनाशं गुह्योदरनिपीडनम् ॥ ६६ ॥
दारिद्र्यमन्नविद्वेषमन्नाभावमरेर्भयम् ।
पापर्क्षे पापसंयोगे फलमेवं विनिर्दिशेत् ॥ ६७ ॥
इत्यष्टमफलम् ।
शुभचक्रदशाकाले शोभनं भवति ध्रुवम् ।
पुत्रमित्रकलत्रार्थकृषिगोगृहभूषणम् ॥ ६८ ॥
सत्कर्मधर्मसंसिद्धिं महज्जनपरिग्रहम् ।
शुभराशौ शुभं सर्वं पापराशौ विपर्ययः ॥ ६९ ॥

इति नवमफलम् ।

[१] कर्मचक्रदशाकाले राज्याप्तिं नृपपूजनम् ।
सत्कीर्तिदारपुत्रात्मबन्धुसङ्गं महोत्सवम् ॥ ७० ॥
आज्ञाधरत्वमारोग्यं सद्गोष्ठ्या कालयापनम् ।
सत्कर्मफलमैश्वर्यं शुभराशौ वदेद् बुधः ॥ ७१ ॥

इति दशमफलम् ।

[११] लाभचक्रदशाकाले धनाप्त्यारोग्यभूषणम् ।
विचित्रवस्त्वागमनं गृहोपकरणं लभेत् ॥ ७२ ॥
स्त्रीपुत्रबन्धुसौख्याप्तिमृणद्रव्यायतिं शुभम् ।
राजप्रीतिं महत्सङ्गं प्रवदन्ति शुभोदये ॥ ७३ ॥

इति लाभफलम् ।

[१२] व्ययचक्रदशाकाले देहार्तिं स्वपदच्युतिम् ।
चोराग्निनृपकोपादिबन्धुस्त्रीनृपपीडनम् ॥ ७४ ॥
उद्योगभङ्गमालस्यं कृषिगोभूमिनाशनम् ।
दारिद्र्यं कर्मवैकल्यं पापर्क्षे तु न संशयः ॥ ७५ ॥

इति व्ययफलम् ।

इदानीं भावपरत्वेन कालचक्रदशाफलान्याह । अत्रेदमवधेयम् । नक्षत्रपादवशात् सव्यापसव्यचक्रे यद्राश्यंशसम्बन्धिनी दशा समागच्छति स राशिर्जन्मकाले लग्नादिको यो भावस्तदुक्तं फलमत्र विनिर्दिशेत् । तत्र शुभराशिके शुभसंयुते च भावे कथितफलं शुभतरमन्यथा ( पापर्क्षे पापयुते च भावे ) अशुभं च वाच्यमिति । श्लोकाश्च सर्वे स्पष्टार्था एवेत्युपेक्ष्यन्ते ॥ ४७-७५ ॥

अब १२ भावोंकी कालचक्र-दशाके फल कहते हैं—लग्नकी चक्रदशाकालमें देहकी आरोग्यता, महासुख, कीर्ति-भूषण-राज्य-अर्थ-पुत्र-स्त्री-वस्त्रकी प्राप्ति होती है ॥ ४७ ॥

यदि लग्न शुभ क्षेत्रमें हो तो शुभफल हो, पापक्षेत्रसे अन्यथा ( अशुभ ) फल होता है। उसी प्रकार पापग्रहयुक्त लग्नका भी फल है। शुभग्रहसे युक्त लग्नके होने पर शुभ फल होता है ॥ ४८ ॥

स्वगृह-उच्चस्थान-मित्रगृहमें प्राप्त ग्रहसे लग्न यदि युक्त हो तो लग्नकी चक्र दशामें राज्य-धनकी प्राप्ति और राजपूजन होता है ॥ ४९ ॥

नीच राशि-अस्तंगत-शत्रुराशिस्थ ग्रहसे लग्नके युक्त होने पर पुत्र-स्त्री आदिका नाश होता है। मिश्रमें मिश्र फल कहे ॥ ५० ॥

द्वितीय भावकी चक्र दशामें धन-धान्यकी वृद्धि होती है। भोजन, पुत्र, स्त्री-जमीनकी प्राप्ति तथा राजपूजन होता है। विद्याकी प्राप्ति, बोलनेमें पटुता, सज्जनोंके सङ्गसे कालका यापन होता है। दूसरे भावमें शुभ राशि होनेसे शुभफल एवं पापराशिसे पापफल होते हैं ॥ ५१-५२ ॥

तीसरे भावकी चक्रदशामें उत्तम सुख, सुन्दर भोजनादिका लाभ, साहस, धैर्य और सन्तोषका लाभ, कर्णभूषण, वस्त्र, कण्ठभूषण, सुन्दर अन्न और वस्त्रादिका लाभ होना कहे। ३ रा भाव शुभ होनेसे उक्त फल खूब उत्तम अन्यथा साधारण और अधम जानें ॥५३-५४॥

चौथे भावकी चक्रदशामें सवारी, भूषण, जमीन और तीर्थ आदिकी यात्राका लाभ हो, सज्जनोंसे सङ्ग हो, चित्तकी शुद्धि, उत्साह, स्त्री-पुत्रकी प्राप्ति, खेतीमें उन्नति, मित्रोंसे प्रेम, गृहोंका लाभ, महत् सुख, आरोग्य, धनलाभ, सुगन्ध और वस्त्रोंकी प्राप्ति होवे। यहां भी शुभ राशि होनेसे शुभफल तथा पापराशि होनेसे फलोंका नाश हो ॥ ५५-५७ ॥

पुत्रभावकी चक्रदशामें राज्यप्राप्ति, राजासे आदर, स्त्री-पुत्रकी प्राप्ति, धीरत्व, आरोग्य, बन्धुओंका पालन, अन्नदान, यशका लाभ, मङ्गलादिकी प्राप्ति, दूसरोंका उपकार, धनलाभ, सवारी और वस्त्राभरणोंकी प्राप्ति होवे। यहां भी शुभ और पापराशि तथा ग्रहोंके संयोगसे फलमें शुभाशुभ कहे ॥ ५८-६० ॥

छठे भावकी चक्रदशामें अग्निका भय, चोर-शत्रु-विष और राजाओंसे भय, पीडा, स्थानकी हानि, प्रमेह-गुल्म-पाण्डु-ग्रहणी और क्षय रोगसे भारी भय, स्त्रीके लिये अयश, पुत्र और बन्धुओंका नाश, जेल आदिमें बन्धन, विष आदि बाधक वस्तुओंका खाना, कर्ज और गरीबीसे पीडा ये सब फल होते हैं। यदि छठा भाव शुभराशि हो तो उक्त फलोंमें कमी होती है। पापराशि होनेसे उक्त फल पूर्ण होते हैं ॥ ६१-६३ ॥

सातवें भावको दशामें विवाह, स्त्रीसुख, पुत्रोदय, सुन्दर पकान्नादि भोजन, खेती-पशु-वाहन और भूषणकी प्राप्ति, राजासे आदर, सुन्दर यश होते हैं। यहां शुभराशि और शुभग्रहोंके योगसे फलमें विशेषता होती है ॥ ६४-६६ ॥

मृत्यु भावकी दशामें बहुत दुःख, धननाश, स्थाननाश, मित्रनाश, गुदारोग, उदररोग, दरिद्रता, अन्नसे अरुचि और अन्नका अभाव, शत्रुसे भय कहना चाहिये। यहां ८ वां भाव पापराशि और पापग्रह युक्त हो तो फल पूर्ण रूपसे होवे ॥ ६६-६७ ॥

नववें भावकी दशामें निश्चय शुभफल होते हैं। पुत्र, मित्र, स्त्री, धन, खेती, पशु और गृह एवं भूषणोंकी प्राप्ति, शुभकार्यकी सिद्धि, सज्जनोंसे प्रेम ये फल होते हैं। यहां शुभ-राशि और शुभग्रहोंके योगसे उक्तफलोंमें विशेषता भी होवे ॥ ६८-६९ ॥

दशवें भावकी दशामें राज्यप्राप्ति, राजासे आदर, सुयश-स्त्री-पुत्र-मित्रका उदय, मङ्गलोदय, हुकूमत, नीरोगता, सज्जनोंसे सङ्ग, सुन्दर कार्य कहने चाहिये। यहां शुभराशि होने से उक्तफल खूब सुन्दर होवे ॥ ७०-७१ ॥

लाभ भावकी दशामें धनलाभ, आरोग्य, भूषण, सुन्दर वस्तुओंका लाभ, स्वगृहके सामग्रियोंका लाभ, स्त्री-पुत्र-मित्र-बन्धुओंका उदय, लहनेका लाभ, राजासे प्रेम और सज्ज-नोंसे सङ्ग होते हैं ॥ ७२-७३ ॥

व्यय भावकी दशामें शरीरमें पीडा, पदका नाश, चोर-अग्नि-राजाओंके कोपसे भय, बन्धु-स्त्री और राजासे पीडा, उद्योगका नाश, आलस्य, खेती-पशु प्रभृतिकी क्षति, दरि-द्रता और कर्मोंमें विफलता होती हैं। यहां पापराशि और पापग्रहोंके योगसे फलमें विशे-षता कहनी चाहिये।

उपर्युक्त फलोंमें यह विशेषता जाननी चाहिये कि शुभफलोंमें भाव यदि शुभराशि और शुभग्रह युक्त हो तो शुभमें विशेषता और पापफलोंमें पापराशि और पापयुक्त हो तो पापमें विशेषता इसका उलटा हो तो उलटा फल कहे ॥ ७४-७५ ॥

## अथ चक्रदशाफलेषु विशेषः।

लग्नादिद्वादशान्तानां भावानां फलमीदृशम्।
प्रोक्तमत्र विशेषोऽस्ति विशेषात्कथ्यतेऽधुना ॥ ७६ ॥
तत्तद्राशीशवीर्येण यथायोग्यं प्रयोजयेत्।
राशीश्वरे बलयुते स्वोच्चमित्रस्ववर्गके ॥ ७७ ॥
मित्रान्विते शुभैर्दृष्टे यत्प्रोक्तं तच्छुभं वदेत्।
बलहीनेऽरिनीचस्थे दिनेशकरपीडिते ॥ ७८ ॥
षष्ठाष्टमव्ययस्थाने पापशत्रुनिरीक्षिते।
तद्राशिपे तु जनने कष्टं राश्युद्भवं फलम् ॥ ७९ ॥
फलं तद्द्विगुणं कष्टं शुभं राश्युद्भवं फलम्।
अधिपस्य बलं हीनं यदि चानर्थमाप्नुयात् ॥ ८० ॥

अधिपस्य बलाधिक्यं राश्युद्भवफलं शुभम् ।
यदि चेद् द्विगुणं सौम्यं फलत्येव न संशयः ॥ ८१ ॥
अधिपे चरराशिस्थे चरराश्यंशकेऽपि वा ।
चरराश्युद्भवं चक्रं विदेशगमनप्रदम् ॥ ८२ ॥
यावच्चक्रं तदा ज्ञेयं यद्येकस्मिन् चरे सति ।
विदेशगमनं वाऽपि स्वस्थानाप्तिं विनिर्दिशेत् ॥ ८३ ॥

इदानीमुक्ते द्वादशभावदशाफले वैशिष्ट्यमाह—लग्नादीति । लग्नादिद्वादशान्तानां भावानामीदृशं पूर्वोक्तं फलं यत्प्रोक्तं तत्र यो विशेषोऽस्ति असौ विशेषात् ( विस्तरेण ) अधुना कथ्यते मयेति शेषः । तत्तद्भावानां राशीशवीर्येण यथायोग्यं फलं प्रयोजयेत् ( भावाधिपस्य बलवशादेवोक्तफलेषु न्यूनाधिक्यं वाच्यमिति भावः ) राशीश्वरे = तत्तद्भावेशे बलयुते, स्वोच्चगते, स्वमित्रस्यात्मनो वा वर्गगते, वा मित्रान्विते शुभैर्दृष्टे सति यत्फलं तच्छुभं वदेत् । तथा राशीश्वरे बलहीने, वा रिपुराशौ वा नीचे वा दिनेशकरपीडिते ( अस्तङ्गते ) वा षष्ठाष्टमव्ययभावानामन्यतमगते, वा पापेन, शत्रुणा च निरीक्षिते सति तद्राश्युद्भवं = चक्रदशायां तद्भावजं फलं कष्टमशुभं भवति । यदि अधिपस्य = तत्तद्भावाधिपतेः बलं हीनं स्यात्तदा तद्राश्युद्भवं फलं शुभमपि द्विगुणं कष्टमशुभत्वं प्राप्नुयादिति । यदि अधिपस्य = भावेशस्य बलाधिक्यं भवेत्तदा तद्राश्युद्भवं शुभं फलं द्विगुणं सौम्यं फलति । अत्र संशयः = सन्देहो न । अत्र भावफलस्य शुभहेतवे तत्तद्भावाधिपतेः बलाधिक्यमपेक्षितमिति भावः । भावाधिपे चरराशिस्थे, वा चरराश्यंशकेऽपि स्थिते, वा चरराश्युद्भवं चक्रं = कालचक्रदशा यदि चरराशिसम्बन्धिनी भवेत्तदा विदेशगमनप्रदं भवति जातस्येति ।

चक्रदशायां यद्येकस्मिन् चरे ( तद्भावे चरराशौ, वा भावेशे चरराशिस्थे वा चरनवांशस्थे इत्यादि ) सति यावच्चक्रं = चक्रदशाकालं यावत् ( अत्रापि चरराश्यन्तरे विशेषेण ) विदेशगमनं वा स्वस्थानाप्तिं = तद्राशिनिर्दिष्टपदलाभं विनिर्दिशेत् ॥ ७६–८३ ॥

लग्नादि द्वादश भाव पर्यन्त भावोंकी कालचक्रदशाके फल इस प्रकारके कहे हैं । यहां पर जो विशेष है वह विस्तर रूपसे अब कहते हैं ॥ ७६ ॥

प्रत्येक भावके उस २ राशीशके बलानुसार यथायोग्य फलकी योजना करे । राशीश बलसे युक्त हो, अपने उच्च स्थानमें हो, मित्र राशिमें हो, स्ववर्ग में हो, मित्रसे युक्त हो या शुभदृष्ट हो तो जो फल कहे हैं वे सब ठीक २ होते हैं । भावेश यदि बलसे हीन हो शत्रु या नीच राशिस्थ हो, सूर्यसे पीडित हो, षष्ठ-अष्टम-द्वादश-स्थानमें हो, पापग्रह तथा शत्रु ग्रह देखता हो तो उस भावका चक्रदशाफल कष्टजनक होता है ॥ ७७–७९ ॥

यदि भाव राशिका फल बुरा हो तो उस भावकी अशुभ चक्र दशाका फल दूना खराब होता है । वही यदि भावपति निर्बल हो तो और भी अनर्थ ( बुरा फल ) होता है ॥ ८० ॥

यदि भावाधिपतिका बल विशेष हो और राश्युत्पन्न फल भी अच्छा हो तो उसका चक्रदशाफल दूना शुभ होता है इसमें संशय नहीं है ॥ ८१ ॥

भावाधिपति चरराशिमें हो, अथवा चरराशिके नवांशमें हो तो चरराशिवाले भावका चक्रदशाफल विदेश यात्रा करानेवाला हो ॥ ८२ ॥

यदि एक भी चर हो, याने भाव या भावपति चरराशिमें या चरनवांशमें हो तो उसकी समूची चक्रदशामें विदेशगमन वा स्वस्थानकी प्राप्ति जाने ॥ ८३ ॥

संज्ञाध्याये च यत्प्रोक्तं कर्माजीवे च यत्फलम् ।
फलमाश्रयजं यद्यत्स्थानजन्यं च यत्फलम् ॥ ८४ ॥

यत्प्रोक्तं राजयोगादौ चान्द्रयोगे च यत्फलम् ।
नाभसादिषु यत्प्रोक्तं शुभपापेक्षणादपि ॥ ८५ ॥
द्विग्रहादिषु यत्प्रोक्तं ग्रहाणां पूर्वसूरिभिः ।
तद्राशिचक्रकाले तु स्वधिया योजयेद् बुधः ॥ ८६ ॥

इदानीं पूर्वोक्तानामखिलानां फलानां परिपाककालं चक्रदशायामाह-संज्ञाध्याय इत्यादिभिः । संज्ञाध्यायमारभ्यात्रावधि भावराशिग्रहादिमूलका यावन्तो योगाः समुदितास्तेषां फलपरिपाककालं तद्राशिचक्रकाले = सव्यापसव्योपगतचक्रदशायां तत्तद्राशिसम्बन्धिदशाकाले बुधः = विद्वान् स्वधिया तारतम्येन विविच्य योजयेत् । सर्वे एव ग्रहा राशयश्च स्वस्वदशायामेव स्वस्वशुभाशुभं फलं ददाति । तथा च वराहः—

संज्ञाध्याये यस्य यद् द्रव्यमुक्तं कर्माजीवो यश्च यस्योपदिष्टः ।
भावास्थानालोकयोगोद्भवं च तत्तत्सर्वं तस्य योज्यं दशायाम् ॥ इति ॥ ८४-८६ ॥

संज्ञाध्यायमें जो द्रव्यादि फल कहे हैं, कर्माजीवमें जिसका जो फल है, आश्रय योगका जो फल हैं, ग्रहोंके स्थानोद्भव जो फल हैं, राजयोगादिमें जो फल कहा है, चान्द्रयोगमें जो फल है, नाभस आदि योगमें जो फल कहा है, शुभ और पापकी दृष्टिसे जो फल कहा है, ग्रहोंके द्विग्रहादि योगसे जो फल कहे हैं उन सबोंको राशिचक्रदशा कालमें बुद्धिसे विचार कर कहे ॥ ८४-८६ ॥

मेषादिराशिचक्रं तु भूभागे न्यस्य दक्षिणम् ।
अल्यादि ह्यौत्तरं यच्च तच्चक्रं तत्र निर्दिशेत् ॥ ८७ ॥
फलं वा विफलं वाऽपि प्रागादिद्युचरादधः ।
राशिदिग्भागतो वाऽपि तद्दिग्भागे विनिर्दिशेत् ॥ ८८ ॥
यथोपदेशमार्गेण सर्वेषां फलमीदृशम् ॥ ८८½ ॥

मेषादीति । मेषादिमीनान्तकं राशिचक्रं, दक्षिणं = सव्यमार्गजातं भूभागे न्यस्य=विलिख्य, तथा हि अल्यादि = वृश्चिकादि, औत्तरम्=अपसव्यमार्गजं ( वृश्चिकतो वैपरीत्येन धनुरन्तम् ) यच्चक्रं तदपि तत्र भूभागे न्यस्य तस्मात्फलाफलं बुधो विनिर्दिशेत् । तत्र यस्य भावस्य राशेर्वा यत्फलादि तत्तद्राशिदिग्भागतो लभ्यं स्यादिति तारतम्येन यथोपदेशमार्गेण सर्वेषां ग्रहराश्यादीनां विनिर्दिशेत् । एतदुक्तं भवति । सव्ये वा अपसव्ये चक्रे यस्य राशेः सम्बन्धिदशायां शुभाशुभफलं वक्तव्यं स्यात् स राशिश्चक्रे यद्दिग्भावे पतितस्तस्मिन् दिग्भागे तत्तत्फलस्य लाभं ब्रूयादिति ॥ ८७-८८½ ॥

मेषादि राशिचक्र सव्य प्रकार ( क्रम ) से लिखे और वृश्चिक आदि अपसव्य (व्युत्क्रम) प्रकारसे लिखे। दोनों चक्रोंमें सम्भवानुसार ज्ञानकर उसके फल कहे। दोनों (अपसव्य-सव्य) चक्रके बीच जो ग्रह पूर्वादि जिस दिशामें ( चक्रस्थ दिशामें ) हो उस दिशामें सफल या विफल यथासम्भव पूर्वोक्त फल कहे ॥ ८७-८८½ ॥

अथ त्रिविधकालचक्रगतिः ।

कालचक्रगतिस्त्रेधा निश्चिता पूर्वसूरिभिः ॥ ८९ ॥
मण्डूकगमनं चैव पृष्ठतो गमनं तथा ।
सिंहावलोकनं नाम पुनरागमनं भवेत् ॥ ९० ॥
पृष्ठतो गमनं चैव कर्किकेसरिणोरपि ।
मीनवृश्चिकयोश्चापमेषयोः केसरी गतिः ॥ ९१ ॥
कन्याकर्कटयोः सिंहयुग्मयोर्मण्डुकी गतिः ॥ ९१½ ॥

इदानीं त्रेधा कालचक्रगतिनिरूपणमाह—कालचक्रगतिरिरिति । पूर्वसूरिभिः = गर्गपराशराद्यैः कालचक्रस्य, त्रेधा = त्रिविधा, गतिः निश्चिता = निर्णीता । कास्ता इत्याह—१ मण्डूकगमनम् , २. पृष्ठतो गमनम् , ३. सिंहावलोकनं ( एतदेव पुनरागमनं नाम ) भवेत् । गतीनां लक्षणञ्च पृष्ठत इति । कर्किकेसरिणोः = कर्कसिंहयोः पृष्ठतो गमनं भवति । मीनवृश्चिकयोः, चापमेषयोश्च गतिः केसरी = सिंहावलोकनम् । कन्याकर्कटयोः, सिंहयुग्मयोः मण्डूकी गतिर्भवति । एतदुक्तं भवति । सव्ये, अपसव्ये च चक्रे कर्किकेसरिणोः गमनं ( कर्कस्य मिथुने सिंहस्य कर्के गमनं ) पृष्ठतो गमनं कथ्यते । एवं मीनवृश्चिकयोः, धनुर्मेषयोश्च। नवमपञ्चमयोः । पारस्परिकं गमनं केसरी–गतिरुच्यते । एवमेव सिंहमिथुनयोश्च कन्याककर्टयोः गमनं मण्डूकी गतिः भवति । तथा च पाराशरीये—

प्रथमे गतिर्मण्डूकी द्वितीये मर्कटी तथा । बाणायनवपर्यन्तं गतिः सिंहावलोकनम् ॥
कन्यायां कर्कटे वापि सिंहमे मिथुनेऽपि च । मण्डूकीगतिसंज्ञो वै तादृशं रोगकारकम् ॥
मीने तु वृश्चिके वापि चापे मेषे तथैव च । सिंहावलोकनं चैव तादृशं च फलं लभेत् ॥इति॥

एतत् किलान्तर्दशाविचारे बोद्धव्यम् । कस्यचिद्दशायां कर्कतो मिथुनस्यान्तर्दशा, सिंहात्कर्कस्यान्तर्दशा चेद्भवति तदा तत्पृष्ठतो गमनं ( मर्कटी गतिः ) कथ्यते । एवं किल सर्वत्र बोद्धव्यम् । तस्य फलञ्च वक्ष्यमाणप्रकारेण विज्ञेयम् ॥ ८९-९१½ ॥

इस कालचक्रकी गति पंडितोंने तीन प्रकारकी कही हैं । १–मण्डूक गमन । २–पृष्ठसे ( पीछे ) गमन । ३–सिंहावलोकन नाम पुनरागमनका ॥ ८९–९० ॥

कर्क सिंहका पृष्ठसे गमन है । ५से ४में तथा ४से ३में आना पृष्ठ गमन है। मीन वृश्चिकका धनुमेषका सिंहावलोकन गति है ( मीनसे वृश्चिकमें और धनुसे मेषमें जानेको सिंहावलोकन कहते हैं ) कन्या–कर्ककी, सिंह–मिथुनकी ( ६ से ४ में और ५ से–३ में जानेकी ) मण्डूक गति कहते हैं ॥ ९१½ ॥

सिंहावलोकसमये ज्वरातिस्थाननाशनम् ॥ ९२ ॥
बन्धुस्नेहादिनाशं च समानजनपीडनम् ।
जले वा पतनं कूपे विषशस्त्राग्निजं भयम् ॥ ९३ ॥
वाहनात्पतनं वाऽपि दशाच्छिद्रान्विते सति ॥
क्रूरास्तनीचापचयखेचरस्य दशा यदि ॥ ९४ ॥
दशाच्छिद्रमिति ज्ञेयं प्रवदन्ति विपश्चितः ॥ ½ ॥

इदानीं सिंहावलोकफलं दशाच्छिद्रञ्चोच्येते । क्रूरग्रहस्य, अस्तङ्गतस्य ( रविणा सहितस्य ) नीचङ्गतस्य, अपचयस्य ( क्षीणरश्मेः ) ग्रहस्य दशा दशाच्छिद्रमिति विपश्चितः ( विद्वांसः ) कथयन्ति । शेषं स्पष्टमेवेति ॥ ९१½–९४½ ॥

( सिंहावलोकके समय ज्वरसे कष्ट, स्थानका नाश, बन्धुप्रेमादिका नाश, समान जनकी पीडा, जलमें वा कूपमें गिरना, विष–शस्त्र–अग्निका भय, वाहन ( घोडा आदि ) से गिरना ये सब उस समय दशा छिद्र होने पर कहने चाहिये । क्रूर, अस्त गत, नीचगत, निर्बल ग्रहकी दशा दशाछिद्र है यह पण्डित लोग कहते हैं ॥ ९२–९४½ ॥

मण्डूकगतिसम्भूतसमये मरणं गुरोः ॥ ९५ ॥
पित्रोर्वा विषशस्त्राग्निज्वरचोराग्निभिर्भयम् ।
मण्डूकसमये सव्ये समानजनपीडनम् ॥ ९६ ॥
केसरीयुग्ममण्डूके मातुर्मरणमादिशेत् ।
मरणं राजभीतिं च सन्निपातमरेर्भयम् ॥ ९७ ॥

अथ मण्डूकगतिफलमाह—मण्डूकगतीति। पूर्वोक्तमण्डूकगतिसमये (अन्तर्दशायाम्) गुरोः = स्वकीयश्रेष्ठजनस्य, पित्रोर्वा = अथवा स्वकीयपित्रोः (मातुः पितुश्च) मरणं भवति। तथा विषशस्त्राग्निज्वरचोराग्निभिर्भयं भवति। अथ सव्ये = सव्यचक्रोद्भूते, मण्डूकसमये (मण्डूकगतिदशायां) समानजनस्य (भ्रातृमित्रादेः) पीडनं भवति। तत्र केसरीयुग्ममण्डूकेऽर्थात् सिंहतः कन्यायां गते, मिथुनतः कर्कटे गते सति, मातुः=जातस्य मातुः, मरणमादिशेत्। तथा तत्र स्वस्य मरणं, राजभीतिं, सन्निपातरोगम्, अरेः (शत्रुतः) भयं च वदेत् ॥ ९५-९७ ॥

अपसव्य मण्डूक गति दशा समयमें गुरुका मरण होता है। वा माता पिताके मरण होते हैं। विष-शस्त्र-अग्नि-ज्वर-चोर-सर्पसे भय हो। सव्य चक्रकी मण्डूकगति समयमें अपने समान जनको पीडा हो। सिंहसे मिथुनवाले मण्डूकमें माताकी मृत्यु हो और अपना मरण, राजदण्ड, सन्निपात तथा शत्रुभय हो ॥ ९५-९७ ॥

सव्ये सिंहावलोके तु चतुष्पाद्भयमग्निजम्।
पृष्ठतो गमने सव्ये धनधान्यपशुक्षयः ॥ ९८ ॥
पितुर्मरणमालस्यं तत्समानेषु वा मृतिः।
मण्डूकगमने वामे स्त्रीसुतार्तिपरिश्रमम् ॥ ९९ ॥
तापज्वरं मृगाद् भीतिं पदच्युतिमरेर्भयम्।
सिंहावलोकने वामे स्थानभ्रंशः पितुर्मृतिः ॥ १०० ॥
पृष्ठतो गमने वाऽपि जलभीतिं पदच्युतिम्।
पितुर्नाशं नृपक्रोधं दुर्गारण्याटनं वदेत् ॥ १०१ ॥

स्पष्टार्थाश्चैते श्लोकाः ॥ ९८-१०१ ॥

सव्य चक्रके सिंहावलोकमें चतुष्पदसे भय, अग्निभय हो। सव्यवाले पृष्ठ गमनमें धन-धान्य-पशुका क्षय, पिताका मरण, आलस्य वा उसके सदृशकी मृत्यु होती है। मण्डूक गमनमें स्त्री-सुतकी पीडा, परिश्रम, तापज्वर, मृगासे भय, पदच्युति, शत्रुसे भय होते हैं। अपसव्य चक्रके सिंहावलोकनमें स्थानभ्रंश, पिताकी मृत्यु हो। अपसव्य चक्रवाले पृष्ठ गमनमें भी जलभय, पदच्युति, पिताका नाश, राजाका क्रोध, दुर्ग जंगलमें जाना घूमना फल कहे ॥ ९८-१०१ ॥

अथ कालचक्रदशाप्रकारः।

दस्रानलादितिभुजङ्गदिनेशभानां पूषासुराजपदविश्वसमीरणानाम्।
वाक्यानि सव्यगतिचक्रभवादिकानि चत्वारि सर्वमुनयः प्रवदन्ति तज्ज्ञाः ॥
चित्राहिर्बुध्न्यभरणीपूर्वाषाढेन्द्रमन्त्रिणाम्।
सव्यचक्रान्त्यवाक्यानि चत्वारि क्रमशो विदुः ॥ १०३ ॥
द्विदैवकमलागारपितृदानववैरिणाम्।
अपसव्यस्य चक्रस्य वाक्यं चादिचतुष्टयम् ॥ १०४ ॥
जलेशमित्रेन्द्रमृगश्रविष्ठाभगार्यमाशङ्करतारकाणाम्।
अन्त्यानि वाक्यान्यपसव्यजानि चत्वारि चक्रे...तानि चाहुः ॥ १०५ ॥

कालचक्रदशाप्रकारः पूर्वमुक्तोऽप्यधुना प्रसङ्गवशादुच्यते—द...। अश्विनी-कृत्तिका-पुनर्वसु-श्लेषा-हस्त-रेवती-मूल-पूर्वभाद्रपद-उत्तराषाढ-स्वाती-ति दशनक्षत्राणां सव्यगतिचक्रभवादिकानि "पौरञ्जावोमातासद्योषी १, नक्षत्रदासीवर्णयः २, कपोतक्षुर्निधायरङ्गम् ३, वाणीचस्थन्दधिनक्षत्रम् ४" इति चत्वारि वाक्यानि तज्ज्ञाः सर्वमुनयः प्रवदन्ति। चित्रा-उत्तरभाद्र-भरणी-पूर्वाषाढ-पुष्येति पञ्चभानां चत्वारि "हंसश्रवशांवरपत्र-

म् ५, क्ष्माधीकरगोमीमाच ६, सुदधिनक्षत्रजः सितः ७, वामाङ्गारकोत्रक्षुर्निधिः ८" इति सव्यचक्रान्त्यवाक्यानि क्रमशो विदुः । अत्रेदं किलावधेयम् । अश्विनी-पुनर्वसु-हस्त-मूल-पूर्वभाद्रपदानां प्रथम-द्वितीय-तृतीय-चतुर्थचरणेषु यावन्ति दशामानानि तावन्त्येव कृत्तिका-श्लेषा-स्वाती-रेवती-उत्तराषाढाणां च चरणपरत्वेन दशामानानि भवन्ति । तेषु केवलमेतावानेव भेदः, यदश्विनी-पुनर्वसु-हस्त-मूल-पूर्वभाद्रपदानां प्रथम-द्वितीय-तृतीय-चतुर्थचरणाः क्रमेण मेष-वृष-मिथुन-कर्कराशिसम्बन्धिनो भवन्ति । कृत्तिका-श्लेषा-रेवती-स्वाती-उत्तराषाढाणां प्रथम-द्वितीय-तृतीय-चतुर्थचरणाः क्रमेण धनुः-मकर-कुम्भ-मीन-राशिसम्बन्धिनो भवन्तीति । परमुभयत्र दशामानं तदीशाश्च समाना एव । तथा चित्रा-उत्तरभाद्र-भरणी-पूर्वाषाढ-पुष्याणां प्रथम-द्वितीय-तृतीय-चतुर्थचरणाः सिंह-कन्या-तुला-वृश्चिकराशिसम्बन्धिनः क्रमेण भवन्ति । तेषु दशावर्षाणि च सव्यचक्रान्त्यचत्वारि वाक्यानि ज्ञेयानि । एवं किल सव्यचक्रे भवति । अथापसव्यचक्रे उच्यते-द्विदैवेति । द्विदैव-कमलागार-पितृ-ज्ञानववैरिणाम् = विशाखा-रोहिणी-मघा-श्रवणानाम्, अपसव्यस्य चक्रस्य चादिचतुष्टयं 'धनत्रेत्रयं पराङ्गमिव १, तासादत्रक्षुनिधिर्द्दासा २, चमीभोगीरायधनर्क्षम् ३, त्रयोरागीमामेतासह ४, इति वाक्यं भवति । तथा शतभिषाऽनुराधा-ज्येष्ठा-मृगशिरः-धनिष्ठा-पूर्वफल्गुनी-उत्तरफल्गुनी-आर्द्रेति नक्षत्राणाम्, अपसव्यजानि अन्त्यानि 'त्रक्षुर्निधिर्द्दासस्तमेव ५, गिरायुधनक्षत्रपरः ६, गोमावाची-सदात्रिक्षुन्ने ७, धीजः सितोमिवाङ्गारिका ८' इति वाक्यानि चक्रोपगतानि च तज्ज्ञा आहुः । एतदुक्तं विज्ञेयम् । अपसव्ये चक्रे विशाखा-रोहिणी-मघा-श्रवणानां प्रथम-द्वितीय-तृतीय-चतुर्थचरणाः क्रमेण वृश्चिक-तुला-कन्या-सिंहराशिसम्बन्धिनो भवन्ति । तेषां दशावर्षाणि चापसव्यचक्रादिवाक्यचतुष्टयेन ज्ञेयानि । अथ मृगशिरः-पूर्वफल्गुनी-अनुराधा-धनिष्ठानां यावन्ति दशामानानि तावन्त्येव आर्द्रा-उत्तर फल्गुनी-ज्येष्ठा-शतताराणां दशामानानि भवन्ति । तेषु केवलमेतावान् भेदः यत् मृगशिरः-पूर्वफल्गुनी-अनुराधा-धनिष्ठानां प्रथम-द्वितीय-तृतीय-चतुर्थचरणाः क्रमेण कर्क-मिथुन-वृष-मेषसम्बन्धिनः सन्ति । आर्द्रा-उत्तरफल्गुनी-ज्येष्ठा-शतभिषजां प्रथम-द्वितीय-तृतीय-चतुर्थचरणाः क्रमेण मीन-कुम्भ-मकर-धनुः-सम्बन्धिनो भवन्तीति । एतत्सर्वमेव कालचक्रदशाचक्रावलोकनतः व्यक्तं स्यादित्यलम् ॥ १०२-१०५ ॥

अश्विनी, कृत्तिका, पुनर्वसु, श्लेषा, हस्त, नक्षत्रोंका रेवती, मूल, पूर्वभाद्र, उत्तराषाढ और स्वाती नक्षत्रोंका सव्यगति चक्रके आदि चार वाक्य हैं यह सब तत्त्वज्ञ मुनिगण कहते हैं ॥ १०२ ॥

चित्रा, उत्तराभाद्रपद, भरणी, पूर्वाषाढ और पुष्य नक्षत्रोंके सव्यचक्रके अन्त्य चार वाक्य क्रमसे कहे हैं ॥ १०३ ॥

विशाखा, रोहिणी, मघा, श्रवणा नक्षत्रोंके अपसव्य चक्रके आदिके चार वाक्य हैं॥१०४॥
शतभिषा, अनुराधा, ज्येष्ठा, मृगशिरा, धनिष्ठा, पूर्वाफाल्गुनी, उत्तराफाल्गुनी, आर्द्रा नक्षत्रोंके अपसव्य चक्रके अन्त्य चार वाक्य क्रमसे प्राप्त मुनिगण कहे हैं ॥ १०५ ॥

अथ सव्यचक्रवाक्यानि ।

पौरङ्गावोमातासहोधी ॥ १ ॥ नक्षत्रदासीचर्वेणगः ॥ २ ॥
रूपोत्रक्षुर्निधायरङ्गम् ॥ ३ ॥ वाणी चस्यन्दधिनक्षत्रम् ॥ ४ ॥
हंसभ्रवशांबरपत्रम् ॥ ५ ॥ क्ष्माधीकरगोमीमाच ॥ ६ ॥
सुदधिनक्षत्रजः सितः ॥ ७ ॥ वामाङ्गारकोत्रक्षु नधिः ॥ ८ ॥

एभिरष्टभिर्वाक्यैः सव्यचक्रे प्रतिराशिं नव नवान्तर्दशा निगदिताः। द्वादशराशीनां मध्ये प्रथमे चत्वारो राशयः, अन्त्ये च चत्वारो राशयः समानमानका इति अष्टानां राशीनां प्रथमचत्वारि वाक्यानि दशासूचकानि, तथा मध्यवर्तिनो ये चत्वारो राशयस्तेषामपरचत्वारि वाक्यानि दशाबोधकानि सन्ति। तत्र राशीनां दशाः पूर्वोक्तानां सव्यापसव्योपगतनक्षत्राणां चरणवशेन जायन्त इति पूर्वमेवोक्तम्। अथैतेषु अष्टस्वपि वाक्येषु वर्णपरत्वेन राशीनामङ्का अवगन्तव्याः। "कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः" इत्यादिवृद्धवाक्येन। तेन पौ = १, रं = २, गा = ३, वो = ४, मा=५, ता=६, स=७, हो=८, धी = ९, इति प्रथमे राशौ ( मेषे ) सव्यचक्रे नवराशीनामन्तर्दशा भवति। एतेषामधिपादशान्तर्दशाधिपाः मं., शु., बु., चं., सू., बु. शु., मं., बृ., इति। एषां दशावर्षाणि वक्ष्यन्तेऽग्रे श्लोके। एवमेवाष्टानामपि वाक्यानां वर्णवशेनाङ्कास्ततो राशयो राशिपतयश्चावगन्तव्याः। स्पष्टार्थं दशाचक्रमेवावलोकनीयम् ॥ १-८ ॥

अथ सव्यवाक्यचक्रम्—

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| पौ=१ | रं=२ | गा=३ | वो=४ | मा=५ | ता=६ | स=७ | हो=८ | धी=९ | मेषः |
| न=१० | क्ष=११ | त्र=१२ | दा=८ | सी=७ | च=६ | र्व=४ | ण=५ | गः=३ | वृषः |
| रू=२ | पो=१ | त्र=१२ | क्षु=११ | नि=१० | धा=९ | य=१ | रं=२ | गं=३ | मिथुनं |
| वा=४ | णी=५ | चं=६ | स्थं=७ | द=८ | धि=९ | न=१० | क्ष=११ | त्रं=१२ | कर्कः |
| हं=८ | स=७ | क्ष=६ | व=४ | शां=५ | व=३ | र=२ | प=१ | त्रं=१२ | सिंहः |
| क्षु=११ | ज्ञा-१० | धी=९ | क=१ | र=२ | गो=३ | भी=४ | मा=५ | च=६ | कन्या |
| सु=७ | द=८ | धि=९ | न=१० | क्ष=११ | त्र=१२ | जः=८ | सि=७ | तः=६ | तुला |
| वा=४ | मां=५ | गा=३ | र=२ | को=१ | त्र=१२ | क्षु=११ | र्नि=१० | धिः=९ | वृश्चिकः |
| पौ=१ | रं=२ | गा=३ | वो=४ | मा=५ | ता=६ | स=७ | हो=८ | धीः=९ | धनुः |
| न=१० | क्ष=११ | त्र=१२ | दा=८ | सी=७ | च=६ | र्व=४ | ण=५ | गः=३ | मकरः |
| रू=२ | पो=१ | त्र=१२ | क्षु=११ | र्नि=१० | धा=११ | य=१ | रं=२ | गं=३ | कुम्भः |
| वा=४ | णी=५ | च=६ | स्थं=७ | द=८ | धि=९ | न=१० | क्ष=११ | त्रं=१२ | मीनः |

अथापसव्यवाक्यानि।

धनक्षेत्रपराक्रमिव ॥ १ ॥ तासादत्रक्षुर्निधिर्ह्रासा ॥ २ ॥
चर्मीभोगीरायधनर्त्तम् ॥ ३ ॥ त्रयोरागीमाभेतासह ॥ ४ ॥
त्रक्षुनिधिर्ह्रासस्तमेव ॥ ५ ॥ गिरायुधनक्षत्रपरः ॥ ६ ॥
गोमावाचीसदात्रिक्षुन्ने ॥ ७ ॥ धीजः सितोमिवाङ्कारिका ॥ ८ ॥

इति सव्यापसव्यवाक्यानि।

एभिरष्टभिर्वाक्यैरपसव्यचक्रे प्रतिराशि नवनवराशीनामन्तर्दशा निगदिताः। तत्र द्वादशेषु राशिषु प्रथमचतुर्णां राशीनां प्रथम-चत्वारि वाक्यानि दशासूचकानि। मध्यवर्तिनामन्तेस्थितानाञ्च चतुर्णां चतुर्णाम् अपरचत्वारि वाक्यानि दशाबोधकानि ज्ञेयानि। तेषु च वाक्यानां वर्णवशेनाङ्कास्ततो राशयो राशीशाश्चोहनीयाः। प्रतीत्यर्थं चक्रमेव विलोक्यम् ॥ १-८ ॥

अथापसव्यवाक्यचक्रम्—

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| घ=९ | न=१० | वे=११ | त्र=१२ | प=१ | रां=२ | ग=३ | मि=५ | व=४ | वृश्चिकः |
| ता=६ | सा=७ | द=८ | त्र=१२ | क्षु=११ | र्नि=१० | धि=९ | र्दा=८ | सा=७ | तुला |
| च=६ | र्मी=५ | मो=४ | गी=३ | रा=२ | य=१ | घ=९ | न=१० | क्षं=११ | कन्या |
| त्र=१२ | यो=१ | रा=२ | गी=३ | मा=५ | मे=४ | ता=६ | स=७ | ह=८ | सिंहः |
| त्र=१२ | क्षु=११ | र्नि=१० | धि=९ | र्दा=८ | स=७ | स्त=६ | मे=५ | व=४ | कर्कः |
| गि=३ | रा=२ | यु=१ | घ=९ | न=१० | क्ष=११ | त्र=१२ | प=१ | रः=२ | मिथुनं |
| गो=३ | मा=५ | वा=४ | वी=६ | स=७ | दा=८ | त्रि=१२ | क्षु=११ | क्षे=१० | वृषः |
| धी=९ | जः=८ | सि=७ | तो=६ | मि=५ | वां=४ | गा=३ | रि=२ | का=१ | मेषः |
| त्र=१२ | क्षु=११ | र्नि=१० | धि=९ | र्दा=८ | स=७ | स्त=६ | मे=५ | व=४ | मीनः |
| गि=३ | रा=२ | यु=१ | घ=९ | न=१० | क्ष=११ | त्र=१२ | प=१ | रः=२ | कुम्भः |
| गो=३ | मा=५ | वा=४ | वी=६ | स=७ | दा=८ | त्रि=१२ | क्षु=११ | क्षे=१० | मकरः |
| धी=९ | जः=८ | सि=७ | तो=६ | मि=५ | वां=४ | गा=३ | रि=२ | का=१ | धनुः |

अथ कालचक्रदशावर्षाणि।

भूतैकविंशद्गिरयो नवदिक्षोडशाब्धयः।
सूर्यादीनां क्रमादब्दा राशीनां स्वामिनो वशात् ॥ १०६ ॥

इदानीं कालचक्रदशायां सूर्यादिग्रहाणां दशावर्षाण्युच्यन्ते—भूतैकेति। राशीनां स्वामिनो वशात् सूर्यादीनां ग्रहाणां क्रमाद् भूतैकविंशद्गिरयो नवदिक्षोडशाब्धयः = ५, २१, ७, ९, १०, १६, ४, अब्दाः = वर्षाणि भवन्ति। अत्र राशीनां स्वामिनो वशादित्यनेन यो ग्रहो यस्य राशेः स्वामी वर्त्तते तस्य राशेरपि ग्रहोक्तवर्षाणि दशामानानि भवन्तीति ज्ञेयम्। तथा सति सिंहे सूर्यस्य = ५, कर्के चन्द्रस्य = २१, मेषवृश्चिकयोः भौमस्य = ७, मिथुनकन्ययोः बुधस्य = ९, धनुर्मीनयोः गुरोः = १०, वृषतुलयोः शुक्रस्य = १६, मकरकुम्भयोः शनैश्चरस्य = ४ वर्षाणि कालचक्रदशामानानि भवन्तीति ॥ १०६ ॥

राशिस्वामीके वश सूर्यादि ग्रहोंके ५, २१, ७, ९, १०, १६ और ४ क्रमसे दशावर्ष हैं। यह श्लोक इसी अध्यायमें ६ ठा कहा जा चुका है ॥ १०६ ॥

अथ राशिस्वामिवशेन ग्रहाणां कालचक्रदशावर्षचक्रम्।

| ग्रहाः | सूर्यः | चन्द्रः | मङ्गलः | बुधः | गुरुः | शुक्रः | शनिः |
|---|---|---|---|---|---|---|---|
| राशयः | सिंहः ५ | कर्कः ४ | मेष–वृश्चि. १।८ | मिथुनकन्ये ३।६ | धनुर्मीनौ ९।१२ | वृष–तुले २।७ | मकर-कुंभौ १०।११ |
| वर्षाणि | ५ | २१ | ७ | ९ | १० | १६ | ४ |

अथान्तर्दशाप्रकारः।

दशां दशाब्दैः सङ्गुण्य सर्वायुः संख्यया हरेत्।
लब्धमन्तर्दशा ज्ञेया वर्षमासदिनादिकाः ॥ १०७ ॥

अधुना अन्तर्दशाविधिरुच्यते–दशामिति। एकैकस्य ग्रहस्य राशेर्वा दशायां प्रत्येकस्य ग्रहस्य राशेर्वा अवान्तर्दशा भवति, सैवान्तर्दशाशब्देनोच्यते। तस्यानयनप्रकारः। यस्य ग्रहस्य दशामध्ये यदीयान्तर्दशानयनमपेक्षितं भवेत्तयोर्ग्रहयोः ये स्वस्वदशामाने तयोः गुणनं कार्यम्। एकस्य दशामन्यस्य दशाब्दैः सङ्गुण्येति। तद्गुणनफलं सर्वायुः-संख्यया हरेत् = यद्राशिसम्बन्धिदशायामन्तर्दशा साध्यते तद्राशौ यत्पूर्णायुर्मानं तेन विभजेदिति। लब्धं वर्षमासदिनादिका अन्तर्दशा ज्ञेया।

उदाहरणम्—यथा कस्यचिज्जन्म मूलनक्षत्रस्य चतुर्थचरणे वर्त्तते, तदा तस्य सव्यचक्रे कर्कसम्बन्धिदशायां जन्मेति तत्र पूर्णायुर्मानं=८६ वर्षाणि। तत्र यदि धनुर्गुरुदशायां मकरशनेरन्तर्दशाऽपेक्ष्यते तदा धनुर्गुरुदशामानेना १० नेन मकरशनिदशा ४ गुणिता जाता = ४०, एतत्सर्वायुःसङ्ख्या ८६ भक्तेति जातं गुरुदशायां शन्यन्तर्दशावर्षादि ०।५।१७।२६। एवं सर्वत्र विजानीयात्।

अत्रोपपत्तिः—सर्वग्रहदशायोगमिते पूर्णायुषि ग्रहाणां पृथक् पृथक् दशामितिः पठिता। अथैकैकस्य ग्रहस्य दशारूपे पूर्णायुषि प्रत्येकस्यावान्तर्दशा साध्यते। तदर्थमयमनुपातः- यदि सर्वग्रहदशायोगमिते पूर्णायुषि साध्यस्य ग्रहस्यैतन्मिता दशा लभ्यते तदा प्रकृतग्रहदशारूपे पूर्णायुषि केति? $\left(\frac{\text{प्र. ग्र. द.} \times \text{सा. ग्र. द.}}{\text{पूर्णायुः}} = \text{अन्तर्दशा}\right)$ लब्धं साध्यग्रहस्य प्रकृतग्रहदशायामन्तर्दशामितिरित्युपपन्नम् ॥ १०७ ॥

दशाको दशावर्षसे गुणा करके सर्वायुः संख्या ( पूर्णायु ) से भाग दे लब्ध वर्ष, मास, दिनादिक अन्तर्दशा होती है ॥ १०७ ॥

चक्रेशाब्दा भुक्तिराशीश्वराब्दैर्हत्वा तत्तद्राशिमानायुराप्ताः।
अब्दा मासा वासरा नाडिकाद्या दुःस्थानेशा दुःखरोगाकराः स्युः ॥१०८॥
इत्थं महादायदिनं महाब्दैः सङ्गुण्य तत्रान्तरदास्तु दाये।
पुनस्तदा तत् परमायुरब्दहृतं दशास्वन्तरगा दशा स्यात् ॥ १०९ ॥
विनाडीकृत्य नक्षत्रं स्वैः स्वैः संवत्सरैः पृथक्।
दायैः सङ्गुण्य सर्वायुराप्तं सूक्ष्मदशाफलम् ॥ ११० ॥
ग्रहवत्सरवासरा हृताः परमायुष्यसमामितध्रुवैः।
निजवर्षगुणाः स्वपाकदा इति पाकेष्वखिलेषु चिन्तयेत् ॥ १११ ॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते सप्तदशोऽध्यायः ॥१७॥

एते श्लोकाः १०७ श्लोकतुल्यार्थका एवेत्यलम् ॥ १०८—१११ ॥

पारिजाते सुधा टीका कपिलेश्वरनिर्मिता। कालचक्रदशाख्येऽस्मिन्नध्याये पूर्णतां गता १७

चक्रेशके वर्षको भुक्तिराशीशके वर्षसे गुणा कर उस २ राशिके पूर्णायुसे भाग देनेसे वर्ष, मास, दिन, घटी आदि स्पष्ट होता है। दुष्ट स्थानका स्वामी दुःख रोग कारक होता है। इस प्रकार एकके महादशावर्षको दूसरेके महादशावर्षसे गुणा कर यहां परमायु संख्यासे ( १२० से ) भाग देवे तो दशामें अन्तर्दशा होती है ॥ १०९ ॥

नक्षत्रके घट्यादिको पला बनाकर उस नक्षत्रकी पूर्णायुसे गुणे और पूर्णायु ( सर्वायु ) मानसे भाग देवे तो लब्ध वर्षादि सूक्ष्म दशा होगी ॥ ११० ॥

जिस ग्रहकी दशामें अभीष्ट ग्रहकी अन्तर्दशा जाननी हो उसकी दशा वर्षादिको पूर्णायुसे भाग दे और अभीष्ट ग्रहकी दशा वर्षसे गुणा करे तो वर्षादि अन्तर्दशा हर एककी होती है ॥

इति जातकपारिजाते कालचक्राख्ये सप्तदशाध्याये 'विमला' हिन्दी टीकासमाप्ता ॥ १७ ॥

## अथ दशाफलाध्यायः ॥ १८ ॥

दशानुसारेण फलं वदन्ति मुनीश्वरा जातशुभाशुभं यत् ।
सारं समुद्धृत्य तथैव वक्ष्ये भेदं यथाविस्तरतो दशायाम् ॥ १ ॥
बलानुसारेण यथा हि योगो योगानुसारेण दशामुपैति ।
दशाफलः सर्वफलं नराणां वर्णानुसारेण यथा विभागः ॥ २ ॥

अथ दशाफलाध्यायो व्याख्यायते । तत्र जातस्य सकलं शुभाशुभं फलं ग्रहाणां दशान्तर्दशास्वेव परिणमन्तीति दशाविचार एवाभिहितः । ग्रहाणां दशाफलैरेव जातानां नराणां सर्वफलं सम्पत्स्यत इति दशाफलान्यत्रोच्यन्ते । दशानुसारेणेति श्लोकौ सरलार्थौ ॥

क्योंकि मुनि लोग जातकका शुभाशुभ फल दशाके अनुकूल ही कहते हैं, इस लिये दशाके भेदोंका सारभाग इकट्ठा करके इस १८ वें अध्यायमें कहता हूँ ॥ १ ॥

जिस प्रकार बलके अनुसार योग होते हैं उसी प्रकार योगके अनुसार दशा प्राप्त होती है । मनुष्योंके सभी फल दशाफलसे ही होते हैं । जैसे वर्णानुसारसे विप्रादि होता है ॥ २ ॥

### अथ विंशोत्तरी महादशा ।

आदित्यचन्द्रकुजराहुसुरेशमन्त्रिमन्दज्ञकेतुभृगुजा नव कृतिकाद्याः ।
तेनो नयः सिनदयातटधन्यसेव्यसेनानरा दिनकरादिदशाब्दसंख्याः ॥ ३ ॥

अधुना विंशोत्तरीमहादशायां सूर्यादिग्रहाणां दशावर्षाण्युच्यन्ते—आदित्येति । कृत्तिकाद्याः = कृत्तिकानक्षत्रमादिर्येषां ते, आदित्य–चन्द्र–कुज–राहु–सुरेशमन्त्रि–मन्द–ज्ञ–केतु–भृगुजाः = सूर्य–चन्द्र–मङ्गल–राहु–गुरु–शनि–बुध–केतु–शुक्रा दशापतयो भवन्ति । कृत्तिकादिनक्षत्रनवके अमी नव ग्रहा दशापतयः । एवं नक्षत्रचक्रे वारत्रयं दशापतयोऽर्थात् कृत्तिकोत्तरफल्गुन्युत्तराषाढेषु सूर्यः । रोहिणीहस्तश्रवणासु चन्द्रः । मृगशिरश्चित्राधनिष्ठासु भौमः । आर्द्रास्वातीशततारासु राहुः । पुनर्वसु–विशाखा–पूर्वभाद्रेषु गुरुः । पुष्यानुराधोत्तरभाद्रेषु शनिः । श्लेषा–ज्येष्ठा–रेवतीषु बुधः । मघा–मूलाश्विनीषु केतुः । पूर्वफल्गुनीपूर्वाषाढभरणीषु शुक्रो दशापतिर्भवति । अथैषां दशावर्षाण्याह—तेनो नय इत्यादयः । अत्र कटपयवर्गभवैरिहेत्यादिवर्णवशेनाङ्का ऊहनीयाः । तेन सूर्यस्य तेनः=६ वर्षाणि । चन्द्रस्य नयः= १०. व । भौमस्य सिन = ७ व. । राहोः दया = १८ व. । गुरोः तट = १६ व. । शनेः धन्य = १९ व. । बुधस्य सेव्य = १७ व. । केतोः सेवा=७ व. । शुक्रस्य नरा=२० वर्षाणि दशामानं भवति । सर्वेषां योगः ६ + १० + ७ + १८ + १६ + १९ + १७ + ७ + २०= १२० विंशोत्तरशतमिति विंशोत्तरीति संज्ञा ॥ ३ ॥

सूर्य, चन्द्रमा, मङ्गल, राहु, बृहस्पति, शनि, बुध, केतु और शुक्र इन नव ग्रहोंकी दशा होती है । कृत्तिकासे एक२ नक्षत्रकी एक आवृत्ति दशा हुई । पुनः उत्तराफाल्गुनीसे एक २ नक्षत्रकी दशा उक्त ग्रहोंकी हुई । फिर तृतीयावृत्ति उत्तराषाढसे एक २ नक्षत्रकी उक्त ग्रहोंकी दशा हुई । सूर्यकी तेन ( ६ वर्ष ) चन्द्रकी नय (१० व) मङ्गलकी सिन (७ व) राहुकी दया (१८ व) गुरुकी तट (१६ व०) शनिकी धन्य (१९ व) बुधकी सेव्य (१७ व) केतुकी सेना ( ७ व) और शुक्रकी नरा (२० व) होती है ॥ ३ ॥

### अथ ग्रहाणां विंशोत्तरीदशाबोधकचक्रम् ।

| दशाधिपाः | सूर्यः | चन्द्रः | मङ्गलः | राहुः | गुरुः | शनिः | बुधः | केतुः | शुक्रः |
|---|---|---|---|---|---|---|---|---|---|
| नक्षत्राणि | कृ,उफ, उषाः | रो, ह, श्र. | मृ, चि, ध. | आ,स्वा, श. | पु, वि, पूभा. | पु,अनु, उभा. | श्ले,ज्ये, रे. | म, मू, अ. | पूफ. पूषा. भ. |
| दशावर्षाणि | ६ | १० | ७ | १८ | १६ | १९ | १७ | ७ | २० |

अथ दशापतेः शुभाशुभत्वम् ।

आरोहवीर्याधिकभावतुल्यबिन्द्वाधिकाः कर्मभवोदयस्थाः ।
तुङ्गादिवर्गोपगता नभोगाः षड्वीर्यवन्तश्च शुभप्रदाः स्युः ॥ ४ ॥
मान्दिराशिपतिमान्दिभावगाः स्वल्पबिन्दुरिपुनीचमूढगाः ।
पापखेटयुतभावसन्धिगा राशिसन्धिलवगास्त्वनिष्टदाः ॥ ५ ॥
दशापतिर्लग्नगतो यदि स्यात् त्रिषड्दशैकादशगश्च लग्नात् ।
तत्सप्तवर्गोऽप्यथ तत् सुहृद्वा लग्ने शुभो वा शुभदा दशा स्यात् ॥ ६ ॥
दशाधिनाथस्य सुहृद्गृहस्थस्तदुच्चगो वाऽथ दशाधिनाथात् ।
स्मरत्रिकोणोपचयोपगश्च ददाति चन्द्रः खलु सत्फलानि ॥ ७ ॥
उक्तेषु राशिषु गतस्य विधोः स भावः स्याज्जन्मकालभवमूर्तिधनादिभावः ।
तत्तत्प्रवृद्धिकृदसौ कथितो नराणां तद्भावहानिकृदथेतरराशिसंस्थः ॥ ८ ॥
दशाप्रवेशे स्वगृहादिसंस्थे हिमद्युतौ यत्फलमुक्तमार्यैः ।
तद्वाच्यमिन्दुर्हि शुभाशुभाख्यं फलं मनोरूपतया ददाति ॥ ९ ॥
उत्पादितं हि द्युचरस्य पूर्वं शुभादिकं कष्टफलं हि यत्तत् ।
तेनानुसारेण दशासु कल्प्यं शरीरभाजामशुभं शुभं वा ॥ १० ॥
इष्टोत्कटत्वे हि शुभानि पुंसां फलान्यनिष्टान्यशुभोत्कटत्वे ।
साम्ये तु मिश्राणि फलानि नूनं सर्वत्र चैवं परिकल्पनीयम् ॥११॥

इदानीं दशापतीनां ग्रहाणां शुभाशुभत्वमुच्यते—आरोहेत्यादिभिः । ये नभोगाः=ग्रहाः आरोहवीर्याधिकाः, भावतुल्याः, बिन्द्वधिकाः ( अष्टकवर्गेऽधिकशुभचिह्नकाः ) कर्मभवोदयस्थाः = दशमैकादशप्रथमभावगताः, तुङ्गादिवर्गोपगताः, षड्वीर्यवन्तश्च ( स्वकीयषड्बलयुक्ताश्च ) भवन्ति ते दशायां शुभप्रदाः स्युः । ये ग्रहाः मान्दिराशिपतयः = गुलिकाधिष्ठितराशीशाः, मान्दिर्यत्र तिष्ठति तद्भावगताः, अष्टकवर्गे स्वल्पबिन्दुकाः, शत्रुराशिगताः, नीचगताः, अस्तङ्गताः, पापग्रहयुताः, भावसन्धिगताः, राशिसन्धिगता वा भवन्ति ते ग्रहा अनिष्टफलदा भवन्ति । अथ दशापतिः = यस्य ग्रहस्य दशाफलं विचार्यते स ग्रहः, यदि लग्नगतः=तत्काललग्नवर्ती स्यात् , तथा लग्नात् त्रिषड्दशैकादशगः स्यात्, अथ तत्सप्तवर्गः= तस्य दशापतेः सप्तवर्गः, वा तत्सुहृत् = तस्य दशापतेः मित्रग्रहः, वा शुभः=शुभग्रहो लग्नगतो भवेत् तदा सा दशा शुभदा स्यात् ।

अथ चन्द्रः, दशाधिनाथस्य = प्रकृतदशापतेः सुहृद्गृहस्थः = मित्रराशिगतः, वा तदुच्चगः = दशापतेरुच्चराशिगतः, दशाधिनाथात् , स्मरत्रिकोणोपचयोपगश्च = सप्तम-नवम-पञ्चम-त्रि-षडेकादश-दशमानामन्यतमगतो वा भवेत्- तदा सत्फलानि = शुभफलानि ददाति ।

उक्तेषु, 'दशाधिनाथस्येत्यादिषु' राशिषु गतस्य विधोः = चन्द्रस्य जन्मकालभवमूर्तिधनादिभावः = जन्मकालजायमानलग्नधनादिद्वादशान्यतमो भावः, सभावः = भावेन ( स्वस्वभावेन = फलेन ) सहितः सफलो भवतीत्यर्थः । असावुक्तराशिगतश्चन्द्रः, तत्तत्प्रवृद्धिकृत्= तत्तद्भावस्य वृद्धिकरो भवति । स चन्द्रो यदीतरराशिसंस्थः = उक्तेभ्योऽन्यराशिगतः स्यात्तदा नराणां तद्भावहानिकृत्कथितः । तथा भूतश्चन्द्रो यद्भावगतो भवति तद्भावस्य हानिरेव वाच्येति ।

जन्मकाले स्वगृहादिसंस्थे = स्वगृहे, उच्चे, मूलत्रिकोणादौ चोपगते, हिमद्युतौ = चन्द्रमसि यत्फलमार्यैः वराहमिहिरादिभिरुक्तं, तच्छुभाशुभाख्यं फलं दशाप्रवेशे = स्वकीयमहाद-

शारम्भे, इन्दुश्चन्द्रो हि=निश्चयेन मनोरूपतया पूर्णभावेन ददाति इति वाच्यम्। अत्र चन्द्र इत्युपलक्षणमुत सर्वेषामेवैष नियमो ज्ञेयः।

उत्पादितमिति। इष्टोत्कटत्व इति च श्लोकौ स्पष्टार्थाविति ॥ ४-११ ॥

अधिक आरोहवीर्य, भावसदृश, अष्टवर्गमें अधिक बिन्दुवाले, १०-११-१ भावस्थ, अपने उच्चादिवर्ग प्राप्त, षड्बलयुक्त ग्रह दशामें शुभप्रद होते हैं ॥ ४ ॥

गुलिक राशिका स्वामी, गुलिकके साथी, थोड़े बिन्दुवाले, शत्रु-नीच-अस्तं गत, पाप· ग्रह युक्त, भावसन्धिमें प्राप्त और अन्त्य सन्धि नवांशमें जो ग्रह हों वे दशामें अनिष्ट फल देते हैं ॥ ५ ॥

दशापति यदि लग्नमें प्राप्त हो तथा लग्नसे तृतीय-षष्ठ-दशम-एकादशमें दशापतिका सहवर्गी या उसका मित्र ग्रह हो वा लग्नमें शुभग्रह हो तो दशा शुभ होती है ॥ ६ ॥

दशाधीशके मित्रगृहमें या उसके उच्च स्थानमें, अथवा दशाधीशसे सप्तम, त्रिकोण (५।९), उपचय (३।६।१०।११) में चन्द्रमा हो तो निश्चय उस दशामें शुभ फलोंको देते हैं ॥७॥

उक्त राशियोंमें गत चन्द्रमाका वह भाव उक्त समय लग्न-धनादि जो भाव हो उसकी वृद्धि उस दशामें होती है। यदि वह चन्द्रमा इतर राशिमें हो तो उस भावकी हानि होती है

चन्द्रमाके स्वगृहादिमें प्राप्त होने पर जो फल श्रेष्ठ २ विद्वानोंने कहा है, वह शुभाशुभ फल दशाके प्रवेशमें मनोरूपसे निश्चय चन्द्रमा देता है ॥ ९ ॥

पहले ग्रहोंके जो शुभ तथा अशुभ फल कहे जा चुके हैं उसीके अनुसार उनकी दशामें मनुष्योंके शुभ वा अशुभ फल होते हैं ॥ १० ॥

इष्ट फलकी अधिकतामें मनुष्योंको शुभ फल होते हैं और अशुभकी अधिकता होने पर अनिष्ट फल होते हैं। साम्यमें निश्चय मिश्र फल होते हैं। इसकी कल्पना सब जगह करनी चाहिये ॥ ११ ॥

संज्ञाध्याये यस्य यद्द्रव्यमुक्तं कर्माजीवो यस्य यश्चोपदिष्टः।
भावस्थानालोकयोगोद्भवं च तत्तत्सर्वं तस्य योज्यं दशायाम् ॥ १२ ॥

इदानीं पूर्वोक्तानां विविधफलानां तत्तद्योगकर्तृग्रहदशायां परिपाकमाह—संज्ञाध्याय इति। संज्ञाध्याये यस्य ग्रहस्य यद् द्रव्यं 'ताम्र-मणीत्यादि' उक्तम्। यस्य ग्रहस्य कर्माजीवश्च य उपदिष्टः। भावस्थानालोकयोगोद्भवं च=यस्य ग्रहस्य यद्भावफलं, स्थानफलम्, आलोक-( दृष्टि-) फलं, योगफलञ्चोक्तं तत्तत्सर्वं तस्य ग्रहस्य दशायां योज्यम् = वाच्य· मिति। शुभदशायां तस्य तस्य द्रव्यादेरवाप्तिः, अशुभदशायां तत्तद्द्रव्यादेर्हानिर्भवतीति वाच्यम् ( बृहज्जातकम् ) ॥ १२ ॥

संज्ञाध्यायमें जिसका जो द्रव्य कहा है, कर्माजीवाध्यायमें जिसका जो उपदेश किया है, भावफल, योगफल, दृष्टिफल जो कहे हैं वे सब उसकी दशामें योजना करे ॥ १२ ॥

शुभफलददशायां तादृगेवान्तरात्मा बहु जनयति पुंसां सौख्यमर्थागमं च।
कथितफलविपाकैस्तर्कयेद्वर्तमानां परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः ॥१३॥

इदानीमात्मस्वरूपदर्शनादेव दशावगमप्रकारमाह—शुभफलददशायामिति। शुभानि फलानि ददातीति शुभफलदस्तस्य दशा = शुभफलददशा, तस्यां मनुष्याणामन्तरात्मा जीवात्मा ( चित्स्वरूपः तादृगेव ) शुभः = ( प्रसन्नः ) एव भवति। तदानीं पुंसां = पुरु· षाणां बहुविधं सौख्यमर्थागमञ्च जनयति। शुभदशायां पुरुषाणामन्तःकरणं सुप्रसन्नमा· भासते, तथा विविधं सौख्यं धनागमश्च भवति। ईदृग्लक्षणं दृष्ट्वैव शुभदशा तर्क्येति भावः। अस्मादेवाशुभदशायां नराणामन्तरात्मा वैरूप्यमुपगतः, विविधं दुःखं धनापगमश्च भवति। मिश्रे मिश्रफलञ्चेति बोध्यम्। अत एव कथितफलानां विपाकदर्शनादेव वर्तमानां

शुभामशुभां वा दशां तर्कयेत्त्रयेत्। यस्य ग्रहस्य शुभाशुभदशायां यादृक् शुभमशुभं वा फलमुक्तं, वर्त्तमानकाले तादृक् फलमवलोक्य तद्ग्रहसम्बन्धिनी तथा दशाऽवगन्तव्येति। अथ बलरहितानां दशासु न यावदुक्तं फलं फलतीत्युच्यते। परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः। अवीर्यैः=बलहीनैः ग्रहैर्यानि शुभाशुभानि फलानि दीयन्ते तेषां फलोक्तिः=फलप्राप्तिः, स्वप्ने=स्वप्नावसरे, चिन्तायां=मनोभिलाषे वा परिणमति = अनुभूयते। यथा कश्चिद् ग्रहः सिंहासनारोहणफलदो निर्बलो भवेत्तदा स्वप्ने तत्फलपक्तिर्वाच्या, अर्थादसौ नरो हि कदाचित्स्वप्नावस्थायाम् 'अहं सिंहासनारूढोऽस्मि' इत्येवमनुभूयात्। वा तस्य मनोरथेनैव पूर्त्तिर्भवतीति वाच्यम् ( बृहज्जातकम् ) ॥ १३ ॥

शुभफल देनेवाली दशामें जातककी उसी प्रकारकी अन्तरात्मा होती है तथा अनेक प्रकारके सुख-धनकी प्राप्ति होती है। कहे हुए फलोंकी प्राप्ति देखकर वर्तमान दशा समझनी चाहिये। यदि ग्रह निर्बल हों तो उनके फलकी प्राप्ति स्वप्नकी भावनामें कहनी चाहिये १३

पाकस्वामिनि लग्नगे सुहृदि वा वर्गेऽस्य सौम्येऽपि वा
प्रारब्धा शुभदा दशा त्रिदशषड्लाभेषु वा पाकपे।
मित्रोच्चोपचयत्रिकोणमदने पाकेश्वरस्य स्थित-
श्चन्द्रः सत्फलबोधनानि कुरुते पापानि चातोऽन्यथा ॥ १४ ॥

अनेन श्लोकेन दशायाः शुभाशुभत्वमाह—पाकस्वामिनीति। पाकस्य = दशायाः, स्वामी=पाकस्वामी, तस्मिन् ( दशापतौ ) लग्नगे=दशारम्भकालिकलग्नगते सति, वा सुहृदि=पाकेश्वरस्य यन्मित्रं तस्मिन्, दशारम्भकाले लग्नगे सति प्रारब्धा दशा शुभदा भवति। अथवाऽस्य पाकेश्वरस्योक्तो यो वर्गः ( षड्वर्गः, सप्तवर्गः, दशवर्गो वा ) तस्मिँल्लग्नगते वा कस्मिंश्चिच्छुभग्रहे लग्नगते सति प्रारब्धा दशा शुभदा स्यादिति। अपि वा पाकपे = दशापतौ, लग्नात् त्रिदशषड्लाभेषु स्थिते शुभदा दशा स्यात्। अथ पाकेश्वरस्य = दशापतेः मित्रराशौ, उच्चराशौ, उपचयराशिषु ( ३।६।१०।११ ) त्रिकोणे (५।९) मदने (७) चैतेषामन्यतम इत्यर्थः। स्थितश्चन्द्रो दशायां सत्फलबोधनानि कुरुते=शुभफलान्युत्पादयतीति। अतः = उक्तेभ्योऽन्यथा स्थितश्चन्द्रः पापानि = अशुभफलानि कुरुते। एतद्‌श्लोकानुरूपावेव ६।७ श्लोकाविति चिन्त्यम् ( बृहज्जातकम् ) ॥ १४ ॥

दशाधीश लग्नमें हो, वा मित्रगृहमें हो, वा सौम्यवर्गमें हो तो प्रारब्ध दशा शुभफल देती है। अथवा दशापति दशम, षष्ठ या लाभमें हो और दशापतिके मित्र-उच्च-त्रिकोण-सप्तममें स्थित चन्द्रमा हो तो सत् फलोंका ज्ञान कराते हैं। इससे अन्यथा हो तो पापोंको करते हैं ॥ १४ ॥

लग्नादिष्टगृहोपगः स्वभवने तुङ्गे सुहृद्भेऽथवा
पाकेशः शुभमित्रवीक्षणयुतस्तत्पाकभुक्तौ शुभम्।
केन्द्रे वा यदि कोणगोऽतिशुभदः पापास्त्रिषष्ठायगा-
स्तुङ्गाद्योपचयेषु ये बलयुतास्तेषां दशायां शुभम् ॥ १५ ॥

लग्नादिति। पाकेशः=दशापतिः, दशारम्भकाले लग्नादिष्टं ( अभीष्टं ) यद्‌गृहं तद्गतश्चेत्स्वभवने = आत्मीयराशौ, तुङ्गे=स्वोच्चेऽथवा सुहृद्भे=स्वमित्रभवने स्थितः सन् शुभग्रहेण, मित्रग्रहेण वा वीक्षितो युतो वा भवेत्तदा तत्पाकभुक्तौ तद्दशाभोगकाले नराणां तद्भावसम्बन्धि शुभं फलं वाच्यम्। अथ दशापतौ केन्द्रे यदि वा कोणगे सति दशायामतिशुभदो भवति। अथ च जनने पापाः पापग्रहाः ( सूर्यभौमशनयः ) त्रिषडायभावाः ( ३।६।११ भावगताः ) स्युस्तथा ये ग्रहा बलयुताः सन्तः तुङ्गाद्योपचयेषु विद्यमाना भवेयुस्तेषां दशायां अनिमतां शुभं फलं भवति। अर्थादेव पापास्त्रिषडायेतरस्थानगाः, ये निर्बला ग्रहास्तुङ्गा-

दिस्थानरहिताश्च भवेयुस्तेषां दशायामशुभं फलमिति चिन्त्यम् । तथा चोक्तं फलदीपिकायाम्-

यद्भावगो गोचरतो विलग्नाद्दशेश्वरः स्वोच्चसुहृद्गृहस्थः ।

तद्भावपुष्टिं कुरुते तदानीं बलान्वितश्चेज्जननेऽपि तस्य ॥ १५ ॥

लग्नसे इष्टगृहमें—स्वगृहमें, उच्चमें, मित्रगृहमें, स्थित दशापति शुभग्रह तथा मित्रसे दृष्ट युत हो तो उसकी दशाकी भुक्तिमें शुभ हो। केन्द्र वा कोणमें हो तो अत्यन्त शुभ हो। पापग्रह तृतीय, षष्ठ, एकादशमें हों, उच्च, उपचयमें जो बलवान् हों उनकी दशामें शुभ होता है ॥ १५ ॥

अन्योन्यमिष्टग्रहयोर्दशायां भुक्तौ शुभं षड्बलशालिनोस्तु ।

शत्रुग्रहौ दुर्बलशालिनौ चेत् पाकापहारे तु तयोरनर्थः ॥ १६ ॥

अन्योन्यमिति । अन्योन्यं = परस्परम्, इष्टग्रहयोः = मित्रग्रहयोः, षड्बलशालिनोः = स्वस्वषड्बलसहितयोः, दशायां, भुक्तौ=अन्तर्दशायां च शुभं फलं भवति । एतदुक्तं भवति । यस्य ग्रहस्य दशायां यदीयान्तर्दशा भवति तौ दशान्तर्दशाधिपती ग्रहावन्योन्यं मित्रत्वमुपगतौ स्वस्वषड्बलयुतौ च भवेतां तदा तद्दशान्तर्दशाकाले शुभं फलं वाच्यम् । अथ तौ चेत् परस्परं शत्रुग्रहौ दुर्बलशालिनौ च भवेतां तदा तयोः पाकापहारे=दशान्तर्दशाकाले अनर्थः= अशुभं फलं भवतीति ॥ १६ ॥

परस्पर मित्रकी दशा भुक्तिमें शुभ फल देते हैं। यदि दोनों परस्पर शत्रुग्रह हों तो उनकी दशामें अनर्थ होता है ॥ १६ ॥

करोति यद्भावगतः स्वपाके तद्भावजन्यं त्वशुभं शुभं वा ।

शुभं शुभव्योमचरस्य दाये पापस्य दाये त्वशुभं वदन्ति ॥ १७ ॥

सौम्यान्वितग्रहदशाऽतिशुभप्रदा स्यात् पापान्वितस्य विफलं परिपाककाले ।

मिश्रग्रहेण सहितस्य दशापहारे मिश्रं फलं भवति मिश्रबलान्वितस्य ॥ १८ ॥

करोतीति । पाकपतिः ग्रहः ( अन्तर्दशेशः ) दशापतेः सकाशात् यद्भावगतः स्यात् तद्भावजन्यम् अशुभं शुभं वा फलं स्वपाके = स्वान्तर्दशाकाले करोति । तत्र शुभाशुभव्यवस्थामाह । शुभव्योमचरस्य पाके शुभं फलं तथा पापस्य दाये तु अशुभं फलं भवतीति आर्या वदन्ति । तत्रापि शुभदशायां शुभान्तरे तद्भावजं फलं शुभतरमेवमशुभस्य दशायां पापान्तरेऽशुभतरमर्थादेव मिश्रे मिश्रं फलमिति । तथा फलदीपिकायाम्—

यद्भावगः पाकपतिर्दशेशात् तद्भावजातानि फलानि कुर्यात् ।

विपक्षरिष्फाष्टमभावगश्चेत् दुःखं विदध्यादितरत्र सौख्यम् ॥

सौम्यान्वितेति श्लोकः सरलार्थः एवेत्यलम् ॥ १७–१८ ॥

कोई ग्रह जिस भावमें प्राप्त हो उस भावजन्य अशुभ-शुभ फलको अपनी दशामें करता है। शुभ ग्रहकी दशामें शुभ, पाप ग्रहकी दशामें अशुभ होना कहते हैं ॥ १७ ॥

शुभग्रहसे युक्त ग्रहकी दशा शुभ फल देती है। पापग्रह युक्त ग्रहकी दशा अशुभ फल परिपाक कालमें देती है। मिश्रबल युत तथा मिश्र ग्रह युत ग्रहकी दशा प्राप्त होने पर मिश्र फल होता है ॥ १८ ॥

यद्धातुखेटस्य दशापहारे तद्धातुवित्तायतिमाहुरार्याः ।

धातुक्षयं पापवियच्चरस्य पाकेऽभिवृद्धिं शुभदस्य धातोः ॥ १९ ॥

यदिति । यस्य धातोः 'मज्जा-स्नायु-वसेत्याद्युक्तस्य' यः खेटः = ग्रहस्तस्य दशापहारे तद्धातुवित्तायतिम् = तत्तद्ग्रहसम्बन्धिधातुभूतीनां परिपाकम् , आर्याः = मनीषिण आहुः । तत्र तद्धातुग्रहदशायां पापवियच्चरस्य, पाके = भुक्तौ ( अन्तर्दशायामिति यावत् ) धातुक्षयम् , शुभस्य = शुभग्रहस्य पाके तु धातोरभिवृद्धिमाहुरार्या इति ॥ १९ ॥

जिस धातुवाले ग्रहकी दशा हो उस दशामें उसी धातु और धनकी प्राप्ति होवे यह श्रेष्ठोंने कहा है। पाप ग्रहकी दशामें उस धातुका क्षय होता है। शुभ ग्रहकी दशामें उस धातुकी वृद्धि होती है ॥ १९ ॥

सपत्नखेटोपगतस्य पाके सपत्नवृद्धिं सकलार्थनाशम्।
यत्कर्मकर्तृग्रहपाककाले तत्कर्मसिद्धि प्रवदन्ति सन्तः॥ २० ॥
यत्कार्यकारिद्युचरस्य दाये तत्कार्यसिद्धिं प्रवदेन्नराणाम्।
शुभग्रहोऽसौ यदि कार्यसिद्धिं पापस्तु तत्कार्यविनाशमेव ॥ २१ ॥

सपत्नेति । सपत्नखेटोपगतस्य = वैरिग्रहदशायामुपगतस्य पाके = अन्तर्दशाकाले, सपत्नवृद्धिं = शत्रुवृद्धिं सकलार्थनाशं च वाच्यम्। यत्कर्मकर्तृग्रहपाककाले = यो ग्रहो यस्य कर्मणः कारको भवति तद्ग्रहस्य परिपाकावसरे तस्य शुभाशुभस्य कर्मणः सिद्धि सन्तो विद्वांसः प्रवदन्ति ॥ २० ॥

यत्कार्यकारिद्युचरस्येत्यस्य श्लोकस्यार्थः स्पष्ट एवेत्यलम् ॥ २१ ॥

शत्रु ग्रहोंकी दशान्तर्दशामें शत्रुकी वृद्धि, सम्पूर्ण धनका नाश होता है। जिस कर्मके करने वाले जो ग्रह हों उनकी दशा कालमें उस कर्मकी सिद्धिको सन्तलोग कहते हैं ॥२०॥

जिस कार्यका जो कर्ता ग्रह है उस ग्रहकी दशामें मनुष्योंके उन कार्योंकी सिद्धि कहे। यदि वह शुभग्रह हो तो कार्यसिद्धि हो। यदि पापग्रह हो तो कार्यका विनाश ही होता है२१

राज्यस्थानपराज्यकारकदशा राजप्रसादप्रदा
देवव्योमचरस्य पाकसमये तद्देवताराधनम्।
धर्माधीशदशागमे सति तपोधर्मादिसिद्धि वदेत्
कर्मेशस्य दशापहारसमये यज्ञादिकर्मोत्सवम् ॥ २२ ॥

राज्येति । राज्यस्थानपस्य=दशमेशस्य, राज्यकारकस्य ग्रहस्य च दशा राजप्रसादप्रदा भवति । राजपुत्रश्चेत्तदा तद्दशायां राज्यं लभते । साधारणो राजप्रसादं ( राज्ञः प्रसन्नतां ) प्राप्नोति । देवव्योमचरस्य = तत्तद्देवात्मकस्य ( ५ भावेशस्य ) ग्रहस्य पाकसमये दशान्तर्दशाकाले तत्तद्देवताया आराधनं वाच्यम् । धर्माधीशस्य = नवमेशस्य दशागमे सति तपोधर्मादीनां कर्मणां सिद्धि वदेत् । कर्मेशस्य = दशमेशस्य दशापहारसमये यज्ञादीनां कर्मणामुत्सवं वाच्यम् । उक्तानां ग्रहाणां दशावसरे तत्तदुक्तं कर्म कृतं चेत् साफल्यमुपगच्छतीति भावः ॥ २२ ॥

दशमेश और राज्यकारक ग्रहकी दशा राजप्रद होती है। देवता ग्रहके पाकसमयमें उस देवताका आराधन करे। धर्मेशकी दशामें तप धर्मकी सिद्धि कहे। कर्मेशकी दशामें यज्ञ आदि कर्मोत्सव कहे ॥ २२ ॥

सत्त्वादिग्रहपाकभुक्तिसमये तत्तद्गुणो जायते
जन्मर्क्षादिनवर्क्षगग्रहदशा कुर्वीत भूतं फलम्।
कर्मर्क्षादिनवर्क्षगस्य बलिनः पाके भविष्यत्फलं
चाधानादिगतस्य सर्वमफलं पाके फलं वा वदेत् ॥ २३ ॥

सत्त्वादीति । सत्त्वादिप्रकृतिमतां ग्रहाणां ( द्वितीयाध्याये २६ श्लोको द्रष्टव्यः ) पाकभुक्तिसमये तत्तद्गुणो जायते ( सत्त्वगुणात्मकग्रहदशायां सत्त्वगुणः, रजसि रजोगुणः, तमसि तमोगुणो भवति मनुज इति )। जन्मर्क्षादिनवर्क्षगग्रहदशा = यस्मिन्नक्षत्रे जन्म भवति तज्जन्मर्क्षं तस्मान्नवनक्षत्रगता ग्रहदशा भूतं फलमतीतं फलं कुर्वीत । एतदुक्तं भवति । यो ग्रहो जन्मकाले जन्मनक्षत्रादिनक्षत्रनवकगतो भवति तस्य दशायामतीतमेव फलं वाच्यमर्थात्तद्दशायां वर्त्तमानं फलं नोपलभ्येत । कर्मर्क्षादिनवर्क्षगग्रहदशा=यस्मिन्नक्षत्रे जन्म तस्मा-

दशमं नक्षत्रं कर्मनाम ( अ. ६ श्लो. ७८—८० द्र. ) तदादिनवनक्षत्रे गतस्य बलिनो ग्रहस्य दशायां भविष्यत् = भावि फलं वदेत् । अथ आधानादिगस्य = जन्मर्क्षादेकोनविंशं नक्षत्रमाधानसंज्ञकं तदादिनवनक्षत्रे गतस्य ग्रहस्य पाके सर्वं फलमफलं=विफलमेव वा वदेत्। अत्र कर्माधानान्तर्क्षगतग्रहदशाफलमेव दृश्यं भवतीत्यर्थः ॥ २३ ॥

सत्व-रज-तम-गुणवाले ग्रहकी दशामें वह वह गुण होता है ( सत्वमें सत्वगुण, रजमें रजोगुण, तममें तमोगुण ) जन्म नक्षत्रसे नव नक्षत्र तक प्राप्त ग्रहकी दशा भूत फलको करती है । कर्मर्क्षसे नव नक्षत्रमें बली ग्रहकी दशामें भविष्य फल होता है । आधान आदि नवमें गत ग्रहकी दशामें सब अफल फल कहे ॥ २३ ॥

शीर्षोदयगतः खेटः पाकादौ फलदो भवेत् ।
पृष्ठोदयस्थः पाकान्ते चोभयोदयगः सदा ॥ २४ ॥

शीर्षोदयगत इति । स्पष्टार्थः ॥ २४ ॥

जो ग्रह शीर्षोदय राशिमें हो वह दशाके आदिमें फल देता है । पृष्ठोदयका ग्रह दशाके अन्तमें फल देवे । उभयोदय राशिका ग्रह सदा फल देता है २४ ॥

षष्ठेशस्य दशा विलापकरणी मृत्युर्विनाशप्रभो-
रस्तव्योमचरस्य बन्धुमरणं पाकेऽपहारेऽथवा ।
सम्पत्साधकमैत्रपाः परममैत्रक्षेमताराधिपा-
वेतेषामपहारभुक्तिसमये सम्पत्समृद्धिं वदेत् ॥ २५ ॥

षष्ठेशस्येति । षष्ठेशस्य = जन्मलग्नात् षष्ठभावपतेः दशा विलापकरणी = दुःखदात्री भवति । विनाशप्रभोः = विनाशगृहमष्टमो भावस्तत्पतेर्दशायां मृत्युर्भवति । अस्तव्योमचरस्य = रविणा सहास्तं गतस्य वाऽस्तभवन-( सप्तमभाव- ) मुपगतस्य, सप्तमेशस्य वा ग्रहस्य पाकेऽपहारेऽथवा = दशायामन्तर्दशायां वा बन्धुमरणं वाच्यम् । अत्रोक्तभावाधिपस्य शुभाशुभत्वे सति फले न्यूनाधिक्यं चिन्तनीयम् । अथ, सम्पत्–साधक–मैत्रपाः, परममैत्र–क्षेमताराधिपौ = सम्पत् ( यस्मिन्नक्षत्रे जन्म तस्माद् द्वितीयैकादशविंशतितमानि नक्षत्राणि ), साधकं ( जन्मर्क्षात् षष्ठ–पञ्चदश–चतुर्विंशतितमानि ) मैत्रं = ( अष्टम सप्तदश–षड्विंशतितमानि ) एषां पतयः, तथा परममैत्रं ( नवमाष्टादशसप्तविंशतितमानि ) क्षेमतारा ( चतुर्थत्रयोदशद्वाविंशतितमानि ) एतयोरधिपौ, एतेषां ग्रहाणाम् अपहारभुक्तिसमये ( अन्तर्दशाकाले ) जातस्य सम्पत्प्रवृद्धि = धनादिवृद्धिं वदेत् । तथा फलदीपिकायाम्—

चोराद् भीतिमनर्थतां च दमनं रोगान् बहून् दुष्कृतिं
भृत्यत्वं लभतेऽपमानमयशः षष्ठेशदाये ऋणम् ।
आमातुर्व्यसनं कलत्रविरहं क्षीहेत्वनर्थागमे
द्यूनेशो विबलिन्यसत्यभिरतिं गुह्यामयं चाटनम् ।
रन्ध्रेशायुषि शोकमोहमदमात्सर्यादिमूर्च्छोच्छ्रितिं
दारिद्र्यं भ्रमणं वदेदपयशो व्याधीनवज्ञां मृतिम् ॥ इति ॥ २५ ॥

षष्ठेशकी दशा विलाप करनेवाली होती है। अष्टमेशकी दशा मृत्यु करनेवाली है। अस्त ग्रहकी दशा अन्तर्दशा बन्धुमरण करती है। सम्पत् (२) साधक (६) मैत्र (८) परममैत्र (९) क्षेम ताराधिप (४) इन सबकी अन्तर्दशाके समय सम्पत् समृद्धि कहे ॥ २५ ॥

त्रिभमण्डलेष्वथैकस्मिन् पापस्तिष्ठति दुर्बलः ।
तद्दशायां मृतिं विद्यात् ससौम्यो यदि शोभनम् ॥ २६ ॥

राशिसन्धिगदाये तु शोकरोगादिपीडनम् ।
त्रिंशद्भागमनुक्रान्तदशा मृत्युफलप्रदा ॥ २७ ॥

एतत् श्लोकद्वयं पञ्चमाध्याये, ४५।४६ श्लो० द्रष्टव्यम् ॥ २६-२७ ॥

त्रिमण्डलमें एकमें भी निर्बल पापग्रह हो तो उसकी दशामें मृत्यु जाने। यदि शुभग्रहके साथ हो तो शुभ हो ॥ २६ ॥

राशिसंधि गत ग्रहकी दशामें शोक-रोगादिकी पीड़ा होती है। किसी राशिके ३० वें अंशमें गत ग्रहकी दशा मृत्यु फल देती है ॥ २७ ॥

नीचस्थितो जन्मनि यो ग्रहः स्यात् स चापि तद्युक्खगो न शक्तः ।
दातुं शुभं राहुयुतस्त्वनिष्टं तत्क्षेत्रगस्तद्युतराशिपश्च ॥ २८ ॥

नीचस्थित इति । जन्मनि = जन्मकाले, यो ग्रहः, नीचस्थितः = स्वनीचराशिं गतः स्यात्, स नीचवर्ती ग्रहस्तद्युक्तखगश्चापि = तेन नीचगतग्रहेण युक्तो ग्रहश्चापि शुभं फलं दातुं शक्तः = समर्थः, न भवति । अपावशुभफलमेव करोतीति भावः । राहुयुतो ग्रहः, तत्क्षेत्रगः = राहोः क्षेत्रगतः, तद्युतराशिपश्च=राहुयुतस्य राशेरधिपो ग्रहश्च दशायां अनिष्टम्= अशुभं फलं करोति ॥ २८ ॥

जन्म समय नीच राशिमें स्थित जो ग्रह वह और उससे युक्त ग्रह शुभ फल नहीं देता है। राहुसे युक्त ग्रह तथा राहुराशिपति और उसके गृहमें प्राप्त ग्रह अनिष्ट फल देता है॥२८॥

तत्तद्भावाधीश्वरस्याधिशत्रुर्यो वा खेटो बिन्दुशून्यर्क्षयुक्तः ।
तत्तत्पाके मूर्तिभावादिकानां नाशं ब्रूयादेवमाहुर्मुनीन्द्राः ॥ २९ ॥

तत्तद्भावेति । तत्तद्भावाधीश्वरस्य = तत्तद्विचारणीयभावस्याधिपतेर्ग्रहस्य यो ग्रहोऽधिशत्रुस्तथा अष्टवर्गे बिन्दुशून्यर्क्षयुक्तो भवति, तत्तत्पाके मूर्तिभावादिकानां = लग्नादिकभावानां नाशं ब्रूयादेवं प्राक्तन मुनीन्द्राः आहुः। लग्नेशाधिशत्रुग्रहदशायां शरीरनाशं धनेशाधिशत्रुदशायां धननाशमेवं सर्वत्र विचिन्त्यम् ॥ २९ ॥

उस उस भावके अधीश्वरका जो अधिशत्रु ग्रह बिन्दुशून्य राशिमें हो उस उसकी दशामें शरीरादि ( लग्नादि भाव ) का नाश कहे ऐसा मुनीन्द्रोंने कहा है ॥ २९ ॥

बाधास्थानपतद्युतग्रहदशा शोकादिरोगप्रदा
तत्केन्द्रस्थदशापहारसमये दुःखं विदेशाटनम् ।
अन्योन्याष्टमषष्ठगद्युचरयोः पाकापहारे भयं
देशत्यागमनर्थमिष्टशुभयोः सर्वं विमिश्रं वदेत् ॥ ३० ॥

बाधास्थानपेति । बाधास्थानानि पूर्वमुक्तानि ( ९ अ० ४८ श्लो० ) तदन्यतमपतिस्तथा तेन युक्तस्य ग्रहस्य दशा शोकादिरोगप्रदा भवति । एतदुक्तं भवति । यस्य भावस्य विचारः प्रस्तुतस्तस्य यद्बाधास्थानं तत्पतेरथवा तद्युक्तग्रहस्य दशा तद्भावस्य शोकादिरोगप्रदा भवति । तत्केन्द्रस्थदशापहारसमये = तस्मात् बाधास्थानात् केन्द्रे स्थितस्य ग्रहस्य दशापहारसमये ( दशान्तर्दशाकाले ) दुःखं विदेशाटनञ्च भवति । अन्योऽन्यं = परस्परम्, अष्टमषष्ठगद्युचरयोः पाकापहारे = दशान्तर्दशायां ( कस्यचिद्दशायां तस्मात्षष्ठेऽष्टमे वा स्थितस्यान्तर्दशायाञ्च ) भयं देशत्यागमनर्थं च वदेत् । अथ तयोरन्योन्यमष्टमषष्ठद्युचरयोः मिश्रयोः शुभग्रहयोश्च सर्वमुक्तं फलं विमिश्रं = शुभम्, अशुभं च वदेत् ।

अत्र प्रसङ्गात् बाधास्थानानि—

आरूढराशौ चर आयराशौ, स्थिरे तु बाधा नवमे विचिन्त्या ।
तथोभये कामगृहे चराणां केन्द्रेषु चैषामिति केचिदाहुः ॥

चरस्थिरोभये लग्ने लाभधर्मास्तपैः क्रमात् ।

त्रयाणां केन्द्रसंस्थैश्च ग्रहैर्बाधकमुच्यते ॥ इति ॥ ३० ॥

बाधा स्थान पति तथा उससे युक्त ग्रहकी दशा शोक रोग देनेवाली है । उससे केन्द्रस्थकी दशाके समय दुःख और परदेशमें जाना होता है । परस्पर अष्टम, षष्ठ स्थान स्थित ग्रहोंकी दशामें भय, देशत्याग, अनर्थ कहे । यदि दोनों मित्र या शुभ हों तो सब मिश्र कहे ॥ ३० ॥

इदानीं सावस्थग्रहदशाफलमाह—

पाके दीप्तस्य राजा भवति धनयशोदानविद्याविनोदी

स्वस्थस्याचारधर्मश्रवणबहुसुखारोग्यवित्तान्वितः स्यात् ॥

राजप्रीतिं विभूतिं सुखमिह मुदितव्योमवासस्य दाये

शान्तस्यारोग्यसौख्यश्रियमवनिपतिप्रीतिमुत्साहमेति ॥ ३१ ॥

पाके शक्तस्य विद्याविनयधनतपःसिद्धिधर्मप्रवृत्ति-

श्चोरारातिक्षितीशैर्भयमनुजमृतिः पीडितस्य ग्रहस्य ॥

दाये दीनस्य दैन्यं विकलखगदशा शोकरोगप्रदा स्यात्

चित्तक्लेशः खलस्य प्रतिदिनमरिभिर्भीतखेटस्य भीतिः ॥ ३२ ॥

पाक इति । अत्र दीप्तादिलक्षणं द्वितीयाध्याये द्रष्टव्यम् ( २ अ. १६–१८ श्लो. ) अन्यत्स्पष्टमेवेत्यलम् ॥ ३१–३२ ॥

दीप्त ग्रहकी दशामें राजा तथा धन–यश–विद्या–विनोदी होता है । स्वस्थ ग्रहकी दशामें आचार–धर्म–श्रवण–बहुसुख–आरोग्य और धन युक्त हो । मुदित ग्रहकी दशामें राजप्रीति–विभूति–और सुख होता है । शान्त ग्रहकी दशामें आरोग्यता–सौख्य–लक्ष्मी–राजाकी प्रसन्नता-उत्साह प्राप्त होता है ॥ ३१ ॥

शक्त ग्रहकी दशामें विद्या–विनय धन–तपकी सिद्धि, धर्ममें प्रवृत्ति हो । पीडित ग्रहकी दशामें चौरभय, शत्रुभय, राजभय, छोटे भाईकी मृत्यु हो । दीन ग्रहकी दशामें दीनता, विकल ग्रहकी दशा शोक-रोगके देनेवाली है । खल ग्रहकी दशा चित्तमें प्रतिदिन क्लेश और भीत ग्रहकी दशा भय देती है ॥ ३२ ॥

विलग्नतारेन्दुभनामताराप्रश्नेन्दुनक्षत्रगणेषु मध्ये ।

बलाधिकर्क्षेशदशाक्रमेण फलं शुभं वाऽशुभमाहुरार्याः ॥ ३३ ॥

अधुना प्रष्टुः शुभाशुभफलजिज्ञासायां दशानिर्णयमाह—विलग्नेति । विलग्नतारा = जन्मकालीनस्पष्टलग्नाश्रनक्षत्रम् । इन्दुभं = जन्मकालीनचान्द्रं नक्षत्रम् । नामतारा = सम्बुद्धिविशिष्ट–( पुकार ) नाम्नो यन्नक्षत्रं तत् । प्रश्नेन्दुनक्षत्रम् = प्रश्नकालीनचान्द्रनक्षत्रम् । एषु नक्षत्रगणेषु मध्ये, बलाधिकर्क्षेशदशाक्रमेण = यन्नक्षत्रदशापतिः सर्वापेक्षया बली भवति तद्दशाक्रमेण । अत्रैतदुक्तं भवति । पूर्वोक्तप्रत्येकनक्षत्रवशाद्दशापतिं विज्ञाय तेषां दशापतीनां मध्ये यो बलीयान् भवति तद्दशाक्रमेणार्थात्तद्दशादिक्रमेण प्रष्टुः शुभं वाऽशुभं फलं ब्रूयादित्यार्या आहुः ॥ ३३ ॥

जन्मकालिक लग्नतारा, चन्द्रतारा, पुकार नामकी तारा और प्रश्न चन्द्रनक्षत्रके मध्यमें अधिक बलवाले नक्षत्रपतिको दशाके क्रमसे शुभफल वा अशुभफल होना श्रेष्ठ विद्वानोंने कहा है ॥ ३३ ॥

पुनः प्रकारान्तरेण दशाफलक्रमविचारं, दशावसाने सामान्यफलञ्चाह—

उत्पन्ननक्षत्रविलग्नतो वा ब्रूयात् क्रमेणैव दशाफलानि ।

दशावसानेष्वशुभं च सर्वे कुर्वन्ति सामान्यफलं नराणाम् ॥ ३४ ॥

उत्पन्नेति । उत्पन्ननक्षत्रं वक्ष्यमाणम् ( जन्मर्क्षात्परतस्तु पञ्चमभवाऽथोत्पन्नसंज्ञेति ) . विलग्नं = जन्मलग्नसम्बन्धिनक्षत्रम्, ततः उत्पन्ननक्षत्राद्विलग्ननक्षत्राद्वा ( तयोर्बलाधि·

कात् ) क्रमेणैव दशाफलानि भूयात्। अथ सर्वे = सकला एव ग्रहाः ( शुभाः पापाश्च ) दशा-वसानेषु = दशासमाप्तिकालेषु नराणाम् सामान्यफलं = साधारणं फलम्, अशुभं कुर्वन्ति। सर्वे एव ग्रहा दशान्ते प्रायोऽशुभमेव फलं ददतीति तात्पर्यम् ॥ ३४ ॥

उत्पन्न नक्षत्र वा लग्नसे दशाका फल क्रमसे होगा। दशाके अवसानमें सभी ग्रह अशुभ सामान्यफल मनुष्योंका करते हैं ॥ ३४ ॥

इदानीं केषांचित्स्वल्पानल्पमध्यायुष्मतां मरणदशाज्ञानमाह—

जन्मर्क्षात्परतस्तु पञ्चमभवाऽथोत्पन्नसंज्ञा दशा
स्यादाधानदशाऽप्यथाष्टमभवात् क्षेमान्महाख्या दशा।
आसां चैव दशावसानसमये मृत्युं वदेत्प्राणिनां
दीर्घस्वल्पसमायुषां वधविपत्प्रत्यग्-दशासु क्रमात् ॥ ३५ ॥

जन्मर्क्षादिति। जन्मनक्षत्रात् पञ्चमनक्षत्रादिका दशा उत्पन्नसंज्ञा दशा स्यात्। जन्मर्क्षात् पञ्चमनक्षत्रसम्बन्धिनी दशा उत्पन्नदशासंज्ञयोच्यते। अतो जन्मर्क्षात्, अष्टमभवा=अष्टमनक्षत्रसम्बन्धिनी दशा आधानदशा-नाम्ना व्यवह्रियते। क्षेमात् = जन्मर्क्षाच्चतुर्थनक्षत्रसम्बन्धिनी महाख्या=महासंज्ञिका = महादशेति कथ्यते। यथा-कस्यचिज्जन्मर्क्षं रोहिणी स्यात् तदा तस्य पुष्यनक्षत्रसम्बन्धिनी दशा 'उत्पन्ना' दशा। पूर्वफाल्गुनीसम्बन्धिनी दशा 'आधान' दशा। पुनर्वसुसम्बन्धिनी दशा 'महादशा' इति वाच्यम्। तत्प्रयोजनमुच्यते। आसामिति। आसाम्=उत्पन्नाधानमहादशानाम्, एव दशा, अवसानसमये= वयःशेषकाले, नृणां = मनुष्याणां, मृत्युप्रदा = मरणकर्त्री, स्यात् = भवति। यदि वयःशेषकाले उत्पन्नाधानमहाख्यदशानामन्यतमायाः सम्भवः स्यात्तदा तद्दशायामेव नृणां मरणं स्यादिति भावः। अथ स्वल्पानल्पसमायुष्मतां मरणदशामाह। स्वल्पानल्पसमायुषां=स्वल्पायुः ( द्वात्रिंशद्वर्षोनायुष्मान् ) अनल्पायुः ( दीर्घायुः-षष्टिवर्षाधिकायुष्मान् ) समायुः = मध्यमायुः ( द्वात्रिंशत्षष्टिवर्षान्तरालायुष्मान् ) चैतेषां क्रमेण त्रिवधपञ्चेशदायान्तिमे मरणं वाच्यम्। अर्थात् अल्पायुषां त्रितयर्क्षेशदशावसाने, दीर्घायुषां सप्तमर्क्षेशदशावसाने, मध्यायुषां पञ्चमर्क्षेशदशावसाने, मरणं स्यादिति। तथैवाह पराशरोऽपि—

"अल्पायुर्योगजातस्य विपद्दाये मृतिं वदेत्। जातस्य मध्यमे योगे प्रत्यरौ तु मृतिर्भवेत् ॥
दीर्घायुर्योगजातानां वधभे तु मृतिर्भवेत्" ॥ इति ॥ ३५ ॥

जन्मनक्षत्रसे पञ्चम नक्षत्र उत्पन्नदशा होती है। ८वां नक्षत्र आधान दशा, ४ र्थ गृहसे महादशा कहलाती है। इनकी दशा के अवसान समयमें मनुष्योंकी मृत्यु कहे। अल्पायु योगमें तृतीय तारेशकी दशामें, मध्यायुवालेकी पञ्चम ताराकी दशामें मृत्यु होवे और पूर्णायु वालेकी ८ वीं दशामें मृत्यु होती है ॥ ३५ ॥

## अथ निर्याणदशा।

जातोऽह्नि चेदर्कशनिस्फुटैक्यताराादिनिर्याणदशा प्रकल्प्या।
तारेशराहुस्फुटयोगतारापूर्वा दशारिष्टकरा रजन्याम् ॥ ३६ ॥

श्लोकोऽयमायुर्दायाध्याये व्याख्यात एवेति ( ५ अ० ७२ श्लो० द्र० ) ॥ ३६ ॥

यदि दिनका जन्म हो तो सूर्य और शनि स्पष्टको एकत्र जोड़ने पर लब्ध ताराादिकी निर्याणदशा कल्पना करे। रात्रिके जन्ममें चन्द्रमा और राहु स्पष्ट योग तारासे निर्याण दशा होती है ॥ ३६ ॥

## अथ गुलिकदशा

गुलिकस्थितनक्षत्राद्दशा तस्य प्रकल्पिता।
तद्युक्भवनांशेशौ सहकारी च मृत्युदाः ॥ ३७ ॥

'गुलिकस्फुटोदितनक्षत्रवशाद् गुलिकदशा'।

अधुना श्लोकेनानेन गुलिकदशोच्यते। गुलिकः स्थितो यस्मिन्नक्षत्रे तस्मान्नक्षत्राद् गुलिकदशा प्रकल्पिता भवति। अत्रेदमवधेयम्। गुलिकस्थितनक्षत्रे यस्य ग्रहस्य दशा आरभ्यते, तदादिग्रहदशागुलिकदशेति नाम्ना व्यवह्रियते। तस्यां गुलिकदशायां तद्युक्-भवनांशेशौ = गुलिकयुक्तराशिपतिनवांशपती' तत्सहकारी च ( सम्बन्धी च ) मृत्युदा भवन्ति। एतदुक्तं भवति। गुलिको यस्मिन् राशौ तिष्ठति तदीशः, यस्मिन्नवांशे तिष्ठति तदीशः, गुलिकेन सह सम्बन्धकर्त्ता चैतेषां दशायां ( गुलिकदशायां ) मरणं वाच्यम् ॥३७॥

गुलिक जिस नक्षत्रमें स्थित हो उससे उसकी दशा कल्पित करे। उससे युक्त गृहेश और अंशेश दोनों और सहकारी मृत्यु देते हैं ॥ ३७ ॥

अथ शूलदशा।

दिनेशाविनशुक्रौ च राजारौ कारकाः स्मृताः।
कारकस्य त्रिशूलर्क्षे यदा चरति या दशा ॥ ३८ ॥

"विक्रमाष्टमाधिपवशाज्जातस्यायुः, पितृकारकौ रविशुक्रौ,
मातृकारकौ चन्द्रकुजौ"।

तत्कारकस्थितगृहादिषु सर्वभेषु चक्रप्रमाणदलवत्सरसंयुतेषु ॥
वीर्यान्वितेषु शुभदृष्टियुतेषु सौख्यं नीचारिपापयुतभेषु वदन्त्यनिष्टम् ॥३९॥

दिनेशाविति। दिनेशौ = अत्र 'कटपयवर्गभवैरिह'त्यादिना दिनं = ८, तदीशौ अष्टमेशोऽष्टमादप्यष्टमेशः=तृतीयाष्टमभावयोरधिपती। इनशुक्रौ = सूर्यः, शुक्रश्च। राजारौ = राजा चन्द्रः, आरो भौमश्च। कारकाः स्मृताः। एतदुक्तं भवति। तृतीयाष्टमेशावायुष्कारकौ। सूर्य-शुक्रौ पितृकारकौ। चन्द्र-मङ्गलौ मातृकारकौ। अयमर्थो ग्रन्थकर्त्रा गद्येन स्पष्टीकृतः (विक्रमाष्टमाधिपवशाज्जातस्यायुः, पितृकारकौ रविशुक्रौ, मातृकारकौ चन्द्रकुजौ) इति। तथा च-

"रविशुक्रयोः प्राणी जनकः। चन्द्रारयोर्जननी" इति जैमिनिः। एतत्प्रयोजनमुत्तरार्द्धेनाह—कारकस्य त्रिशूलर्क्षे इति। तत्तत्कारकस्य त्रिशूलर्क्षे=अष्टमर्क्षे इत्यर्थः। या दशा यदा चरति सा दशा तदा तस्य मृत्युदा भवति। यत्तत्कारकादष्टमराशिसम्बन्धिनी दशा यस्मिन् समये चलति तदानीं तस्य तस्य मृत्युं वदेदिति भावः ॥ ३८ ॥

तत्कारकेति। तत्कारकस्थितगृहादिषु = तत्तद्भावकारको ग्रहो यत्र कुत्र भावे स्थितो भवेत्तद्भावराश्यादिषु, सर्वभेषु = यत्र कुत्रापि सर्वत्रैव नियम इत्यर्थः, चक्रप्रमाणदलवत्सरेण = कालचक्रदशोक्तार्द्धप्रमाणवर्षेण संयुतेषु = मिलितेषु वर्षेषु, यदि कारको बली शुभदृष्टो वा शुभयुतो भवेत्तदा तस्य तस्य सौख्यमार्या वदन्ति। यदि च कारको ग्रहो नीचे, शत्रुगृहे, पापयुतो वा भवेत्तदा तस्य तस्यानिष्टं वदन्ति। अयमर्थः। यस्य कस्य भावस्य कारकः शुभो वाऽशुभो यद्राशौ भवेत्तदङ्के कालचक्रदशाप्रमाणार्द्धं संयोज्य तावन्मिते वर्षे कारकप्रकृत्या सुखमनिष्टं वा विजानीयादिति ॥ ३९ ॥

तृतीयेश और अष्टमेश आयुःकारक, सूर्य और शुक्र पितृकारक, चन्द्र और मङ्गल मातृकारक कहे हैं। कारकके त्रिशूल राशिमें जो दशा जब आती है उसमें उस २ का मरण कहे॥

जो कारक जिस किसी भावमें हो उस राशिमें ६ राशि जोडकर उतने २ वर्षमें यदि कारक शुभदृष्टि-युत हो तो उस २ का सुख कहना। यदि कारक नीच-शत्रुगृह-पापयुत हो तो अनिष्ट कहना चाहिये ॥ ३९ ॥

अथ महादशाविशेषः।

यत्तारांशगतः शशी तदधिपेनालोकितो वा युत-
स्तेषां चक्रदशा विशेषफलदा वक्ष्यामि तच्चक्रजम्

देहे पापयुते तु रोगमधिकं जीवे तु जीवभ्रमं
दद्याद्यनयोः सहाबलयुतिर्मृत्युं दशायां नृणाम् ॥ ४० ॥

यदिति । शशी = चन्द्रः, यत्तारांशगतः = चक्रदशायां यन्नक्षत्रसम्ब्यंशगतो भवेत्तद्राशीशेनार्थाच्चन्द्राधिष्ठितनक्षत्रे यद्राशिसम्बन्धिनी चक्रदशाभवेत्तद्राशीशेन, आलोकितः = दृष्टः वा युतः = सहितो भवेत्तदा तेषां चन्द्रर्क्षांशानां चक्रदशा विशेषफलदा भवेत् । अतः रोगं वदेत् । जीवाख्ये च पापयुते आतस्य जीवभ्रमं दद्यात् । स्वदशान्तर इत्यर्थः । अथ नयोः = देहजीवयोः सह, अबलयुतिः = बलहीनग्रहयोगो भवेत्तदा तद्दशायां नराणां मृत्युं= मरणं वदेदिति ॥ ४० ॥

जिस ताराके अंशमें चन्द्रमा हो उसका जो स्वामी हो उससे देखा जाता हो वा युक्त हो तो उनकी चक्रदशा विशेष फल देनेवाली होती हैं । अतः उनको मैं कहता हूं । देह यदि पापग्रह युक्त हो तो देहमें अधिक रोग हो । जीवमें जीवभ्रम हो । इन दोनों के साथ अबल ग्रह हों तो उसकी दशामें मनुष्योंकी मृत्यु कहते हैं ॥ ४० ॥

## अथान्तर्दशाविशेषफलम् ।

पापो विलग्नगृहगो यदि तद्दशायां पापापहारसमये बहुशोकरोगम् ।
वित्तक्षयं नृपसपत्नभयं नराणां सौम्यस्य मिश्रमखिलं प्रवदन्ति सन्तः ॥ ४१ ॥

अधुनाऽन्तर्दशायां विशेषं फलमाह । यदि पापः = सूर्यभौमशनीनामन्यतमः, विलग्नगृहगो भवेत् तदा तद्दशायां ( लग्नवर्तिपापस्य दशायां ) पापापहारसमये = पापग्रहान्तर्दशाकाले नराणां बहुशोकरोगं, वित्तक्षयं, नृपसपत्नभयं ( राजभयं, शत्रुभयञ्च ) प्रवदन्ति । अथ तदानीं सौम्यस्य=शुभग्रहस्यापहारेऽखिलमुक्तं फलं मिश्रं ( शुभाशुभसम्मिलितं ) सन्तः प्रवदन्ति ॥ ४१ ॥

पापग्रह यदि लग्नमें हो तो उसकी दशामें पापके अन्तर्दशा समयमें बहुत शोक रोग हो । धन नाश, राजभय, शत्रुभय हो । शुभग्रहके अन्तरमें सम्पूर्ण फल मिश्र होता है, यह सन्त लोग कहते हैं ॥ ४१ ॥

लग्नाधिपदशाकाले मन्दभुक्तौ धनक्षयम् ।
इष्टबन्धुविरोधश्च भविष्यति न संशयः ॥ ४२ ॥

अथ लग्नेशदशायां शन्यन्तरे फलमाह । लग्नाधिपदशाकाले = लग्नेशस्य दशायां, मन्दभुक्तौ = शनैश्चरस्यान्तर्दशायां धनक्षयं, वदेत् । इष्टबन्धुविरोधश्च भविष्यति । अत्र संशयो नेति । निश्चयमेवेत्थं भवतीति । अत्र यदि शनिरेव लग्नेशोऽपि भवेत्तदा योगोऽयं बलीयान् भवतीति चिन्तनीयम् ॥ ४२ ॥

लग्नेशकी दशाके समय शनिकी भुक्तिमें धन नाश, इष्ट बन्धु विरोध निस्सन्देह होवे ॥४२॥

धनाधिपः पापखगो यदि स्याच्छन्यारभोगीशदिनेश्वराणाम् ।
अन्तर्दशायां धननाशमाहुः पापान्विते तद्भवने तथैव ॥ ४३ ॥
धनान्वितः पापखगस्तदीशः स्यात्तद्दशायां क्षितिपालकोपात् ।
मानार्थनाशं निगलं नराणां स्थानच्युतिं मित्रविरोधमेति ॥ ४४ ॥

इदानीं धनेशदशायामन्तर्दशाफलमाह—धनाधिपः=द्वितीयभावेशः, यदि पापखगः= सूर्यभौमशनीनामन्यतमः स्यात्तदा तद्दशायां, शन्यारभोगीशदिनेश्वराणाम्=शनि–मङ्गल–राहु–सूर्याणाम्, अन्तर्दशायां धननाशं भवतीत्याहुराचार्याः । तद्भवने = द्वितीयभावे, पापान्विते=पापग्रहेण सहिते च तथैव फलमर्थाद्धनक्षयं तत्पापदशान्त र्दशायामिति ॥४३॥

पापखगः = कश्चित्पापग्रहः, धनान्वितः = द्वितीयभावगतो भवेत्तथा स एव तदीशः= धनेशः स्यात्तदा तद्दशायां नराणां क्षितिपालकोपात् = राजकोपात्, मानार्थनाशं निगलं

( उद्बन्धः = फाँसी ), स्थानच्युतिं = पदभ्रष्टताम्, मित्रविरोधं=बन्धुवैरञ्च वदेत् ॥ ४४ ॥

यदि धनेश पापग्रह हो तो शनि, मंगल, राहु, सूर्यकी अन्तर्दशासे धनका नाश होना कहे हैं। पाप ग्रहसे युक्त हो वा पाप ग्रहकी राशिमें हो तो भी वही पूर्वोक्त फल हो ॥४३॥

धन भावमें पापग्रह उसका स्वामी हो तो उसकी दशामें राजकोपसे मान-धनका नाश हो। फांसी हो। स्थानच्युति और मित्र विरोध हो ॥ ४४ ॥

पापग्रहे विक्रमभावनाथे पापान्विते पापवियच्चराणाम्।
अन्तर्दशायामरिशत्रुचोरैर्दुःखं समायाति शुभान्विते वा ॥ ४५ ॥
दुश्चिक्यभावाधिपदायकाले मन्दारभोगिध्वजभानुभुक्तौ।
नाशं वदेत्तत्र सहोदराणां भवेद्विशेषात्सहजैर्विरोधः ॥ ४६ ॥

इदानीं सहजेशदशायामन्तर्दशाफलमाह—श्लोकद्वयेन स्फुटार्थेनेति ॥ ४५-४६ ॥

तृतीयका स्वामी पापग्रह हो पापग्रह युक्त हो तो पाप ग्रहोंकी अन्तर्दशामें शत्रु, चौरसे दुःख हो। शुभयुक्त होने पर भी उक्त फल हो ॥ ४५ ॥

तृतीय भावके स्वामीकी दशामें शनि-मंगल-केतु-सूर्यकी भुक्तिमें सहोदर भाईयोंका नाश कहे, छोटे भाइयोंसे विरोध हो ॥ ४६ ॥

क्षेत्राधिनाथस्य शुभेतरस्य पाके तु पापग्रहभुक्तिकाले।
स्थानच्युतिं बन्धुजनैर्विरोधं कृष्यादिगोवित्तविनाशमाहुः ॥ ४७ ॥

इदानीं चतुर्थेशदशाफलमाह = श्लोकेन सरलार्थेन ॥ ४७ ॥

चतुर्थका स्वामी पापग्रह हो तो पापग्रहकी भुक्ति कालमें स्थानच्युति, बन्धुजनोंसे विरोध, कृषि गोधनका विनाश होना आचार्योंने कहे हैं ॥ ४७ ॥

पापापहारसमये सुतराशिपस्य पाके नृपालभयमिष्टसुतार्तिमाहुः ॥
सौम्यापहारसमये सुतवित्तलाभमुर्वीशबन्धुजनलालनमिष्टसिद्धिम् ॥ ४८ ॥

इदानीं पञ्चमेशदशायामन्तर्दशाफलमाह। सुतराशिपस्य = पञ्चमभावपतेः, पाके = दशायाम्, पापापहारसमये = पापग्रहान्तर्दशाकाले, नृपालभयं = राज्ञो भयम्, इष्टसुतार्तिं = मित्रस्य, पुत्रस्य च पीडनमाहुः। अथ तस्मिन्नेव सुतराशिपस्य पाके, सौम्यापहारसमये = शुभान्तर्दशाकाले, सुतवित्तलाभम् = पुत्रस्य धनस्य च लाभम्, उर्वीशबन्धुजनलालनम् = राजतो बन्धुजनाच्च प्रेम, इष्टसिद्धिम् = मनोरथस्य सिद्धिं ( साफल्यम् ) आहुः विद्वांस इति ॥ ४८ ॥

पापग्रहके अपहार समयमें पञ्चमेशकी दशामें राजभय, इष्ट-पुत्रकी पीडा कहे हैं। सौम्यग्रहके अपहार समयमें पुत्र-धनका लाभ होगा और राजा बन्धुजनसे प्रेम, तथा इष्टसिद्धि होगी ॥ ४८ ॥

षष्ठेशपाकसमये तु शुभेतराणां भुक्तौ नृपानलभयं व्यसनं च रोगम्।
पाके कलत्रगृहपस्य खलापहारे पत्नीविनाशमटनं च विदो वदन्ति ॥४९॥

इदानीं षष्ठेशसप्तमेशयोर्दशायामन्तर्दशाफलमाह। अत्र पापानामन्तरेऽशुभं फलं कथितमर्थादेव शुभग्रहान्तरे शुभफलेन भवितव्यमिति चिन्त्यम् ॥ ४९ ॥

षष्ठेशके दशा-समयमें शुभग्रहके अतिरिक्त ग्रहोंकी अन्तर्दशामें राजभय, अग्निभय, व्यसन और रोग होता है। सप्तम गृहके पतिकी दशामें पापग्रहकी अन्तर्दशामें स्त्रीनाश और रोग होता है। सप्तम गृहके पतिकी दशामें पापग्रहकी अन्तर्दशामें स्त्रीनाश और परदेश जाना पण्डित जन कहते हैं ॥ ४९ ॥

रन्ध्रस्वामिदशागमे रिपुभयं पापापहारे नृणा-
मायुर्वित्तयशोविनाशमटनं स्थानच्युतिं वा वदेत् ॥
पाके धर्मगृहाधिपस्य मरणं पित्रोरधर्मायतिं
भुक्तौ पापवियच्चरस्य निगलप्राप्तिं च वित्तक्षयम् ॥ ५० ॥

इदानीमष्टमेशनवमेशयोर्दशायां पापापहारे फलमाह । अत्र पापानामन्तर्दशास्वशुभानि फलानि कथितानि । अर्थादेवाष्टमेशस्य च दशायां शुभान्तरे शुभफलं ब्रूयादिति ॥ ५० ॥

अष्टमेशकी दशामें पापभुक्तिमें मनुष्योंको शत्रुभय, आयु-वित्तनाश, चित्तविकलता वा स्थान-च्युति कहे । धर्मेशकी दशामें माता-पिताकी मृत्यु, अधर्म प्राप्ति, पापग्रहकी दशामें निगलप्राप्ति और धनक्षय होता है ॥ ५० ॥

कर्मेशस्य खलस्य पाकसमये भुक्तौ यदा पापिना-
मिष्टार्तिं पदविच्युतिं सुखयशोहानिं च वित्तक्षयम् ॥
मन्दारार्कफणीशभुक्तिसमये लाभेशदाये सुखं
कृष्यादिप्रविनाशनं नृपभयं वित्तस्य नाशं विदुः ॥ ५१ ॥

अधुना कर्मेशदशान्तर्दशायां लाभेशदशान्तर्दशायाश्च फलमाह सरलार्थकेन श्लोकेन ॥

कर्मेश पापग्रहकी दशामें पापग्रहोंकी भुक्ति हो तो इष्टार्ति, पदच्युति, सुख-यशकी हानि, धनका नाश हो । लाभेशकी दशामें शनि, मंगल, सूर्य और राहुके भुक्ति समयमें सुख, कृषि आदिका, नाश, राजभय धननाश, जाने ॥ ५१ ॥

व्ययेशदाये रविमन्दभौमभुक्तौ कलत्रात्मजबन्धुवैरम् ।
बलक्षयं मानधनक्षयं च फणीशभुक्तौ विषभीतिमाहुः ॥ ५२ ॥

श्लोकेनानेन व्ययेशदशाफलमाह । श्लोकः स्पष्टार्थ एव । उपर्युक्तानां प्रत्येकभावेश-दशान्तर्दशाफलानामेतावत्तात्पर्यं विचिन्तनीयं-प्रत्येकभावेशदशायां पापान्तरेऽशुभं, शुभान्तरे च शुभं फलमुक्तम् । तत्र यदि भावेशः पापस्तदा तद्दशायां पापान्तरे तदशुभं फलं पूर्ण-भावेन कथनीयम् । एवं शुभस्य भावेशस्य दशायां शुभान्तरे तच्छुभं फलमपि शुभतरमिति वाच्यम् । अथ च शुभे पापान्तरे, पापे शुभान्तरे च मिश्रं फलं वाच्यमिति तारतम्येन विचार्यम् ॥

द्वादशेशकी दशामें रवि-शनि-मंगल की भुक्तिमें स्त्री-पुत्र-परिवारसे वैर, बलका नाश, मान तथा धनका नाश, और राहुकी भुक्तिमें विष ( जहर ) का भय होना कहे हैं ॥ ५२ ॥

अन्योन्यषष्ठाष्टमपाकभुक्तौ पदच्युतिं वा मरणं नराणाम् ।
एकस्थयोरन्तरदायकाले मृत्युं वदेद् दुर्बलशालिनोस्तु ॥ ५३ ॥

अन्योन्येति । परस्परं षष्ठाष्टमगतयोः ग्रहयोः, पाकभुक्तौ = एकस्य दशायामन्यस्या-न्तरे, नराणां पदच्युतिं = स्थानहानिं, वा मरणं ब्रूयात् । एकस्थयोः = एकस्मिन्नेव भावे विद्यमानयोः दुर्बलशालिनोः = बलरहितयोर्द्वयोर्ग्रहयोरन्तरदायकाले = एकस्य दशायामन्य-स्यान्तरे नराणां मृत्युं = मरणं वदेदिति ॥ ५३ ॥

परस्पर षष्ठेश अष्टमेशकी भुक्तिमें मनुष्योंकी पदच्युति वा मरण हो । एक जगह दोनों हों तो उनकी दशामें मृत्यु कहे । दुर्बल ग्रहकी दशामें भी वही फल कहे ॥ ५३ ॥

क्रूरग्रहदशाकाले क्रूरस्यान्तर्दशागमे ।
मरणं तस्य जातस्य भविष्यति न संशयः ॥ ५४ ॥

स्पष्टार्थः । परञ्च सामान्यस्यैव क्रूरस्य दशायां मरणं न वाच्यमुताहो क्रूरो यदि दुःस्थानेशः ( द्वितीयेशः, सप्तमेशः, षष्ठेशः, अष्टमेशः, द्वादशेशो वा ) भवेत्तदाऽवश्यमेव तथा वाच्यमिति चिन्त्यम् ॥ ५४ ॥

क्रूरग्रहकी दशामें क्रूरग्रहकी अन्तर्दशा प्राप्त हो तो उस जातकका निस्सन्देह मरण होगा॥

क्रूरराशिगताः पापाः शत्रुखेटनिरीक्षिताः ।
शत्रुखेचरसंयुक्तास्तद्दशायां मृतिर्भवेत् ॥ ५५ ॥
दशाधिपस्य यः शत्रुस्तस्य भुक्त्यन्तरान्तरे ।
मृत्युकालो भवेन्नूनं पापखेटस्य निश्चयः ॥ ५६ ॥

इदानीं मरणदशामाह । पापाः = पापग्रहाः, यदि क्रूरराशिगताः = पापराशिस्थिताः, शत्रुखेटनिरीक्षिता वा शत्रुखेचरसंयुक्ता भवेयुस्तदा तद्दशायां = तत्पापग्रहदशायां पापान्तरे च पुरुषस्य मृतिः = मरणं भवेत् ।

दशाधिपस्य=पूर्वकथितमृत्युदशापतेः (क्रूरराशिगतस्य शत्रुखेटेन वीक्षितयुतस्य पापस्य) यः शत्रुग्रहः तस्य भुक्त्यन्तरान्तरे (अन्तरे प्रत्यन्तरे च) नूनं=निश्चयेन मृत्युकालो भवेत्। पापखेटस्य = स दशाधिपस्य शत्रुग्रहो यदि पापग्रहः स्यात्तदा तस्य पापखेटस्य भुक्त्यन्तरान्तरे मृत्युकालो भवत्येवेति । तदानीं नरो म्रियत एवेति भावः ॥ ५५-५६ ॥

क्रूरराशिमें पापग्रह हों, अपने शत्रु ग्रहसे देखे जाते हों, शत्रुग्रहसे युक्त हों तो उनकी दशामें मृत्यु हो ॥ ५५ ॥

दशाधीशका जो शत्रु ग्रह हो उसके भुक्तिके अन्तरमें ( पाप ग्रहकी भुक्ति में ) निश्चय मृत्युका समय हो ॥ ५६ ॥

स्वोच्चादिजन्यमशुभस्य दशाप्रवेशे भावादिजं फलमशोभनपाकमध्ये ।
दृष्टयुद्भवं सकलपापवियच्चराणां पाकावसानसमये फलमाहुरार्याः ॥ ५७ ॥

इदानीं पापग्रहाणामुच्च-भाव-दृष्टि-जनितं फलं कदा फलतीत्याह । अशुभस्य ग्रहस्य स्वोच्चादिजन्यं = स्वकीयोच्च-मूलत्रिकोण-स्वक्षेत्रादिजनितं फलं, दशाप्रवेशे = दशारम्भकाल एव फलति । भावादिजं फलमशोभनस्य, पाकमध्ये=दशामध्यकाले फलति । सकलपापवियच्चराणां=अखिलपापग्रहाणाम् दृष्ट्युद्भवं फलं पाकावसानसमये=दशान्ते फलतीति आर्या आहुः ॥

पापग्रहके उच्च आदि जन्यफल दशाके प्रवेशमें, पापग्रहोंके भावफल दशाके मध्यमें होते हैं। सब पापग्रहके दृष्टयुद्भव फलका होना दशाके अन्त्यमें श्रेष्ठ लोग कहे हैं ॥ ५७ ॥

पाकस्यादौ भावजन्यं शुभानां तत्तद्राशिस्थानजं पाकमध्ये ।
दायस्यान्ते दृष्टिसञ्जातमेवं सर्वे तारापाकभेदं वदन्ति ॥ ५८ ॥

इदानीं शुभानां भाव-स्थान-दृष्टि-जनितफलानि कदा फलन्तीत्याह । शुभानां = शुभग्रहाणां भावजन्यं फलं पाकस्यादौ = दशारम्भे, तत्तद्राशिस्थानजं फलं पाकमध्ये = दशामध्ये, दृष्टिसञ्जातं फलं दायस्यान्ते = दशावसाने फलतीति सर्वे आचार्या एवमेव तारापाकभेदं = नाक्षत्रदशाभेदं वदन्तीति ॥ ५८ ॥

इति नाक्षत्रदशासमुदायफलम् ।

शुभग्रहके भावोत्पन्न फल दशाके आदिमें होते हैं। उस २ राशिके स्थानज फल दशाके मध्यमें होते हैं। दृष्टिसे उत्पन्न फल दशाके अन्त्यमें होते हैं। इस प्रकार सब नक्षत्रका दशाभेद पण्डित लोग कहते हैं ५८ ॥

## अथान्तर्दशाफलानि ।

अथ तरणिदशायां चौर्यमुच्चाटनाद्यैर्धनमनलचतुष्पात्पीडनं नेत्रतापम् ।
उदरदशनरोगः पुत्रदारैर्वियोगो गुरुजनपितृनाशो भृत्यगोवित्तहानिः ॥५९॥

अथाधुना ग्रहाणामन्तर्दशाफलान्युच्यन्ते । तत्रादौ रविदशाफलमाह-अथेति । तत्र सामान्यतो रविदशायामशुभमेव फलमुक्तम् । परञ्च रविश्चेच्छुभभावेशः स्वोच्चमूलत्रिकोणादिगतश्च भवेत्तदा तद्दशायां शुभफलेनापि भवितव्यमिति चिन्तनीयम् ॥ ५९ ॥

सूर्यकी दशामें चोरी, उच्चाटनादिसे धनकी प्राप्ति, अग्नि चतुष्पदोंसे पीडा, नेत्र ताप, उदर और दन्तका रोग, स्त्रीपुत्रका वियोग, गुरुजन पिताका नाश, भृत्य, गाय, धनकी हानि होती है ॥ ५९ ॥

## अथ अन्तर्दशानयनम्।

दशा दशाहता मासाश्चैकस्थानं विना परे।
एकस्थानं त्रिगुणितं दिनान्यन्तर्दशाक्रमः॥ ६०॥

इदानीमन्तर्दशासाधनप्रकारं पूर्वमुक्त-( अ. १७. श्लो. १०७ ) मप्याह-दशा दशाहतेति। अत्र यस्य ग्रहस्य दशायामन्येषामन्तर्दशा साध्या तस्य ग्रहस्य दशामानेनान्यस्य ग्रहस्य दशामानं सङ्गुण्यम्, गुणनफले एकस्थानं=प्रथमाङ्कं विना परे अङ्का मासा ज्ञेयाः, एकस्थानं=प्रथमस्थानाङ्कं त्रिगुणितं कुर्यात्तदा तावन्ति दिनानि चेति अन्तर्दशाक्रमो ज्ञेयः।

उदाहरणम्—यथा सूर्यदशायां भौमस्यान्तर्दशा साधनीया वर्त्तते तदा सूर्यस्य दशा= ६ व। भौमस्य दशा = ७, व। द्वयोराहतिः=६ × ७=४२ ) अत्र गुणनफले एकस्थानं २ एतद्विना परे ४ मासा जाताः। एकस्थानं २, एतत् त्रिगुणं २ × ३=६, दिनानि। तेन सूर्यदशायां भौमस्यान्तर्दशामानं षड्दिनाधिकं मासचतुष्टयमितं जातमिति। एतदेव पूर्वोक्त—( अ० १७ श्लो० १०७ ( प्रकारेणाप्यायाति। यथा ६ × ७ ÷ १२० = ०।४।६, वर्षादि। इति ॥ ६०॥

**जिस ग्रहकी दशामें जिसकी अन्तर्दशा लानी हो उन दोनोंके दशावर्षोंको गुणाकर गुणनफलमें इकाई अंकको तिगुना करनेसे दिन और शेष अंकके समान महीने आते ॥६०॥**

## अथ रविदशायामन्तर्दशाफलानि।

सू. सू.—द्विजभूपतिशास्त्राद्यैर्धनप्राप्तिं मनोरुजम्।
विदेशवनसञ्चारं भानोरन्तर्गते रवौ॥ ६१॥
सू. चं.—बन्धुमित्रजनैरर्थं प्रमादं मित्रसज्जनैः।
पाण्डुरोगादिसन्तापं चन्द्रे भानुदशान्तरे॥ ६२॥
सू. मं.—रत्नकाञ्चनवित्ताप्तिं राजस्नेहं शुभावहम्।
पैत्त्यरोगादिसञ्चारं कुजे भानुदशान्तरे॥ ६३॥
सू. रा.—अकाले मृत्युसन्तापं बन्धुवर्गारिपीडनम्।
पदच्युतिं मनोदुःखं रवेरन्तर्गतेऽप्यहौ॥ ६४॥
सू. बृ.—सर्वपूज्यं सुताद्वित्तं देवब्राह्मणपूजनम्।
सत्कर्माचारसद्गोष्ठी रवेरन्तर्गते गुरौ॥ ६५॥
सू. श.—सर्वशत्रुत्वमालस्यं हीनवृत्तिं मनोरुजम्।
राजचोरभयप्राप्तिं रवेरन्तर्गते शनौ॥ ६६॥
सू. बु.—बन्धुपीडां मनोदुःखं सञ्जोत्साहं धनक्षयम्।
किञ्चित्सुखमवाप्नोति रवेरन्तर्गते बुधे॥ ६७॥
सू. के.—कण्ठरोगं मनस्तापं नेत्ररोगमथापि वा।
अकालमृत्युमाप्नोति रवेरन्तर्गते ध्वजे॥ ६८॥
सू. शु.—जले द्रव्याप्तिमायासं कुस्त्रीजननिषेवणम्।
शुष्कसंवादमाप्नोति रवेरन्तर्गते भृगौ॥ ६९॥
विशेषः—दशादौ दिननाथस्य पितृरोगं धनक्षयम्।
सर्वबाधाघरं मध्ये दशान्ते सुखमाप्नुयात्॥ ७०॥
स्वोच्चे नीचनवांशगस्य तरणेर्दायेऽपवादं भयं
पुत्रस्त्रीपितृवर्गबन्धुमरणं कृष्यादिवित्तक्षयम्।

नीचे तुङ्गनवांशगस्य च रवेः पाके नृपालश्रियं
सौख्यं याति दशावसानसमये वित्तक्षयं वा मृतिम् ॥ ७१ ॥

इदानीं रविदशायां सर्वेषां ग्रहाणामन्तर्दशाफलान्युच्यन्ते । इह तु सामान्येन फलान्युक्तानि । तेषु ग्रहाणां भावस्थानादिस्थितिवशेनापि फले तारतम्यं कुर्यात् । श्लोकास्तु सरलार्था इति न व्याख्याताः ॥ ६१-७१ ॥

सूर्यकी दशामें सूर्यकी अन्तर्दशा हो तो ब्राह्मण राजा शस्त्रादिसे धन मिले, मनमें रोग और विदेश-वनमें यात्रा हो ॥ ६१ ॥

सूर्यकी दशामें चन्द्रमाकी अन्तर्दशा प्राप्त होनेपर बन्धु-मित्रजनसे धनप्राप्ति, मित्र सज्जनसे प्रमाद और पाण्डुरोगादि सन्ताप हो ॥ ६२ ॥

सूर्यकी दशामें मङ्गलकी अन्तर्दशा प्राप्त हो तो रत्न-सोना धनकी प्राप्ति, राजप्रीति, शुभ और पित्तरोगकी वृद्धि हो ॥ ६३ ॥

सूर्यकी दशामें राहुकी अन्तर्दशा हो तो अकालमें मृत्यु, सन्ताप, बन्धु वर्गका पीडन, पदच्युति और मनमें दुःख हो ॥ ६४ ॥

सूर्यकी दशामें बृहस्पतिकी अन्तर्दशा हो तो सबसे पूज्य हो, पुत्रसे धन प्राप्ति, देव-ब्राह्मणका पूजन करे, सत्कर्म-आचारण करे और अच्छी सङ्गत हो ॥ ६५ ॥

सूर्यकी दशामें शनिकी अन्तर दशा हो तो सर्वशत्रु हो, आलस्य, हीनजीविका, मनमें रोग, राजभय और चोरभयकी प्राप्ति होती है ॥ ६६ ॥

सूर्यकी दशामें बुधकी अन्तर दशा हो तो बन्धुपीडा, मनमें दुःख, उद्यम हीन, धननाश और किंचिन्मात्र सुख प्राप्त होता है ॥ ६७ ॥

सूर्यकी दशामें केतुकी अन्तर दशा हो तो कण्ठरोग, मनमें ताप, नेत्ररोग और असमय में मृत्यु होती है ॥ ६८ ॥

सूर्यकी दशामें शुक्रकी अन्तर्दशा हो तो जलमें द्रव्य अनायास मिले, दुष्टस्त्रीका सङ्ग हो शुष्क संवाद प्राप्त हो ॥ ६९ ॥

सूर्यकी दशाके आदिमें पिताको रोग हो, धनका नाश हो, मध्यमें सर्वबाधा हो, दशाके अन्त्यमें सुख हो ॥ ७० ॥

उच्चमें नीच नवांशगत सूर्यकी दशामें अपवाद, भय, पुत्र-स्त्री पितृवर्ग-और बान्धवोंका मरण, कृषि आदिमें धनका नाश हो । नीचमें उच्च नवांशगत सूर्य की दशामें राजासे लक्ष्मीप्राप्ति, सौख्य प्राप्ति, दशाके अन्त्यमें धननाश वा मृत्यु होती है ॥ ७१ ॥

अथ रविदशायां सर्वेषामन्तर्दशाज्ञानाय चक्रम् ।

| सू. सू. | सू. चं. | सू. मं. | सू. रा. | सू. बृ. | सू. श. | सू. बु. | सू. के. | सू. शु. | योगः |
|---|---|---|---|---|---|---|---|---|---|
| ०० | ०० | ०० | ०० | ०० | ०० | ०० | ०० | ०१ | ६ व. |
| ०३ | ०६ | ४ | १० | ०९ | ११ | १० | ०४ | ०० | ० मा. |
| १८ | ०० | ०६ | २४ | १८ | १२ | ०६ | ०६ | ०० | ० दि. |

## अथ चन्द्रदशाफलम् ।

हिमकिरणदशायां मन्त्रदेवद्विजाप्तिर्युवतिजनविभूतिः स्त्रीधनक्षेत्रसिद्धिः ।
कुसुमवसनभूषागन्धनानाधनाढ्यो भवति बलविरोधे चार्थहा वातरोगी॥७२॥

अधुना चन्द्रदशाफलमाह सरलार्थेन श्लोकेन । अत्रापि चन्द्रस्य स्थितिपरत्वेन फले तारतम्यं कुर्यादिति ॥ ७२ ॥

चन्द्रमाकी दशामें मन्त्र-देव-द्विजकी प्राप्ति, स्त्री जनसे विभूति ( ऐश्वर्य ), स्त्री-धन-क्षेत्रकी प्राप्ति, पुष्प-वस्त्र-भूषण-चन्दन-अनेक प्रकारके धनसे युक्त हो । चन्द्रमाके बलके विरोधसे अर्थकी हानि और वात रोग हो ॥ ७२ ॥

अथ चन्द्रदशायामन्तर्दशाफलानि ।

चं. चं.—विद्यास्त्रीगीतवाद्येष्वभिरतिशमनं पट्टवस्त्रादिसिद्धिं
सत्सङ्गं देहसौख्यं नृपसचिवचमूनायकैः पूज्यमानम् ।
सत्कीर्तिं तीर्थयात्रां वितरति हिमगुः पुत्रमित्रैः प्रियं च ।
क्षोणीगोवाजिलाभं बहुजनविभवं स्वे दशान्तर्विपाके ॥ ७३ ॥

चं. मं.—रोगं विरोधबुद्धिं च स्थाननाशं धनक्षयम् ।
मित्रभ्रातृवशात् क्लेशं चन्द्रस्यान्तर्गते कुजे ॥ ७४ ॥

चं. रा.—रिपुरोगभयात् क्लेशं बन्धुनाशं धनक्षयम् ।
न किंचित्सुखमाप्नोति राहौ चन्द्रदशान्तरे ॥ ७५ ॥

चं. बृ.—यानादिविविधार्थाप्तिं वस्त्राभरणसम्पदः ।
यत्नात् कार्यमवाप्नोति जीवे चन्द्रदशान्तरे ॥ ७६ ॥

चं. श.—मातृपीडा मनोदुःखं वातपैत्त्यादिपीडनम् ।
स्तब्धवागरिसंवादं शनौ चन्द्रदशान्तरे ॥ ७७ ॥

चं. बु.—मातृवर्गाद्धनप्राप्तिं विद्वज्जनसमाश्रयम् ।
वस्त्रभूषणसम्प्राप्तिं बुधे चन्द्रदशान्तरे ॥ ७८ ॥

चं. के.—स्त्रीरोगं बन्धुनाशं च कुक्षिरोगादिपीडनम् ।
द्रव्यनाशमवाप्नोति केतौ चन्द्रदशान्तरे ॥ ७९ ॥

चं. शु.—स्त्रीधनं कृषिपश्वादिजलवस्त्रागमं सुखम् ।
मातृरोगमवाप्नोति भृगौ चन्द्रदशान्तरे ॥ ८० ॥

चं. सू.—नृपप्रायकमैश्वर्यं व्याधिनाशं रिपुक्षयम् ।
सौख्यं शुभमवाप्नोति रवौ चन्द्रदशान्तरे ॥ ८१ ॥

विशेषः—आदौ भावफलं मध्ये राशिस्थानफलं विदुः ।
पाकावसानसमये चाङ्गजं दृष्टिजं फलम् ॥ ८२ ॥

इदानीं चन्द्रदशामध्ये सर्वेषां ग्रहाणामन्तर्दशाफलान्युच्यन्ते । इह किल सामान्येन फलान्युक्तानि । परञ्च तत्र ग्रहाणां स्थितिपरत्वेनोक्तेषु तारतम्यं कुर्यात् । श्लोकाश्च स्पष्टार्था इत्युपेक्षिताः ॥ ७३-८२ ॥

चन्द्रमाकी दशामें चन्द्रमाकी अन्तर्दशा हो तो विद्या-स्त्री-गीत वाद्यमें प्रीति, रेसमी वस्त्रादिकी प्राप्ति, सत्सङ्ग, देहसुख, राजा मन्त्री सेनापतिसे पूज्य, सत्कीर्ति, तीर्थयात्रा, पुत्र मित्रसे प्रेम, भूमि-गो-अश्वका लाभ, बहुत धनविभव होता है ॥ ७३ ॥

चन्द्रमाकी दशामें मङ्गल की अन्तर दशा हो तो रोग, विरोध बुद्धि, स्थानका नाश, धन का क्षय और मित्र भ्रातृके जरियेसे क्लेश हो ॥ ७४ ॥

चन्द्रमाकी दशामें राहु की अन्तर दशा हो तो शत्रुसे रोगसे क्लेश हो, बन्धुनाश, धनक्षय और कुछ भी सुख न हो ॥ ७५ ॥

चन्द्रमाकी दशामें बृहस्पतिकी अन्तर दशा हो तो वाहन आदि, भांति २ के धनलाभ, वस्त्र-आभरण सम्पदा और यत्नसे कार्यकी सिद्धि हो ॥ ७६ ॥

चन्द्रमाकी दशामें शनि हो तो मातृपीडा, मनमें दुःख, वातपित्तादिकी पीडा, स्तब्धवाग् और शत्रुसंवादी हो ॥ ७७ ॥

चन्द्रमाकी दशामें बुधकी अन्तर्दशा हो तो मातृवर्गसे धनकी प्राप्ति, विद्वज्जनका अच्छे प्रकारसे आश्रय, वस्त्र और भूषणकी सम्प्राप्ति हो ॥ ७८ ॥

चन्द्रमाकी दशामें केतुकी अन्तर्दशा हो तो स्त्रीके रोग, बन्धुका नाश, कुक्षिरोगादि पीड़ा, और द्रव्यका नाश हो ॥ ७९ ॥

चन्द्रमाकी दशामें शुक्रकी अन्तर्दशा हो तो स्त्रीसे धनप्राप्ति, कृषि-पशु आदि जल तथा वस्त्रका आगम, सुख, माताको रोग हो ॥ ८० ॥

चन्द्रमाकी दशामें सूर्यकी अन्तर्दशा हो तो राजासे ऐश्वर्य प्राप्ति, व्याधिका नाश, शत्रुका क्षय, सौख्य और शुभ प्राप्त हो ॥ ८१ ॥

आदिमें भावफल, मध्यमें राशि स्थान फल, दशाके अन्त्यमें लग्नोत्पन्न और दृष्टि उत्पन्न फल जाने ॥ ८२ ॥

## अथ चन्द्रदशायां सर्वेषां ग्रहाणामन्तर्दशाचक्रम् ।

| चं. चं. | चं. मं. | चं. रा. | चं. बृ. | चं. श. | चं. बु. | चं. के. | चं. शु. | चं. सू. | योगः |
|---|---|---|---|---|---|---|---|---|---|
| ० | ० | १ | १ | १ | १ | ० | १ | ० | १० |
| १० | ७ | ६ | ४ | ७ | ५ | ७ | ८ | ६ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

## अथ कुजदशाफलम् ।

पाके भूमिसुतस्य शस्त्रहुतभुग्भूवाहनाद्यैर्धनं
भैषज्याम्रपत्रखनैश्च विविधैः क्रौर्यैर्धनस्यागमम् ।
पित्तासृग्ज्वरपीडनं तु सततं नीचाङ्गनासेवनं
विद्वेषं सुतदारबन्धुगुरुभिर्दुष्टान्नभोगं विदुः ॥ ८३ ॥

इदानीं कुजदशाफलमाह स्पष्टार्थेन पद्येन । इह सामान्येन फलमुक्तम् । तत्र भौमस्य स्थितिविशेन कथितफले न्यूनाधिक्यमूहनीयमिति ॥ ८३ ॥

मङ्गलकी दशामें शस्त्रसे, अग्निसे, भूमिसे, वाहनसे, धन प्राप्त हों । दवासे, लगानेसे, विविध क्रूरतासे धन प्राप्ति हो । पित्त-रुधिर-ज्वरसे पीडा हो । निरन्तर नीच स्त्रीका सेवन करे । पुत्र-स्त्री-बन्धु-गुरुसे वैर करे । दुष्ट अन्नका भोजन करे यह फल जाने ॥ ८३ ॥

## अथ कुजदशायामन्तर्दशाफलानि ।

मं. मं.—उष्णाधिक्यं सुहृद्द्वेषं मातृपीडां नृपाद्भयम् ।
सर्वकार्यार्थनाशं च कुजे कुजदशान्तरे ॥ ८४ ॥

मं. रा.—नृपचोरादिभीतिञ्च धनधान्यादिनाशनम् ।
दुष्टकर्मादिसंसिद्धिं राहौ कुजदशान्तरे ॥ ८५ ॥

मं. बृ.—द्विजमूलाद्धनप्राप्तिं भूलाभं च निरामयम् ।
सम्पूजनंजयं सौख्यं गुरौ कुजदशान्तरे ॥ ८६ ॥

मं. श.—बहुदुःखाकरव्याधिमरिचोरनृपैर्भयम् ।
धनक्षयमवाप्नोति शनौ भौमदशान्तरे ॥ ८७ ॥

मं. बु.—वैश्यवर्गाद्धनप्राप्तिं गृहगोधान्यसम्पदः ।
शत्रुबाधां मनःक्लेशं बुधे कुजदशान्तरे ॥ ८८ ॥

मं. के.—कुक्षिरोगेण सन्तापं बन्धुसोदरपीडनम् ।
दुष्टमानवशत्रुत्वं केतौ कुजदशान्तरे ॥ ८९ ॥

मं. शु.—कलत्रभूषणं वस्त्रं बन्धुवर्गाद्धनागमम् ।
स्त्रीजनद्वेष्यतद्रोष्ठीं शुक्रे भौमदशान्तरे ॥ ९० ॥

मं. सू.—अपवादं गुरुद्वेषं कलहं व्याधिपीडनम् ।

आत्मवर्गान्मनोदुःखं रवौ भौमदशान्तरे ॥ ९१ ॥

मं. चं.—नानावित्तसुखं वस्त्रमुक्तामणिविभूषणम् ।
निद्रालस्यमथोद्वेगं चन्द्रे भौमदशान्तरे ॥ ९२ ॥

विशेषः—भूनन्दनस्य पाकादौ मानहानिर्धनक्षयः ।
मध्ये नृपाग्निचोराद्यैर्भीतिश्चान्ते तथा भवेत् ॥ ९३ ॥

उच्चस्थितस्य धरणीतनयस्य पाके नीचांशगस्य मरणं सुतसोदराणाम् ।
नीचे तु तुङ्गभवनांशगतस्य दाये कृष्यादिभूमिधनधान्यसुखं वदन्ति ॥९४॥

इदानीं कुजदशायां सर्वेषामन्तर्दशाफलान्याह । तत्र भौमो यदि स्वकीयोच्च-( मकर ) गतः स्वनीच-( कर्क ) राशिनवांशगतो भवेत्तदा तद्दशायां सुतसोदराणां ( पुत्राणां भ्रातॄणां च ) मरणं वाच्यम् । तथा नीच-( कर्क ) राशौ तुङ्गनवांश-(मकरनवांश ) गतस्य भौमस्य दाये कृष्यादिभूमिधनधान्यसुखं वदन्ति । एवं तारतम्येनैव सर्वेषां ग्रहाणामपि स्थितिवशेनान्तर्दशाफलान्यप्यूहनीयानि ॥ ८४-९४ ॥

मंगलकी दशामें मंगलकी अन्तर्दशा हो तो गर्मी विशेष हो, मित्रसे वैर हो, भ्रातृपीड़ा, राजभय और समस्त कार्य-धनका नाश हो ॥ ८४ ॥

मंगलकी दशामें राहुकी अन्तर्दशा हो तो राजा और चोरका भय हो, धन-धान्यका नाश हो, दुष्ट कार्योंकी सिद्धि हो ॥ ८५ ॥

मंगलकी दशामें बृहस्पतिकी अन्तर दशा हो तो ब्राह्मणसे धन लाभ, भूमि लाभ, आरोग्यता, पूजन, जय और सौख्य हो ॥ ८६ ॥

मंगलकी दशामें शनिकी अन्तर्दशा हो तो बहुत दुःख व्याधिकी खान, शत्रु-चोर-राजासे भय और धन नाश होता है ॥ ८७ ॥

मंगलकी दशामें बुधकी अन्तर्दशा हो तो वैश्यवर्गसे धन प्राप्ति हो, गृह-गो-धन-सम्पत्ति, शत्रुबाधा और मनमें क्लेश हो ॥ ८८ ॥

मंगलकी दशामें केतुकी अन्तर्दशा हो तो कुक्षि रोगसे सन्ताप, बन्धु-सहोदर भाई को पीड़ा और दुष्ट मनुष्य से शत्रुता होती है ॥ ८९ ॥

मंगलकी दशामें शुक्रकी अन्तर दशा हो तो स्त्री-भूषण प्राप्ति हो, वस्त्र लाभ, बन्धु वर्ग, स्वजनसे वैर और उनकी संगत हो ॥ ९० ॥

मंगलकी दशामें सूर्यकी अन्तर दशा हो तो अपवाद, गुरुसे वैर, कलह, व्याधिपीड़ा, आत्मवर्गसे मनमें दुःख हो ॥ ९१ ॥

मंगलकी दशामें चन्द्रमाकी अन्तर्दशा हो तो नाना प्रकारके धनका सुख, वस्त्र-मोती-मणि-विभूषणकी प्राप्ति हो । निद्रा, आलस्य और उद्वेग हो ॥ ९२ ॥

मंगलकी दशाके आदिमें मान हानि, धन नाश, मध्यमें तथा अन्त्यमें राजा चोर और अग्निसे भय हो ॥ ९३ ॥

उच्च राशिमें स्थित नीच नवांशमें प्राप्त मंगलकी दशामें पुत्र-सहोदर भाईकी मृत्यु हो । नीचराशिमें उच्चांशमें स्थित हो तो कृषि आदि भूमि-धन-धान्य-सुख होना विद्वान् कहते हैं ॥ ९४ ॥

अथ कुजदशायां सर्वेषामन्तर्दशाचक्रम् ।

| मं. मं. | मं. रा. | मं. बृ. | मं. श. | मं. बु. | मं. के. | मं. शु. | मं. सू. | मं. चं. | योगः |
|---|---|---|---|---|---|---|---|---|---|
| ० | १ | ० | १ | ० | ० | १ | ० | ० | ७ |
| ४ | ० | ११ | १ | ११ | ४ | २ | ४ | ७ | ० |
| २७ | १८ | ६ | ९ | २७ | २७ | ० | ६ | ० | ० |

**राहुदशाफलम्।**

सौख्यादिवित्तस्थितिनाशनं च कलत्रपुत्रादिवियोगदुःखम् ॥
अतीव रोगं परदेशवासं विवादबुद्धिं कुरुते फणीशः ॥ ९५ ॥

अधुना राहुदशाफलमाह। श्लोकेनानेन राहोः सामान्यं फलमुक्तम्। अत्र स्थितिपरत्वेन राहोर्दशाफलमग्रतो वक्ष्यते ( श्लो. १०५-१०७ द्र. ) ॥ ९५ ॥

राहु अपनी दशामें सौख्य आदि धन स्थितिका नाश, स्त्री-पुत्र-वियोग-का दुःख, विशेष रोग, परदेश वास और विवाद बुद्धि करता है ॥ ९५ ॥

**अथ राहुदशायामन्तर्दशाफलानि।**

रा. रा.—जायारोगं विवादं च बुद्धिनाशं धनक्षयम् ॥
दूरदेशाटनं दुःखं राहौ राहुदशान्तरे ॥ ९६ ॥

रा. बृ.—व्याधिशत्रुविनाशं च राजप्रीतिं धनागमम् ॥
पुत्रलाभं तथोत्साहं गुरौ राहुदशान्तरे ॥ ९७ ॥

रा. श.—वातपित्तकृतं रोगं बन्धुमित्रादिपीडनम् ॥
दूरदेशनिवासं च शनौ राहुदशान्तरे ॥ ९८ ॥

रा. बु.—मित्रबन्धुकलत्रादिसंयोगं च धनागमम् ॥
राजप्रीतिमवाप्नोति बुधे राहुदशान्तरे ॥ ९९ ॥

रा. के.—चौर्यं च मानहानिं च पुत्रनाशं पशुक्षयम् ॥
सर्वोपद्रवमाप्नोति केतौ राहुदशान्तरे ॥ १०० ॥

रा. शु.—विदेशाद्वाहनप्राप्तिश्छत्रचामरसम्पदः ॥
रोगारिबन्धुभीतिः स्यात् शुक्रे राहुदशान्तरे ॥ १०१ ॥

रा. सू.—दानधर्मरतिः प्रीतिः सर्वोपद्रवनाशनम् ॥
संसाररोगसञ्चारो रवौ राहुदशान्तरे ॥ १०२ ॥

रा. च.—भोगसम्पद्भवेन्नित्यं सस्यवृद्धिर्धनागमः।
स्वबन्धुजनसंवादश्चन्द्रे राहुदशान्तरे ॥ १०३ ॥

रा. मं.—सर्वोपद्रवसंयोगः सर्वकार्येषु मूढता ॥
चित्तविस्मृतिदोषः स्यात् कुजे राहुदशान्तरे ॥ १०४ ॥

इदानीं राहुदशायां सर्वेषामन्तर्दशाफलान्याह। श्लोकाश्च सरलार्था एव। ग्रहाणां स्थितिवैशिष्ट्ये फलेऽपि वैशिष्ट्यमूहनीयं तर्कज्ञेति ॥ ९६-१०४ ॥

राहुकी दशामें राहुकी अन्तर्दशा हो तो स्त्रीको रोग, विवाद, दूर देशकी यात्रा और दुःख होता है ॥ ९६ ॥

राहुकी दशामें गुरुकी अन्तर दशा हो तो व्याधि-शत्रुका नाश, राजाकी प्रसन्नता, धनका आगम, पुत्रलाभ तथा उत्साह होता है ॥ ९७ ॥

राहुकी दशामें शनिकी अन्तर्दशा हो तो वात-पित्त कृत रोग, बन्धुमित्रादिकी पीडा और दूरदेशमें निवास होता है ॥ ९८ ॥

राहुकी दशामें बुधकी अन्तर्दशा हो तो मित्र-बन्धु-स्त्री आदिका संयोग, धनका आगम और राजप्रीति होती है ॥ ९९ ॥

राहुकी दशामें केतुकी अन्तर्दशा हो तो चोरी, मानहानि, पुत्रनाश, पशुक्षय और सम्पूर्ण उपद्रव होते हैं ॥ १०० ॥

राहुकी दशामें शुक्रकी अन्तर्दशा हो तो विदेशसे वाहनकी प्राप्ति, छत्र-चामर-सम्पदा प्राप्त होती है और रोग-शत्रुका भय हो ॥ १०१ ॥

राहुकी दशामें सूर्यकी अन्तर दशा हो तो दान-धर्ममें रति, प्रीति, सब उपद्रवका नाश संसर्ग रोगका संचार होता है ॥ १०२ ॥

राहुकी दशामें चन्द्रमाकी अन्तर्दशा हो तो खूब भोग, सुख, अन्नोंकी वृद्धि और मित्रोंसे आलाप होते हैं। परन्तु ग्रन्थान्तरमें राहुकी दशामें चन्द्रमाकी अन्तर्दशा प्राप्त होने पर स्त्रीका लाभ, कलह, धनका नाश, वृत्तिका संहार तथा बान्धवोंके साथ क्लेश होता है। स्त्रीलाभं कलहं चैव वित्तनाशमनिर्वृतिः। बान्धवैः सह संक्लेशो राहोरन्तर्गतः श' । ॥१०३॥

राहुकी दशामें मङ्गलकी अन्तर्दशा हो तो बहुत उपद्रव, सर्वकार्यमें मूढ़ता ... ...तमें विस्मृति दोष ( भूलना ) हो ॥ १०४ ॥

स्थानवशेन राहुदशाफलम् ।

कुलीरगोमेषयुतस्य राहोर्दशाविपाके धनधान्यलाभम् ।
विद्याविनोदं नृपमाननं च कलत्रभृत्यादिसुखं वदन्ति ॥ १०५ ॥
पाथोनमीनाश्वयुतस्य राहोर्दशाविपाके सुतदारलाभम् ।
देशाधिपत्यं नरवाहनं च दशावसाने सकलं विनाशम् ॥ १०६ ॥
मृगपतिवृषकन्याकर्कटस्थस्य राहोर्भवति च परिपाके राजतुल्यो नृपो वा ।
गजतुरगचमूपः सर्वजीवोपकारी बहुधनसुखशीलः पुत्रदारानुरक्तः ॥ १०७ ॥
दशादौ दुःखमाप्नोति दशामध्ये महत्सुखम् ।
दशान्ते फणिनाथस्य पितृनाशं पदच्युतिम् ॥ १०८ ॥

इदानीं स्थानवशेन राहुदशाफलान्याह । कन्या-मीन-धनुर्गतस्य राहोर्दशायां सुतदार-लाभं, देशाधिपत्यं नरवाहनं च भवति । अथैतद्राशित्रयगतस्य राहोर्दशावसाने=दशाया अन्ते उक्तं सकलं फलं विनाशमायाति । अर्थादेव दशादौ दशामध्ये च फलं ब्रूयात् । तत्रापि 'दशादौ दुःखमाप्नोती' त्युक्तेः दशामध्ये एव तत्फलेन भवितव्यमिति चिन्त्यम् । अथ च १।२।४।५।६।९।१२ एतत्सङ्ख्येषु राशिषु गतस्य राहोर्दशा शुभफला ज्ञेयेति सारार्थः ॥

कर्क वृष मेष राशिमें राहु हो तो उसकी दशामें धनधान्य लाभ, विद्याविनोद, राज-मान, स्त्री नोकर आदिका सुख होना कहते हैं। कन्या मीन धनु राशियुत राहुकी दशा में पुत्र स्त्रीका लाभ होता है। देशाधिपत्य और नरवाहन प्राप्त हो। दशाके अन्त्यमें सबका नाश हो ॥ १०५-१०६ ॥

सिंह वृष कन्या कर्क राशिस्थ राहुकी दशामें राजा या राजाके सदृश, हाथी-घोड़ा सेन्यों का स्वामी और सभी जीवका उपकारी, बहुधन-सुखशील-पुत्र स्त्रीमें अनुरक्त होता है ॥१०७॥

राहुकी दशाके आदिमें दुःख, दशाके मध्यमें महासुख, दशाके अन्त्यमें पिताका नाश और पदच्युति होती है ॥ १०८ ॥

अथ राहुदशायां सर्वेषामन्तर्दशाचक्रम् ।

| रा. रा. | रा. बृ. | रा. श. | रा. बु. | रा. के. | रा. शु. | रा. सू. | रा. चं. | रा. मं. | योगः |
|---|---|---|---|---|---|---|---|---|---|
| २ | २ | २ | २ | १ | ३ | ० | १ | १ | १८ |
| ८ | ४ | १० | ६ | ० | ० | १० | ६ | ० | ० |
| ११ | २४ | ६ | १८ | १८ | ० | २४ | ० | १८ | ० |

अथ गुरुदशाफलम् ।

स्थानप्राप्तिं वित्तयानाम्बराप्तिं राजस्नेहं चित्तशुद्धिं विभूतिम् ।
ज्ञानाचारं पुत्रदारादिलाभं देवाचार्यः स्वे विपाके करोति ॥ १०९ ॥

इदानीं गुरुदशाफलमाह सरलार्थकेन श्लोकेन। अत्र यदि गुरुरुच्चस्थः स्वमूलत्रिकोणादौ च भवेत्तदा शुभतरं फलं स्यात्। परश्चोच्चगतोऽपि यदि नीचादिनवांशगतो भवेत्तदा अशुभमेव फलं भवति। एवं नीचादिदुःस्थानस्थे गुरौ पापं फलं ब्रूयात्। परञ्च नीचादावपि यद्युच्चनवांशगतो भवेत्तदा फलमुत्तममेवेति वाच्यम् ( श्लो. ११९ द्र. ) ॥ १०९ ॥

बृहस्पति अपनी दशामें स्थानप्राप्ति, धन-वाहन-वस्त्रप्राप्ति, राजप्रीति, चित्तशुद्धि-ऐश्वर्यज्ञान-आचार-पुत्र-स्त्रीका लाभ करता है ॥ १०९ ॥

अथ गुरुदशायामन्तर्दशाफलानि।

बृ. बृ.—नृपप्रीतिं तथोत्साहं सर्वकार्यार्थसाधनम्।
विद्याविज्ञानमाप्नोति गुरौ गुरुदशान्तरे ॥ ११० ॥

बृ. श.—द्वेषबुद्धिं मनस्तापं पुत्रमूलाद्धनव्ययम्।
कर्मनाशमवाप्नोति शनौ जीवदशान्तरे ॥ १११ ॥

बृ. बु.—वैश्यवर्गेण वित्ताप्तिं राजस्नेहं सुखावहम्।
सत्कर्माचारसिद्धिं च बुधे जीवदशान्तरे ॥ ११२ ॥

बृ. के.—मुक्ताप्रवालभूषाप्तिस्तीर्थयात्रा धनायतिः।
गुरुभूपवशादाप्तिः केतौ जीवदशान्तरे ॥ ११३ ॥

बृ. शु.—वाहनादिधनप्राप्तिः छत्रचामरवैभवम्।
स्त्रीपीडा जनविद्वेषो भृगौ जीवदशान्तरे ॥ ११४ ॥

बृ. सू.—शत्रुनाशं जयं सौख्यं चित्तोत्साहं धनागमम्।
राजप्रसादमारोग्यं रवौ जीवदशान्तरे ॥ ११५ ॥

बृ. चं.—स्त्रीकृतोत्साहमैश्वर्यं राजप्रीतिः सुखावहम्।
दिव्यवस्त्रविभूषाप्तिं चन्द्रे जीवदशान्तरे ॥ ११६ ॥

बृ. मं.—कर्मनाशं च सञ्चारं ज्वरतापं महद्भयम्।
धननाशं निरुत्साहं कुजे जीवदशान्तरे ॥ ११७ ॥

बृ. रा.—सर्वक्लेशभयं रोगं सर्वोपद्रवकारणम्।
धनच्छेदमवाप्नोति राहौ जीवदशान्तरे ॥ ११८ ॥

विशेषः—नीचांशोपगतः स्वतुङ्गभवने जीवस्य पाके भयं
चोरारातिनृपैः कलत्रतनयद्वेषं करोत्यश्रियम्।
नीचे तुङ्गनवांशको यदि महाराजप्रसादं सुखं
विद्याबुद्धियशोधनादिविभवं देशाधिपत्यं तु वा ॥ ११९ ॥

अधुना गुरुदशायां सर्वेषामन्तर्दशाफलान्युच्यन्ते। श्लोकास्तु सरलार्था एवेति ॥११०–११९॥

बृहस्पतिकी दशामें बृहस्पतिकी अन्तर्दशा हो तो राजाकी प्रीति तथा उत्साह, सर्वकार्यार्थसाधन, विद्या और विज्ञान प्राप्त होता है ॥ ११० ॥

बृहस्पतिकी दशामें शनिकी अन्तर्दशा हो तो द्वेषबुद्धि, मनमें पाप, पुत्रके कारण धन व्यय और कर्मका नाश होता है ॥ १११ ॥

बृहस्पतिकी दशामें बुधकी अन्तर्दशा हो तो वैश्यवर्गसे धन प्राप्ति, राजाकी प्रीति, सुखप्राप्ति, सत्कर्मकी सिद्धि होती है ॥ ११२ ॥

बृहस्पतिकी दशामें केतुकी अन्तर्दशा हो तो मोती, मूंगा, भूषणकी प्राप्ति, तीर्थयात्रा धनप्राप्ति और गुरु तथा राजाके वशसे प्राप्ति होवे ॥ ११३ ॥

बृहस्पतिकी दशामें शुक्रकी अन्तर्दशा हो तो वाहन आदि धन प्राप्ति, छत्र चामर सम्पत्तिकी प्राप्ति, स्त्री पीड़ा, जनोंसे वैर होता है ॥ ११४ ॥

बृहस्पतिकी दशामें सूर्यकी अन्तर्दशा हो तो शत्रुका नाश, जय, सौख्य, चित्तोत्साह, धनागम, राजप्रसाद और आरोग्यता होती है ॥ ११५ ॥

बृहस्पतिकी दशामें चन्द्रमाकी अन्तर्दशा हो तो स्त्री-कृत उत्साह, ऐश्वर्य, राजप्रीति, सुखकी प्राप्ति, दिव्य वस्त्र, विभूषणकी प्राप्ति होती है ॥ ११६ ॥

बृहस्पतिकी दशामें मङ्गलकी अन्तर्दशा हो तो कर्मका नाश, घूमना, ज्वरताप, महाभय, धननाश और निरुत्साह होता है ॥ ११७ ॥

बृहस्पतिकी दशामें राहुकी अन्तर्दशा हो तो सर्वक्लेश, भय, रोग, सर्व उपद्रवका कारण और धन नाश होता है ॥ ११८ ॥

उच्चराशिमें नीचराशिके नवांशगत गुरुकी दशा हो तो चोर-शत्रु-से भय, राजाका भय और अशुभ फल करता है। नीचराशिमें उच्चका नवांश यदि हो तो महाराजकी प्रसन्नता, सुख, विद्या, बुद्धि, धन-यश, विभव और देशाधिपत्य प्राप्त होता है ॥ ११९ ॥

## अथ गुरुदशायां सर्वेषामन्तर्दशाचक्रम्।

| बृ. बृ. | बृ. श. | बृ. बु | बृ. के. | बृ. शु. | बृ. सू. | बृ. चं. | बृ. मं. | बृ. रा. | योगः |
|---|---|---|---|---|---|---|---|---|---|
| २ | २ | २ | ० | २ | ० | १ | ० | २ | १६ |
| १ | ६ | ३ | ११ | ८ | ६ | ४ | ११ | ४ | ० |
| १८ | १२ | ६ | ६ | ० | १८ | ० | ६ | २४ | ० |

## अथ शनिदशाफलम्।

शनेर्दशायामजगर्दभोष्ट्रवृद्धाङ्गनापक्षिकुधान्यलाभम्।
श्रेणीपुरग्रामजनाधिकाराद्धनं वदेन्नीचकुलाधिपत्यम् ॥ १२० ॥

इदानीं शनिदशाफलमाह। तत्र शनेः स्थितिवशात् फलेऽपि न्यूनाधिक्यं ब्रूयात् (श्लो. १२१ द्र.)। श्लोकोऽयं सरलार्थ एवेति ॥ १२० ॥

शनिकी दशामें बकरा, गदहा, ऊंट, वृद्धस्त्री, पक्षी, कुधान्यका लाभ होता है। श्रेणी-पुर-ग्राम जनाधिकारसे धन और नीच कुलाधिपत्यका लाभ कहे ॥ १२० ॥

## अथ शनेर्दशायामन्तर्दशाफलानि।

श. श.—क्लेशादिभिर्व्याधिनिपीडनं च मात्सर्यमानैर्बहुशोकतापम्।
भूपालचोरैर्धनधान्यनाशं करोति मन्दः स्वदशापहारे ॥ १२१ ॥

रवितनयदशायां स्वापहारे विरोधं नरपति जनकोपं प्रेष्यवृद्धाङ्गनाप्तिम्।
पशुगणविषभीतिं पुत्रदारादिपीडां ज्वरपवनकफार्तिं शूलरोगं वदन्ति ॥ १२२ ॥

श. बु.—सुखवित्तयशोवृद्धिं सत्कर्माचारसम्पदः।
कृषिवाणिज्यमाप्नोति बुधे मन्ददशान्तरे ॥ १२३ ॥

श. के.—वातपित्तकृतं रोगं कलहं नीचदुर्जनैः।
दुःस्वप्नभयमाप्नोति केतौ मन्ददशान्तरे ॥ १२४ ॥

श. शु.—बन्धुस्नेहं जनप्रीतिं जायावित्तधनायतिम्।
कृष्यादिसुखमाप्नोति भृगौ मन्ददशान्तरे ॥ १२५ ॥

श. सू.—पुत्रदारविनाशं च नृपचोरादिपीडनम्।
मनोभयमवाप्नोति भानौ मन्ददशान्तरे ॥ १२६ ॥

श. चं.—गुरुस्त्रीमरणं दुःखं बन्धुद्वेषं धनागमम्।
वातरोगमवाप्नोति चन्द्रे मन्ददशान्तरे ॥ १२७ ॥

श. मं.—स्थानच्युतिं महारोगं नानाविधमनोभयम्।
सहोदरसुहृत्पीडां भौमे मन्ददशान्तरे ॥ १२८ ॥

श. रा.—सर्वाङ्गरोगसन्तापं चोरारिनृपपीडनम् ।
धनच्छेदमवाप्नोति राहौ मन्ददशान्तरे ॥ १२९ ॥

श. बृ.—देवभूदेवभक्तिं च राजप्रीतिं महत्सुखम् ।
स्थानलाभमवाप्नोति गुरौ मन्ददशान्तरे ॥ १३० ॥

विशेषः—स्वोच्चे नीचनवांशगो रविसुतः कुर्वीत सौख्यं फलं
पाकादौ तु दशावसानसमये कष्टं फलं प्राणिनाम् ।
तुङ्गांशोपगते स्वनीचभवने पाकावसाने सुखं
दायादौ रिपुचोरभीतिमधिकं दुःखं विदेशाटनम् ॥ १३१ ॥

अधुना शनिदशायां सर्वेषामन्तर्दशाफलान्याह । तत्र ग्रहाणां स्थितिवैशिष्ट्ये तेषां फलेष्वपि वैशिष्ट्यं तर्केण वाच्यमिति । अथ च शनिर्यद्युच्चराशौ ( तुलायां ) नीच-( मेष ) राशिनवांशगतः स्यात्तदा दशादौ सौख्यं फलं, तथा दशावसाने कष्टं फलं कुर्वीत । तथा च नीच-(मेष) राशौ स्वकीयोच्च(-तुला)राशेर्नवांशगतः शनिः दशावसाने सुखं, दशारम्भे च रिपु-चोरभीतिमधिकं दुःखं कुरुते ॥ १२१-१३१ ॥

## अथ शनिदशायां सर्वेषामन्तर्दशाचक्रम् ।

| श. श. | श. बु. | श. के. | श. शु. | श. सू. | श. चं. | श. मं. | श. रा. | श. बृ. | योगः |
|---|---|---|---|---|---|---|---|---|---|
| ३ | २ | १ | ३ | ० | १ | १ | २ | २ | १९ |
| ० | ८ | १ | २ | ११ | ७ | १ | १० | ६ | ० |
| ३ | ९ | ९ | ० | १२ | ० | ९ | ६ | १२ | ० |

शनिकी दशामें शनिकी अन्तर्दशा हो तो बहुत दुःख व्याधि निपीडन, मात्सर्य, मानसे उत्पन्न शोक, ताप, राजा और चोरसे धनधान्यका नाश होता है ॥ १२१ ॥

शनिकी दशामें अपनी अन्तर्दशा प्राप्त होनेपर विरोध, राजाका कोप, दूतत्व, वृद्धा स्त्रीकी प्राप्ति, पशुगणका तथा विषका भय, पुत्र स्त्री आदिकी पीडा, ज्वर, वात कफका दुःख, शूलरोग होना कहते हैं ॥ १२२ ॥

शनिकी दशामें बुधका अन्तर्दशा प्राप्त होनेपर सुख-धन-यशकी वृद्धि, सत्कर्मकी वृद्धि, सम्पदा, कृषि वाणिज्यसे लाभ होता है ॥ १२३ ॥

शनिकी दशामें केतुकी अन्तर्दशा प्राप्त होनेपर वातपित्त कृत रोग, नीच और दुर्जनसे कलह, दुःस्वप्न तथा भय प्राप्त होता है ॥ १२४ ॥

शनिकी दशामें शुक्रकी अन्तर्दशा प्राप्त होनेपर बन्धु प्रीति, जनप्रीति, स्त्री-धन-प्राप्ति कृषि आदिका सुख प्राप्त होता है ॥ १२५ ॥

शनिकी दशामें सूर्यकी अन्तर्दशा प्राप्त होनेपर पुत्र स्त्रीका विनाश, नृप चोर आदिसे पीडा, मनमें भय प्राप्त होता है ॥ १२६ ॥

शनिकी दशामें चन्द्रमाकी अन्तर्दशा प्राप्त होनेपर गुरु तथा स्त्रीकी मृत्यु, दुःख, बन्धु-वैर, धनप्राप्ति और वातरोग होता है ॥ १२७ ॥

शनिकी दशामें मङ्गलकी अन्तर्दशा प्राप्त होनेपर स्थानच्युति, महारोग, नानाविधका शत्रुभय, सहोदर भाईकी और मित्रकी पीडा हो ॥ १२८ ॥

शनिकी दशामें राहुकी अन्तर्दशा प्राप्त होनेपर सर्वाङ्गरोग, सन्ताप, चोर, शत्रु और राजासे पीडा और धनका क्षय होता है ॥ १२९ ॥

शनिकी दशामें गुरुकी अन्तर्दशा हो तो देव-ब्राह्मणमें भक्ति, राजप्रीति, महत्सुख और स्थानका लाभ होता है ॥ १३० ॥

इति स्वोच्चमें नीच नवांशमें स्थित हो तो दशाकी आदिमें सुखफलको करता है। दशाके अन्त्य समयमें प्राणियोंको कष्ट फल देता है। नीच राशिमें उच्चांशमें हो तो दशाके अन्त्यमें सुख, दशाकी आदिमें शत्रु चोरका अधिक भय, दुःख और परदेशकी यात्रा हो॥१३१॥

## अथ बुधदशाफलम्।

स्वकीयदाये गुरुबन्धुमित्रैरर्थार्जनं कीर्तिसुखं करोति।
दौत्यं च सत्कर्महिरण्यपुण्यैर्धनायतिं वातरुजं कुमारः॥ १३२॥

इदानीं बुधदशाफलमाह। सामान्येन कुमारस्य (बुधस्य) शुभफलमेवोक्तं परञ्च यदि बुधो दुःस्थानादिगतो भवेत्तदा तद्दशायामशुभफलमपि भवति। अत्र विशेषः (१४२-१४३ श्लो.) द्रष्टव्यः॥ १३२॥

बुध अपनी दशामें गुरु बन्धु मित्रसे धनप्राप्ति, कीर्ति, सुख करता है। दूत, सत्कर्म, सोनाके रोजगारसे धनलाभ और वातरोग करता है॥ १३२॥

## अथ बुधदशायामन्तर्दशाफलानि।

बु. बु.—विचित्रगृहवित्ताप्तिं राजप्रीतिं महत्सुखम्।
सर्वकार्यार्थसंसिद्धिं बुधे सौम्यदशान्तरे॥ १३३॥

बु. के.—बन्धुपीडां मनस्तापं सौख्यहानिमरेर्भयम्।
कार्यनाशमवाप्नोति केतौ सौम्यदशान्तरे॥ १३४॥

बु. शु.—गुरुदेवाग्निविप्रेषु दानं धर्मप्रियं तपः।
धनवस्त्रविभूषाप्तिं शुक्रे सौम्यदशान्तरे॥ १३५॥

बु. सू.—वस्त्रभूषणवित्ताप्तिं राजप्रीतिं महत्सुखम्।
धर्मश्रवणमाप्नोति रवौ बुधदशान्तरे॥ १३६॥

बु. चं.—रोगारातिजनद्वेषं सर्वकार्यार्थनाशनम्।
चतुष्पाद्भयमाप्नोति चन्द्रे सौम्यदशान्तरे॥ १३७॥

बु. मं.—रोगारिभयनाशं च पुण्यकर्मफलं यशः।
राजप्रीतिमवाप्नोति कुजे सौम्यदशान्तरे॥ १३८॥

बु. रा.—मित्रबन्धुधनप्राप्तिं सुखविद्याविभूषणम्।
राजप्रीतिमवाप्नोति राहौ सौम्यदशान्तरे॥ १३९॥

बु. बृ.—इष्टबन्धुगुरुद्वेषं धनलाभं सुतायतिम्।
रोगादिभयमाप्नोति गुरौ सौम्यदशान्तरे॥ १४०॥

बु. श.—धर्मसत्कर्मवित्ताप्तिं सुखमल्पजनाधिपैः
कृष्यादिनाशमाप्नोति शनौ सौम्यदशान्तरे॥ १४१॥

विशेषः—उच्चराशिगतः सौम्यो नीचांशकसमन्वितः।
करोति कर्मवैकल्यं निजदाये च वर्धनम्॥ १४२॥
नीचस्थानगतश्चान्द्रिस्तुङ्गांशकसमन्वितः।
पाकादौ विफलं सर्वं शुभमन्ते प्रयच्छति॥ १४३॥

अधुना बुधदशायां सर्वेषामन्तर्दशाफलान्याह। तत्र श्लोकाः सरलार्था इति न व्याख्याताः॥ १३३-१४३॥

बुधकी दशामें बुधकी अन्तर्दशा हो तो विचित्र गृह-वित्तकी प्राप्ति, राजाकी प्रसन्नता, भारी सुख, सब कार्य-अर्थकी सिद्धि होती है॥ १३३॥

बुधकी दशामें केतुकी अन्तर्दशा हो तो बन्धुपीडा, मनमें ताप, सौख्यहानि, शत्रुभय और कार्यका नाश होता है १३४॥

बुधकी दशामें शुक्रकी अन्तर्दशा हो तो गुरु देवता, अग्नि ब्राह्मणमें दान, धर्मप्रिय, तप, धन, वस्त्र, विभूषणकी प्राप्ति होती है ॥ १२५ ॥

बुधकी दशामें सूर्यकी अन्तर्दशा हो तो [illegible], धनकी प्राप्ति, राजप्रीति, महत् सुख और धर्मकथा प्राप्ति होती है ॥ १२६ ॥

बुधकी दशामें चन्द्रमाकी अन्तर्दशा हो तो रोग, शत्रुजनसे वैर, सर्व-काम-धनका नाश, चतुष्पदसे भय प्राप्त होता है ॥ १२७ ॥

बुधकी दशामें मंगलकी अन्तर्दशा हो तो रोग-शत्रु-भयका नाश, पुण्य, कर्मफल, यश, और राजप्रीति प्राप्त होती है ॥ १२८ ॥

बुधकी दशामें राहुकी अन्तर्दशा हो तो मित्र-बन्धु-धनकी प्राप्ति, सुख, विद्या, विभूषण और राजप्रीति होती है ॥ १३९ ॥

बुधकी दशामें बृहस्पतिकी अन्तर्दशा हो तो इष्ट-बन्धु-गुरुसे द्वेष, धनलाभ, पुत्र प्राप्ति और रोगादिका भय होता है ॥ १४० ॥

बुधकी दशामें शनिकी अन्तर्दशा हो तो धर्म-सत्कर्म-वित्तकी प्राप्ति, थोड़े जनाधीशोंसे सुख, कृषी आदिका नाश होता है ॥ १४१ ॥

यदि बुध उच्च राशिका नीचांशकमें हो तो अपनी दशामें कर्ममें विकलता करता है ॥१४२॥

नीच स्थानमें बुध उच्चांशकमें हो तो दशाके आदिमें सब निष्फल हो। और अन्त्यमें शुभ देता है ॥ १४३ ॥

अथ बुधदशायां सर्वेषामन्तर्दशाचक्रम् ।

| बु. बु. | बु. के. | बु. शु. | बु. सू. | बु. चं. | बु. मं. | बु. रा. | बु. बृ. | बु. श. | योगः |
|---|---|---|---|---|---|---|---|---|---|
| २ | ० | २ | ० | १ | ० | २ | २ | २ | १७ |
| ४ | ११ | १० | १० | ५ | ११ | ६ | ३ | ८ | ० |
| २७ | २७ | ० | ६ | ० | २७ | १८ | ६ | ९ | ० |

अथ केतुदशाफलम् ।

दीनो नरो भवति बुद्धिविवेकनष्टो( १ ) नानाऽऽमयाकुलविवर्द्धितदेहतापः ।
पापादिवृद्धिरतिकष्टचरित्रयुक्तः किञ्चित्सुखी च शिखिनः परिपाककाले ॥ १४४ ॥

श्लोकेनानेन केतुदशाफलमाह । तत्र सामान्यतः केतुदशाफलमशुभमेवोक्तम् । अथ यदि केतुः शुभग्रहयुतः शुभदृष्टश्च भवेत्तदा तद्दशा शुभफलदाऽपि भवति । एवं पापयुतः पापदृष्टश्च केतुरशुभमेव फलं करोति । अस्य केतोर्दशाफलं त्रिधा, 'दशादौ गुरुबन्ध्वार्त्ति, दशामध्ये धनायतिम्, दशान्ते सुखमिति वाच्यम् । तत्र विशेषः (श्लो. १५४-१५६) द्रष्टव्यः ॥

केतुकी दशामें मनुष्य दीन होता है। बुद्धि विवेकसे हीन होता है। नाना प्रकारके रोगसे व्याकुल हो देहमें ताप बढ़ता है। पापादिकी वृद्धि, अति कष्ट चरित्रसे युक्त और दशाके परिपाक कालमें थोड़ा सुखी होता है ॥ १४४ ॥

अथ केतुदशायामन्तर्दशाफलानि ।

के. के.—कलत्रपुत्रमरणं सुखवित्तविनाशनम् ।
रिपुभीतिमवाप्नोति केतौ केतुदशान्तरे ॥ १४५ ॥

के. शु.—स्त्रीपुत्ररोगकलहं बन्धुमित्रादिनाशनम् ।
ज्वरातिसारमाप्नोति शुक्रे केतुदशान्तरे ॥ १४६ ॥

के. सू.—मनोभङ्गं शरीरार्तिं विदेशगमनं भयम् ।
सर्वकार्यविरोधं च रवौ केतुदशान्तरे ॥ १४७ ॥

१ ) 'नष्टविवेकबुद्धिः' इति साधुपाठः ।

के. चं.—दारपुत्रजनालस्यं धानधान्यविनाशनम् ।
मनस्तापमवाप्नोति चन्द्रे केतुदशान्तरे ॥ १४८ ॥
के. मं.—पुत्रदारानुजद्वेषं रोगारिनृपपीडनम् ।
बन्धुनाशमवाप्नोति कुजे केतुदशान्तरे ॥ १४९ ॥
के. रा.—राजचोरभयं दुःखं सर्वकार्यविनाशनम् ।
दुष्टमानवसंवादं राहौ केतुदशान्तरे ॥ १५० ॥
के. बृ.—देवद्विजगुरुप्रीतिं राजस्नेहं निरामयम् ।
भूपुत्रलाभमाप्नोति गुरौ केतुदशान्तरे ॥ १५१ ॥
के. श.—मनोभयं मनस्तापं स्वबन्धुजनविग्रहम् ।
देशत्यागमवाप्नोति शनौ केतुदशान्तरे ॥ १५२ ॥
के. बु.—बन्धुमित्रादिसंयोगं पुत्रदारधनागमम् ।
विद्यासुखमवाप्नोति बुधे केतुदशान्तरे ॥ १५३ ॥
विशेषः—शुभग्रहयुतः केतुः स्वदशायां सुखप्रदः ।
यदि शोभनसन्दृष्टः करोति विपुलं धनम् ॥ १५४ ॥
सपापः कुरुते केतुः स्वपाके दुष्टमानवैः ।
भीतिं कृत्रिमरोगाद्यैर्व्यसनं धननाशनम् ॥ १५५ ॥
दशादौ गुरुबन्ध्वार्तिं दशामध्ये धनायतिम् ।
दशान्ते सुखमाप्नोति केतोर्दायफलं त्रिधा ॥ १५६ ॥

अधुना केतुदशायां सर्वेषामन्तर्दशाफलान्याह । तत्र ग्रहाणां स्थितिविशेषे फलेष्वपि तारतम्येन वैशिष्ट्यं विचिन्त्यमिति । श्लोकाः स्पष्टार्थका एवेति ॥ १४५-१५६ ॥

केतुकी दशामें केतुकी अन्तर्दशा हो तो स्त्री-पुत्रका मरण, सुख-वित्तका नाश हो और शत्रुका भय होता है ॥ १४५ ॥

केतुकी दशामें शुक्रकी अन्तर्दशा हो तो स्त्री और पुत्रको रोग, कलह, बन्धु तथा मित्र-का नाश, ज्वर और अतिसार होता है ॥ १४६ ॥

केतुकी दशामें सूर्यकी अन्तर्दशा हो तो मनमें भंग, शरीरमें दुःख, विदेश यात्रा, भय और सब कार्यमें विरोध होता है ॥ १४७ ॥

केतुकी दशामें चन्द्रमाकी अन्तर्दशा हो तो स्त्री-पुत्र-जनोंसे आलसी हो, धन-धान्य का विनाश हो और मनमें ताप होता है ॥ १४८ ॥

केतुकी दशामें मंगलकी अन्तर्दशा हो तो पुत्र-स्त्री भाईसे वैर, रोग-शत्रु-राजासे पीड़ा और कुटुम्बोंका संहार करता है ॥ १४९ ॥

केतुकी दशामें राहुकी अन्तर्दशा हो तो राजा और चोरका भय, दुःख, सर्व कार्यका विनाश होता है तथा दुष्ट मनुष्योंसे संवाद होता है ॥ १५० ॥

केतुकी दशामें गुरुकी अन्तर्दशा हो तो ब्राह्मण-गुरु-देवतामें प्रीति हो, राजा के स्नेह की प्राप्ति, रोगसे रहित और भूमि-पुत्रका लाभ होता है ॥ १५१ ॥

केतुकी दशामें शनिकी अन्तर्दशा हो तो भय, मनमें ताप, अपने परिवारसे वैर और देशका त्याग होता है ॥ १५२ ॥

केतुकी दशामें बुधकी अन्तर्दशा हो तो बन्धु-मित्रादिका संयोग, पुत्र-स्त्री-धनका आगमन और विद्या सम्बन्धि सुख होता है ॥ १५३ ॥

केतु शुभ ग्रहसे युक्त हो तो अपनी दशामें सुख देता है । यदि शुभ ग्रह देखते भी हों तो बहुत धन होता है ॥ १५४ ॥

केतु पापग्रहसे युक्त हो तो अपनी दशामें दुष्ट मनुष्यों द्वारा भय, कृत्रिम रोगादि तथा व्यसन और धर्मनाश होता है ॥ १५५ ॥

केतु अपनी दशाके आदिमें गुरु बन्धुको कष्ट देता है, दशाके मध्यमें धन व्यय। दशाके अन्त्यमें सुख देता है। इस प्रकार केतुकी दशाका तीन प्रकार फल है ॥ १५६ ॥

अथ केतुदशायां सर्वेषामन्तर्दशाचक्रम्।

| के. के. | के. शु. | के. सू. | के. चं. | के. मं. | के. रा. | के. बृ. | के. श. | के. बु. | योगः |
|---|---|---|---|---|---|---|---|---|---|
| ० | १ | ० | ० | ० | १ | ० | १ | ० | ७ |
| ४ | २ | ४ | ७ | ४ | ० | ११ | १ | ११ | ० |
| २७ | ० | ६ | ० | २७ | १८ | ६ | ९ | २७ | ० |

अथ शुक्रदशाफलम्।

स्त्रीपुत्रवित्ताप्तिमतीव सौख्यं सुगन्धमाल्याम्बरभूषणाप्तिम्।
यानादिभाग्यं नरपालतुल्यं यशः स्वपाके भृगुजः करोति ॥१५७॥

इदानीं शुक्रदशाफलमाह। सामान्यतः शुक्रदशायां शुभमेव फलमुक्तम्। विशेषार्थं ( १६७–१७१ ) श्लोका विचिन्त्याः ॥ १५७ ॥

शुक्र अपनी दशामें स्त्री-पुत्र प्राप्ति, अत्यन्त सौख्य, सुगन्ध-माल्य-भूषणकी प्राप्ति सवारी आदिका भाग्य, राजाके सदृश और यश वृद्धि करता है ॥ १५७ ॥

अथ शुक्रदशायामन्तर्दशाफलानि।

शु. शु.—शय्यास्त्रीधनवस्त्राप्तिं धर्मादिसुखसम्पदः।
रिपुनाशं यशोलाभं शुक्रे शुक्रदशान्तरे ॥ १५८ ॥

शु. सू.—मूर्धोदराक्षिरोगं च कृषिगोवित्तनाशनम्।
नृपक्रोधमवाप्नोति रवौ शुक्रदशान्तरे ॥ १५९ ॥

शु. चं.—शीर्षोष्णरोगसन्तापं कामादिरिपुपीडनम्।
किञ्चित् सुखमवाप्नोति चन्द्रे शुक्रदशान्तरे ॥ १६० ॥

शु. मं.—पित्तासृगक्षिरोगं च चित्तोत्साहं धनागमम्।
दारभूलाभमाप्नोति कुजे शुक्रदशान्तरे ॥ १६१ ॥

शु. रा.—नीलवस्तुधनप्राप्तिं बन्धुद्वेषं सुहृद्भयम्।
अग्निबाधामवाप्नोति राहौ शुक्रदशान्तरे ॥ १६२ ॥

शु. बृ.—धनवस्त्रविभूषाप्तिं धर्माचारं सुखावहम्।
स्त्रीसुतार्तिं च वैषम्यं गुरौ शुक्रदशान्तरे ॥ १६३ ॥

शु. श.—वृद्धस्त्रीजनसम्भोगं गृहक्षेत्रधनागमम्।
शत्रुनाशमवाप्नोति मन्दे शुक्रदशान्तरे ॥ १६४ ॥

शु. बु.—सुतमित्रसुखार्थाप्तिं नृपप्रीतिं महत्सुखम्।
शुभमारोग्यमाप्नोति बुधे शुक्रदशान्तरे ॥ १६५ ॥

शु. के.—कलहं बन्धुनाशं च शत्रुपीडां मनोभयम्।
धनच्छेदमवाप्नोति केतौ शुक्रदशान्तरे ॥ १६६ ॥

विशेषः—स्वराशिं गतः शुक्रो नीचांशकसमन्वितः।
स्वपाके धननाशं च कुर्वीत पदविच्युतिम् ॥ १६७ ॥

भार्गवो नीचराशिस्थः स्वोच्चांशकसमन्वितः ।
स्वदाये कृषिवाणिज्यं धनलाभं प्रयच्छति ॥ १६८ ॥

अधुना शुक्रदशायां सर्वेषामन्तर्दशाफलान्याह । तत्र ग्रहाणां स्थितिबलादपि फले न्यूनाधिक्यं विचार्यमिति । श्लोकास्तु सरलार्थ एव ॥ १५८-१६८ ॥

शुक्रकी दशामें शुक्रकी अन्तर्दशा हो तो शय्या-स्त्री-धन-वस्त्रकी प्राप्ति, धन आदि सुख सम्पदा, शत्रुनाश, यश लाभ होता है ॥ १५८ ॥

शुक्रकी दशामें सूर्यकी अन्तर्दशा हो तो शिर, उदर और नेत्र रोग, कृषि-गो-धनका नाश और राजाका कोप होता है ॥१५९ ॥

शुक्रकी दशामें चन्द्रमाकी अन्तर्दशा हो तो शिरमें गर्मी, सन्ताप, कामचेष्टा शत्रुसे पीड़ा और थोड़ा सुख होता है ॥ १६० ॥

शुक्रकी दशामें मंगलकी अन्तर्दशा हो पित्त-रक्त विकारसे नेत्र रोग, चित्तमें उत्साह, धनका आगम, स्त्री भूमिका लाभ होता है ॥ १६१ ॥

शुक्रकी दशामें राहुकी अन्तर्दशा हो तो नील वस्तु तथा धनकी प्राप्ति, बन्धु वैर, मित्रसे भय और अग्निबाधा होती है ॥ १६२ ॥

शुक्रकी दशामें गुरुकी अन्तर्दशा हो तो धन-वस्त्र-विभूषणकी प्राप्ति, धर्मका आचरण, सुख प्राप्ति, स्त्री पुत्रको कष्ट और विषमता प्राप्त होती है ॥ १६३ ॥

शुक्रकी दशामें शनिकी अन्तर्दशा हो तो वृद्ध स्त्रीसे भोग, क्षेत्र, धन प्राप्त हो और शत्रुका नाश होता है ॥ १६४ ॥

शुक्रकी दशामें बुधकी अन्तर्दशा हो तो पुत्र-मित्र-सुख-धनकी प्राप्ति हो, विशेष सुख हो और शुभ आरोग्यता होती है ॥ १६५ ॥

शुक्रकी दशामें केतुकी अन्तर्दशा हो तो कलह, बन्धुनाश, शत्रु पीडा, मनमें भय और धनका संहार होता है ॥ १६६ ॥

शुक्र उच्च राशिमें नीच नवांशका हो तो अपनी दशामें धनका नाश और पदच्युति करता है ॥ १६७ ॥

नीचराशि में स्थित शुक्र उच्चांशकमें हो तो अपनी दशामें कृषि ( खेती ) व्यापार और धनका लाभ करता है ॥ १६८ ॥

अथ शुक्रदशायां सर्वेषामन्तर्दशाचक्रम् ।

| शु. शु. | शु. सू. | शु. चं. | शु. मं. | शु. रा. | शु. बृ. | शु. श. | शु. बु. | शु. के. | योगः |
|---|---|---|---|---|---|---|---|---|---|
| ३ | १ | १ | १ | ३ | २ | ३ | २ | १ | २० |
| ४ | ० | ८ | २ | ० | ८ | २ | १० | २ | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

दशाफले विशेषता—

सम्यग्बलिनः स्वतुङ्गभागे सम्पूर्णा बलवर्जितस्य रिक्ता ।
नीचांशगतस्य शत्रुभागे ज्ञेयाऽनिष्टफला दशा प्रसूतौ ॥ १६९ ॥
तत्तद्भावार्थकामेशदशास्वन्तर्दशासु च ।
तत्तद्भावविनाशः स्यात् तद्युतेक्षितकारकैः ॥ १७० ॥
त्रिकोणधनलाभस्था बलिनो यदि शोभनाः ।
स्वदशान्तर्दशाकाले कुर्वन्ति विपुलं सुखम् ॥ १७१ ॥

उपसंहारः—

अष्टादशाध्यायिनि सर्वहोरासमुद्धृते जातकपरिजाते।
राशिस्वरूपादि दशाफलान्तं प्रोक्तं मया भानुमुखप्रसादात् ॥ १७२ ॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजातेऽष्टादशोऽध्यायः ॥ १८ ॥

इदानीं पूर्वोक्तानां दशान्तर्दशानां ग्रहस्थितिवशेन शुभाशुभत्वमाह। प्रसूतौ=नराणां जन्मकाले सम्यग्बलिनः = पूर्वोक्तैर्बलैर्युक्तस्य ग्रहस्य, स्वकीयतुङ्गभागे (परमोच्चांशे) व्यवस्थितस्य च ग्रहस्य सम्पूर्णानाम्नी दशा भवति। तत्फलञ्च। धनारोग्यविवर्धिनी सा दशा भवति। तथा भगवान् गार्गिः—

सर्वैर्बलैरुपेतस्य परमोच्चगतस्य च। सम्पूर्णाख्या दशा ज्ञेया धनारोग्यविवर्धिनी ॥

यश्चोच्चराशिगत एव भवति न परमोच्चांशगतस्तथा यो ग्रहो न पूर्णबलैर्युतः किन्तु किञ्चिदूनबलयुतो भवति तस्य पूर्णा नाम दशा शुभा धनवृद्धिकरी च कथिता। तथा हि—

स्वोच्चराशिगतस्याथ किञ्चिद्बलयुतस्य च। पूर्णा नाम दशा ज्ञेया धनवृद्धिकरी शुभा।

यो ग्रहो बलवर्जितस्तस्य = उक्तैर्बलैर्हीनस्य, नीचराशिगतस्यापि ग्रहस्य रिक्ता नाम्नी दशा भवति। तस्यां पुरुषाणां धनहानिः, रोगभयं च भवति। तथा च गार्गिः—

सर्वैर्बलैर्विहीनस्य नीचराशिगतस्य च। रिक्ता नाम दशा ज्ञेया धनारोग्यविनाशिनी ॥

अथ च यो ग्रहो नीचांशगतः (परमनीचभागे स्थितः) स्यात्तस्य, तथा शत्रुभागे = यत्र तत्र राशौ रिपुराशिनवांशगतो भवेत्तस्य ग्रहस्यानिष्टफला दशा ज्ञेया। तस्यां सर्वथा अनिष्टमेव फलं भवति। तथा च—

यः स्यात्परमनीचस्थस्तथा चारिनवांशके। तस्यानिष्टफला नाम व्याध्यनर्थविवर्धिनी ॥

अत एव फलादेशकर्त्रा विदुषा प्रथमं जन्मकालिकीं ग्रहस्थितिं दृष्ट्वा फलमादेश्यम्। यथा पूर्वं सामान्येनोक्ते दशाफले गुरोः शुक्रस्य वा दशायां शुभफलान्येवोक्तानि। परञ्च यदि गुरुः शुक्रो वा जन्मकाले नीचगतो विबलो वा भवेत्तदा तद्दशायां न जातु तदुक्तं शुभफलं स्यादिति चिन्त्यम्। एवमेव सर्वत्र फलादेशे तारतम्यं कर्त्तव्यमन्यथा फलादेशको हास्यास्पदमुपयातीति।

तत्तद्भावस्यार्थेशः = द्वितीयाधिपतिर्यो ग्रहः, तथा कामेशः = सप्तमेशो यो ग्रहः, तस्य दशासु, अन्तर्दशासु च तत्तद्भावस्य विनाशः स्यात्। तत्तद्भावे यद्यद्वस्तु विचार्यते तत्तद्वस्तुनो हानिर्भवतीत्यर्थः। तथा तत्तद्भावस्य द्वितीयेशेन सप्तमेशेन च युक्ता वा ईक्षिताः (दृष्टाः) यदि तत्तद्भावस्य कारकग्रहा भवेयुस्तदा तैरपि तत्तद्भावस्य हानिर्वाच्या। अर्थात्तद्दशास्वन्तर्दशासु च तत्तद्भावस्य नाशं ब्रूयादिति। कारकग्रहाः २ अध्याये ५१ श्लोके द्रष्टव्याः। श्लोकोऽयं ५ अध्याये २ श्लोक उक्तः।

बलिनः = पूर्वोक्तैर्बलैर्युक्ताः, शोभनाः = शुभग्रहाः, यदि जन्मलग्नात् त्रिकोणधनलाभ-(५।९।२।११) स्थानगता भवेयुस्तदा ते स्वस्वदशान्तर्दशाकाले विपुलं सुखं कुर्वन्ति।

उपसंहारमाह—अष्टादशाध्यायिनि = अष्टादशाध्याया विद्यन्ते यस्मिन्नसावष्टादशाध्यायी, तस्मिन् (अष्टादशाध्याययुक्ते इत्यर्थः, अत्र ग्रन्थे अष्टादशाध्याया आचार्येण कृताः) सर्वहोरासमुद्धृते = सर्वेभ्यो होराशास्त्रेभ्यः समुद्धृतः सङ्कलितो यस्तस्मिन् (सर्वेषां होराशास्त्राणां सारं सङ्कलय्यायं निबन्धो रचितः इति ग्रन्थारम्भ एवाह—'गर्गपराशरादिरचितं सम्प्रेक्ष्य होराफलम्' इति) 'जातकपारिजाते' राशिस्वरूपादि दशाफलान्तं = यस्यादौ राशीनां स्वरूपाणि, अन्ते च दशाफलानि विद्यन्ते तत् सकलं भानुमुखप्रसादात् =

भानुः सूर्यो मुखं प्रधानो येषु ते भानुमुखाः सूर्यादयो नव ग्रहास्तेषां प्रसादात् = कृपाबलात्, मया = श्रीवैद्यनाथेन कर्त्रा, प्रोक्तं = कथितमिति ॥ १६९-१७२ ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता । दशाफलेऽस्मिन्नध्याये पूर्तिमष्टादशे गता ॥ १८ ॥

उच्चभागमें बली सम्पूर्ण फल देता है। बलरहित ग्रहकी दशा रिक्त (खाली) होती है। नीच अंश, शत्रु भागमें प्राप्त ग्रह जातकको अनिष्ट फल देता है ॥ १६९ ॥

उस उस भावसे धनेश और सप्तमेशकी दशा अन्तर्दशामें उससे युक्त इष्ट कारकोंसे उस २ भावका नाश होता है। त्रिकोण धन और लाभ स्थानमें स्थित शुभग्रह यदि बली हों तो अपनी दशा अन्तर्दशाके समय विपुल सुखको करते हैं ॥ १७०-१७१ ॥

होरासे समुद्धृत जातकपारिजातमें अठारह अध्याय राशि-रूपादिसे दशाफलान्तको सूर्यादि ग्रहोंकी कृपासे निर्माण किया है ॥ १७२ ॥

इति मिरजापुरमण्डलान्तर्गत 'आही' ग्रामवासिसरयूपारीणवंशावतंसपाण्डेयो-
पाह्वपण्डितश्रीमच्छत्रधरसूनुना-अखिलभारतवर्षीयसंस्कारसमिति-वैदिक
कर्मकाण्डाचार्य-दैवज्ञभूषण-पण्डित-श्रीमातृप्रसादशास्त्रिणा
विरचिता 'विमला'ख्या हिन्दीटीका-समाप्ता ।

---

## अथ ग्रन्थोपसंहारः ।

शाखाभिरष्टादशसंख्यकाभिरध्यायरूपाभिरतिप्रकाशः ।
ज्योतिर्मयः सर्वफलप्रधानः सङ्कीर्तितो जातकपारिजातः ॥ १ ॥
उक्तं राशिगुणालयं ग्रहगतिस्थानस्वभावाकृति-
राधानादिसमस्तजीवजननं बालायनिष्टाकरम् ।
आयुर्ज्जातकभङ्गयोगजविधिः श्रीराजयोगादिजो
द्व्याद्यादिग्रहयोगजः शुभकरो मान्द्यब्दजं च क्रमात् ॥ २ ॥
पश्चादष्टकवर्गबिन्दुगणितं होराधनस्थानजं
दुश्चिक्यावनिभावजं सुतरिपुस्थानप्रयुक्तं फलम् ।
कन्दर्पाष्टमधर्मराशिजनितं व्यापारलाभान्त्यजं
नारीजातकलक्षणं निगदितं चक्रं दशान्तर्दशा ॥ ३ ॥
श्रीविद्याधिकवेङ्कटाद्रितनयः श्रीवैद्यनाथः सुधी-
रादित्यादिसमस्तखेटकृपया विद्वज्जनप्रीतये ।
होरासिन्धुसमुद्धृतामृतमयीमष्टादशाध्यायिनीं
चक्रे जातकपारिजातसरणिं गीतोत्सुकश्लोकिनीम् ॥ ४ ॥
इति जातकपारिजातः समाप्तः ।

अधुना चतुर्भिः श्लोकैर्ग्रन्थोपसंहारमाह । अयं जातकपारिजातः = जातकेषु पारिजातः (सुरद्रुमः) अध्यायरूपाभिरष्टादशशाखाभिर्युतोऽतिप्रकाशो दोषादिरहितः, ज्योतिर्मयः ज्योतींषि ग्रहनक्षत्रादयस्तन्मयः ग्रहनक्षत्रविषयैरोतप्रोतः, सर्वफलप्रधानः मानवजीवने जन्मादि-निधनान्तं यावत्फलमस्ति तत्प्रकाशने मुख्यतमः अयं ग्रन्थरूपेण सङ्कीर्तितः ।

अस्मिन् जातकपारिजाते राशिगुणस्वरूपम् १, ग्रहनामस्वरूपगुणभेदकम् २, आधा-नादिजन्माध्यायः ३, बालारिष्टाध्यायः ४, आयुर्दायाध्यायः ५, जातकभङ्गः ६, राजयो-

गाध्यायः ७, द्व्यादिग्रहयोगाध्यायः ८, मान्द्यब्दादिफलम् ९, अष्टकवर्गः १०, लग्नधन-भावफलम् ११, तृतीयचतुर्थभावफलम् १२, पञ्चमषष्ठभावफलम् १३, सप्तमाष्टमनवम-भाव-फलम् १४, दशमैकादशद्वादशभावफलम् १५, स्त्रीजातकम् १६, कालचक्रदशा १७ दशा-न्तर्दशाफलम् १८, एते किलाष्टादशाध्यायाः सङ्कीर्तिताः ।

अयं श्रीवैद्यनाथः सुधीः प्रकृतग्रन्थकर्ता, सर्वार्थचिन्तामणिनाम्नो ग्रन्थस्य ज्योतिर्नि-बन्धस्य कर्तुः श्रीवेङ्कटाद्रिनाम्नो विविधविद्यापारङ्गतस्य विदुषस्तनूजन्मा सूर्यादिनवग्रहाणां प्रसादात् विद्वज्जनानां प्रीतये होराशास्त्ररूपसमुद्रमन्थननिस्सरितामनृतकल्पामष्टादशाध्याय-युक्तां गीतोत्सुकश्लोकिनीम् ( यथार्थफलश्रवणात्कर्णेन्द्रियाह्लादिनीम् ) जातकपारिजातसरणिं चक्रे कृतवानिति । अथात्र 'गीतोत्सुकश्लोकिनीम्' इत्यनेन 'गीतोत्सुक' सङ्ख्यातुल्यश्लोक-वतीमित्यपि भवितुमर्हति तत्र । कटपयादिसङ्केतेन 'गीतोत्सुक' = १७६३ भवति । परश्चा-धुनोपलब्धपुस्तके १९१५ श्लोका उपलभ्यन्ते । तेनानुमीयते यथथाकालं कैश्चित्प्रक्षिप्ता अपि भवेयुस्तदधिकाः श्लोका इत्यलम् ॥ १–४ ॥

इति श्रीमिथिलादेशान्तःपातिदरभङ्गामण्डलान्तर्गत 'वासुकीविहारी' ग्रामनिवासिमैथिल-भूदेवकुलभूषणचातुरघ्वरिकोपाह्वपण्डितश्रीगिरिनाथशर्मतनूजन्मना ज्यौतिषाचार्य—पौष्टाचार्य—काव्यतीर्थोपाधिधारिणा लब्धराजकीयसुवर्ण—रजतपदकेन 'पण्डितश्रीकपिलेश्वरशास्त्रिणा' विनिर्मिता 'सुधाशालिनी' संस्कृतटीका समाप्ता ।

समाप्तोऽयं ग्रन्थः ।



मुद्रक :
बब्बर प्रिंटर्स, मौजपुर, दिल्ली-110053
फोन घर : 7212411

( चौखम्भा प्राच्यविद्या ग्रन्थमाला १ )

# अथर्ववेद-परिशिष्ट

सम्पादक—जार्ज मेलवील बोलिंग तथा जुलियस फॉन नेजलीन

हिन्दी-टिप्पणियों सहित सम्पादन

डॉ० रामकुमार राय

हर्ष का विषय है कि चौखम्भा ओरियन्टालिया ( वाराणसी ) द्वारा अथर्ववेद-परिशिष्ट का पुनः प्रकाशन हुआ है। इस प्रकाशन का महत्त्व इसलिए और अधिक हो गया है कि यह संस्करण नागरी लिपि में प्रथम बार प्रकाशित हुआ है। इससे पूर्व प्रस्तुत ग्रन्थ का प्रकाशन १९०९ ई० में हुआ था। परन्तु वह संस्करण रोमन-लिपि में ही था।

पहले अलग-अलग कार्य करते हुए उक्त दोनों विद्वानों ने आगे चलकर संमिलित प्रयास से इस कार्य को सम्पन्न किया। श्रीवेबर महोदय एवं श्री मॉरिस ब्लूमफील्ड ने इस ग्रन्थ पर कुछ कार्य किया था। उन्हीं दोनों विद्वानों ने अलग-अलग इस विशिष्ट ग्रन्थ के संपादन की संपादकों को प्रेरणा दी थी। १८९८ ई० के आस पास वेबर ने फॉन नेजलीन को तथा ब्लूमफील्ड ने बोलिंग को अथर्ववेद-परिशिष्ट के संपादन की दिशा में संप्रेरित किया। उन दोनों पण्डितों ने कार्यों के विवरण का इस ग्रन्थ के अपने प्राक्कथन में स्वयं उल्लेख किया है। उसे देखने पर यह स्पष्ट हो जाता है कि कितने श्रम, मनोयोग और अध्यवसाय के साथ उक्त संपादन-कार्य संपन्न हुआ था। उस समय तक अथर्ववेद-परिशिष्ट की जितनी सामग्री मिल सकी थी—उन सब के आधार पर श्रमसाध्य निष्ठा द्वारा दोनों विद्वानों ने परिशिष्ट का संपादन किया था। जिस जिस व्यक्ति या संस्था द्वारा सहायता मिल सकती थी, सबको प्राप्त करने की एवं उसके उचित उपयोग की दिशा में उन दो विद्वानों ने कुछ भी उठा नहीं रखा था।

चौखम्भा ओरियन्टालिया एवं नागरी लिपि के रूपान्तरकार संपादक श्री रामकुमार राय धन्यवाद के पात्र हैं जिन्होंने इस चिर प्रतीक्षित कार्य को संपन्न किया। प्रत्येक परिशिष्ट के आरम्भ में हिन्दी में सम्बद्ध परिशिष्ट का सार संक्षिप्त रूप से देने के कारण एवं अन्त में उद्धरण सूची और शब्दानुक्रमणिका के कारण ग्रन्थ का महत्त्व बढ़ गया है।

इस ग्रन्थ में नित्य, नैमित्तिक तथा विभिन्न अवसरों, पर्वों, परिस्थितियों आदि से संबद्ध कर्मों का—आख्यानों, संवादों आदि द्वारा महत्त्वपूर्ण वैदिक-धार्मिक विधि-विधानों सहित वर्णन मिलता है। प्रस्तुत अपूर्ण से भासमान इस कोशात्मक परिशिष्ट-ग्रन्थ के बहत्तर ( ७२ ) परिशिष्टों में न जाने कितने शास्त्रीय विधान, विचार और उपाय आदि वर्णित हैं।

अतः दुष्प्राप्य, दुर्लभ, चिरप्रतीक्षित एवं महत्त्वपूर्ण इस 'अथर्ववेदपरिशिष्ट' के प्रस्तुत संस्करण का प्राच्यविद्या के अनुशीलनकर्त्ता पण्डितों में निश्चय ही समादर होगा। इस सत्प्रयास का हम स्वागत करते हैं। हमें विश्वास है कि दूसरा संस्करण शीघ्र ही प्रकाशित होगा और तब हिन्दी अनुवाद-सहित यह हमारे सामने आयेगा। इसी आशा के साथ प्रकाशक तथा 'हिन्दी नोट्स' के साथ वर्तमान ग्रन्थ प्रस्तुतकर्त्ता संपादक को बधाई देते हुए मुझे प्रसन्नता हो रही है।

करुणापति त्रिपाठी

भूतपूर्व वाइसचांसलर, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

७५—००

( चौखम्भा प्राच्यविद्या ग्रन्थमाला २ )

धाराधीश्वर भोजकृतः

# तत्त्वप्रकाशः

तात्पर्यदीपिका-वृत्ति-व्याख्याद्वयः-हिन्दीभाषानुवादसहितः

सम्पादक

डॉ० कामेश्वरनाथ मिश्र, एम. ए., पी-एच. डी., साहित्याचार्य

( उ० प्र० संस्कृत अकादमी द्वारा पुरस्कृत )

भारतीय जीवन में शैवधर्म एवं दर्शन का विशेष महत्त्व रहा है। उत्तरभारत में काश्मीरीय शैवदर्शन तथा दक्षिण भारत में सिद्धान्त-शैवदर्शन विशेष रूप से प्रचलित रहे। 'तत्त्वप्रकाश' सिद्धान्त-दर्शन के प्रमेयों का स्पष्ट ज्ञान कराने वाला प्रमुख ग्रन्थ है। तत्त्वों का निरूपण इसलिये भी अधिक निर्भ्रान्त है क्योंकि धर्म, दर्शन, कला, संस्कृति एवं साहित्य के अद्भुत उन्नायक महाराज भोज ने इसी सम्प्रदाय की दीक्षा ली थी और उन्होंने यहाँ साधना के अनुभवों को उतारा है। उनके विचारों का विशद विवेचन करने के लिये श्रीकुमारदेवरचित 'तात्पर्य-दीपिका' तथा अघोरशिवाचार्यरचित 'वृत्ति' दोनों को साथ में जोड़ दिया गया है। डॉ० मिश्र ने अथक परिश्रम करके जिज्ञासुओं के लाभार्थ कारिकाओं का हिन्दी-अनुवाद करके, विवेकपूर्वक पाठान्तरों का निर्धारण कर ग्रन्थ को प्रामाणिक एवं परिनिष्ठित रूप प्रदान किया है। ग्रन्थ के अन्त में सन्दर्भों का आकारनिर्देश, दोनों टीकाओं में उद्धृत ग्रन्थ एवं ग्रन्थकारों की सूची, पारि-भाषिक शब्दकोश एवं उपयोगी ग्रन्थों का उल्लेख परिशिष्ट के रूप में जोड़ा गया है। अन्त में दिये गये तत्त्वों की उत्पत्ति के रेखाचित्र से सारा विषय स्वतः स्पष्ट हो जाता है।

विद्वान् सम्पादक ने भूमिका में शैवदर्शन के प्रकार, सिद्धान्तशैवदर्शन का अभिप्राय, सिद्धान्तसाहित्य, सिद्धान्तदर्शन, भोज. श्रीकुमार तथा अघोरशिवाचार्य के व्यक्तित्व तथा कृतित्व पर शोधपूर्ण प्रकाश डाला है। भूमिकामात्र को पढ़ लेने से संस्कृत तथा दर्शन के अनुरागियों को 'सिद्धान्त' के साहित्य तथा प्रतिपाद्य विषयों के ज्ञान के लिये अन्य ग्रन्थ देखने की आवश्यकता नहीं पड़ेगी। हिन्दी में इस दर्शन से सम्बद्ध इतनी सामग्री अभी तक प्रकाश में नहीं आयी है। ग्रन्थ का अध्ययन करने से सिद्धान्तशैवदर्शन से सम्बद्ध समस्त विषयों का परिचय मिल जायेगा। हिन्दी माध्यम से सिद्धान्तदर्शन तथा भोज के कृतित्व और साधना पर प्रचुर प्रकाश डालने वाला और दक्षिण भारतीय धर्म तथा साधना को हिन्दीभाषा के द्वारा उत्तर भारत में फैला कर उत्तर और दक्षिण में ---न्वय स्थापित करनेवाला यह प्रथम ग्रन्थ होगा। ३०-००

( चौखम्भा प्राच्यविद्या ग्रन्थमाला ४ )

महाराजाधिराजभोजकृतं

# सरस्वतीकण्ठाभरणम्

( चित्रप्रकरणसहितम् )

## प्रथमो भागः

रत्नदर्पणाख्यसंस्कृत-स्वरूपानन्दभाष्यनाम हिन्दी व्याख्याद्वयोपेतम्

व्याख्याकार—

डॉ० कामेश्वरनाथ मिश्र, एम. ए., पी-एच्. डी., साहित्याचार्य

महाराजाधिराज भोज की साहित्यसेवा जनकथा बन चुकी है। साहित्य, कला, धर्म, दर्शन आदि का संरक्षण ही नहीं, सम्पादन भी उन्होंने किया है। आयुर्वेद से लेकर आध्यात्मिक साधना तक का कोई भी क्षेत्र उनसे अछूता न रहा। अलंकारशास्त्र के क्षेत्र में उनके कीर्तिस्तम्भ 'सरस्वतीकण्ठाभरण' नामक ग्रन्थ को प्रकाशित करते हुए हमें हर्ष हो रहा है।

इस ग्रन्थ के प्रथम परिच्छेद में काव्य-लक्षण, गुण तथा दोषों का सूक्ष्म विवेचन है। द्वितीय परिच्छेद में शब्दालङ्कार का निर्णय करते समय चित्रालङ्कार का विवेचन एवं वर्गीकरण जितना वैज्ञानिक, विशद, पूर्ण एवं व्यवस्थित यहाँ है, वैसा किसी भी अलङ्कार-शास्त्र के ग्रन्थ में नहीं है। यही स्थिति तृतीय परिच्छेद में अर्थालङ्कार के निरूपण में भी है। उभयालङ्कार का भी पृथक् से इतना विस्तृत विवेचन भोज ने ही किया है। पूरा चतुर्थ परिच्छेद इसी के निरूपण पर दिया गया है। पञ्चम परिच्छेद में 'शृङ्गार' की रसराजता सिद्ध करते हुए महाराजाधिराज ने अन्य रसों तथा भावों की समीक्षा तो की ही है, आनुषङ्गिक रूप से सम्बद्ध नायक, नायिका आदि के विषय में भी प्रचुर सामग्री प्रदान की है। निष्कर्षतः कहा जा सकता है कि महाराज भोज ने काव्य के प्रत्येक क्षेत्र को छुआ और सोने में सुगन्ध भर दी।

साथ में 'रत्नदर्पण' नाम की संस्कृत टीका भी यावदुपलब्ध दी गई है। धन्यवाद है तरुण किन्तु प्रौढ़ समीक्षक डॉ० कामेश्वर नाथ मिश्र को जिन्होंने सरल, सुस्पष्ट एवं भाव-ग्राहिणी हिन्दी भाषा में ग्रन्थ की गूढ़तम ग्रन्थियों तथा रहस्यों को उद्घाटित किया है। डॉ० मिश्र की लेखनी में अद्भुतशक्ति है जिसने गूढ़तम विषय को स्पष्टतम कर दिया है। यथास्थान दिये गये रेखाचित्रों, ऐतिहासिक एवं तुलनात्मक विवेचनों से ग्रन्थ निखर उठा है। भूमिका में विद्वान् भाष्यकार ने राजा भोज के जीवन, ग्रन्थकर्तृत्व, आध्यात्मिक अभिरुचि तथा उनको सम्मत काव्यलक्षण, चित्रालङ्कार, रस आदि पर शोधपूर्ण दृष्टि डाली है। अन्त में विविध परिशिष्टों से ग्रन्थ की उपयोगिता और भी बढ़ गयी है। विश्वास है कि छात्रों, अध्यापकों तथा काव्यशास्त्र के जिज्ञासुओं को प्रचुर सामग्री मिलेगी और वे लाभान्वित होंगे। ३५-००

